Printed–Published & sold by
JAI KRISHNADAS-HARIDAS GUPTA,
The Chowkhamba Sanskrit Reries Office,
VIDYA VILAS PRESS,
North of Gopal Mandir,
BENARES CITY.

*Printed by Jai Krishna Das Gupta
at the Vidya Vilas Press, Benares.*

Agents:

1 Otto Harrassowitz, Leipzig
GERMANY.

2 Arthur Probsthain,
Oriental & Foreign Bookseller,
LONDON

3 The Oriental Book-supplying Agency,
POONA

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़पुस्तकमालायाः
७१
वेदान्तविभागे (९) नवमं पुष्पम् ।

श्रीमच्छङ्कराचार्यविरचितं

# ब्रह्मसूत्रशाङ्करभाष्यम् ।

चतुःसूत्र्यन्त पूर्णानन्दीय व्याख्यासहितया
श्रीगोविन्दानन्दप्रणीतया रत्नप्रभया
समन्वितम् ।

न्यायोपाध्याय पं० ढुण्ढिराजशास्त्रिणा
परिष्कृतम् ।

प्रथमो भागः ।

प्रकाशकः—
जयकृष्णदास—हरिदासगुप्तः—
चौखम्बा संस्कृत सीरिज आफिस, विद्याविलास प्रेस,
गोपालमंदिर के उत्तरफाटक, बनारस सिटी ।

१९८६

राजसाशनानुसारेण प्रकाशकेन सर्वेऽधिकाराः स्वायत्तीकृताः।

# विज्ञापनम् ।

निखिलास्तिकदर्शनशास्त्रशिरोमणेस्त्र्यन्तःपातिज्ञानहेतुवाक्यविवेक-साधनस्योत्तरमीमांसाख्यवेदान्तदर्शनस्य श्रीमच्छङ्कराचार्यप्रणीतं शारीरक-भाष्यं संस्कृतवाङ्मयजगति सर्वत्राध्ययनाध्यापनादौ प्रचलितमिति प्रथितमेव । किन्तूक्तभाष्यं गूढगभीरार्थतयाऽनायासेन नार्थबोधजनकमिति पर्यालोच्य चतुःसूत्रीपर्यन्तया पूर्णानन्दीव्याख्यया समुद्भासितेन गोविन्दनन्दयतिविनिर्मितेन रत्नप्रभाख्यव्याख्यानेन समन्वितस्याऽस्य मूलभाष्यपंक्तिगूढतात्पर्यग्रन्थयोजनादिक्षममेतन्नूतनसंस्कारणमस्माभिः प्रकाश्यते । यद्यप्येतद्भाष्यं पूर्वमन्यत्रानेकवारं मुद्रितमभूत्तथापि स्थलविशेषेषु भाष्यरत्नप्रभयोः पाठोऽसङ्गतोऽशुद्धश्चेति भाष्यकारसम्प्रदायसिद्धपाठानुसारेण गुरुकल्पैः म० म० पं० नित्यानन्दपर्वतीयैः संशोधितस्य प्रायः शुद्धस्य प्राचीनमुद्रितपुस्तकस्य साहाय्येन चौखम्बासंस्कृतसीरिजपुस्तकमालाध्यक्षेण हरिदासगुप्तात्मज- जयकृष्णदासमहोदयेनाभ्यर्थितोऽहमेतच्छोधने प्रावर्तिषि । अस्य च ग्रन्थस्य परीक्षोपयोगित्वाद्विद्यार्थिनां सौकर्यार्थं भागद्वयं कल्पितम् । तत्र द्वितीयाध्यायद्वितीयपादान्त आद्यभागः । द्वितीयश्च समाप्त्यन्तः । भाष्यकारादिविषयमैतिह्यमन्यैर्लिखितं तत्रैवालोचयिष्यते । आशासे चान्ते दृष्टिदोषात्प्रमादाद्वा सञ्जाता अशुद्धीः स्वयं शोधयित्वा पठद्भिश्छात्रैरध्यापकैश्च मामकीनोऽयमायासः सफलीकरिष्यत इति साञ्जल्यभ्यर्थ्यते ।

अगस्त्याश्रमः ।<br>ति० एकादश्यां रवौ<br>१९८६

विदुषामनुचरः<br>**ढुण्ढिराजशास्त्री ।**

इस कार्यालय द्वारा "काशीसस्कृतसीरिज" के अलावा और भी ३ सीरिज यथा "चौखम्बा संस्कृत सीरिज" "बनारससस्कृतसीरिज" "हरिदाससंस्कृतसीरिज" ग्रन्थ-मालायें निकलती हैं तथा इन ४ सीरिजो के पश्चात् और भी विविध शास्त्र की पुस्तकें प्रकाशित की गई है तथा अन्य सब स्थानों के छपे हुए संस्कृत तथा भाषा-भाष्य के ग्रन्थ विक्रयार्थ प्रस्तुत रहते हैं, सूचीपत्र पृथक् मंगवाकर देखें, इसके अलावा हमारे यहां सर्व प्रकार की संस्कृत, हिन्दी, अङ्ग्रेजी की सुन्दर छपाई होती है, परिक्षा प्रार्थनीय है।

पत्रादि प्रेषणास्थानम्—

**जयकृष्णदास-हरिदास गुप्तः—**

**"चौखम्बा संस्कृतसीरिज़" आफिस, विद्याविलास प्रेस,**

**गोपालमन्दिर के उत्तर फाटक, बनारस सिटी।**

॥ श्रीः ॥

# अथ ब्रह्मसूत्रशाङ्करभाष्यस्थविषयाणामनुक्रमणिका ।

## प्रथमाध्याये प्रथमपादे

## ३ शास्त्रयोनित्वाधिकरणम् ।



## ४ समन्वयाधिकरणम्

इति प्रथमः पादः ।

---

## प्रथमाध्याये द्वितीयपादः ।

## ५ अन्तर्याम्यधिकरणम् ।



## ६ अदृश्यत्वाधिकरणम् ।

## ७ इतरव्यपदेशाधिकरणम् ।



## ८ उपसंहारदर्शनाधिकरणम् ।



## ९ कृत्स्नप्रसक्त्यधिकरणम् ।

## ४ समुदायाधिकरणम् ।



## ५ अभावाधिकरणम् ।



अथ

# * ब्रह्मसूत्रशाङ्करभाष्यम् *

## चतुःसूत्रीपर्यन्तपूर्णानन्दीयव्याख्यासहितरत्नप्रभाभासितम्

## प्रथमोऽध्यायः

### * रत्नप्रभा *

यमिह कारुणिकं शरणं गतोऽप्यरिसहोदर आप महत्पदम् ।
तमहमाशु हरिं परमाश्रये जनकजाङ्कमनन्तसुखाकृतिम् ॥ १ ॥

### पूर्णानन्दीया

यद्ब्रह्मगोचरविचित्रतमःप्रभावात्संसारधीजनितदुःखमभूज्जनस्य ॥
यद्ब्रह्मधीजनितसौख्यमभूच्च तस्य तं रुक्मिणीसहितकृष्णमहं नमामि ॥ १ ॥
यत्पादपद्मभजनेष्वनुरक्तचित्ताः मोक्षङ्गता ह्यतिदुरात्मजनाः किमन्ये ॥
यल्लीलया जगदभूद्विविधस्वरूपं तं रुक्मिणीसहितकृष्णमहं नमामि ॥ २ ॥
काशिकाधीशविश्वेशं नमामि करुणानिधिम् ॥
उमाङ्गसङ्गादनिशं पिशङ्गाङ्गप्रकाशकम् ॥ ३ ॥
यस्य स्मृतेरपि च शिष्यजना भवन्ति कामादिदोषरहिता ह्यतिशुद्धचित्ताः ।
यद्ध्यानतः परमकारणसुस्थिरास्ते तं श्रीगुरुं परमहंसयतिं नमामि ॥ ४ ॥
यो दृश्यतेऽयमिति सत्यचिदात्मकात्मा शिष्यादिपुण्यपरिपाकवशादिदानीम् ॥
चिद्योगधारिणमजस्रमजं स्मितास्यं त श्रीगुरुं परमहंसयतिं नमामि ॥ ५ ॥
षट्शास्त्रपारीणधुरीणशिष्यैर्युक्तं सदा ब्रह्मविचारशीलैः ॥
अद्वैतवाणीचरणाब्जयुग्मं मुक्तिप्रदं तत्प्रणतोऽस्मि नित्यम् ॥ ६ ॥

### रत्नप्रभा

श्रीगौर्या सकलार्थदं निजपदाम्भोजेन मुक्तिप्रदं-
प्रौढं विघ्नवनं हरन्तमनघं श्रीढुण्ढितुण्डासिना ।
वन्दे चर्मकपालिकोपकरणैर्वैराग्यसौख्यात्परं-
नास्तीति प्रदिशन्तमन्तविधुरं श्रीकाशिकेशं शिवम् ॥ २ ॥
यत्कृपालवमात्रेण मूको भवति पण्डितः ।
वेदशास्त्रशरीरां तां वाणीं वीणाकरां भजे ॥ ३ ॥
कामाक्षीदत्तदुग्धप्रचुरसुरनुतप्राज्यभोज्याधिपूज्य-
श्रीगौरीनायकाभित्प्रकटनशिवरामार्यलब्धात्मबोधैः ।
श्रीमद्गोपालगीर्भिः प्रकटितपरमाद्वैतभासा स्मितास्य-
श्रीमद्गोविन्दवाणीचरणकमलगो निर्वृतोऽहं यथाऽलिः ॥ ४ ॥

मोक्षपुर्यां श्रीकाञ्च्यां श्रीकामाक्ष्या दत्तं पायसं देवैरपि स्तुतं प्राज्यं सम्पूर्णं प्रकृष्टाज्ययुक्तं वा यद्भोज्यमन्नं तेनाधिपूज्याः श्रीशिवरामयोगिनः किंच शिवश्चासौ रामश्चेति स्वनाम्ना श्रीगौरीनायकयोरभेदं प्रकटयन्ति तेभ्यो गुरुभ्यो लब्धः-आत्मबोधो-यैः श्रीमद्गोपालसरस्वतीभिः तैरित्यर्थः ।

श्रीशङ्करं भाष्यकृतं प्रणम्य व्यासं हरिं सूत्रकृतं च वच्मि ।
श्रीभाष्यतीर्थे परहंसतुष्ट्यै वाग्जालबन्धच्छिदमभ्युपायम् ॥ ५ ॥
विस्तृतग्रन्थवीक्षायामलसं यस्य मानसम् ।
व्याख्या तदर्थमारब्धा भाष्यरत्नप्रभाऽभिधा ॥ ६ ॥
श्रीमच्छारीरकं भाष्यं प्राप्य वाक् शुद्धिमाप्नुयात ।
इति श्रमो मे सफलो गङ्गां रथ्योदकं यथा ॥ ७ ॥

### पूर्णानन्दीया

सूत्रभाष्यकृतौ नत्वा द्यतिश्रेष्ठान् गुरूनपि ॥
अभिव्यक्ताभिधा व्याख्या क्रियते बुद्धिशुद्धये ॥ ७ ॥
रत्नप्रभा दुरूहां च व्याकरोमि यथामति ॥
धीकृतानमितान्दोषान् क्षमध्वं विबुधा ! मम ॥ ८ ॥

अत्र तावत्स्वरूपतटस्थलक्षणप्रमाणतत्साधनैस्तात्पर्यादद्वितीयब्रह्मबोधकं श्रीमच्छारीरकं भाष्यं व्याचिख्यासु. श्रीरामानन्दाचार्यः प्रारिप्सितग्रन्थपरिसमाप्तये प्रचयगमनाय शिष्टाचारपरिपालनाय च "समाप्तिकामो मङ्गलमाचरेद्"इत्यनुमितश्रुतिबोधितकर्तव्यताकं शास्त्रप्रतिपाद्यस्वविशिष्टेष्टदेवतानमस्कारलक्षणं मङ्गलमाचरन् शिष्यशिक्षायै ग्रन्थतो निबध्नाति—**यमिहेति** । इह व्यवहारभूमावित्यर्थः । अपिशब्दस्य व्युत्क्रमेणान्वयः ।

## ❀ पूर्णानन्दीया ❀

अरिसहोदरोऽपि बिभीषणः मोक्षलङ्कासाम्राज्यरूपं महत्पदमाप प्राप्तोऽभूदिति क्रियाकारकयोजना । अनन्तसुखाकृतिमित्यनेन स्वरूपलक्षणम्, इतरेण तटस्थलक्षणं चोक्तमिति भावः ॥ १॥ **श्रीगौर्येति** । श्रीगौर्येत्यादितृतीयात्रयं करणार्थकं, करणं नामासाधारणं कारणं,— तथा च करणार्थे तृतीयेत्युक्त्याऽर्थप्रदानादिक प्रति श्रीगौर्यादि. करणम्, ईश्वरस्तु साधारणकारणमिति ज्ञापितं, न चेतरापेक्षायां सत्यामीश्वरस्य स्वातन्त्र्यहानि. स्यादिति वाच्यम्? पाकादेः काष्ठाद्यपेक्षासत्त्वेऽपि देवदत्तस्य तत्कर्तृत्वेन कारकाप्रेर्यत्वरूपस्वातन्त्र्यदर्शनाद्, अतः स्वेष्टदेवताया न स्वातन्त्र्यहानिरिति भावः । ढुण्ढिः विघ्नेश्वर इत्यर्थ. । इदं पदं रूढमिति ज्ञेयम्। उपकरणैः साधनैरित्यर्थः। अन्तविधुरं नाशरहितं षड्भावविकाररहितमिति भाव ॥ २॥ **मूक इति** । मूकोऽपि पण्डितः शास्त्रार्थज्ञानपूर्वकवाक्प्रौढिमशाली भवतीत्यर्थ ॥ ३ ॥ गुरुपरमगुरुपरमेष्ठिगुरून् स्तौति—**कामाक्षीति** । **अद्वैतभासेति** । अद्वैतब्रह्मविषयकशास्त्रजन्यप्रमित्येत्यर्थः । श्रीगुरोः स्मितास्यत्वं नाम जीवन्मुक्तिद्योतकमुखविकासवत्त्वम् । निर्वृतः मोक्षसुखं प्राप्तोऽस्मि यथाऽलि. कमलगः सन् मकरन्दपानेन निर्वृतो भवति तथा श्रीगुरुपादपद्मानुसन्धान सन् तत्प्रसादासादिताद्वैतज्ञानेनाहं— ब्रह्मानन्दमनुभवामीति भावः । ग्रन्थद्रष्टॄणामनायासेनार्थबोधाय स्वकृतश्लोकाना स्वयमेव व्याख्यामारभते—**मोक्षपुर्यामिति** । "प्रकृष्टं प्रचुरं प्राज्यमदभ्र बहुलं बहु" इति कोशमाश्रित्य व्याख्याति—**सम्पूर्णमिति** । अभितपदस्याभेदार्थकत्वं कथयन् शिवरामइति स्वनाम्नैव शिवरामयोर्वेदान्तेतिहासपुराणप्रतिपाद्यमभेदं श्रीशिवरामयोगिनो- ज्ञापयन्तीत्यतो देवताकटाक्षलब्धाद्वैतनिष्ठापराश्च परमेष्ठिगुरव इत्येतमर्थ स्फुटीकरोति **किञ्च शिवश्चास्माविति** । स्वनाम्नेत्यनेनाद्वैतसाधकयुक्त्यन्वेषणाय तेषा— चित्तव्यग्रता नास्तीति द्योत्यते । गुरुभ्य परमेष्ठिगुरुभ्य इत्यर्थः । श्रीमद्गोपालसरस्वतीभिरिति परमगुरुभिरित्यर्थः ॥ ४ ॥ तीर्थ इति शास्त्र इत्यर्थः । हंसपदस्य पक्षिपरत्वे तु जाल इत्यर्थः ॥ ५ ॥ **व्याख्येति** ।

> पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना ।
> आक्षेपश्च समाधानमेतद् व्याख्यानलक्षणम् ॥

इति व्याख्यानलक्षणं वेदितव्यम् । **भाष्यरत्नप्रभेति** । भाष्यमेव रत्नं तस्य प्रभेत्यर्थः । भाष्यार्थप्रकाशकत्वादस्य ग्रन्थस्य भाष्यरत्नप्रभेति नामधेयमिति भाव. ॥ ६ ॥ **भाष्यं प्राप्येति** । भाष्येण सम्बध्येति यावत् । वाग्भाष्ययोर्व्याख्यानव्याख्येयभावः ॥ ७ ॥

ननु "सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्तते" इत्यवश्यवक्तव्यस्य सम्बन्धप्रयोजनादेरप्रतिपादनात् प्रेक्षावतां प्रवृत्तिर्न स्यादित्याशङ्क्य शास्त्रस्य ये विषयप्रयोजनाधिकारिसम्बन्धास्त एव स्वकृतग्रन्थस्येति भाष्योक्तविषयादीन् ज्ञापयन् कृत्स्नशास्त्रस्य

## रत्नप्रभा

यदज्ञानसमुद्भूतमिन्द्रजालमिदं जगत् ।
सत्यज्ञानसुखानन्तं तदहं ब्रह्म निर्भयम् ॥ ८ ॥

इह खलु "स्वाध्यायोऽध्येतव्यः" (शतपथब्रा. ११।५।७) इति नित्याध्ययनविधिनाऽधीतसाङ्गस्वाध्याये "तद्विजिज्ञासस्व" (आ. १।३।१) "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" (बृह २।४।५) इति श्रवणविधिरुपलभ्यते । **तस्यार्थ** —अमृतत्वकामेनाद्वैतात्मविचार एव वेदान्तवाक्यैः कर्तव्य इति । **तेन** काम्येन नियमविधिनाऽर्थादेव भिन्नात्मशास्त्रप्रवृत्तिः वैदिकानां पुराणादिप्राधान्यं वा निरस्यत इति वस्तुगतिः । तत्र कश्चिदिह जन्मनि जन्मान्तरे वाऽनुष्ठितयज्ञादिभिर्नितान्तं निर्मलस्वान्तोऽस्य श्रवणविधेः को विषयः, किं फलं, कोऽधिकारी, कः

## पूर्णानन्दीया

मुख्यं विषयं संगृह्णाति—**यदज्ञानेति** । तदहं ब्रह्मास्मीत्यनेन विषयो बोध्यते, तेनैव फलस्य प्राप्यतासम्बन्ध , आनन्दावाप्तिरूपप्रयोजनमपि द्योत्यते, निर्भयमित्यनेनानर्थनिवृत्तिरूपप्रयोजनमुच्यते । अधिकारी त्वर्थात्सिध्यतीति भाव ॥ ८ ॥

ननु प्रथमसूत्रस्य विषयवाक्यत्वेनाभिमता श्रोतव्यादिश्रुतिः विधिप्रतिपादिका, प्रथमसूत्रं तु जिज्ञासाप्रतिपादकं, युष्मदस्मदित्यादिभाष्यमध्यासप्रतिपादकं भवति, तथा च भिन्नार्थप्रतिपादकत्वात् श्रुतिसूत्राध्यासभाष्याणां कथमेकवाक्यतेत्याशङ्क्य व्याचिख्यासितस्य वेदान्तशास्त्रस्यानारम्भणीयत्वदोषनिरासे प्रवृत्तप्रथमसूत्राध्यासभाष्ययो· श्रोतव्य इत्यादिश्रुतिसूत्रयोश्च सूत्रोत्पत्तिसाधनपूर्वकमेकार्थत्वप्रतिपादनद्वारैएकवाक्यता साधयितुं पातनिकां रचयति—**इह खल्वित्यादिना—प्रथमं वर्णयतीत्यन्तेन** । तत्र इह खल्वित्यारभ्य ब्रह्मजिज्ञासा कर्तव्येतीत्यन्तग्रन्थः सूत्रसाधनद्वारा श्रुतिसूत्रयो प्राधान्येनैकवाक्यताप्रतिपादनपर । तत्र प्रकृतिप्रत्ययार्थयोरित्यारभ्य प्रथमं वर्णयतीत्यन्तग्रन्थस्तु सूत्राध्यासभाष्ययोः प्राधान्येनैकवाक्यताप्रतिपादनपर इति पातनिकाग्रन्थाविभाग· । इदानीं पातनिकायां कानि चित् पदानि सगृह्य सुखबोधाय वाक्यार्थो· विरच्यते । इह वेदान्तशास्त्रे श्रोतव्य इति विधिरुपलभ्यते, उपलभ्यमानस्य विधे कश्चि· दनुबन्धचतुष्टयं जिज्ञासते तज्जिज्ञासितमनुबन्धचतुष्टय न्यायेन निर्णेतुं श्रीबादरायणः सूत्रं रचयाचकार, तस्य सूत्रस्य प्रसक्तानुप्रसक्तिपूर्वकमेकार्थप्रतिपादकत्वरूप श्रोतव्य इत्यादिश्रुतिसम्बन्ध कथयन्नध्यासभाष्यसम्बन्धं कथयतीति पीठिकाग्रन्थस्य निष्कृष्टोऽर्थ । इह वेदान्तशास्त्रे श्रवणविधिरुपलभ्यत इत्यन्वय· ।

ननु किं ज्ञानिनं प्रति विधिरुपलभ्यते उताज्ञानिनं प्रति, उभयथा विधिवैयर्थ्यं स्यात् जिज्ञासाऽनुपपत्तेरित्यत आह—**स्वाध्याय इति** । विधेर्नित्यत्वं नामाकरणे प्रत्यवायबोधकत्वम् । अधीत साङ्गस्वाध्यायो येन स इति विग्रह । अधीतसाङ्गस्वाध्याये पुरुषे विषय-

**रत्नप्रभा**

सम्बन्धः' इति जिज्ञासने। तं जिज्ञासुमुपलभमानो भगवान् बादरायणस्तदनुबन्धचतुष्टयं-श्रवणात्मकशास्त्रारम्भप्रयोजकं **न्यायेन** निर्णेतुमिदं **सूत्रं** रचयाञ्चकार **"अथातो ब्रह्मजिज्ञासा"** (१।१।१) इति। **नन्वनुबन्धजातं** विधिसन्निहितार्थवादवाक्यैरेव ज्ञातुं शक्यम्। **तथा हि**—"तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो-

**पूर्णानन्दीया**

इत्यर्थ.। तथा चाधीतसाङ्गस्वाध्यायेनापातनिर्विशेषब्रह्मज्ञानवन्तं पुरुषमुद्दिश्य विधिरुपलभ्यत इति भाव । विधिवाक्यान्युदाहरति—**तद्विजिज्ञासस्वेति**। केचित्तु-श्रोतव्य इत्यत्र न विधि, सर्वेषां वेदान्तानामद्वितीयब्रह्मतात्पर्यनिश्चयात्मके श्रवणे विध्ययोगात्, किन्तु श्रोतव्य इत्यादि विधिच्छायापन्न स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थं इति वदन्ति। केचिदपूर्वविधिरिति। केचित्परिसङ्ख्याविधिरिति वदन्ति। तेषा मतं निराकर्तुं नियमविधिंसाधयति—**तस्यार्थ इति**। श्रवणपदस्य विचारार्थकत्वं कथयन् विधेरर्थं कथयति—**अमृतत्वेति**। विचारो नामो हापोहात्मकमानसक्रियारूपस्तर्क । एवकारस्योभयत्रान्वयः। वेदान्तवाक्यैरेव विचार इत्यनेन स्त्रीशूद्रादीना पुराणादिश्रवणेन परोक्षमेव ज्ञानं जायते, तेन जन्मान्तरे वेदान्तश्रवणेऽधिकार, तेनापरोक्षज्ञानमित्यर्थोऽपि गम्यते। अद्वैतात्मविचार-एवेत्यनेन द्वैतशास्त्रविचारो निरस्यते। वेदान्तवाक्यैरेवेत्यनेन वैदिकाना पुराणादिप्राधान्यं-निरस्यत इति विभागमभिप्रेत्य नियमविध्यङ्गीकारे फलितमर्थमाह-**तेनेति**। तेनेतितृतीया समानाधिकरणा। विधेः काम्यत्वं नाम कामनाविषयसाधनबोधकत्वम्। पक्षप्राप्तस्याप्राप्तांशपरिपूरणफलको विधि. नियमविधिरित्यर्थ । परिसङ्ख्याविधिभेद ज्ञापयति—**अर्थादिति**। विधिप्रतिपाद्यविचारस्य विधिसन्निहितवेदान्तवाक्याकाङ्क्षासत्त्वेन पुराणादिप्राधान्यादेर्निराकाङ्क्षत्वादित्यर्थः। वाशब्दश्चार्थे, वस्तुगति. वास्तविकं ज्ञानं, तथा चोक्तार्थे सर्वेषा वैदिकानां प्रमाऽऽत्मकनिश्चय एव न सन्देह इति भाव । **तत्रेति**। श्रवणविधावुपलभ्यमाने सतीत्यर्थः। उपलम्भे हेतुमाह-**भगवानिति**। "उत्पत्तिं च विनाशं च भूतानामागतिं गतिम्॥ वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" भगवच्छब्दार्थ । बदराः बदरीवृक्षाः यस्मिन् देशे सन्ति स देशविशेषो बादर स एवायन स्थानं यस्य स बादरायण. श्रीवेदव्यास., अत्र सञ्ज्ञात्वाण्णत्वप्राप्त्या कीटादिव्यावृत्तिर्बोध्या। **तदिति** जिज्ञासा विषयीभूतमित्यर्थ । **श्रवणाद्यात्मकेति**। श्रवणाद्यात्मकं यच्छास्त्रं तस्यारम्भः प्रवृत्तिः तस्मिन् प्रयोजकं कारणमित्यर्थ.। श्रवणादिबोधकशब्दात्मकत्वाच्छास्त्रस्य श्रवणाद्यात्मकत्वमिति भावः। एवमुत्तरत्र विज्ञेयम्। **न्यायेनेति**। "विषयो विषयश्चैव पूर्वपक्षस्तथोत्तरम्। सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्" इति पञ्चावयवोपेताधिकरणात्मकन्यायेने त्यर्थ.। **सूत्रमिति**। "अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखम्। अस्तोभमनवद्यं च सूत्र सूत्रविदो विदु" इति सूत्रलक्षणं विज्ञेयम्। (साम्नि "हा वूहा वूहा" इत्याद्यर्थ-

**रत्नप्रभा**

लोकः क्षीयते" (छां.८।१।६) इति श्रुत्या 'यत् कृतकं तदनित्यम्' इति न्यायवत्या "न जायते म्रियते वा विपश्चिद्" "यो वै भूमा तदमृतमतोऽन्यदार्त्तम्" (छां.७।२४।१) इत्यादिश्रुत्या च भूमात्मा नित्यः, ततोऽन्यदनित्यमिति विवेको लभ्यते। **कर्मणा** कृष्यादिना, **चितः** सम्पादितः, सस्यादिर्लोको भोग्य इत्यर्थः। **विपश्चिद्** नित्यज्ञानस्वरूपः। "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" (मुण्ड.१।२।१२) "आत्मनस्तु कामाय सर्वं प्रियं भवति" (बृह.२।४।५) इत्यादिश्रुत्याऽनात्ममात्रे वैराग्यं लभ्यते। **परीक्ष्य**=अनित्यत्वेन निश्चित्य। **अकृतः**=मोक्षः, **कृतेन**=कर्मणा, नास्तीति, कर्मतत्फलेभ्यो वैराग्यं प्राप्तवानित्यर्थः। "शान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येद्" (बृह.४।४।२३) इति श्रुत्या **शमादिषट्कं** लभ्यते। "समाहितो भूत्वा" इति **काण्वपाठः**। **उपरतिः** संन्यासः। "न स पुनरावर्तते" (कालाग्निरु.२) इति स्वयंज्योतिरानन्दात्मकमोक्षस्य नित्यत्वश्रुत्या मुमुक्षा लभ्यते। **तथा च** विवेकादिविशेषणवानधिकारीति ज्ञातुं शक्यम्।

**पूर्णानन्दीया**

रहितवर्णः स्तोभसञ्ज्ञकः, तद्रहितमस्तोभमित्यर्थः।) अर्थवादवाक्यैरधिकारी ज्ञातुं शक्यते, कर्तव्यतारूपसम्बन्धस्तु विधिना ज्ञातुं शक्यते, विषयप्रयोजने तूभयथा ज्ञातुं शक्येते इत्यत प्रथमसूत्रं व्यर्थमिति शङ्कते--**नन्विति**। विधिवत्संनिहितार्थवादवाक्यैरित्यर्थः। विधिसन्निहितत्वं विध्येकवाक्यतापन्नत्वम्। अर्थवादवाक्यत्वं नाम विध्यघटितत्वे सति वैदिकवाक्यत्वम्। तेन स्वार्थतात्पर्यकाणां "तत्त्वमसि, अहं ब्रह्मास्मि" इत्यादीनामर्थवादवाक्यत्वं युज्यत इति भावः। प्रथमतोऽधिकारिणं निरूपयति--**तथा हीत्यादिना**। श्रोतव्य इति विधिसन्निहितार्थवादवाक्यैः साधनचतुष्टयमुपपादयति--**तद्यथेति**। कृतकं कार्यम्। लोक्यतेऽनुभूयत इति लोकः सस्यादिरित्यर्थः। निर्वेदःवैराग्यमित्यर्थः। श्रद्धैव वित्तं यस्य सः श्रद्धावित्तः। समाहितः=एकाग्रचित्तः।

ननु श्रुतिभिर्विवेकादिविशेषणान्येव प्रतिपाद्यन्ते नाधिकारी प्रतिपाद्यते, उभयत्र तात्पर्ये वाक्यभेदप्रसङ्गादित्याशङ्क्य विशेषणानां धर्मत्वेन धर्मिणं विना सत्त्वासम्भवाद्धर्मिरूपाधिकारी चार्थाज् ज्ञातुं शक्यत एवेत्याह—**तथा चेति**। **यथेति**। प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्तीति वाक्यम्। अस्यार्थः-प्रतितिष्ठन्ति प्रतितिष्ठासन्तीत्यर्थः। प्रतिष्ठां प्राप्तुमिच्छन्तीति यावत्। उपयन्तीत्यत्र उपेयुरिति विधेः परिणामः, ये प्रतिष्ठां प्राप्तुमिच्छन्ति ते रात्रिसत्राख्यानि कर्माणि कुर्युरिति। प्रतिष्ठाकामो यथाऽधिकारी तद्वदित्यन्वयः। अहं ब्रह्मास्मीत्यादिना विधिसन्निहितवाक्येन सिद्धं ब्रह्मात्मैक्यरूपं विषयं विधितत्त्वमसीत्यादिश्रुत्योरेकवाक्यत्वाय दार्ढ्याय च परम्परया विधितोऽपि साधयति—**तथा श्रोतव्य इत्यादिना**। तथाऽधिकारिवदित्यर्थः। नियोगोऽपूर्वमिति प्राभाकरमतं, तन्मतमवलम्ब्य

## रत्नप्रभा

**यथा**—"य एता रात्रीरुपयन्ति" इति रात्रिसत्रविधौ प्रतितिष्ठन्तीत्यर्थवादस्थप्रतिष्ठाकामः तद्वत् । **तथा** "श्रोतव्यः" इत्यत्र प्रत्ययार्थस्य नियोगस्य प्रकृत्यर्थो विचारो विषयः । **विचारस्य** वेदान्ता विषया इति शक्यं ज्ञातुम् । 'आत्मा द्रष्टव्यः' इत्यद्वैतात्मदर्शनमुद्दिश्य 'श्रोतव्यः' इति विचारविधानात् । **न** हि विचारः साक्षाद्दर्शनहेतुः, अप्रमाणत्वात्, **अपि तु** प्रमाणविषयत्वेन । **प्रमाणं** चाद्वैतात्मनि वेदान्ता एव । "तं त्वौपनिषदं पुरुषं" "वेदान्तविज्ञानसुनिश्चितार्थाः" (मुण्ड.३।२।६) इति श्रुतेः । **वेदान्तानां** च प्रत्यग्ब्रह्मैक्यं विषयः । "तत्त्वमसि" (छां.६।८।७–१६) "अहं-

## पूर्णानन्दीया

विधेरर्थं कथयति-**श्रोतव्य इति** । प्रत्ययस्तव्यप्रत्यय, श्रु श्रवण इति श्रुधातुः प्रकृतिरिति विवेक । विचारस्य नियोगविषयत्वं नाम नियोगहेतुककृतिविषयत्वम् । भवतु विचारो विषयस्तथाऽपि प्रकृते किमायातमित्यत आह-**विचारस्येति** । विषया उद्देश्या इत्यर्थः । उक्तार्थे हेतुमाह—**आत्मेति** । उक्तं हेतुं विवृणोति--**न हीति** । अथ वा—

ननु विचारस्य दर्शनहेतुत्वेऽपि कथं वेदान्तानां विचारविषयत्वमित्याशङ्क्य कि तद्धेतुत्वं साक्षात्परम्परया वा, नाद्य इत्याह--**नहीति** । प्रमाणमेव साक्षाद्दर्शनहेतु, प्रमाणन्तु वेदान्ता एव, अत प्रमाणभिन्नत्वात्तर्करूपविचारो न साक्षाद्दर्शनहेतुरिति भाव । द्वितीये वेदान्ताना तद्विषयत्वं दुर्वारमित्याह--**अपि त्विति** । प्रमाणं विषयः उद्देश्यं यस्य विचारस्य स तथा, वेदान्तवाक्यान्युद्दिश्य विचार. क्रियतेऽतो वेदान्तानामुद्देश्यत्वरूपविषयत्वं सम्भवति निश्चितवेदान्तानामेव शाब्दबुद्धौ हेतुत्वान्निश्चयविशिष्टवेदान्तप्रमाणद्वारा विचारस्य हेतुत्वं च सम्भवतीति भाव. ।

ननु प्रमाणस्य विचारजन्यत्वाभावात् कथं विचारस्य प्रमाणद्वारा हेतुत्वमिति चेद् ? न–सर्वं वेदान्तवाक्यं ब्रह्मतात्पर्यकमिति तात्पर्यनिश्चयस्य विचारजन्यत्वेन विशिष्टप्रमाणस्यापि विचारजन्यत्वोपचारादिति भाव. । अतीन्द्रियार्थे श्रुतिरेव स्वतन्त्रप्रमाणमित्याह–**प्रमाणञ्चेति** । एवकारेणानुमानादे प्रामाण्यं निरस्यते, श्रौतार्थसम्भावनाऽर्थत्वेन गुणतया प्रामाण्याङ्गीकारेऽपि न मुख्यप्रामाण्यमिति भाव । औपनिषदमुपनिषदेकगम्यमित्यर्थः। परमप्रकृतमाह--**वेदान्तानामिति** । विषय' प्रतिपाद्य. । ननु विधिना ब्रह्मात्मैक्य स्फुटं न प्रतिभासते तस्मात्कथं विषयसिद्धिरित्याशङ्कायां तत्र स्फुटप्रतिपादकं प्रमाणमाह–**तत्त्वमिति** । विधिसन्निहितस्य स्वार्थतात्पर्यकार्थवादस्य तरति शोकमात्मविदित्यादिवाक्यद्वयस्य विधिना सहैकवाक्यत्वाय दार्ढ्याय च विधिफलं निरूपयन् प्रयोजनं निरूपयति–**एवमिति** । येन तरति शोकमित्यादिवाक्येन प्रयोजनं विदित तेनैव प्राप्यतारूपसम्बन्धोऽपि वेदितव्य इत्याह--**तथेति** । कर्तव्यतारूपसम्बन्धः इति विधिनैव वेदितव्य इति भाव. ।

**रत्नप्रभा**

ब्रह्मास्मि" (बृह.१।४।१०) इति श्रुतेः । **एवं** विचारविधेः फलमपि ज्ञानद्वारा मुक्तिः । "तरति शोकमात्मवित्" (छां.७।३) "ब्रह्मविद् ब्रह्मैव भवति" इत्यादिश्रुतेः । **तथा** सम्बन्धोऽप्यधिकारिणा विचारस्य कर्त्तव्यतारूपः, फलस्य प्राप्यतारूपः इति यथायोगं सुबोधः । **तस्मादिदं** सूत्रं व्यर्थमिति चेद्? **न**–तासामधिकार्यादिश्रुतीनां स्वार्थे तात्पर्यनिर्णायकन्यायसूत्राभावे किं विवेकादिविशेषणवानधिकारी–**उत** अन्यः ? किं वेदान्ताः पूर्वतन्त्रेण गतार्था अगतार्था वा ? किं ब्रह्म प्रत्यगभिन्नं **न वा** ? किं मुक्तिः स्वर्गादिवल्लोकान्तरम्, आत्मस्वरूपा वा ? इति **संशयानिवृत्तेः** । तस्मादागमवाक्येभ्यः आपाततः प्रतिपन्नाधिकार्यादिनिर्णयार्थमिदं सूत्रमावश्यकम् । **तदुक्तं प्रकाशात्मश्रीचरणैः**—"अधिकार्यादीनामागमिकत्वेऽपि न्यायेन निर्णयार्थमिदं सूत्रम्"

**पूर्णानन्दीया**

ननु अधिकारिणा विचारस्य कर्तव्यतारूपः कथं सम्बन्धः, उभयनिष्ठत्वाभावादिति चेद्? न–कर्तृनिरूपितकर्तव्यतारूपसम्बन्धस्याश्रयतासम्बन्धेन विचारनिष्ठत्वान्निरूपकतासम्बन्धेन कर्तृनिष्ठत्वाच्चोभयनिष्ठत्वमुपपद्यत इति भावः । एवमन्यत्र योजनीयम् । इतिपदस्य पूर्वेण व्यवहितेनाप्यन्वयः । तथा च यथा साधनचतुष्टयसम्पन्नोऽधिकारीति ज्ञातुं शक्यं तथा ब्रह्मात्मैक्यं विषय इति, मुक्तिश्च फलमिति, कर्तव्यतारूपः सम्बन्ध इति, ज्ञातुं शक्यमिति भावः ।

ननूक्तसम्बन्धः ज्ञानमोक्षयोर्न सम्भवतीत्यतः प्रथमसूत्रमावश्यकमित्यत आह—**यथायोगमिति** । ज्ञानमोक्षयोः जन्यजनकभावः सम्बन्धः । सोऽपि तरति शोकमात्मविदित्यादिश्रुत्यैव ज्ञातु शक्यतेऽतो न सूत्रमावश्यकमिति भावः । सुबोधः अनायासेन बोद्धु योग्य इत्यर्थः । **तस्मादिति** । सौत्राथादिशब्दबोधितस्याधिकार्याद्यर्थस्याधिकार्यादिप्रतिपादकश्रुतिभिरेव ज्ञातुं शक्यत्वात्सूत्रं व्यर्थमिति शङ्कितुरभिप्रायः । **न्यायसूत्रेति** । न्यायात्मकसूत्रेत्यर्थः । अनुबन्धचतुष्टये संशयमुपपादयति—**किं विवेकेति** । विषये संशयमाह—**किं वेदान्ता इति** । विचारविषया वेदान्ता इत्यर्थः । अथ वा श्रोतव्य इति विधिप्रतिपादिते कर्तव्यतारूपसम्बन्धे संशयमाह—**कि वेदान्ता इति** । **संशयेति** । श्रुत्या प्रतीतेऽप्यन्यथान्यथार्थस्य स्वस्यैव भासमानत्वाद्वादिभिर्वा प्रतिपादितत्वात्संशयानिवृत्तिरिति भावः । आपाततः स्वबुध्या वादिभिर्वा प्रयुक्ताप्रामाण्यशङ्काकलङ्कितत्वेन जायमाना या प्रतिपत्तिः संशयादिस्तद्विषयीभूतः प्रतिपन्नः स चासावधिकार्यादिश्च तस्येत्यर्थः । **आगमिकत्वेऽपीति** । आगमेन प्रतिपाद्यत्वेऽपीत्यर्थः । वाचस्पतितन्मतानुसारिणां मतं दूषयति—**येषामिति** । वादिनां मते श्रवणं नाम आगमाचार्योपदेशजन्यं ज्ञानं, तथा च कृत्यसाध्ये ज्ञाने विधिर्न सम्भवतीति भावः ।

## रत्नप्रभा

इति । **येषां मते** श्रवणे विधिर्नास्ति तेषामविहितश्रवणेऽधिकार्यादिनिर्णयानपेक्षणात् सूत्रं व्यर्थमित्यापततीत्यलं **प्रसङ्गेन । तथा चास्य** सूत्रस्य श्रवणविध्यपेक्षिताधिकार्यादिश्रुतिभिः स्वार्थनिर्णयायोत्थापितत्वाद् हेतुहेतुमद्भावश्रुतिसङ्गतिः। **शास्त्रारम्भ**हेत्वनुबन्धनिर्णायकत्वेनोपोद्घातत्वाच्छास्त्रादौ **संगतिः । अधिकार्यादि**श्रुतीनां स्वार्थे समन्वयोक्तेः समन्वयाध्यायसंगतिः । "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि" (छां ६।८।९) इत्यादिश्रुतीनां सर्वात्मत्वादिस्पष्टब्रह्मलिङ्गानां विषयादौ समन्वयोक्तेः

## पूर्णानन्दीया

नन्वविहितश्रवणे माऽस्त्वधिकार्यादिनिर्णयापेक्षा, तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदिति ज्ञानार्थतया विधीयमाने गुरूपसदने ऽधिकार्यादिनिर्णयापेक्षाया. सत्त्वात्कथं सूत्रं व्यर्थम् ? इत्यत आह—**इत्यलमिति** । इतिशब्द शङ्काऽर्थक, एतस्या शङ्काया परिहारः उक्तश्चेद्ग्रन्थविस्तरो भवति तस्मादलमिति भाव । अयमाशय.-गुरूपसदनस्य श्रवणाङ्गतया ऽङ्गिश्रवणविध्यभावे गुरूपसदनविधेरभावेनाधिकार्यादिनिर्णयानपेक्षणात् सूत्रं व्यर्थमेवेति दिक् ।

ननु भगवतो वेदव्यासस्य श्रुत्यर्थे सन्देहाभावात् सूत्रकरण व्यर्थमिति चेद् ? न—शिष्यसन्देहं निमित्तीकृत्य तेषां निश्चयार्थं सूत्राणामवश्यकरणीयत्वादित्यभिप्रेत्य श्रुतिसूत्रयो सम्बन्धमाह—**तथा चेति** । श्रवणविधिनाऽपेक्षितो योऽधिकार्यादि तत्प्रतिपादिकाभि. श्रुतिभिरधिकार्याद्यर्थनिर्णयायोत्पादितत्वात्प्रयोज्यप्रयोजकभाव प्रथमसूत्रस्य श्रुत्या सह सङ्गतिरित्यर्थ ।

नन्वधिकार्यादिश्रुतीना स्वार्थबोधकत्वं चेत्सर्वासा श्रुतीना ब्रह्मबोधकत्वमिति सिद्धान्तविरोध इति चेद् ? न—शक्त्या स्वार्थबोधनद्वारा तात्पर्येण ब्रह्मबोधकत्वान्न विरोध इति भाव. । ननु तथापि कथमस्य सूत्रस्य शास्त्राध्यायपादेषु प्रवृत्तिः सम्बन्धाभावादित्याशङ्क्य तैः सम्बन्धमाह—**शास्त्रेत्यादिना** । तथा च एतत्सूत्रविशिष्टत्व शास्त्राध्यायपादानां युक्तमिति भावः । "चिन्ता प्रकृतसिध्यर्थामुपोद्घात प्रचक्षते" इत्युपोद्घातलक्षणमुपपादयन् सूत्रस्य शास्त्रादिस्वरूपेण जन्माद्यस्य यत इति सूत्रेण सङ्गतिमाह—**शास्त्रारम्भेति** । सूत्रार्थविचारं विना निर्णयानुदयाद् निर्णायकपदं निर्णयानुकूलविचारजनकपरम् । तथा च शास्त्रारम्भ प्रकृत तद्धेत्वनुबन्धचतुष्टयनिश्चयानुकूलविचार एव तत्सिध्यर्थचिन्तारूपोपोद्घात. तद्धेतुत्वेन सूत्रस्योपोद्घातत्वमुपचर्यत इति भाव । **शास्त्रादाविति** । शास्त्रं सूत्रसन्दर्भ तस्यादिर्जन्मादिसूत्रं तस्मिन्नित्यर्थः । वर्त्तत इति शेष. । सूत्रस्य सङ्गतिः शास्त्रादौ वर्त्तत इत्यन्वयः । शास्त्रादिसङ्गतिप्रदर्शनेन शास्त्रसङ्गतिरप्युक्तैवेति भावः । अधिकार्यादिश्रुतिनिष्ठ यत्स्वार्थबोधकत्वं तद्रूपैकार्थप्रतिपादकत्वं सूत्रसमन्वयाध्याययोः सम्बन्ध इत्याह—**अधिकारीति** । सूत्रस्येत्यस्यात्राप्यनुषङ्गः । तस्य सङ्ग-

**रत्नप्रभा**

**पादसङ्गतिः** । एवं सर्वसूत्राणां श्रुत्यर्थनिर्णायकत्वात् **श्रुतिसङ्गतिः** । **तत्तदध्याये** तत्तत्पादे च समानप्रमेयत्वेन संगतिरूहनीया । **प्रमेयं च**—कृत्स्नशास्त्रस्य ब्रह्म, **अध्यायानां तु**—समन्वयाविरोधसाधनफलानि । **तत्र प्रथमपादस्य** स्पष्टब्रह्मलिङ्गानां समन्वयः प्रमेयं, **द्वितीयतृतीययोः**—अस्पष्टब्रह्मलिङ्गानाम्, **चतुर्थपादस्य** पदमात्रसमन्वय इति भेदः । अस्याधिकरणस्य प्राथम्यान्नाधिकरणसंगतिरपेक्षिता ।

**अथाधिकरणमारच्यते**—"श्रोतव्यः" इति विहितश्रवणात्मकं **वेदान्तमीमांसाशास्त्रं विषयः**, तत्किमारब्धव्यं न वेति **विषयप्रयोजनसम्भवासम्भवाभ्यां-**

**पूर्णानन्दीया**

तिरित्यनेनान्वयः । अधिकार्यादिश्रुतीनां यः स्वार्थोऽधिकार्यादिः तस्मिन्नधिकार्यादिश्रुतीना य समन्वयऽवान्तरतात्पर्येण बोधकत्वं तस्योक्तेः सूत्रसमन्वयाध्यायाभ्यां प्रतिपादनादित्यर्थः । अधिकार्यादिश्रुतिनिष्ठः य स्वार्थसमन्वयः तत्प्रतिपादकत्वात्सूत्राध्याययोरिति यावत् । तथा च विवेकादिविशेषणविशिष्टोऽधिकारी, अन्यो वेत्याद्युक्तरीत्या श्रुतिप्रतिपादिताधिकार्याद्यनुबन्धचतुष्टये सन्देहे प्राप्तेऽधिकारिश्रुते विवेकादिविशेषणविशिष्टाधिकारिबोधकत्वमेव । विषयश्रुते ब्रह्मात्मैक्यरूपविषयसमन्वय एवेत्येवं समन्वयप्रतिपादनार्थं प्रवृत्तयोः प्रथमसूत्राध्याययोराधिकार्यादिश्रुतिनिष्ठाधिकार्यादिसमन्वयप्रतिपादकत्वस्य सत्त्वात् प्रथमाध्यायेन प्रथमसूत्रस्य सङ्गतिरिति भावः ।

ननु समन्वयाध्यायेनाधिकार्यादिश्रुतिनिष्ठसमन्वयो न कुत्रापि प्रतिपाद्यतेऽतः कथमधिकार्यादिश्रुतिसमन्वयप्रतिपादकत्वमध्यायस्येति चेद् । न—अध्यायस्थितसमन्वय सूत्रेण सर्वश्रुतीनां स्वार्थबोधकत्वप्रतिपादनद्वारा तात्पर्येण ब्रह्मसमन्वयस्य प्रतिपादनादधिकार्यादिश्रुतीनां समन्वयोऽपि तात्पर्येण प्रतिपाद्यत एव । अथ वाऽध्यायसम्बन्धिजिज्ञासासूत्रेण तत्प्रतिपादनमेवाध्यायेन तत्प्रतिपादनमित्यङ्गीकारान्न पूर्वोक्तदोष । तथा चाधिकार्यादिश्रुतिनिष्ठमवान्तरतात्पर्येण स्वार्थबोधकत्वद्वारा महातात्पर्येण यद्ब्रह्मबोधकत्वं तद्रूपैकार्थप्रतिपादकत्वं सूत्राध्याययोः सम्बन्ध इति प्रथमाध्याये जिज्ञासासूत्रस्य प्रवेश इति निष्कृष्टोऽर्थ ।एवमेव पादसङ्गतावप्यूहनीयम् । स्पष्टब्रह्मलिङ्गकश्रुतिनिष्ठस्वार्थबोधकत्वरूपैकार्थप्रतिपादकत्वं सूत्रप्रथमपादयोः संगतिरित्याह—**ऐनदात्म्यमिति**। अध्यायसम्बन्धवैलक्षण्याय द्वितीयादिपादवैलक्षण्याय च श्रुतीनां स्पष्टब्रह्मलिङ्गत्वविशेषणम् । विषयादावित्यत्रादिशब्देन प्रयोजनादिकं बोध्यते । प्रथमसूत्रप्रथमपादयोः स्पष्टब्रह्मलिङ्गकश्रुतिनिष्ठविषयादिसमन्वयप्रतिपादकत्वात्सूत्रस्य पादेन सह सङ्गतिरिति भाव ।

ननु प्रथमसूत्रस्य श्रुत्या सहोक्तसम्बन्धोऽस्तु को वेतरेषां सूत्राणा सम्बन्ध इत्यत आह-**एवमिति** ।तथेत्यर्थ । यथा प्रथमसूत्रस्याधिकार्यादिश्रुतिभि. प्रयोज्यप्रयोजकभाव सम्बन्ध तथेतरेषा तत्तत्सूत्राणां तत्तच्छ्रुतिभि प्रयोज्यप्रयोजकभावः सम्बन्ध इति भाव. ।

❀ रत्नप्रभा ❀

**संशयः । अत्र** नाहं ब्रह्मेति भेदग्राहिप्रत्यक्षेण, कर्तृत्वाकर्तृत्वादिविरुद्धधर्मवत्त्वलिङ्गकानुमानेन च विरोधेन ब्रह्मात्मनोरैक्यस्य विषयस्यासम्भवात्, सत्यबन्धस्य ज्ञानान्निवृत्तिरूपफलासम्भवान्नारम्भणीयम् **इति प्राप्ते सिद्धान्तः–"अथातो ब्रह्मजिज्ञासा"** (व्या सू. १।१।१) इति । **अत्र** श्रवणविधिसमानार्थत्वाय कर्त-

❀ पूर्णानन्दीया ❀

नन्वाध्यायादौ प्रथमसूत्रस्य प्रवृत्तिरस्तु कथमितरसूत्राणामध्याये प्रवेशः, सम्बन्धाभावादित्यत आह—**तत्तादिति** । सूत्राणामित्यस्यात्रानुषङ्गः कर्तव्यस्तेषां सङ्गतिरूहनीयेत्यनेनान्वयः शास्त्रपदस्याप्यनुषङ्गः, तथा च तत्तत्सूत्रस्य शास्त्रेण तत्तदध्यायेन तत्तत्पादेन च सहैकविषयत्वात्सङ्गतिरूहनीयेति भावः । शास्त्राध्यायपादानां किं तत्प्रमेयमित्याकाङ्क्षायां क्रमेण तन्निरूपयति–**प्रमेयमिति** । सम्पूर्णशास्त्रेण प्रतिपाद्य ब्रह्मैवेति भावः । शास्त्रस्याध्यायचतुष्टयात्मकत्वेनाध्यायभेदकं तदवान्तरप्रमेयमाह–**अध्यायानामिति** । फलानीत्यस्य पूर्वेण प्रमेयमित्यनेनान्वयः, प्रथमाध्यायस्य समन्वयः प्रमेयं, द्वितीयाध्यायस्याविरोधः प्रमेयमित्येवं वाक्ययोजना । तथा चाध्यायैः समन्वयादिकं प्रतिपाद्यत इति भावः । अध्यायस्य पादचतुष्टयात्मकत्वेन पादभेदकं प्रमेयमाह–**तत्रेति** । प्रथमाध्याय इत्यर्थः । प्रमेयं विषय इत्यर्थः । द्वितीयतृतीयपादयोः प्रायेण सविशेषनिर्विशेषब्रह्मप्रतिपादकत्वात्परस्परं भेद इत्यभिप्रेत्य प्रमेयं निरूपयति–**द्वितीयेति** । अस्पष्टब्रह्मलिङ्गानां समन्वयः प्रमेयमित्यर्थः । **वेदान्तेति** । वेदान्ताविषयकपूजिताविचारात्मकशास्त्रमित्यर्थः । विषय उद्देश्यमित्यर्थः । **विषयप्रयोजनेति** ।

नन्वधिकारिसम्बन्धसम्भवासम्भवाभ्यामप्यधिकरणं रच्यताम्, किं विषयप्रयोजनसम्भवासम्भवाभ्यामेव, चतुर्णां प्रसक्तेस्तुल्यत्वादिति चेद् ? न–तृतीयचतुर्थवर्णकयोरधिकारिसम्बन्धसम्भवासम्भवाभ्यामधिकरणस्य निरूपणीयत्वान्नात्र प्रथमवर्णके ताभ्यामधिकरणं रच्यते । न च विनिगमनाविरह इति वाच्यम् ? प्रयोजनस्य प्रथममाकाङ्क्षितत्वेन मुख्यत्वात्तत्सिद्धेः विषयसिद्धिमन्तरा निरूपयितुमशक्यत्वाद्विषयप्रयोजने पुरस्कृत्याधिकरणं रच्यत इति भावः । ब्रह्मात्मानौ ऐक्यशून्यौ विरुद्धधर्मवत्त्वाद्दहनतुहिनवदित्यनुमानमभिप्रेत्य पूर्वपक्षयति–**अत्रेति** । नाहं ब्रह्मेति प्रत्यक्षस्याहमंशे विशिष्टविषयकत्वेन विशिष्टत्वेन रूपेणात्मनः ब्रह्मैक्यानङ्गीकारेण प्रत्यक्षाविरोधाभावादुक्तानुमानस्य सत्प्रतिपक्षत्वादिदोषग्रस्तत्वाद्बन्धस्याध्यस्तत्वाच्च विषयप्रयोजनसिद्धिरिति सिद्धान्तसूत्रं पठति—**सिद्धान्त इति** । सत्प्रतिपक्षानुमानमनुपदं वक्ष्यते ।

नन्वस्य सूत्रस्य कथं श्रोतव्य इति श्रुतिमूलकत्वं भिन्नार्थकत्वादित्यत आह–**अत्रेति** । इदमुपलक्षणं पुरुषप्रवृत्तिसिद्ध्यनुवादपरिहारयोः । तथा च विधिसमानार्थत्वायानुवादपरिहाराय च शास्त्रे पुरुषप्रवृत्तिसिद्धये च सूत्रे कर्तव्येति पदमध्याहर्तव्यमिति भावः । कर्तव्यपदा-

**रत्नप्रभा**

व्येति पदमध्याहर्तव्यम् । **अध्याहृत** च भाष्यकृता "ब्रह्मजिज्ञासा कर्तव्या" इति । तत्र प्रकृतिप्रत्ययार्थयोर्ज्ञानेच्छयोः कर्तव्यत्वानन्वयात् प्रकृत्या **फलीभूतं** ज्ञानमजहल्लक्षणयोच्यते । **प्रत्ययेने**च्छासाध्यो विचारो जहल्लक्षणया । तथा च ब्रह्मज्ञानाय विचारः कर्तव्य इति सूत्रस्य श्रौतोऽर्थः सम्पद्यते । तत्र ज्ञानस्य स्वतः फलत्वायोगात्प्रमा-

**पूर्णानन्दीया**

ध्याहारे श्रीभाष्यकारसम्मतिमाह—**अध्याहृतमिति** । मिश्रमतानुसारिणस्तु- श्रुतिसूत्रयोरैक्यरूपनियमाभाव, विषयप्रयोजनज्ञानादेव पुरुषप्रवृत्तिसिद्धिं, श्रवणे विध्यसम्भवं च मन्वाना कर्तव्यपदं नाध्याहर्तव्यमिति वदन्ति । तन्मते साधनचतुष्टयसम्पत्त्यनन्तरं ब्रह्मजिज्ञासेच्छा भवति, कर्मफलस्यानित्यत्वाद् ब्रह्मज्ञानात्परमपुरुषार्थश्रवणाच्चेति श्रौतोऽर्थः । ज्ञानस्य विचारसाध्यत्वात् विचारकर्त्तव्यताऽऽर्थिकैवेति । अत्र विचारानारम्भवादिनः— उपायान्तरसाध्या मुक्तिरिति फलमिति ज्ञेयम् ।

ननु कर्तव्यत्वं कृतिसाध्यत्वं, तथा च ज्ञानेच्छयो, कृत्यसाध्यत्वेन कर्तव्यत्वस्यानन्वयात्कर्तव्यपदं कथमध्याहर्तव्यमतः श्रुतिरूपमूलप्रमाणरहितत्वेनेदं सूत्रमप्रमाणमित्याशङ्कासङ्क्षेपेणोद्भाव्य परिहरति—**तत्रेति** । सूत्रेऽध्याहारेऽवश्यकर्त्तव्ये सतीत्यर्थः । ज्ञाऽवबोधन इति धातुः प्रकृति, प्रत्ययः सन्प्रत्यय इति विवेक । **फलीभूतमिति** । अज्ञाननिवृत्तिरूपफलसाधनत्वेन फलीभूतमित्यर्थः । **अजहदिति** । वाच्यार्थस्य ज्ञानस्यात्यागादजहल्लक्षणेति भावः ।

ननु तथाऽप्युक्तदोषतादवस्थ्यमित्यत आह—**प्रत्ययेनेति** । शक्यसम्बन्धिनी लक्षणेति ज्ञानार्थ इच्छासाध्यपदम् । वाच्यार्थेच्छाया परित्यागाजहल्लक्षणेति भावः । श्रौतोऽर्थ व्यङ्ग्यार्थाद्भिन्नोऽर्थ लाक्षणिकार्थ इति यावत् । सौत्राथशब्देन विशिष्टाधिकारी बोध्यते । तथा च साधनचतुष्टयसम्पन्नेनाअधिकारिणा ब्रह्मज्ञानाय विचार. कर्तव्य इति सूत्रवाक्यस्य श्रौतोऽर्थः । मोक्षेच्छाया अधिकारिविशेषणत्वेन तद्वाराऽधिकारिविशेषणीभूतो यो मोक्षस्तत्साधन ब्रह्मज्ञानमित्यर्थात्सिध्यति । अस्ति तावद्वेदान्तवाक्यसान्निध्यं श्रवणविधेः विधिसमानार्थकत्वेन सूत्रस्यापि तत्सान्निध्यमस्तीत्यतः वेदान्तवाक्यैरद्वैतात्मविचार. सिध्यति । तथा च साधनचतुष्टयसम्पन्नेनाधिकारिणा मोक्षसाधनब्रह्मज्ञानाय वेदान्तवाक्यैरद्वैतात्मविचारः कर्तव्य इति सूत्रस्य तात्पर्येण प्रतिपाद्योऽर्थ ।

ननु विचारलक्षणयैव कर्तव्यपदस्यान्वयासम्भवादप्रामाणिकी ज्ञानलक्षणेति चेद्? न— ज्ञानलक्षणाऽनङ्गीकारे ज्ञानस्य सुखप्राप्तिदु खनिवृत्त्यन्यतररूपत्वाभावेन स्वत पुरुषार्थत्वायोगाद्ज्ञानाय विचारः किमर्थ इति विचारलक्षणाया अप्यप्रयोजकत्वेनानावश्यकत्वादन्वयानुपपत्तेस्तादवस्थ्यमित्याशङ्कां वारयितुं ज्ञानेऽपि लक्षणायाः स्वीकार्यत्वात् । ननु तथापि ज्ञानस्य स्वत फलत्वायोगो दुर्वार इत्याक्षेपे तदयोग सूचयन् ज्ञानस्य फलत्वं सूत्रतात्पर्यार्थकथन-

**रत्नप्रभा**

तृत्वकर्तृत्वभोक्तृत्वात्मकानर्थनिवर्तकत्वेनैव फलत्वं वक्तव्यम् । तत्रानर्थस्य सत्यत्वे ज्ञानमात्रान्निवृत्त्ययोगादध्यस्तत्वं वक्तव्यमिति बन्धस्याध्यस्तत्वमर्थात् सूचितम् । तच्च शास्त्रस्य विषयप्रयोजनवत्त्वसिद्धिहेतुः । तथाहि—शास्त्रमारब्धव्यं विषयप्रयोजनवत्त्वाद् भोजनादिवत् । शास्त्रं प्रयोजनवद् बन्धनिवर्तकज्ञानहेतुत्वाद् रज्जुरियम् इत्यादिवाक्यवत् । बन्धो ज्ञाननिवर्त्यः अध्यस्तत्वाद् रज्जु-

**पूर्णानन्दीया**

व्याजेन विवृणोति—**तत्रेति** । सूत्रज्ञानपदस्य लक्षणाङ्गीकार इत्यर्थः । ब्रह्मज्ञानस्य इच्छाविषयत्वात्पुरुषार्थरूपफलत्व प्रतीयते प्रतीयमानस्य फलत्वस्य स्वरूपेणायोगात्फलसाधनत्वेनैव तत् वक्तव्य तत्साध्यफलं किमित्याकांक्षाया अथशब्दोपात्ताधिकारिविशेषणीभूतोऽनर्थनिवृत्तिरूपो मोक्षः फलत्वेन सम्बध्यते । यथा–स्वर्गकामो यजेतेत्यत्र अधिकारिविशेषणीभूत. स्वर्ग· फलत्वेन सम्बध्यते तद्वत् । अतः फलीभूतमोक्षसाधनत्वेन ब्रह्मज्ञानस्य फलत्वं युज्यत इति ज्ञानाय विचारो युक्त इति भावः । हेतूक्तिद्वारा अनर्थनिवर्तकत्वमुपपादयति–**तत्रानर्थस्येति**। अध्यस्तत्वं मिथ्यात्वम् । ननु बन्धस्य सत्यत्वमेवास्तु मास्तु ज्ञानमात्रनिवृत्तिरितिचेन्न। श्रुतिसूत्रविद्वदनुभवानां विरोधात्। तस्मात् तदज्ञाननिष्ठानर्थनिवर्तकत्वेन बन्धस्याध्यस्तत्वं सिद्धमिति भाव । नन्वेदं सर्वमितिचित्रतुल्यत्वेनानुपपन्नं शक्त्या लक्षणया वाऽध्यस्तत्वस्य सूत्रेणाप्रतिपादनादित्यत आह–**इति बन्धस्येति**। इति शब्दो हेत्वर्थकः। सौत्रज्ञाननिष्ठनिवर्तकत्वान्यथानुपपत्तिप्रमाणबलादित्यर्थ. । अर्थात् सूत्रितव्यंग्यार्थतया सूत्रेणैव प्रतिपादितमित्यर्थः । अस्तु वा फलीभूतज्ञानविचारयोर्लक्षणा तथापि विषयप्रयोजनसिध्यभावादनारम्भणीयत्वदोषो दुर्वार इत्यत आह—**तच्चेति** । ननु कथं प्रतिज्ञामात्रेणार्थसिद्धिरित्यत आह—**तथाहीति** । भोजनस्यान्नादिर्विषयः क्षुन्निवृत्ति· प्रयोजनमिति विवेकः । **शास्त्रमिति** । ननु पक्षे हेत्वसिद्धिशङ्कायास्तुल्यत्वात् हेतौ प्रथमोपस्थितत्वाच्च विषय एव साधनीय· कथं प्रयोजनं प्रथमत· साध्यते । न च प्रयोजनान्यथानुपपत्त्या सिद्धस्य विषयस्य प्रयोजनसाधनमन्तरा साधयितुमशक्यत्वात् प्रथम प्रयोजनं साधयतीति वाच्यम् । विषयस्य प्रयोजनापेक्षा यथा तद्वदस्त्येव प्रयोजनस्याऽपि विषयापेक्षा स्वज्ञानद्वारा विषयस्यापि प्रयोजनं प्रति हेतुत्वात् तथा प्रथमोपस्थितत्वेन प्रथमं विषयस्यैव निरूपयितुमुचितत्वात्कथं प्रयोजनं निरूप्यत इति चेत्, अत्रोच्यते–प्रयोजनं विषयापेक्षया अभ्यर्हितत्वात्प्रथमं निरूप्यत इति। तथा च जीवगतानर्थनिवृत्त्यात्मकप्रयोजनरूपकार्यान्यथानुपपत्या कारणीभूतविषयसिद्धिरिति समुदायग्रन्थार्थ । रज्जुविषयकाज्ञानरूपकारणसहित· सर्पज्ञानजनितभयकम्पादिरूपोऽनर्थ बन्ध तस्य निवर्तकं नायं सर्पः किन्तु रज्जुरेवेति विशेषदर्शनात्मकं यज्ज्ञानं तद्धेतुत्वं वर्तत इति दृष्टान्ते हेतुसमन्वयः । ज्ञाने बन्धनिवर्तकत्वरूपविशेषणं कथमित्याशंकाया पूर्वोक्तमनुमानेन साधयति—**बन्ध इति** । बन्ध-

## रत्नप्रभा

सर्पवद्, इति प्रयोजनसिद्धिः । एवमर्थाद् ब्रह्मज्ञानाज्जीवगतानर्थभ्रमनिवृत्ति फलं सूत्रयन् जीवब्रह्मणोरैक्यं विषयमप्यर्थात् सूचयति, अन्यज्ञानादन्यत्र भ्रमानिवृत्तेः । जीवो ब्रह्माभिन्नः तज्ज्ञाननिवर्त्याध्यासाश्रयत्वाद्, यदित्थं तत्तथा यथा शुक्त्यभिन्न इदमंश इति विषयसिद्धिहेतुरध्यास इत्येवं विषयप्रयोजनवत्त्वाच्छास्त्रमारम्भणीयमिति । अत्र पूर्वपक्षे बन्धस्य सत्यत्वेन ज्ञानादनिवृत्तेरुपायान्तरसाध्या मुक्तिरिति फलम् । सिद्धान्ते ज्ञानादेव मुक्तिरिति विवेकः, इति सर्वं मनसि

## पूर्णानन्दीया

स्य ज्ञाननिवर्त्यत्वे साधिते हि ज्ञानमर्थाद्बन्धनिवर्तकं भवति तथाच बन्धनिवर्तकत्वाध्यस्तत्वयोः ज्ञप्तौ कार्यकारणभावः न स्वरूप इति भाव.। न केवलमध्यस्तत्वमेवार्थात् ततसूत्रितं किन्तु विषयप्रयोजनद्वयमपीत्याह—**एवमिति** । उक्तेन प्रकारेणेत्यर्थः । **अर्थादिति** । यदध्यस्त तज्ज्ञानमात्रनिवर्त्यमिति व्याप्तिविषयकानुमानप्रमाणबलादित्यर्थ ।ईश्वरे ह्यज्ञाने सत्यपि जीवगत एवानर्थ इत्याह—**जीवेति** । जीवगतः अनर्थरूपो यो भ्रम. कारणसहितकर्तृत्वादिबन्धः तन्निवृत्तिरूपं फलमित्यर्थः । ननु यद्विषयकमज्ञानं तद्विषयकज्ञानेनैव निवर्त्यमिति ज्ञानाज्ञानयो. समानविषयकत्वनियमेनान्यज्ञानादन्यविषयकाज्ञाननिवृत्तेरयोगात् कथं ब्रह्मज्ञानाद्ब्रह्मभिन्नजीवगताध्यासात्मकतूलाज्ञाननिवृत्तिरित्याशङ्क्याभेदोऽपि सूत्रित इत्याह—**जीवब्रह्मणोरिति । अर्थादिति** । ब्रह्माभेदसाधकाध्यासाश्रयत्वहेतुकानुमानबलादित्यर्थ । यद्यपि जीवो नाम विशिष्टः तद्गतमध्यासात्मकतूलाज्ञानं तद्धेतुको बन्धश्च तद्गत एव तथापि स एव जीव. शोधितश्चेत् प्रत्यक्स्वरूपत्वेन ब्रह्माभिन्नइति तदभेदस्तस्माद्विशेष्यांशमादाय समानविषयकत्वं सम्भवतीति भावः । पूर्ववाद्यनुमानस्य सत्प्रतिपक्षानुमानं रचयति—**जीव इति**। विशिष्टे ब्रह्माभेदस्यासम्भवादन्त.करणातिरिक्तो जीवः पक्ष इत्यर्थ । प्रबलश्रुतिमूलकत्वादिदमनुमानं प्रबलमिति भावः । अध्यासाश्रयत्वादध्यासाधिष्ठानत्वादित्यर्थः । शुद्धस्यात्मनः अध्यासाश्रयत्वाभावेऽपि तदधिष्ठानत्वमप्रतिहतमिति भावः ।

सत्यज्ञानसुखात्मा केनायं शोकसागरे मग्नः ॥
इत्यालोच्य यतीन्द्रः प्रागध्यासं प्रदर्शयामास॥ १ ॥

यत् यत्ज्ञाननिवर्त्याध्यासाश्रयः तत्तदभिन्नमिति सामान्यव्याप्तिं प्रदर्शयति—**यदिति** । इत्थं यदज्ञाननिवर्त्याध्यासाश्रय इत्यर्थः । तथा तदभिन्नमित्यर्थ । इदमंश श्रुतिज्ञाननिवर्त्याध्यासाश्रयत्वाच्छुक्त्यभिन्न इति विशेषे सामान्यव्याप्तेः पर्यवसानमाह—**यथेति** । हेतु. हेतुप्रविष्टत्वेन हेतुरित्यर्थ —**उपायेति** । केवलकर्मणो वा ज्ञानकर्मसमुच्चयाद्वा षोडशपदार्थज्ञानाद्वा साध्या मुक्तिरिति भावः। पूर्वोक्तमुपसंहरन् भाष्यमवतारयति—**एतदिति** । जीवस्य ब्रह्मत्वबोधकानि सूत्राणि ब्रह्मसूत्राणि भगवान् भाष्यकारोऽध्यासं वर्णयतीति क्रियाकारकयोजना ।

युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभाव-योरितरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरामितरेतरभावानुप-

**रत्नप्रभा**

निधाय ब्रह्मसूत्राणि व्याख्यातुकामो भगवान् भाष्यकारः सूत्रेण विचारकर्त्तव्यतारूपश्रौतार्थान्यथानुपपत्त्याऽर्थात् सूत्रितविषयप्रयोजनवत्त्वमुपोद्घातत्वात् तत्सिद्धिहेत्वध्यासाक्षेपसमाधानभाष्याभ्यां प्रथमं वर्णयति-**युष्मदस्मत्प्रत्ययगोचरयोरिति** ।

**एतेन** सूत्रार्थास्पर्शित्वादध्यासग्रन्थो न भाष्यमिति **निरस्तम्**, आर्थिकार्थस्पर्शित्वात् ।

**यत्तु** मङ्गलाचरणाभावादव्याख्येयमिदं भाष्यमिति, **तन्न**। "**सुतरामितरेतर-**

**पूर्णानन्दीया**

ननु सूत्रेण प्रथमप्रतिपन्नं प्रतिपाद्यं श्रौतार्थमुल्लंघ्य चरमप्रतिपन्नमार्थिकार्थमेव श्रीभाष्यकारः प्रथमं किमिति वर्णयतीत्यत आह—**सूत्रेणेति** । सूत्रेण लक्षिता या विचारकर्तव्यता तद्रूपश्रौताऽर्थस्यान्यथानुपपत्तिर्नाम विना विषयप्रयोजने कर्तव्यता न सम्भवतीत्याकारिका तयेत्यर्थ ।श्रौतार्थो नामार्थिकार्थाद्भिन्नोऽर्थ.-**अर्थादिति** ।अर्थात्सूत्रितत्वं नामार्थिकार्थतया सूत्रेण प्रतिपादितत्वम् । विषयश्च प्रयोजनं च ते अस्य स्त इति विषयप्रयोजनवच्छास्त्रं तद्वतो भावं तद्वत्त्वं विषयप्रयोजनद्वयमिति यावत् । सूत्रित च तद्विषयप्रयोजनवत्त्वं च तस्येति विग्रहः।उपोद्घातत्वादुपोद्घातविषयत्वेनोपोद्घातत्वादित्यर्थः। अत्र विवरणाचार्याः प्रतिपाद्यमर्थं बुद्धौ सङ्गृह्य प्रागेव तदर्थमर्थान्तरवर्णनमुपोद्घातसङ्गतिरिति उपोद्घातलक्षणं वदन्ति । वर्णनं चिन्तेत्यर्थः । तथा च विषयप्रयोजनद्वयस्य प्रतिपाद्यविचारकर्तव्यतासिध्यर्थचिन्ताविषयत्वादुपोद्घातत्वमुपचर्यत इति भावः । तस्योपोद्घातसङ्गत्या अवश्यं निरूपणीयस्य विषयप्रयोजनद्वयस्य सिद्धिः तत्सिद्धिः ।

**आर्थिकार्थेति** । व्यंग्यार्थभूतविषयप्रयोजनद्वयसिद्धिहेत्वध्यासप्रतिपादकत्वादित्यर्थः । **भाष्यमिति** ।

> सूत्रार्थो वर्ण्यते यत्र वाक्यै सूत्रानुकारिभिः ।
> स्वपदानि च वर्ण्यन्ते भाष्यं 'भाष्यविदो विदुः' ॥

इति भाष्यलक्षणम् । यत्रार्थो वर्ण्यते तद्भाष्यमित्युक्ते सागरगिरिवर्णनस्यापि भाष्यत्वप्रसङ्गस्तद्व्यावृत्त्यर्थं सूत्रपदम् । "अल्पाक्षरमसंदिग्ध सारवद्विश्वतोमुखामे"त्यादिविशेषणविशिष्टं सङ्ग्रहवाक्यं सूत्रशब्दार्थं, तथा च श्रुतिस्मृत्योः सूत्रत्वसम्भवाच्छ्रुतिस्मृतिसूत्राणां यद्भाष्यं तत्साधारणमिदं लक्षणं भवति । गिरिनदीप्रतिपादककाव्ये सङ्ग्रहवाक्यत्वाभावान्न सूत्रत्वमिति न भाष्यलक्षणस्यातिव्याप्तिरिति भावः । वार्तिकव्यावृत्त्यर्थं सूत्रानुकारिभिरिति, वार्तिके सूत्रप्रतिकूलवर्णनस्यापि सम्भवात्तद्व्यावृत्तिर्बोध्या । वृत्तिव्यावृत्त्यर्थं स्वपदानीत्युक्तम् ।

❧ रत्नप्रभा ❧

**भावानुपपत्तिः"** इत्यन्तभाष्यरचनार्थं तदर्थस्य सर्वोपद्रवरहितस्य विज्ञानघनप्रत्यगर्थस्य तत्त्वस्य स्मृतत्वात् । अतो निर्दोषत्वादिदं व्याख्येयम् ।

लोके शुक्ताविदं रजतमिति भ्रमः सत्यरजते इदं रजतमित्यधिष्ठानसामान्यारोप्यविशेषयोरैक्यप्रमाहितसंस्कारजन्यो दृष्ट इति । अत्राप्यात्मन्यनात्माहङ्काराध्यासे पूर्वप्रमा वाच्या, सा चात्मानात्मनोर्वास्तवैक्यमपेक्षते, **न हि तदस्ति । तथाहि—**

❧ पूर्णानन्दीया ❧

सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ।
येषां हृदिस्थो भगवान्मङ्गलायतनं हरिः ॥

इतिस्मृते । विशिष्टाचारपरिपालनाय विघ्नोपशमनाय च विशिष्टेष्टदेवतातत्त्वानुस्मरणलक्षणं मङ्गलं ग्रन्थकरणरूपकार्यारम्भसमये कृत श्रीभाष्यकारेणेत्यभिप्रेत्य दूषयति **तदर्थेति ॥** सर्वोपप्लवरहितस्य निरस्तसमस्तदुरितस्येत्यर्थः । विज्ञानघनत्वं चैतन्यैकतानत्वं प्रत्यक्पदस्यार्थस्याध्यासप्रमाणग्रन्थे वक्ष्यते । **स्मृतत्वादिति ।** वाक्यरचनायामर्थबोधस्य हेतुत्वेन वाक्यार्थस्य स्मृतत्वादित्यर्थ. । युष्मदस्मदित्यादिसुतरामितरेतरभावानुपपत्तिरित्यन्तभाष्यमेव मङ्गलाचरणे प्रमाणम् । तथा च निरस्तसमस्तोपप्लवं चैतन्यैकतानमभेदेन प्रतिपाद्यमानस्य श्रीभाष्यकृतः कुतः शिष्टाचारोल्लंघनदोष· तस्मादग्रणी· शिष्टाचारपरिपालने भगवान् भाष्यकार इति भाव· । ननु विशिष्टेष्टदेवतातत्त्वमनुस्मर्यते चेत्तर्हि तदेव भाष्ये प्रतिपादनीयं तत्तु न प्रतिपाद्यते किन्त्वध्यासाभावस्तस्मान्न तत्त्वस्मृतिरिति चेन्न । अध्यासाभावप्रतिपादनायैव प्रत्यक्तत्वस्य स्मृतत्वात् । नचान्यार्थं तत्त्वानुस्मरणं कार्यकारीति वाच्यम् । अन्यार्थमपि देवतानुस्मरणं स्वभावादेव विघ्नरूपोपप्लवं दहति धूमार्थो वन्हिस्तृणादिकमिवेति प्रसिद्धत्वात् । न च प्राथमिकेनास्मत्पदेनैव प्रत्यगात्मनः स्मृतत्वात् किमनुमपपत्तिपर्यन्तग्रहणमिति वाच्यम् । प्रत्यक्त्वप्रत्ययत्वविषयित्वधर्मभेदेन अनेकधा प्रत्यगर्थोऽनुस्मर्यत इति द्योतनार्थत्वात्तथा चदाव्धार्य तदन्तं ग्रहणमावश्यकमिति भावः ॥ इति सम्बन्धग्रन्थव्याख्या समाप्ता ।

श्रीगुरुभ्यो नम. ।

नन्वात्मानात्मनोरध्यासस्य कारणाभावेन निरूपयितुमशक्यत्वात्कथमार्थिकार्थत्वम्, अतो येन विषयप्रयोजनसिद्धिरित्यध्यासपूर्वपक्षभाष्यमवतारयन् प्रथमत· कारणाभावं निरूपयति **लोके इति ।** हट्टपट्टणादिस्थितं रजतं सत्यरजतं तस्मिन्नित्यर्थ· । इदंपदार्थः अधिष्ठानसामान्यं आरोप्यविशेषो रजतं इदपदार्थस्य रजतस्य च भ्रमविषयत्वज्ञापनायाधिष्ठानसामान्यत्वेनारोप्यविशेषत्वेन च ग्रहणमिति भाव. । आहित जनित इत्यर्थः ।

नन्वात्मानात्मनोरध्यासेप्युक्तसंस्कार कारणं स्यादित्यत आह **इत्यत्रेति ।** भाष्यगर्भितमनुमानं स्फोरयति **तथाहीति ।** भाष्ये शेषपूर्त्या पक्षांग· इतरेतरभावानुपपत्तावित्य·

## रत्नप्रभा

आत्मानात्मानावैक्यशून्यौ परस्परैक्यायोग्यत्वात् तमःप्रकाशवदिति मत्वा हेतुभूतं विरोधं वस्तुतः प्रतीतितो व्यवहारतश्च साधयति-**युष्मदस्मत्प्रत्ययगोचरयोरिति**।

**न च** "प्रत्ययोत्तरपदयोश्च" (पा.सू.७।२।९८) इति सूत्रेण "प्रत्यये चोत्तरपदे च परतो युष्मदस्मदोर्मपर्यन्तस्य त्वमादेशौ स्तः" इति विधानात् "त्वदीयं मदीयं त्वत्पुत्रो मत्पुत्रः" इतिवत् "त्वन्मत्प्रत्ययगोचरयोः" इति स्यादिति **वाच्यम्**। "त्वमावेकवचने" (पा.सू.७।२।९७) इत्येकवचनाधिकारात्, अत्र च युष्मदस्मत्पदयोरेकार्थवाचित्वाभावादनात्मनां युष्मदर्थानां बहुत्वादस्मदर्थचैतन्यस्याप्युपाधितो बहुत्वात् ॥

## पूर्णानन्दीया

नेन साध्यांशो बोध्यत इत्यभिप्रेत्याह **आत्मेति** । विरुद्धस्वभावत्वं नाम विरुद्धत्वमेव विरुद्धत्वं च विरोधः विरोधो नाम परस्परैक्यायोग्यत्वमित्याभिप्रेत्य विरुद्धस्वभावयोरितिभाष्यफलितार्थमाह **परस्परेति**। अनुमानान्तरस्येदमनुमानमुपलक्षणं तथा चात्मानात्मनौ तादात्म्यशून्यौ परस्परतादात्म्यायोग्यत्वात्तमःप्रकाशवदिति भावः । आत्मानात्मनोः कथं विरोध इत्याशङ्का वारयितुं युष्मदस्मदित्यादिविशेषण प्रवृत्तमित्याशयं स्फुटीकरोति-**हेत्विति** । ऐक्यायोग्यत्वं न विरोधे हेतु. किन्तु तदेव विरोध इति ज्ञापयितुं हेतुभूतामित्युक्तम् । वस्तुतः स्वभावत इत्यर्थः प्रत्यक्पराग्भावत इति यावत् । प्रतीतित. प्रकाश्यप्रकाशत्वत इत्यर्थः । व्यवहारतः ज्ञानरूपव्यवहारत इत्यर्थः । अहं कर्त्ताहं ब्रह्मेति परस्पराभिन्नं यत् ज्ञानं तद्विषयत्वत इति यावत् । वृद्धमतोक्तप्रथमविग्रहानुसारेणायं त्रिधा विरोधो योजनीयः, इतरविग्रहेषु त्रिधा विरोधस्यासम्भवादिति भावः। बुद्धिस्थस्योपेक्षानर्हत्वं प्रसंग संगतिस्तया प्रयोगासाधुत्वमाशंक्य निषेधति **नचेत्यादिना**। सूत्रेण व्याकरणसूत्रेणेत्यर्थ परतः परे सतीत्यर्थः । युष्मच्छब्दस्य यन्मपर्यन्तं तस्य त्वेत्यादेशः अस्मच्छब्दस्य यन्मपर्यन्तन्तस्य मेत्यादेशः प्राप्नोतीति भावः ।सौत्रसप्तमीद्विवचनान्तपदं पृथगन्वयत्वेन व्याख्याय क्रमेण पृथगुदाहरणं दर्शयति **त्वदीयमिति**। तव इदं त्वदीयं धनमिति शेष त्वदीयमित्युदाहरणे प्रत्ययपरत्वमस्ति प्रत्ययस्तु छप्रत्यय. छस्येयादेशः प्राप्नोति तथा च युष्मत्-इयेतिस्थिते मपर्यन्तस्य त्वेत्यादेशे प्राप्ते शत्रुवदादेश इत्यभियुक्तव्यवहारेण वर्णादर्शनप्राप्तेः त्वत् इयेति स्थिते सुप्रत्ययविधानानन्तरं सहोच्चारणेन त्वदीयमिति रूपनिष्पत्तिः । एवं मदीयमित्यत्र अस्मत्पुत्र इति स्थिते पुत्रपदस्य उत्तरपदत्वं परत्वं च विज्ञेयम् । तथा च युष्मदस्मदित्यादिभाष्ये उत्तरपदस्य परत्वसत्त्वात् त्वन्मत्प्रत्ययगोचरयोरिति स्यादिति भाव। **त्वमाविति** । यदा युष्मदस्मत्पदयो प्रत्येकमेकार्थवाचित्व तदा प्रत्यये चोत्तरपदे च परे सति मपर्यन्तस्य त्वमावित्यादेशौ स्त इति व्याकरणसूत्रस्यार्थ. । ननु युष्मदर्थस्य बहुत्वेपि प्रत्यगात्मन. एकत्वेनास्मदर्थैकत्वादस्मत्पदस्य मपर्यन्तस्य मेत्यादेशः स्यादित्यत आह **अस्मदर्थेति** । नन्वस्मच्छब्द. पूर्व प्रयोक्तव्यः एकशेषश्च स्या-

## रत्नप्रभा

**नन्वेवं** सति कथमत्र भाष्ये विग्रहः ? **न च** "यूयमिति प्रत्ययो युष्मत्प्रत्ययः, वयमिति प्रत्ययोऽस्मत्प्रत्ययस्तद्गोचरयोः" इति विग्रह इति **वाच्यम्** । शब्दसाधुत्वेऽप्यर्थासाधुत्वात् । न ह्यहङ्काराद्यनात्मनो यूयमिति प्रत्ययविषयत्वमस्तीति चेत् , न । गोचरपदस्य

## पूर्णानन्दीया

दिति प्राप्तं दूषणद्वयं किमिति नोद्भाव्य परिहृतमिति चेन्न । आश्रमश्रीचरणमतनिरूपणे अस्य दूषणद्वयस्य परिहरिष्यमाणत्वादत्रोद्भाव्य न परिहृतमिति भाव· ।

एवं स्वमतानुसारेण प्रयोगं साधयित्वा स्वमतानुसारिव्याख्यानं स्फुटीकर्तुं शङ्काम· वतारयति **नन्वेवंसतीति** । विरोधं साधयतीति प्रतिज्ञाय बहुत्वांगीकारे सतीत्यर्थ । समासादिरूपवृत्त्यर्थप्रतिपादकं वाक्यं विग्रहः । **यूयमितीति** । युष्मच्छब्दोल्लिख्यमानप्र· त्यय युष्मत्प्रत्यय इत्यर्थ· । यूयमिति प्रत्ययो युष्मत्प्रत्ययः वयमिति प्रत्ययोऽस्मत्प्रत्यय इति वृद्धव्यवहारानुसार्यलौकिकोय विग्रहः लौकिकस्त्वसाधु· । यदि युष्मच्चास्मच्च युष्मदस्मदी तयोः प्रत्ययः युष्मत्प्रत्ययोऽस्मत्प्रत्ययश्चेति लौकिकविग्रह एव स्यादित्युच्येत, तदा युष्मदस्मत्पदयोर्बह्वर्थवाचित्वपक्षे युष्मच्चास्मच्चेति विग्रह एवानुपपन्नस्स्यात्तयोरेकार्थवाचित्वाभावात्तस्मादलौकिकोय विग्रह ।

ननु विग्रहो द्विविध· लौकिकोऽलौकिकोश्चेति अलौकिकत्वमरूपारिनिष्ठितत्वं रूपादिनिष्पत्त्यर्थं प्रयुक्तत्वमिति यावत् । तथाहि राजपुरुष इत्यत्र राज्ञ पुरुष इति लौकिकोयं विग्रह· राजन् ङस् पुरुष सु इत्यलौकिकोय विग्रहः, तथा च यूय प्रत्यय इति कथमलौकिकाविग्रहः तस्य यूयमिति सिद्धरूपबोधकत्वेन रूपनिष्पत्त्यर्थं प्रयुक्तवाक्यत्वाभावादिति चेन्न । लौकिकविग्रहभिन्नं वाक्यान्तरमेवात्रालौकिकविग्रह इति विवक्षितत्वात् अलौकिकस्त्वेवं साधनीयः, तथाहि युष्मच्छब्दस्य युष्मच्छब्दोल्लेखिनी लक्षणा अस्मच्छब्दस्यास्मच्छब्दोल्लेखिनी लक्षणा तथाच युष्मच्छब्दोल्लेखी चास्मच्छब्दोल्लेखी च युष्मच्छब्दोल्लेख्यस्मच्छब्दोल्लेखिनौ प्रत्ययश्च प्रत्ययश्च प्रत्ययौ उल्लेखिनौ च तौ प्रत्ययौ च तयोर्गोचरौ च तयोरिति विग्रहो द्रष्टव्यः। यद्यपि लक्षणागीकारपक्षे युष्मच्चास्मच्च युष्मदस्मदी युष्मदस्मदी च तौ प्रत्ययौ चेति विग्रह· साधुरेव तथापि उल्लेखिपदविशिष्टत्वेन विग्रहप्रतिपादनं वाक्यान्तराभिप्रायेणेति विवेकः । केचित्तु देव इति बुद्धि देवबुद्धिरितिवत् युष्मदस्मदी इति प्रत्ययौ युष्मदस्मत्प्रत्ययौ तयोर्गोचराविति भाष्ये विग्रहः । तत्र युष्मदस्मदी इति प्रत्ययावित्यनेन युष्मत्प्रत्ययोस्मत्प्रत्यय इति प्राप्ते युष्मत्प्रत्यय इत्यस्य यूयमिति प्रत्यय इत्यर्थबोधक वाक्यान्तरम् , अस्मत्प्रत्यय इत्यस्य वयमिति प्रत्यय इति अर्थबोधकं वाक्यान्तरमित्यभिप्रायेण यूयमिति प्रत्ययो युष्मत्प्रत्ययः वयमिति प्रत्ययोऽस्मत्प्रत्यय इत्याख्यातमित्याहु· । शब्दो विग्रह इत्यर्थः । विग्रहप्रतिपादितार्थ· विषयत्वमित्यर्थः ।।विशिष्टचेतन एव युष्मच्छब्दप्रयोगो दृश्यते त्वं गच्छागच्छेति गमनाद· सम्भवान्नाचेतनाहंकारादौ

❀ रत्नप्रभा ❀

योग्यतापरत्वात् । चिदात्मा तावदस्मत्प्रत्यययोग्यः तत्प्रयुक्तसंशयादिनिवृत्तिफलभाक्त्वात्, "न तावदयमेकान्तेनाविषयः, अस्मत्प्रत्ययविषयत्वाद्" इति भाष्योक्तेश्च । यद्यप्यहङ्कारादिरपि तद्योग्यस्तथापि चिदात्मनः सकाशादत्यन्तभेदसिद्ध्यर्थं युष्मत्प्रत्यययोग्य इत्युच्यते ।

❀ पूर्णानन्दीया ❀

केवले तदसम्भवादित्यर्थासाधुत्वं विवृणोति नहीति । इदमुपलक्षणम्, वयमिति प्रत्ययविषयत्वमात्मन्यपि नास्तीति द्रष्टव्यम् । तथा च उभयत्र विषयत्वं नास्तीति शङ्कितुरभिप्रायः। अहङ्कारविशिष्टचेतने भासमानत्वरूपं प्रत्ययविषयत्वं मुख्यं केवलाहंकारादौ गौणं तथा चाऽहंकारादौ भासमानत्वरूपमुख्यविषयत्वाभावेपि भासमानत्वरूपगौणविषयत्वमादाय साधुत्वमस्तीति परिहृति न गोचरेति । योग्यता गौणविषयतेत्यर्थः । अहकाराद्यनात्मा युष्मत्प्रत्यययोग्यः युष्मत्प्रत्ययप्रयुक्तसंशयादिनिवृत्तिफलभाक्त्वात् चैतन्यांशवद्व्यतिरेकेण घटवद्वेति प्रयोगः ।

नन्वहङ्कारादिवच्चिदात्मापि युष्मत्प्रत्यययोग्यः युष्मच्छब्दस्याहङ्कारादिविशिष्टचेतनवाचित्वेन विशिष्टनिष्ठविषयत्वस्य विशेषणांश इव विशेष्यांशेपिसत्त्वादतो व्यावर्तकधर्माभावात्कथमात्मानात्मनोर्विरोध इति चेन्न । अनात्मनः सकाशादत्यन्तभेदसिध्यर्थं चिदात्मनस्तावदस्मत्प्रत्यययोग्यत्वमेव विवक्षते न युष्मत्प्रत्यययोग्यत्वमित्येतद्ग्रन्थकर्तुराशयादित्येतत्सर्वं हृदि निधायाऽनया रीत्या चिदात्मनः गौणविषयत्वरूपमस्मत्प्रत्यययोग्यत्वं पूर्वपक्षेप्यनात्मनिष्ठविषयत्वशंकोत्थानज्ञापनाय कण्ठोक्त्या साधयति चिदात्मेति । योग्यं गौणविषय इत्यर्थः । गुणमाह तत्प्रयुक्तेति । अस्मत्प्रत्ययप्रयुक्तं संशयादिनिवृत्तिरूपं यत्फलं तदाश्रयत्वादित्यर्थः, आदिशब्देनाहं नास्मीति विपर्ययो गृह्यते तदा चात्मनः अहमिति सर्वदा भासमानत्वादहमस्मि न वेति संशयाभावः सति निश्चये संशयाद्ययोगादतो निवृत्तिफलभाक्त्वमात्मनोस्तीति भावः । केवलाहंकारो वा व्यतिरेकेण घटो वात्र दृष्टान्तः। आत्मनः गौणविषयत्वे भाष्योक्तिमपि प्रमाणयति न तावदिति । एकान्तपदं नियमार्थकं विषयत्वाद्भासमानत्वादित्यर्थः । इदंविषयत्वमहंकारादिविशिष्टचेतने मुख्यं आत्मादौ तु गौणमिति विवेकः । ननु विशेष्यस्यास्मत्प्रत्यययोग्यत्वे विशेषणाहङ्कारादेरप्यस्मत्प्रत्यययोग्यत्वेन, आत्मनोऽव्यावर्तकधर्माभावात्कथमत्यन्तभेदसिद्धिरित्याशङ्कामनूद्य परिहरति यद्यपीति । अत्यन्तभेदसिध्यर्थमहङ्काराद्यनात्मनः युष्मत्प्रत्यययोग्यत्वमेवाङ्गीक्रियते नास्मत्प्रत्यययोग्यत्वं भेदासिद्धेरिति भावः । ननु तथाप्यत्रयोग्यता वर्तते अत्र नास्तीत्येतन्नियामकमात्मव्यावृत्तमनात्मनिष्ठं युष्मत्प्रत्यययोग्यतावच्छेदकं किञ्चिद्वक्तव्यम्, तथा अनात्मव्यावृत्तमात्मनिष्ठमस्मत्प्रत्यययोग्यतावच्छेदकम् किञ्चिद्वक्तव्यमिति चेत् । उच्यते । युष्मदर्थाहङ्कारादिभिन्नार्थत्वमेवास्मत्प्रत्यययोग्यतावच्छेदकमस्म-

## ❈ रत्नप्रभा ❈

**आश्रमश्रीचरणास्तु** टीकायोजनायामेवमाहुः। "सम्बोध्यचेतनो युष्मत्पदवाच्यः, अहङ्कारादिविशिष्टचेतनोऽस्मत्पदवाच्यः, तथा च युष्मदस्मदोः स्वार्थे प्रयुज्यमानयोरेव त्वमादेशनियमो, न लाक्षणिकयोः "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ" (पा.सू.८।१।२०) इति सूत्रासाङ्गत्यप्रसङ्गात्। अत्र शब्दलक्षकयोरिव चिन्मात्रजडमात्रलक्षकयोरपि न त्वमादेशो, लक्षकत्वाविशेषाद्" इति। **यदि** तयोः शब्दबोधकत्वे सत्येव त्वमादेशाभाव इत्यनेन सूत्रेण ज्ञापितम्, **तदाऽस्मिन्** भाष्ये युष्मत्पदेन युष्मच्छब्दजन्यप्रत्ययोग्यः परागर्थो लक्ष्यते, अस्मत्पदेन अस्मच्छब्दजन्यप्रत्यययोग्यः प्रत्यगात्मा। तथा च लक्ष्यतावच्छेदकतया शब्दोऽपि बोध्यत इति न त्वमादेशः। **न च** पराक्त्वप्रत्यक्त्वयोरेव लक्ष्यतावच्छेदकत्वम्, न शब्दयोग्यत्वांशस्य गौरवा-

## ❈ पूर्णानन्दीया ❈

दर्थचिदात्मभिन्नार्थत्वमेव युष्मत्प्रत्यययोग्यतायामवच्छेदकमित्येवमत्यन्तभेदासिध्यर्थं वेदितव्यमिति दिक्।

अहङ्कारादिदेहान्तस्यानात्मनः युष्मच्छब्दोल्लिख्यमानप्रत्यययोग्यत्वमात्मनस्त्वस्मच्छब्दोल्लिख्यमानप्रत्यययोग्यत्वमित्यर्थपर्यवसानेन व्याख्यानेन व्यवहारतः विरोधो दर्शितः युष्मदस्मच्छब्दतश्च विरोधो दर्शित इति गम्यते एवं स्वाभिमतं प्रयोगसाधुत्वं व्याख्यानं चोपपाद्य पराभिमतं प्रयोगसाधुत्वं व्याख्यानं च प्रतिपादयितुमारभते **आश्रमेति**। सम्बोध्यः सम्बोधनार्ह इत्यर्थः। अचेतने सम्बोध्यत्वाभावान्न युष्मत्पदशक्यार्थत्वमिति भावः। प्रत्ययोत्तरपदयोरिति सूत्रस्यार्थमाह **तथाचेति**। स्वार्थे शक्यार्थे विशिष्टचेतन इत्यर्थं। यदा शक्यार्थबोधकत्वं युष्मदस्मत्पदयोस्तदैव त्वमादेशः न लक्षणयेति भावः। विपक्षे बाधकमाह **युष्मादिति**। वा च नौश्च वांनावौ तथाचेति शब्दसमभिव्याहारे वांनावाविति सन्धिर्भवति सूत्रस्य व्याकरणसूत्रस्य पदसाङ्गत्यं त्वन्मदोः षष्ठीत्येव स्यात् न युष्मदस्मदोः षष्ठीत्येवं रूपं तस्य प्रसक्तोरित्यर्थः। तथाच षष्ठ्यादिविभाक्तिस्थयोः युष्मदस्मच्छब्दयोरेव वांनावावित्यादेशः नार्थयोरिति युष्मदस्मदोः षष्ठीत्यत्र युष्मदस्मच्छब्दयोर्लक्षणया शब्द एवार्थः न चेतनस्ततो नत्वं मादेश इति भावः। भाष्यप्रयोगं साधयति **अत्रेति**। शंकते **यदीति**। अत्रापिशब्दलक्षकत्वमस्त्येवेति परिहरति **तथेति**। अहङ्कारादिदेहान्तानात्मा परागर्थः लक्ष्यतावच्छेदकतया लक्ष्यतावच्छेदकप्रविष्टतयेत्यर्थः लक्ष्यांशतयेति यावत्। युष्मच्छब्दयोग्यत्वावच्छिन्ने परागर्थे युष्मच्छब्दस्य लक्षणा स्वीक्रियते अतो युष्मच्छब्दयोग्यत्वं लक्ष्यतावच्छेदकं भवति तथा च लक्ष्यतावच्छेदकनिविष्टः सन् युष्मच्छब्दश्च लक्षणया तस्यार्थः यथा परागर्थस्तद्वदतो न त्वेत्यादेश इति भावः। ननु पराक्त्वावच्छिन्न एव लक्षणा स्वीक्रियते लाघवादतस्त्वमादेशः स्यादित्याशंक्य निषेधति **न चेत्यादिना**। यद्यपि पराक्त्वादिना विरोधोऽस्त्येव तथापि श्रीभाष्यकृत्तात्पर्यानु-

## ❀ रत्नप्रभा ❀

दिति **वाच्यम्** । पराक्प्रतीचोर्विरोधस्फुरणार्थं विरुद्धशब्दयोग्यत्वस्यापि वक्तव्यत्वात् । अत एवेदमस्मत्प्रत्ययगोचरयोरिति वक्तव्येऽपीदंशब्दोऽस्मदर्थे लोके वेदे च बहुशः "इमे वयमास्महे" "इमे विदेहाः" "अयमहमस्मि" इति च प्रयोगदर्शनात् नास्मच्छब्दविरोधीति मत्वा युष्मच्छब्दः प्रयुक्तः, इदंशब्दप्रयोगे विरोधास्फूर्तेः । **एतेन** चेतनवाचित्वादस्मच्छब्दः पूर्वं प्रयोक्तव्यः" "अभ्यर्हितं पूर्वम्" इति न्यायात्, "त्यदादीनि सर्वैर्नित्यम्" (पा सू.१।२।७२) इति सूत्रेण विहित एकशेषश्च स्यादिति निरस्तम् । "युष्मदस्मदोरिति" सूत्र इवात्रापि पूर्वनिपातैकशेषयोरप्राप्तेः । एकशेषे विवक्षितविरोधास्फूर्तेश्च ।

## ❀ पूर्णानन्दीया ❀

रोधात्तद्योगत्वेनापि स वक्तव्य इत्याह **विरुद्धेति** । तात्पर्ये ज्ञापकमाह **अत एवेति** । लौकिकप्रयोगमुक्त्वा वेदप्रयोगमाह **इमे विदेहा इति** । याज्ञवल्क्यं प्रति जनकस्योत्तरमिदं तथा च विदेहाख्यदेशविशेषपरम्,इमे विदेहाः यथेष्टं भुज्यन्तामयमहं चास्मि दासभावे स्थितः दासान्तर्गत इति यावत् । राज्यं मां च यथेष्टं प्रतिपद्यस्वेत्यर्थ., राज्यं भवदधीनम् इति भावः । इमे विदेहा इत्यंशस्य नात्रोपयोगः किन्तु तदंशग्रहणं श्रुतिज्ञापनार्थमिति वेदितव्यम् । **एतेनेति** । वक्ष्यमाणहेतुनेत्यर्थ चेतनवाचित्वाल्लक्षणया प्रत्यग्बोधकत्वादित्यर्थ । सर्वै पदैः सहोक्तौ सत्यां त्यदादीनि शिष्यन्त इति व्याकरणसूत्रस्यार्थ । त्यदादिगणपठितानां परस्परसहोक्तौ गणमध्ये यत्परं तच्छिष्यत इति वेदितव्यम् , तथा च युष्मदस्मत्पदयोस्त्यदादिगणपठितत्वेनैकशेषे प्राप्ते सत्यस्मत्प्रत्ययगोचरयोरित्येवात्र स्यादिति भाव । एतेनेत्यनेन सूचित हेतुं प्रदर्शयति **युष्मदिति** । यथा सूत्रे पूर्वनिपातैकशेषयोरप्राप्तिस्तद्वदत्रापि तयोरप्राप्तिरिति भाव. । न केवलं महर्षिप्रयोगेनैवैकशेषाप्राप्तिरपि तु युक्त्या चेत्याह **एकशेष इति** । नन्वेकशेषानङ्गीकारे तत्प्रतिपादकशास्त्रविरोध इति चेदुच्यते वृद्धप्रयोगानुसारादेतद्व्यतिरिक्तस्थले एवैकशेषप्राप्तिरिति तच्छास्त्रस्य सकोच कल्पनीय इति भाव । पूर्वव्याख्याने युष्मदस्मच्छब्दयोः बह्वर्थकत्वाद्यूयमिति प्रत्यय इति विग्रह अस्मिन् व्याख्याने चिज्जडमात्रलक्षकत्वेन त्वामिति प्रत्यय इति विग्रहभेदो द्रष्टव्य । अयं विग्रह अस्मत्प्रत्ययगोचर इत्यदिभाष्यव्याख्यानावसरे स्फुटीक्रियते ।प्रयोगसाधुत्वसाधनप्रकारभेदस्तु स्फुट एव। युष्मच्छब्दोल्लिख्यमानप्रत्ययविषयत्वमित्यर्थपर्यवसानेन व्यवहारतो विरोधो युष्मदस्मच्छब्दतश्च विरोधो दर्शित इत्यनवद्यम्।नन्वस्मिन् व्याख्याने भाष्ये कथं विग्रह इति। उच्यते । युष्मदस्मत्पदयोरेकार्थवाचित्वाद्युष्मच्चास्मच्चेति विग्रहः साधुर्भवति लक्षकत्वादेव त्वमादेशाप्राप्तिश्च, तथा च युष्मच्चास्मच्च युष्मदस्मदीय इति प्रत्ययौ युष्मदस्मत्प्रत्ययौ तयोर्गोचराविति विग्रहः । तथा चात्र युष्मत्प्रत्यय इत्यस्यार्थबोधकं त्वमिति प्रत्यय इति वाक्यान्तरम् अस्मत्प्रत्ययस्याहमिति प्रत्यय इत्यर्थबोधक वाक्यान्तरमिति

## रत्नप्रभा

वृद्धास्तु "युष्मदर्थादनात्मनो निष्कृष्य शुद्धस्य चिद्धातोरध्यारोपापवादन्यायेन ग्रहणं द्योतयितुमादौ युष्मद्ग्रहणम्" इत्याहुः ।

तत्र युष्मदस्मत्पदाभ्यां पराक्प्रत्यक्त्वेनात्मानात्मनोर्वस्तुतो विरोध उक्तः । प्रत्ययपदेन प्रतीतितो विरोध उक्तः । प्रतीयत इति प्रत्ययोऽहङ्कारादिरनात्मा दृश्यतया भाति, आत्मा तु प्रतीतित्वात् प्रत्ययः स्वप्रकाशतया भाति । गोचरपदेन व्यवहारतो विरोध उक्तः । युष्मदर्थः प्रत्यगात्मतिरस्कारेण कर्त्ताऽहमित्यादि व्यवहारगोचरः, अस्मदर्थस्त्वनात्मप्रविलापेन "अहं ब्रह्मेति" व्यवहारगोचर इति त्रिधा विरोधः स्फुटीकृतः । युष्मच्चास्मच्च युष्मदस्मदी, ते एव प्रत्ययौ च तौ गोचरौ चेति युष्मदस्मत्प्रत्ययगोचरौ तयोस्त्रिधा विरुद्धस्वभावयोरितरेतरभावोऽत्यन्ताभेदस्तादात्म्यं वा तदनुपत्तौ सिद्धायामित्यन्वयः । ऐक्यासम्भवेऽपि शुक्लो पट इतिवत्ता-

## पूर्णानन्दीया

वेदितव्यम् । अथवा युष्मदस्मच्छब्दयोरुल्लेखिनि लक्षणामंगीकृत्य स्वव्याख्यानविग्रहानुसारेणैव विग्रहो योजनीय इति रहस्यम् । मतद्वयेपि युष्मत्पदस्य पूर्वप्रयोग एव हेतुरिति प्रतिपाद्य हेत्वन्तरं प्रतिपादयितुं मतान्तरमुत्थापयति **वृद्धास्त्विति** । पूर्वप्रयोगे अध्यारोपापवादन्याय एव मूलमिति भावः । पूर्वसङ्ग्रहेण प्रतिज्ञातं त्रिधा विरोधं विवृणोति **तत्रेति** । वृद्धमत इत्यर्थ. । युष्मदस्मत्पदाभ्यामुक्तो विरोधो वस्तुतो विरोध इत्यन्वयः । पराक्प्रत्यग्भावतः उक्तो विरोधः यः सः वस्तुतो विरोध इत्यर्थः । पदाभ्यामिति प्रयोगस्वारस्याद्युष्मदस्मच्छब्दतोपि विरोधोऽस्तीति वेदितव्यम् । प्रत्ययपदेन प्रकाश्यप्रकाशत्वतः उक्तो विरोधः प्रतीतितो विरोध इत्यर्थः । गोचरपदेन परस्परभिन्नज्ञानविषयत्वतः उक्तो विरोधः व्यवहारतो विरोध इत्यर्थः । पूर्ववद्युष्मच्छब्दस्योल्लेखिनी लक्षणा न स्वीकर्तव्या शब्दलक्षकत्वं तु स्वीकर्तव्यमित्यभिप्रेत्य वृद्धाभिमतविग्रहमुपपादयति **युष्मच्चेति** ।

ननु त्वं चाहं चेति विग्रहे वक्तव्ये युष्मच्चास्मच्चेति विग्रहः कथमिति चेन्न । शब्दलक्षकत्वादेव युष्मदस्मत्पदयोस्त्वमादेशस्याप्राप्तत्वात् यथा 'युष्मदस्मदोः षष्ठी चतुर्थी' ति सूत्रे शब्दलक्षकत्वेन त्वमादेशाप्राप्त्या युष्मच्चास्मच्चेति विग्रहस्तद्वत्, तथा च प्रत्ययश्च प्रत्ययश्च प्रत्ययौ गोचरश्च गोचरश्च गोचराविति विग्रहं सिद्धवत्कृत्य कर्मधारयसमासं ज्ञापयतीति भाव· ।

ननु युष्मदस्मदी च तौ प्रत्ययौ चेति कथं कर्मधारयः उभयोर्लिङ्गव्यत्ययवत्त्वादिति चेन्न । युष्मच्चास्मच्चेति नित्यनपुंसकमितरन्नित्यपुल्लिङ्गमित्यदोषादिति ज्ञेयम् । मतत्रयपरिष्कृतार्थेन साधितार्थैकदेशशङ्कानिरासप्रतिपादकत्वेन विषयविषयिणोरिति भाष्य व्याख्यातुकामः शङ्कावताराय प्रथममर्थकथनद्वारा भाष्यान्वयमाविष्कारोति **त्रिधेति** । आत्मानात्मनोरिति शेषः । असम्भवोऽनुपपत्तिशब्दार्थः धर्मितादात्म्याद्यभावे सिद्धे सतीति

## रत्नप्रभा

दात्म्यं किं न स्यादित्यत आह—**विषयविषयिणोरिति** । चिज्जडयोर्विषयविषयित्वाद्दीपघटयोरिव न तादात्म्यमिति भावः ।

युष्मदस्मदी पराक्प्रत्यग्वस्तुनी, ते एव प्रत्ययश्च गोचरश्चेति वा विग्रहः । अत्र प्रत्ययगोचरपदाभ्यां आत्मानात्मनोः प्रत्यक्पराग्भावे चिदचित्त्वं हेतुरुक्तः । तत्र हेतुमाह—**विषयविषयिणोरिति** । अनात्मनो ग्राह्यत्वादचित्त्वम्, आत्मनस्तु ग्राहकत्वाच्चित्त्वं वाच्यम् । अचित्त्वे स्वस्य स्वेन ग्रहस्य कर्मकर्तृत्वविरोधेनासम्भवादप्रत्यक्षत्वापत्तेरित्यर्थः । यथेष्टं वा हेतुहेतुमद्भावः । **नन्वेवमात्मानात्मनोः** पराक्प्रत्यक्त्वेन चिदचित्त्वेन ग्राह्यग्राहकत्वेन च विरोधात् तमःप्रकाशवदैक्यस्य तादात्म्यस्य चानुपपत्तौ सत्यां तत्प्रमित्यभावेनाध्यासाभावेऽपि तद्धर्माणां चैतन्यसुखजाड्यदुःखादीनां विनिमयेनाध्यासो ऽस्त्वित्यत आह–**तद्धर्माणामपीति** । तयोरात्मानात्मनोर्धर्मास्तद्धर्मास्तेषामपि इत-

## पूर्णानन्दीया

भाव. । **शुक्ल इति** । सिद्धान्ते शुक्लगुणतादात्म्यापन्नो घट इति शुक्लगुणघटयो॰ विरुद्धयोस्तादात्म्याङ्गीकारवदित्यर्थ॰। यत्र विरुद्धयोस्तादात्म्यं तत्र प्रकाशमप्रकाशकत्वाभाव इति व्याप्तिरनुभवसिद्धा यथा शुक्लो घटः तथा च प्रकृते व्यापकाभावाद्व्याप्याभाव इत्याह **चिदिति** ।

वृद्धमत एव तत्कृतविग्रहान्तरमुपपादयति **युष्मदिति** । प्रत्यगात्मा प्रत्ययस्वरूपः गोचरस्वरूप परागिति व्युत्क्रमेण विवेकः प्रत्ययश्च गोचरश्च प्रत्ययगोचरौ युष्मदस्मदी च तौ प्रत्ययगोचरौ च युष्मदस्मत्प्रत्ययगोचरौ तयोरिति विग्रहो द्रष्टव्य. । एतद्विग्रहप्रतिपादितेऽर्थे पुनर्विषयविषयिणोरिति भाष्यं योजयति **अत्र प्रत्ययेति** । अव्यवहितविग्रह॰ सप्तम्या परामृश्यते **अचित्व इति** । स्वस्येति पदस्याप्रत्यक्षत्वापत्तेरित्यनेनाप्यन्वय॰ । एकस्य स्वस्य ज्ञानविषयत्वरूपं कर्मत्वं तज्ज्ञानाश्रयत्वरूपं कर्तृत्वं च विरुद्धमिति भावः । विषयित्वचिदचित्वप्रत्यक्त्वानां समव्याप्तत्वात्परस्परहेतुहेतुमद्भाव इत्यभिप्रेत्याह **यथेष्टमिति** । अतः मतत्रयेण विग्रहचतुष्टयं प्रयोगसाधुत्वं च दर्शितम् विग्रहत्रयनिरूपणानन्तरमुक्तविरोधानुवादपूर्वकं भाष्यान्वयो दर्शितः इदानीमव्यवहितविग्रहोक्तविरोधप्रतिपादनद्वारा वृत्तं कथयन् शङ्कापूर्वकमुत्तरभाष्यमवतारयति **नन्विति** । विषयविषयिणोरित्यनेन द्वितीयविशेषणेन प्रतिपादितमर्थं ज्ञापयति **ग्राह्येति** । ऐक्यं नामात्यन्ताभेदः भेदसहिष्णुरभेदस्तादात्म्यमिति विवेक । **तदिति**। ऐक्यप्रमाया अभावेन तज्जन्यसंस्काररूपकारणाभावादध्यासाभावेपीत्यर्थ. । तयोरात्मानात्मनोर्धर्माणामित्यर्थ॰। चैतन्यं सुखं च आत्मनो धर्म॰ जाड्य दु.खं च अनात्मनो धर्म इति विवेक॰ । सुखादेरात्मन॰ स्वरूपत्वेपि धर्मत्वेन व्यपदेशस्त्वौपचारिक इति भावः । विनिमयेन व्यत्यासेनेत्यर्थः। इत्यत आहेति इतिशब्दः शङ्कार्थक॰; अतःशब्दो हेत्वर्थक॰, आहेत्यनेन परि-

**॥ रत्नप्रभा ॥**

**रेतरभावानुपपत्तिः**। इतरत्र धर्म्यन्तरे इतरेषां धर्माणां भावः संसर्गस्तस्यानुपपत्तिरित्यर्थः। **न हि** धर्मिणोः संसर्गं विना धर्माणां विनिमयोऽस्ति। स्फटिके लोहितवस्तुसान्निध्यात् लौहित्यधर्मसंसर्गः। असंगात्मधर्मिणः केनाऽप्यसंसर्गाद्धर्मिसंसर्गपूर्वको धर्मसंसर्गः कुतस्त्य इत्यभिप्रेत्योक्तम्—**सुतरामिति**। नन्वात्मानात्मनोस्तादात्म्यस्य तद्धर्मसंसर्गस्य चाभावेऽप्यध्यासः किं न स्यादित्यत आह—**इत्यत इति**। **इति** उक्तरीत्या तादात्म्याद्यभावेन तत्प्रमाया अभावादतः प्रमाजन्यसंस्कारस्याध्यासहेतोरभावादध्यासो मिथ्येति भवितुं युक्तमित्यन्वयः। मिथ्याशब्दो द्व्यर्थः—अपह्नववचनोऽनिर्वचनीयतावचनश्चेति। अत्र चापह्नवार्थः।

**॥ पूर्णानन्दीया ॥**

हारमाहेत्युच्यते यथा चैवंरूपा शङ्का यतः कारणात्प्राप्ता अतः कारणात् परिहारमहेति पदत्रयपरिष्कृतार्थः। एवं सर्वत्र। **संसर्ग इति**। प्रकृते ह्याधाराधेयभावरूपस्तादात्म्यैकदेशः ससर्ग इत्यर्थः। अनुपपत्तिरसम्भव इत्यर्थः। धर्म्यन्तरे हीतरधर्मसंसर्गो नास्तीति भावः। उत्तरभाष्यार्थे पूर्वभाष्यार्थो हेतुरिति ज्ञापयन् आत्मन्यनात्मधर्मसंसर्गानुपपत्तौ अनात्मन्यात्मधर्मसंसर्गानुपपत्तौ च धर्मसंसर्गाभावो हेतुस्तमुपपादयति **नहीति**। संसर्गं विना तादात्म्यरूपसम्बन्धं विनेत्यर्थः। विनिमयः व्यत्यासेनाधाराधेयभावरूपसंसर्ग इत्यर्थः।

ननु धर्मसंसर्गं प्रति धर्मिससर्गो हेतुश्चेत्तर्हि धर्मिणोः स्फटिकजपाकुसुमयोः संसर्गाभावेनौपाधिकलौहित्यधर्मसंसर्गाभावात् स्फटिके लौहित्यमस्तीत्यध्यासात्मकग्रहो न स्यादित्यत आह **स्फटिक इति**। लोहितं वस्तु जपाकुसुमादि तस्य सान्निध्यं परम्परासम्बन्धः तस्मादित्यर्थः, तथा च क्वचित्साक्षात् क्वचित्परम्परया धर्मिसंसर्गो हेतुः प्रकृते परम्परया धर्मिसम्बन्धसम्भवाद्भ्रमात्मकग्रहोपपत्तिरिति भावः। ननु तर्ह्यात्मानात्मनोर्विरोधात्साक्षात् सम्बन्धाभावेपि स्फटिकजपाकुसुमवत् परम्परासम्बन्धोऽस्तु **तेन** धर्मसंसर्गः स्यादित्यत आह **असङ्गेति**। केनापि वस्तुना सह सम्बन्धाभावादित्यर्थः। असङ्गत्वादेव परम्पराधर्मिसंसर्गहेतुकधर्मसङ्गोपि नास्तीति यदुक्तं तद्भाष्यारूढं करोति **इत्यभिप्रेत्येति**। लोके शुक्ताविदमित्यादि नहि तदस्तीत्यन्तेन स्वप्रतिपादितेन ग्रन्थेनोक्तं हेतुं भाष्यारूढं कर्त्तुमिच्छन्नाक्षेपसमाधानाभ्यामुत्तरभाष्यमवतारयते **नन्विति**। वास्तवतादात्म्याद्यभावेप्याध्यासिकतादात्म्यादिकमादायाध्यासस्सम्भवत्येवेति सिद्धान्तिनः शङ्कितुरभिप्रायः। भाष्योक्तस्य इत्यतः पदद्वयस्य प्रतीकमादायार्थप्रतिपादनपूर्वकं व्यवहितेनान्वयं वक्तुमारभते **इत्युक्तेति**। उक्तरीतिमेव विवृणोति **तादात्म्येति**। वास्तवतादात्म्याभावेनेत्यर्थः। **मिथ्येति**। नास्तीत्यर्थः। तथा च कारणाभावादध्यासो नास्तीति वक्तुं युक्तमिति भावः। **अनिर्वचनीयतेति**। तत्त्वान्यत्त्वाभ्यां निर्वक्तुमशक्यतेत्यर्थः। **अप-**

पत्तिरित्यतोऽस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य

॥ रत्नप्रभा ॥

ननु कुत्र कस्याध्यासोऽपह्नूयते इत्याशंक्य आत्मन्यनात्मद्धर्माणाम् अनात्मन्यात्मतद्धर्माणामध्यासो निरस्यत इत्याह—**अस्मत्प्रत्ययगोचर इत्यादिना** । अहमितिप्रत्यययोग्यत्वं बुद्ध्यादेरप्यस्तीति मत्वा तत आत्मानं विवेचयति—**विषयिणीति** । बुद्ध्यादिसाक्षिणीत्यर्थः । साक्षित्वे हेतुः—**चिदात्मक इति** । अहमिति भासमाने चिदंशात्मनीत्यर्थः । **युष्मत्प्रत्ययगोचरस्येति** । त्वंकारयोग्यस्य इदमर्थस्येति यावत् । **नन्वहमिति** भासमानबुद्ध्यादेः कथमिदमर्थत्वमित्यत आह—**विषयस्येति** । साक्षिभास्यस्येत्यर्थः । साक्षिभास्यत्वरूपलक्षणयोगाद् बुद्ध्यादेर्घटादिवदिदमर्थत्वं न प्रतिभासत इति भावः ।

**अथवा यदात्मनो मुख्यं सर्वान्तरत्वरूपं प्रत्यक्त्वं प्रतीतित्वं ब्रह्मा-**

॥ पूर्णानन्दीया ॥

**ह्नवार्थक इति** । अभावार्थक इत्यर्थः । अपह्नूयते निरस्यत इत्यर्थ. ।आश्रमश्रीचरणव्याख्यामनुसृत्य पदानामर्थ कथयन् प्रयोजनमाह **अहमित्यादिना** । स्वव्याख्यानानुरोधेन भाष्यपदयोजना परित्यज्य एतद्व्याख्यानानुरोधेन योजनापि युक्तैव स्वव्याख्यानेनैतद्व्याख्यानयोरीषद्भेदस्याकिञ्चित्करत्वात्, तथाच स्वव्याख्यानानुरोधेन योजनाप्युक्तप्रायैवेति विभावनीयम् । अहमितिप्रत्यययोग्यत्व बुध्यादेरप्यस्ति तथा च बुद्ध्यादौ बुद्ध्यादेरध्यासो निरस्यत इत्यर्थो लभ्यते नात्मनीति मत्वेत्यर्थः ।

ननु चिदात्मकत्वमहमिति भासमानस्य विशिष्टस्याप्यस्तीत्याशंक्य निषेधति **अहमितीति** । जडांशमविवक्षित्वा ।चिदंशमात्रं विवक्षितमिति भाव. । **त्वङ्कारेति** । त्वमिति प्रत्यययोग्यस्य बुद्ध्यादेरित्यर्थ. । **नन्वहमिति** । यत्रेदमर्थत्व तत्र वृत्तिरूपप्रत्यक्षविषयत्वमिति व्याप्तिर्घटादौ प्रसिद्धा, तथा च बुध्यादावहमिति भासमाने व्यापकाभावाद्व्याप्याभाव इति शङ्कितुरभिप्राय. ।

ननु शङ्काया. क परिहार इत्याशंक्य यत्र साक्षिभास्यत्वं तत्रेदमर्थत्वमिति व्याप्ति घटादावेव अनुभवसिद्धेति साक्षिभास्यत्वरूपहेतुना बुध्यादेरिदमर्थत्वमस्तीत्याह—**साक्षिभास्यत्वेति** । लक्षणयोगाद्गुणयोगादित्यर्थः । हेतो सत्त्वादिति यावत् । घटादेरिव साक्षिभास्यत्वरूपहेतुना बुध्यादेरपीदमर्थत्वमस्ति, तथाचात्रैव बुद्धौ व्यभिचाराद्भवदुक्तव्याप्तिरप्रयोजकेति भाव. । यद्यपि यत्र प्रत्यक्षविषयत्वं तत्रेदमर्थत्वमिति व्याप्तिरपि घटादावनुभवसिद्धा तथापि न प्रकृते सम्भवतीत्याह—**न प्रतिभासत इति** । प्रतिभासतः प्रत्यक्षेणेत्यर्थ । बुद्ध्यादेर्घटादिवदिदमर्थत्वमित्यस्यात्रानुषङ्ग., तथाचाहमिति भासत्वात् बुद्ध्यादेरिव वृत्तिरूपप्रत्यक्षेणेदमर्थत्वं नास्तीति भाव. । वृद्धमतोक्त प्रथमविग्रहप्रतिपादितार्थशङ्कानिरासकत्वेन तदेव भाष्यं योजयितुं पुनस्तदवतारयति—**अथवेति** ।

❁ रत्नप्रभा ❁

स्मीति व्यवहारगोचरत्वं चोक्तं तदसिद्धम् अहमिति प्रतीयमानत्वाद् अहंकारवदित्याशंक्याह—**अस्मत्प्रत्ययगोचर** इति । अस्मच्चासौ प्रत्ययश्चासौ गोचरश्च तस्मिन्नित्यर्थः । अहंवृत्तिव्यंग्यस्फुरणत्वं स्फुरणविषयत्वं वा हेतुः । आद्ये दृष्टान्ते हेत्वसिद्धिः, द्वितीये तु पक्षे तदसिद्धिरित्यात्मनो मुख्यं प्रत्यक्त्वादि युक्तमिति भावः । **ननु** यदात्मनो विषयित्वं तदसिद्धम् "अनुभवामि" इतिशब्दवत्त्वाद् अहंकारवदित्यत आह—**विषयिणी**ति । वाच्यत्वं लक्ष्यत्वं वा हेतुः ? **नाद्यः**, पक्षे तदसिद्धेः । **नान्त्यः**, दृष्टान्ते तद्वैकल्यादिति भावः । "देहं जानामि" इति देहाहङ्कारयोर्विषयविषयित्वेऽपि मनुष्योऽहमित्यभेदाध्यासवदात्माहंकारयोरप्यध्यासः स्यादित्यत आह—**चिदात्मक** इति । तयोर्जाड्याल्पत्वाभ्यां साद-

❁ पूर्णानन्दीया ❁

नास्वरसद्योतकं किन्तु मतान्तरमवलम्ब्य योजनाद्योतकमिति भाव ।

ननु इदं भाष्यं वृद्धमतोक्तं द्वितीयविग्रहप्रतिपादितार्थशङ्कानिरासप्रतिपादकत्वेन कुतो न व्याख्यायत इति चेन्न । प्रथमविग्रहप्रतिपादितार्थशङ्कानिरासकव्याख्यानेन एतस्य गतार्थत्वमित्यभिप्रायादिति मन्तव्यम् । आत्मा मुख्यप्रत्यक्त्वाद्यभाववान् अहमिति भासमानत्वादहङ्कारवदित्यनुमानप्रयोग । अस्मच्चासौ प्रत्ययश्चास्मत्प्रत्ययः स चासौ गोचरश्चास्मत्प्रत्ययगोचर इति कर्मधारयं ज्ञापयति **अस्मदि**ति ।

ननु प्रत्यक्त्वादिकं पुन. प्रतिज्ञातं किमेतावतानुमानस्य दूषणमित्याशंक्य भाष्यतात्पर्येणाहमितिभासमानत्वादिति हेतुं विकल्प्य स्वय खण्डयति **अहमि**ति । अहङ्कारवृत्त्या व्यंग्यमभिव्यक्तं यत्स्फुरणतत्त्वमित्यर्थ । वृत्तेरावरणरूपप्रतिबन्धकनिवर्तकत्वमस्तीत्येतावता स्वप्रकाशचैतन्यस्यात्मन वृत्तिकृताभिव्यक्तिश्चोपचारिकीति भावः । **विषयत्वमि**ति । विषयविषयिणोरिति भाष्येणोक्तं विषयत्वमित्यर्थ । शब्दवत्त्वाच्छब्देन व्यवह्रियमाणत्वादित्यर्थः । शब्देन व्यवह्रियमाणत्वं नाम शब्दवाच्यत्वं शब्दलक्ष्यत्वं वेति विकल्प्य हेतुं स्वय दूषयति वाच्यत्वमिति कल्पितत्वात् । यद्यपि विषयित्व विशिष्टप्रमातृचैतन्यस्यैव नतु केवलाहङ्कारस्य तथापि विशिष्टे पर्याप्त विषयित्वं अहङ्कारे विशेषणेपि विद्यत इत्यभिप्रेत्याह **देहमि**ति । अथवाऽहङ्कारे सत्येव चैतन्येऽपि विशिष्टे देहं जानामीति विषयिता तदभावे तदभावादित्यन्वयव्यतिरेकाभ्या विशिष्टे प्राप्तं विषयित्वं पर्यवसानाद्विशेषणस्याहङ्कारस्यैवेत्यभिप्रेत्याह **देहमि**ति । मनुष्यपद देहविशेषणपर, मनुष्यत्वं जातिविशेष. देहनिष्ठसंस्थानविशेषात्मकधर्मो वा, तद्विशिष्टस्य देहस्य चित्तादात्म्यापन्नाहङ्कारस्य च मनुष्योऽहमित्यभेदाध्यासवदित्यर्थ । यत्र विषयविषयित्वं तत्राभेदाध्यासाभावः यथा दीपघटवदित्युक्तनियम. अहङ्कारव्यतिरिक्तस्थल एवेति नियमस्य प्रथमापिशब्देन सङ्कोच. सूच्यत इति भावः । अल्पत्वं परिच्छि-

विषयस्य तद्धर्माणां चाध्यासः, तद्विपर्ययेण विषयिणस्तद्धर्माणां च

## रत्नप्रभा

श्यादध्यासेऽपि चिदात्मन्यनवच्छिन्ने जडाल्पाहङ्कारादेर्नाध्यास इति भावः । "अहम्" इति भास्यत्वादात्मवदहङ्कारस्यापि प्रत्यक्त्वादिकं मुख्यमेव, ततः पूर्वोक्तपराक्त्वाद्य-सिद्धिरित्याशंक्याह—**युष्मदिति** । अहंवृत्तिभास्यत्वमहंकारे नास्ति कर्तृकर्मत्व-विरोधात्, चिद्भास्यत्वं चिदात्मनि नास्ति इति हेत्वसिद्धिः । अतो बुद्ध्यादेः प्रतिभासतः प्रत्यक्त्वेऽपि पराक्त्वादिकं मुख्यमेवेति भावः । **युष्मत्** पराक् तच्चासौ प्रतीयत इति **प्रत्ययश्चासौ** कर्तृत्वादिव्यवहारगोचरश्च तस्येति विग्रहः । तस्य हेयत्वार्थमाह—**विषयस्येति** । षिञ् बन्धने । विसिनोति बध्नाति इति **विषयस्तस्येत्यर्थः** । आत्मन्यनात्मतद्धर्माध्यासो मिथ्या भवतु, अनात्मन्यात्मतद्धर्माध्यासः किं न स्यात् ? "अहं स्फुरामि, सुखी" इत्याद्यनुभवादित्याशंक्याह—**तद्विपर्ययेणेति** । तस्मादनात्म-नो विपर्ययो विरुद्धस्वभावश्चैतन्यम्, इत्थम्भावे तृतीया । चैतन्यात्मना विषयिणस्तद्ध-र्माणां च योऽहङ्कारादौ विषयेऽध्यासः स मिथ्येति नास्तीति भवितुं युक्तम्, अध्यास-सामग्र्यभावात् । न ह्यत्र पूर्वप्रमाहितसंस्कारः सादृश्यमज्ञानं वाऽस्ति । निरवयवनि-र्गुणस्वप्रकाशात्मनि गुणावयवसादृश्यस्य चाज्ञानस्य चायोगात् ।

## पूर्णानन्दीया

ज्ञत्वम् अध्यासे सादृश्य हेतुः प्रकृते त्वात्मानात्मनो· पृथग्विशेषणद्वयेन सादृश्याभावमुप-पादयन् फलितमाह **चिदिति** । अनवच्छिन्नत्वमपरिच्छिन्नत्वं व्यापकत्वमिति यावत् । अहङ्कार· मुख्यप्रत्यक्त्वादिमान् अहमिति भास्यत्वादात्मवदिति प्रयोगे अहमिति भास्य-त्वं किं केवलाहमाकाराकारितवृत्तिभास्यत्व अहमाकारितसाक्षिभास्यत्वं वेति विकल्प्य हेतुदूषणे भाष्याशयं स्फुटीकरोति अहंवृत्तीति भावप्रधानो निर्देश· परिणामरूपवृत्त्या-श्रयत्ववृत्तिविषयत्वस्वरूपयो· कर्तृत्वकर्मत्वयोरेकस्याहङ्कारस्य विरोधादित्यर्थ । अथवा कर्तृकर्मणो· परस्परैक्यायोग्यत्वरूपविरोधस्य सत्त्वादित्यर्थ· । अहङ्कारस्य साक्षिभास्यत्व' न चिद्व्यतिरिक्तवृत्तिभास्यत्व अन्यथा कर्मकर्तृत्वविरोध· स्यादिति भावः । स्वप्रकाशात्मनि कर्मकर्तृत्वविरोधादेव न चिद्भास्यत्वमित्याह चिद्भास्यत्वमिति, प्रतिभासत· भ्रान्तिरूपप्र-प्रत्यक्षेणेत्यर्थ । अहङ्कारस्य मुख्यप्रत्यक्त्वादिकं निरस्य पराक्त्वादिकं साधयन् कर्मधारयं ज्ञापयति **युष्मदिति** अहङ्कार· मुख्यपराक्त्ववान्प्रतीयमानत्वाद्गोचरत्वाद्वेति साधनीयम् । विषयो नाम बन्धहेतुरित्याह—**षिञ्बन्धन इति** । स्फुरामीत्यनेनात्माध्यास· सुखीत्यने नात्मधर्माध्यास इति विवेकः । **इत्थंभाव इति** । वैशिष्ट्यं इत्यर्थ । प्रकृते वैशिष्ट्य नामा-भेद· । **चैतन्यात्मनेति**। चैतन्यात्मना स्थितस्येत्यर्थ । अध्यासस्य इति अतद्रूपे तद्रूपाव-भासोऽध्यास स नास्तीति वक्तुं युक्तमिति भाव । सामग्रीकारणसमुदाय स नास्तीत्युपपाद-यति **निरवयवेति** । सादृश्यं द्विविधं अवयवसादृश्यं गुणसादृश्य चेति, तथा च निरवय-

## रत्नप्रभा

नन्वात्मनो निर्गुणत्वे तद्धर्माणामिति भाष्यं कथमिति चेद्, उच्यते। बुद्धिवृत्त्यभिव्यक्तं चैतन्यं ज्ञानं, विषयाभेदेनाभिव्यक्तं स्फुरणं, शुभकर्मजन्यवृत्तिव्यक्तमानन्द इत्येवं वृत्त्युपाधिकृतभेदात् ज्ञानादीनामात्मधर्मत्वव्यपदेशः। तदुक्तं टीकायाम्—"आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्मा अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते" इति। अतो निर्गुणब्रह्मात्मत्वमते "अहङ्करोमि" इति प्रतीतेरर्थस्य चाध्यासत्वायोगात् प्रमात्वम्, "अहं नर इति सामानाधिकरण्यस्य गौणत्वमिति" मतमास्थेयम्। तथा च बन्धस्य सत्यतया

## पूर्णानन्दीया

वत्वादवयवसादृश्यरूपं निर्गुणत्वाद्गुणसादृश्यरूपं च कारणमात्मनि नास्ति स्वप्रकाशत्वादज्ञानरूपकारणं चात्मनि नास्ति इति भावः। संस्कारो नास्तीत्यत्र पूर्वोक्तहेतुरेव वेदितव्यः। निर्गुणत्वं धर्मराहित्यमिति मत्वा शंकते नन्विति। ज्ञानमित्यनेन प्रत्यक्षानुमित्यादिकमुच्यते स्फुरणमित्यनेन प्रत्यक्षं शुभकर्मेत्यनेन शुभकर्महेतुकमाधुर्यादिरसवस्तुभक्षणादिकमुच्यते विषयानुभव इत्यनेन प्रत्यक्षानुमित्यादिकं नित्यत्वमुत्पत्त्यादिराहित्यं शुद्धत्वादेरिदमुपलक्षणम्। अवभासन्त इत्यस्य तदुक्तमित्यनेनान्वयः। अन्तःकरणवृत्तिरूपोपाधिवशान्नानेवावभासन्त इत्यर्थः। अद्वैतमते अध्याससामग्र्यभावादहं स्फुरामीत्यादिस्थले ज्ञानाध्यासोऽर्थाध्यासश्च न सम्भवतीति तार्किकादिपूर्वपक्षितात्पर्यमध्यासाक्षेपोपसंहारव्याजेनाविष्करोति अत इति। प्रतीतेः प्रमात्वं यथार्थानुभवत्वमर्थस्य प्रमात्वं त्वबाधितत्वमिति भेदः प्रमात्वमित्यस्योत्तरेणेतिशब्देनान्वयः।

नन्वध्यासानङ्गीकारे एकविभक्त्यवरुद्धत्वे सत्येकार्थबोधकत्वरूपस्याहं नर इति पदयोः सामानाधिकरण्यस्य प्रयोगः कथमित्याशङ्क्य नीलो घट इत्यत्र नीलगुणाश्रयो घट इतिवन्नरत्वविशिष्टदेहसम्बन्ध्यहमित्यात्मीयत्वरूपगुणयोगात् गौणोऽयं सामानाधिकरण्यप्रयोग इति पूर्वपक्षितात्पर्यमाह—अहं नर इति। नरपदं नरत्वविशिष्टदेहपरं नरत्वमवयवसंस्थानरूपधर्मविशेषः ब्रह्मात्मत्वमते प्रमात्वं गौणत्वं चावश्यं वक्तव्यमिति मतमास्थेयं स्थितमिति भावः। व्यवहितवृत्तानुवादपूर्वकं परमतमुपसंहरति तथा चेति। नारम्भणीयमिति न विचारणीयमित्यर्थः। पूजितोऽपि वेदान्तविचारो न कर्तव्य इति भावः। वस्तुतः प्रतीतितो व्यवहारतः शब्दतश्चेति चतुर्विधप्रयुक्ताद्ग्राह्यग्राहकत्वप्रयुक्तत्वाच्च परस्परैक्याद्ययोगत्वरूपविरोधात्तमःप्रकाशवदात्मानात्मनोर्धर्मिणोर्वास्तवतादात्म्याद्यभावे न धर्मसंसर्गाभाव इति तत्प्रमायासम्भवेन तज्जन्यसंस्कारस्याध्यासहेतोरसम्भवादतद्रूपे तद्रूपावभासरूपोऽध्यासो नास्ति, तथा च बन्धस्य सत्यतया ज्ञानान्निवृत्तिरूपफलासम्भवाद्बद्धमुक्तयोः जीवब्रह्मणोरैक्यायोगेन विषयाभावाच्छास्त्रं नारम्भणीयमित्यध्यासपूर्वपक्षभाष्यतात्पर्यमिति सुधीभिर्विभावनीयम्।

**इति अध्यासपूर्वपक्षग्रन्थव्याख्या समाप्ता।**

विषयेऽध्यासो मिथ्येति भवितुं युक्तम् । तथाप्यन्योन्यस्मिन्नन्योन्यात्म-

---

## रत्नप्रभा

ज्ञानान्निवृत्तिरूपफलासम्भवाद् बद्धमुक्तयोर्जीवब्रह्मणोरैक्यायोगेन विषयासम्भवात् शास्त्रं नारम्भणीयमिति पूर्वपक्षभाष्यतात्पर्य्यम् । युक्तग्रहणात् पूर्वपक्षस्य दुर्बलत्वं सूचयति ।

**तथाहि**—किमध्यासस्य नास्तित्वमयुक्तत्वाद्, अभानाद्वा, कारणाभावाद्वा ? आद्य इष्ट इत्याह—**तथापीति** । एतदनुरोधादादौ यद्यपीति पठितव्यम् । अध्यासस्यासङ्गस्वप्रकाशात्मन्ययुक्तत्वमलङ्कार इति भावः । **न द्वितीय इत्याह—अयमिति** । "अज्ञः कर्त्ता मनुष्योऽहम्" इति प्रत्यक्षानुभवादध्यासस्याभानमसिद्धमित्यर्थः । **न चेदं** प्रत्यक्षं कर्त्तृत्वादौ प्रमेति **वाच्यम्** । अपौरुषेयतया निर्दोषेणोपक्रमादिलिङ्गावधृततात्पर्येण च "तत्त्वमसि" (छां०६।८।७–१६) इत्यादिवाक्येनाकर्त्तृत्वब्रह्मत्वबोधनेनास्य भ्रमत्वनिश्चयात् । **न च** ज्येष्ठप्रत्यक्षविरोधादागमज्ञानस्यैव बाध इति **वाच्यम्** । देहात्मवादप्रसङ्गात् । "मनुष्योहम्" इति प्रत्यक्षविरोधेन "अथायमशरीरः" [बृह०४।

## पूर्णानन्दीया

आत्मानात्मनोर्वास्तवैक्यादौ युक्त्यभावादेवानुभवसिद्धाध्यासापलापे अनुभवसिद्धघटादिपदार्थानामपलापप्रसङ्गस्तथा च शून्यमतप्रवेश स्यादित्यतोऽनुभवसिद्धत्वाद्वास्तवैक्याभावेपि सामग्रीसत्त्वाच्च अध्यासोऽस्तीति विषयादिसम्भवेन शास्त्रारम्भो युक्त इति सिद्धान्तयितुं पूर्वपक्षस्य दौर्बल्य विवृणोति **तथाहीति** । अङ्गीकारार्थकेन तथापि इत्यनेनैवाद्यपक्षे परिहारो वेदितव्य । **आदाविति** युष्मदस्मदित्यादिभाष्यस्यादावित्यर्थः । अर्थक्रमस्य पाठक्रमापेक्षया प्रवलत्वादर्थक्रममनुसृत्य क्रमेण पदान्यवतारयति **नेत्यादिना** । **अयमिति** । प्रत्यक्षात्मकानुभवसिद्ध इत्यर्थः । अयामित्यनेनैव द्वितीयकल्पपरिहारो द्रष्टव्य. । **प्रत्यक्षानुभवादिति** । साक्षिरूपप्रत्यक्षानुभवविषयत्वादित्यर्थ । अहमज्ञ इत्यादिवृत्तिरूपस्यानुभवस्य भ्रमस्वरूपत्वादध्यास· सिद्धः । सिद्धे वृत्तिस्वरूपे अध्यासे साक्ष्यात्मकभानसत्त्वादभानमयुक्तं वृत्तीना साक्षिभास्यत्वनियमादिति भाव । जीवात्मनि कर्तृत्वादिकं वास्तवमेवेत्याशङ्क्य निषेधति **नचेत्यादिना** । अहं कर्त्तेत्यादिप्रत्यक्ष कर्तृत्वादिमदात्मविशेष्यककर्तृत्वादिप्रकारकत्वात् प्रमात्मकमेव नाध्यासात्मकमतोऽध्यासो नानुभवसिद्ध इत्यर्थ । विशेषणद्वयेन तत्त्वमस्यादिवाक्यस्याप्रामाण्यान्यपरत्वयोर्निरास· क्रियते । "उपक्रमोपसंहारावभ्यासो पूर्वताफलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये" इति श्लोकोक्तोपक्रमादिपदेन ग्राह्यम् उपक्रमोपसंहारावेव लिङ्गम् । बोधनेन ज्ञानेनेत्यर्थ । व्यधिकरणीयं तृतीया तथा च जीवस्याकर्तृब्रह्मत्वबोधकागमवाक्यजन्यज्ञानेनाह कर्तेत्यादिप्रत्यक्षस्य भ्रमत्वनिश्चयादध्याससिद्धिरिति भावः । प्रसङ्गमेवोपपादयति **मनुष्य इति** । **तस्मादिति** । देहात्मवादप्रसङ्गादित्यर्थः । देहात्मवादप्रसङ्गादुभयवादिसिद्धस्य मनुष्योहमिति सामानाधिकरण्यप्रत्यक्षस्य यथा भ्रमत्वं तथा अहं कर्त्तेत्यादिप्रत्यक्षस्यापि भ्रमत्वमा·

## रत्नप्रभा

४।७] इत्यादिश्रुत्या देहान्यात्मासिद्धेः। "तस्मादिदं रजतम्" इतिवत् सामानाधिकरण्यप्रत्ययस्य भ्रमत्वशङ्काकलङ्कितस्य नागमात् प्राबल्यमित्यास्थेयम्। किञ्च ज्येष्ठत्वं पूर्वभावित्वं वा, आगमज्ञाने प्रत्युपजीव्यत्वं वा? आद्ये न प्राबल्यं, ज्येष्ठस्यापि रजतभ्रमस्य पश्चाद्भाविना शुक्तिज्ञानेन बाधदर्शनात्। न द्वितीयः। आगमज्ञानोत्पत्तौ प्रत्यक्षादिमूलवृद्धव्यवहारे च संगतिग्रहद्वारा शब्दोपलब्धिद्वारा च प्रत्यक्षादेर्व्यावहारिकप्रामाण्यस्योपजीव्यत्वेऽपि तात्त्विकप्रामाण्यस्यानपेक्षितत्वादनपेक्षितांशस्यागमेन बाधसंभवादिति।

## पूर्णानन्दीया

स्थयामाति भ्रमस्वरूपत्वेन सिद्धस्याध्यासस्य साक्षिप्रत्यक्षात्मकभानसम्भवादभानमयुक्तमिति भावः। ज्ञानात्मप्रत्यक्षनिष्ठं ज्येष्ठत्वमविवक्षित्वा प्रत्यक्षस्य प्राबल्याभावः साधितः सम्प्रति ज्येष्ठत्वं विवक्षित्वा प्राबल्याभाव साधयति **किञ्चेति**। पूर्वभावित्वं पूर्वकालवृत्तित्वम् उपजीव्यत्व हेतुत्वं प्रत्यक्षस्य व्यावहारिकप्रमात्वेनैवोपजीव्यता न तात्विकप्रमात्वेनेति तात्विकप्रमात्वांशस्य 'नेह नानास्तिकिञ्चने'त्याद्यागमेन बाधसम्भवान्न तस्य प्राबल्यमिति दूषयति **न द्वितीय इति**। आगमज्ञानोत्पत्तौ आगमरूपशब्दविषयकज्ञानजन्याकर्तृब्रह्मविषयकशाब्दबोधोत्पत्तावित्यर्थ.। प्रत्यक्षादिमूलः वाक्यप्रयोगादिरूपेण वृद्धव्यवहारेण जन्यः यः सङ्गतिग्रहः शक्तिज्ञानं तद्द्वारा या शब्दोपलब्धिस्तद्द्वारा चेत्यर्थ। तथा च उत्तमवृद्धः गामानयेति वाक्यं प्रयुंक्ते तद्वाक्यश्रोता मध्यमवृद्ध गवानयने प्रवर्तते ता प्रवृत्तिं पश्यत. व्युत्पित्सोर्बालस्य तदा अस्य पदस्यास्मिन्नर्थे शक्तिरित्यादिशक्तिग्रहो जायते तेनानन्तर पदार्थज्ञानादिद्वारा तस्य बालस्य शाब्दबोधो भवति तस्मिन् शाब्दबोधे शक्तिज्ञानादिद्वारा श्रावणप्रत्यक्षादेरुपजीव्यत्वमस्तीति भाव। व्यावहारिकं यावद्ब्रह्मज्ञानं न जायते तावदबाधितं प्रामाण्यं प्रमात्व यस्य प्रत्यक्षस्य तत्तस्येत्यर्थः। तात्विकं पारमार्थिकं प्रामाण्यं प्रमात्वं यस्य तत्तस्येत्यर्थ.। अनपेक्षितत्वादनुपजीव्यत्वादित्यर्थ.। ननु धर्मिरूपप्रत्यक्षस्य उपजीव्यस्य धर्मभेदेनानुपजीव्यत्वेप्यागमबाधितत्वेनोपजीव्यविरोधो दुर्वार इत्याशङ्काया धर्मिनिषेधे तावदागमस्य तात्पर्याभावाद्धर्मस्यैव बाध इत्याह—**अनपेक्षितांशस्येति**। अनवच्छेदकतात्विकप्रमात्वरूपधर्मस्येत्यर्थ। आगमेन—नेह नानास्ति किञ्चनेत्यागमेनेत्यर्थः। व्यावहारिकप्रमात्वस्यातिरिक्तवृत्तित्वेप्युपजीव्यतावच्छेदकत्वमितरनिवर्तकत्वरूपमौपचारिकमिति भाव। **अथवा** प्रत्यक्षकारणं व्यावहारिकप्रमात्वं तु सहकारिकारणम्, तथा च तयोरागमेन बाधो नास्ति किन्तु तात्विकप्रमात्ववाधस्ततो नोपजीव्यविरोधो न प्राबल्यं चेति दूषयति **न द्वितीय इति**। षष्ठीद्वयं प्रत्यक्षादेर्न विशेषणं बहुव्रीहिरपि पूर्ववन्नाश्रयणीयः। उपजीव्यत्वेपीति प्रत्यक्षादिनिष्ठव्यावहारिकप्रमात्वस्य सहकारिकारणत्वसत्त्वेपीति भावः।

## रत्नप्रभा

यत्तु क्षणिकयागस्य श्रुतिबलात् कालान्तरभाविफलहेतुत्ववत् "तथा विद्वान्नामरूपाद्विमुक्तः" (मुण्ड०३।२।७) इति श्रुतिबलात् सत्यस्यापि ज्ञानान्निवृत्तिसम्भवादध्यासवर्णनं व्यर्थमिति तन्न । ज्ञानमात्रनिवर्त्यस्य क्वापि सत्यत्वादर्शनात्, सत्यस्य चात्मनो निवृत्त्यदर्शनाच्च । अयोग्यतानिश्चये सति सत्यबन्धस्य ज्ञानान्निवृत्तिश्रुतेर्बोधकत्वायोगात् । न च सेतुदर्शनात् सत्यस्य पापस्य नाशदर्शनान्नायोग्यता-

## पूर्णानन्दीया

अनपेक्षितत्वादसहकारित्वादित्यर्थः । तर्हि कस्य बाध इत्यत आह—**अनपेक्षितेति** । असहकारिधर्मस्येत्यर्थः । एतदुक्तं भवति । उपजीव्ये वर्णपदवाक्यानां श्रावणप्रत्यक्षे वेदान्त्यभिमतव्यावहारिकप्रमात्वांश एकः पूर्ववाद्यभिमततात्त्विकप्रमात्वांशश्चेत्यंशद्वयं वर्तते तत्र शाब्दबोधस्योत्पत्त्यर्थं व्यावहारिकप्रमात्वांशमेवापेक्षते यावद्ब्रह्मज्ञानं न जायते तावद्व्यावहारिकसत्यत्वेन प्रत्यक्षादिपदार्थानां सद्भावाभावे स्वोत्पत्त्यसम्भवादतो नापेक्षितांश एव आगमेन बाध्यते तत्रैव श्रुतेस्तात्पर्यादिति । तथा च प्रत्यक्षस्य पारमार्थिकस्वरूपबाधापेक्षया भ्रमत्वं अहं कर्ता भोक्ताहमिति आत्मविशेष्यकानात्मनिष्ठकर्तृत्वादिधर्माध्यासरूपं ज्ञानं धर्म्यध्यासमन्तरा न सम्भवतीति धर्मिणोरात्मानात्मनोरध्यासोऽनुभवसिद्ध इत्यनवद्यम् ।

**नामरूपादिति** । बन्धादित्यर्थः । **सत्यस्येति** । सत्यस्य कर्तृत्वादिबन्धस्येत्यर्थः । यज्ज्ञानमात्रनिवर्त्यं तदसत्यमिति शुक्तिरजतादिस्थले क्लृप्तनियमभङ्गः स्यादिति दूषयति **तन्नेति** । यत्सत्यं तत्कस्मादपि निवृत्तिरहितं यथात्मवदिति व्याप्तिविरोधोपि तव मते स्यादिति दूषणान्तरमाह—**सत्यस्य चेति** । श्रुतेर्बोधकत्वमङ्गीकृत्य व्याप्तिद्वयविरोधो दर्शित व्याप्तिद्वयविरोधादेव सम्प्रत्यङ्गीकारं त्यजति **अयोग्यतेति** । योग्यता ह्यर्थाबाध तद्भिन्ना तु अयोग्यतेत्यर्थः । सत्यबन्धस्य या ज्ञानान्निवृत्तिस्तस्या यद्बोधकत्वं श्रुतिनिष्ठं तदयोगादित्यर्थः । आदौ विषयत्वं षष्ठ्यर्थः श्रुतिनिष्ठस्य निवृत्तिविषयकबोधजनकत्वस्यायोगादिति फलितार्थः । निवृत्तिश्रुतेरिति पाठान्तरम् । तत्र निवृत्तिप्रतिपादकश्रुतेः बोधकत्वायोगादित्यर्थः । यदि कर्तृत्वादिबन्धः सत्यः स्यात्तर्हि ब्रह्मण इव सत्यबन्धस्यापि ज्ञानमात्रान्निवृत्तिरयोग्येति ज्ञानमात्रजन्यसत्यबन्धनिवृत्तिरूपश्रुत्यर्थे तावदयोग्यताविषयकनिश्चये सति निवृत्तिबोधकत्वं तथा विद्वानित्यादिश्रुतेरयुक्तं दृष्टान्ते ज्योतिष्टोमश्रुतेस्तु अपूर्वद्वारवर्णनेन योग्यतानिश्चयसत्त्वाद्बोधकत्वं युज्यत इति भावः ।

ननु पापकर्म किमसत्यं सत्यं वा? नाद्यः, तन्नाशार्थं सेतुदर्शनादौ प्रयत्नो न स्यात्, द्वितीये यत्सत्यं तज्ज्ञानान्निवृत्तिं प्राप्तुं योग्यं तथा पापकर्मेऽति व्याप्त्या श्रुत्यर्थेऽपि योग्यतानिश्चयोस्तीत्याशङ्क्य दृष्टान्तवैषम्येण परिहरति **नचेत्यादिना** । तस्य—पापस्येति ।

## रत्नप्रभा

निश्चय इति **वाच्यम्**। तस्य श्रद्धानियमादिसापेक्षज्ञाननाश्यत्वात्, बन्धस्य च "नान्यः पन्थाः" (श्वेता०३।८) इति श्रुत्या ज्ञानमात्रान्निवृत्तिप्रतीतेः। अतः श्रुतज्ञाननिवर्त्यत्वनिर्वाहार्थमध्यस्तत्वं वर्णनीयम्। **किञ्च** ज्ञानैकनिवर्त्यस्य किं नाम सत्यत्वम्? न तावदज्ञानाजन्यत्वम्। "मायां तु प्रकृतिम्" (श्वेता०४।१०) इति श्रुतिविरोधात् मायाविद्ययोरैक्यात्। **नापि** स्वाधिष्ठाने स्वाभावशून्यत्वम्, "अस्थूलम्" (बृ०३।८।८) इत्यादि निषेधश्रुतिविरोधात्। **नापि** ब्रह्मवद्बाधायोग्यत्वम्, ज्ञानान्निवृत्तिश्रुतिविरोधात्। **अथ** व्यवहारकाले बाधशून्यत्वम्, तर्हि व्याव-

## पूर्णानन्दीया

यद्यपि पापकर्म सत्यं तथापि श्रद्धानियमादिसापेक्षज्ञाननिवर्त्त्यमेव न तु ज्ञानमात्रनिवर्त्यं बन्धस्तु ज्ञानमात्रनिवर्त्यत्वेन शुक्तिरजतादिवदसत्य एवेत्ययोग्यतानिश्चयो दुर्वार इति भावः। एतेन नियमाप्रविष्टमात्रपदव्यावर्त्यं दर्शितम्। पापकर्मणः उभयवाद्यभिमतं सत्यत्वं नाम व्यवहारकाले बाधशून्यत्वं व्यवहारयोग्यत्वेन विद्यमानत्व वा। बन्धस्य ज्ञानमात्रनिवर्त्यत्वे श्रुतिं प्रमाणयति **बन्धस्य चेति**। श्रौतं तथा विद्वानित्यादिश्रुत्या प्रतिपादितं यज्ज्ञाननिवर्त्यत्वं ज्ञानजन्यबन्धनिवृत्तिरूपं तन्निर्वाहार्थं तस्मिन् श्रुत्यर्थे योग्यतानिश्चयार्थमित्यर्थः। ज्ञानैकनिवर्त्यस्य बन्धस्य सामान्यतः सत्यत्व दूषितमिदानीं विकल्प्य दूषयति **किञ्चेति**। किं सत्यत्वमज्ञानाजन्यत्वं स्वाधिष्ठाने स्वाभावशून्यत्वं वा ब्रह्मवद्बाधायोग्यत्वं व्यवहारकाले बाधशून्यत्वं वा? नाद्य इत्याह—**नेति**। सत्ये ब्रह्मण्यज्ञानाजन्यत्वं प्रसिद्धमिति लक्षणसमन्वयः। एवं सर्वत्र। **प्रकृतिमिति**। जगदुपादानमित्यर्थः। श्रुत्या बन्धस्य मायाजन्यत्वमुच्यते नाज्ञानजन्यत्वमतो नाज्ञानजन्यत्वे श्रुतिविरोध इत्याशक्याज्ञानमविद्या माया चेति पर्याय इत्यज्ञानजन्यत्वप्रतिपादकश्रुतिविरोधो दुर्वार इति परिहरति **मायेति**। न द्वितीय इत्याह—**नापीति**। स्वशब्देन बन्धो ग्राह्यः बन्धाधिष्ठाने ब्रह्मणि बन्धाभावेन शून्यत्वं अवृत्तित्वामित्यर्थ.। बन्धः स्वाभावेन सह ब्रह्मणि वृत्तिमान्भवतीति भावः। अनेन स्वाधिष्ठानवृत्त्यभावाप्रतियोगित्वं सत्यत्वमिति लक्षणमुक्तं भवति। तस्यार्थः बन्धाधिष्ठानवृत्तिर्यः अमावः न तु बन्धाभावः किं त्वन्याभावः तत्प्रतियोगित्वं बन्धेऽस्तीति। यदि ब्रह्मणि जगद्रूपो बन्धस्तदा तेन स्थूलत्वं धर्मत्व च स्यात्तथा च निर्धर्मिकत्वास्थूलत्वादिप्रतिपादिकास्थूलमित्यादिश्रुतिविरोध.। किं च यदि ब्रह्मणि बन्धाभावो नास्ति तदा अस्थूलमित्यादिश्रुतेः बन्धाभावप्रतिपादनेपि तात्पर्यात्तद्विरोध इत्याह—**अस्थूलमित्यादीति**। यद्यपि सिद्धान्तेऽपि ब्रह्मण्येव बन्धस्तथापि तस्याध्यस्तत्वेन श्रुतिविरोध इति भावः। तृतीये विरोधमाह—**नापि ब्रह्मवदिति**। चरमे पक्षे तु मन्मतप्रविष्टोसीत्याह—**अथेति**। 'आदावन्ते च यन्नास्ति वर्तमानेपि तत्तथेति' न्यायेन व्यावहारिकसत्यत्वाध्यस्तत्वयोर्न विरोध इति भावः।

कतामन्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेन, अत्यन्तविविक्तयोर्धर्मधर्मिणो-

### रत्नप्रभा

हिराकमेव सत्यत्वमित्यागतमध्यस्तत्वम्। तच्च श्रुत्यर्थे योग्यताज्ञानार्थं वर्णनीयमेव याग-स्यापूर्वद्वारत्ववत्। न च तदनन्यत्वाधिकरणे (व्या०सू०२।१।१५) तस्य वर्णनात् पौनरु-क्त्यम्। तत्रोक्ताध्यासस्यैव प्रवृत्त्यङ्गविषयादिसिद्ध्यर्थमादौ स्मार्यमाणत्वादिति दिक्।

**अध्यासं द्वेधा** दर्शयति-**लोकव्यवहार इति**। लोक्यते मनुष्योऽहमित्यभिम-न्यत इति लोकोऽर्थाध्यासः। तद्विषयो व्यवहारोऽभिमान इति ज्ञानाध्यासो दर्शितः।

द्विविधाध्यासस्वरूपलक्षणमाह—**अन्योन्यस्मिन्नित्यादिना धर्मधर्मिणोरि-**

### पूर्णानन्दीया

ननु विरोधाभावेन आगतेप्यध्यस्तत्वे प्रयोजनाभावात्किं तद्वर्णनेनेत्यत आह—**तच्चेति**। यदि वन्धस्याध्यस्तत्वमङ्गीक्रियते तथैव ज्ञानमात्रजन्यबन्धनिवृत्तिरूपश्रुत्यर्थे यदि बन्धः सत्यः स्यात् ज्ञानमात्रान्निवर्तितुमयोग्यः स्यादित्येतादृशतर्कादिना बाधो ना-स्तीत्यर्थाबाधात्मकयोग्यतानिश्चयः सम्पद्यतेऽतः तन्निश्चयार्थमध्यासो वर्णनीय इति न त-द्वर्णनं व्यर्थमिति भावः। अध्यस्तत्वस्य व्यापारत्वरूपद्वारत्वासम्भवात् द्वारत्वं विहाया-ङ्गीकारांश एवात्र दृष्टान्तमाह—**अपूर्वेति**। अपूर्वं द्वारं यस्य सोऽपूर्वद्वारो यागस्तस्य भावस्तत्त्वमपूर्वरूपद्वारं तद्वदित्यर्थः। यथा ज्योतिष्टोमादिश्रुत्यर्थः यो यागस्य स्वर्गहेतुत्वरूपः तद्योग्यताज्ञानायापूर्वमङ्गीकृतं तथाध्यस्यत्वमङ्गीकरणीयमिति भावः। नचेत्यादिग्रन्थस्त्वति-रोहितार्थः। ननु विषयादिसिध्यर्थमादावेवाध्यासस्यावश्यकत्वेन आर्थिकार्थतया युक्त्या च वर्णितत्वात्पुनस्तदनन्यत्वाधिकरणे तद्वर्णनं पुनरुक्तमेवाधिकरणस्य गतार्थत्वादित्यत आह—**दिगिति**। अयमाशयः। अधिकशङ्कानिरासार्थत्वेन प्रवृत्तस्य तदधिकरणस्य न गतार्थता यतः सङ्ग्रहस्य विवरणमतो न पुनरुक्ततेत्यलमतिप्रसङ्गेन।

लोकसहितो व्यवहारः लोकव्यवहारः इति मध्यमपदलोपसमासादेकवचनेपि द्वैविध्यं युक्तमेवेत्याभिप्रेत्य भाष्यमवतारयति **अध्यासमिति**। लोक्यते यः स लोक इति कर्म-व्युत्पत्त्या अर्थाध्यासपरत्वेन लोकपदं व्याचष्टे—**लोक्यत इति**। मनुष्यपदं पूर्वं व्याख्या-तम्। **मनुष्योहमिति**। देहाहंकाराद्यर्थरूपः ज्ञानोपसर्जनोऽर्थाध्यास इत्यर्थः। ननु लोक-पदस्य कर्मव्युत्पत्त्यङ्गीकारेण तत्साहचर्याद् व्यवहारपदस्यापि कर्मव्युत्पत्तिः स्यादित्याशं-क्योभयोः कर्मपरत्वे पौनरुक्त्यान्न सम्भवतीत्याह—**तद्विषय इति**। स एवार्थरूपाध्यासो विषयो यस्य ज्ञानरूपाध्यासस्य स तथेत्यर्थः।

ननु व्यवहारशब्दस्याभिज्ञाभिवदनमर्थक्रिया चेति बह्वर्थसम्भवात्किमत्र विवक्षि-तमित्याशङ्क्याभिज्ञार्थकत्वमित्याह—**अभिमान इतीति**। अर्थोपसर्जनः ज्ञानरूपो-ध्यासो ज्ञानाध्यास इत्यर्थः। इदं रजतमित्यत्र ज्ञानप्राधान्यविवक्षया ज्ञानाध्यासः अर्थ-प्राधान्यविवक्षयाऽर्थाध्यासश्च वेदितव्यः। एवं सर्वत्र। **स्वरूपेति**। स्वरूपं च तल्लक्षणं

मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य, अहमिदं ममेदमिति नैसर्गि-

## रत्नप्रभा

**त्यन्तेन** । जाड्यचैतन्यादिधर्माणां धर्मिणावहङ्कारात्मानौ तयोरत्यन्तं भिन्नयोरितरेतर-भेदाग्रहेणान्योन्यस्मिन् अन्योन्यतादात्म्यमन्योन्यधर्मांश्च व्यत्यासेनाध्यस्य लोकव्यवहार इति **योजना** । अतः "सोऽयम्" इति प्रमाया नाध्यासत्वं, तदिदमर्थयोः कालभेदेन क-ल्पितभेदेऽपि अत्यन्तभेदाभावात् इति वक्तुम**त्यन्तेत्युक्तम्** । **न च** धर्मितादात्म्या-ध्यासे धर्माध्याससिद्धेः"धर्मांश्च"इति व्यर्थमिति **वाच्यम्** । अन्धत्वादीनामिन्द्रियधर्माणां धर्म्यध्यासास्फुटत्वेऽप्यन्धोऽहमिति स्फुटोऽध्यास इति ज्ञापनार्थत्वात् । **नन्वा**त्माना-त्मनोः परस्पराध्यस्तत्वे शून्यवादः स्यादित्याशङ्क्याह—**सत्यानृते मिथुनीकृत्येति** ।

## पूर्णानन्दीया

चेति कर्मधारय. । लक्षणादिभाष्यसिद्धमात्मानात्मनोरितरेतरविषयमविद्याख्यं द्विविधा-ध्यासस्वरूपमाहेत्यर्थ. । लक्षणं द्विविधं स्वरूपलक्षणं व्यावर्तकलक्षण चेति तत्र भाष्ये कण्ठोक्तिः स्वरूपलक्षणं अस्त्येवेति ज्ञापयितु स्वरूपलक्षणमित्युक्तम् । स्वरूपलक्षणेप्युक्ते तन्निष्ठमसाधारणधर्मस्वरूपं व्यावर्तकलक्षणमर्थात्सिध्यतीति भाव. । धर्मधर्मिणोरिति भाष्ये धर्मश्च धर्मी चेति न द्वन्द्वसमास किन्तु धर्माणां धर्मिणाविति षष्ठीतत्पुरुषस-मास इति व्याचष्टे **जाड्येति** । चैतन्य चेतनमित्यर्थः । धर्माणा यौ धर्मिणौ तयोरित्य-नेन धर्मपदमनेकधर्मबोधकं धर्मिपदं धर्मिद्वयबोधकमिति ज्ञाप्यते अत्यन्तविविक्तयोर्ध-र्मधर्मिणोरितरेतराविवेकेनान्योन्यस्मिन् अन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य सत्या-नृते मिथुनीकृत्य मिथ्याज्ञाननिमित्तोऽहमिदं ममेदमित्ययं लोकव्यवहारो नैसर्गिकइ ति पदयोजनामभिप्रेत्यावान्तरयोजनामर्थपूर्वकमाविष्करोति **तयोरिति** । अलक्ष्यत्वज्ञापनार्थं प्रमाया इत्युक्तम् । अत शब्दार्थमाह—**तदिदमिति** । अत्यन्तभेदाभावात्—धर्मिरूपव्य-क्तिभेदाभावादित्यर्थः, तथा च सोयं देवदत्त इति प्रत्यभिज्ञारूपप्रमायामत्यन्ताभिन्नयोर्ध-र्मिणोरन्योन्यस्मिन् अन्योन्यात्मकत्वावभासत्वरूपाध्यासव्यावर्तकलक्षणस्य नातिव्याप्तिस्त-दिदमर्थयोरत्यन्तभिन्नत्वाभावादिति भाव' । अन्योन्यस्मिन्नन्योन्यात्मकत्वाभासोऽध्यास-स्वरूपलक्षणमिति समुदायग्रन्थार्थः । **सिद्धेरिति** । धर्माध्यासविशिष्टसामग्रीसत्त्वे कार्या-वश्यम्भावाद्धर्माध्यासरूपकार्यसिद्धिरिति शङ्कितुरभिप्रायः । अन्धत्वं दोषविशेषविशिष्टत्वं वस्तुग्रहणायोग्यत्वं वा । **धर्म्यध्यासास्फुटत्वेपीति** । अहंचक्षुरिति प्रत्येक धर्म्यध्या-सस्यानुभवसिद्धत्वाभावेपीत्यर्थ' । धर्माध्यासस्यानुभवसिद्धत्वाद्धर्म्यध्यासोऽनुमीयत इति भाव' । अन्धोहमिति धर्माध्यास. धर्म्यध्यासपूर्वक. धर्माध्यासत्वात् स्थूलोहमितिधर्माध्या-सवदिति प्रयोग । **नन्विति** । आत्मानात्मनोरन्योन्यस्मिन्नन्योन्यात्मकतामध्यस्येत्यनेन परस्पराध्यस्तत्वमुक्तं भवति तच्च न सम्भवत्युभयोरसत्यत्वेन शून्यवादप्रसङ्गादिति भाव.। सत्यानृतपदयोर्वचनपरतां व्यावर्तयति **सत्यमित्यादिना**। सत्य कालत्रयबाधाभावोपल-

## रत्नप्रभा

**सत्यमनिदं** चैतन्यम्, तस्यानात्मनि संसर्गमात्राध्यासो न स्वरूपस्य । **अनृतं** युष्मदर्थः तस्य स्वरूपतोऽप्यध्यासात् तयोर्मिथुनीकरणमध्यास इति न शून्यतेत्यर्थः ।

**नन्व**ध्यासमिथुनीकरणलोकव्यवहारशब्दानामेकार्थत्वेऽध्यस्य मिथुनीकृत्येति पूर्वकालत्ववाचि "क्त्वा" प्रत्ययादेशस्य ल्यपः कथं प्रयोग इति **चेन्न** । अध्यासव्यक्तिभेदात्। तत्र पूर्वपूर्वाध्यासस्योत्तरोत्तराध्यासं प्रति संस्कारद्वारा पूर्वकालत्वेन हेतुत्वद्योतनार्थं ल्यपः प्रयोगः । तदेव स्पष्टयति—**नैसर्गिक इति** । प्रत्यगात्मनि हेतुहेतुमद्भावेनाध्यासप्रवाहोऽनादिरित्यर्थः । ननु प्रवाहस्यावस्तुत्वादध्यासव्यक्तीनां सादित्वात्कथमनादित्वमिति **चेत् , उच्यते** । अध्यासत्वावच्छिन्नव्यक्तीनां मध्येऽन्यतमया व्यक्त्या विनाऽनादिकालस्य अवर्तनं कार्यानादित्वमित्यङ्गीकारात् । **एतेन** कारणाभावादिति कल्पो

## पूर्णानन्दीया

क्षित वस्त्वित्यर्थः । तस्य ज्ञानकर्मत्वं व्यावर्तयति **अनिदमिति** । प्रत्यक्षाद्यविषय इति भाव.। तत्र हेतुमाह—**चैतन्यमिति । संसर्गेति** । तादात्म्येत्यर्थः, तथाचानात्मन्यात्मतादात्म्यमात्रमध्यस्यते नात्मस्वरूपमिति भाव. । अपिशब्देनानात्मस्वरूपं तत्तादात्म्य चाध्यस्यत इत्युच्यते । तयो सत्यानृतयो. मिथुनीकरणं तादात्म्यादिकमेकबुद्धिविषयत्वं वा । अध्यास अर्थाध्यास इत्यर्थ· । आत्मनः संसृष्टत्वेनैवाध्यास न स्वरूपेण अनात्मनस्तूभयथा तस्मान्न शून्यवादप्रसङ्ग इति भावः ।

ननु सत्यानृतयोर्मिथुनीकरणं कथं वादिनामसम्मतत्वात्? अत्रोच्यते श्रुतिप्रामाण्यादिदं सिद्धान्तानुसारेण विभावनीयमिति । **पूर्वकालत्वेनेति** । पूर्व कालो यस्य तथा तस्य भाव तथा च पूर्वकालवृत्तित्वेनेत्यर्थः । **प्रत्यगिति** । प्रत्यगात्मन्यध्यासप्रवाह इत्यन्वयः । आत्मनि कर्तृत्वभोक्तृत्वदोषसम्बन्ध एवाध्यासः अत्र वर्तमानभोक्तृत्वाध्यासः कर्तृत्वाध्यासमपेक्षते ह्यकर्तुर्भोगाभावात् कर्तृत्व च रागद्वेषसम्बन्धाध्यासमपेक्षते रागादिरहितस्य कर्तृत्वाभावात् रागद्वेषसम्बन्धश्च पूर्वभोक्तृत्वं अपेक्षते अनुपभुक्ते रागाद्यनुपपत्तेः । एव हेतुहेतुमद्भावेन प्रत्यगात्मन्यध्यासप्रवाहोऽनादिरिति भाव । सम्बन्धरूपस्य प्रवाहस्य सम्बन्धिव्यतिरेकेणाभावात् सम्बन्धिस्वरूपाणामध्यासव्यक्तीनां तु सादित्वाच्च नानादित्वमिति । **नन्विति** । अनादिकालत्वनिष्ठव्याप्यतानिरूपितव्यापकतावच्छेदकावच्छिन्नसम्बन्धप्रतियोगित्वं अनादिकालत्वव्यापकसम्बन्धप्रतियोगित्वं कार्यानादित्वमिति **सिद्धान्तयति** उच्यत इति । कार्याध्यासस्य प्रवाहरूपेणानादित्वं व्यतिरेकमुखेनाविष्करोति **अध्यासत्वेति** । यत्रानादिकालत्वं तत्राध्यासत्वावच्छिन्नाध्यासव्यक्तिसम्बन्ध इति व्याप्यव्यापकभावोऽनुभवसिद्ध·, व्यक्तिसम्बन्धो नाम व्यक्तिप्रतियोगिकसम्बन्ध , तथा च सम्बन्धप्रतियोगित्वं व्यक्तौ वर्तत इति लक्ष्ये लक्षणसमन्वयः । सुषुप्त्यादौ कर्तृत्वाद्यध्यासाभावेपि तत्संस्कारसत्वान्न व्याप्तेर्व्यभिचार

## ❀ रत्नप्रभा ❀

**निरस्तः**। संस्कारस्य निमित्तस्य नैसर्गिकपदेनोक्तत्वात्। **न च** पूर्वप्रमाजन्य एव संस्कारो हेतुरिति **वाच्यम्**। लाघवेन पूर्वानुभवजन्यसंस्कारस्य हेतुत्वात्। अतः पूर्वाध्यासजन्यसंस्कारोऽस्तीति सिद्धम्। अध्यासस्योपादानमाह–**मिथ्याऽज्ञाननिमित्त** इति। मिथ्या च तदज्ञानं च मिथ्याज्ञानं तन्निमित्तमुपादानं यस्य स तन्निमित्तस्तदुपादान इत्यर्थः। अज्ञानस्योपादानत्वेऽपि संस्फुरदात्मतत्त्वावरकतया दोषत्वेनाऽहंकाराध्यासकर्तुरीश्वरस्योपाधित्वेन संस्कारकालकर्मादिनिमित्तपरिणामित्वेन च निमित्तत्वमिति द्योतयितुं **निमित्तपदम्**। स्वप्रकाशात्मन्यसंगे कथमविद्यासंग इति शंकानिरासार्थं **मिथ्यापदम्**। प्रचण्डमार्तण्डमण्डले पेचकानुभवसिद्धान्धकारवत् "अहमज्ञः" इत्यनुभवसिद्धमज्ञानं दुरपह्नवं, कल्पितस्याधिष्ठानास्पर्शित्वात् नित्यस्वरूपज्ञानस्याविरोधित्वाच्चेति।

## ❀ पूर्णानन्दीया ❀

इति भावः। विकल्पस्तृतीयपक्ष इत्यर्थः। एतच्छब्दार्थं हेतुं विवृणोति–**संस्कारस्येति**। संस्काररूपनिमित्तकारणस्येत्यर्थः। संस्कारहेतुपूर्वाध्यासस्येदमुपलक्षणम्। तथा च संस्कारतद्धेत्वध्यासयोर्नैसर्गिकपदेनोक्तत्वाद्विकल्पो निरस्त इति भावः। **लाघवेनेति**। कारणतावच्छेदककोटौ यथार्थपदविशिष्टप्रमापदं न निवेश्यते किन्तु भ्रमप्रमासाधारणानुभवपदं निवेश्यते ततोऽधिष्ठानसामान्यारोप्यविशेषयोरैक्यानुभवजनितसंस्कारत्वं कारणत्वं कारणतावच्छेदकमिति कारणतावच्छेदकलाघवेनेत्यर्थः। अथवा कारणशरीरलाघवेनेत्यर्थः। तत्राज्ञानमित्युक्ते ज्ञानाभावमात्रमित्युक्तं स्यान्मिथ्येत्युक्ते भ्रान्तिज्ञानमिति स्यात्तदुभयव्यावृत्त्या स्वाभिमतार्थसिद्धये कर्मधारयसमासं व्युत्पादयति–**मिथ्या च तदिति**। मिथ्याज्ञानमनिर्वचनीया मिथ्येत्यर्थः। अजहल्लक्षणया निमित्तपदस्योपादानमप्यर्थ इत्याह–**तदुपादान इति**। मिथ्याज्ञानोपादान इति वक्तव्ये सति मिथ्याज्ञाननिमित्त इत्युक्तिः किमर्थेत्यत आह–**अज्ञानस्येति**। अहंकाराध्यासकर्तुरस्मदाद्यहंकाराध्यासकर्त्तुरित्यर्थः। इदमुपलक्षणमीश्वरस्य सर्वजगत्कर्तृत्वमुपाधि विना न सम्भवतीति ईश्वरनिष्ठकर्तृत्वाद्युपाधित्वेनेत्यर्थः। संस्कारकालकर्मादीनि यानि निमित्तानि तत्परिणामित्वेनेति विग्रहः। अज्ञानस्य मायात्वेनोपादानत्वं दोषत्वेनेत्यादितृतीयात्रयेण निमित्तत्वमप्यस्तीति ज्ञापयितुं निमित्तपदमिति भावः। स्वप्रकाशे तमोरूपाऽविद्या कथं असङ्गे ह्यविद्यायाः संगश्च कथमित्यन्वयमभिप्रेत्याह–**स्वप्रकाशेति**। शङ्कानिरासार्थं शङ्काद्वयनिरासार्थमित्यर्थः। प्रथमशङ्कां परिहरति–**प्रचण्डेति**। स्वप्रकाशे दृष्टान्तसहितानुभवबलादस्त्येवाविद्या न स्वप्रकाशत्वहानिरपि, अनुभवस्य भ्रमत्वादिति भावः। पेचका उलूका इत्यर्थः। द्वितीयशङ्कां परिहरति–**कल्पितस्येति**। कल्पितस्याधिष्ठानेन सह वास्तविकसम्बन्धरहितत्वादित्यर्थः। सम्बन्धस्याध्यासिकत्वादस्त्येवाविद्यासङ्गः तस्यावास्तविकत्वाभावेन नासङ्गत्वहानिरिति भावः। प्रथमशङ्कानिरासे युक्त्यन्तरमाह–

॥ रत्नप्रभा ॥

**यद्वा** अज्ञानं ज्ञानाभाव इति शंकानिरासार्थं **मिथ्यापदम्** । मिथ्यात्वे सति साक्षाज्ज्ञाननिवर्त्यत्वमज्ञानस्य **लक्षणं** मिथ्याज्ञानपदेनोक्तम् । ज्ञानेनेच्छाप्रागभावः साक्षान्निवर्त्यत इति वदन्तं प्रति **मिथ्यात्वे सतीत्युक्तम्** । अज्ञाननिवृत्तिद्वारा ज्ञाननिवर्त्यबन्धेऽतिव्याप्तिनिरासाय **साक्षादिति** । अनाद्युपादानत्वे सति मिथ्यात्वं वा **लक्षणम्** । ब्रह्मनिरासार्थं **मिथ्यात्वमिति** । मृदादिनिरासार्थम**नादीति** । अविद्यात्मनोः सम्बन्धनिरासार्थम् **उपादानत्वे सतीति** । सम्प्रति अध्यासं द्रढयि-

॥ पूर्णानन्दीया ॥

**नित्येति** । वृत्यारूढज्ञानमेवाज्ञानविरोधीति भाव । अथवा ज्ञानाज्ञानयोर्विरोधात्कथं ज्ञानरूपात्मन्यज्ञानमित्यत आह—**नित्येति च** । चशब्दः शङ्कानिरासार्थ । तार्किकमतनिरासार्थं मिथ्यापदमित्याह—**यद्वेति** । लक्ष्यांशशेषपूर्त्या लक्षणद्वयं योजयति—**मिथ्यात्वे सतीत्यादिना** । अनिर्वचनीयत्वे सतीत्यर्थ । अथवा भावत्वे सतीत्यर्थः । अज्ञानपदेन विवक्षितमर्थमाह—**साक्षाज्ज्ञानेति** । मिथ्या च तदज्ञानं च मिथ्याज्ञानं तत्प्रतिपादकं समासवाक्यरूपं यत्पदं तेनेत्यर्थः । एतेन पदद्वयस्य सत्त्वात्पदेनेत्येकवचनानुपपत्तिरिति निरस्तं—पदस्य समासवाक्यरूपत्वेनाङ्गीकारात् । ज्ञानघटिता हि इच्छोत्पत्तिसामग्र्येव इच्छाप्रागभावनाशहेतुः नात्विच्छेत्येकदेशिसिद्धान्तमनुवदन् पदकृत्यमाह—**ज्ञानेनेति** । जानातीच्छति यतत इति न्यायेन ज्ञानानन्तरमिच्छा जायते ज्ञानेनैवेच्छा प्रागभावश्च नश्यतीति वदन्तं तार्किकैकदेशिन प्रतीत्यर्थ । तथा चेच्छाप्रागभावे लक्षणस्यातिव्याप्तिस्तन्निरासार्थं मिथ्यापदमिति भावः । प्रथमव्याख्यानेन मिथ्यात्वमनिर्वचनीयत्वमज्ञानं नामाविद्या समासस्तु कर्मधारय लक्ष्यांशस्य न शेषपूर्तिः तथा च मिथ्याज्ञानमित्यनेन भाष्येणाविद्यारूपाज्ञानस्यानिर्वचनीयत्वमक्षरारूढलक्षणमित्युक्तं भवतीति ज्ञापितम् । **यद्वेति** । द्वितीयव्याख्याने न मिथ्यात्वं भावत्वमज्ञानं नाम साक्षाज्ज्ञाननिवर्त्यं समासस्तु कर्मधारयः लक्ष्यांशशेषपूर्तिः तथा च भावत्वे सति साक्षाज्ज्ञाननिवर्त्यत्वमज्ञानलक्षणं तात्पर्येण मिथ्याज्ञानपदेन बोधितामिति दर्शितम् । इदानीं मिथ्यात्व नाम ज्ञाननिवर्त्यत्वं अज्ञानं नामानाद्युपादानमिति विवक्षया व्याख्यानान्तरमभिप्रेत्याज्ञानस्य लक्षणान्तरमाह—**अनादीति** । यस्यादिरुत्पत्तिर्न विद्यते तदनादि, तथाचानादित्वे सत्युपादानत्वे सतीत्यर्थ । लक्षण मिथ्याज्ञानपदेनोक्तमिति पूर्वेणान्वय । अस्मिन्लक्षणे साक्षात्पदादिकं न निवेशनीयं बन्धेच्छाप्रागभावयोरतिव्याप्त्यभावादिति भाव । **ब्रह्मनिरासार्थमिति** । ब्रह्मण्यज्ञानलक्षणस्यातिव्याप्तिनिरासार्थमित्यर्थ । एवमुत्तरत्र विज्ञेयम् । सर्वानुभवरूपप्रमाणेन अध्याससिद्धिमुक्त्वा शब्दप्रयोगरूपाभिलापेन चाध्याससिद्धिरिति भाष्याशयमुद्घाटयति—**सम्प्रतीति** ।

## रत्नप्रभा

तुमभिलपति—अहमिदं ममेदमिति । आध्यात्मिककार्याध्यासेष्वहमिति प्रथमोऽध्यासः । न चाधिष्ठानारोप्यांशद्वयानुपलम्भात् नायमध्यास इति वाच्यम् । "अयो दहति" इतिवत् "अहमुपलभे" इति दृक्दृश्यांशयोरुपलम्भात् । इदंपदेन भोग्यः संघात

## पूर्णानन्दीया

ननु वियदाद्यध्यासः प्राथमिकत्वाद्भाष्ये प्रतिपादयितव्यः कथमहमिदमित्याद्यध्यासप्रतिपादनमित्यत आह—आध्यात्मिकेति । आध्यात्मिककार्याध्यासाभिप्रायेण भाष्ये अहमिदमित्यादिद्वितीयाध्यासप्रतिपादनं, तथा च द्वितीयस्य प्रथमाकांक्षितत्वात् प्राथमिकाध्यासं भाष्यस्यार्थिकार्थस्वरूपं स्वयम् पूरयतीति भावः । नायमध्यास इति । इदं रजतमित्यत्र रजतस्याध्यस्तत्ववदहङ्कारस्याध्यस्तत्वे अधिष्ठानारोप्यांशद्वयं वक्तव्यं तच्च न सम्भवति अहमित्यत्र निरंशस्यैकस्य द्वैरूप्याननुभवादिति शङ्काग्रन्थार्थः । अयःशब्दार्थो लोहपिण्डः, अयो दहतीत्यत्राग्निरयःपिण्डसंपृक्ततयावभासते अयःपिण्डस्त्वग्निसवलिततया, तेनाग्निनिष्ठदग्धृत्वमयःपिण्डे अवभासते अयःपिण्डनिष्ठचतुष्कोणाकारत्वमग्नौ तस्मादयःपिण्डाग्निरूपांशद्वयमनुभूयते यथा, तथा अहमुपलभ इत्यत्रापि चिदात्माप्यहंकारसंपृक्ततया अवभासते अहंकारोपि चिदात्मनि सम्बलिततया, तेन जाड्यचेतनत्वादिकमपि व्यत्यासेनावभासते तस्मादहमित्यनेनात्माहङ्काररूपांशद्वयमनुभूयत इति परिहारग्रन्थार्थः ।

ननु तत्रोपलभ इत्याकारकपदसाहचार्यादस्त्यंशद्वयोपलब्धिः केवलाहमित्यत्र कथमिति चेन्न । अहं पश्याम्यहमुपलभ इत्येवं पदान्तरसाहचर्येणैव धर्माध्यासविशिष्टत्वेन प्राथमिकधर्म्यध्यासस्यानुभूतत्वात् । ननु दृष्टान्तदार्ष्टान्तिकयोः कथं शाब्दबोध इति चेत् । उच्यते । अयो दहतीत्यत्रदहतीत्यनेन दग्धृत्वमुच्यते अयोधर्मत्वेन भासमानस्य दग्धृत्वस्यायोधर्मत्वाभावादग्नितादात्म्यापन्नाय पिण्डो अयःशब्देनोच्यते तथा च दग्धृत्वविशिष्टः अग्नितादात्म्यापन्नः अयःपिण्ड इति शाब्दबोधो जायते यथा, तथा अहमुपलभ इत्यत्रापि उपलभ इत्यनेन वृत्तिरूपोपलब्धिरुच्यते स्फुरणात्मिकाया अहङ्काररूपजडधर्मत्वेन भासमानायाः वृत्तिरूपोपलब्धेर्जडधर्मत्वाभावादहमित्यनेन चित्तादात्म्यापन्नोऽहङ्कार उच्यते तथा चोपलब्धिविशिष्टश्चित्तादात्म्यापन्न अहंकार इति शब्दबोधस्तस्मादहमित्यनेन दृग्दृश्यांशद्वयमनुभूयते तथा सति साक्षिणि कूटस्थले दृगंशस्वरूपे आत्मनि दृश्यांशस्य केवलस्याहङ्कारस्य धर्मिणः अध्यासः प्राथमिकः सम्भवति । एवमहङ्कारेपि धर्मिस्वरूपात्मनः संसृष्टत्वेनाध्यासः प्राथमिकः सम्भवति धर्म्यध्यासमन्तरा वृत्तिरूपोपलब्ध्यात्मकधर्माध्यासस्यासम्भवादिति भावः । भोग्यसङ्घात शरीरादिसङ्घात इत्यर्थः । अत्र भाष्ये प्राथमिकाध्यासो न प्रतिपाद्यते किन्तु अनन्तराध्यास एवेति ज्ञापयितुं भागद्वयेनार्थपूर्वकं अध्यासं विवृणोति अत्राहमिति । मनुष्यत्वमिति संस्थानरूपा-

॥ रत्नप्रभा ॥

उच्यते । अत्र "अहमिदम्" इत्यनेन "मनुष्योऽहम्" इति तादात्म्याध्यासो दर्शितः । "ममेदं शरीरम्" इति संसर्गाध्यासः ॥

**ननु** देहात्मनोस्तादात्म्यमेव संसर्ग इति तयोः को भेद इति **चेत्, सत्यम्** । सत्तैक्ये सति मिथो भेदस्तादात्म्यम् । तत्र "मनुष्योऽहम्" इत्यैक्यांशभानं, "ममेदमिति" भेदांशरूपसंसर्गभानमिति भेदः । **एवं** सामग्रीसत्त्वादनुभवसत्त्वादध्यासोऽस्तीत्यतो ब्रह्मात्मैक्ये विरोधाभावेन विषयप्रयोजनयोः सत्त्वात् शास्त्रमारम्भणीयमिति सिद्धान्तभाष्यतात्पर्यम् ।

॥ पूर्णानन्दीया ॥

कृतिविशेष. जातिविशेषो वा। **तादात्म्याध्यास इति**। तादात्म्याशचित्सत्तैक्याध्यास इत्यर्थ । देहात्मनोरेकसत्ताध्यास इति यावत् । शरीरत्वं मनुष्यत्वविलक्षणं पश्वादिशरीरसाधारणं भोगायतनत्वं संसर्गाध्यासतादात्म्यांशभूतसंसर्गाध्यास इत्यर्थः। भेदसहिष्णुरभेद इति तादात्म्यस्याशद्वयं तथा च मनुष्योहमित्यत्र मनुष्यत्वावच्छिन्ने देहे तावदभेदांशरूपचित्सत्तैक्याध्यासोऽनुभवसिद्ध मम शरीरमित्यत्र भेदाशरूपसंसर्गाध्यासोनुभवसिद्धः तत तादात्म्यस्याभेदाश. सतैक्यमित्युच्यते भेदाश संसर्ग इति व्यवह्रियते इति भावः ।

इममेवार्थं शङ्कोत्तराभ्यां स्फुटीकरोति **नन्वित्यादिना** । अर्धाङ्गीकारेण परिहरति **सत्यमिति** । तादात्म्यमेव संसर्ग इत्यंश अङ्गीकार. भेदो नास्ति इत्यर्थके को भेद इत्यशे अनङ्गीकार. । तथाहि विशिष्टस्वरूपतादात्म्यं तदेकदेश संसर्ग, तथा च संसर्गस्य विशिष्टान्तर्गतत्वात्तादात्म्येनाभेदः सम्भवति तदेकदेशत्वाद्भेदश्च यथा हस्तपादादिविशिष्ट स्वरूप शरीर तदेकदेशो हस्तस्तस्य शरीरापेक्षया अभेद तदेकदेशत्वाद्भेदश्च सम्भवति तद्वदिति भाव. । अध्याससिद्धान्तभाष्यतात्पर्यकथनद्वारा परमप्रकृतमुपसहरति **एवमिति**।

**अध्याससिद्धान्तभाष्यग्रन्थव्याख्या समाप्ता ॥**

युष्मदस्मादित्यादिलोकव्यवहार इत्यन्तं भाष्यं सकलशास्त्रोपोद्घातप्रयोजन सत् सूत्रार्थविचारकर्तव्यतान्यथानुपपत्त्या अहं ममाभिमानात्मकस्य लोकव्यवहारशब्दितस्य बन्धस्याविद्यात्मकत्वप्रतिपादनद्वारा सूत्रेणार्थात्सूत्रिताविषयप्रयोजने प्रतिपादयति लक्षणादिभाष्यसिद्धमध्यासन्त्वनुवदति—**आह कोयमध्यासो नामेत्यादि सर्वलोकप्रत्यक्ष इत्यन्तम्**। लक्षणादिभाष्ये विस्तरेण साक्षादध्याससाधकं तत् अर्थाद्विषयप्रयोजनप्रतिपादकं भवति । अस्यानर्थहेतोरित्यादिकं आरभ्यते इत्यन्तं भाष्य तु वेदान्तविचारकर्तव्यत्वान्यथानुपपत्त्या बन्धस्याविद्यात्मकत्वप्रतिपादनद्वारा विचारितवेदान्ताना विषयप्रयोजने प्रतिपादयति लक्षणादिभाष्य सिद्धमध्यासमनुवदति एतदुत्तरभाष्यं सान्त सम्बन्धादिप्रतिपादकं सत् पूर्वभाष्यसिद्धाध्यासविषयप्रयोजनानुवादकं भ-

कोऽयं लोकव्यवहारः । **आह—कोऽयमध्यासो नामेति । उच्यते—**

### रत्नप्रभा

**एवं** च सूत्रेणार्थात् सूचिते विषयप्रयोजने प्रतिपाद्य तद्धेतुमध्यासं लक्षणसम्भावनाप्रमाणैः साधयितुं लक्षणं पृच्छति—**आहेति** । किंलक्षणकोऽध्यास इत्याह पूर्ववादीत्यर्थः । अस्य शास्त्रस्य तत्त्वनिर्णयप्रधानत्वेन वादकथात्वद्योतनार्थमाहेति परोक्तिः । "आहेत्यादि" "कथं पुनः प्रत्यगात्मनीत्यतः" प्रागध्यासलक्षणपरं भाष्यं तदारभ्य सम्भावनापरम्, "तमेतमविद्याख्यम्" इत्यारभ्य "सर्वलोकप्रत्यक्ष" इत्यन्तं प्रमाणपरमिति विभागः । लक्षणमाह–**उच्यते स्मृतिरूप इति** । अध्यास इत्यनुषंगः ।

### पूर्णानन्दीया

वतीति विभागः, तस्मान्न पुनरुक्तिरित्यभिप्रेत्याध्यासस्वरूपसिद्धिं विना सम्भावनाप्रमाणयोरप्रसक्तत्वात् वृत्तानुवादपूर्वकं लक्षणविषयं प्रश्नमुत्थापयति **एवं सूत्रेणेति** । लक्षणेन वस्तुस्वरूपसिद्धिः प्रमाणेन तु वस्तुनिर्णयसिद्धिरिति भेदः । अनेनैवाभिप्रायेण लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति व्यवह्रियत इति मन्तव्यम् । **अर्थादिति** पदं सम्बन्धग्रन्थे व्याख्यातम् । **तद्धेतुमिति** । पूर्वभाष्ये सिद्धवत्कृत्योपन्यस्तमिति शेषः । उत्कटकोटिकसंशयः सम्भावना ।

ननु सम्भावनाभाष्ये सम्भावनामाक्षिपतीति व्याख्यायते तद्वदत्रापि लक्षणमाक्षिपतीति कुतो न व्याख्यायते किंशब्दस्य प्रश्नाक्षेपयोः प्रयुक्तस्य स्थलद्वये सत्त्वादिति चेन्न । भाष्ये प्रत्यगात्मनीति विशेषज्ञानेनाध्यासस्यासम्भवस्फूर्तेः सम्भावनांशे त्वाक्षेपो युक्तः अत्र तु आह कोयमध्यासो नामेति अध्याससामान्यज्ञानलक्षणांशे प्रश्न एव युक्त इत्यभिप्रायादिति भावः । अभिप्रायवान् किंशब्दं लक्षणप्रश्नपदत्वेन व्याख्याति—**किंलक्षणक इति** । किं लक्षणं यस्याध्यासस्य तथेति बहुव्रीहिः । पूर्ववादिस्थाने स्थितः सन् श्रीभाष्यकार एव पूर्ववादी भूत्वा लक्षणं साधयितुं पृच्छति इति भावः । नन्वाहेति परोक्तेर्वादजल्पवितण्डासु तिसृषु कथासु प्रत्येकं सम्भवात्कुत्रेयं परोक्तिरित्यत आह—**अस्येति** । तत्त्वनिर्णयं प्रधानमुद्देश्यं यस्य शास्त्रस्य तत्तथा तस्य भावस्तत्त्वं तेनेत्यर्थः । वादिप्रतिवादिभ्यां गुरुशिष्याभ्यां पक्षप्रतिपक्षपरिग्रहेण क्रियमाणार्थनिर्णयावसाना वादकथा तस्याः भावस्तत्त्वं तज्ज्ञापनार्थमित्यर्थः । विषयादिसिद्धिहेत्वध्याससिद्धिहेतुभूतानि यानि लक्षणसम्भावनाप्रमाणानि तत्प्रतिपादकभाष्यविभागमाह—**आहेत्यादीति । तदारभ्येति** । कथं पुनः प्रत्यगात्मनीत्यारभ्य तमेतमविद्याख्यमित्यतः प्राक्सम्भावनापरमित्यर्थः । **लक्षणमिति** । स्वरूपलक्षणं व्यावर्तकलक्षणं चाहेत्यर्थः ।

ननु लक्षणवाक्ये लक्ष्याभिधायिनः पदस्याभावात् साकाङ्क्षवचनमनर्थकमित्याशङ्क्य वाक्यं पूरयति **अध्यास इतीति** । प्रश्नवाक्यस्थितस्याध्यासपदस्यानुषङ्गः कर्तव्य इत्यर्थः । निरधिष्ठानभ्रान्तिनिरासार्थं परत्रेत्युक्ते अर्थात्परस्यावभासता सिद्धेत्यभिप्रेत्याव-

**रत्नप्रभा**

अत्र परत्रावभास इत्येव लक्षणम्, शिष्टं पदद्वयं तदुपपादनार्थम् । **तथा हि**—अव-, भास्यत इत्यवभासो रजताद्यर्थः तस्यायोग्यमधिकरणं **परत्रपदार्थः** । अधिकरणस्यायोग्यत्वमारोप्यात्यन्ताभाववत्त्वं तद्वत्त्वं **वा** ? तथा चैकावच्छेदेन स्वसंसृज्यमाने स्वात्यन्ताभाववति अवभास्यत्वमध्यस्तत्वमित्यर्थः । इदं च साद्यनाद्यध्याससाधारणं लक्षणम् । संयोगेऽतिव्याप्तिनिरासाय **एकावच्छेदेनेति** । संयोगस्य स्वसंसृज्यमाने वृक्षे स्वात्यन्ताभाववत्यवभास्यत्वेऽपि स्वस्वात्यन्ताभावयोर्मूलाग्रावच्छेदकभेदान्नातिव्याप्तिः । पूर्वं स्वाभाववति भूतले पश्चादानीतो घटो भातीति घटेऽतिव्याप्तिनिरासाय

**पूर्णानन्दीया**

भास इत्युक्तम् । **तदुपपादनार्थं**—लक्षणोपपादनार्थमित्यर्थः । परत्र पदतात्पर्येण लक्षणप्रविष्टं यत्स्वसंसृज्यमानत्वविशेषणं तदुपपादनार्थं पदद्वयं भवति न लक्षणप्रविष्टमिति भावः । अर्थरूपाध्यासपरत्वेन प्रथमतो लक्षणं योजयति **तथाहीति** । आरोप्येत्यभावस्याधिकरणस्वरूपत्वमिति मतमवलंब्येदमुक्तमिति भावः । अनङ्गीकारमतमवलंब्यारोप्यन्ताभाववत्त्वमयोग्यत्वमिति निर्वक्ति **तद्वत्त्वं वेति** । परत्रावभास इति पदद्वयेन परिष्कृतं व्यावर्तकलक्षणमाह—**तथा चेति** । अध्यस्तत्वमर्थरूपाध्यासत्वमित्यर्थः । आत्मत्वावच्छेदेनात्मन्यहङ्कारस्य संसर्गकाले तस्य कल्पितत्वेन तदत्यन्ताभावोऽस्ति तस्मादहमित्याकारके प्राथमिके अहङ्काररूपार्थाध्यासे लक्षणसमन्वयः । एवं स्वयमहमित्यत्र स्वयंत्वाच्छेदेन प्रत्यगात्मनि कूटस्थे अहङ्कारादेः संसर्गकाले तदत्यन्ताभावस्य सत्त्वात्कूटस्थकल्पिताहङ्काराद्यर्थरूपाध्यासे लक्ष्ये लक्षणसमन्वयः । सादित्वं जन्यत्वमनादित्वमजन्यत्वम् । अहङ्काराद्यध्यासः सादिः अविद्याचित्सम्बन्धाध्यासोऽनादिरिति भावः । तदुक्तम्—

जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः । इति ।

**अतिव्याप्तिनिरासायेति** । अर्थान्तरप्राप्तिसिद्धसाधनतानिरासायेत्यर्थः । तथा हि रजतादेरवभास्यत्वरूपमिथ्यात्वे साधिते सति यथा रजतादिः स्वाभाववत्यवभास्यः तथा संयोगोऽपि स्वाभाववत्यवभास्य इत्यर्थान्तरेण प्राप्ता या सिद्धसाधनता तन्निराकरणार्थं परमतानुसारेणैकावच्छेदेनेत्युक्तम्, स्वमते तु सर्वप्रपञ्चस्य मिथ्यात्वाङ्गीकारादेकावच्छेदेनेति देयमिति भावः । एवं सर्वत्र योजनीयम् । यद्यप्यग्रावच्छेदेन वृक्षे श्रीकृष्णसंयोगः मूलावच्छेदेन तदभावश्चास्ति तथाप्येकावच्छेदेन संयोगतदभावयोरसत्त्वान्न कृष्णसंयोगे अतिव्याप्तिरित्याह **संयोगस्येति** । स्वशब्दचतुष्टयं संयोगार्थकम् । **पूर्वं स्वेति** । अत्र स्वशब्देन घटो ग्राह्यः ।

ननु घटसम्बन्धित्वरूपं स्वसंसृज्यमानत्वं भूतलेऽप्यस्त्येवेत्यतिव्याप्तिर्दुर्वारेत्याशङ्क्य स्वस-

## रत्नप्रभा

स्वसंसृज्यमाने इति पदम् । तेनाभावकाले प्रतियोगिसंसर्गस्य विद्यमानतोच्यते इति नातिव्याप्तिः । भूत्वावच्छेदेनावभास्यगन्धेऽतिव्याप्तिवारणाय स्वात्यन्ताभाववतीति पदम् । शुक्तादिन्त्वावच्छेदेन रजतसंसर्गकालेऽत्यन्ताभावोऽस्तीति नाव्याप्तिः । नन्वस्य लक्षणस्यासम्भवः शुक्तौ रजतस्य सामग्र्यभावेन संसर्गासत्त्वात् । न च स्मर्यमाणसत्यरजतस्यैव परत्र शुक्तावबभास्यत्वेनाध्यस्तत्वोक्तिरिति वाच्यम्। अन्यथाख्यातिप्रसङ्गादित्यत आह–**स्मृतिरूप** इति। स्मर्यते इति स्मृतिः सत्यरजता-

## पूर्णानन्दीया

सृज्यमानेत्यत्र विद्यमानशानच्प्रत्ययेन बोधितवर्तमानत्वं संसर्गरूपप्रकृत्यर्थविवक्षया स्फुटीकरोति **तेनेति** । तथा चैकप्रदेशावच्छेदेनैककालावच्छेदेन च स्वस्वाभावयोर्यदधिकरण तस्मिन्नवभास्यत्वमेवार्थरूपाध्यासत्वमित्येवलक्षणस्य पर्यवसानात्पश्चादानीतघटससर्गकाले घटाभावस्याभावान्नातिव्याप्तिरिति भावः । अतिव्याप्तिर्नामालक्ष्ये लक्षणसत्व यत्र पृथिवीत्व तत्र गन्ध इति दैशिकव्याप्तिः अनुभवसिद्धा तथा च पृथिवीत्वावच्छेदेन पृथिव्या गन्धकाले गन्धाभावस्याभावान्नातिव्याप्तिरित्यभिप्रेत्याह **स्वात्यन्ताभावेति** ।

नन्वात्मनि स्वयमहमिति स्वयंत्वावच्छेदेनाहंकारादिसंसर्गकाले तदभावापादकप्रमाणाभावात्तस्मिन् शुक्तिशकले रजताभावस्यासत्त्वेन रजतरूपार्थाध्यासे लक्षणस्याव्याप्तिः स्यादित्याह **शुक्तावेति** । अव्याप्तिर्नामलक्ष्यैकदेशे लक्षणस्यासत्वं नेदं रजतमिति विशेषदर्शनात्मकबाधरूपप्रत्यक्षप्रमाणबलात् 'आदावन्ते च यन्नास्ति वर्तमानेपि तत्तथा'-इति न्यायाच्च रजताभावस्य शुक्तौ सत्त्वेन नाव्याप्ति । ननु भावाभावयोरेकत्र सत्त्वाङ्गीकारे अनुभवविरोध इति चेत् । उच्यते–मिथ्यात्ववादिनामेतादृशाविरोधस्त्वलकार एवेति भावः । उद्धृते सत्यव्याप्तिदोषे साद्यध्यासे असम्भव शङ्कते **नन्विति** । लक्ष्ये क्वाप्यप्रवर्तनमसम्भव इत्यसम्भवलक्षणम् , साद्यध्यासरूपे अहंकारादौ लक्ष्ये सर्वत्र लक्षणस्यासत्त्वादसम्भव इत्यर्थ । शुक्तिरजतमध्यस्तत्वेन नवमम्मतं तस्मादुभयवादिसिद्धम् । **तदिति** । तत्र लक्षणासत्त्वमुपपादयति **शुक्तावेति** । अतिव्याप्तिवारकत्वेन लक्षणे प्रविष्टं यत्स्वसंसृज्यमानत्वं तदुपपादयितुमशक्यमिति भावः ।

ननु पुरोवर्तिनि हट्टपट्टणस्थरजतससर्गस्याभावेन स्वसंसृज्यमानत्वमुपपादयितुमशक्यत्वान्न लक्षणे निवेशनीयम् । न च तन्निवेशाभावे पश्चादानीतघटेऽतिव्याप्तिः स्यादिति वाच्यम्। अभास्यत्वं नाम प्रमाणाजन्यज्ञानविषयत्वमित्यंगीकारात्पश्चादानीतघटे तु प्रमाणजन्यज्ञानविषयत्वस्यैव सत्त्वेन लक्षणाभावान्नातिव्याप्तिस्तथा च स्मर्यमाणरजतमादाय लक्षणोपपत्तिरिति तटस्थस्य शङ्कां पूर्वपक्षी परिहरति **न चेत्यादिना**। स्मर्यमाणरजतस्य सत्यरजतस्येत्यर्थ. । उक्तेरित्यनन्तरं न लक्षणस्यासम्भव इति शेषः । **अन्यथेति** ।

## रत्नप्रभा

दिः तस्य रूपमिव रूपमस्येति स्मृतिरूपः स्मर्यमाणसदृश इत्यर्थः। सादृश्योक्त्या स्मर्यमाणादारोप्यस्य भेदान्नान्यथाख्यातिरितिुक्तं भवति । सादृश्यमुपपादयति-**पूर्वदृष्टेति** । दृष्टं दर्शनं संस्कारद्वारा पूर्वदर्शनादवभास्यत इति पूर्वदृष्टावभासः । तेन संस्कारजन्यज्ञानविषयत्वं स्मर्यमाणारोप्ययोः सादृश्यमुक्तं भवति, स्मृत्यारोपयोः संस्कारजन्यत्वात् । **न च** संस्कारजन्यत्वादारोपस्य स्मृतित्वापत्तिरिति **वाच्यम्** । दोषसंप्रयोगजन्यत्वस्यापि विवक्षितत्वेन संस्कारमात्रजन्यत्वाभावात् । **अत्र सम्प्रयोगशब्देन** अधिष्ठानसामान्यज्ञानमुच्यते । अहङ्काराध्यासे इन्द्रियसम्प्रयोगालाभात् । एवं च दोषसंप्रयोगसंस्कारबलाच्छुक्त्यादौ रजतमुत्पन्नमस्तीति परत्र परावभासत्वलक्षणमुपपन्नमिति स्मृतिरूपपूर्वदृष्टपदाभ्यामुपपादितम् ।

**अन्ये तु** "ताभ्यां दोषादित्रयजन्यत्वं कार्याध्यासलक्षणमुक्तम्" इत्याहुः ।

## पूर्णानन्दीया

तथा चातिव्याप्तिवारणायान्यथाख्यातिमतभेदाय च लक्षणे स्वसंसृज्यमानत्व विशेषणे तावदावश्यके सति शुक्तौ प्रातिभासिकरजतस्यात्मनि व्यावहारिकाहङ्कारादेश्चोत्पत्तिवादिना वेदान्तिनां मते ह्युत्पत्त्यनन्तरमेव संसर्गो वाच्यः । उत्पत्तिस्तु सामग्र्यभावान्न सम्भवति तस्माल्लक्षणस्यासम्भवो दुर्वार इति पूर्वपक्ष्यभिप्रायः ।

सिद्धान्ती परिहरति **आहेति** । अतिव्याप्तिवारकस्वसंसृज्यमानत्वविशेषणेनान्यथाख्यातिमतभेदः प्रतिपादितो भवति । सम्प्रति सामग्रीसम्पादनार्थत्वेन प्रवृत्तिस्मृतिरूप पदेनाप्यन्यथाख्यातिमतभेदो वक्तव्य इत्यवयवव्युत्पत्त्या प्रतिपादयति **स्मर्यत इति । आरोप्यस्येति** । शुक्तौ तदवच्छिन्नचैतन्ये वा उत्पन्नस्यारोप्यरजतस्येत्यर्थः । **दर्शनादिति** । अनुभवादित्यर्थः । हट्टपट्टणस्थरजतानुभवजन्यसंस्काराद्भ्रम स्मृतिश्च जायत इति फलितमाह **तेनेति** । अनुभवजन्यज्ञानविषयत्वेनेत्यर्थः । संस्कारजन्यज्ञानविषयत्वं कथमित्याशंक्य तेनेत्युक्तहेत्वंशं विवृणोति **स्मृतीति** । संस्कारमात्रजन्यज्ञानत्वं स्मृतित्वं तस्मान्नारोपे ऽतिव्याप्तिरिति परिहरति **दोषेति** । सम्प्रयोगो नेन्द्रियसंयोग इत्याह **अत्रेति** । उपसंहरति एवं चेति । दोषश्च सम्प्रयोगश्च संस्कारश्चेति विग्रहः । सत्यरजतसामग्रीभिन्नसामग्रीबलादिति यावत् ।

आदिशब्देन शुक्त्यवच्छिन्नचैतन्यमुच्यते परत्रावभासपदाभ्यां साद्यनाद्यध्याससाधारणं लक्षणमुक्तं भवति स्मृतिरूपपूर्वदृष्टपदाभ्यां साद्यध्यासलक्षणमुक्तमिति यन्मतद्वय तदुपपादयति **अन्ये त्वित्यादिना** । अस्मिन्मतेपि स्मृतिरूपः स्मर्यमाणसदृशः सादृश्यप्रतिपादकं पूर्वदृष्टपदमित्यभिप्रेत्य फलितं लक्षणमाह **ताभ्यामिति** । आदिशब्देन सम्प्रयोगसंस्कारौ गृह्येते व्यावहारिकप्रातिभासिकसाद्यध्याससाधारणलक्षणमुक्तमित्यर्थः । दोषादित्रयजन्याध्यासविषयत्वमर्थरूपाध्यासस्य लक्षणमिति भाव । स्वमते

### ❀ रत्नप्रभा ❀

**अपरे तु**–"स्मृतिरूप. स्मर्यमाणसदृशः सादृश्यं च प्रमाणाजन्यज्ञानविषयत्वम् , स्मृत्यारोपयोः प्रमाणाजन्यत्वात् पूर्वदृष्टपदं तज्जातीयपरम् , अभिनवरजतादेः पूर्वदृष्टत्वाभावात् ; तथा च प्रमाणाजन्यज्ञानविषयत्वे सति पूर्वदृष्टजातीयत्वं प्रातीतिकाध्यासलक्षणं ताभ्यामुक्तम् , परत्रावभासशब्दाभ्यामध्यासमात्रलक्षणं व्याख्यातमेव । तत्र स्मर्यमाणगङ्गादावभिनवघटे चातिव्याप्तिनिरासाय प्रमाणेत्यादिपदद्वयम्" इत्याहुः । तत्रार्थाध्यासे स्मर्यमाणसदृश· परत्र पूर्वदर्शनादवभास्यत इति **योजना** । ज्ञानाध्यासे

### ❀ पूर्णानन्दीया ❀

संस्कारजन्यज्ञानविषयत्व यत्सादृश्यमुक्तं तदेवास्मिन्मतेपीति मन्तव्यम् । प्रकारान्तरेण सादृश्यमुपपादयितु पूर्ववत्कर्मव्युत्पत्त्यादिकमाश्रित्य लब्धमर्थमाह—**स्मृतिरूप इति** । **तज्जातीयेति** । पूर्वदृष्टनिष्ठजातिविशिष्टेत्यर्थ । अभिनवरजतादे शुक्त्यादावुत्पन्नरजतादेरित्यर्थ· । अस्मिन्मते तु पूर्वदृष्टपद न सादृश्यप्रतिपादकमित्यभिप्रेत्य फलितं लक्षणमाह–**तथा चेति**। पूर्वमतापेक्षया अस्मिन्मते लक्षणभेदज्ञापनया प्रातीतिकेत्युक्तम्। शुक्तिरजतस्वाप्नपदार्थाद्यध्यास· प्रातीतिकाध्यास इत्यर्थ· । अस्मिन् मते तु पूर्वदृष्टावभास इति भाष्ये पूर्वदृष्टश्चासाववभासश्चेति कर्मधारय समास इति विज्ञेयम्। अध्याससामान्यलक्षण स्वमतापेक्षया मतद्वयेपि किंभेदेनोपपादनीयमिति जिज्ञासाया नेत्याह **परत्रेति** । मात्रपदं कार्त्स्न्यार्थकं सामान्यमिति यावत् । ताभ्यामुक्त मतद्वयाभिमतं सामान्यलक्षणं स्वमतरीत्यैवोपपादनीयमिति भाव । प्रमाणाजन्यज्ञानविषयत्वमात्रं लक्षणमित्युक्ते स्मर्यमाणगंगादावतिव्याप्तिरत पूर्वदृष्टजातीयत्वम् । अनेन पूर्वदृष्टात्तज्जातिविशिष्टो भिन्न इति व्यक्तिद्वय प्रतीयते तथा च या पूर्वदृष्टा सैव सा गंगेति स्मृतिविषयः तस्माद्व्यक्तेरेकत्वान्न तत्र विशेष्यांश इति नातिव्याप्ति ।

ननु व्यक्तिद्वयाङ्गीकारेपि पूर्वदृष्टे तज्जातिविशिष्टत्वस्य सत्त्वादतिव्याप्ति स्यादिति चेन्न । तज्जातिमत्त्वं नाम तत्सदृशत्वमित्यङ्गीकारात्तथा च पूर्वदृष्टसादृश्यस्य भेदाविशिष्टत्वेन पूर्वदृष्टे तस्मिन् असत्त्वान्नातिव्याप्ति । पूर्वदृष्टजातीयत्वमित्युक्ते अभिनवघटे अतिव्याप्ति' तत्र पूर्वदृष्टत्वाभावेन तज्जातीयत्वस्य सम्भवात्तद्वारणाय विशेषणदलम् । अभिनवघटस्य चाक्षुषत्वेन प्रमाणजन्यज्ञानविषयत्वान्न तत्र अतिव्याप्तिरित्यभिप्रेत्याह **तत्रेति** । स्मर्यमाणत्वं—स्मृतिविषयत्वम् । **आहुरिति** । मतद्वयेप्यध्याससामान्यलक्षणसम्भवरूपास्वरसः आहुरित्यनेन सूचित । शुक्तौ रजतसामग्र्यभावेन-तत्संसर्गासत्त्वादिति भावः । अवभास्यत इत्यनेन भाष्यस्थावभासपद कर्मव्युत्पत्त्या रजताद्यर्थपरमिति ज्ञाप्यते तथा च शुक्तावभास्यरजतादिः स्मर्यमाणसदृश पूर्वानुभवजनितसंस्कारजन्यज्ञानविषय इति वाक्यस्य फलितार्थ· । अर्थाध्यासलक्षण पूर्वमेव परिष्कृतम्। एतावता ग्रन्थेन वाक्यमर्थाध्यासपरत्वेन व्याख्यातुकामः पूर्वस्माद्वैषम्यमाह–**ज्ञानाध्यास**

स्मृतिरूपः परत्र पूर्वदृष्टावभासः । तं केचिदन्यत्रान्यधर्माध्यास इति

## रत्नप्रभा

तु स्मृतिसदृशः परत्र पूर्वदर्शनादवभासत इति वाक्यं योजनीयमिति **संक्षेपः** ।

**ननु** अध्यासे वादिविप्रतिपत्तेः कथमुक्तलक्षणसिद्धिरित्याशङ्क्याधिष्ठानारोप्य-स्वरूपविवादेऽपि "परत्र परावभासः" इति लक्षणे संवादाद्युक्तिभिः सत्याधिष्ठाने मिथ्यार्थावभाससिद्धेः सर्वतन्त्रसिद्धान्ते इदं लक्षणमिति मत्वा अन्यथात्मख्यातिवा-दिनोर्मतमाह-**तं केचिदिति** । **केचिदन्यथाख्यातिवादिनोऽन्यत्र** शु-क्त्यादावन्यधर्मस्य स्वावयवधर्मस्य देशान्तरस्थरूप्यादेरध्यास इति **वदन्ति** ।

## पूर्णानन्दीया

**इति** । स्मृतिपदस्य स्मरणमेवार्थं न स्मर्यमाणम् । अवभासत इत्यनेन भावव्युत्पत्त्या भाष्यस्थावभासपदं ज्ञानार्थकमिति ज्ञाप्यते । तथा च स्मृतिसदृश पूर्वानुभवजनितसंस्कारजन्यः शुक्तावध्यस्तरजतादिविषयकावभास इति वाक्यस्य फलितार्थः । एतेन स्मृतिसदृशोऽवभासोऽवभासत इत्यन्वयदोषो निरस्तः । अवभासत इति पदस्य भावव्युत्पत्तिज्ञापकत्वेन व्याख्यातत्वात् । पूर्वदर्शनादवभास इति पाठान्तरम् । अस्मिन् पाठे तु नान्वयदोष इति मन्तव्यम् । अत्र परत्रावभास इति पदद्वयपरिष्कारेणा-तस्मिंस्तद्बुद्धिरध्यास इति ज्ञानाध्यासस्य लक्षणं वक्तव्यम् । किं च स्मृत्यारोपयोः सं-स्कारजन्यज्ञानत्वं प्रामाणाजन्यज्ञानत्वं वा सादृश्यं प्रतिपादनीयम् । अपि चाध्यासे संस्का-रपदेन विवक्षितदोषसम्प्रयोगजन्यत्वमप्युपपादनीयमित्यभिप्रेत्याह—**इति संक्षेप इति** ।

ननु लक्षणकथनानन्तरमव्याप्त्यादिदोषाभावात् क्रमप्राप्तसम्भावनोपन्यास एवोचितः न मतान्तरोपन्यासः तथा च कथमुत्तरभाष्यसंगतिरित्याशंक्य लक्षणपरिशोधनायैव मतान्तरोपन्यास इति शंकोत्तराभ्यां सङ्गतिं प्रदर्शयन् उत्तरभाष्यमवतारयति **न-न्विति** । प्रकृते विप्रतिपत्तिर्नाम विवादः अधिष्ठानारोप्ययोर्यत्स्वरूपं तस्य विवादेपीति विग्रहः । अधिष्ठानं सत्यमिति सत्यवादिनो वदन्ति।असत्यमित्यसत्यवादिनः । एवमधिष्ठा-नस्वरूपविवादः । अपि चाधिष्ठानस्य सत्यत्वेपि जडत्वमजडत्वमित्येवं तत्त्वस्वरूपवि-वादः । अन्यथाख्यातिवादिनस्तार्किकाः अख्यातिवादिनः प्राभाकराश्च देशान्तरनिष्ठं रजत-मिति वदन्ति । आत्मख्यातिवादिनो बुद्धिनिष्ठमिति । वेदान्तिनस्त्वनिर्वचनीयवादिनोऽधि-ष्ठाननिष्ठमिति । बौद्धैकदेशी शून्यवादी त्वसद्रूपमित्येवमारोप्यस्वरूपविवाद इति भावः । लक्षणसम्वादात् लक्षणस्य सर्वसम्मतत्वादित्यर्थः । तन्त्रपदं मतपरं शास्त्रपरं वा । तथा च सिद्धान्तत्वेनेदं लक्षणं सर्वैरभ्युपगतमिति भावः । **अन्यथात्मेति** । ख्यातिपदम-वभासपरम् । एकमेव लक्षणं मतद्वये योजनीयमित्याशयेनेदमुक्तमिति भावः । **स्वावयव-धर्मस्येति** । स्वपदं रजतपरम् । आत्मख्यातिमतसाङ्कर्यवारणायेदं विशेषणमिति भावः । अन्यधर्मस्येत्यस्य व्याख्यानान्तरं देशान्तरस्थस्येति । अनिर्वचनीयमतासत्ख्यातिमत-

वदन्ति । केचित्तु यत्र यदध्यासस्तद्विवेकाग्रहनिबन्धनो भ्रम इति । अन्ये

❧ रत्नप्रभा ❧

**आत्मख्यातिवादिनस्तु** बाह्ये शुक्त्यादौ बुद्धिरूपात्मनो धर्मस्य रजतस्याध्यास आन्तरस्य रजतस्य बहिर्वदवभास इति वदन्तीत्यर्थः। अख्यातिमतमाह—**केचि**दिति । यत्र यस्याध्यासो लोकसिद्धस्तयोस्तद्धियोश्च भेदाग्रहे सति तन्मूलो **भ्रमः**, इदं रूप्यमिति विशिष्टव्यवहार इति वदन्तीत्यर्थः । तैरपि विशिष्टव्यवहारान्यथानुपपत्त्या विशिष्टभ्रान्तेः स्वीकार्यत्वात् परत्र परावभाससम्मतिरिति भावः ।

शून्यमतमाह—**अन्ये त्विति । तस्यैवा**धिष्ठानस्य शुक्त्यादेर्**विपरीतधर्मत्वकल्पनां** विपरीतो विरुद्धो धर्मो यस्य तद्भावस्तस्य रजतादेरत्यन्तासतः कल्पनामाचक्षत इत्यर्थः । एतेषु मतेषु परत्र परावभासत्वलक्षणसंवादमाह—**सर्वथापि त्विति** ।

❧ पूर्णानन्दीया ❧

साकर्यवारणायेद विशेषणमिति भाव. । एवमुत्तरत्र तत्तद्विशेषणेन तत्तन्मतसांकर्यवारणमूहनीयम् । अन्यथाख्यातिमते अन्यधर्मावभास इति भाष्ये अन्यस्य धर्म अन्येषां धर्म इति विग्रहोऽभिप्रेत. अस्मिन्मते तु अन्यस्य धर्म इति विग्रहमभिप्रेत्य व्याख्याति **बुद्धीति** । आन्तरस्य बुद्धिपरिणामरूपस्य रजतस्येद रजतमिति शब्दप्रयोगाद्बहिःपदार्थवदवभास इति वदन्तीति भाव. । तद्विवेकाग्रह इत्यादि भाष्य व्याख्याति **तयोश्चेति** । देशान्तरस्थरजतशुक्तिरूपार्थयोरित्यर्थः । रजतांशे स्मृतिरिदमंशे त्वनुभव इति प्राभाकरमतन्तज्ज्ञापयति **तद्धियोश्चेति** । अर्थविषयकस्मृत्यनुभवयोश्चेत्यर्थः । भेदाग्रहकाल एव तद्धेतुको भ्रमस्तिष्ठति नेतरास्मिन् काल इति भ्रमस्य भेदाग्रहसमानकालीनत्वं द्योतयितु भाष्यमनुषङ्गं कृत्वा योजयति **भेदेति** । स. भेदाग्रहे मूलं निमित्तकारणं यस्य स तथा निमित्तकारणनाशानन्तर लोके कार्यस्य सत्त्वं दृष्टं प्रकृते तु न तथेति भाव. । भ्रमशब्दस्यार्थमाह—**विशिष्टेति** । तयोर्भेदस्याग्रहेणेद रजतमिति विशिष्टत्वेनोल्लिख्यमानशब्दप्रयोगात्मको भ्रम उत्पद्यत इति भावः । शुक्तिस्तु पुरोवर्तिनी रजतं तु देशान्तरमेव न शुक्तौ भासत इत्यख्यातिवादिनो वदन्ति । तन्मतेपि देशान्तरस्थस्यान्यत्र भानाभावे कथ विशिष्टव्यवहार इति गले पादुकान्यायेन लक्षणमस्तीत्याह **तैरिति** । विशिष्टशब्दप्रयोगात्मकस्य विशिष्टव्यवहारस्यानुपपत्तिर्नामान्यत्र विद्यमानस्यान्यत्र भानरूपभ्रमं विना व्यवहारो न सम्भवतीत्याकारिका तया विशिष्टभ्रान्ते. तैरपि स्वीकार्यत्वादित्यर्थः । रजतादि विपरीतधर्मत्वशब्दार्थ इत्यभिप्रेत्य व्याचष्टे **तस्यैवेति** । विरुद्धः अत्यन्तासत्त्वरूप. धर्म. रजतादि. यस्य शुक्त्यादेः स. विरुद्धधर्मः तस्य विरुद्धधर्मस्य शुक्त्यादेर्भावो रजतादिः तस्य रजतादेरित्यर्थ. । अत्रालोकतादात्म्यसम्बन्धेन शुक्तिशकलस्यासद्रजतधर्मवत्त्वं वेदितव्यम् । **सम्वादमिति** । सम्मतिमित्यर्थः । आदिशब्देन आत्मख्यातिवादिकमुच्यते। उक्तमतेष्वनुपपत्तिं दर्शयन् स्वाभिमतमाह **शुक्ता-**

तु यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामाचक्षते इति । सर्वथापि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरति । तथाच लोकेऽनुभव.—शु-

## रत्नप्रभा

अन्यथाख्यातित्वादिप्रकारविवादेऽप्यध्यासः परत्र परावभासत्वलक्षणं न जहातीत्यर्थः । शुक्तावपरोक्षस्य रजतस्य देशान्तरे बुद्धौ वा सत्त्वायोगात्, शून्यत्वे प्रत्यक्षत्वायोगात्, शुक्तौ सत्त्वे बाधायोगान्मिथ्यात्वमेवेति भावः । आरोप्यमिथ्यात्वे न युक्त्यपेक्षा तस्यानुभवसिद्धत्वादित्याह—तथा चेति । बाधानन्तरकालीनोऽयमनुभवः, तत्पूर्वं शुक्तिकात्वज्ञानायोगात् रजतस्य बाधप्रत्यक्षसिद्धं मिथ्यात्वं वच्छब्देनोच्यते । आत्मनि निरुपाधिकेऽहंकाराध्यासे दृष्टान्तमुक्त्वा ब्रह्मजीवान्तरभेदस्याविद्याद्युपाधिकस्याध्यासे दृष्टान्तमाह--एक इति । द्वितीयचन्द्रसहितवदेक एवाङ्गुल्या द्विधा भातीत्यर्थः । लक्षणप्रकरणोपसंहारार्थं 'इति' शब्दः ।

## पूर्णानन्दीया

विति । देशान्तरे सत्त्वायोगादित्यनेन अन्यथाख्यात्यख्यातिमतद्वयनिरास. । आत्मख्यातिवादिनोप्यन्यत्रान्यधर्मावभासस्यागत्यागीकारादिति भाव । केचित् शुक्तावेव रजतस्योत्पत्ति. तत्र तस्योत्पन्नस्य रजतस्य सत्यत्वमङ्गीकार्यमिति वदन्ति । तन्मतं निराकरोति **शुक्तौ सत्त्व इति ।** अत्रेदं त्वनुसंधेयम् । यत्र लौकिकप्रत्यक्षविषयत्व तत्र साक्षात्करोमीत्यनुव्यवसायविषयत्वमिति व्याप्तिरनुभवसिद्धा एवं च शुक्तावपरोक्षत्वेनानुभूयमानस्य रजतस्य भानं परवादिना ज्ञानलक्षणारूपसन्निकर्षणैव वक्तव्यं तथा च रजतं साक्षात्करोमीत्यनुव्यवसायोपपत्तिर्न वादिमते शक्यते वक्तुम् अलौकिकप्रत्यक्षविषयस्य साक्षात्करोमीत्यनुव्यवसायविषयत्वासभवात् स्वमते तु शुक्त्यादावनिर्वचनीयं रजतमुत्पद्यते तस्योत्पन्नस्य लौकिकप्रत्यक्षविषयत्वेनानुव्यवसायत्वात्तदुपपत्तिरस्तीति । **बाधानन्तरेति** । नेद रजतमिति बाधानन्तरकालीन. शुक्तिकाहिरजतवदवभासत इत्यनुभव इत्यर्थ । तत्र हेतुमाह **तत्पूर्वमिति** । बाधात्पूर्वमित्यर्थ । नेदं रजतमिति बाधप्रत्यक्षेण सिद्धमित्यर्थ. । 'यावत्कार्यमवस्थायिभेदहेतोरुपाधिते'त्यभियुक्तवचनेन यो भेदहेतु. स उपाधिरिति नियमो ह्यनुभवसिद्ध यथा चन्द्रे ह्यनेकचन्द्रत्वे अङ्गुल्यादिस्तथा चाहङ्कारात्मनोरैक्याध्यासे अविद्यादे भेदकत्वाभावान्नोपाधित्व किन्तु हेतुत्वमात्र तस्यैवाविद्यादे ब्रह्मजीवान्तरभेदकत्वात्तदध्यासे तूपाधित्वं तस्मान्निरुपाधिक सोपाधिकश्चेति द्विविधोऽध्यास इत्यभिप्रेत्यावतारयति **आत्मनीति** । जीवादन्यो जीवान्तर ब्रह्मजीवभिन्नमिति ब्रह्मणि जीवभेदस्य सोपाधिकस्याध्यासे चैत्रो मैत्राद्भिन्न इति परस्परजीवभेदस्य सोपाधिकस्याध्यासे च दृष्टान्तमाहेत्यर्थ । सद्वितीयवदिति भाष्यार्थं कथयन् दृष्टान्तोपाधिं स्फोरयति **द्वितीयेति ।**

**इति अध्यासलक्षणभाष्यग्रन्थव्याख्या समाप्ता ॥**

क्तिका हि रजतवदवभासते, एकश्चन्द्रः सद्वितीयवदिति । **कथं** पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयतद्धर्माणाम् ? सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यस्यति, युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं

## रत्नप्रभा

भवत्वध्यासः शुक्त्यादौ, आत्मनि तु न सम्भवतीत्याक्षिपति–**कथं पुनरिति** । यत्रापरोक्षाध्यासाधिष्ठानत्वं तत्रेन्द्रियसंयुक्तत्वं विषयत्वं चेति व्याप्तिः शुक्त्यादौ दृष्टा, तत्र व्यापकाभावादात्मनोऽधिष्ठानत्वं न सम्भवतीत्यभिप्रेत्याह–**प्रत्यगात्मनीति** । प्रतीचि पूर्णे इन्द्रियाग्राह्ये विषयस्याहंकारादेस्तद्धर्माणां चाध्यासः कथमित्यर्थः । उक्तव्याप्तिमाह–**सर्वो हीति** । **पुरोऽवस्थितत्वम्**–इन्द्रियसंयुक्तत्वम् । **नन्वात्मनोऽधिष्ठानत्वार्थं** विषयत्वादिकमस्त्वित्यत आह–**युष्मदिति** । इदंप्रत्ययानर्हस्य प्रत्यागात्मनो "न चक्षुषा गृह्यते" (मुण्ड.३।१।८) इत्यादिश्रुतिमनुसृत्य त्वमविषयत्वं ब्रवीषि, सम्प्रत्यध्यासलोभेन विषयत्वाङ्गीकारे श्रुतिसिद्धान्तयोर्बाधः स्यादि-

## पूर्णानन्दीया

॥ श्रीगुरुभ्यो नमः ॥

लोके लक्षणप्रमाणाभ्यां वस्तुनिर्णयसिद्धिः अत्र मिथ्यात्वस्पष्टीकरणायोक्तेन लक्षणेनाध्यासस्वरूपे सिद्धे लक्षणप्रश्नावसरकाले किशब्देन बुद्धिस्थस्य सभावनाक्षेपस्योत्थानात् वस्तुनिश्चयार्थं प्रमाणनिरूपणात् पूर्वं सभावनानिरूपणं युक्तमिति अभिप्रेत्य सम्भावनाक्षेपमुत्थापयति **भवन्विति** । ननु वस्तुनिर्णयार्थमवश्यं वक्तव्येन प्रमाणेनैव कथं संभवेदित्याकारकायाः सम्भावनाया निराकरणात्सभावना न पृथग्वक्तव्या तथा च तदाक्षेपस्यानवसर इति चेन्न । प्रामाणिके वस्तुन्यसम्भावनाया अनुभवसिद्धत्वात्तथा च न प्रमाणेन तन्निराकरणम्। न चासम्भावितत्वे कथ प्रामाणिकत्व मिति वाच्यम् । असम्भाविते वस्तुनि प्रामाणिकत्वस्याप्यनुभवसिद्धत्वात्तस्मादसम्भावनानिराकरणाय सम्भावना पृथक् निरूपणीयेति तदाक्षेपो युक्त इति भावः । अपरोक्षाध्यासं प्रत्यधिष्ठानसामान्यज्ञानमधिष्ठानेन्द्रियसंयोगश्च हेतुस्तथा च शुक्त्यादौ कारणद्वयसत्त्वादध्यासो भवतु आत्मनि तु तदभावान्न संभवत्यध्यास इत्येव शङ्कितुरभिप्रायमाविष्कुर्वन् भाष्यमवतारयति–**यत्रेति** । इन्द्रियसयोगाधिष्ठानसामान्यज्ञानयोरध्यासं प्रति हेतुत्वादेव यत्राध्यासाधिष्ठानत्वं तत्रेन्द्रियसंयुक्तत्व विषयत्व चेति व्याप्तिरनुभवसिद्धा भवति, तथाचात्र सामग्र्यभावेनेन्द्रियसयुक्तत्वविषयत्वरूपव्यापकाभावादधिष्ठानत्वरूपव्याप्याभावस्तस्मादध्यासो न सम्भवतीत्यभिप्रेत्याहेत्यर्थः। प्रत्यगात्मन्यविषय इति पदद्वयेन सामग्र्यभावं स्फुटीकुर्वन्नन्वयमाविष्करोति **प्रतीचीति** । प्रतीचीत्यनेनेन्द्रियसंयुक्तत्वे चेति भावः । यद्यप्यात्मनस्त्वज्ञानविषयत्वं अहंकारपरिणामरूपवृत्तिविषयत्वं चास्ति तथापीन्द्रियजन्यज्ञानविषयत्वं नास्तीति पदद्वयफलितमर्थमाह–**इन्द्रियाग्राह्येति** । युष्मत्प्रत्ययापेतस्येत्यस्य व्याख्यानमिदंप्रत्ययानर्हस्येति । **त्वम-**

ब्रवीषि। **उच्यते**—न तावदयमेकान्तेनाविषयः, अस्मत्प्रत्ययविषयत्वात्,

**रत्नप्रभा**

त्यर्थः। आत्मन्यध्याससम्भावनां प्रतिजानीते--**उच्यते** इति। अधिष्ठानारोप्ययोरेकस्मिन् ज्ञाने भासमानत्वमात्रमध्यासव्यापकम्, तच्च भानप्रयुक्तसंशयनिवृत्त्यादिफलभाक्त्वम्, तदेव भानभिन्नत्वघटितं विषयत्वम्, तन्न व्यापकम् गौरवादिति मत्वाह—**न तावदिति**। अयमात्मा नियमेनाविषयो न भवति। तत्र हेतुमाह--**अस्म-**

**पूर्णानन्दीया**

**विषयत्वमिति**। पराग्भावेनेदंतासमुल्लेख्यत्वं ज्ञानविषयत्वं तद्विपरीतप्रत्यग्रूपत्वादात्मनस्त्वविषयमिति भाव.। इदमुपलक्षणम्, इन्द्रियादिसंयुक्तत्वं च ब्रवीषीत्यर्थः॥ **अध्यासलोभेनेति**। अध्याससिद्ध्यभिप्रायेणेत्यर्थः। यथा घटवति भूतले नीलघटो नास्तीत्युक्त्या नैकान्तेन घटाभावो विवक्ष्यते तथा स्वरूपज्ञानविषयत्वाभावोक्त्याहंप्रत्ययविषयत्वेनाभ्युपगते ह्यात्मनि नैकान्तेन विषयत्वाभावो विवक्षित इत्यभिप्रेत्य सिद्धान्तभाष्यमवतारयति **आत्मनीति**। उत्कटकोटिकसंशय· सम्भावना, अध्यासोस्ति न वेत्याकारकसंशयस्यास्तित्वकोट्यंशे ह्यौत्कट्यं नाम प्रायेण कारणस्य सत्त्वादध्यासो भवेदित्यभिप्रायस्तद्विशिष्टकोटिरुत्कटकोटिस्तद्वान्संशय उत्कटकोटिकसंशय इत्युच्यते, अध्यासोस्तीत्यंशस्याभिप्रायविषयत्वाद्विषयतासम्बन्धेनाभिप्रायवैशिष्ट्य विभावनीयम्। अध्यासं प्रत्यधिष्ठानसामान्यज्ञानमेव हेतुः नेन्द्रियसयोग इत्यभिप्रेत्य अध्यासाधिष्ठानत्वव्यापकं विवृणोति **अधिष्ठानेति**। **ज्ञान इति**। अध्यासरूपाधिष्ठानसामान्यज्ञान इत्यर्थ। भासमानत्वं विषयत्वमिति पर्यायः। मात्रपदेनेन्द्रियसंयुक्तत्वमिन्द्रियत्वविशिष्टत्वेन गौरवान्न व्यापकमित्युच्यते। अध्यासव्यापकमध्यासाधिष्ठानत्वव्यापकमित्यर्थ। किं नाम भासमानत्वमिति जिज्ञासायां फलभाक्त्वरूप विषयत्वरूपं चेति द्विविधं भासमानत्वमित्याह **तच्चेति**। भासभानत्वं चेत्यर्थ.। भानं ज्ञान तत्प्रयुक्तं यत्संशयादिनिवृत्तिरूपं फल तद्भाक्त्वं तदाश्रयत्वमित्यर्थ। अधिष्ठानारोप्ययोरात्माहंकारयोर्यज्ज्ञानमहमित्याकारकाध्यासात्मकं तेनात्माहङ्कारविषयकसंशयस्य तद्विषयकविपर्ययस्य चाभावात्संशयादिनिवृत्तिफलभाक्त्वमात्माहङ्कारयोरस्तीति भासमानत्वोपपत्तिरिति भावः। तदेव भासमानत्वमेवेत्यर्थ.। **विषयत्वमिति**। इति केचिद्वदन्तीति शेष.। **तन्न व्यापकमिति**। उक्तविषयत्वरूपभासमानत्वं भानभिन्नत्वविशिष्टत्वेन गौरवान्न व्यापकमित्यर्थः।केचित्तु भासमानत्वं नाम ज्ञानभिन्नत्वघटितं स्वरूपसम्बन्धविशेषरूपमुक्तफलभाक्त्वनियामक विषयत्वमिति वदन्ति। तच्चोक्तविषयत्वरूपं भासमानत्वं न व्यापकं ज्ञानाभिन्नत्वविशिष्टत्वेन गौरवात्किन्तूक्तफलभाक्त्वरूपभासमानत्वमेव व्यापकं ज्ञानाविशिष्टत्वेन लाघवात् अतो व्यापकस्य सत्त्वादात्मन्यध्यासेोपपत्तिरिति भावः।

ननु ज्ञानघटितफलभाक्त्वमपि न व्यापक संशयादिनिवृत्तिविशिष्टत्वेन गौरवादिति

अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः । नचायमस्ति नियमः पुरोवस्थित एव

## रत्नप्रभा

दिति । अस्मत्प्रत्ययोऽहमित्यध्यासस्तत्र भासमानत्वादित्यर्थः । अस्मदर्थश्चिदात्मा प्रतिबिम्बितत्वेन यत्र प्रतीयते सोऽस्मत्प्रत्ययोऽहंकारस्तत्र भासमानत्वादिति वाऽर्थः। न चाध्यासे सति भासमानत्वम् तस्मिन् सति स इति परस्पराश्रय इति वाच्यम् । अनादित्वात् । पूर्वाध्यासे भासमानात्मन उत्तराध्यासाधिष्ठानत्वसम्भवात् ।

नन्वहमित्यहंकारविषयकभानरूपस्यात्मनो भासमानत्वं कथम् ? तद्विषयत्वं विना तत्फलभाक्त्वायोगादित्यत आह--अपरोक्षत्वाच्चेति । चशब्दः शङ्कानिरासार्थः। स्वप्रकाशत्वादित्यर्थः । स्वप्रकाशत्वं साधयति-प्रत्यगिति । आबालपण्डि-

## पूर्णानन्दीया

चेत् । अत्रोच्यते। ज्ञानप्रयुक्तफलभाक्त्वमेव व्यापक संशयादिनिवृत्तेर्व्यापकशरीरप्रवेशस्तु फलस्फुटार्थस्तस्माल्लाघवं दुरपह्नवमिति विज्ञेयम्। भासमानत्वादित्यर्थ इति। आत्मन स्वप्रकाशत्वेन वृत्तौ प्रतिविम्बितत्वेन च भासमानत्वमहकारस्य तु साक्षिवेद्यत्वेन भासमानत्वमिति भेद. । तथा हि—अहङ्काराभावविशिष्टसुषुप्त्यादिकाले अहमित्यध्यासपूर्वकाले च स्वप्रकाशत्वेन आत्मा स्फुटं प्रतीयते, अत एवात्मनिष्ठं प्रकाशत्वप्रयुक्तफलभाक्त्वरूपभासमानत्वमहंकारादिनिष्ठासाक्षिवेद्यत्वप्रयुक्तात्फलभाक्त्वरूपभासमानत्वाद्भिन्नमित्यवश्यमङ्गीकरणीयमिति भाव· । आत्मन· वृत्तिप्रातिबिम्बितचैतन्यविषयत्वाभावेऽपि वृत्तिविषयत्वमस्तीति परिहारग्रन्थार्थ । यत्रेति । यत्राहंकारे प्रतीयते आत्मा सोऽहंकारोऽस्मत्प्रत्यय इत्यन्वय । तत्राहंकारे तदधिष्ठानत्वेन प्रतिविम्बितत्वेन चात्मनः भासमानत्वादित्यर्थः ।

ननु प्रथमव्याख्याने अध्यासः स्फुट द्वितीयव्याख्यानेपि यत्र प्रतीयते स इत्यनेनाध्यासो भासत एव प्रतीयत इति प्रयोगात्तथा च परस्पराश्रयदोषः स्यादित्याह न चेत्यादिना। पूर्वाध्यास इति। अहमित्याकारके अन्यस्यान्यात्मकत्वावभासरूपे पूर्वाध्यास इत्यर्थ । तथा चोत्तराध्यास प्रत्यधिष्ठानसामान्यज्ञानात्मकः पूर्वाध्यासो हेतुर्भवति तस्माद्धेतो सत्त्वाद्व्यापकस्य सत्त्वेनात्मन्यध्यासोपपत्तौ न काचिदनुपपत्तिरिति भावः । भानभिन्नत्वघटितविषयत्वरूपभासमानत्ववादी शङ्कते नन्विति । एकस्मिन् विषयविषयित्वस्य विरुद्धत्वादिति भावः । भानरूपस्यात्मन· भानविषयत्वरूपभासमानत्वाभावेप्युक्तफलभाक्त्वरूपभासमानत्व स्यादित्यत आह तद्विषयत्वं विनेति । भानविषयत्वं विनेत्यर्थः । तत्फलेति । भानविषयत्वप्रयुक्तसंशयविपर्ययनिवृत्त्यात्मकफलेत्यर्थः। चशब्दो युक्त्यन्तरप्रतिपादक इति भ्रमं वारयति चशब्द इति । भानविषयत्वमेव फलभाक्त्वनियामकमिति नियम· किन्तु स्वप्रकाशत्वमपि तन्नियामकं तथा च स्व· प्रकाशत्वादात्मनस्तत्प्रयुक्तफलभाक्त्वरूपभासमानत्व युज्यत इति भावः । उपसंहरति

विषये विषयान्तरमध्यसितव्यमिति । अप्रत्यक्षेऽपि ह्याकाशे बालास्तलम-
लिनताद्यध्यस्यन्ति । एवमविरुद्धः प्रत्यगात्मन्यप्यनात्माध्यासः । तमेत-

## रत्नप्रभा

तमात्मनः संशयादिशून्यत्वेन प्रसिद्धेः स्वप्रकाशत्वमित्यर्थः । अतः स्वप्रकाशत्वेन भास-
मानत्वादात्मनोऽध्यासाधिष्ठानत्वं सम्भवतीति भावः । यदुक्तमपरोक्षाध्यासाधिष्ठानत्व-
स्येन्द्रियसंयुक्ततया ग्राह्यत्वं व्यापकमिति तत्राह—**न चायमिति** । तत्र हेतुमाह-
**अप्रत्यक्षेऽपीति** । इन्द्रियाग्राह्येऽपीत्यर्थः । **बाला** अविवेकिन. **तलमि**न्द्रनीलक-
टाहकल्पं नभो **मलिनं** पीतमित्येवमपरोक्षमध्यस्यन्ति । तत्रेन्द्रियग्राह्यत्वं नास्तीति
व्यभिचारान्न व्याप्तिः । **एतेनात्मानात्मनोः** सादृश्याभावान्नाध्यास **इत्यपास्तम्** ।
नीलनभसोस्तदभावेऽप्यध्यासदर्शनात् । **सिद्धान्त** आलोकाकारचाक्षुषवृत्तिव्यक्तसा-
क्षिवेद्यत्वं नभस इति ज्ञेयम् । सम्भावनां निगमयति-**एवमिति** । **ननु** ब्रह्मज्ञान-
नाश्यत्वेन सूत्रितामविद्यां हित्वा अध्यासः किमिति वर्ण्यत इत्यत आह-**तमेत-**

## पूर्णानन्दीया

**अत इति** । व्यापकस्य स्वप्रकाशत्वप्रयुक्तफलभाक्त्वरूपभासमानत्वस्य सत्त्वाद्व्याप्याधि-
ष्ठानत्वमात्मनि सम्भवतीति भावः । यद्यपि युष्मदस्मत्प्रत्ययगोचरयोरिति भाष्यव्याख्याने
चिदात्मा तावदस्मत्प्रत्यययोग्य इत्यादिग्रन्थे फलभाक्त्वरूपगुणयोगादात्मनि गौणविष-
यत्वं भासमानत्वरूपं ग्रन्थकारेण प्रसाधितं तथापि अत्र फलभाक्त्वमेव भासमानत्व-
मित्युक्तं लाघवादिति मन्तव्यम् । अन्ये तु आत्मनि स्वप्रकाशत्वरूप भासमानत्वमङ्गीकृत्य
तदेव व्यापकमित्यध्यासोपपत्तिरिति वदन्ति । फलभाक्त्वरूपभासमानत्वमेवाध्यासव्यापकं
न भानभिन्नत्वविशिष्टविषयत्वरूपभासमानत्वमिति भाष्यभाव स्फुटीकृत सम्प्रतीन्द्रियग्रा-
ह्यत्व नाध्यासव्यापकमिति प्रतिपादकमुत्तरभाष्यमवतारयति **यदुक्तमिति** । **तत्रेति** ।
यत्राध्यासाधिष्ठानत्व तत्रेन्द्रियसयोगजन्यज्ञानविषयत्वमिति या व्याप्तिस्तस्या अभावे
हेतुमाहेत्यर्थ । **इन्द्रियाग्राह्येपीति** । द्रव्यात्मकोप्याकाश स्पर्शरहितत्वाद्रूपरहितत्वाच्च
न बाह्येन्द्रियजन्यज्ञानविषय नाप्यन्तरिन्द्रियजन्यज्ञानविषय मनसो अन्तरिन्द्रियस्यासहा-
यस्य बाह्यप्रवृत्तिरहितत्वात्तस्मादिन्द्रियाग्राह्य इति भावः । **अविवेकिन इति** । अय
थार्थदर्शिन इत्यर्थ. । इन्द्रियसंयुक्तत्व विषयत्वं चेत्युक्त व्यापकद्वयमेकीकृत्य लाघवादिन्द्रि-
यग्राह्यत्वमेव व्यापकमित्याह **इन्द्रियग्राह्यत्वमिति** । इन्द्रियसंयोगजन्यज्ञानविषयत्व-
मित्यर्थ. । एतेनेत्यनेन बोधितं हेतुमाह **नीलनभसोरिति** ।

नन्वाकाशस्य कथं तलमलिनताद्यध्यासाधिष्ठानत्वमिन्द्रियग्राह्यत्वाभावेन भासमान-
त्वरूपव्यापकाभावादित्याशंक्य साक्षिवेद्यत्वादाकाशस्यास्त्येव भासमानत्वरूपं व्यापकत्वमि-
त्याह **सिद्धान्त इति** । आलोकाकारा या चाक्षुषवृत्तिस्तस्यामभिव्यक्तो यः साक्षी
तद्वेद्यत्वमित्यर्थ. । **सूत्रितामिति** । प्रथमसूत्रेणार्थिकार्थतया प्रतिपादितामित्यर्थः । अवि-

मेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते । तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः । तत्रैवं सति यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि स न सम्बध्यते, तमेतमविद्याख्यमात्मानात्मनोरितरेत-

## रत्नप्रभा

मिति । आक्षिप्तं समाहितमुक्तलक्षणलक्षितमध्यासमविद्याकार्यत्वादविद्येति मन्यन्त इत्यर्थः। विद्यानिवर्त्यत्वाच्चास्याविद्यात्वमित्याह—**तद्विवेकेनेति** । अध्यस्तनिषेधनाधिष्ठानस्वरूपनिर्धारणं विद्यामध्यासनिवर्तिकामाहुरित्यर्थः। तथापि कारणाविद्यां त्यक्त्वा कार्याविद्या किमिति वर्ण्यते तत्राह—**तत्रेति** । तस्मिन्नध्यासे उक्तन्यायेनाविद्यात्मके सतीत्यर्थः । मूलाविद्यायाः सुषुप्तावनर्थत्वादर्शनात् कार्यात्मना तस्या अनर्थत्वज्ञापनार्थं तद्वर्णनमिति भावः। अध्यस्तकृतगुणदोषाभ्यां अधिष्ठानं न लिप्यत इत्यक्षरार्थः।

एवमध्यासस्य लक्षणसम्भावने उक्त्वा प्रमाणमाह—**तमेतमिति** । तं वर्णितमेतं

## पूर्णानन्दीया

द्यामुपदर्श्य तस्या ज्ञाननिरस्यत्वप्रदर्शनेनाविद्यानिवृत्तिसिद्धेः किमध्यासोपवर्णनेन गौरवादिति शंकितुरभिप्राय. । तच्छब्दार्थमाह **आक्षिप्तमिति । एतच्छब्दार्थमाह समाहितमिति ।** एवंलक्षणमिति भाष्ये बहुव्रीहिसमासमभिप्रेत्य परिष्कृतमर्थमाह—**उक्तलक्षणलक्षितमिति । मन्यन्त इति** । प्रमाणकुशला इति शेष । तद्विवेकेनेत्यस्य व्याख्यानम**ध्यस्तनिषेधनेति** । अध्यस्तस्याहंकारादेः निषेधेन विलयनेन अधिष्ठानस्वरूपस्य निर्धारणमवधारणात्मकविज्ञानं ब्रह्मविदो विद्यामाहुरित्यर्थ. । नेदं रजतं किन्तु शुक्तिरेवेत्यध्यस्तातद्रूपरजतविलयनेन अधिष्ठानशुक्तिस्वरूपस्य प्रत्यगभिन्नब्रह्मणो निर्विचिकित्समवधारणात्मकं विज्ञानं विद्येति ब्रह्मविदो वदन्तीति भाव. । **उक्तन्यायेनेति** । अविद्याकार्यत्वाविद्यानिवर्त्यत्वरूपोक्तहेतुद्वयेनेत्यर्थः ।

ननु कथमुक्तशङ्कायाः परिहारः तस्य परिहारस्य भाष्ये अप्रतीयमानत्वादित्यत आह **मूलेति ।** तद्वर्णनमध्यासवर्णनमित्यर्थः । बन्धस्यानर्थरूपस्यावास्तवत्वं द्योतयितुमक्षरार्थमाह **अध्यस्तकृतेति** । अध्यस्त. अहंकारादिः तत्कृतो योगप्रभावादिजनितसर्वज्ञत्वादिरूपो गुणः तत्कृतः अविवेकजनितब्रह्महत्यादिरूपो दोष इति विवेक । अक्षरार्थ शक्त्या शब्दताडितार्थ इत्यर्थः ॥

**इति सम्भावनाभाष्यग्रन्थव्याख्यासमाप्ता ॥**

---

**श्रीगुरुचरणकमलेभ्यो नमः ॥** वृत्तानुवादपुरःसरमुत्तरभाष्यतात्पर्यमाह **एवमिति** ॥ उक्तरीत्येत्यर्थ. । युष्मदस्मदित्यादिना नैसर्गिकोऽयं लोकव्यवहार इत्यन्तेन भाष्येण सिद्धवदुपन्यस्तमात्मानात्मनोरन्योन्यविषयमविद्याशब्दितमध्यास सिसाधयि-

ध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि । **कथं** पुनरविद्यावद्विष-

## रत्नप्रभा

साक्षिप्रत्यक्षसिद्धं पुरस्कृत्य हेतुं कृत्वा लौकिकः कर्मशास्त्रीयो मोक्षशास्त्रीयश्चेति त्रिविधो व्यवहारः प्रवर्तत इत्यर्थः । तत्र विधिनिषेधपराणि कर्मशास्त्राण्यृग्वेदादीनि, विधिनिषेध-शून्यप्रत्यग्ब्रह्मपराणि मोक्षशास्त्राणि वेदान्तवाक्यानीति विभागः । एवं व्यवहारहेतु-त्वेनाध्यासे प्रत्यक्षसिद्धेऽपि प्रमाणान्तरं पृच्छति-**कथं पुनरिति** । अविद्यावानह-

## पूर्णानन्दीया

ध्रुस्तस्य लक्षणमभिधाय तत्सम्भवं चात्मनि दर्शयित्वा पुनस्तद्भावनिश्चयमुपपादयितु-मिच्छन् प्रमाणमाहेति भाव । **श्लोकः—**

व्याख्यायते यदा भाष्यं सङ्केतो लिख्यते तदा ।
आदौ तु भाष्य इत्येवमन्ते व्याख्यान इत्यपि ॥

**भाष्ये–प्रमाणप्रमेयव्यवहारा इति** । प्रमाणाना चक्षुरादीना व्यवहार. उन्मीलन निमीलनादिरूप. क्रियाविशेष. प्रमेयघटादीनां व्यवहार. आनयनादिरूपः क्रियाविशेषः । **सर्वाणि च शास्त्राणीति** । कर्मशास्त्राणि मोक्षशास्त्राणि चेत्यर्थ । विधिप्रतिषेधमो-क्षपराणीत्यत्र विधिप्रतिषेधपराणि मोक्षपराणीत्युभयत्र परशब्दस्यान्वय. । अध्यास पुरस्कृत्य प्रमाणादिव्यवहाराः प्रवृत्ता इत्यनेनाध्यासाश्रय. प्रमातापि गम्यते, तथा चाविद्यावद्विषयाणि प्रत्यक्षादिप्रमाणानीत्युक्तं भवति तथा सति कथ पुनरविद्यावद्विष-याणीत्याद्यनुवादपूर्वकाक्षेपो युक्तः पुरोवादसम्भवादिति भाव । पुन शब्द प्रमाणान्त-रद्योतक ।

व्याख्याने **लौकिक इति** । प्रमाता प्रमाण प्रमेयमित्यादि व्यवहारो लौकिक इत्यर्थः । कर्ता करण कर्मेत्यादिव्यवहार. कर्मशास्त्रीय इत्यर्थ. । ध्याता ध्यानं ध्येयमि-त्यादिव्यवहार. मोक्षशास्त्रीय इत्यर्थ ।

ननु मोक्षशास्त्रेपि प्रमाणादिव्यहारस्य सत्त्वादयं नियमः कथमिति चेत् । उच्यते । प्रधानोपसर्जनभावेनाय नियम उपपद्यत इति । तथा च त्रिविधव्यवहारस्य देहेन्द्रियादि-ष्वहंममाध्यासमूलकत्वं प्रत्यक्षसिद्धं व्यवहारहेतुत्वेनाध्यासोऽपि प्रत्यक्षसिद्धः प्रमाणा-नामविद्यावद्विषयत्वमपि प्रत्यक्षसिद्धमिति प्रमाणमुपन्यस्तं भवतीति भाव । ननु कर्म-शास्त्रीयत्व नाम कर्मशास्त्राणा सम्बन्धित्वमिति वक्तव्यम्, तत्र कानि मोक्षशास्त्राणीत्या-शङ्क्य विधिनिषेधपराणि कर्मशास्त्राणि मोक्षपराणि मोक्षशास्त्राणीति विभागमाह **तत्रेति** । ननु मोक्षशास्त्रस्यापि विधिनिषेधपरत्वमेव वक्तव्यं तन्निष्ठत्वात्सकलशास्त्रस्य किं ततोऽन्यन्मोक्षपरत्वमित्याशङ्क्य मोक्षशास्त्राणां मोक्षपरत्वं नाम विधिनिषेधशून्य प्रत्यग्ब्रह्मपरत्वमित्याह **विधिनिषेधशून्येति** । **एवमिति** । उक्तप्रकारेणेत्यर्थः ।

॥ रत्नप्रभा ॥

मित्यध्यासवानात्मा प्रमाता स विषय आश्रयो येषां तानि **अविद्यावद्विषयाणी-ति** विग्रहः । तत्तत्प्रमेयव्यवहारहेतुभूतायाः प्रमाया अध्यासात्मकप्रमात्राश्रितत्वात् । प्रमाणानामविद्यावद्विषयत्वं **यद्यपि** प्रत्यक्षम्, **तथापि** पुनरपि **कथं केन** प्रमाणेना-विद्यावद्विषयत्वमिति **योजना** । **यद्वाऽविद्यावद्विषयाणि कथं** प्रमाणानि स्युः ? आश्रयदोषात्प्रामाण्यापत्तेरित्याक्षेपः । तत्र प्रमाणप्रश्ने व्यवहारार्थापत्तिं तल्लिङ्गका-

॥ पूर्णानन्दीया ॥

उक्तप्रकारमेवाह **व्यवहारहेतुत्वेनेति** । वैशिष्ट्ये तृतीयार्थः व्यवहारहेतुत्वविशिष्टाध्यासे साक्षिसिद्धेऽपीत्यर्थः । परमते मानसप्रत्यक्षसिद्धोऽध्यास इति द्योतनार्थं सामान्यतः प्रत्यक्ष-पदनिवेशः । एवमुत्तरत्र विभावनीयम् । प्रमाणादीनामचेतनत्वेन तेषां व्यवहारः प्रमा-तारमन्तरा न सम्भवति प्रमातृत्वं प्रमाश्रयत्वं तच्चासङ्गस्यात्मनः विनाध्यासं न शक्य-मुपपादयितुं तस्माद्व्यवहारहेतुत्वेनाध्यासे साक्षिप्रत्यक्षसिद्धेऽपि प्रमाणान्तरं पृच्छती-ति भावः । अध्यासो व्यवहारहेतुः सन् प्रत्यक्षप्रमाणसिद्ध इति साधयितुं प्रवृत्तेन 'तमे-तमविद्याख्यमित्यादि मोक्षपराणी'त्येतदन्तेन भाष्येणैवाध्यासस्य व्यवहारहेतुत्वार्थं प्रमाण निष्ठाविद्यावद्विषयत्वमपि प्रत्यक्षप्रमाणसिद्धमिति साधितं भवति तदनुवदन् भाष्या-न्वयमाविष्करोति **तत्तत्प्रमेयव्यवहारेति** । **अध्यासात्मकेति** । अध्यासविशि-ष्टेत्यर्थः । अथ वा अध्यासात्मकोऽर्थाध्यासस्वरूपः यः प्रमाता तदाश्रितत्वादिति यथाश्रुत एवार्थः । प्रमातृत्वविशिष्टस्य प्रमातुः साभासाहंकारस्यार्थाध्यासत्वज्ञापनार्थमिदं विशे-षणमिति भावः । **अविद्यावद्विषयत्वमिति** । अध्यासवत्पुरुषाश्रयत्वमित्यर्थः । प्रत्यक्षं साक्षिप्रत्यक्षमित्यर्थः ।

ननु प्रमाणानामध्यासवत्प्रमात्राश्रयत्वं वक्तव्यं किं प्रमायास्तदाश्रयप्रतिपादन मिति चेन्न । प्रमेयव्यवहारहेतुभूतप्रमाणस्य यथा अध्यासवत्पुरुषाश्रयत्वं तथा प्रमेयव्यव-हारहेतुभूतप्रमाया अपि तदाश्रयत्वज्ञापनार्थत्वात् । नचेदमप्रसक्तमिति वाच्यम् । प्रमाणा-नां प्रमाद्वारा प्रमेयव्यवहारं प्रति हेतुत्वात्तेषां प्रमाणानां प्रमात्राश्रितत्वेन त-त्कार्यप्रमाया अपि तदाश्रितत्वप्रतिपादनं प्रसक्तमेवेति भावः । अथवा प्रमापदं प्रमाणप-रम्, तथा च व्यवहारहेतुभूतस्य प्रमाणस्याध्यासवत्प्रमात्राश्रितत्वादिति भावः । प्रमा-णानामिति निष्ठत्वं षष्ठ्यर्थः । **विषयत्वमिति** । अध्यासश्चेति शेषः । यद्यप्यन्यस्या-न्यात्मकत्वावभासरूपोऽध्यासः प्रत्यक्षसिद्धः अविद्यावद्विषयत्वं च प्रत्यक्षसिद्धं तथापि त-योः सद्भावे प्रमाणान्तरं पृच्छतीति भावः । **अविद्यावद्विषयाणीति** । यदा पुरुषो-ध्यासात्मकदोषयुक्तस्तदा चक्षुरादिकमप्यध्यासात्मकदोषयुक्तम्, तथा च यद्दुष्टकरण-जन्यं ज्ञानं तद्भ्रम इति नियमः यथा पीतः शङ्ख इति ज्ञानम्, एवं च तानि चक्षुरादीनि सर्वदा भ्रमजनकान्येव स्युः न प्रमाजनकानीति अविद्यावद्विषयाणि तानि कथं प्रमाणा-

याणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति। **उच्यते**—देहेन्द्रियादि-

### रत्नप्रभा

नुमानं चाह-"**उच्यते**" इत्यादिना "**तस्मात्**" इत्यन्तेन। देवदत्तकर्तृको व्यवहार-स्तदीयदेहादिष्वहंममाध्यासमूलस्तदन्वयव्यतिरेकानुसारित्वात्, यदित्थं **तत्तथा**, **यथा** मृन्मूलो घट इति प्रयोगः। तत्र व्यतिरेकं दर्शयति-**देहेति**। देवदत्तस्य सुषुप्तावध्यासाभावे व्यवहाराभावो दृष्टः। जाग्रत्स्वप्नयोरध्यासे सति व्यवहार इत्यन्वयः स्फुटत्वान्नोक्तः। अनेन लिंगेन कारणतयाऽध्यासः सिद्ध्यति, व्यवहाररूपकार्यानुपपत्त्या वेति भावः। **ननु** मनुष्यत्वादिजातिमति देहेऽहमित्यभिमानमात्राद्व्यवहारः

### पूर्णानन्दीया

नीति प्रामाण्याक्षेप इति भावः। अर्थापत्तिपदं प्रमाणपरं न प्रमापरं देवदत्तोऽध्यासवानित्याकारकार्थापत्तिरूपप्रमाकरणमर्थापत्ति, तथा च अध्यासं विना व्यवहारो न सम्भवतीति व्यवहाररूपकार्यार्थापत्तिरध्यासे प्रमाणमिति भाव। तत्पदं व्यवहारपरं चैत्रोऽध्यासवान् व्यवहारवत्त्वात् मैत्रवद् व्यतिरेकेण घटवद्वेत्यनुमानं चाध्यासे प्रमाणमिति भाव.।

नन्विद भाष्यमध्यासप्रमाणप्रतिपादनपरतयैव व्याख्यायते किमविद्यावद्विषयत्वे प्रमाणप्रतिपादनपरतयापि न व्याख्यायते प्रश्नविषयत्वेनोभयोः प्रसक्तेस्तुल्यत्वादिति चेन्न। अध्यासप्रमाणप्रतिपादनेनाविद्यावद्विषयत्वे प्रमाणप्रतिपादनस्य सुलभत्वात्,तथाहि प्रत्यक्षादिप्रमाणमध्यासवत्प्रमात्राधिष्ठितं सत्प्रवृत्तिकारण अचेतनत्वाद्रथादिवदिति प्रयोग.। अचेतनस्य व्यवहार. चेतनाधिष्ठितत्वमन्तरा न सम्भवतीत्यन्यथानुपपत्तिरित्येतद्द्वयमविद्यावद्विषयत्वे प्रमाणमिति विभावनीयम्। न केवलमध्यासे व्यवहारलिङ्गकानुमानमेव प्रमाणं किन्तु व्यवहारपक्षकमपीत्याह **देवदत्तेति**। देहशब्देन मनुष्यत्वादिजातिविशिष्ट· अवयवी अभिमत., आदिशब्देन इन्द्रियबाह्याद्यवयवग्रहणम्। देहे अहमित्यध्यास. इन्द्रियादौ ममेत्यध्यासः तन्मूलक इत्यर्थः। तस्याध्यासस्यान्वयश्च व्यतिरेकश्चान्वयव्यतिरेकौ तावनुसरतीत्यन्वयव्यतिरेकानुसारी तस्य भावस्तस्मादित्यर्थ.। अन्वय. सत्त्वं व्यतिरेकोऽभाव इति विवेक·। व्यवहार स्वव्यतिरेकद्वारा अध्यासव्यतिरेकानुसारी भवतीति भाव। यत् यदन्वयव्यतिरेकानुसारि तत्तन्मूलकमिति सामान्यव्याप्तिमाह-**यदित्थमिति**। इत्थं पदान्वयव्यतिरेकानुसारी भवतीत्यर्थ। तथा तन्मूलकमित्यर्थ.। सामान्यव्याप्तिं स्फुटीकर्तु तदुचितं स्थलं प्रदर्शयति **यथेति**। मूलपद कारणपर यथा मृदन्वयव्यतिरेकानुसारित्वान्मृन्मूलो घट· तथा अध्यासान्वयव्यतिरेकानुसारित्वादध्यासमूलको व्यवहार इति भावः। **कारणतयेति**। कारणत्वेन साध्यप्रविष्टत्वादध्याससिद्धिरिति भाव.। वाशब्दश्चार्थे। 'उच्यते देहेन्द्रियादिष्वहमि'त्यादि भाष्य श्रीभाष्यकारस्य वस्तुसंग्राहकवाक्यं तस्यैव प्रपञ्चन 'नहीन्द्रियान्यनुपादाये'त्यादि भाष्यमिति विभागमभिप्रेत्य उत्तरभाष्यं शङ्कोत्तराभ्यामव-

ष्वहंममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः । नहीन्द्रियाण्यनुपादाय प्रत्यक्षादिव्यवहारः सम्भवति । न चाधिष्ठानमन्तरेणेन्द्रियाणा व्यवहारः सम्भवति । न चानध्यस्तात्मभावेन देहेन कश्चिद्व्या-

## रत्नप्रभा

सिद्ध्यतु, किमिन्द्रियादिषु ममाभिमानेनेत्याशङ्क्याह–**न हीति** । इन्द्रियपदं लिङ्गादेरप्युपलक्षणं प्रत्यक्षादीत्यादिपदप्रयोगात् । तथा च प्रत्यक्षलिङ्गादिप्रयुक्तो यो व्यवहारो द्रष्टा अनुमाता श्रोताऽहमित्यादिरूपः स इन्द्रियादीनि ममतास्पदान्यगृहीत्वा न सम्भवतीत्यर्थः । **यद्वा** तानि ममत्वेनानुपादाय यो व्यवहारः स नेति **योजना** । पूर्वत्रानुपादानासम्भवक्रिययोरेको व्यवहारः कर्ता इति क्त्वाप्रत्ययः साधुः । उत्तरत्रानुपादानव्यवहारयोरेकात्मकर्तृकत्वात् तत्साधुत्वमिति भेदः । इन्द्रियादिषु ममेत्यध्यासाभावेऽन्धादेरिव द्रष्टृत्वादिव्यवहारो न स्यादिति भावः । इन्द्रियाध्यासेनैव व्यवहारादलं देहाध्यासेनेत्यत आह–**न चेति** । इन्द्रियाणामधिष्ठानम् आश्रयः शरीरमित्यर्थः । **नन्वस्त्वात्मना संयुक्तं शरीरं तेषामाश्रयः** किमध्यासेनेत्यत्राह–**न चानध्यस्तात्मभावेनेति** । अनध्यस्त आत्मभावः आत्मतादात्म्यं यस्मिन् तेनेत्यर्थः ।

## पूर्णानन्दीया

तरयति **नन्विति** । **लिङ्गादेरिति** । अनुमानप्रमाणादेरित्यर्थः । प्रत्यक्षादीत्यादिपदेनानुमित्यादेः संगृहीतत्वादित्यर्थः । व्यवहारः पुरुषकर्तृकव्यवहार इत्यर्थः । प्रमास्वरूपाणां प्रत्यक्षानुमितिशाब्दज्ञानाना व्यवहारमभिनयति **द्रष्टेत्यादिना** । अनुमाता अनुमितिकर्ता शाब्दप्रमारूपश्रवणकर्ता श्रोता । अनुमन्तेति पाठः प्रामादिकः अस्मिंश्च पाठे अनुमन्ता अनुमतिकर्ता अनुमतिः सम्मतिरित्यर्थः । **यद्वेति** । पुरुष. तानि ममत्वेनानुपादाय पुरुषस्य यो व्यवहार· स न सम्भवतीत्यन्वय. । प्रथमव्याख्याने पुरुषस्य व्यवहारकर्तृत्वमात्र, व्यवहारस्य तु अगृहीत्वेत्यनेन अनुपादानक्रियाकर्तृत्वं—न सम्भवतीत्यनेन चासम्भवक्रियाकर्तृत्वं चेत्युभयकर्तृत्वं प्रतिपाद्यते तस्मादनुपादायेत्येककर्तृत्ववाचित्वात्प्रत्यय. साधुरिति परिष्करोति **पूर्वत्रेति** । द्वितीयव्याख्याने व्यवहारस्यासम्भवक्रियाकर्तृत्वमात्रं पुरुषस्य तु पुरुषोऽनुपादायेत्यनेनानुपादानक्रियाकर्तृत्वं पुरुषस्य व्यवहार इत्यनेन व्यवहारकर्तृत्वं चेत्युभयकर्तृत्वं प्रतिपाद्यते तत· प्रत्यय. साधुरिति स्फुटीकरोति **उत्तरत्रेति** । देहरूपधर्म्यध्यासमन्तरा हीन्द्रियादिरूपधर्माध्यासो न सम्भवतीति धर्म्यध्यासोऽङ्गीकरणीय इति परिहारमभिप्रेत्य धर्मिणं स्फोरयति **इन्द्रियाणामिति** । **नन्विति** । अचेतनेन्द्रियादेर्व्यवहारः चेतनसम्बन्धमन्तरा न सम्भवति रथादेर्व्यवहार इवातः चेतनसम्बन्धो वाच्य· इन्द्रियादेस्तु स्वाश्रयशरीरद्वारा परंपरासम्बन्धेन चेतनात्मसम्बन्धसत्त्वाद्व्यवहारोपपत्तेः किं धर्म्यध्यासेनेति शङ्कितुरभिप्रायः । आत्मशरीरयोः संयोगः संभवति चेत्तदा आत्मसंयुक्तशरीरसम्बन्धित्वेनेन्द्रियादेरात्मसम्बन्धो वक्तुं युज्येत स

म्रियते । न चैतस्मिन्सर्वस्मिन्नसति असङ्गस्यात्मनः प्रमातृत्वमुपपद्यते । न च प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति । तस्मादविद्यावद्विषयाण्येव

## रत्नप्रभा

"असङ्गो हि" (बृह.६।४।३।१५) इति श्रुतेराध्यासिक एव देहात्मनो सम्बन्धो न संयोगादिरिति भावः । नन्वात्मनो देहादिभिराध्यासिकसम्बन्धोऽपि मास्तु, स्वतश्चेतनतया प्रमातृत्वोपपत्तेः । न च सुषुप्तौ प्रमातृत्वापत्तिः करणोपरमादिति तत्राह—न चैतस्मिन्निति । प्रमाश्रयत्वं हि प्रमातृत्वम् । प्रमा यदि नित्यचिन्मात्रं तर्ह्याश्रयत्वायोगः, करणवैयर्थ्यं च । यदि वृत्तिमात्रं, जगदान्ध्यप्रसङ्गः वृत्तेर्जडत्वात् , अतो वृत्तीद्धो बोधः प्रमा, तदाश्रयत्वमसङ्गस्यात्मनो वृत्तिमन्मनस्तादात्म्याध्यासं विना न सम्भवतीति भावः । देहाध्यासे, तद्धर्माध्यासे चासतीत्यक्षरार्थः । तर्ह्यात्मनः प्रमातृत्वं मास्त्विति वदन्तं प्रत्याह--न चेति । तस्मादात्मनः प्रमातृत्वादिव्यवहारार्थमध्यासोऽङ्गीकर्तव्य इत्यनुमानार्थापत्त्योः फलमुपसंहरति–तस्मादिति । प्रमाणसत्त्वादित्यर्थः । यद्वा-प्रमाणप्रश्नं समाधायाक्षेपं परिहरति-तस्मादिति । अहमित्यध्यासस्य प्रमात्रन्तर्गतत्वेनादोषत्वादविद्यावदाश्रयाण्यपि प्रमाणान्येवेति योजना । सति प्रमातरि पश्चाद्भवन् दोष

## पूर्णानन्दीया

एव न सम्भवतीत्याशयं स्फुटीकरोति असङ्गो हीति । निरवयस्यावयवसंश्लेषरूपसंयोगो नास्ति । सिद्धान्ते समवायस्तु नाभ्युपगत एव स्वरूपादिसम्बन्धस्तु संयोगादिमूलसम्बन्धपूर्वकः तथा चाध्यासेनैव व्यवहारनिर्वाह इति भावः । वृत्तिमात्रमिति । अन्तःकरणपरिणामविशेषमात्रमित्यर्थ. । जगदान्ध्येति । जगत व्यवहाराविषयत्वप्रसङ्ग इत्यर्थः । प्रमा नाम वृत्तिसंबंधरहितचिद्रूपा वा चित्सम्बन्धरहितवृत्तिर्वा आहोस्विद्विशिष्टा वेति विकल्प्य प्रथमाद्वितीयौ निरस्य तृतीयमङ्गीकरोति अतो वृत्तीद्ध इति । वृत्त्यभिव्यक्तो वृत्तीद्ध इत्यर्थः । वृत्तिमतो मनस. यत्तादात्म्यं सत्तैक्यरूप तस्याध्यासं विनेत्यर्थ. । वृत्तिरूपविशेषणांशे चाध्यास धर्म्यध्यासं विना न सम्भवति, तथा च धर्म्यध्यासाभावेनोभयत्र धर्माध्यासाभावे वृत्तिविशिष्टबोधरूपप्रमाश्रयत्वं नेति फलितार्थः । 'एतस्मिन् सर्वस्मिन्नसतीति' भाष्यस्य मनस्तादात्म्याद्यध्यासाभावरूपतात्पर्यार्थो उक्त. सम्प्रति शब्दोक्तार्थमाह देहादीति । तद्धर्माध्यासे च देहधर्मस्येन्द्रियादेरध्यासे चेत्यर्थः । प्रत्याहेति । तिरस्करोतीत्यर्थः । प्रमातारमन्तरा ह्यचेतनेन्द्रियादिव्यवहारो नोपपद्यत इति सिद्धान्त्यभिप्राय. । अर्थापत्तिशब्दो व्याख्यात तच्छब्दार्थं कथयन् भाष्य योजयति अहमितीति । अध्यासं विना प्रमातृत्वायोगात्तदन्तर्गतत्वमध्यासस्येति भाव । पूर्वस्थितमेवकारमुत्तरपदेनान्वेति प्रमाणान्येवेतीति ।

ननु चैतन्याद्वितीयावभासं प्रति प्रमात्रन्तर्गतस्याविद्याध्यासस्य दोषत्वेन प्रसिद्ध-

प्रत्यक्षादीनि प्रमाणानि शास्त्राणि च । पश्वादिभिश्चाविशेषात् । यथा हि पश्वादयः शब्दादिभिः श्रोत्रादीनां सम्बन्धे सति शब्दादिविज्ञाने प्रतिकूले जाते ततो निवर्तन्ते अनुकूले च प्रवर्तन्ते, यथा दण्डोद्यतकर पुरुषमभिमुखमुपलभ्य मां हन्तुमयमिच्छतीति पलायितुमारभन्ते, हरिततृ-

## रत्नप्रभा

इत्युच्यते, यथा काचादिः, अविद्या तु प्रमात्रन्तर्गतत्वान्न दोषः, येन प्रत्यक्षादीनामप्रामाण्यं भवेदिति भावः । ननु यदुक्तमन्वयव्यतिरेकाभ्यां व्यवहारोऽध्यास इति । तदयुक्तम् । कार्यविदुषामध्यासाभावेऽपि व्यवहारदृष्टेरित्यत आह—पश्वादिभिश्चेति । "च" शब्दः शङ्कानिरासार्थः । किं विद्वत्त्वं "ब्रह्मास्मीति" साक्षात्कारः, उत यौक्तिकमात्मानात्मभेदज्ञानम् ? आद्ये "बाधिताध्यासानुवृत्त्या व्यवहारः" इति समन्वयसूत्रे वक्ष्यते । द्वितीये—परोक्षज्ञानस्यापरोक्षभ्रान्त्यनिवर्त्तकत्वाद्विवेकिनामपि व्यवहारकाले पश्वादिभिरविशेषादध्यासवत्त्वेन तुल्यत्वाद् व्य-

## पूर्णानन्दीया

त्वात्कथमदोषत्वमित्यत आह सति प्रमातरीति । यथा चक्षुर्निष्ठकाचकामलादि पश्चाद्भवन् दोषः तथा अविद्या तु प्रमात्रन्तर्गतत्वान्न दोष इत्यन्वय । पूर्वस्माद्वैषम्यद्योतकस्तुशब्द । प्रमाकारणीभूते प्रमातरि सति पश्चाद्भवन् तदकारणीभूतो यः स दोष इत्युच्यते यथा काचादि पीतप्रमां प्रत्यकारणत्वात् अविद्यात्मकाध्यासस्तु प्रमात्रन्तर्गततया प्रमा प्रति कारणत्वान्न दोष इत्यर्थ । एतदुक्त भवति । अकारणत्वेन योऽवतिष्ठते स दोष स एव कारणत्वेनावतिष्ठते चेन्न दोषो भवति तथा चाविद्याध्यासस्तु चैतन्याद्वितीयावभासं प्रत्यकारणत्वाद्दोष न द्वैतावभास प्रति तत्र कारणत्वात्तयथा काचादिरकारणत्वाच्चक्षुरादिदोषोपि सन् तथाविधपापादृष्टमनुमापयन् तत्र कारणत्वान्न दोषस्तद्वदिति। साक्षात्कार इति । अपरोक्षानुभव इत्यर्थः । यौक्तिकमिति । युक्तिजन्यमित्यर्थ । अनुमानादिजन्यमिति यावत् । आत्मेति । आत्मा ह्यनात्मभिन्न इति परोक्षाज्ञानमित्यर्थ । बाधितेति । अपरोक्षज्ञानेन बाधितः आभासीकृत अध्यास बाधिताध्यास तस्यानुवृत्त्येत्यर्थ । अपरोक्षज्ञानवतां व्यवहारकारणीभूताध्यासस्य बाधितत्व कुत्र प्रतिपाद्यत इति जिज्ञासायामाह समन्वय इति । द्वितीयवर्णक इति शेष. । तथा चावरणे निवृत्तेपि पीत शङ्ख इति वत् वासनात्मकविक्षेपशक्त्यशानुवृत्तेर्जीवन्मुक्तानां वसिष्ठादीनां व्यवहारोप्यध्यासजन्य एव परन्तु तदीयाध्यासस्य बाधितत्वान्न तत्कारणव्यवहारस्य बन्धहेतुत्वमिति भाव. । परोक्षेति । परोक्षज्ञानस्याहमित्यपरोक्षाध्यासानिवर्तकत्वाद्व्यवहारवतां तेषामध्यासाभावो वक्तुं न शक्यत इति भावः । पश्वादिभिश्चाविशेषादिति वाक्यस्यान्वयपूर्वकमर्थ परिष्करोति विवेकिनामपीति । परोक्षज्ञानिनामपरोक्षज्ञानिनां चेत्यर्थ । अध्यासवत्त्वेनेति । बाधितत्वाबाधितत्वविशेषेऽप्यध्यासवत्त्वेन तुल्यत्वादि-

णपूर्णपाणिमुपलभ्य तं प्रत्यभिमुखीभवन्ति, एवं पुरुषा अपि व्युत्पन्नचित्ताः क्रूरदृष्टीनाक्रोशतः खड्गोद्यतकरान्बलवत उपलभ्य ततो निवर्तन्ते, तद्विपरीतान्प्रति प्रवर्तन्ते, अतः समानः पश्वादिभिः पुरुषाणां प्रमाणप्रमेयव्यवहारः । पश्वादीनां च प्रसिद्धोऽविवेकपुरःसरः प्रत्यक्षादिव्यवहारः । तत्सामान्यदर्शनाद्व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारस्त-

---

## रत्नप्रभा

वहारोऽध्यासकार्य इति युक्तमित्यर्थः । **अत्रायं प्रयोगः**—विवेकिनो ऽध्यासवन्तः, व्यवहारवत्त्वात् पश्वादिवदिति । तत्र संग्रहवाक्यं व्याकुर्वन् दृष्टान्ते हेतुं स्फुटयति—**यथा हीति** । विज्ञानस्यानुकूलत्वं प्रतिकूलत्वं चेष्टानिष्टसाधनगोचरत्वम्, तदेवोदाहरति—**यथेति** । अयं दण्डो मदनिष्टसाधनं दण्डत्वाद् अनुभूतदण्डवद्, इदं तृणमिष्टसाधनम् अनुभूतजातीयत्वाद् अनुभूततृणवद् इत्यनुमाय व्यवहरन्तीत्यर्थः । अधुना हेतोः पक्षधर्मतामाह—**एवमिति** । व्युत्पन्नचित्ता अपीत्यन्वयः । विवेकिनोऽपीत्यर्थः । फलितमाह—**अत इति** । अनुभवबलादित्यर्थः । **समान इति** । अध्यासकार्यत्वेन तुल्य इत्यर्थः । **नन्वस्माकं** प्रवृत्तिरध्यासादिति न पश्वादयो ब्रुवन्ति, **नापि** परेषामेतत् प्रत्यक्षम्, अतः साध्यविकलो दृष्टान्त इति, नेत्याह—**पश्वादीनां चेति** । तेषामात्मानात्मनोर्ज्ञानमात्रमस्ति, न विवेकः, उपदेशाभावात्, अतः सामग्रीसत्त्वादध्यासस्तेषां प्रसिद्ध इत्यर्थः । निगमयति—**तत्सा-**

## पूर्णानन्दीया

त्यर्थ । **उक्तमिति** । 'उच्यते देहेन्द्रियादिष्वि'त्यादिभाष्यव्याख्यानावसरे उक्तमित्यर्थः । **अनुभूततृणेति** । अनुभूततृणनिष्ठतृणत्ववत्त्वादित्यर्थः । **विवेकिनोपीति** । अयं पुरुषो मदनिष्टसाधनं बलवत्त्वे सति क्रूरदृष्टिमत्त्वात्तस्मिन्सत्याक्रोशवत्त्वाद्वा तस्मिन्सति खड्गोद्यतकरत्वाद्वा अनुभूतपुरुषवदित्यनुमाय विवेकिनोपि निवर्तन्ते । एवं क्रूरदृष्ट्यादिराहित्यविशिष्टसद्गुणत्वादिहेतुना चेष्टसाधनत्वमनुमाय तद्विपरीतान् प्रति प्रवर्तन्त इति भावः । **एतत्प्रत्यक्षमिति** । अध्यासवत्त्वमेतच्छब्दार्थः, पश्वादिनिष्ठाध्यासः परप्रत्यक्षविषयो न भवतीति भावः । साध्यविकलः साध्यरहित इत्यर्थः । **तेषामात्मेति** । अहमिति सामान्यात्मकं ज्ञानमस्तीदं चेतनमिदमचेतनमिदं मदीयमित्यादिज्ञानं चास्ति पश्वादीनामिति भावः । मात्रपदव्यावर्त्यमाह **न विवेक इति** । शास्त्राचार्योपदेशाभावादहं देहेन्द्रियादिविलक्षण इति विवेकरूपवैलक्षण्यज्ञानं तु नास्तीति भावः । ननु शङ्कायाः कः परिहार इत्यत आह **अत इति** । पूर्वोक्तदोषसंप्रयोगसंस्कारस्वरूपसामग्रीरूपलिङ्गात् पश्वादीनामध्यासोऽस्तीत्यनुमीयत इति न साध्यवैकल्यमिति भावः । **निगमयतीति** । पश्वादिभिश्चाविशेषादिति सङ्ग्रहवाक्ये तात्पर्येणोक्तं विवेकिनां व्यवहारस्याध्यासकार्यत्वमु-

त्कालः समान इति निश्चीयते । शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वात्मनः परलोकसम्बन्धमधिक्रियते तथापि न वेदान्तवेद्य-

रत्नप्रभा

मान्येति । तैः पश्वादिभिः सामान्यं व्यवहारवत्त्वं तस्य दर्शनाद्विवेकिनामप्ययं व्यवहारः समान इति निश्चीयत इति **सम्बन्धः** । **समानत्वं**—व्यवहारस्याध्यासकार्यत्वेनेत्युक्तं पुरस्तात् । तत्रोक्तान्वयव्यतिरेकौ स्मारयति—**तत्काल इति** । तस्याध्यासस्य कालो यस्य सः **तत्कालः** । **यदा** अध्यासः **तदा** व्यवहारः, तदभावे सुषुप्तौ तदभाव इत्युक्तान्वयादिमानिति यावत् । अतो व्यवहारलिंगाद्विवेकिनामपि देहादिष्वहंममाभिमानोऽस्तीत्यनवद्यम् । **ननु** लौकिकव्यवहारस्याऽऽध्यासिकत्वेऽपि ज्योतिष्टोमादिव्यवहारस्य नाध्यासजन्यत्वं, तस्य देहातिरिक्तात्मज्ञानपूर्वकत्वादित्याशङ्क्य हेतुमङ्गीकरोति—**शास्त्रीये त्विति** । तर्हि कथं वैदिककर्मणोऽध्यासजन्यत्व-

पूर्णानन्दीया

पसंहरतीत्यर्थः । **तैरिति**—सहार्थे तृतीया । व्यवहारवत्त्व व्यवहारवत्त्वसमानधर्म इत्यर्थ । तस्य व्यवहारवत्त्वस्येत्यर्थः । दर्शनात् प्रत्यक्षप्रमाणसिद्धत्वादित्यर्थ. । **विवेकिनामिति** । परोक्षज्ञानिनामपरोक्षज्ञानिनां चेत्यर्थ. । यादृशः पश्वादीनां व्यवहारः प्रत्यक्षप्रमाणेन दृश्यते विवेकिनामपि तादृशो व्यवहार· प्रत्यक्षेण दृश्यते तथा च पश्वादिभिस्सह व्यवहारवत्त्वरूपसमानधर्मवत्त्वेन तत्तुल्यानां विवेकिना पुसां व्यवहारोप्यध्यासकार्यत्वरूपसमानधर्मेण पश्वादिव्यवहारतुल्य इति निश्चीयत इति समुदायग्रन्थार्थः । अत्रायं प्रयोग· विवेकिनां व्यवहारः तदीयाध्यासकार्यः तदध्यासान्वयव्यतिरेकानुसारित्वात्पश्वादिव्यवहारवदिति। **उक्तं पुरस्तादिति**।'अत. समानः पश्वादिभि पुरुषाणामि'त्यादिभाष्यव्याख्यानावसरे पूर्वमुक्तमित्यर्थ.। **तत्रेति**। उक्तसाम्य इत्यर्थ.। **उक्तेति**। 'उच्यते देहेन्द्रियादिष्वि'त्यादिभाष्यव्याख्यानावसर इति शेष. । परमप्रकृतमनुमानेनोक्तमध्यासवत्त्वमुपसहरति **अत इति**। तथा च कृत्स्नलौकिकव्यवहारस्याध्यासकार्यत्वं साधितमिति स्थितम्। **तस्य देहेति**। कर्मकर्तु· देहातिरिक्तात्मज्ञानाभावे कर्मणि प्रवृत्तिरेव न स्यादतः फलभोक्ता देहातिरिक्तात्मास्तीति ज्ञानं कर्महेतुरिति शङ्कितुरभिप्राय ।

भाष्ये **यद्यपि बुद्धिपूर्वकारीति**।बुद्धिपूर्वकारी आत्मनः परलोकस्य सम्बन्धमविदित्वा नाधिक्रियत इत्यन्वय. । अपेतब्रह्मक्षत्रादिभेदं प्रपञ्चशून्यमेकरसमित्यर्थ । **प्राक् च तथात्मभूतविज्ञानादिति** । तत्त्वमसीति वाक्यार्थज्ञानात्प्रागित्यर्थ । **प्रवर्तमानमिति** । अविद्याकृतमहमुल्लेखमान्तरं संसारमाश्रित्य प्रवर्तमानमित्यर्थ. । **अतस्मिंस्तद्बुद्धिरिति** । अतस्मिन् अयुष्मदर्थे अनिदंचिति तद्बुद्धि· युष्मदर्थावभास इत्यर्थ· ।

व्याख्याने वैदिककर्मण· देहोहमित्यध्यासजन्यत्वाभावेऽपि क्षुत्पिपासादिग्रस्तो जातिविशेषवानहं संसारीत्यध्यासजन्यत्वमस्तीति सिद्धान्तयितु पूर्वोक्तं हेतुं विकल्प्य खण्ड-

मशनायाद्यतीतमपेतब्रह्मक्षत्रादिभेदमसंसार्यात्मतत्त्वमधिकारेऽपेक्ष्यते, अनुपयोगादधिकारविरोधाच्च । प्राक्च तथाभूतात्मविज्ञानात्प्रवर्तमानं शास्त्रमविद्यावद्विषयत्वं नातिवर्तते । तथाहि—'ब्राह्मणो यजेत' इत्यादीनि शास्त्राण्यात्मनि वर्णाश्रमवयोवस्थादिविशेषाध्यासमाश्रित्य प्रवर्तन्ते । अ-

## रत्नप्रभा

सिद्धिरित्याशङ्क्य किं तत्र देहान्यात्मधीमात्रमपेक्षितमुत आत्मतत्त्वज्ञानम् ? आद्ये तस्याध्यासाबाधकत्वात् तत्सिद्धिरित्याह—**तथापीति** । **न द्वितीय** इत्याह—**न वेदान्त** इति । क्षुत्पिपासादिग्रस्तो जातिविशेषवानहं संसारीति ज्ञानं कर्मण्यपेक्षितं न तद्विपरीतात्मतत्त्वज्ञानम्, अनुपयोगात् प्रवृत्तिबाधाच्चेत्यर्थः । शास्त्रीयकर्मणोऽप्यध्यासजन्यत्वं निगमयति—**प्राक्च तथेति** । अध्यासे आगमं प्रमाणयति—**तथा हीति** । **यथा** प्रत्यक्षानुमानार्थापत्तयोऽध्यासे प्रमाणं **तथा**ऽऽगमोपीत्यर्थः । "ब्राह्मणो यजेत" "न ह वै स्नात्वा भिक्षेत" "अष्टवर्षं ब्राह्मणमुपनयीत" "कृष्णकेशोऽग्नीनादधीत" इत्यागमो ब्राह्मणादिपदैरधिकारिणं वर्णाद्यभिमानिनमनुवदन् अध्यासं गमयतीति भावः । एवमध्यासे प्रमाणसिद्धेऽपि कस्य कुत्राध्यास इति जिज्ञासायां तमु-

## पूर्णानन्दीया

यति **किं तत्रेत्यादिना** । तत्र वैदिककर्मणीत्यर्थ । **अध्यासाबाधकत्वादिति** । क्षुत्पिपासादिग्रस्त इत्याद्यध्यासाबाधकत्वादित्यर्थः । तथापीत्यक्षरत्रयेणैव प्रथमपक्षोक्तपरिहारो ज्ञाप्यत इति भाष्यभावं स्फुटीकर्तु द्वितीयपक्षनिरासपरत्वेनोत्तरभाष्यमवतारयति **न द्वितीय इति** । वर्णाश्रमवयोवस्थाध्यासानां चतुर्णां क्रमेणोदाहरण प्रतिपादयति **ब्राह्मणो यजतेति** । यद्यपि 'अष्टवर्षं ब्राह्मणमुपनयीते'त्यनेन वयोध्यासो वर्णाध्यासश्च प्रतिपाद्यते तथापि ब्राह्मणो यजेतेति वर्णाध्यासस्य पृथगुदाहरणं स्पष्टार्थम् । **अध्यासमिति** । चेतनाचेतनयोरैक्यावभासरूपमध्यासमित्यर्थ । एवमध्यासे प्रमाणसिद्धेऽपि लक्षण स्मारयत्यनुवदतीति योजना ।

ननु पुन. किमर्थमुक्तलक्षणानुवाद इत्यत आह **कस्येति** । **जिज्ञासायामिति** । विशेषजिज्ञासायामित्यर्थ. । **तमुदाहर्तुमिति** । अध्यासस्वरूपमुदाहृत्य विवेकतो दर्शयितुमित्यर्थं ।'स्मृतिरूप परत्रे'त्यादिना 'अन्यस्यान्यधर्मावभासता न व्यभिचरती'त्यन्तेन भाष्येणाधिष्ठानारोप्यविवादेपि परत्र परस्यावभासरूपाध्यासलक्षणं सर्वसंमतमिति परिष्कृतम्, तेन लक्षणेन लक्षितस्याध्यासस्य कुत्र कस्याध्यास इति विशेषोदाहरणजिज्ञासायामस्मदर्थे आत्मनि युष्मदर्थस्यानात्मन. तद्विपर्ययेण चाध्यास इति विविच्य दर्शनाय परत्र परावभासलक्षणमनुवदतीति भावः।'युष्मदस्मदित्यादिलोकव्यवहार'इत्यन्तभाष्येणाक्षेपसमाधानाभ्यामात्मानात्मनोरध्यासस्य विवेकतः प्रदर्शनमप्युक्तमेवात. पुनरुक्तमिति यदि प्रतीयेत

ध्यासो नाम अतस्मिंस्तद्बुद्धिरित्यवोचाम । तद्यथा पुत्रभार्यादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलो वेति बाह्यधर्मानात्मन्यध्यस्यति, तथा देहधर्मान्–स्थूलोऽहं, कृशोऽहं, गौरोऽहं, तिष्ठामि, गच्छामि, लङ्घयामि चेति । तथेन्द्रियधर्मान्–मूकः, काणः, क्लीवः, बधिरः, अन्धोऽहमिति । तथाऽन्तःकरणधर्मान्कामसङ्कल्पविचिकित्साध्यवसायादीन् । एवमहंप्र-

~~~

**रत्नप्रभा**

दाहर्तुं लक्षणं स्मारयति--**अध्यासो नामेति** । उदाहरति—**तद्यथेति** । तल्लक्षणं **यथा** स्पष्टं भवति तथोदाह्रियत इत्यर्थः । स्वदेहाद्भेदेन प्रत्यक्षाः पुत्रादयो बाह्याः, तद्धर्मान् साकल्यादीन् देहविशिष्टात्मन्यध्यस्यति, तद्धर्मज्ञानात् स्वस्मिंस्तत्तुल्यधर्मानध्यस्यतीत्यर्थः । भेदापरोक्षज्ञाने तद्धर्माध्यासायोगाद् अन्यथाख्यात्यनङ्गीकाराच्चेनि द्रष्टव्यम् । देहेन्द्रियधर्मान् मनोविशिष्टात्मन्यध्यस्यतीत्याह—**तथेति** । कृशत्वादिधर्मवतो देहादेरात्मनि तादात्म्येन कल्पितत्वात्तद्धर्माः साक्षादात्मन्यध्यस्ता इति मन्तव्यम् । अज्ञाते प्रत्यग्रूपे साक्षिणि मनोधर्माध्यासमाह-**तथाऽन्तःकरणेति** । धर्माध्यासमुक्त्वा तद्वदेव धर्म्यध्यासमाह--**एवमिति** । अन्तःकरणं साक्षिण्यभेदेनाध्यस्य तद्धर्मान् कामादीन् अध्यस्यतीति मन्तव्यम् । **स्वप्रचारा** मनोवृत्तयः । प्रातिलोम्येनासज्जडदुःखात्मकाहङ्कारादिविलक्षणतया सच्चित्सुखात्मकत्वेनाञ्चति प्रकाशत इति

**पूर्णानन्दीया**

तदा विस्तरेणात्र प्रतिपाद्याध्यास एव सिद्धवत्कृत्वा तत्र सग्रहेण विषयादिसिध्यर्थमनूद्यत इति यदुक्त तन्न विस्मर्तव्यम् । प्रतीकमादाय तच्छब्दस्यार्थमाह–**तल्लक्षणमिति** । ‘तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्ये’त्यादिभाष्येण प्रत्यक्षत्वेन दर्शिताध्यासस्वरूपमित्यर्थः । **यथा स्पष्टं भवतीति** । देहेन्द्रियमनोभेदेन भिन्नानामनात्मनां तद्धर्माणां चात्मतद्धर्माणां चाध्यासस्य विभज्य दर्शनेन यथानुभवानुरूढ भवतीत्यर्थः । **साकल्यादीनिति** । साकल्य नाम पूजादिसकलधर्मविशिष्टत्वम्, वैकल्य तु तद्राहित्य भाष्यस्थादिशब्दार्थः । देहविशिष्टत्व देहतादात्म्यापन्नत्वम् ।

ननु तद्धर्माणामेवाध्यासोऽस्तु किं तत्तुल्यधर्माणामध्यास इत्यत आह **भेदेति** । पुत्रो मद्भिन्न इति भेदापरोक्षज्ञान इत्यर्थः । तत्रैव हेत्वन्तरमाह **अन्यथेति** । भाष्येणाप्रतिपादित धर्मिणोर्देहेन्द्रिययोरध्यासं ज्ञापयन् तद्धर्माध्यासस्य वैलक्षण्यमाह **कृशत्वेति** । **अज्ञात इति** । अहमज्ञ इत्यज्ञानविषयत्वमज्ञातत्वम् । प्रत्ययाः कामाद्याः वृत्तयः अस्येति प्रत्ययी तथा चाह चासौ प्रत्ययी चाहंप्रत्ययी स चाहङ्कारग्रन्थिरित्यभिप्रेत्याहंप्रत्ययिनमिति भाष्यार्थमाह - **अन्तःकरणमिति** । प्रतीत्युपसर्गार्थकथनपूर्वकमञ्चतीत्यस्यार्थमाह–**प्रातिलोम्येनेति** । आत्मनः स्वरूपेणाध्यासायोगात्संसृष्टत्वेनेत्युक्तम् । संसृष्टत्व नाम तादा-
~~~

त्ययिनमशेषस्वप्रचारसाक्षिणि प्रत्यगात्मन्यध्यस्य तं च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेणान्तःकरणादिष्वध्यस्यति । एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृत्वप्रवर्तकः सर्वलोकप्रत्यक्षः ।

## रत्नप्रभा

**प्रत्यक्** । एवमात्मतद्धर्माध्यासमुदाहृत्यानात्मन्यात्मनोऽपि संसृष्टत्वेनाध्यासमाह—**तं चेति** । अहमित्यध्यासे चिदात्मनो भानं वाच्यम्, अन्यथा जगदान्ध्यापत्तेः । **न चानध्यस्तस्याध्यासे भानमस्ति** । तस्माद्रजतादाविदम इवात्मनः संसर्गाध्यास एष्टव्यः । **तद्विपर्ययेणेति** । तस्याध्यस्तस्य जडस्य विपर्ययोऽधिष्ठानत्वं, चैतन्यं च तदात्मना स्थितमिति यावत् । तत्राज्ञाने केवलात्मनः संसर्गः, मनस्यज्ञानोपहितस्य देहादौ मन उपहितस्येति विशेषः । **एवमात्मनि** बुद्ध्याद्यध्यासात् कर्तृत्वादिलाभः । बुद्ध्यादौ चात्माध्यासाच्चैतन्यलाभ इति भावः । वर्णिताध्यासमुपसंहरति—**एवमयमिति** । अनाद्यविद्यात्मकतया कार्याध्यासस्यानादित्वम् । अध्यासात् संस्कारस्ततोऽध्यास इति प्रवाहतो नैसर्गिकत्वम् । एवमुपादानं निमित्तं चोक्तं भवति । ज्ञानं विना ध्वंसाभावादानन्त्यम् । तदुक्तं भगवद्गीतासु—"न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा" [१५।३] इति । हेतुमुक्त्वा स्वरूपमाह—**मिथ्येति** । मिथ्या माया तया प्रतीयते इति प्रत्ययः कार्यप्रपञ्चः तत्प्रती-

## पूर्णानन्दीया

त्यरूपसम्बन्धविशिष्टत्व तथा चात्मसम्बन्धस्याध्यासमाहेत्यर्थ ।

ननु 'त च प्रत्यगात्म नमि'ति भाष्येणात्मनोऽन्त करणादिषु अध्यासो दर्शितस्तत्कथमितरेतराध्यासे द्वयोरध्यस्यमानत्वेन मिथ्यात्वापातात् किंचिद्वयोराधिष्ठानत्वद्वयोर्विशेषावभासो न स्यादित्यशंक्याह **अहमित्यध्यास इति** । आन्ध्यपद व्यवहाराविषयपरम् । **नचेति** । अध्यासविषयत्वेनाधिष्ठाने स्थितिरहितस्य नाध्यासे भान तदङ्गीकारे अन्यथाख्यातिप्रसङ्ग स्यादिति भावः । रजतादाविदपदार्थस्य तादात्म्यरूपससर्गाध्यासो यथा तद्वदनात्मन्यात्मन. तादात्म्यरूपसंसर्गाध्यासोऽङ्गीकरणीय इति विभावनीयम् । जडस्येति निरूपितत्वं षष्ठ्यर्थ, जडनिरूपितमात्मानिष्ठाधिष्ठानत्व चेतनत्वं च विपर्ययशब्दार्थ । विपर्ययोधिष्ठान चैतन्य चेति पाठान्तरम् । चैतन्य जडविरुद्धस्वरूपमित्यर्थ । इत्थ भावे तृतीयेत्यभिप्रेत्य शेषपूर्त्या वाक्य योजयति **तदात्मनेति** । कि केवलस्यैवात्मन सर्वत्र ससर्गाध्यास इत्याशकाया विशेषमाह—**तत्राज्ञान इति** । ससर्ग एष्टव्य इति पूर्वेणान्वय । अनादिर्वृत्त्यविषयस्तादात्म्यरूपाध्यासिकसम्बन्ध केवलात्मन ससर्ग इत्यर्थः । अज्ञानोपहितस्याज्ञानोपाधिकस्येत्यर्थ । वृत्तिविषयः सादिराध्यासिकतादात्म्यसम्बन्धः अज्ञानोपहितस्यात्मन. संसर्ग इत्यर्थ. । देहादौ मनउपाधिकस्यात्मन सादिर्वृत्तिविषयः तादात्म्यरूपससर्ग एष्टव्य इत्यर्थ । भाष्याप्रतिपाद्यमात्मधर्माध्यासं स्फोरयन् फलितमाह

अस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते । यथाचायमर्थः सर्वेषां वेदान्तानां तथा वयमस्यां शारीरकमीमांसाया प्रदर्शयिष्यामः ।

## रत्नप्रभा

तिश्चेत्येवं स्वरूप इत्यर्थः । तस्य कार्यमाह–**कर्त्तृत्वेति** । प्रमाणं निगमयति–**सर्वेति** । साक्षिप्रत्यक्षमेवाध्यासधर्मिग्राहकं मानम्, अनुमानादिकं तु सम्भावनार्थमित्यभिप्रेत्य प्रत्यक्षोपसंहारः कृतः । एवमध्यासं वर्णयित्वा तत्साध्ये विषयप्रयोजने दर्शयति–**अस्येति** । कर्त्तृत्वाद्यनर्थहेतोरध्यासस्य समूलस्याऽऽत्यन्तिकनाशो मोक्षः स केनेत्यत आह–**आत्मेति** । ब्रह्मात्मैक्यसाक्षात्कारस्य प्रतिपत्तिः श्रवणादिभिरप्रतिबन्धेन लाभस्तस्या इत्यर्थः । विद्यायां कारणमाह–**सर्व इति** । आरभ्यन्ते अधीत्य विचार्यन्त इत्यर्थः । विचारितवेदान्तानां ब्रह्मात्मैक्यं विषयो, मोक्षः फलमित्युक्तं भवति । अर्थात्तद्विचारात्मकशास्त्रस्याऽपि ते एव विषयप्रयोजने इति ज्ञेयम् । **ननु** वेदान्तेषु प्राणाद्युपास्तीनां भानादात्मैक्यमेव तेषामर्थ इति कथमित्यत आह–**यथा चेति** । शरीरमेव शरीरकं कुत्सितत्वात्तन्निवासी **शारीरको** जीवस्तस्य ब्रह्मत्वविचारो मीमांसा तस्यामित्यर्थः । उपास्तीनां चित्तैकाग्र्यद्वाराऽऽत्मैक्यज्ञानार्थत्वात्तद्वाक्यानामपि महातात्पर्यमैक्ये इति विवक्ष्यते । एवमध्यासोक्त्या ब्रह्मात्मैक्ये विरोधाभावेन विषयप्रयोजनवत्त्वाच्छास्त्रमारम्भणीयमिति दर्शितम् ।

**इति प्रथमवर्णकम् ।**

---

## पूर्णानन्दीया

**एवमात्मनि वर्णिताध्यास**मित्यादिग्रन्थः स्पष्टार्थः ।**अध्यासधर्मिग्राहकमिति ।** अध्यासस्वरूपग्राहकमित्यर्थः । एव अध्यासं वर्णयित्वेत्यादिग्रन्थः स्पष्टार्थः । कुत्सितं शरीरं शरीरकमिति विग्रहमभिप्रेत्य कन्प्रत्ययस्यार्थमाह **कुत्सितत्वादिति** । शरीरकस्याय शारीरकमिति विग्रहमभिप्रेत्य कन्प्रत्ययस्यार्थमाह **तन्निवासीति** । शरीरान्तर्वर्तिहृदयपुण्डरीकमध्यदहाराकाशस्थितत्वात्तन्निवासीत्यर्थः । **प्रथमवर्णकमिति** । प्रथमसूत्रस्य प्रथमव्याख्यानमित्यर्थः ।

**प्रथमसूत्रस्य प्रथमवर्णकं समाप्तम् ।**

---

अविचार्यं विचार्यं वा ब्रह्माध्यासानिरूपणात् । असन्देहाफलत्वाभ्यां न विचारं तदर्हति ॥१॥
अध्यासोऽहंबुद्धिसिद्धोऽसङ्गं ब्रह्मश्रुतीरितम् । संदेहान्मुक्तिभावाच्च विचार्यं ब्रह्म वेदतः ॥२॥

वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्येदमादिमं सूत्रम्—

## अथातो ब्रह्मजिज्ञासा ॥ १ ॥

### रत्नप्रभा

विचारस्य साक्षाद्विषया वेदान्ताः, तेषां गतार्थत्वागतार्थत्वाभ्यामारम्भसन्देहे कृत्स्नस्य वेदस्य विधिपरत्वाद्विधेश्च "अथातो धर्मजिज्ञासा" [जै० सू० १।१।१] इत्यादिना पूर्वतन्त्रेण विचारितत्वादवगतार्था एव वेदान्ता इत्यव्यवहितविषयाभावान्नारम्भ इति प्राप्ते ब्रूते—वेदान्तेति । वेदान्तविषयकपूजितविचारात्मकशास्त्रस्य व्याख्यातुमिष्टस्य सूत्रसन्दर्भस्येदं प्रथमसूत्रमित्यर्थः । यदि विधिरेव वेदार्थः स्यात्तदा सर्वज्ञो बादरायणो ब्रह्मजिज्ञासां न ब्रूयात्, ब्रह्मणि मानाभावात् । अतो ब्रह्मणो जिज्ञास्यत्वोक्त्या केनापि तन्त्रेणाऽनवगतब्रह्मपरवेदान्तविचार आरम्भणीय इति सूत्रकृद्दर्शयति । तच्च "व्याचिख्यासितस्य" इति पदेन भाष्यकारो बभाषे ।

इति द्वितीयवर्णकम् ।

### पूर्णानन्दीया

विषयसम्भवासम्भवाभ्या अधिकरणमारचयितुं पूर्वोक्तं स्मारयति **विचारस्येति** । **गतार्थत्वेति** । श्रीभगवता जैमिनिना विचारितार्थकत्व गतार्थत्वमित्यर्थ । **विधेश्चेति** । सच्चिदानन्दात्मको जीवस्तत्कृत कर्मेति कर्ममाहात्म्यं किं वक्तव्यम् इति कर्मस्तावकत्वेन सर्वेषां वेदान्तानामर्थवादत्वं जीवस्य तु सच्चिदानन्दात्मकत्वमवास्तव किन्तु स्तोत्रार्थमित्येवं पूर्वतन्त्रविचार एव विचारितत्वादवगतार्था एव वेदान्ता इति भावः । फलितमाह **इत्यव्यवहितेति** । इति पदं हेत्वर्थकम् अव्यवहितस्य पूर्वतन्त्राविचारितत्वेन बुद्धिस्थस्य प्रतिपाद्यस्याभावादित्यर्थ. । पूर्वतन्त्रे विचारितत्वाद्वेदान्ताना केनापि तन्त्रेणाविचारितं सद्बुद्धिविषय किंचित्प्रतिपाद्यं वस्तु नास्तीति भावः । विचारस्य पूजितत्वं सर्वविचारापेक्षयोत्कृष्टत्वम्। शास्त्रमेव विशिनष्टि **सूत्रसंदर्भस्येति**। सूत्रकर्तु श्रीवेदव्यासस्य भ्रान्ति वारयति—**सर्वज्ञ इति** । बादरायणशब्दो व्याख्यात. । यदि विधिरेव वेदार्थ स्यात्तदा विधिविचारेण कृत्स्नवेदविचारो जात एवेति वेदान्तानामर्थवादत्वेन ब्रह्मप्रतिपादकत्वाभावाद्ब्रह्मणि प्रमाणाभावेन प्रथमसूत्रे ब्रह्मजिज्ञास्यत्वोक्तेर्वैयर्थ्यं स्यादिति भाव । अत शब्दार्थ कथयन्फलितमाह **अत इति** । अनवगतम् अविचारितत्वेनाज्ञातं यद्ब्रह्म तदेव परं प्रधानं यस्य वेदान्तस्य स ब्रह्मपर. स चासौ वेदान्तश्च तस्य विचार इति विग्रह. । स्वोक्तेऽर्थे श्रीभाष्यकारसम्मतिमाह **तच्चेति** । आरम्भणीयत्वमित्यर्थ ।

प्रथमसूत्रस्य द्वितीयवर्णकं समाप्तम् ।

तत्राथशब्द आनन्तर्यार्थः परिगृह्यते नाधिकारार्थः, ब्रह्मजिज्ञासाया

## रत्नप्रभा

**एवं** वर्णकद्वयेन वेदान्तविचारस्य कर्तव्यतायां विषयप्रयोजनवत्त्वम् अगतार्थत्वं चेति हेतुद्वयं सूत्रस्यार्थिकार्थं व्याख्यायाक्षरव्याख्यामारभमाणः पुनरप्यधिकारिभावाभावाभ्यां शास्त्रारम्भसन्देहे सति अथशब्दस्यानन्तर्यार्थकत्वोक्त्या अधिकारिणं साधयति--**तत्राथशब्द इति** । सूत्र इत्यर्थः । "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इति अमरकोशेऽव्ययवर्गे अथशब्दस्य बहवोऽर्थाः सन्ति । तत्र "अथ योगानुशासनम्" [ पा यो. सू. १।१ ] इत्यत्र सूत्रे **यथा** अथशब्द आरम्भार्थकः, योगशास्त्रमारभ्यत इति **तद्वदत्र** किं न स्यादित्यत आह--**नाधिकारार्थ इति । अयमाशयः । किं** जिज्ञासापदं ज्ञानेच्छापरम्, **उत** विचारलक्षकम् ? **आद्ये** अथशब्दस्यारम्भार्थत्वेन ब्रह्मज्ञानेच्छाऽऽरभ्यत, इति सूत्रार्थः स्यात्, स चासङ्गतः, तस्या अनारभ्यत्वात् । न हि प्रत्यधिकरणम् इच्छा क्रियते किन्तु तया विचारः । **न द्वितीयः** । कर्तव्यपदाध्याहारं विना विचारलक्षकत्वायोगात् । अव्या-

## पूर्णानन्दीया

॥ श्रीगुरुभ्यो नम ॥

वृत्तानुवादपूर्वकमधिकरणमारचयन् वर्णकान्तरपरत्वेनोत्तरभाष्यमवतारयति **एवमिति** । ननु वर्णकद्वयमसङ्गत तत्प्रतिपाद्यहेतुद्वयस्य सूत्राक्षरानारूढत्वादित्यत आह— **विषयेति । पुनरप्यधिकारीति** । अधिकारिविशेषणसाधनचतुष्टयभावाभावाभ्यामधिकारिभावाभावौ ताभ्यामित्यर्थ । पूर्वोक्तविषयवाक्य एवारम्भसन्देह इत्याधिकरणप्रथमाङ्गं पुनःशब्देन द्योत्यते अपिशब्देन सन्देहस्य तृतीयत्व ज्ञाप्यते । **अधिकारिणमिति** । साधनचतुष्टयसाधनपूर्वकमधिकारिणं साधयतीत्यर्थः । अनुशासनपदस्यार्थकथनद्वारान्वयमभिनयति **योगशास्त्रमिति । नाधिकारार्थ इतीति** । नारम्भार्थ इत्यर्थ. । अनाधिकार्यत्वादिति भाष्यस्यार्थ सङ्गत्या स्फोरयति **तस्या अनारभ्यत्वादिति** । लोके यदारभ्य तत्कृतिसाध्यमिति नियम. यथा घटादि, तथाचानेकजन्मकृतपुण्यपुञ्जपरिपाकसाध्यायाः ज्ञानेच्छायाः कृतिसाध्यत्वरूपव्यापकस्याभावादारभ्यत्वस्याभाव इति भावः । इच्छा ह्यनारभ्या कृतिसाध्यत्वाभाववत्त्वान्नित्यपदार्थवदिति प्रयोग । विपक्षे बाधकमुत्तराधिकरणविरोधरूपमाह **नहीति । कर्तव्येति** । 'श्रोतव्य' इत्यादि श्रुतिसमानार्थत्वाय कर्तव्यपदमध्याहर्तव्यं पश्चादन्वयाद्विचारे लक्षणा स्वीकर्तव्या तथा च कर्तव्यपदेनैवारंभोक्तेरथशब्दवैयर्थ्यमिति भाव ।

ननु अस्तु अथशब्दोक्तारम्भार्थान्वयानुपपत्त्यैव जिज्ञासापदस्य विचारे लक्षणा मास्तु कर्तव्यपदाध्याहार तस्याध्याहारस्य दोषत्वात् समानार्थत्वमथशब्दवोधितारभ्यत इत्यनेन स्यात्, तथाच ब्रह्मविचार आरभ्यत इत्यथशब्द· सार्थक इति चेन्न । आरभ्यत इत्ये·

अनधिकार्यत्वात् । मङ्गलस्य च वाक्यार्थे समन्वयाभावात् । अर्थान्तर-

**रत्नप्रभा**

हृते च तेनैवारम्भोक्तेरथशब्दवैयर्थ्यात् किन्त्वधिकारिसिद्ध्यर्थमानन्तर्यार्थतैव युक्तेति । अधुना सम्भावितमर्थान्तरं दूषयति--**मंगलस्येति** । **वाक्यार्थो** विचारकर्तव्यता । **न हि** तत्र मङ्गलशब्दस्य कर्तृत्वादिनाऽन्वयोऽस्तीत्यर्थः । **ननु** सूत्रकृता शास्त्रादौ मङ्गलं कार्यमिति अथशब्दः प्रयुक्त इति **चेत्** । **सत्यम्** । न तस्यार्थो मङ्गलं

**पूर्णानन्दीया**

तस्य विध्यर्थकत्वाभावेन श्रुतिसूत्रयोरेकार्थकत्वालाभात्सम्बन्धग्रन्थे साधितं समानार्थत्वं न विस्मर्तव्यमिति भाव. । **अधुना सम्भावितमिति** । शास्त्रारम्भे विघ्नोपशान्तये मङ्गलं कर्तव्यमिति मङ्गलार्थकोऽथशब्द स्यादित्येव सम्भावितमर्थान्तरमधुना दूषयतीत्यर्थ । श्रीभाष्यकारेणाथशब्दस्य प्रश्नाद्यर्थकत्वमाशंक्य किमिति न परिह्रीयत इत्याशङ्कां वारयितुं सम्भावितपदम् । **नहि तत्रेति** । आदिशब्देन करणत्वमुच्यते । अधिकारिणा विचारः कर्तव्य इति यथा अधिकारिणः कर्तृत्वेनान्वयः सम्भवति, तथा मङ्गलेन विचारः कर्तव्य इति मङ्गलस्य कर्तृत्वेनान्वयो न सम्भवति प्रमाणाभावादेवं मङ्गलस्य विचारं प्रति कर्तृत्वरूपकारणत्वाभावेन करणत्वेनाप्यन्वयो न सम्भवतीति भाव' । **अथशब्द इति** । मङ्गलार्थक इति शेषः । आदौ मङ्गल कर्तव्यमिति न्यायेन मङ्गलस्याथशब्दार्थत्वेनाऽऽश्यकत्वात्कर्तृत्वादिनान्वयासम्भवेऽपि यथा दधिदूर्वादिदर्शनं मङ्गलं तथा ब्रह्मजिज्ञासापि मङ्गलमिति सामानाधिकरण्येनान्वयः सम्भवतीति शङ्कितुरभिप्राय ।मङ्गलस्याथशब्दार्थत्वमेव नास्तीति परिहरति **सत्यमिति** । आदौ मङ्गलं कार्यमित्यथशब्द' प्रयुक्त इत्यंशेऽङ्गीकारः मङ्गलार्थकोथशब्द इत्यंशे अनङ्गीकारः तमनङ्गीकार व्यनक्ति **न तस्येति** । अथशब्दस्य वाच्यार्थो लक्ष्यार्थो वा मङ्गल न भवति प्रयोजनाभावादित्यर्थ. ।

ननु तर्हि 'मङ्गलानन्तरारम्भे'त्यादिकोशः कथमिति चेन्न। कोशस्य मङ्गलमथशब्दगम्यार्थ इति ज्ञाप्यार्थताप्रतिपादकत्वात्, नहि ज्ञाप्यार्थस्य वाक्यार्थेऽन्वयो दृष्ट. अतिप्रसक्तत्वात्तस्मान्मङ्गलं नाथशब्दवाच्योऽर्थः । अस्तु वा कोशबलाद्वाच्यार्थ' तथाप्यथशब्दस्य तदुच्चारणादिनैव मङ्गलफलत्वसम्भवेन मङ्गलस्य वाच्यार्थत्वेन ग्रहणे प्रयोजनाभावान्न प्रकृते मङ्गलार्थकोऽथशब्दः किन्तु आनन्तर्यार्थक एव, अतएवास्मिन् ग्रन्थे अत्रानन्तर्यमेवेति वाक्येन ग्रन्थकृताप्येषोऽर्थः सूचितः । नचानन्तर्यार्थकत्वेपि प्रयोजनाभाव इति वाच्यम् । अथशब्दस्यानन्तर्योक्तिद्वारा अधिकारिप्रतिपत्त्यर्थत्वात् । किञ्च यथा दधिदूर्वादिदर्शन मङ्गलं तथा ब्रह्मजिज्ञासापि मङ्गलमिति समानाधिकरणान्वय पूर्वपक्षिणा उक्त, स चायुक्त, प्रशंसापरतया अर्थवादत्वप्रसङ्गात्सूत्रस्य स्तुतिहेतुत्वेन न्यायो-

प्रयुक्त एव ह्यथशब्दः श्रुत्या मङ्गलप्रयोजनो भवति । पूर्वप्रकृतापेक्षाया-

---

**रत्नप्रभा**

किन्तु तच्छ्रवणमुच्चारणं च मङ्गलकृत्यं करोति तदर्थस्त्वानन्तर्यमेवेत्याह--**अर्थान्त-रेति** । **अर्थान्तरम्**—आनन्तर्यम् । **श्रुत्या**—श्रवणेन, शङ्खवीणादिनादश्रवणवदो-ङ्काराथशब्दयोः श्रवणं मङ्गलफलकम् ।

ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ॥
कण्ठं भित्वा विनिर्यातौ तस्मान्मांगलिकाविमौ ॥

इति स्मरणादिति भाव । **ननु** प्रपञ्चो मिथ्येति प्रकृते सति, अथैतन्मतं "प्रपञ्चः" सत्य इत्यपूर्वप्रकृतार्थादुत्तरार्थस्यार्थान्तरत्वार्थोऽथशब्दो दृष्टः, तथाऽत्र किं न स्यादि-त्यत आह—**पूर्वेति** । **फलतः** फलस्येत्यर्थः । ब्रह्मजिज्ञासायाः पूर्वमर्थविशेषः प्रकृतो नास्ति, यस्मात्तस्या अर्थान्तरत्वमथशब्देनोच्येत । यतः कुतश्चिदर्थान्तरं सूत्रकृता न वक्तव्यम्, फलाभावात् । **यदि** फलस्य जिज्ञासापदोक्तकर्तव्यविचारस्य हेतुत्वेन यत्पूर्वं प्रकृतं तदपेक्षाऽस्तीत्यपेक्षाबलात् प्रकृतहेतुमाक्षिप्य ततोऽर्थान्तरत्वमुच्येत, **तदा**ऽर्थान्तरत्वमानन्तर्येऽन्तर्भवति हेतुफलभावज्ञानायानन्तर्यस्यावश्यं वाच्यत्वात् । त-

**पूर्णानन्दीया**

पपादकसूत्रत्वाभावप्रसङ्गाच्चेति भावः । **मङ्गलकृत्यमिति** । मङ्गलफलं विघ्ननि-वृत्यादिकमित्यर्थः । **श्रुत्येति**भाष्यपदस्यार्थमाह—**श्रवणेनेति** । श्रवणपदमुपलक्षणम् उच्चारणमपि मङ्गलफलकमित्यर्थ. ।**माङ्गलिकाविति**। मङ्गलफलकावित्यर्थः । अथ मत प्रपञ्चः सत्य इति वाच्यस्यापेक्षितमर्थ पूरयति **प्रपञ्चो मिथ्येति**--मते प्रकृते स-तीति, अन्योर्थ. अर्थान्तरं तस्य भावोऽर्थान्तरता, तथाच मिथ्यात्वरूपात्पूर्वप्रकृतार्था-दुत्तरार्थस्य सत्यत्वरूपस्य याऽर्थान्तरता सैवार्थो यस्याथशब्दस्य स तथेत्यर्थ ।**तथात्र किं न स्यादिति** । धर्मजिज्ञासारूपपूर्वार्थाद्भिन्नार्थस्वरूपा ब्रह्मजिज्ञासेति किं न स्या दित्यर्थः । जिज्ञासाया. पूर्वकाले प्रकृतादर्थविशेषात् किं भिन्नार्थत्वमुच्यते अर्थसामान्या-द्वा हेतुत्वेन पूर्वप्रकृतार्थाद्वा ? नाद्य इत्याह—**ब्रह्मजिज्ञासाया इति** । प्रकृत सङ्गत्या प्राप्त इत्यर्थ. । तस्या. ब्रह्मजिज्ञासाया यस्मादर्थविशेषादर्थान्तरत्वमथशब्देनोच्यते सः प्रकृतोऽर्थविशेषो नास्तीति पूर्वेणान्वयः । द्वितीय दूषयति—**यतः कुतश्चिदिति** । य-स्मात्कस्माच्चिदित्यर्थ. । **फलाभावादिति** । प्रयोजनाभावादित्यर्थ । तृतीयमिष्टापत्त्या परिहरति-**यदि फलस्येति** । **आक्षिप्येति** । अन्यथानुपपत्त्या अध्याहृत्येत्यर्थ । नन्वविशेषादर्थान्तरत्वमेवास्तु किमानन्तर्येणेत्यत आह—**हेतुफलेति** । पूर्वार्थो हेतु रुत्तरार्थ. कार्यमिति ज्ञानायेत्यर्थः । नन्वर्थान्तरेणापि हेतुफलभावज्ञानं स्यादि-त्यत आह **तस्मादिदमर्थान्तरमिति** । आनन्तर्यस्य हेतुत्वज्ञानजनकत्वे अनुभवं

## ❈ रत्नप्रभा ❈

स्मादिदमर्थान्तरमित्युक्ते तस्य हेतुत्वाप्रतीतेः । तस्मादिदमनन्तरमित्युक्ते भवत्येव हेतुत्वप्रतीतिः । **न चाश्वादनन्तरो** गौरित्यत्र हेतुत्वभानापत्तिरिति **वाच्यम्** । तयोर्देशतः कालतो वाऽव्यवधानेनानन्तर्यस्यामुख्यत्वात् । अतः सामग्रीफलयोरेव मुख्यमानन्तर्यम्, अव्यवधानात्। तस्मिन्नुक्ते सत्यर्थान्तरत्वं **न वाच्यम्** । ज्ञातत्वाद्वैफल्याच्चेति भावः । फलस्य विचारस्य पूर्वप्रकृतहेत्वपेक्षाया बलाद्यदर्थान्तरत्वं तस्यानन्तर्याभेदात् न पृथगथशब्दार्थत्वमित्यध्याहृत्य भाष्यं योजनीयम् । **यद्वा**—पूर्वप्रकृतेऽर्थेऽपेक्षा यस्या अर्थान्तरतायास्तस्याः फलं ज्ञानं तद्द्वाराऽऽनन्तर्याव्यतिरेकात्तज्ज्ञाने तस्या ज्ञानतोऽन्त-

## ❈ पूर्णानन्दीया ❈

प्रमाणयति **तस्मादिदमनन्तरमिति** । अर्थान्तरेण यथा हेतुफलभावज्ञानं नोत्पद्यते तथा आनन्तर्येणापि तन्नोत्पद्यत इत्यभिप्रायेणातिप्रसक्तिमाशङ्क्य परिहरति **न चेति** । गौणानन्तर्येण हेतुफलभावज्ञानाभावेपि मुख्यानन्तर्येण तदस्तीति परिहारं विवृणोति **तयोरिति** । अहेतुफलयोर्गवाश्वयोरित्यर्थः । अमुख्यत्वाद्गौणत्वादित्यर्थ । सामग्री कारणसमुदाय इत्यर्थः। यस्मिन्देशे काले वा गो. सत्त्व तस्मिन्नियमेनाश्वस्य सत्त्वं नास्ति अतस्तयोर्व्यवधानं, यस्मिन्देशे काले वा सामग्र्या सत्त्वं तस्मिन्नियमेन कार्योत्पत्तेः सत्त्वं तस्मात्तयोरव्यवधानम् तथा च सामग्रीफलयो· कालिकी दैशिकी च व्याप्तिरनुभवसिद्धेति प्रतिपादितमिति भाव । **तस्मिन्निति** । मुख्यानन्तर्य इत्यर्थ । **ज्ञातत्वादिति** । भेदघटितकार्यकारणभावज्ञानेनार्थान्तरत्वस्य ज्ञातत्वादित्यर्थ । आनन्तर्यज्ञाने सति अर्थान्तरत्वज्ञानं भवतीति भाव । **वैफल्याच्चेति** । हेतुफलभावज्ञानासम्पादकत्वेन व्यर्थत्वाच्चेत्यर्थ । यस्मिन् सत्यग्रिमक्षणे यस्य नियमेन सत्त्वं तयोरेव मुख्यमानन्तर्यं सामग्रीसत्त्वे फलावश्यंभावनियमात्सामग्रीफलयोरेव मुख्यमितरयोस्तु गौणम् तथा च मुख्यानन्तर्याभिधाने अर्थान्तरत्वमभिहितं भवति नार्थान्तरत्वाभिधाने मुख्यानन्तर्यम्, तस्माद्धेतुत्वेन पूर्वप्रकृतसाधनचतुष्टयावद्योतनायानन्तर्यार्थोऽथशब्द इति सुष्ठूक्तम् । अर्थान्तरत्वपदमात्रमध्याहृत्य पूर्वप्रकृतेत्यादि भाष्यार्थं परिष्करोति **फलस्येति** । अध्याहार विनैव भाष्यं योजयति—**यद्वेति** । अर्थान्तरत्वं नामान्यार्थत्वं तच्च कस्मादन्यार्थ स्वाश्रय इति पूर्वप्रकृतमर्थमपेक्षते अतोर्थान्तरत्वं पूर्वप्रकृतापेक्षावदित्येनमर्थ बहुव्रीहिणा स्फुटीकरोति **पूर्वप्रकृत इति** । फलत इति भाष्यस्यार्थमाह—**फलं ज्ञानं तद्द्वारेति** । अनन्तर्याव्यतिरेकादिति भाष्यस्यार्थमाह—**तज्ज्ञान इति** । आनन्तर्यज्ञान इत्यर्थ । तस्यार्थान्तरत्वस्येत्यर्थ । आनन्तर्यज्ञाने सत्यर्थान्तरत्वज्ञान भवति तथा च समानकालीनज्ञानविषयत्वेन तयोरभेदो न स्वरूपत इति भाव । यद्यपि पूर्वोत्तरव्याख्यानयोरानन्तर्यज्ञाने सत्यर्थान्तरत्वज्ञानं भवतीत्ययमर्थ· समानः तथापि यद्वेत्युत्तरव्याख्याने उपपादनभेदोस्ति अध्याहारोपि नास्तीति विज्ञेयम् । उक्त हेत्वानन्तर्यं भाष्या-

श्च फलत आनन्तर्याव्यतिरेकात् । सति चानन्तर्यार्थत्वे यथा धर्मजिज्ञासा पूर्ववृत्तं वेदाध्ययनं नियमेनापेक्षत एवं ब्रह्मजिज्ञासापि यत्पूर्ववृत्तं नियमेनापेक्षते तद्वक्तव्यम् । स्वाध्यायानन्तर्यं तु समानम् । नन्विह कर्माव

## रत्नप्रभा

र्थावाम्नायशब्दार्थतत्यर्थः । नन्वानन्तर्यार्थकत्वेऽप्यानन्तर्यस्यावधिः क इत्याशङ्क्याह—**सति चेति** । यन्नियमेन **पूर्ववृत्तं** पूर्वभावि असाधारणकारणम्, पुष्कलकारणमिति यावत्, **तदेवावधिरिति** वक्तव्यमित्यर्थः । **नन्वस्तु** धर्मविचार इव ब्रह्मविचारेऽपि वेदाध्ययनं पुष्कलकारणमित्यत आह—**स्वाध्यायेति** । **समानम्** ब्रह्मविचारे साधारणकारणम्, न पुष्कलकारणमित्यर्थः । **ननु** संयोगपृथक्त्वन्यायेन "यज्ञेन दानेन" (बृह०।४।४।२२) इत्यादिश्रुत्या—यज्ञादिकर्माणि ज्ञानाय विधीयन्ते—इति सर्वापेक्षाधिकरणे (व्या०सू०३।४।२६) वक्ष्यते । तथा च पूर्वतन्त्रेण तदवबोधः पुष्कलकारणमिति शङ्कते—**नन्विति** । इह ब्रह्मजिज्ञासायाम् । **विशेषोऽ**साधारणकारणम् ।

## पूर्णानन्दीया

रूढत्वेन स्फुटीकर्तुं शङ्कासमाधानाभ्यां भाष्यमवतारयति **नन्वानन्तर्येत्यादिना** । पूर्ववृत्तपदस्यार्थमाह—**पूर्वभावीति** । नियमेन पूर्ववृत्तमिति पदद्वयस्यार्थमाह—**पुष्कलकारणमिति** । यस्मिन् सत्यग्रिमक्षणे ब्रह्मविचाररूपकार्योत्पत्तिस्तदेवासाधारणकारणं पुष्कलकारणमित्युच्यते । **तद्वक्तव्यमिति**—पदद्वयं पदान्तराध्याहारेण योजयति **तदेवेति** ।

आनन्तर्यस्यावधि क इति प्रश्नस्य पुष्कलकारणमवधिरिति प्रत्युत्तरे स्थिते तच्च पुष्कलकारणं किं वेदाध्ययनमाहोस्वित् कर्म तज्ज्ञानं वा तन्न्यायविचारो वेति विकल्प्य दूषयतीत्याशयं स्फुटीकर्तुं भाष्यमवतारयति **नन्वस्त्वत्या**दिना । धर्मविचारं प्रति कारणत्वाद्ब्रह्मविचारे स्वाध्यायशब्दितं वेदाध्ययनं नासाधारणकारणमित्याह—**समानमिति** । ननु साधारणकारणानन्तर्यमेवाथशब्दार्थोऽस्तु किमसाधारणकारणानन्तर्येणेति चेन्न । साधारणकारणानन्तरं नियमेन कार्योत्पत्तेरभावादथशब्दवैयर्थ्यं स्यादिति भाव । संयोगपृथक्त्वन्यायो नाम पृथग्वचनं तदेव प्रतिपादयति **यज्ञेनेति** । ज्योतिष्टोमेनेत्यादि श्रुत्या कर्माणि स्वर्गोद्देशेन विधीयन्ते यज्ञेनेत्यादि वचनान्तरेण ज्ञानाय च विधीयन्ते इति भाव । तं न्यायं श्रीभगवान् जैमिनिराह **एकस्य तूभयत्वे संयोगपृथक्त्वमिति** । एकस्य कर्मण उभयत्वे अनेकफलसम्बन्धे संयोग उभयसम्बन्धबोधकं वाक्यं तस्य पृथक्त्वं भेदः स एव हेतुरिति जैमिनिसूत्रस्यार्थः । तथा च ज्योतिष्टोमादिश्रुत्या ज्योतिष्टोमादिकर्मणा स्वर्गादिफलकत्वं यज्ञेन दानेनेत्यादिपृथक्त्ववचनात् ज्ञानफलकत्वं चास्तीति प्रतिपादकं वचनं संयोगपृथक्त्वन्याय इत्युच्यत इति फलितार्थः । **शंकत इति** । कर्मज्ञानहेतुककर्मानुष्ठानद्वारा ब्रह्मविचारः कर्तव्य इति

बोधानन्तर्यं विशेषः । न । धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्म-जिज्ञासोपपत्तेः । यथाच हृदयाद्यवदानानामानन्तर्यनियमः, क्रमस्य विव-

## रत्नप्रभा

परिहरति—**नेत्यादिना** । **अयमाशयः**—न तावत् पूर्वतन्त्रस्थन्यायसहस्रं ब्रह्म-ज्ञाने तद्विचारे वा पुष्कलकारणम्, तस्य धर्मनिर्णयमात्रहेतुत्वात्, नापि कर्मनि-र्णयः तस्यानुष्ठानहेतुत्वात् । **न** हि धूमाग्न्योरिव धर्मब्रह्मणोर्व्याप्तिरस्ति, यथा धर्मज्ञानाद् ब्रह्मज्ञानं भवेत् । **यद्यपि** शुद्धिविवेकादिद्वारा कर्माणि हेतवः **तथापि** तेषां नाधिकारिविशेषणत्वम्, अज्ञातानां तेषां जन्मान्तरकृतानामपि फलहेतुत्वात् । अधिकारि विशेषणं ज्ञायमानं प्रवृत्तिपुष्कलकारणमानन्तर्यावधित्वेन वक्तव्यम् । अतः कर्माणि तत्त्वबोधस्तन्न्यायविचारो वा नावधिरिति न ब्रह्मजिज्ञासाया कर्मजिज्ञासान-न्तर्यमिति । ननु धर्मब्रह्मजिज्ञासयोः कार्यकारणत्वाभानेऽप्यानन्तर्योक्तिद्वारा क्रमज्ञा-नार्थोऽथशब्दः । "हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः" (तैत्ति० संहि०) इत्य-वदानानां क्रमज्ञानार्थाथशब्दवदित्याशङ्क्याह—**यथा चेति** । अवदानामानन्तर्यनि-

## पूर्णानन्दीया

ज्ञानकर्मसमुच्चयवादी शङ्कत इति भाव । **असाधारणकारणमिति** । पुष्कलकार-णमित्यर्थः । **परिहरतीति** । कर्मावबोधस्य कारणत्वमेव नास्त्यसाधारणत्वं सुतरां दुरा-पास्तमिति मत्वा परिहरतीत्यर्थः ।

ननु ब्रह्मजिज्ञासायाः कर्मावबोधानन्तर्यं स्यादिति पूर्वपक्ष कृत्वा धर्मजिज्ञासानन्तर्यं न सम्भवतीति परिहारः कथमित्याशङ्क्य धर्मजिज्ञासाया इति भाष्यस्य कर्मतज्ज्ञान त न्न्यायविचारश्चार्थ इत्यभिप्रायं स्फोरयन् अधिकं तु न तद्धानिरिति न्यायेन तेषा कर्मा-दीनामानन्तर्यं ब्रह्मविचारस्य न सम्भवतीत्याह **अयमाशय इति** । **न्यायसहस्र-मिति** । न्यायसहस्र विचार इत्यर्थः ।

ननु लिङ्गज्ञानविधया धर्मज्ञानं ब्रह्मज्ञाने हेतुरस्त्वित्यत आह **नहि धूमेति** । **अधिकारिविशेषणं त्विति** । अस्मिन् शास्त्रे को वाऽधिकारीति विचार्य साधनचतु-ष्टयसम्पन्न इति निश्चित्याहमधिकारी साधनचतुष्टयवानिति ज्ञानानन्तर पुरुष प्रवर्तते, तस्माज्ज्ञायमानमेवाधिकारिविशेषणं प्रवृत्तिहेतुर्न स्वरूप सदिति भाव. । उपसंहरति **अत इति** । पुष्कलकारणत्वाभावादित्यर्थ । धर्मजिज्ञासाया. प्रागपीत्यादिभाष्यस्य फलितार्थमाह **इति नेतीति** । इतिशब्दो धर्मजिज्ञासाया अवधित्वाभावादिति हेत्व-र्थकः । यद्यपि न पुष्कलकारणं धर्मजिज्ञासा तथाप्यकारणीभूतैवावधिः सा स्यात् तथा सति नानन्तर्याभिधानमुखेनाधिकारिविशेषणप्रतिपत्त्यर्थोऽथशब्द किन्तु तदभिधानमुखेन क्रमप्रतिपत्त्यर्थ इत्यभिप्रायेण भाष्यमवतारयति **ननु धर्मेति** । ज्ञायमानक्रमार्थो वा क्रमज्ञानार्थो वा अथशब्द इत्यभिप्रेत्य दृष्टान्त प्रतिपादयति **हृदयस्याग्र इति** ।

क्षितत्वान्न तथेह क्रमो विवक्षितः, शेषशेषित्वेऽधिकृताधिकारे वा प्रमाणा-

**रत्नप्रभा**

यमः क्रमो **यथा**ऽथशब्दार्थस्तस्य विवक्षितत्वाद् न तथेह धर्मब्रह्मजिज्ञासयोः क्रमो विवक्षितः। एककर्तृकत्वाभावेन तयोः क्रमानपेक्षणात्। अतो न क्रमार्थोऽथ-शब्द इत्यर्थः। **ननु** तयोरेककर्तृकत्वं कुतो नास्तीत्यत आह—**शेषेति**। येषामेकप्रधानशेषता **यथा** अवदानानां प्रयाजादीनां च, ययोश्च शेषशेषित्वं, **यथा** प्रयाजदर्शयोः, यस्य चाधिकृताधिकारत्वं, **यथा** अपां प्रणयनं दर्शपूर्ण-

**पूर्णानन्दीया**

अवद्यति अवदानं कुर्यादित्यर्थं। प्रथमतः पशुहृदयस्य खण्डनमनन्तरं पशोर्जिह्वा-खण्डनं कुर्यादित्यानन्तर्योक्तिद्वारा क्रमज्ञानार्थाथशब्दवदित्यर्थः। **नियमः क्रम इति**। नियमरूपक्रम इत्यर्थः। तत्र हेतुमाह **तस्येति**। ज्ञायमानस्य क्रमस्येत्यर्थः। दृष्टा-न्तवैपरीत्येन दार्ष्टान्तिके प्रतिपादयति **न तथेति**। क्रमो न विवक्षित इत्यत्र स्वयं हेतु पूरयति **अत इति**। क्रमस्याविवक्षितत्वादित्यर्थः। स्वोक्तहेतौ हेतुप्रतिपादकत्वे नोत्तरभाष्यं योजयति। **ननु तयोरिति**। एककर्तृकत्वमेकपुरुषकर्तृकत्वमित्यर्थः। **आहेति**। यत्रैककर्तृकत्वं तत्र शेषशेषित्वाद्यन्यतममिति व्याप्तिः सिद्धा प्रकृते व्याप-काभावाद्व्याप्याभाव इति परिहर्तुरभिप्रायः।

**भाष्ये—आनन्तर्यनियम इति**। आनन्तर्योक्तिद्वारा नियमरूपक्रम-इत्यर्थः। अथशब्दार्थ इति शेषः। क्रमो विवक्षित इत्यनन्तरं श्रुतो न क्रमार्थोऽथ-शब्द इति शेषः। तथा चावदानानां क्रमस्य विवक्षितत्वात् क्रमो यथाऽथशब्दार्थस्तथा धर्मब्रह्मजिज्ञासयोः क्रमस्याविवक्षितत्वान्न तत्क्रमोथशब्दार्थ इति भावः। **शेषशेषित्व-इति**। एकप्रधानशेषत्वस्येदमुपलक्षणम् धर्मब्रह्मजिज्ञासयोः एकप्रधानशेषत्वे शेषशेषित्वे अधिकृताधिकारे वा प्रमाणाभावादित्यन्वयः। धर्मब्रह्मजिज्ञासयो फलजिज्ञास्यभेदाच्चे-त्यन्वयः।

व्याख्याने **येषामेकप्रधानशेषतेति**। यच्छब्दत्रयस्योत्तरेण तेषामित्यनेनान्वयः। प्रधानत्वं शेषित्वमङ्गित्व चेति पर्यायः, शेषत्वमङ्गत्वमित्यर्थः। अवदानाना समिधो यजती-त्यादिवाक्यविहितप्रयाजादीनां चैकप्रधानाग्निष्टोमीये पशुयागे शेषत्वमित्यर्थः। **अधि-कृताधिकारित्वमिति**। अधिकृतस्य पुरुषस्याधिकारो यस्मिन् गोदोहनादौ सोऽधि-कृताधिकारी तत्त्वमित्यर्थः। अधिकृताधिकारित्वमुपपादयति **यथेति**। चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्येति वाक्यम्। अप इति द्वितीयाबहुवचनम्। चमसेन चमसाख्यदारुपात्रविशेषेण अपः प्रणयेदपां प्रणयनं कुर्यादित्यर्थः। चमसे अप्प्रणयनं कुर्यादिति यावत्। गौः दुह्यते यस्मिन्पात्रे तद्गोदोहनं तेन पशुकामस्यापां प्रणयनं कुर्या-दित्यर्थः। पशुकामश्चेद्यजमानः चमसं विहाय गोदोहने अप्प्रणयनं कुर्यादिति भावः। तथा

✤ रत्नप्रभा ✤

मासाङ्गमाश्रित्य "गोदोहनेन पशुकामस्य" इति विहितस्य गोदोहनस्य । **यथा** वा— "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इति दर्शाद्युत्तरकाले विहितस्य सोमयागस्य दर्शाद्यधिकृताधिकारत्वं, तेषामेककर्तृकत्वं भवति। ततश्चैकप्रयोगवचनगृहीतानां तेषां युगपदनुष्ठानासम्भवात् क्रमाकांक्षायां श्रुत्यादिभिर्हि क्रमो बोध्यते; **नैवं** जिज्ञासयोः शेषशेषित्वश्रुतिलिङ्गादिकं मानमस्ति । **ननु** "ब्रह्मचर्यं समाप्य गृही भवेद् गृहाद्वनी भूत्वा प्रव्रजेद्" (जाबालो०४) इति श्रुत्या,—

अधीत्य विधिवद्वेदान्पुत्रांश्चोत्पाद्य धर्मतः ।
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ॥ १ ॥

इति स्मृतया चाधिकृताधिकारत्वं भातीति । **तन्न** । "ब्रह्मचर्यादेव प्रव्रजेत्" (जाबालो०४)

आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे ॥

इति श्रुतिस्मृतिभ्यां त्वयोदाहृतश्रुतिस्मृत्योरशुद्धचित्तविषयत्वावगमाद् ।

**एतदुक्तं भवति । यदि** जन्मान्तरकृतकर्मभिः शुद्धं चित्तं **तदा** ब्रह्मचर्यादेव

✤ पूर्णानन्दीया ✤

चाप्प्रणयनाश्रितेन गोदोहनेन पशुलक्षणं फल भावयेदिति वाक्यार्थः । इममेवार्थं सङ्ग्रहेणोपपादयति **अपां प्रणयनमिति** । जलपूरणमित्यर्थः । **गोदोहनस्येति** । एतस्य दर्शाद्यधिकृताधिकारित्वमित्युत्तरेणान्वयः । दर्शादौ यः अधिकारी स गोदोहने अधिकारी तस्माद्दर्शाद्यधिकृताधिकारित्व गोदोहनस्येति भावः । अधिकृताधिकारित्व एवोदाहरणान्तरमाह—**यथा वेति** । दर्शपूर्णमासाभ्या दर्शत्रिकपौर्णमासत्रिकाभ्यामित्यर्थः । दर्शाद्युत्तरकालविहितेन सोमयागेनेष्टं भावयेदिति वाक्यार्थः । **एकप्रयोगवचनेति** । प्रयोगोनुष्ठानं तस्य वचन विधि स एक इत्यर्थः । **श्रुत्यादिभिरिति** । श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्याख्यानि क्रमबोधकानि षट् प्रमाणानि तैरित्यर्थः । तथा च हृदयस्याग्रे अवद्यतीत्यत्र अवदान कुर्यादिति पाठक्रमानुसारेणानुष्ठानप्रतिपादकैकविधिपरिगृहीतानामवदानानामग्रपदरूपश्रुत्या पाठक्रमानुसारेण च क्रमो बोध्यते। इष्ट्वा सोमेन यजेतेत्यत्र दर्शसोमयागमुक्त्वा श्रुत्या क्रमो बोध्यते प्रयाजादीना तु पाठक्रमानुसारेण च क्रमो बोध्यते यथायोग्यमेव सर्वत्र क्रम ऊहनीय इति भावः । **श्रुतिलिङ्गादिकमिति** । श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाण्यङ्गत्वबोधकानि षट् प्रमाणानि जन्मादिसूत्रे निरूप्यन्ते । धर्मब्रह्मजिज्ञासयोरधिकृताधिकारित्वे प्रमाणमस्तीति शङ्कते **नन्विति** । **अधिकृताधिकारित्वमिति** । धर्मविचारोत्तरकाले विहितस्य ब्रह्मविचारस्य कर्माधिकृतपुरुषाधिकारवत्त्व भातीत्येककर्तृकत्वलाभात्क्रमार्थोऽथशब्द इति भाव । ननु कथमशुद्धचित्तविषयत्वं शब्दतस्त्वप्रतीयमानत्वादित्यत आह **एतदुक्तं भवतीति** ।

भावात् , धर्मब्रह्मजिज्ञासयोः फलजिज्ञास्यभेदाच्च । अभ्युदयफलं धर्म-

---

॥ रत्नप्रभा ॥

संन्यस्य ब्रह्म जिज्ञासितव्यम् , **यदि** न शुद्धमिति रागेण ज्ञायते **तदा** गृही भवेत् , तत्राप्यशुद्धौ वनी भवेत् , तत्राप्यशुद्धौ तथैव कालमाकलयेत् , वने शुद्धौ प्रव्रजेदिति । तथा च श्रुतिः "यदहरेव विरजेत् तदहरेव प्रव्रजेद्" (जाबालो० ४) इति । तस्माज्ज्ञानयोरधिकृताधिकारत्वे किंचिन्मानमिति भावः । **ननु** मीमांसयोः शेषशेषित्वमधिकृताधिकारत्वं च मास्तु, एकमोक्षफलकत्वेनैककर्तृकत्वं स्यादेव । **वदन्ति हि** "ज्ञानकर्मभ्यां मुक्तिः" इति **समुच्चयवादिनः** । एवमेकवेदार्थजिज्ञास्यैकत्वाच्चैककर्तृकत्वम् । तथा चाग्नेयादिषड्यागानामेकस्वर्गफलकानां द्वादशाध्यायानां चैकधर्मजिज्ञास्यकानां क्रमवत्तयोः क्रमो विवक्षित इति क्रमार्थोऽथशब्द इत्याशङ्क्याह—**फलेति** । फलभेदाज्जिज्ञास्यभेदाच्च न क्रमो विवक्षित इत्यनुषङ्गः । **यथा**—सौर्यार्यम्णप्राजापत्यचरूणां ब्रह्मवर्चसस्वर्गायुःफलभेदात्, **यथा वा**—कामचिकित्सातन्त्रयोर्जिज्ञास्यभेदान्न क्रमापेक्षा, **तद्वन्मीमांसयोर्न** क्रमापेक्षेति भावः । तत्र फलभेदं विवृणोति—**अभ्युदयेति** । विषयाभिमुख्ये-

॥ पूर्णानन्दीया ॥

**रागेण ज्ञायत इति** । रागेण लिङ्गेनानुमीयत इत्यर्थ । तत्राप्य**शुद्धौ वनीभवे**दिति । गृहस्थाश्रमेपि चित्तशुद्ध्यभावे सति वानप्रस्थाश्रमं कुर्यादित्यर्थः । तथैव कालमाकलयेदिति एवकारेण चतुर्थ आश्रमो निषिध्यते मरणपर्यन्त तस्मिन् वानप्रस्थाश्रमे एव स्थातव्यमिति भावः । **तस्मादिति** । त्वयोदाहृतश्रुतिस्मृत्योरशुद्धचित्तविषयत्वादित्यर्थः । **अनयोरिति** । धर्मब्रह्मजिज्ञासयोरित्यर्थ । धर्मब्रह्मजिज्ञासयोरिति भाष्यस्यार्थमाह **मीमांसयोरिति** ।

नन्नु स्वर्गफलकस्य पूर्वतन्त्रस्य कथं मोक्षफलकत्वमित्याशङ्क्याह—**वदन्ति हीति** । **एकवेदार्थेति** । वेदार्थयो धर्मब्रह्मणोर्वेदार्थत्वेनैकीकरणं कृत्वा जिज्ञास्यैकत्व बोद्धव्यम् । एकफलकत्वादेककर्तृत्वमुदाहरति **तथा चाग्नेयादीति** । आग्नेयाग्नीषोमीयोपांशुयाजा पौर्णमासात्रिक आग्नेययाग एक ऐन्द्रोपांशुयागौ द्वौ मिलित्वा दर्शत्रिक तथा च षड्यागा भवन्तीति भावः । एकजिज्ञास्यकत्वादेककर्तृकत्वमुदाहरति **द्वादशाध्यायानामिति** । **क्रमवदिति** । यथा आग्नेयादीनां पाठक्रमानुसारेणानुष्ठानक्रमः यथा च द्वादशाध्यायानां सङ्गत्या प्रथमाध्याये द्वितीयाध्यायाध्ययनक्रमस्तद्वदित्यर्थः । सौर्य चरुं निर्वपेद्ब्रह्मवर्चसकाम, अर्यम्णो चरुं निर्वपेत्स्वर्गकाम, प्राजापत्यं चरुं निर्वपेच्छतकृष्णलमायुष्काम इति श्रुत्यवष्टंभेन फलभेदं क्रमेणोपपादयन् एककर्तृकत्वाभावेन क्रमविवक्षाभाव दृढयति **यथा सौर्येति** । कृष्णलो नाम माषतुल्य सुवर्णखण्ड । **कामचिकित्सेति** । कामशास्त्रे स्त्रीरूपः कामजिज्ञास्यः काम्यत इति कामो विषय इत्यर्थ । चिकित्साशास्त्रे शरीरं जिज्ञास्यमिति फलभेदान्नैकक-

ज्ञानं तच्चानुष्ठानापेक्षम् । निःश्रेयसफल तु ब्रह्मविज्ञानं न चानुष्ठानान्तरापेक्षम् । भव्यश्च धर्मो जिज्ञास्यो न ज्ञानकालेऽस्ति, पुरुषव्यापारतन्त्रत्वात् । इह तु भूतं ब्रह्म जिज्ञास्यं नित्यत्वान्न पुरुषव्यापारतन्त्रम् । चोदनाप्रवृत्तिभेदाच्च । या हि चोदना धर्मस्य लक्षणं सा स्वविषये नियुञ्जानैव पुरुषमवबोधयति । ब्रह्मचोदना तु पुरुषमवबोधयत्येव केवलम्, अ-

## रत्नप्रभा

नोदेतीत्यभ्युदयो विषयाधीनं सुखं स्वर्गादिकं तच्च धर्मज्ञानहेतोर्मीमांसायाः फलमित्यर्थः । न केवलं फलस्य स्वरूपतो भेदः किन्तु हेतुतोऽपीत्याह—**तच्चेति** । ब्रह्मज्ञानहेतोर्मीमांसायाः फलं तु तद्विरुद्धमित्याह—**निःश्रेयसेति** । नित्यं निरपेक्षं श्रेयो निःश्रेयसं मोक्षस्तत् फलमित्यर्थः । ब्रह्मज्ञानं च **स्वोत्पत्तिव्यतिरिक्तमनुष्ठानं** नापेक्षत इत्याह—**न चेति** । स्वरूपतो हेतुतश्च फलभेदान्न समुच्चय इति भावः । जिज्ञास्यभेदं विवृणोति—**भव्यश्चेति** । भवतीति भव्यः साध्य इत्यर्थः । साध्यत्वे हेतुमाह—**नेति** । तर्हि तुच्छत्वं नेत्याह—**पुरुषेति** । **पुरुषव्यापारः** प्रयत्नस्तन्त्रं हेतुर्यस्य तत्त्वादित्यर्थः । कृतिसाध्यत्वात्कृतिजनकज्ञानकाले धर्मस्यासत्त्वं, न तुच्छत्वादित्यर्थः । ब्रह्मणो धर्माद्वैलक्षण्यमाह—**इह त्विति** । उत्तरमीमांसायामित्यर्थः । भूतमसाध्यम् । तत्र हेतुः—**नित्येति** । सदा सत्त्वादित्यर्थः । साध्यासाध्यत्वेन धर्मब्रह्मणोः **स्वरूपभेदमुक्त्वा** हेतुतोऽप्याह—**नेति** । धर्मवत् कृत्यधीनं नेत्यर्थः । मानतोऽपि भेदमाह—**चोदनेति** । अज्ञातज्ञापकं वाक्यमत्र **चोदना** । तस्याः प्रवृत्तिबोधकत्वं तद्वैलक्षण्याच्च जिज्ञास्यभेद इत्यर्थः । संग्रहवाक्यं विवृणोति—**या हीति** । **लक्षणं** प्रमा-

## पूर्णानन्दीया

तृकत्वमतो न क्रमापेक्षेति भाव । **तत्रेति** । फलभेदजिज्ञास्यभेदयोर्मध्य इत्यर्थः । **तद्विरुद्धमिति** । कर्मफलविरुद्धमित्यर्थ । **ब्रह्मज्ञानश्चेति** । यथा शुक्तिज्ञान स्वकार्यभूताया शुक्त्यधिष्ठानचैतन्यविषयकाज्ञाननिवृत्तौ स्वव्यतिरिक्त साधनान्तरं नापेक्षते तथा ब्रह्मज्ञानमपि स्वव्यतिरिक्त साधनान्तर स्वकार्यभूतायां ब्रह्मचैतन्यविषयकाज्ञाननिवृत्तौ नापेक्षत इति भाव. । **न समुच्चय इति** । समुच्चयासम्भवेनैककर्तृत्वं नास्तीति भावः । **कृतिसाध्यत्वादिति** । धर्मस्य कृतिसाध्यत्वात्कृतिजनकधर्मज्ञानकाले धर्मस्यासत्त्वमित्यर्थ ।

नन्वनुष्ठानं विना धर्मोत्पत्त्यभावे धर्मज्ञानं कथमिति चेन्न । अतीतानागतघटविज्ञानवत्तद्धर्मश्रवणेन तज्ज्ञानस्यानुभवसिद्धत्वादिति भाव. । जिज्ञास्यभेदे हेत्वन्तरपरत्वेनोत्तरभाष्यमवतारयति **मानतोपीति** । प्रमेययोर्धर्मब्रह्मणो. प्रमाणभेदादपि भेदमाहेत्यर्थ । अत्र धर्मे ब्रह्मणि च अज्ञातत्वं समानमित्यभिप्रेत्याह **अज्ञातज्ञापकमिति** ।

वबोधस्य चोदनाऽजन्यत्वान्न पुरुषोऽवबोधे नियुज्यते । यथाक्षार्थसंनि-

❧ रत्नप्रभा ❧

णम् । "स्वर्गकामो यजेत" इत्यादिवाक्यं हि स्वविषये धर्मे यागादिकरणस्वर्गादिफल-कभावनारूपे फलहेतुयागादिगोचरनियोगे वा हितसाधने यागादौ वा पुरुषं प्रवर्तयदेवा-वबोधयति । "अयमात्मा ब्रह्म" (बृ०२।५।१९) इत्यादि वाक्यं तु स्वमर्थं केवलमप्र-पञ्चं ब्रह्म बोधयत्येव न प्रवर्तयति, विषयाभावादित्यर्थः ।

नन्ववबोध एव विषयस्तत्राह—**पुरुष इति** । ब्रह्मचोदनया पुरुषोऽवबो-धेन प्रवर्त्यते इत्यत्र हेतुं पूर्ववाक्येनाह—**अवबोधस्येति** । स्वजन्यज्ञाने स्वयं प्रमाणं न प्रवर्तकमित्यत्र दृष्टान्तमाह—**यथेति** । मानादेव बोधस्य जातत्वाज्जाते च विध्ययोगान्न वाक्यार्थज्ञाने पुरुषप्रवृत्तिः । तथा च प्रवर्त-कमानमेयो धर्मः, उदासीनमानमेयं ब्रह्म, इति जिज्ञास्यभेदान्न तन्मीमांसयोः

❧ पूर्णानन्दीया ❧

**बोधकत्वमिति** । चोदनानिष्ठं शाब्दबोधजनकत्वमित्यर्थं । तथा च चोदनाजन्यशाब्द-बोधवैलक्षण्यात् बोधकत्ववैलक्षण्य ततो प्रमाणवैलक्षण्यमिति भावः । **स्वविषय इति**—भाष्यप्रतीकमादाय मतभेदेन विषयभेदमाह **स्वविषये धर्म इति** । स्वशब्देन वाक्यमुच्यते । यागादौ वाक्येन पुरुषः प्रवर्त्यते तस्माद्वाक्यजन्यप्रवृत्ति-विषयत्वमेव वाक्यविषयत्वमित्यर्थः । **पुरुषमिति** । पुरुषं प्रवर्तयदेव पुरुषमवबोधयती-त्यन्वय । बोधयत्येवेत्येवकारव्यावर्त्यमाह **न प्रवर्तयतीति** । पुरुषमित्यनुषङ्ग । ननु ब्रह्मवाक्य कुतः पुरुष न प्रवर्तयतीत्याशङ्क्याह **विषयाभावादिति** । पुरुषप्रवृत्ति विषयाभावादित्यर्थ । यथा धर्मचोदनास्थले पुरुषप्रवृत्तेः साध्ययागादिरूपो विषयो विद्यते तद्वदत्र न कश्चिद्विषयोऽस्ति ब्रह्मणस्तु सिद्धस्य पुरुषप्रवृत्त्यसाध्यत्वेनाविषयत्वादिति भाव । ज्योतिष्टोमवाक्यस्य त्वया कर्म कर्तव्यम् इति कर्मप्रवृत्तिजनकत्वेनैव पुरुष प्रति कर्मबोधकत्वं ब्रह्मवाक्यस्य तु त्वं ब्रह्माभिन्न इति जीवस्य ब्रह्मत्वबोधकत्वमेव, तथाचाख-ण्डार्थब्रह्मविषयकात्प्रवृत्त्यजनकाच्छाब्दबोधात्कर्मविशेष्यकपुरुषकर्तव्यत्वप्रकारकशाब्दबोध स्य प्रवृत्तिजनकस्य विलक्षणत्वेन चोदनारूपप्रमाणे बोधकत्ववैलक्षण्यमस्तीति समुदायार्थः ।

नन्वेतावता प्रवर्तकत्वेनैव बोधकत्वं धर्मवाक्यस्योक्तं तच्च ब्रह्मवाक्यस्याप्यस्त्येव ब्रह्मवाक्येन ज्ञाने पुरुषः प्रवर्त्यत इति प्रसिध्या ज्ञानरूपे विषये पुरुषप्रवर्तकत्वेनैव तस्य ब्रह्मबोधकत्वादिति शङ्कते **नन्विति** । अर्थानुसारात् व्युत्क्रमेण भाष्यमवतारयति **ब्रह्मचोदनयेति** । **स्वजन्यज्ञान इति** । अवबोधस्य ब्रह्मवाक्यजन्यत्वाद्ब्रह्मवाक्यं स्वजन्यज्ञाने स्वयं प्रमाणमेव न प्रवर्तकमित्यत्र दृष्टान्तमाहेत्यर्थः । **मानादेवेति** । आदिशब्देन प्रमेयादिकं ग्राह्यम् । **वाक्यार्थज्ञान इति** । ब्रह्मात्मैक्यज्ञान इत्यर्थ । प्रमाण-प्रमेययोः सत्त्वे ज्ञानं स्वयमेवोत्पद्यते तत्र न प्रवृत्तिर्हेतुरन्यथा दुर्गन्धादिज्ञानं न स्या-

कर्षेणार्थावबोधे तद्वत् । तस्मात्किमपि वक्तव्यं यदनन्तरं ब्रह्मजिज्ञासोपदिश्यत इति । **उच्यते**—नित्यानित्यवस्तुविवेकः, इहामुत्रार्थभोगविरागः, शमदमादिसाधनसम्पत्, मुमुक्षुत्वं च । तेषु हि सत्सु प्रागपि धर्म-

**रत्नप्रभा**

क्रमार्थोऽथशब्द इति भावः । **एवमथशब्दार्थस्यार्थान्तरासम्भवादानन्तर्यवाचित्वे** सति तदवधित्वेन पुष्कलकारणं वक्तव्यमित्याह **तस्मादिति** । **उपदिश्यते** । सूत्रकृतेति शेषः । तत्किमित्यत आह—**उच्यत इति** । विवेकादीनामागमिकत्वेन प्रामाणिकत्वं **पुरस्तादेवोक्तम्** । लौकिकव्यापारान्मनस उपरमः **शमः** । बाह्यकरणानामुपरमो **दमः** । ज्ञानार्थं विहितनित्यादिकर्मसंन्यास **उपरतिः** । शीतोष्णादिद्वन्द्वसहनं **तितिक्षा** । निद्रालस्यप्रमादत्यागेन मनःस्थितिः **समाधानम्** । सर्वत्राऽऽस्तिकता **श्रद्धा** । एतत्षट्कप्राप्तिः **शमदमादिसम्पत्** । अत्र विवेकादीनामुत्तरोत्तरहेतुत्वेनाधिकारिविशेषणत्वं मन्तव्यम् । तेषामन्वयव्यतिरेकाभ्यां ब्रह्मजिज्ञासाहेतुत्वमाह—**तेष्विति** । अथ कथञ्चित् कुतूहलितया ब्रह्म-

**पूर्णानन्दीया**

दिति भाव । प्रवृत्तिजनकत्वाजनकत्ववैलक्षण्याच्छाब्दबोधवैलक्षण्यं वक्तव्यं शाब्दबोधवैलक्षण्याद्बोधकत्ववैलक्षण्येन शब्दप्रमाणवैलक्षण्यस्य सत्त्वात्प्रमेयजिज्ञास्यवैलक्षण्यं च वक्तव्यम्, तस्मात् जिज्ञास्यभेदान्नैककर्तृकत्वं तन्त्रद्वयस्य तत क्रमापेक्षाभावेन क्रमविवक्षाया अभावान्नानन्तर्योक्तिद्वारा क्रमार्थोऽथशब्द इत्येतमर्थं हृदि निधाय सङ्ग्रहेण भाष्यार्थं परिष्करोति **तथा चेति** । उदासीनत्वं प्रवर्तकभिन्नत्वम् । स्वयमवान्तरप्रकृतमुपसंहृत्य परमप्रकृतोपसंहारार्थकभाष्यमवतारयति **एवमिति** । उक्तरीत्येत्यर्थः । तच्छब्दार्थकथनद्वारा उक्तरीतिमेवाह **अथशब्दस्येति** । किमपीत्यंशस्यार्थमाह **पुष्कलकारणमिति** । एव समुच्चयवादिना यदुक्त तत्सर्वं यस्मात् खण्डित तस्मादथशब्दस्यार्थान्तरत्वासम्भवात्सूत्रे यदनन्तर ब्रह्मजिज्ञासा उपदिश्यते तत्पुष्कलकारणमानन्तर्यावधिभूतं वक्तव्यमित्याहेत्यर्थः ।

**भाष्ये-अवबोधस्य चोदनाऽजन्यत्वादिति** । अजन्यत्वादिति च्छेद । **तस्मात्किमपि वक्तव्यमिति** । यदनन्तर ब्रह्मजिज्ञासा उपदिश्यते तत्पुष्कलकारणं वक्तव्यमिति तच्छब्दाध्याहारेण भाष्यं योजनीयम् । **अमुत्रेति** । परलोकेपीत्यर्थः । **ज्ञातुं चेति** । अपरोक्षीकर्तुं चेत्यर्थः । **तस्मादथशब्देनेति** । तस्मादन्वयव्यतिरेकाभ्यां साधनचतुष्टयस्य हेतुत्वादित्यर्थः ।

व्याख्याने—**पुरस्तादेवोक्तमिति** । पूर्वस्मिन्सम्बन्धग्रन्थ एवोपपादितमिति भावः । ननु विवेकादिसत्त्वे विचार तद्द्वारा साक्षात्कारश्चेत्यन्वयसत्त्वेपि विवेकाद्यभावे ब्रह्मविचाराद्यभाव इति न व्यतिरेकः कथंचित्कुतूहलतया बहुश्रुतत्वबुध्या वा दैववशाद्वा

जिज्ञासाया ऊर्ध्वं च शक्यते ब्रह्म जिज्ञासितुं ज्ञातुं च न विपर्यये। तस्मादथशब्देन यथोक्तसाधनसम्पत्त्यानन्तर्यमुपदिश्यते । अतःशब्दो हेत्वर्थः । यस्माद्वेद एवाग्निहोत्रादीनां श्रेयःसाधनानामनित्यफलतां दर्शयति—'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लो

## रत्नप्रभा

विचारे प्रवृत्तस्यापि फलपर्यन्तं तज्ज्ञानानुदयाद्व्यतिरेकसिद्धिः । अथशब्दव्याख्यामुपसंहरति—**तस्मादिति** । **ननूक्तविवेकादिकं** न सम्भवति, "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्" इत्यादिश्रुत्या कर्मफलस्य नित्यत्वेन ततो वैराग्यासिद्धेः । जीवस्य ब्रह्मस्वरूपमोक्षश्चायुक्तः, भेदात् । तस्य लोष्टादिवत् पुरुषार्थत्वायोगाच्च । ततो न मुमुक्षासम्भव इत्याक्षेपपरिहारार्थः—**अतःशब्दः** । तं व्याचष्टे—**अतःशब्द इति** । अथशब्देनानन्तर्यवाचिना तदवधित्वेनार्थाद्विवेकादिचतुष्टयस्य ब्रह्मजिज्ञासाहेतुत्वं **यदुक्तं** तस्यार्थिकहेतुत्वस्याक्षेपनिरासायानुवादकोऽतश्शब्द इत्यर्थः । उक्तं विवृणोति—**यस्मादिति** । **तस्मादिति**-उत्तरेण सबन्धः । "यदल्पं तन्मर्त्यं, यत्कृतकं तदनित्यम्" इति न्यायवती "तद्यथेह" (छा०८।१।६) इत्यादिश्रुतिः कर्मफलाक्षयत्वश्रुतेर्बाधिका ।

## पूर्णानन्दीया

विवेकादिरहितस्य ब्रह्मविचारप्रवृत्तिदर्शनादित्याशङ्क्याह **कथञ्चित्कुतूहलतयेति** । विवेकाद्यभावे फलपर्यन्तज्ञानप्रतिबन्धकसहितविचारसत्त्वेपि तद्रहितविचाराभावो विद्यत इति व्यतिरेकसिद्धिरिति भाव । **सुकृतमिति** । पुण्यकर्मफलमित्यर्थः । प्रलयपर्यन्तमवस्थानाच्चिरकालावस्थायित्वमेव अक्षय्यत्वमिति सिद्धान्त्यभिप्राय. पूर्वपक्ष्यभिप्रायस्तु नित्यत्वमिति भेद· । **भेदादिति** । जीवस्य ब्रह्मण सकाशाद्भेदसत्त्वादित्यर्थः । नाहमीश्वर·इति प्रत्यक्षादिसिद्धभेदेनाभेदस्य बाधितत्वाज्जीवस्य ब्रह्मत्वमयुक्तमिति भाव । **तस्येति** । यथा लोष्ठस्याकिञ्चित्करत्वेन सुखप्राप्तिदु·खनिवृत्त्यन्यतररूपत्वायोगस्तथा -स्वरूपावस्थानरूपमोक्षस्य अकिञ्चित्करत्वेन सुखदु खाभावान्यतररूपपुरुषार्थत्वायोगाच्चे· त्यर्थ. । अनुवादे बीजमाह—**अथशब्देनेति** । अथशब्देन यदुक्तमित्यन्वय । **अर्थादिति** । अन्वयव्यतिरेकबलादार्थिकार्थतयेत्यर्थ· । **आर्थिकहेतुत्वस्येति** । -साधनचतुष्टयनिष्ठस्यार्थसिद्धहेतुत्वस्येत्यर्थ । अनुवादस्य प्रयोजनमाह—**आक्षेपेति** ।

ननु भवत्वत शब्द आक्षेपनिरासायानुवादकस्तथापि कथं निरास इत्याशङ्क्य निरासप्रतिपादकत्वेनोत्तरभाष्यमवतारयति—**उक्तमिति** । विवेकादिकमित्यर्थ । श्रुत्यर्थस्य कर्मफलानित्यत्वस्य दृढीकरणाय व्याप्तिद्वयसहकारित्वं श्रुतेर्दर्शयति **यदल्पमिति** । अल्प मध्यमपरिमाणवदित्यर्थ· । मर्त्य ध्वसप्रतियोगीत्यर्थः। कृतक कार्यमित्यर्थ. । **न्यायवतीति** । स्वोक्तार्थप्रतिपादकव्याप्तिमतीर्थ । 'तद्यथेह कर्मचितो लोकः क्षीयत' इत्यादि श्रुते पापसहकृतत्वात्प्राबल्यमक्षय्यत्वश्रुतेस्तु कर्मफलनित्यत्व-

कः क्षीयते' ( छान्दो० ८।१।६ ) इत्यादिः । तथा ब्रह्मविज्ञानादपि परं पुरुषार्थं दर्शयति—'ब्रह्मविदाप्नोति परम्' इत्यादिः ( तैत्ति० २।१ ) तस्माद्यथोक्तसाधनसंपत्त्यनतरं ब्रह्मजिज्ञासा कर्तव्या । ब्रह्मणो जिज्ञासा

## रत्नप्रभा

तस्माद् "अतोऽन्यदार्तम्" (बृ०३।४।२) इति श्रुत्याऽऽनात्ममात्रस्यानित्यत्वविवेका-द्वैराग्यलाभ इति भावः । मुमुक्षां सम्भावयति—**तथेति** । **यथा** वेदः कर्मफलानित्यत्वं दर्शयति, **तथा** ब्रह्मज्ञानात् प्रशान्तशोकानलमपारं स्वयंज्योतिरानन्दं दर्शयतीत्यर्थः । जीवत्वादेरध्यासोक्त्या ब्रह्मत्वसम्भव उक्त एवेति भावः । एवमथातःशब्दाभ्यां पुष्कल-कारणवतोऽधिकारिणः समर्थनाच्छास्त्रमारब्धव्यमित्याह—**तस्मादिति** । सूत्रवाक्यपू-रणार्थमध्याहृतकर्तव्यपदान्वयार्थं ब्रह्मजिज्ञासापदेन विचारं लक्षयितुं तस्य स्वाभिमतस-मासकथनेनावयवार्थं दर्शयति—**ब्रह्मण इति** । ननु "धर्माय जिज्ञासा" इतिवद् 'ब्रह्मणे जिज्ञासा' इति चतुर्थीसमासः किं न स्यादिति **चेत्** । **उच्यते** । जिज्ञासापदस्य हि मु-ख्यार्थ इच्छा । तस्याः प्रथमं कर्मकारकमपेक्षितम् । पश्चात् फलम् । ततश्चादौ कर्मज्ञा-नार्थं षष्ठीसमासो युक्तः । कर्मण्युक्ते सत्यर्थात् फलमुक्तं भवति । इच्छायाः कर्मण एव फलत्वात् । **यथा**—स्वर्गस्येच्छेत्युक्ते स्वर्गस्य फलत्वं लभ्यते, **तद्वत्** । अत एव धर्मजिज्ञासे-

## पूर्णानन्दीया

बोधकत्वे तदभावाद्दौर्बल्य तस्मात्तद्यथेहेत्यादिश्रुतिरक्षय्यत्वश्रुतेर्बाधिकेति भाव । भाष्यस्थादिशब्दार्थं श्रुत्यन्तरं प्रमाणयति **अतोऽन्यदिति** । ब्रह्मण व्यतिरिक्त सर्व मिथ्याभूतमित्यर्थ. । मोक्षस्य पुरुषार्थत्वं स्फोरयति **यथेति** ।

ननु मोक्षस्य सुखदु खाभावान्यतररूपत्वेप्यपुरुषार्थत्वमेव स्यात् वृत्तिविषयत्वाभावे-नाज्ञातत्वाज्ज्ञातो हि पुरुषार्थ इत्युच्यत इत्याशङ्क्याह—**अपारं स्वयंज्योतिरिति** । वृत्तिविषयत्वाभावेपि ब्रह्मण स्वप्रकशत्वेनानन्दानुभवान्मोक्ष पुरुषार्थ एव स्वप्रकाश-त्वेन तस्य ज्ञातत्वात्तस्मान्मुमुक्षा सम्भवतीति भावः । भेदाद्ब्रह्मत्वं जीवस्यायुक्तमिति यदुक्त तद्दूषयति-**जीवत्वादेरिति** । **उक्त एवेति** । उपोद्घातग्रन्थ इति शेष । नाहमीश्वर इति प्रतीतेरहमंशो विशिष्टविषयकत्वेन तया विशिष्टस्यैव जीवस्य ब्रह्मत्वं निषिध्यते न शोधितस्य जीवस्य तथा च जीवत्वं कल्पितं तस्माद्ब्रह्मत्वमेव वास्तवं त-स्येति भाव । महाप्रकरणोपसंहारार्थकमुत्तरभाष्यमित्यभिप्रेत्य तच्छब्दार्थकथनद्वारा तद्भाष्यमवतारयति **एवमिति** । अथात शब्दाभ्यां साधनचतुष्टयस्य हेतुत्वसमर्थनद्वारा तद्वतोऽधिकारिण समर्थितत्वाच्छास्त्रमारम्भणीयमित्याहेत्यर्थ । **सूत्रवाक्यपूरणार्थ-मिति** । सूत्रवाक्यपूरणार्थं यदध्याहृतं कर्तव्यपदं तस्यान्वयार्थमित्यन्वयः । **कर्मज्ञानार्थ-मिति** । कर्मकारकज्ञानार्थमित्यर्थ । एवमुत्तरत्र विज्ञेयम् । **कर्मण एवेति** । कर्मत्व नाम विषयत्वम्, इच्छाया. विषयस्यैव प्रयोजनत्वादित्यर्थ । यथा स्वर्गस्येच्छेत्युक्ते स्वर्गविष-

ब्रह्मजिज्ञासा । ब्रह्म च वक्ष्यमाणलक्षणं 'जन्माद्यस्य यतः' इति । अत-एव न ब्रह्मशब्दस्य जात्याद्यर्थान्तरमाशङ्कितव्यम् । ब्रह्मण इति कर्मणि-

❧ रत्नप्रभा ❧

त्यत्रापि सा हि तस्य ज्ञातुमिच्छेतीच्छां गृहीत्वा षष्ठीसमासो दर्शितः। विचारलक्षणायां तु विचारस्य क्लेशात्मकतया प्रथमं फलाकांक्षत्वाद् "धर्माय जिज्ञासा" इति चतुर्थीसमास उक्तः। तथा वृत्तिकारैः "ब्रह्मणे जिज्ञासा" इत्युक्तं चेदस्तु ज्ञातत्वेन ब्रह्मणः फलत्वादिति । अधुना ब्रह्मपदार्थमाह-ब्रह्म चेति । ननु "ब्रह्म क्षत्रमिदं ब्रह्म आयाति ब्रह्म स्वयम्भू-र्ब्रह्म प्रजापतिः" इतिश्रुतिषु लोके च ब्राह्मणत्वजातौ जीवे वेदे कमलासने च ब्रह्मशब्दः प्रयुज्यत इत्याशंक्याह-अत एवेति। जगत्कारणत्वलक्षणप्रतिपादकसूत्रासाङ्गत्यप्रसङ्गा-देवेत्यर्थः । वृत्त्यन्तरे शेषे षष्ठीत्युक्तं दूषयति—ब्रह्मण इतीति । सम्बन्धसामान्यं शेषः । जिज्ञासेत्यत्र सन्प्रत्ययवाच्याया इच्छाया ज्ञानं कर्म । तस्य ज्ञानस्य ब्रह्म कर्म। तत्र सकर्मकक्रियायाः कर्मज्ञानं विना ज्ञातुमशक्यत्वादिच्छाया विषयज्ञानजन्यत्वाच्च

❧ पूर्णानन्दीया ❧

यिणी इच्छेति बोधात्स्वर्गस्येच्छाकर्मत्वं तत्फलत्व च सम्भवति, तथा ब्रह्मणो जिज्ञासेत्युक्ते ब्रह्मविषयिणी जिज्ञासेति बोधाद्ब्रह्मणः ज्ञानद्वारेणेच्छाकर्मत्व तत्फलत्वं च सम्भवतीति भावः। **सा हि तस्येति । सा हि तस्य ज्ञातुमिच्छेति शाबरभाष्यवाक्यम् ।** तस्यार्थः । सा धर्मजिज्ञासा । तस्य धर्मस्य ज्ञातुमिच्छेति । इच्छाप्राधान्ये तावदि-च्छायाः कर्मफलयोरैक्यात्कर्मणश्च प्रथमापेक्षितत्वेन प्राधान्यात्कर्मणि षष्ठीसमासः स्याद्विचारप्राधान्ये तु कर्मफलयोर्भेदात्प्रयोजनविवक्षया चतुर्थीसमासः स्यादित्येवं मुख्यार्थेच्छाभिप्रायेण विचारलक्षणाभिप्रायेण च समासद्वयमुपपद्यत इति समुदाय-ग्रन्थार्थः। **अधुनेति ।** ब्रह्मपदस्यार्थनिर्देशावसरे प्राप्ते सूत्रकार एव निर्देक्ष्यतीति ब्रह्मपदार्थमाहेत्यर्थः । ब्रह्मक्षत्रमित्यत्र ब्रह्मशब्देन ब्राह्मणजातिरुच्यते । भाष्यस्थादि-शब्दार्थं दर्शयति **इदं ब्रह्मेति ।** अत्र ब्रह्मशब्देन जीव उच्यते एवं क्रमेण उत्तरत्र योजनीयम् । **जगत्कारणत्वेति ।** जात्यादौ जगत्कारणत्वासम्भवेन पूर्वोत्तरविरोधाद्ब्रह्म-शब्दस्य न जात्याद्यर्थकत्वमिति परिहारार्थः । **वृत्त्यन्तर इति ।** प्राचीनव्याख्यान इत्यर्थः । **सम्बन्धसामान्यमिति।** सम्बन्धत्वविशिष्टः सम्बन्ध इत्यर्थः । सम्बन्धमा-त्रमिति यावत् । जिज्ञास्यापेक्षत्वादित्यादिहेतुभाष्यं विवृणोति **जिज्ञासेत्यत्रेति ।** स-न्वाच्यायाः सन्प्रत्ययस्य वाच्यार्थभूताया इत्यर्थः । **कर्मेति ।** कर्मत्वं विषयत्वम् । **सकर्म-कक्रियाया इति।** सकर्मकेच्छाया इत्यर्थः । **विषयज्ञानेति।** विषयस्य ज्ञानमिति विग्रहः । ब्रह्मजिज्ञासा नाम ब्रह्मविषयकं यज्ज्ञानं तद्विषयकेच्छा तथा च सकर्मकक्रियारूपायाः पर-म्परया ब्रह्मविषयकजिज्ञासायाः प्रथमं जिज्ञास्यब्रह्मरूपकर्मापेक्षत्वात्कर्मणि षष्ठ्येव परि-ग्राह्या न शेषषष्ठीति भावः । प्रथमं ब्रह्मस्वरूपजिज्ञासा किमर्था ब्रह्मप्रमाणजिज्ञासा तल्लक्ष

षष्ठी न शेषे, जिज्ञास्यापेक्षत्वाज्जिज्ञासायाः, जिज्ञास्यान्तरानिर्देशाच्च ।
**ननु** शेषषष्ठीपरिग्रहेऽपि ब्रह्मणो जिज्ञासाकर्मत्वं न विरुध्यते, संबन्धसामान्यस्य विशेषनिष्ठत्वात् । एवमपि प्रत्यक्षं ब्रह्मणः कर्मत्वमुत्सृज्य सा

रत्नप्रभा

प्रथमापेक्षितं कर्मैव षष्ठ्या वाच्यं, न शेष इत्यर्थः । ननु प्रमाणादिकमन्यदेव तत्कर्मास्तु, ब्रह्म तु शेषितया सम्बध्यतां तत्राह—**जिज्ञास्यान्तरेति** । श्रुतं कर्म त्यक्त्वाऽन्यदश्रुतं कल्पयन् "पिण्डमुत्सृज्य करं लेढि" इति न्यायमनुसरतीति भावः । गूढाभिसन्धिः शङ्कते—**नन्विति** । "षष्ठी शेषे" (पा०सू०२।३।५०) इति विधानात्षष्ठ्या सम्बन्धमात्रं प्रतीतमपि विशेषाकांक्षायां सकर्मकक्रियासन्निधानात् कर्मत्वे पर्यवस्यतीत्यर्थः । अभिसन्धिमजानन्निवोत्तरमाह—**एवमपीति** । कर्मलाभेऽपि प्रत्य-

पूर्णानन्दीया

णजिज्ञासा वा स्यात्तथा सति लक्षणप्रमाणादेरेव कर्मत्वं स्याद्ब्रह्मणस्तु सम्बन्धित्वमात्रं तथा च ब्रह्मसम्बन्धिनी प्रमाणादिकर्मिका जिज्ञासेति ब्रह्मांशे शेषषष्ठी साधयितु शङ्कते **ननु प्रमाणादिकमिति** । अन्यदेव ब्रह्मणोन्यदेवेत्यर्थ । तत्कर्मास्तु जिज्ञासाकर्मास्त्वित्यर्थ. । शेषितया प्रधानतयेत्यर्थः । **श्रुतं कर्मेति** । ब्रह्मणो जिज्ञासेति शब्दादविलम्बेन प्रतीयमान ब्रह्मण· कर्मत्व त्यक्त्वा शब्दादप्रतीयमानं तात्पर्याद्विलम्बेन प्रतीयमान प्रमाणादीनां कर्मत्वं ब्रह्मणः सम्बन्धित्वमात्रं च कल्पयन् शेषवादी करस्थ पिण्डमुत्सृज्य करं लेढीति न्यायमनुसरति, तथा च शेषषष्ठीपरिग्रहे ब्रह्मणः प्रतीतकर्मत्वालाभ एव दोष इति भाव. । **गूढाभिसन्धिरिति** । ब्रह्माश्रिताशेषविचारप्रतिज्ञारूपफले गूढाभिसन्धिरित्यर्थ. । सम्बधिसामान्ये प्रोक्ते तत्सामर्थ्यात्कारकसम्बन्धविशेषश्चार्थतोवगम्यत इत्येतावता षष्ठी शेष इत्युक्त नार्थादपि कारकसम्बन्धाप्रतिभास इत्युक्तमिति शेषवादिनो मतम्, तथा च ब्रह्मसम्बन्धिजिज्ञासेति बोधेन ब्रह्मकर्मकजिज्ञासाप्यर्थादवगम्यते तस्माद्ब्रह्मणः कर्मत्वलाभ इति शेषवादी शङ्कत इति भाव । 'शेषषष्ठ्यपिपरिग्रहेपीति' भाष्येण अशेषविचारप्रतिज्ञारूपफललाभायैव शेषषष्ठी परिगृह्यार्थिककर्मत्वस्वीकारात्तस्य शेषवादिन. प्रयास· सार्थक एव तथा च 'व्यर्थः प्रयास स्यादि'त्याद्युत्तरभाष्यविरोधस्तत्परिहारायेदं भाष्य गूढाभिसन्धिना शङ्कत इति व्याख्यातमिति मन्तव्यम् । **षष्ठीति** । षष्ठी शेष इति व्याकरणसूत्रेण सम्बन्धमात्रे षष्ठीविधानादित्यर्थ । **कर्मत्वे पर्यवस्यतीति** । विषयत्वे पर्यवस्यतीत्यर्थ । विषयविषयिभावसम्बन्धे पर्यवस्यतीति भाव । यद्यपि 'षष्ठी शेष' इति सम्बन्धमात्रे षष्ठी विहिता तथापि व्यवहारो विशेषमालम्बते वहवश्च विशेषसम्बन्धा तत्रान्यतमो विशेषसम्बन्ध. प्रतिपत्तव्य. अन्यथा व्यवहारानुपपत्ते, तस्मात्स च सम्बन्ध· क इति विशेषजिज्ञासायां सकर्मकेच्छासन्निधानात्कर्मत्वमेव विशेषसम्बन्धो भवति ब्रह्मणो जिज्ञासाकर्मत्वं शेषषष्ठीपक्षे तु न विरुध्यत इति समुदायार्थ । **अजानन्निवेति** ।

मान्यद्वारेण परोक्षं कर्मत्वं कल्पयतो व्यर्थः प्रयासः स्यात् । न व्यर्थः, ब्रह्माश्रिताशेषविचारप्रतिज्ञानार्थत्वादिति चेन्न । प्रधानपरिग्रहे तदपेक्षिता-

## रत्नप्रभा

क्षं "कर्तृकर्मणोः कृति" (पा०सू०२।३।६) इति सूत्रेण जिज्ञासापदस्यावन्तत्वेन कृदन्तस्य योगे विहितं प्रथमापेक्षितं कर्मत्वं त्यक्त्वा परोक्षमशाब्दं कल्पयत इत्यर्थः । शेषवादी स्वाभिसन्धिमुद्घाटयति—**न व्यर्थ इति** । शेषषष्ठ्यां ब्रह्मसम्बन्धिनी जिज्ञासा प्रतिज्ञाता भवति । तत्र **यानि** ब्रह्माश्रितानि लक्षणप्रमाणयुक्तिज्ञानसाधनफलानि, तेषामपि विचारः प्रतिज्ञातो भवति । तज्जिज्ञासाया अपि ब्रह्मज्ञानार्थत्वेन ब्रह्मसम्बन्धित्वात् । कर्मणि षष्ठ्यां तु ब्रह्मकर्मक एव विचारः प्रतिज्ञातो भवतीत्यभिसन्धिना शेषषष्ठीत्युच्यते । अतो मत्प्रयासो न व्यर्थः । ब्रह्मतत्सम्बन्धिनां सर्वेषां विचारप्रतिज्ञानमर्थः फलं यस्य तत्त्वादित्यर्थः । त्वत्प्रयासस्येदं फलं न युक्तम्, सूत्रेण मुखतः प्रधानस्य ब्रह्मणो विचारे प्रतिज्ञाते सति तदुपकरणानां विचारस्यार्थिकप्रतिज्ञाया

## पूर्णानन्दीया

तात्पर्यं ज्ञात्वापि वादिना तात्पर्यस्फुटीकरणानन्तरमेव तद्वक्तव्यमित्यधुना अनुरूपोत्तरमाहेत्यर्थः । यद्यपि ब्रह्मणः कर्मत्वालाभ इति दूषणमार्थिककर्मत्वोक्त्या परिहृतं तथापीच्छायाः प्रथमापेक्षितकर्मकत्वेन ब्रह्मणः प्रथम प्रतीतकर्मत्वालाभदोषो दुर्वार इति भाष्याभिप्रायं स्फुटीकुर्वन् एवमपीत्यस्यार्थमाह **कर्मलाभेपीति** । ब्रह्मणः कर्मत्वलाभेऽपीत्यर्थः । प्रतीकमादाय प्रत्यक्षपदस्यार्थमाह **प्रत्यक्षमित्यादिना विहितमित्यन्तेन** । कृति कृदन्तस्य योगे सति कर्तृकर्मणोः कर्त्रर्थे कर्मार्थे च षष्ठी स्यादिति व्याकरणसूत्रस्यार्थः।आवन्तत्वेनेति च्छेदः । आकारप्रत्ययान्तत्वेनेत्यर्थः। **कृदन्तस्येति** । कृत्प्रत्ययान्तस्येत्यर्थः । जिज्ञासेत्यत्र सन्प्रत्ययः अ इति संज्ञिको प्रत्ययः अकारप्रत्यय इति यावत्, उप्रत्ययश्चेति प्रत्ययाः सन्ति तथा च त्रयाणां प्रत्ययाणां मध्ये यः अप्रत्ययस्तदन्तत्वेन कृदन्तत्वं जिज्ञासापदस्येति भावः । **विहितमिति** । सूत्रेण विहितमिति पूर्वेणान्वयः । तथा च शब्दादविलम्बेन प्रतीयमानं प्रत्यक्षमिति निष्कृष्टोऽर्थः । **अशाब्दमिति**। विलम्बेन तात्पर्यात्प्रतीयमानमित्यर्थः । ब्रह्मणः कर्मत्वे तात्पर्येण साधितेपि एवं कल्पयतस्तव प्रयासो व्यर्थ एवेति भावः ।

**भाष्ये । कर्मत्वं न विरुध्यत इति** । कर्मत्वालाभदोषो नास्तीति भावः । **सम्बन्धसामान्यस्येति** । विशेषनिष्ठत्वं विशेषसम्बन्धबोधकत्वं सामान्यसम्बन्धस्य विशेषसम्बन्धे पर्यवसन्नत्वादित्यर्थः । **सामान्यद्वारेणेति** । सामान्यसम्बन्धद्वारेणेत्यर्थः ।

व्याख्याने **लक्षणप्रमाणेति** । लक्षणं च प्रमाणं च युक्तयश्च ज्ञानसाधनानि च फलं चेति विग्रहः । **ब्रह्मकर्मक एवेति** । एवकारेण प्रमाणादिकर्मकविचारो व्यावर्त्यते। **विचारप्रतिज्ञानमिति** । विचारस्य प्रतिज्ञानं प्रतिज्ञेत्यर्थः । **यस्येति** । मत्प्रयास-

नामर्थाक्षिप्तत्वात् । ब्रह्म हि ज्ञानेनाप्तुमिष्टतमत्वात्प्रधानम् । तस्मिन्प्रधाने जिज्ञासाकर्मणि परिगृहीते यैर्जिज्ञासितैर्विना ब्रह्म जिज्ञासितं न भवति तान्यर्थाक्षिप्तान्येवेति न पृथक्सूत्रयितव्यानि । यथा राजासौ गच्छतीत्युक्ते सपरिवारस्य राज्ञो गमनमुक्तं भवति तद्वत् । श्रुत्यनुगमाच्च । 'यतो वा इमानि भूतानि जायन्ते' ( तैत्ति० ३।१ ) इत्याद्याः श्रुतयः, 'तद्विजिज्ञासस्व, तद्ब्रह्म' इति प्रत्यक्षमेव ब्रह्मणो जिज्ञासाकर्मत्वं दर्शयन्ति । तच्च कर्मणिषष्ठीपरिग्रहे सूत्रेणानुगतं भवति । तस्मा'द्ब्रह्मण' इति कर्मणिषष्ठी । ज्ञातुमिच्छा जिज्ञासा । अवगतिपर्यन्तं ज्ञानं सन्वाच्यायाः

---

**रत्नप्रभा**

उदितत्वादित्याह सिद्धान्ती—**न प्रधानेति** । संगृहीतमर्थं सदृष्टान्तं व्याकरोति—**ब्रह्म हीत्यादिना** । "तद्विजिज्ञासस्व" इति मूलश्रुत्यनुसाराच्च कर्मणि षष्ठीत्याह—**श्रुत्यनुगमाच्चेति** । श्रुतिसूत्रयोरेकार्थत्वलाभाच्चेत्यर्थः । जिज्ञासापदस्यावयवार्थमाह—**ज्ञातुमिति** । **नन्वनवगते** वस्तुनीच्छाया अदर्शनात्तस्या मूलं विषयज्ञानं वक्तव्यं, ब्रह्मज्ञानं तु जिज्ञासायाः फलं, तदेव मूलं कथमित्याशंक्याह-**अवगतीति** । आवरणनिवृत्तिरूपाभिव्यक्तिमच्चैतन्यमवगतिः पर्यन्तोऽवधिर्यस्याऽखण्डसाक्षात्कारवृत्ति-

**पूर्णानन्दीया**

स्येत्यर्थः । अप्रधानप्रमाणादिविचारान् शब्देनोपादाय प्रधानस्य ब्रह्मविचारस्याक्षेपकल्पनाद्वारं मुखतः प्रधानविचारमेवोपादायाऽप्रधानविचाराणामाक्षेपकल्पनमिति शेषषष्ठीपरिग्रहो न युक्त इत्याशय स्फुटीकुर्वन्नुत्तरभाष्यमवतारयति—**स्वत्प्रयासस्येति** । **सदृष्टान्तमाहेति** । सदृष्टान्तं विवृणोतीत्यर्थः । **तद्विजिज्ञासस्वेतीति** । 'यतो वा इमानि भूतानी'त्यादिश्रुतिगततद्विजिज्ञासस्वेति अर्थ । मूलं विषयवाक्यत्वेनाभिमतमित्यर्थः । तदिति द्वितीयया ब्रह्मणः कर्मत्वप्रतिपादनद्वारा प्रधानस्य ब्रह्मणो विचार श्रुत्या प्रतिज्ञातो भवति तथा एकार्थत्वलाभाय सूत्रेणापि कर्मत्वप्रतिपादनद्वारैव प्रधानब्रह्मणो विचारः प्रतिज्ञातव्य इत्यवश्यं वक्तव्यमिति भावः ।

**भाष्ये तद्विजिज्ञासस्व तद्ब्रह्मेतीति** । स्वप्रविष्ट'तद्विजिज्ञासस्वतद्ब्रह्मे'त्यनेन वाक्येनेत्यर्थः । **प्रत्यक्षमेवेति** । शाब्दमेवेत्यर्थ । यत ब्रह्मण. सकाशादुत्पत्त्यादिकं भवति तद्ब्रह्म विजिज्ञासस्वेति श्रुतय. शब्दत ब्रह्मणः कर्मत्वं दर्शयन्तीति भावः । इच्छायाः कर्मेति पूर्वेणान्वयः ।

व्याख्याने—**ब्रह्मज्ञानं त्विति** । हेतुभूतस्य मूलस्य सिद्धस्वरूपत्वात् साध्यस्वरूपं ब्रह्मज्ञानं कथं मूलमिति भावः । **आवरणेति** । आवरणनिवृत्तिरूप नवशराव जलेनाभिव्यक्तगन्धवदन्तःकरणे तद्वृत्त्या अभिव्यक्तस्फुरणरूप च ब्रह्मस्वरूपभूत यच्चैतन्यं

इच्छायाः कर्म। फलविषयत्वादिच्छायाः। ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्म। ब्रह्मावगतिर्हि पुरुषार्थः, निःशेषसंसारबीजाविद्याद्यनर्थनिबर्हणात्। तस्माद्ब्रह्म विजिज्ञासितव्यम्।

## रत्नप्रभा

ज्ञानस्य तदेव जिज्ञासायाः कर्म, तदेव फलम्। मूलं त्वापातज्ञानमित्यधुना वक्ष्यत इति फलमूलज्ञानयोर्भेदान्न जिज्ञासानुपपत्तिरित्यर्थः। ननु गमनस्य ग्रामः कर्म, तत्प्राप्तिः फलमिति भेदात् कर्मैव फलमित्ययुक्तं तत्राह—**फलेति**। क्रियान्तरे तयोर्भेदेऽपीच्छायाः फलविषयत्वात् कर्मैव फलमित्यर्थः। ननु ज्ञानावगत्योरैक्याद्भेदोक्तिरयुक्तेत्यत आह-**ज्ञानेनेति**। ज्ञानं वृत्तिः, अवगतिस्तत्फलमिति भेद इति भावः। **अवगन्तुम्** अभिव्यञ्जयितुम्। अवगतेः फलत्वं स्फुटयति—**ब्रह्मेति**। हिशब्दोक्तं हेतुमाह—**निश्शेषेति**। बीजमविद्या आदिर्यस्यानर्थस्य तन्नाशकत्वादित्यर्थः। अवयवार्थमुक्त्वा सूत्रवाक्यार्थमाह—**तस्मादिति**। अत्र सन्प्रत्ययस्य विचारलक्षकत्वं तव्यप्रत्ययेन सूचयति। अथातःशब्दाभ्यामधिकारिणः साधितत्वात्तेन ब्रह्मज्ञानाय विचारः कर्तव्य इत्यर्थः॥

इति तृतीयवर्णकम्।



## पूर्णानन्दीया

तदेवावगतिरित्यर्थः। आवरणनिवृत्तिरूपत्वमभिव्यक्तेर्वा विशेषणं अभावस्याधिकरणस्वरूपत्वान्निवृत्तिरूपत्वमधिष्ठानस्य अथवा आवरणवत्तन्निवृत्तेः कल्पितत्वेनाधिष्ठानमेव स्वरूपमिति भावः।

अभिव्यक्तिमच्चैतन्यमिति मतुपः प्रयोगान्नित्याभिव्यक्तिविलक्षणा अपरोक्षज्ञानगम्या हि कल्पिताभिव्यक्तिरस्तीति सिद्धम्। **गमनस्य ग्रामः कर्मेति**। ग्रामं गच्छतीत्यत्र ग्रामस्य कर्मत्व नाम क्रियाजन्यफलशालित्वं तथा हि गमनरूपा या क्रिया तज्जन्यं फलं ग्रामपुरुषसंयोगस्तदाश्रयत्वं ग्रामेऽस्तीति लक्षणसमन्वय इति दिक्। **तत्प्राप्तिरिति**। ग्रामसंयोग इत्यर्थः। **अवगतेरिति**। अभिव्यक्तिमच्चैतन्यरूपावगतेरित्यर्थः। वृत्तिज्ञानरूपा ब्रह्मावगतिः अज्ञाननिवर्तकतया पुरुषाभिलाषितत्वात् पुरुषार्थ इति भाष्यार्थः। **बीजमविद्येति**। संसारबीजभूता या अविद्या अनाद्यविद्या सैवादिर्यस्यानर्थस्येति विग्रह वृत्तिज्ञानेनाज्ञानसहितानर्थनिवृत्तिद्वारा चैतन्यमभिव्यक्त भवति, तस्मादभिव्यक्तिमच्चैतन्यं ब्रह्मज्ञानस्य फलमित्युच्यत इति भावः। **तृतीयवर्णकमिति**। प्रथमसूत्रस्य तृतीयव्याख्यानमित्यर्थः।

**इति प्रथमसूत्रस्य तृतीयवर्णकं समाप्तम्।**

तत्पुनर्ब्रह्म प्रसिद्धमप्रसिद्धं वा स्यात । यदि प्रसिद्धं न जिज्ञासितव्यम् । अथाप्रसिद्धं नैव शक्यं जिज्ञासितुमिति । **उच्यते**—अस्ति तावद्ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं, सर्वज्ञं, सर्वशक्ति-

**रत्नप्रभा**

प्रथमवर्णके बन्धस्याध्यासत्वोक्त्या विषयादिसिद्धावपि ब्रह्मप्रसिद्ध्योर्विषया-दिसम्भवासम्भवाभ्यां शास्त्रारम्भसन्देहे पूर्वपक्षमाह—**तत्पुनरिति** । **पुनः**शब्दो वर्णकान्तरद्योतनार्थः । **यदि** वेदान्तविचारात् प्रागेव ब्रह्म ज्ञातम्, **तर्ह्यज्ञात**-त्वरूपविषयत्वं नास्ति । अज्ञानाभावेन तन्निवृत्तिरूपफलमपि नास्तीति न विचार-यितव्यम् । **अथाज्ञातं** केनापि **तर्हि** तदुद्देशेन विचारः कर्तुं न शक्यते, अज्ञातस्योद्देशायोगात् । तथा च बुद्धावनारूढस्य विचारात्मकशास्त्रेण वेदा-न्तैश्च प्रतिपादनायोगात् तत्प्रतिपाद्यत्वरूपः सम्बन्धो नास्तीति ज्ञानानुत्पत्तेः फलमपि नास्तीत्यनारभ्यं शास्त्रमित्यर्थः । आपातप्रसिद्ध्या विषयादिलाभादारम्भणीय-मिति सिद्धान्तयति—**उच्यत इत्यादिना** । प्रसिद्धं तावदित्यर्थः । अस्तित्वस्या-

**पूर्णानन्दीया**

श्रीगुरुभ्यो नमः ।

प्रथमवर्णके विषयप्रयोजने आक्षिप्य तत्सद्भावसाधनेन विचारकर्तव्यता समर्थिता सम्प्रति पुनस्ते सम्बन्धं चाक्षिप्य तत्साधनद्वारा तत्कर्तव्यतां साधयितुं व्यवहितं वृत्त-मनुवदन् वर्णकान्तरपरत्वेन भाष्यमवतारयति **प्रथमवर्णक इति** । अधिकरणमार-चयति—**ब्रह्मप्रसिद्धीति** । **तर्ह्यज्ञातत्वेति** । प्रत्यक्षादिना यदज्ञातं वस्तु तत्प्रति-पाद्यं सद्विषयो भवति ज्ञातेऽर्थे हि शास्त्रमकिञ्चित्करं भवति तस्मात् ज्ञातस्य ब्रह्मण. शा-स्त्रेणाप्रतिपाद्यत्वाद्विषयत्वं नास्तीति भाव. । 'यदि प्रसिद्ध'मित्यादिभाष्यस्य विषयप्रयोज-नाक्षेपे मुख्यतात्पर्यमुक्त्वा 'अथाप्रसिद्ध'मित्यादिभाष्यस्य सम्बन्धप्रयोजनाक्षेपे मुख्यता-त्पर्यमाह—**अथाज्ञातमिति** । **इति ज्ञानानुत्पत्तेरिति** । ब्रह्मण अप्रतिपाद्यत्वेन सम्बन्धस्याप्रसिद्धत्वादखण्डब्रह्मसाक्षात्कारस्यानुत्पत्तेरित्यर्थ । ज्ञानं प्रति वेदान्तविचारस्य हेतुत्वेन विचारात्प्रागापातज्ञानमपि नास्तीति पूर्वपक्षग्रन्थार्थ । अनधीतसाङ्गस्वाध्यायस्य पुरुषस्य विचारात्प्रागापातज्ञानासम्भवेप्यधीतसाङ्गस्वाध्यायस्य पुरुषस्य विचारात्प्रागापा-तज्ञान सम्भवत्येव, तथा च निश्चय प्रति विचारस्य हेतुत्वं न ज्ञानं प्रतीति सिद्धान्त-तात्पर्यमाह—**आपातप्रसिध्येति** । वेदान्तानामपरोक्षनिश्चायकत्वेपि वादिभिरन्यथा-न्यथार्थस्य प्रतिपादितत्वाद्वेदान्तेभ्यो जायमानं ज्ञानमप्रामाण्यशङ्काकलङ्कितस्वरूपा पातं भवति । तथा चापातज्ञानविषयत्वेन ब्रह्मण प्रसिद्धिरापातप्रसिद्धिस्तयेत्यर्थ । व्या-करणाद्बृहत्वाद्ब्रह्मेति व्युत्पत्त्या सर्वोत्कृष्टत्वरूपं निरवधिकमहत्त्वाभिन्न व्यापकत्व नि-श्चीयते तच्च सर्वोत्कृष्टत्वरूपव्यापकत्वं नित्यशुद्धबुद्धमुक्तत्वादिकमन्तरा सर्वज्ञत्वसर्व-

समन्वितम् । ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रती-

## रत्नप्रभा

प्रकृतत्वेनास्तिपदस्य प्रसिद्धिपरत्वात् । **ननु** केन मानेन ब्रह्मणः प्रसिद्धिः । **न च** "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुत्या **सेति वाच्यम्** । ब्रह्मपदस्य लोके सङ्गतिग्रहाभावेन तद्धटितवाक्यस्याबोधकत्वादित्याशंक्य ब्रह्मपदव्युत्पत्त्या प्रथमं तस्य निर्गुणस्य सगुणस्य च प्रसिद्धिरित्याह—**ब्रह्मशब्दस्य हीति** । **अस्यार्थः**—श्रुतौ सूत्रे ब्रह्मशब्दस्य प्रयोगान्यथानुपपत्त्या कश्चिदर्थोऽस्तीति ज्ञायते । प्रमाणवाक्ये निरर्थकशब्दप्रयोगादर्शनात् । स चार्थो महत्त्वरूप इति व्याकरणान्निश्चीयते । "बृहि वृद्धौ"(पा०धातु० भ्वा०) इति स्मरणात् । सा च वृद्धिर्निरवधिकमहत्त्वमिति, संकोचकाभावात् श्रुतावनन्तपदेन सह प्रयोगाच्च ज्ञायते । निरवधिकमहत्त्वं चान्तवत्त्वादिदोषवत्त्वे सर्वज्ञत्वादिगुणहीनत्वे च न सम्भवति । लोके गुणहीनदोषवतोरल्पत्वप्रसिद्धेः । अतो बृंहणाद् ब्रह्मेति

## पूर्णानन्दीया

शक्तित्वादिकमन्तरा च न सम्भवति तस्माद्बृहत्वाद्ब्रह्मेति व्युत्पत्त्यैव सर्वोत्कृष्टलाभार्थं नित्यशुद्धत्वादिकं सर्वज्ञत्वादिकं च प्रतीयते तथा च व्युत्पाद्यमानब्रह्मशब्देन सगुण निर्गुण च ब्रह्म प्रसिद्धमित्येतमर्थं स्फुटीकर्तुं शङ्कासमाधानाभ्यामुत्तरभाष्यमवतारयति **ननु केन मानेन ब्रह्मण** इत्यादिना **शक्तिमत्त्वलाभादित्यन्तेन** । **सङ्गतिग्रहेति** । शक्तिग्रहेत्यर्थः । **ब्रह्मपदव्युत्पत्त्येति** । व्यापकत्वरूपाद्बृहत्वाद्ब्रह्मेति ब्रह्मपदव्युत्पत्त्यनुसरणेनेत्यर्थः । ननु जातिजीवकमलासनवेदेभ्यो विलक्षणे निरतिशयपुरुषार्थे मुमुक्षोर्जिज्ञासायोग्ये वस्तुनि ब्रह्मपदव्युत्पत्त्यापि ब्रह्मशब्दस्य कथं वृत्तिरित्याशङ्क्याह—**अस्यार्थ इति** । नन्वेवमपि यत्किञ्चिदापेक्षिकमहत्त्वविशिष्ट वस्त्ववगम्यतामित्यत आह **सा च वृद्धिरिति** । निरवधिकमहत्त्व सर्वतो निरवग्रहमहत्त्वमित्यर्थः । सर्वोत्कृष्टत्वमिति यावत् । **संकोचकाभावादिति** । उपपदं प्रकरणादिकं वा संकोचकं, तदभावादित्यर्थ । यथा बृहद्घट इत्यत्र घटपदसमभिव्याहारादापेक्षिकं बृहत्वं प्रतीयते, तद्वदत्र किमपि संकोचक न प्रतीयते प्रत्युतासंकोच एव, अनन्तपदसहप्रयोगरूपज्ञापक चास्ति तथा च निरतिशयमहत्त्वसम्पन्नं वस्तु ब्रह्मशब्दार्थ इति भावः ।

ननु नित्यत्वादयो गुणाः न ब्रह्मशब्दार्थोपयोगिन अतस्ते कथं ब्रह्मशब्देनावगम्यन्ते तथा च नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्त इति भाष्य कथमित्याशङ्क्य गुणतोऽपकृष्टस्य वस्तुनः अल्पत्वबुद्धिदर्शनान्नित्यत्वादिगुणा ब्रह्मपदार्थोपयोगित्वेन प्रतीयन्त एवेत्याह—**निरवधिकमहत्त्वं चेति** । अन्तवत्त्वमनित्यत्वम् । आदिशब्देनाशुद्धत्वादिकं गृह्यते । **अल्पत्वेति** । वस्तुनोऽल्पत्व नाम देशकालवस्तुपरिच्छेद इत्यर्थः । लोके गुणहीनं दोषभूयिष्ठं वस्तु अल्पमिति मन्यते गुणभूयिष्ठ दोषहीन वस्तु महदिति मन्यते तस्माद्ब्रह्मवस्तुनः अल्पत्वनिराकरणेन गुणतो महत्त्वसम्पादनाय बृहत्वाद्ब्रह्मेति व्युत्पत्त्यैव

यन्ते, बृहतेर्धातोरर्थानुगमात् । सर्वस्यात्मत्वाच्च ब्रह्मास्तित्वप्रसिद्धिः । सर्वो

## रत्नप्रभा

व्युत्पत्त्या देशकालवस्तुतः परिच्छेदाभावरूपं नित्यत्वं प्रतीयते । अविद्यादिदोषशून्यत्वं **शुद्धत्वम्**, जाड्यराहित्यम् **बुद्धत्वम्**, बन्धकालेऽपि स्वतो बन्धाभावः **मुक्तत्वम्**, च प्रतीयते । **एवं** सकलदोषशून्यं निर्गुणं प्रसिद्धम् । तथा सर्वज्ञत्वादिगुणकं च तत्पदवाच्यं प्रसिद्धम् । ज्ञेयस्य कार्यस्य चापरिशेषेऽल्पत्वप्रसंगेन सर्वज्ञत्वस्य सर्वकार्यशक्तिमत्त्वस्य चालाभादिति । एवं 'तत्पदात्प्रसिद्धेरप्रमाणत्वेनापातत्वादज्ञानानिवर्तकत्वाज्जिज्ञासोपपत्ति'रित्युक्त्वा त्वम्पदार्थात्मनापि ब्रह्मणः प्रसिद्धयात दुपपत्तिरित्याह—**सर्वस्येति** । सर्वस्य लोकस्य योऽयमात्मा तदभेदाद् ब्रह्मणः प्रसिद्धिरित्यर्थः । नन्वात्मनः प्रसिद्धिः केत्यत आह—**सर्वो हीति** । 'अहमस्मीति' न प्रत्येतीति न,

## पूर्णानन्दीया

नित्यत्वादय प्रतीयन्त इत्याह--**अत इति** । बृहत्वब्रह्मणत्वयोरेकार्थत्वमभिप्रेत्याह--**बृंहणादिति** । कल्पतरुकारैस्तु बृहत्वं व्यापकत्वं ब्रह्मणत्वं शरीरादिपरिणामरूपवृद्धिहेतुत्वमिति तयोर्भेद उक्तः । अस्मिन् ग्रन्थे सा च वृद्धिरित्याद्युपक्रमानुसारेण तयोरभेद एव ग्रन्थकाराभिप्रेत इति तदभिप्रायेणेदं व्याख्यातमिति भावः । शुद्धत्वं व्युत्पत्त्या प्रतीयत इति पूर्वेणान्वय. ।

ननु जातिजीवकमलासनादौ ब्रह्मशब्दप्रयोगे सत्यपि नैतावानर्थ. प्रतीयते कथमत्र बृहतेर्धातोरर्थानुगमादप्येतादृशस्यार्थस्य प्रतिपत्तिरित्याशङ्क्याह—**एवं सकलदोषशून्यमिति** । नित्यत्वसर्वज्ञत्वादिविशिष्ट सगुणनिर्गुणस्वरूप परिपूर्णार्थ. ब्रह्मपदव्युत्पत्त्या प्रसिद्धः सन् निर्बाध प्रतीयते जात्यादौ तु सङ्कोचकस्य सत्त्वान्नैतादृशार्थे प्रतीयत इति भाव । **तथेति** । यथा व्युत्पत्त्यनुसरणात् निर्गुण प्रसिद्धं तथा सगुणमपि तस्मादेव प्रसिद्धमिति भाव । तत्पदवाच्यस्य चेतनस्यापि सर्वविषयज्ञानाभावे सर्वकार्यनियमनशक्त्यभावे च प्रोच्यमाने सति कस्यचिदर्थस्य ज्ञानाभावात्कस्यचित्कार्यस्य उत्पादनशक्त्यभावाच्चापकर्षप्राप्त्या अल्पत्वं स्यात्तद्व्यावृत्त्यर्थं सर्वज्ञत्वादिकं वक्तव्यमित्याह—**ज्ञेयस्य कार्यस्य चापरिशेष इति** । कस्यचिज्ज्ञेयस्य वस्तुन ईश्वरज्ञानाविषयत्वं कस्यचित्कार्यस्य वा ईश्वरशक्त्यविषयत्वमित्यर्थ । ज्ञेयस्य परिशेष ज्ञानाविषयत्वं कार्यस्य परिशेष. शक्त्यविषयत्वमिति भेद. । **अल्पत्वप्रसङ्गेनेति** । ईश्वरस्याल्पत्वप्रसङ्गेनेत्यर्थ ।

**भाष्ये बृहतेर्धातोरिति** । बृहतेर्धातोर्योऽर्थः परिपूर्णरूप. तेनानुगमात्सम्बन्धान्नित्यत्वादीनामित्यर्थं । नित्यत्वादय. धात्वर्थेन परिपूर्णवस्तुना सह सम्बन्धसत्त्वाद्ब्रह्मशब्देन प्रतीयन्त इति भाव. । **सर्वस्यात्मत्वाच्चेति** । ब्रह्मण इति शेष इति केचित् ।

व्याख्याने । **एवमिति** । उक्तरीत्येत्यर्थ. । तत्पदात्प्रसिद्धेरित्यादिग्रन्थः स्पष्टोऽर्थ. । **न प्रत्येतीति नेति** । न जानातीति यत्तन्नेत्यर्थः । अविचार्यत्वं प्राप्तमि

ह्यात्मास्तित्वं प्रत्येति, न नाहमस्मीति । यदि हि नात्मास्तित्वप्रसिद्धिः स्यात् सर्वो लोको नाहमस्मीति प्रतीयात् । आत्मा च ब्रह्म । यदि तर्हि लोके ब्रह्मात्मत्वेन प्रसिद्धमस्ति ततो ज्ञातमेवेत्यजिज्ञास्यत्वं पुनरापन्नम् । न । तद्विशेषं प्रति विप्रतिपत्तेः । देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृता जना लौकायतिकाश्च प्रतिपन्नाः । इन्द्रियाण्येव चेतनान्यात्मेत्यपरे । मन इत्यन्ये । विज्ञानमात्रं क्षणिकमित्येके । शून्यमित्यपरे ।

## रत्नप्रभा

किन्तु प्रत्येत्येव । सैव सच्चिदात्मनः प्रसिद्धिरित्यर्थः ।

आत्मनः कुतः सत्तेति शून्यमतमाशंक्याह—**यदि हीति** । आत्मनः शून्यस्य प्रतीतौ 'अहं नास्मीति' लोको जानीयात् । लोकस्तु 'अहमस्मीति' जानाति, तस्मादात्मनोऽस्तित्वप्रसिद्धिरित्यर्थः । आत्मप्रसिद्धावपि ब्रह्मणः किमायातं तत्राह—**आत्मा चेति** । "अयमात्मा ब्रह्म" (बृ०२।५।१९) इत्यादिश्रुतेरिति भावः । प्रसिद्धिपक्षोक्तदोषं पूर्वपक्षेण स्मारयति—**यदीति** । अज्ञातत्वाभावेन विषयाद्यभावादविचार्यत्वं प्राप्तमित्यर्थः । **यथा**—इदं रजतमिति वस्तुतः शुक्तिप्रसिद्धिः, तद्वदहमस्मीति सत्त्वचैतन्यरूपात्मत्वसामान्येन वस्तुतो ब्रह्मणः प्रसिद्धिः, नेयं पूर्णानन्दब्रह्मत्वरूपविशेषगोचरा, वादिनां विवादाभावप्रसङ्गात् । न हि शुक्तित्वविशेषदर्शने सति रजतं रङ्गमन्यद्वेति विप्रतिपत्तिरस्ति । अतो विप्रतिपत्त्यन्यथानुपपत्त्या सामान्यतः प्रसिद्धावपि विशेषस्याज्ञातत्वाद्विषयादिसिद्धिरिति सिद्धान्तयति—**नेत्यादिना** । सामान्यविशेषभावस्त्वात्मनि सच्चित्पूर्णादिपदवाच्यभेदात् कल्पित इति मन्तव्यम् । तत्र स्थूलसूक्ष्मक्रमेण

## पूर्णानन्दीया

त्यर्थ इत्यत प्राक्तनग्रन्थस्त्वतिरोहितार्थः । आपातप्रसिध्या विषयादिसिद्धि साधिता सम्प्रति विशेषाप्रसिध्यापि तां साधयतीत्यवतारयति **यथेदं रजतमिति** । यथा इदं रजतमितीदत्वेन सामान्यरूपेण शुक्तेः प्रसिद्धिः तथा अहमस्मीत्यात्मत्वसामान्यधर्मपुरस्कारेण ब्रह्मण. प्रसिद्धिरस्ति न त्वशनायाद्यतीतत्वादिविशेषरूपेण धर्मेणेति भाव. । **वाच्यभेदादिति** । सत्यपदं मुख्यामुख्यसत्स्वरूपब्रह्माकाशशबलरूपे सत्ये व्युत्पन्नम्, ज्ञानपदं चैतन्यान्तःकरणवृत्तिरूपमुख्यामुख्यज्ञानद्वयशबलरूपे ज्ञाने व्युत्पन्नम्, आनन्दपदं च प्रत्यग्बुद्धिवृत्तिरूपमुख्यामुख्यानन्दद्वयशबलरूपे आनन्दे व्युत्पन्नम्, एवं नित्यशुद्धबुद्धमुक्तादीन्यपि पदानि मुख्यामुख्यतत्तदद्वयशबलरूपे तस्मिन् व्युत्पन्नानीति द्रष्टव्यम् । अत्र सत्यता त्रिविधा मुख्यनिष्ठाऽमुख्यनिष्ठा शबलनिष्ठा चेति । एतत्सर्वं **संक्षेपशारीरके सर्वज्ञात्ममुनिभिः** विस्तरेणोपपादितम्, तथा च शबलरूपं सत्यं सत्यपदवाच्यार्थः। अत्र सत्यत्वं सामान्यधर्मः मुख्यामुख्यशबलनिष्ठसत्यत्वादि विशेषधर्मः । एवं जीवेश्वरोभयरूपात्मा

अस्ति देहादिव्यतिरिक्तः संसारी कर्ता, भोक्तेत्यपरे । भोक्तैव केवलं न कर्तेत्येके । अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञः सर्वशक्तिरिति केचित् ।

## रत्नप्रभा

विप्रतिपत्तीरुपन्यस्यति—**देहमात्रमित्यादिना** । शास्त्रज्ञानशून्याः—**प्राकृताः** । वेदबाह्यमतान्युक्त्वा तार्किकादिमतमाह—**अस्तीति** ।

सांख्यमतमाह—**भोक्तेति** । किमात्मा देहादिरूपः—उत तद्भिन्न इति विप्रतिपत्तिकोटित्वेन देहेन्द्रियमनोबुद्धिशून्यान्युक्त्वा तद्भिन्नोऽपि कर्तृत्वादिमान्नवे ति विप्रतिपत्तिकोटित्वेन तार्किकसांख्यपक्षावुपन्यस्याकर्तापीश्वराद्भिन्नो न वेति विवादकोटित्वेन योगिस-

## पूर्णानन्दीया

आत्मपदवाच्यार्थ । अत्रात्मत्वं सामान्यधर्मः जीवात्मत्वं परमात्मत्वमुभयानिष्ठात्मत्वं चेति त्रयो विशेषधर्मा. । तथा मुख्यब्रह्म—कमलासनाद्यमुख्यब्रह्म उभयरूपब्रह्मेति ब्रह्मत्रयं तथा-चोभयरूपं ब्रह्म ब्रह्मपदवाच्यार्थ । अत्र ब्रह्मत्वं सामान्यधर्म. मुख्यामुख्योभयनिष्ठब्रह्मत्वादि विशेषधर्माः । सर्वत्र मुख्यब्रह्मरूपं शुद्धचैतन्यं लक्ष्यार्थ. अत एव सत्यादिपदाना न पर्यायता लक्ष्यार्थाभेदेऽपि वाच्यार्थाना भिन्नत्वात् तथा च वाच्यार्थभेदादेव ब्रह्मात्मनि सामान्यधर्मः विशेषधर्मश्च सिध्यति । एव सति अहमस्मीति सत्यचैतन्यरूपात्मत्वेन सामान्यधर्मेणात्मत्वप्रसिद्धिरस्ति न तु ब्रह्माहमस्मीति लक्ष्यार्थशुद्धचैतन्यरूपाखण्डब्रह्मनिष्ठमुख्यब्रह्मत्वेन विशेषधर्मेण अन्यथा वादिना विप्रतिपत्तिर्न स्यादिति भाव. ।

**भाष्ये विप्रतिपत्तेरिति** । विरुद्धा हि प्रतिपत्ति तस्या इत्यर्थ । देहमात्रमिति मात्रशब्देन देहातिरिक्तं स्वतन्त्रचैतन्य नास्तीत्युच्यते । **आत्मेति** । अहप्रत्ययालम्बनमित्यर्थः । लोकायतिकाश्चार्वाका इत्यर्थ. । **इन्द्रियाण्येवेति** । इन्द्रियाणां चक्षुरादिमनःपर्यन्तानां चेतनत्वमहंप्रत्ययविषयत्वरूपात्मत्व च मन्यन्त इत्यर्थ· । **मन इत्यन्य इति** । मनस. चेतनत्वमात्मत्वं च मन्यन्त इत्यर्थ । **विज्ञानमात्रमिति** । प्रत्यभिज्ञानिर्वाहाय क्षणिकविज्ञानसन्ततिरेवाहप्रत्ययालम्बनरूपात्मेति मन्यन्त इत्यर्थः । **शून्यमिति** । असत्स्वरूप एवात्मेति मन्यन्त इत्यर्थ. । **अस्ति तद्व्यतिरिक्त इति** । जीवव्यतिरिक्तोस्तीत्यर्थ. । **आत्मा स इति** । स ईश्वरः भोक्तुर्जीवस्य आत्मा स्वरूपमिति वेदान्तिनो वदन्तीत्यर्थ. । **विप्रतिपन्ना इति** । विरुद्धप्रतिपत्तिमापन्ना इत्यर्थ । **तदाभासेति** । अत्र तच्छब्देन युक्तिवाक्ये गृह्येते । **यत्किञ्चित्प्रतिपद्यमाना इति** । अन्त्यात्पक्षादर्वाचीन कञ्चित्पक्ष प्राप्यमाणा इत्यर्थ ।

व्याख्याने **विप्रतिपत्तीरुपन्यस्यतीति** । अत्र विरुद्धार्थप्रतिपादक वाक्यं विप्रतिपत्तिशब्दार्थः । **तार्किकादीति** । आदिशब्देन प्राभाकरादयो गृह्यन्ते । **विप्रतिपत्तिकोटित्वेन देहेन्द्रियेति** । संशयरूपविप्रतिपत्तिप्रथमकोटित्वेन देहेन्द्रियेत्यर्थः । **अकर्तापीति** । अकर्तापि जीव इत्यर्थ. । **निरतिशयसत्त्वमिति** । निर-

आत्मा स भोक्तुरित्यपरे । एवं बहवो विप्रतिपन्ना युक्तिवाक्यतदाभासस-

## ❀ रत्नप्रभा ❀

तमाह-**अस्ति तद्व्यतिरिक्त ईश्वर इति** । निरतिशयसत्त्वं गृहीत्वा ईश्वरः सर्वज्ञत्वादि-सम्पन्न इति **योगिनो वदन्ति** । भेदकोटिमुक्त्वा सिद्धान्तकोटिमाह-**आत्मा स भोक्तुरिति** । भोक्तुर्जीवस्याकर्तुः साक्षिणः स ईश्वर आत्मा स्वरूपमिति वेदान्तिनो वदन्तीत्यर्थः । विप्रतिपत्तीरुपसंहरति—**एवं बहव इति** । विप्रतिपत्तीनां प्रपञ्चो निरासश्च

## ❀ पूर्णानन्दीया ❀

तिशयसत्त्वोपाधिक. जीवातिरिक्तः ईश्वर इति वदन्तीति भाव । निरतिशयसत्त्वरूपो गुण योगिमते पारमार्थिकसत्यः सिद्धान्ते तु मायारूपत्वेन असत्य इति मतयोर्भेदः । **स ईश्वर इति** । योगिमतप्रसिद्ध ईश्वर इत्यर्थः । प्रतीकमादायात्मपदस्यार्थमाह-**आत्मा स्वरूपमिति** । सोपाधिकतया जीवस्य भोक्तृत्व कर्तृत्वं च वर्त्तते स्वतस्त्वभोक्तृत्वम-कर्तृत्वं साक्षित्व च तथा च जीवातिरिक्तो नेश्वर इति जीवब्रह्मणोरैक्यं वेदान्तिनो वन्दतीति भाव. । **विप्रतिपत्तीनामिति** । पक्षान्तराणामित्यर्थः ।

तासां विप्रतिपत्तीना सुखबोधार्थमेव हि ।
प्रपञ्चोपि निरासश्च सङ्ग्रहेणोच्यते मया ॥

तथाहि केचित्तु वक्ष्यमाणश्रुतियुक्तिभ्या स्थूलोऽह कृशोहमित्याद्यनुभवाच्च स्थूलशरीरमात्मेति वदन्ति । केचित्तूक्तश्रुतियुक्त्यनुभवानामाभासत्वान्मम शरीरमिति भे दप्रतीतेरिन्द्रियाणामभावे शरीरचलनाभावान्न शरीरस्यात्मत्वं किन्तु वक्ष्यमाणश्रुतियुक्तिभ्यां काणोऽहं बधिरोऽहमित्याद्यनुभवाच्चेन्द्रियाणामात्मत्वमिति वदन्ति । अन्ये तूक्त-श्रुतियुक्त्यनुभवानामाभासत्वान्ममेन्द्रियाणीति भेदप्रतिपत्तेः स्वप्ने चक्षुरादीन्द्रियव्य-वहाराभावेप्यहमित्यात्मनि परिपूर्णप्रत्ययान्मन.सम्बन्धाभावे इन्द्रियाणा चलनाभावा न्नेन्द्रियाणामात्मत्व किन्तु वक्ष्यमाणश्रुतियुक्तिभ्यां सङ्कल्पवानहं विकल्पवानहमित्याद्यनु-भवाच्च मन आत्मेति वदन्ति । अपरे तूक्तश्रुतियुक्त्यनुमानानामाभासत्वान्मम मन इति भेदप्रतीतेरहं मन इत्यप्रतीते कर्तृभावे करणशक्त्यभावाच्च मनसो नात्मत्वं किन्तु वक्ष्यमा-णश्रुतियुक्तिभ्यामह कर्ता भोक्तेत्याद्यनुभवाच्च बुद्धिरात्मेति वदन्ति । इतरे तूक्तश्रुतियु-क्त्यनुभवानामाभासत्वान्मम बुद्धिरिति प्रतीतेरहं बुद्धिरित्यप्रतीतेर्न बुद्धेरात्मत्वं किन्तु वक्ष्यमाणश्रुतियुक्तिभ्यां सुषुप्तौ नान्यदस्त्येव नाहमप्यासमिति व्युत्थि-तजनस्य सर्वाभावपरामर्शानुभवाच्च शून्यमात्मेति वदन्ति । अन्ये तूक्तश्रुतियुक्त्य-नुभवानामाभासत्वात्सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति व्युत्थितस्य परामर्शान्य-थानुपपत्त्या सुषुप्तावज्ञानादिसाक्षित्वेन परिपूर्णात्मप्रत्ययाङ्गीकारादहमुल्लेखिप्रत्यभिज्ञाना-च्च न शून्यस्यात्मत्वं किन्तु वक्ष्यमाणश्रुते. ममप्रत्ययालम्बनस्याहमुल्लेखमानस्य शरीरादेः भोक्तृत्वाद्यनुपपत्तिरूपयुक्ते कर्त्ता भोक्तेत्याद्यनुभवाच्च देहादिभ्यो व्यतिरि-

॥ रत्नप्रभा ॥

विवरणोपन्यासेन दर्शितः सुखबोधायेतीहोपरम्यते । तत्र युक्तिवाक्याश्रयाः सिद्धान्तिन. "जीवो ब्रह्मैव आत्मत्वाद् ब्रह्मवत्" इत्यादियुक्तेः "तत्त्वमसि" (छां६।८।१६) इत्यादिश्रुतेश्चाबाधितायाः सत्त्वात् । अन्ये तु देहादिगतमाऽहंप्रत्ययगोचरत्वाद्व्यतिरेकेण घटादिवदित्यादियुक्त्याभासम्, "स वा एप पुरुषोऽन्नरसमयः" (तै०आ२।१।१) इन्द्रियसंवादे "चक्षुरादयः ते ह वाचमूचुः" (बृ०१।३।२) "मन उवाच" "योऽयं विज्ञानमयः" (बृ०४।४।२२) "असदेवेदमग्र आसीत्"(छां०२।१३।१) "कर्ता""बोद्धा"

॥ पूर्णानन्दीया ॥

क्तः कर्ता भोक्ता प्रत्यभिज्ञानात् स्थिरः आत्मेति वदन्ति। अपरे तु कर्तृत्वं हि क्रियावेश॰ न हि सर्वगतस्य निरवयवस्यात्मन. परिणामलक्षणक्रियान्वयः सम्भवति । न च बुद्धेः कर्तृत्वमात्मनो भवतीति वाच्यम् । तन्मते तादात्म्याध्यासाभावात्, तस्मात्कर्तृत्वांशे उक्त श्रुतियुक्त्यनुभवानामाभासत्वाच्चात्मनो न कर्तृत्वं किन्तु वक्ष्यमाणश्रुते दृश्यावभासत्वमात्रात्मकभोक्तृत्वोपपत्तिरूपयुक्तेः भोक्तेत्यनुभवाच्च केवल भोक्तैवात्मेति वदन्ति । अन्ये तु वक्ष्यमाणश्रुतेः सर्वज्ञत्वाद्यनुपपत्तिरूपयुक्ते. नाहमीश्वर॰ किन्तु संसारीत्यनुभवाच्च भोक्तुर्जीवस्य नेश्वरत्वं किन्तु वक्ष्यमाणश्रुतेः सर्वज्ञत्वाद्युपपत्तिरूपयुक्तेः ईश्वरोस्तीत्यनुभवाच्च देहादिव्यतिरिक्तादहंप्रत्ययविषयाद्भोक्तुर्जीवादन्य॰ सर्वस्येशिता निरतिशयत्वोपाधिक ईश्वर इति वदन्ति । वेदान्तिनस्तु पूर्वोक्तश्रुतियुक्त्यनुभवानामाभासत्वाद्वक्ष्यमाणाबाधितश्रुतियुक्तिभ्यामहं ब्रह्मास्मीति विद्वदनुभवाच्च प्रत्यगस्थूलो चक्षुरप्राणोऽमनोऽकर्ता चैतन्यं चिन्मात्र स सदित्यादिप्रबलश्रुतेश्च भोक्तृत्वाद्यवभासस्य मिथ्यात्वात् स्वत नित्यशुद्धबुद्धमुक्तस्वभाव. स्वयं प्रकाशमानो जीव इति जीवब्रह्मणोरैक्यं वदन्ति । तस्मात्पुरुषार्थोस्तीति सिद्धम् ।

'युक्तिवाक्यतदाभाससमाश्रया' इति भाष्यं विभागपूर्वकं स्वमतपरमतानुसारेण योजयति **तत्र युक्तीति** । निर्दोषयुक्तिमबाधितश्रुतिवाक्यं च समाश्रया इत्यर्थः । 'तदाभासेति' भाष्यांशं व्याचष्टे **अन्ये त्वित्यादिना**। परपक्षेषु युक्तिं दर्शयति **देहादिरिति । व्यतिरेकेणेति** । यत्रात्मत्वाभावस्तत्राहंप्रत्ययगोचरत्वाभाव. यथा घट इत्यर्थ.। ननु परपक्षाः युक्तिमूलकत्वाद्ग्राह्याः स्युरित्यत आह **इत्यादि युक्त्याभासमिति** । आश्रिता इत्युत्तरेणान्वय. । युक्तिरिवाभासत इति युक्त्याभासः अनुमानाद्याभास इत्यर्थ॰। वस्तुतो न युक्तिरिति भाव. । देहात्मवादे प्रमाणत्वेनोक्ता श्रुतिं पठति **स वा एष इति** । इन्द्रियात्ममते श्रुतिमाह **इन्द्रियसंवाद इति**।'ते ह वाचमूचु'रिति वाक्यस्थतच्छब्दार्थं स्फोरयति **चक्षुरादय इति** । मनस आत्मत्वे श्रुतिमुदाहरति **मन उवाचेति** । विज्ञानात्मवादिमते प्रमाणत्वेनोक्तं 'कतम आत्मेति योयं विज्ञानमय' इत्यादिश्रुतिवाक्य दर्शयति **योऽयमिति** । असदात्ममते श्रुतिवाक्यं कथयति **असदेवेति** । कर्त्रात्ममते मन्ता बोद्धा कर्त्ता विज्ञानात्मेति श्रुतिं ज्ञापयति **कर्तेति** । कर्त्रात्ममत एवात्मनः भोक्तृत्वे

माश्रयाः सन्तः । तत्राविचार्य यत्किंचित्प्रतिपद्यमानो निःश्रेयसात्प्रतिहन्ये-

## ❀ रत्नप्रभा ❀

(प्रश्न०४।९) "अनश्नन्नन्यः" (श्वे०४।६) "आत्मानमन्तरो यमयति" इति वाक्याभासं चाश्रिता इति विभागः । देहादिरनात्मा भौतिकत्वाद्दृश्यत्वादित्यादिन्यायैः "आनन्दमयोऽभ्यासात्" (व्या०सू०१।१।१२) इत्यादिसूत्रैश्चाभासत्वं वक्ष्यते । **ननु** सन्तु विप्रतिपत्तयस्**तथापि** यस्य यन्मते श्रद्धा तदाश्रयणात्तस्य स्वार्थः सेत्स्यति, किं ब्रह्मविचारारम्भेणेत्यत आह-**तत्राविचार्येति** । ब्रह्मात्मैक्यज्ञानादेव मुक्तिरिति वस्तुगतिः । मतान्तराश्रयणे तदभावान्मोक्षासिद्धिः । **किञ्चात्मानमन्यथा** ज्ञात्वा तत्पापेन संसारान्धकूपे पतेत्, "अन्धं तमः प्रविशन्ति" (ईश०१२) "ये के चात्महनो जनाः" (ईश०३) इति श्रुतेः,

> योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
> किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥ १ ॥

इति वचनाच्चेत्यर्थः । अतः सर्वेषां मुमुक्षूणां निःश्रेयसफलाय वेदान्तविचारः कर्त-

## ❀ पूर्णानन्दीया ❀

प्रमाणत्वेनोक्तामात्मेन्द्रियमनोयुक्तं भोक्तेत्याहुरित्यादिश्रुतिं प्रतिपादयति **भोक्तेति** । भोक्त्रात्ममते श्रुतिमाह—**अनश्नन्नन्य इति**। साङ्ख्यमते 'तयोरन्यः पिप्पलं स्वाद्वत्तीति' कर्मफलानुभवरूपभोक्तृत्वं बुद्धेरेव नात्मनः किं त्वनश्नन्नन्यो अभिचाकशीतीति' इत्याव-भासत्वरूपभोक्तृत्वमात्मन इति मन्तव्यम् । योगिमते श्रुतिमुपन्यस्यति **आत्मानमन्तर इति**।

ननु पक्षान्तराणि श्रुतिमूलकत्वात् ग्राह्याणि स्युरित्यत आह—**वाक्याभासं चेति** । वाक्यमिवाभासत इति वाक्याभासः परमार्थतोऽवाक्यमतत्परत्वादित्यर्थः ।

ननु उक्तानां युक्तीनां श्रुतिवाक्यानां च कथमाभासत्वमित्याशङ्क्य देहादावात्मत्व-साधकानुमानस्य सत्प्रतिपक्षत्वेनाभासत्वं स्फोरयन् श्रुतिवाक्यानामाभासत्वप्रतिपादक-स्थलं स्फोरयति **देहादिरनात्मेति** । न्यायैर्युक्त्याभासत्वं सूत्रैर्वाक्याभासत्वमिति विवेकः । **विप्रतिपत्तय इति** । विवादा इत्यर्थः । **वस्तुगतिरिति** । मुक्तिं प्रति ज्ञानस्यैव हेतुता ह्यन्वयव्यतिरेकसिद्धा न कर्मण इति विदुषां निश्चय इत्यर्थः । मता-न्तराश्रयणे हि न केवलं मोक्षासिद्धिः किन्त्वात्महत्यादिदोषश्च स्यादित्यनर्थं चेयादिति भाष्यं व्याख्याति **किञ्चात्मानमिति** । अत्र ईशवाक्यं प्रमाणयति **ये केचेति** । आत्मानं घ्नन्तीत्यात्महनः के ते जना ये अविद्वांसः; लोके आत्मशब्दः प्राणत्यागे प्रसिद्धः प्रकृते प्राणत्यागस्यानुपयुक्तत्वात् अनात्मदर्शनेनात्मनो ह्यसत्त्वापादनमात्महननमुच्यते तथा च ये ह्यविद्वांसः ते आत्महन इति भावः । **तस्मादिति** भाष्यस्थहेतोरर्थं

तानर्थं चेयात् । तस्माद्ब्रह्मजिज्ञासोपन्यासमुखेन वेदान्तवाक्यमीमांसा तदविरोधितर्कोपकरणा निःश्रेयसप्रयोजना प्रस्तूयते ॥ १ ॥

## रत्नप्रभा

व्य इति सूत्रार्थमुपसंहरति—**तस्मादिति** । बन्धस्याध्यस्तत्वेन विषयादिसद्भावादगतार्थत्वादधिकारिलाभादापातप्रसिद्ध्या विषयादिसम्भवाच्च वेदान्तविषया मीमांसा-पूजिता विचारणा, वेदान्ताविरोधिनो ये तर्कास्तन्त्रान्तरस्थास्तान्युपकरणानि यस्याः सा निःश्रेयसायारभ्यत इत्यर्थः । **ननु** सूत्रे विचारवाचिपदाभावात्तदारम्भः कथं सूत्रार्थ इत्यत आह—**ब्रह्मेति** । ब्रह्मज्ञानेच्छोक्तिद्वारा विचारं लक्षयित्वा तत्कर्तव्यतां ब्रवीतीति भावः । **एवं** प्रथमसूत्रस्य चत्वारोऽर्था व्याख्यानचतुष्टयेन दर्शिताः । सूत्रस्य चानेकार्थत्वं भूषणम् । **नन्विदं** सूत्रं शास्त्राद्बहिः स्थित्वा शास्त्रमारम्भयत्यन्तर्भूत्वा वा ? **आद्ये**—तस्य हेयता, शास्त्रासम्बन्धात् । **द्वितीये**—तस्यारम्भकं वाच्यम् । **न च** स्वयमेवारम्भकम् । स्वस्मात्स्वोत्पत्तेरित्यात्माश्रयात् । **न चा**रम्भकान्तरं पश्याम इति । **उच्यते** । श्रवणविधिना आरब्धमिदं सूत्रं शास्त्रान्तर्गतमेव शास्त्रारम्भं प्रतिपादयति, **यथा**ऽध्ययनविधिर्वेदान्तर्गत एव कृत्स्नवेदस्याध्ययने प्रयुङ्क्ते तद्वदित्यनवद्यम् ॥ १ ॥

प्रथमसूत्रं समाप्तम् ॥ १ ॥

## पूर्णानन्दीया

वक्तुमुपसहारव्याजेन वर्णकचतुष्टये उक्तं हेतुचतुष्टयं क्रमेणानुवदति **बन्धस्याध्यस्तत्वेनेति । पूजितेति** । उत्कृष्टेत्यर्थः । **उपकरणानीति** । सहकारिकारणानीत्यर्थ. । आरम्भ· कथ सूत्रार्थ इति शङ्कावतारायोत्तरभाष्यं व्याख्याय ब्रह्मजिज्ञासेत्यादिपूर्वभाष्यमवतारयति **ननु सूत्र इति । भूषणमिति** । 'अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुख'मित्यादिश्रवणाद्भूषणमिति भाव. । **न पश्याम इति** । यदुक्तं तदसङ्गतं सूत्रमूलस्यारभकान्तरस्य श्रवणविधे. सत्त्वादिति । द्वितीयपक्षमलम्ब्य परिहरति **उच्यत इति** । इदं सूत्रमित्यर्थ· । इदं शास्त्रमिति पाठेऽप्ययमेवार्थ· । नास्त्यध्ययनविधावारंभकान्तरापेक्षा वेदस्यापौरुषेयत्वादिति भावः ॥ १ ॥

**चतुर्थवर्णकं समाप्तं प्रथमसूत्रञ्च ।**

## २ जन्माद्यधिकरणम् । सू० २

लक्षणं ब्रह्मणो नास्ति किं वास्ति नहि विद्यते। जन्मादेरन्यनिष्ठत्वात्सत्यादेश्चाप्रसिद्धितः॥१॥
ब्रह्मनिष्ठं कारणत्वं स्याल्लक्ष्यं स्रग्भुजङ्गवत् । लौकिकानीव सत्यादीन्यखण्ड लक्षयन्ति हि॥२॥

ब्रह्म जिज्ञासितव्यमित्युक्तम् । किंलक्षणं पुनस्तद्ब्रह्मेत्यत आह भग-

### रत्नप्रभा

प्रथमसूत्रेण शास्त्रारम्भमुपपाद्य शास्त्रमारभमाणः पूर्वोत्तराधिकरणयोः सङ्गतिं वक्तुं वृत्तं कीर्तयति-**ब्रह्मेति** । मुमुक्षुणा ब्रह्मज्ञानाय वेदान्तविचारः कर्तव्य इत्युक्तम् । ब्रह्मणो विचार्यत्वोक्त्या अर्थात् प्रमाणादिविचाराणां प्रतिज्ञातत्वेऽपि ब्रह्मप्रमाणं ब्रह्मयुक्तिरित्यादिविशिष्टविचाराणां विशेषणब्रह्मज्ञानं विना कर्तुमशक्यत्वात्तत्स्वरूपज्ञानायादौ लक्षणं वक्तव्यं तन्न सम्भवतीत्याक्षिप्य सूत्रकृतं पूजयन्नेव लक्षणसूत्रमवतारयति—**किंलक्षणकमिति** । **किमाक्षेपे** । नास्त्येव लक्षणमित्यर्थः । आक्षेपेणास्योत्थानाद्—**आक्षेपसंगतिः** । लक्षणद्योतिवेदान्तानां स्पष्टब्रह्मलिङ्गानां लक्ष्ये ब्रह्मणि समन्वयोक्तेः **श्रुति-**

### पूर्णानन्दीया

श्रीगुरुभ्यो नमः ।

प्रसिद्धश्रुतिभिर्वेद्यं विचार्यं च मुमुक्षुणा ।
प्रत्यग्रूपमहं वन्दे श्रीकृष्णं रुक्मिणीप्रियम् ॥

वर्णकचतुष्टयेनोक्तमर्थचतुष्टयमस्मिंछ्लोके संगृहीतमिति सुधीभिर्विभावनीयम् । **मुमुक्षुणेति** । अथातःपदद्वयसमर्थितेनाधिकारिणेत्यर्थः । अथ साधनचतुष्टयसम्पत्त्यनन्तरं अतः साधनचतुष्टयसम्पत्तेर्हेतोः सत्त्वादित्येवं अर्थात्साधितेनाधिकारिणा ब्रह्मज्ञानाय विचारः कर्तव्य इति प्रथमसूत्रस्यार्थः उक्त इति भावः । **प्रमाणादिविचाराणामिति** । आदिशब्देन लक्षणयुक्तिसाधनफलानि गृह्यन्ते । **ब्रह्मप्रमाणमिति** । आदिशब्देन ब्रह्मसाधनं ब्रह्मफलं च गृह्यते ब्रह्मणि प्रमाणं ब्रह्मणि या युक्तिरिति विशिष्टविचारः ब्रह्मविशेषणसापेक्षः विशेषणीभूतब्रह्मणः ज्ञानं विना न सम्भवतीति भावः । **पूजयन्नेवेति** । जिज्ञास्यपुरुषार्थब्रह्मस्वरूपस्य सूत्रकृता दर्शितत्वात् भगवानिति पदप्रयोगेन पूजयन्नेवेत्यर्थः । **नास्त्येवेति** । लक्षणाभावान्न ब्रह्मस्वरूपं सिद्ध्येदिति येन शास्त्रारम्भः स्यादित्याक्षेप्तुरभिप्रायः । **अस्येति** । जन्मादिसूत्रस्येत्यर्थः । सूत्रस्य श्रुत्यर्थबोधकत्वात् 'यतो वा इमानी'त्यादिश्रुतिभिः सह एकार्थबोधकत्वरूपा संगतिर्वेदितव्या । तं श्रुत्यर्थं ज्ञापयति **लक्षणद्योतीति** । यतो वा इमानीत्यादिलक्षणद्योतिवेदान्तानामित्यर्थः । सूत्रमपि जगत्कारणत्वादिरूपलक्षणबोधकं भवतीति भावः । द्वितीयसूत्रप्रथमपादयोः स्पष्टब्रह्मलिङ्गकश्रुत्यर्थबोधकत्वं सङ्गतिः तच्च स्पष्टब्रह्मलिङ्गत्वं ज्ञापयति **स्पष्टब्रह्मलिङ्गकानामिति**। यथा प्रथमपादः 'यतो वे'त्यादीनां स्पष्टब्रह्मलिङ्गकश्रुतीनामर्थं बोधयति तथा लक्षणसूत्रमपि तासामेवार्थं बोधयतीति तयोरेकार्थबोधकत्वं सङ्गतिरिति भावः । सूत्रस्य शास्त्रार्थप्रतिपा-

**❀ रत्नप्रभा ❀**

शास्त्राध्यायपादसंगतयः । **तथाहि**—"यतो वा इमानि भूतानि जायन्ते" इत्यादिवाक्यं विषयः । तत्किं ब्रह्मणो लक्षणं वक्ति **न** वेति सन्देहः । तत्र **पूर्वपक्षे** ब्रह्मस्वरूपासिद्ध्या मुक्त्यसिद्धिः फलं, **सिद्धान्ते** तत्सिद्धिरिति भेदः । यद्यप्याक्षेपसङ्गतौ पूर्वाधिकरणफलमेव फलमिति कृत्वा पृथङ् न वक्तव्यम्, **तदुक्तम्**—

> आक्षेपे चापवादे च प्राप्त्यां लक्षणकर्मणि ।
> प्रयोजनं न वक्तव्यं यच्च कृत्वा प्रवर्तते ॥ १ ॥

इति, **तथापि** स्पष्टार्थमुक्तमिति मन्तव्यम् । **अत्र** पूर्वाधिकरणसिद्धान्तेन पूर्वपक्षः, **तत्रापवादिकी संगतिः** । **प्राप्तिः**—तदर्था चिन्ता । तत्र न वक्तीति प्राप्तम् । जन्मादेर्जगद्धर्मत्वेन ब्रह्मलक्षणत्वायोगात् । **न च** जगदुपादानत्वे सति कर्तृत्वं लक्षणमिति

**❀ पूर्णानन्दीया ❀**

दकत्वाच्छास्त्रसङ्गति· त शास्त्रार्थं ज्ञापयति **लक्ष्ये ब्रह्मणीति** । शास्त्रं शास्त्रार्थत्वेन ब्रह्मबोधकं भवति सूत्रस्य प्रथमाध्यायार्थैकदेशप्रतिपादकत्वात् प्रथमाध्यायेनैकार्थबोधक· त्वरूपा सङ्गति· । तमध्यायार्थं स्फुटीकरोति **समन्वयोक्तेरिति** । प्रथमाध्यायेन 'यतो वा इमानी'त्यादिश्रुतिगत–यत–इत्यादिपदाना ब्रह्मतात्पर्यकत्वरूपसमन्वयो बोध्यते लक्षणसूत्रेणापि तच्छ्रुतिगत–यत–इत्यादिपदानां ब्रह्मतात्पर्यकत्व बोध्यत इति भावः । उक्तसङ्गतिप्रदर्शनार्थमधिकरणमारचयति **तथाहीति** । अधिकरणान्ते अस्य विषयवाक्यस्यार्थो वक्ष्यते । विषयः उद्देश्यमित्यर्थ । तथा च वाक्यमुद्दिश्य संशयादिकं प्रतिपाद्यत इति भाव । **आक्षेप इति** । आक्षेपाधिकरण इत्यर्थ । **अपवाद इति** । अपवादाधिकरण इत्यर्थः । **प्राप्ताविति** । प्राप्तिसूत्र इत्यर्थ· । **लक्षणकर्मणीति** । लक्षणसूत्र इत्यर्थ. । **यच्च कृत्वेति** । यदधिकरणमुद्दिश्याक्षेपादिक प्रवर्तते तत्प्रयोजनकत्वादाक्षेपादीनां पृथक्प्रयोजन न वक्तव्यम् । अथवा कृत्वा प्रवर्तत इत्यस्य कृत्वा प्रवर्तनमर्थ·, कृत्वाप्रवर्तनं नाम कृत्वा चिन्ता सा चाभ्युपगमवादः, अत्र तस्मिन्निति शेष तथा च यच्च कृत्वा प्रवर्तते तस्मिन्नित्यनेन कृत्वाचिन्ताधिकरण इत्युक्तं भवति । अस्मिन्पक्षे अवशिष्टस्य प्रयोजन न वक्तव्यमित्यंशस्यायमभिप्राय । यदुद्दिश्याक्षेपादिकं प्राप्तं तत्प्रयोजनप्रयोजनकत्वादाक्षेपादीनां पृथक्प्रयोजनं न वक्तव्यमिति । एतत्सर्वं **कल्पतरौ** विस्तरेणोदाहृतं विस्तरभयादत्रोपरम्यते । **सिद्धान्तेन पूर्वपक्ष इति** । सिद्धान्तयुक्त्या उत्तराधिकरणपूर्वपक्ष इत्यर्थः । 'यतो वा इमानि भूतानी'त्यादिवाक्येन ब्रह्मणः सकाशात् जन्मादिकं जगतः प्रतीयते, प्रतीयमानं ब्रह्महेतुकजन्मादिधर्मवत्त्वमेव ब्रह्मणो लक्षणं चेदतिव्याप्तिरसम्भवश्चेत्यभिप्रेत्य प्रतिज्ञापूर्वकं पूर्वपक्षयति **तत्र न वक्तीति** । जगद्धर्मत्वेनेत्यनेनातिव्याप्तिर्ज्ञापिता अयोगादित्यनेनासम्भवः प्रतिपादित इति भावः । अतिव्याप्त्यादिदोषग्रस्तत्वान्मास्तु जन्मादिधर्मवत्त्वलक्षण श्रुतिप्रामाण्यादन्यदेवास्त्विति सिद्धांती शङ्कते **न चेति** । 'तदात्मानं स्वयमकु·

वान्सूत्रकारः—

## जन्माद्यस्य यतः ॥ २ ॥

### रत्नप्रभा

**वाच्यम्** । कर्तुरुपादानत्वे दृष्टान्ताभावेनानुमानाप्रवृत्तेः । **न च** श्रौतस्य ब्रह्मणः श्रुत्यैव लक्षणसिद्धेः किमनुमानेनेति **वाच्यम्** । अनुमानस्य श्रुत्यनुग्राहकत्वेन तदभावे तद्विरोधे वा श्रुत्यर्थासिद्धेः । **न च** जगत्कर्तृत्वमुपादानत्वं वा प्रत्येकं लक्षणमस्त्विति **वाच्यम्** । कर्तृमात्रस्योपादानाद्भिन्नस्य ब्रह्मत्वायोगात् । **वस्तुतः** परिच्छेदादिति प्राप्ते पुरुषाभ्यूहमात्रस्यानुमात्रस्याप्रतिष्ठितस्यातीन्द्रियार्थे स्वातन्त्र्यायोगात् अपौरुषेयतया निर्दोषश्रुत्युक्तोभयकारणत्वस्य सुखादिदृष्टान्तेन सम्भावयितुं शक्यत्वात्, तदेव लक्षणमिति सिद्धान्तयति—**जन्माद्यस्य यत इतीति** ।

### पूर्णानन्दीया

रत, तत्सृष्ट्वे'त्यादिना उपादानत्वं कर्तृत्वं च प्रतिपाद्यत इति भाव । उक्तलक्षणस्यानुमानेन साधयितुमशक्यत्वान्न सिद्धिरिति पूर्ववादी परिहरति **कर्तुरुपादानत्व इति** । ब्रह्म कर्तृत्वविशिष्टोपादानत्ववच्चेतनत्वादिति प्रयोगे यत्र चेतनत्वं तत्र कर्तृत्वविशिष्टोपादानत्वमित्यत्रामुक इति दृष्टान्ताभावेनेत्यर्थ । **श्रौतस्येति** । 'यतो वा इमानि भूतानी'त्यादिश्रुतिप्रमाणकस्य ब्रह्मण 'स्वयमकुरुत तत्सृष्ट्वा यतो वा इमानी'त्यादिश्रुत्यैव लक्षणसिद्धेरित्यर्थ. । **श्रुत्यनुग्राहकत्वेनेति** । श्रुत्यर्थे पुरुषस्य संदेहनिवर्तकमानत्वेनेत्यर्थः । **प्रत्येकं लक्षणमिति** । दृष्टान्तसम्भवादिति भाव । **ब्रह्मत्वायोगादिति** । ब्रह्मण उपादानाद्भिन्नत्वे प्रोक्ते सत्यन्यत्वेनोपादानस्य स्थितत्वाद्वस्तुपरिच्छेदेन अद्वितीयत्वरूपब्रह्मत्वायोगान्न प्रत्येकं लक्षणमिति भाव. । नास्त्येव लक्षणमिति पूर्वपक्षमुपपाद्यास्त्येवेति सिद्धान्तमवतारयति **पुरुषेति** । पुरुषस्योहमात्रत्वादेवानुमानस्याप्रतिष्ठितत्वम्, तथा हि अनुमितिकरणमनुमानम् । तच्च ज्ञायमानलिङ्गमिति केचित् । परामर्श इत्यपरे । व्याप्तिज्ञानमित्यन्ये । तस्मादनुमानस्य भ्रान्तपुरुषबुद्धिमूलकत्वेन परस्परदूषणग्रस्तस्य इदमिति निर्देष्टुमशक्यत्वादप्रतिष्ठितत्वमिति भाव । कर्तुरुपादानत्वे दृष्टान्तसम्भवेन अनुमानप्रवृत्तेरुक्तलक्षणसिद्धिरित्याह **अपौरुषेयतयेति** । **उभयकारणत्वस्येति** । उपादाननिमित्तोभयकारणत्वस्येत्यर्थः । सुख प्रत्यदृष्टद्वारा निमित्तत्व समवायिकारणत्व चात्मनि दृष्ट तस्मादभिन्ननिमित्तोपादानक सुखमिति दृष्टान्तोपपत्तिरिति भाव. । आदिशब्देन कर्मसयोगौ गृह्येते, तथाहि—स्वकृतयागादिक प्रति कर्तृत्वमुपादानत्व च पुरुषे दृश्यते तस्मादभिन्ननिमित्तोपादानकं कर्मेति निर्विवादोऽय दृष्टान्त.। घटाकाशसयोगं प्रति निमित्तत्वं समवायिकारणत्वं चाकाशेऽस्तीत्यभिन्ननिमित्तोपादानकः संयोग इत्ययमपि सर्वसंमतो दृष्टान्त । अत्रैवं प्रयोग —जगदभिन्ननिमित्तोपादानकं कार्यत्वात्सुखादिवत्, अथवा ब्रह्म निमित्तत्वविशिष्टोपादानत्ववच्चेतनत्वादात्मादिवदित्यनवद्यम् ।

जन्मोत्पत्तिरादिरस्येति तद्गुणसंविज्ञानो बहुव्रीहिः । जन्मस्थितिभङ्गं

## ❀ रत्नप्रभा ❀

अत्र **यद्यपि** जगज्जन्मस्थितिलयकारणत्वं लक्षणं प्रतिपाद्यते, **तथाप्यग्रे** "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधात" (व्या.सू.१।४।२३।(७) इत्यधिकरणे तत्कारणत्वं न कर्त्तृत्व-मात्रं किन्तु कर्तृत्वोपादानत्वोभयरूपमिति वक्ष्यमाणं सिद्धवत्कृत्वोभयकारणत्वं लक्षण-मित्युच्यत इति न पौनरुक्त्यम् । **ननु** जिज्ञास्यनिर्गुणब्रह्मणः कारणत्वं कथं लक्षणमिति **चेद्** । **उच्यते-यथा** रजतं शुक्तेर्लक्षणं यद्रजतं सा शुक्तिरिति, **तथा** यज्जगत्कारणं तद्ब्रह्मेति कल्पितं कारणत्वं तटस्थं सदेव ब्रह्मणो लक्षणमित्यनवद्यम् । सूत्रं व्या-चष्टे—**जन्मेत्यादिना** । बहुव्रीहौ पदार्थाः सर्वे वाक्यार्थस्यान्यपदार्थस्य विशेष-णानि । **यथा**—चित्रगोर्देवदत्तस्य चित्राः गावः, **तद्वद्**त्रापि जन्मादीति नपुंस-

## ❀ पूर्णानन्दीया ❀

ननु जगज्जन्मादिकारणत्वं नाम कर्तृत्वे सत्युपादानत्वमिति अनेन द्वितीयसूत्रेण सा-धितं चेत्तर्हि अग्रिमेण तत्कारणत्वं न कर्तृत्वमात्रं किन्तु कर्तृत्वोपादानत्वोभयरूपमित्य-नेन ग्रन्थेन पौनरुक्त्यं स्यादित्याशंक्याह **अत्र यद्यपीत्यादिना** । **उच्यत इतीति** । अत्रानूद्यत इत्यर्थः । अयमाशयः—अनेन सूत्रेण जन्मादिकारणत्वमेव प्रतिपाद्यते नो-भयकारणत्वं किन्तूभयकारणत्वमनूद्यते, अग्रे 'प्रकृतिश्चे'त्यधिकरणे तूभयकारणत्वमेव प्रतिपाद्यते न कारणत्वं किन्तु कारणत्वमनूद्यते तस्मान्न पौनरुक्त्यमिति। **तटस्थमिति** । यो हि व्यावर्तको धर्मः लक्ष्याविद्यमानस्वरूपबहिर्भूत स तटस्थलक्षणमित्यर्थः । तथा च यद्रजतमभात्सा शुक्तिरिति आरोपितेन रजतेन शुक्तिर्लक्ष्यते यथा तथा य-ज्जगत्कारणं तद्ब्रह्मेति आरोपितेन जगत्कारणत्वेन ब्रह्म लक्ष्यते आरोपितत्वेपि तस्य ब्रह्मण्येवासाधारणत्वादिति भाव । **श्रीमदद्वैतानन्दश्रीगुरुचरणास्तु ब्रह्मविद्याभरणाख्यग्रन्थे** "यो हि धर्म असाधारण सन्नेव कदाचिद्धर्मिणा सबध्यते स धर्मस्तु तटस्थलक्षणमित्युच्यते यथा छत्रचामरादिक राज्ञ इति तटस्थलक्षणं वदन्ति । **सूत्रं व्याचष्ट इति** । पदच्छेदः पदार्थोक्तिः पदविग्रह इति व्याख्यानाङ्गं संपा-दयन् सूत्रं व्याचष्ट इत्यर्थः ।

ननु भवतु तद्गुणसंविज्ञानो बहुव्रीहि तथापि जन्मस्थितिभङ्गास्त्रयो विशेष्या भव-न्ति तत्कथं जन्मस्थितिभङ्ग समासार्थं इत्येकत्वनिर्देश इत्याशङ्क्य भाष्यस्थस्येति पदस्यार्थं स्फोरयन्नाह **अत्रापि जन्मादीति**। समाहारस्य समुदायस्येत्यर्थः । तथा च यथा चित्रगोसम्बन्धित्वविशिष्टदेवदत्तस्य चित्राः गाव विशेषणानि तथा समासार्थस्य विशेष्यस्य जन्मादिविशिष्टजन्मस्थितिभङ्गसमुदायस्य एकदेशं जन्म विशेषणमित्यर्थः । यद्यपि चित्रगोर्देवदत्तस्येत्यत्रातद्गुणसंविज्ञानो बहुव्रीहिर्जन्मादीत्यत्र तद्गुणसंविज्ञान-बहुव्रीहिरिति वैषम्यं तथापि दृष्टान्तस्तु विशेषणांश एव न तद्गुणसंविज्ञानबहुव्रीहाविति

समासार्थः । जन्मनश्चादित्वं श्रुतिनिर्देशापेक्षं वस्तुवृत्तापेक्षं च । श्रुतिनिर्देशस्तावत् 'यतो वा इमानि भूतानि जायन्ते' ( तैत्ति० ३।१ ) इत्यस्मिन्वाक्ये जन्मस्थितिप्रलयानां क्रमदर्शनात् । वस्तुवृत्तमपि, जन्मना लब्धसत्ताकस्य धर्मिणः स्थितिप्रलयसंभवात् । अस्येति प्रत्यक्षादिसंनिधापित-

## रत्नप्रभा

कैकवचनद्योतितस्य समाहारस्य जन्मस्थितिभङ्गस्य जन्म विशेषणम् । तथा च जन्मनः समासार्थैकदेशस्य गुणत्वेन संविज्ञानं यस्मिन् बहुव्रीहौ स तद्गुणसंविज्ञान इत्यर्थः । तत्र यज्जन्मकारणं तद्ब्रह्मेति ब्रह्मत्वविधानमयुक्तम्, स्थितिलयकारणाद्भिन्नत्वेन ज्ञाते ब्रह्मत्वस्य ज्ञातुमशक्यत्वात् । अतो जन्मस्थितिभङ्गैर्निरूपितानि त्रीणि कारणत्वानि मिलितान्येव लक्षणमिति मत्वा सूत्रे समाहारो द्योतित इति ध्येयम् । नन्वादित्वं जन्मनः कथं ज्ञातव्यं संसारस्यानादित्वादित्यत आह—**जन्मनश्चेति** । मूलश्रुत्या वस्तुगत्या चादित्वं ज्ञात्वा तदपेक्ष्य सूत्रकृता जन्मन आदित्वमुक्तमित्यर्थः । इदमः प्रत्यक्षार्थमात्रवाचित्वमाशंक्योपस्थितसर्वकार्यवर्गवाचित्वमाह—**अस्येतीति** । वियदादि-

## पूर्णानन्दीया

भाव.। तस्य विशेष्यैकदेशस्य गुणत्व विशेषणत्वं यस्मिन् बहुव्रीहौ स तद्गुणसंविज्ञानो बहुव्रीहिरित्याभिप्रेत्याह **तथा चेति**। सर्वस्य विशेषणत्वे समासासम्भवात्समासैकदेशो विशेपणमिति मत्वाह **समासार्थैकदेशस्येति** । समाहारस्य समासार्थप्रविष्टत्वेन विशेष्यैकदेशस्येत्यर्थः । **गुणत्वेनेति** । विशेषणत्वेनेत्यर्थ. । **संविज्ञानमिति** । ज्ञानमित्यर्थ ।

नन्वत्र तद्गुणसंविज्ञानबहुव्रीहिः किमर्थ इति चेत्, जन्मस्थितिभङ्गस्य समासार्थतालाभार्थमिति ब्रूम । यद्यतद्गुणसंविज्ञानबहुव्रीहिमाश्रित्य स्थितिलयद्वयमेव समासार्थोऽस्त्विति शङ्केत तदा ब्रह्मणः स्थितिलयनिरूपितकारणत्वमेव स्यात् । न चेष्टापत्तिरतिव्याप्त्यादिदोषाभावादिति वाच्यम् । स्थितिकारणत्वं लयकारणत्वं वा लक्षणमित्युक्ते अतिव्याप्त्यादिदोषाभावेपि जन्मकारण ब्रह्मणोऽन्यदेवेति भिन्नत्वभ्रमे ब्रह्मणः वस्तुपरिच्छेदेन अद्वितीयत्वरूपब्रह्मत्वायोगात्, तस्मात् त्रितयनिरूपितकारणत्वलाभार्थ तद्गुणसंविज्ञानबहुव्रीहिमाश्रित्य जन्मस्थितिभङ्गरूपसमाहार एव समासार्थ इत्यवश्यमङ्गीकरणीयमित्येतमर्थं स्फोरयति **तत्र यज्जन्मकारणमिति**। 'जन्माद्यस्य यत' इत्येव सूत्रं स्यादित्यभिप्रायेणाह **यज्जन्मेति** । अत्र जन्मकारणं कर्तृरूपं विवक्षितं तस्मान्न मायायामतिव्याप्तिरित्यभिप्रेत्य दोषान्तरमाह **स्थितिलयेति** । **समाहारो द्योत्यत इति** । सूत्रस्थजन्मादीति नपुंसकैकवचनेन समाहारो द्योतित इति भाव. । **संसारस्यानादित्वादिति** । संसारस्यानादित्वेन स्थितिनाशानन्तरमप्युत्पत्तेर्दृश्यत्वादिति भावः। **वस्तुगत्या चेति** । एकैकसर्गं पुरस्कृत्य चेति शेष. । जनित्वा स्थित्वा विलीयत इत्यनुभवो वस्तुगतिशब्दार्थ । **इदम इति** ।

स्य धर्मिण इदमा निर्देशः । षष्ठी जन्मादिधर्मसम्बन्धार्था । यत इति का

## रत्नप्रभा

जगतो नित्यत्वान्न जन्मादिसम्बन्ध इत्यत आह—**षष्ठीति** । वियदादि-महाभूतानां जन्मादिसम्बन्धो वक्ष्यत इति भावः । **ननु** जगतो जन्मादेर्वा ब्रह्मसम्बन्धाभावान्न लक्षणत्वमित्याशंक्य तत्कारणत्वं लक्षणमिति पञ्चम्यर्थमाह—**यत इतीति** । यच्छब्देन सत्यं ज्ञानमनन्तमानन्दरूपं वस्तूच्यते । "आनन्दाद्ध्येव" (तै०आ०३।६।१) इति निर्णीतत्वात्, तथा च स्वरूपलक्षणसिद्धिरिति मन्तव्यम् । पदा-

## पूर्णानन्दीया

अस्य जगत जन्मादीत्यादिना प्रत्यक्ष यज्जगत्तत्कारणत्वमेव ब्रह्मण प्रतिपाद्यते न त्वाका-शादिकारणत्वमाकाशादेरप्रत्यक्षत्वादिति शङ्कितुरभिप्रायः । **प्रत्यक्षादिसन्निधापित-स्येति** । प्रत्यक्षानुमानादिप्रमाणै सवेदितस्येति भाष्यपदस्यार्थ । **महाभूतानां जन्मादीति** ।

ननु जन्मादीनां वियदादिजगतश्च क सम्बन्धः षष्ठ्या विवक्षित इति चेत् । अत्रो-च्यते—स्वरूपादिसम्बन्धः षष्ठ्या विवक्षित इति भाव । स्वोक्तमभिन्ननिमित्तोपादानत्व-रूप जन्मादिकारणत्वलक्षण भाष्यारूढं कर्तुमिच्छन्नवतारयति **ननु जगत इति** । सूत्रेण जन्मादिसम्बन्धिजगत्सम्बन्धित्वं जन्मसम्बन्धिजन्मादिसम्बन्धित्वं वा प्रतीयते तच्च न ब्रह्मलक्षणमसम्भवदोषग्रस्तत्वादिति शंकार्थ । ईश्वरनिष्ठं जगत्कारणत्वं शुद्धस्य तटस्थलक्षणमिति सिद्धान्तार्थ. । **यत इति** पद षष्ठ्यन्तमिति शङ्कितुरभिप्राय. । सिद्धा-न्त्यभिप्रायस्तु पञ्चम्यन्तमिति भेद । **आनन्दाध्येवेतीति** । तैत्तिरीयक इति शेष. । श्रुतिषु ब्रह्मबोधकपदानामिदमानन्दपदमुपलक्षणमिति मन्तव्यम् । **स्वरूपलक्षणेति** । ननु सर्वत्र धर्म एव लक्षण भवति तत्कथं धर्म्यैव स्वस्य लक्षणमिति चेत् । अत्रोच्यते-नहि सत्यज्ञानानन्दाभिन्नं धर्मिमात्रं मुख्य लक्षणमिति वदाम, अपि तु तदवगम इतरव्या-वृत्तबुद्धावुपयुज्यते इति तस्य लक्षणत्वोपचार इति भाव । केचित्तु स्वरूपमेव लक्षण स्वरूपलक्षणं यथा 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यत्र सत्यादिकं स्वरूपलक्षणम् ।

ननु स्वस्य स्ववृत्तित्वाभावे सति कथं लक्षणत्वमिति चेत्, न, स्वस्यैव स्वापेक्षया धर्मधर्मिभावकल्पनया लक्षणत्वसम्भवात्, तदुक्तम्—'आनन्दो विषयानुभवो नित्यत्वञ्चे-ति सन्ति धर्मा अपृथक्त्वेऽपि चैतन्यात् पृथगिव अवभासन्त' इत्याहु । ननु स्वरूपतटस्थ-लक्षणोपन्यासस्य किं प्रयोजनमिति चेत्, अत्र **ब्रह्मविद्याभरणे** श्रीगुरुचरणास्त्वेवमाहु — तथाहि यथा चन्द्रं दिदर्शयिषुराप्तो प्रथम दिगन्तरगतनक्षत्रादिभ्यो दृष्टिं वारयितु शाखायां चन्द्र इति अधिकरणतया सम्बन्धविशेषेण प्रथमं शाखामुपादत्ते ततश्च दिगन्तरव्यावृत्त-चक्षुष चन्द्रसमीपवर्तितारकादिषु चन्द्रभ्रमो मा भूदिति तत्स्वरूपं प्रकृष्टप्रकाशात्मकं बोधयति एवं हि बोध्यबुद्धि सुखेन चन्द्रे अवतारिता भवति । एवं 'ब्रह्मविदाप्नोति

रणनिर्देशः । अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृसंयुक्तस्य

## रत्नप्रभा

र्थमुक्त्वा पूर्वसूत्रस्थब्रह्मपदानुषङ्गेण तच्छब्दाध्याहारेण च सूत्रवाक्यार्थमाह—**अस्येत्यादिना** । कारणस्य सर्वज्ञत्वादिसम्भावनार्थानि जगतो विशेषणानि । **यथा**—कुम्भकारः प्रथमं कुम्भशब्दाभेदेन विकल्पितं पृथुबुध्नोदराकारस्वरूपं बुद्धावालिख्य तदात्मना कुम्भं व्याकरोति बहिः प्रकटयति, **तथा** परमकारणमपि स्वेक्षितं नामरूपात्मना व्याकरोति इत्यनुमीयत इति मत्वाह—**नामरूपाभ्यामिति** । इत्थम्भावे तृतीया । आद्यकार्यं चेतनजन्यं कार्यत्वात् कुम्भवदिति प्रधानशून्ययोर्निरासः । हिरण्यगर्भादिजीवजन्यत्वं निरस्यति—**अनेकेति** । श्राद्धवैश्वानरेष्ट्यादौ पितापुत्रयोः कर्तृभोक्त्रोर्भेदात्पृथगुक्तिः "यो ब्रह्माणं विदधाति पूर्वम्" "सर्व एत आत्मानो व्युच्चरन्ति"

## पूर्णानन्दीया

पर'मित्युपश्रुत्य ब्रह्मशब्दस्यानेकत्र प्रयोगदर्शनान्मुमुक्षोर्ज्ञेय· ब्रह्मशब्दार्थः क इति बुभुत्सोर्जगत्कारणत्वोपन्यासेन येषु जीवादिषु जगत्कारणत्वं न सम्भवति तेषां सृज्यकोटौ निविष्टतया स्रष्टृत्वासम्भवात् तेभ्यो व्यावृत्तबुद्धेरपि सम्भवज्जगत्कारणभावेषु प्रधानादिषु ब्रह्मत्वभ्रममपनेतु स्वरूपलक्षणमुपन्यस्य तेन हि जडाना प्रधानादीनां ज्ञानादिस्वरूपतापपद्यते ततश्च आद्यं लक्षण केभ्यश्चिद्व्यावृत्तिनिश्चयपूर्वकं बुद्धिस्थिरीकरणार्थं द्वितीय तु सकलभ्रमनिवृत्तिपूर्वकं वस्तुस्वरूपनिश्चयार्थमिति । **पदार्थमुक्त्वेति** । सूत्रपदानां प्रत्येकं अर्थमुक्त्वेत्यर्थः । जगत्कारणस्य चेतनत्वसर्वेश्वरत्वसर्वज्ञत्वसर्वशक्तित्वसभावनार्थानि नामरूपाभ्यामित्यादीनि जगतश्चत्वारि विशेषणानि भवन्ति, तथा च क्रमसनुसृत्य चेतनत्वादिसंभावनार्थानीत्येवमुक्तमुचितं तथापि यत्र सर्वज्ञत्वं तत्र चेतनत्वं यत्र सर्वशक्तित्वं तत्रेश्वरत्वमित्यव्यभिचरितव्याप्त्या सर्वज्ञत्वादिग्रहणेन चेतनत्वादिलाभात् सर्वज्ञात्सर्वशक्तेरित्युत्तरभाष्यानुकूल्याच्च क्रमं विहाय सर्वज्ञत्वादिसम्भावनार्थानीति व्याख्यातमिति भावः । **कुम्भकार इति** । घटं चिकीर्षु· कुलाल इत्यर्थः । **शब्दाभेदेनेति** । शब्दवाच्याभेदेनेत्यर्थः । आलिख्य विचार्येत्यर्थः । **व्याकरोतीति**पदस्य स्वप्रयुक्तस्य स्वयमेवार्थं व्युत्पादयति **बहिः प्रकटयतीति**। प्रथमं बुद्धावालिख्य पश्चाद्घटशब्दालम्बनयोग्यं घटं कुम्भकारः बहिर्निर्वर्तयति यथा तथा मूलकारणमपि नामरूपात्मना बुद्धावाविर्भूतमेव सर्वं पश्चाद्व्यनक्तीति अनुमीयत इति भाव· । **इत्थंभाव इति** । अभेद इत्यर्थ । नामरूपाभिन्नतया व्यक्तीकृतस्येति भाष्यपदस्यार्थः । जगत्कारणस्य चेतनत्वसाधनफलमाह इति **प्रधानेति** । **निरास इति** । जगत्कारणत्वनिरास इत्यर्थ । कर्तृभोक्तृपदद्वयस्य कृत्यमाह **श्राद्धेति** । श्राद्धे पितुः भोक्तृत्वं पुत्रस्य कर्तृत्व वैश्वानरेष्टौ पुत्रस्य भोक्तृत्वं पितु कर्तृत्वमिति भेदात्कर्तृशब्देन भोक्ता नोच्यते तस्मात्पृथगुक्ति· न व्यर्थेति भावः ।

नन्वेतावता जीवजन्यत्वनिरासः कथमित्यत आह यो **ब्रह्माणमिति** । परमेश्वरः

प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात्सर्वशक्तेः कारणाद्भवति तद्ब्रह्मेति वाक्यशेषः । अन्येषामपि भावविकाराणां त्रिष्वेवान्तर्भाव इति जन्मस्थितिनाशानामिह ग्रहणम् । यास्कपरिपठितानां तु 'जायतेऽस्ति' इत्यादीनां

## रत्नप्रभा

(श्वेता०६।१८) इति श्रुत्या स्थूलसूक्ष्मदेहोपाधिद्वारा जीवानां कार्यत्वेन जगन्मध्यपातित्वान्न जगत्कारणत्वमित्यर्थः । कारणस्य सर्वज्ञत्वं सम्भावयति–**प्रतिनियतेति** । **प्रतिनियतानि**–व्यवस्थितानि देशकालनिमित्तानि येषां क्रियाफलानां तदाश्रयस्येत्यर्थः । स्वर्गस्य क्रियाफलस्य मेरुपृष्ठं देशः, देहपातादूर्ध्वं काल उत्तरायणमरणादिनिमित्तं च प्रतिनियतम् । एवं राजसेवाफलग्रामादेर्देशादिव्यवस्था ज्ञेया । तथा च **यथा** सेवाफलं देशाद्यभिज्ञदातृकं **तथा** कर्मफलं फलत्वादिति सर्वज्ञत्वसिद्धिरिति भावः । सर्वशक्तित्वं सम्भावयति–**मनसाऽपीति** । **नन्व**न्येऽपि विपरिणामादयो भावविकाराः सन्तीति किमिति जन्मादीत्यादिपदेन न गृह्यन्ते, तत्राह–**अन्येषामिति** । वृद्धिपरिणामयोर्जन्मनि अपक्षयस्य नाशेऽन्तर्भाव इति भावः । **ननु** 'देहो जायते–अस्ति–वर्धते–विपरिणमते–अपक्षीयते–नश्यति' (निरु०निर्व०१।१।१) इति यास्कमुनिवाक्यमेतत्सूत्रमूलं किं न स्यादत आह–**यास्केति** । यास्कमुनिः किल महाभूतानामुत्पन्नानां

## पूर्णानन्दीया

प्रथमं हिरण्यगर्भं सृजतीति श्रुत्यर्थ । विशेषजीवोत्पत्तौ श्रुतिमुक्त्वा सर्वजीवोत्पत्तौ श्रुतिमाह **सर्व इति** । ननु हिरण्यगर्भादीनां जीवाना नित्यत्वेन कथं कार्यत्व तत्राह–**स्थूलेति** । जगतः जीवजन्यत्वनिरासात् जगत्कारणस्येश्वरत्वं प्रसाधितमिति भाव । ननु जगन्मध्यवर्त्तित्वेपि विश्वामित्रादियोगिना तत्कर्तृकसृष्टिर्दृश्यत इति लक्षणस्यातिव्याप्तिरिति चेन्न । कर्मफल ज्ञात्वा यस्य जीवस्य यस्मिन् स्थाने योग्यतास्ति तत्स्थाने सृजनसामर्थ्यस्य तेषामभावेन तत्सृष्टेरपि भगवदधीनत्वात्तथा च जगत्कारणत्वलक्षणं हिरण्यगर्भादौ नातिव्याप्तमिति द्रष्टव्यम् । **क्रियाफलानामिति** कर्मफलानामित्यर्थ । **मेरुपृष्ठं देश इति** । अमरावत्यां पुण्यकर्मफलानुभवस्य प्रसिद्धत्वादिति भाव. । **उत्तरायणेति** । यद्यप्युत्तरायणमरणादिरूपनिमित्ताभावेपि कर्मफलानुभवोस्ति तथाप्युत्तरायणादिनिमित्तं देहपातादूर्ध्वं झटिति कर्म फलानुभवे प्रतिनियतमिति भाव. । क्रियाफल द्विविध ऐहिकामुष्मिकं चेति । तत्र यथा आमुष्मिक प्रतिनियतदेशकालनिमित्तं तथा ऐहिकमपीत्याह **एवमिति** । सेवाफलस्य ग्रामादे देशो भूमिः देहपातात् पूर्वं काल राजहर्षादिनिमित्तं च प्रतिनियतमिति भावः। कर्मफलं देशाद्यभिज्ञदातृकं फलत्वाद्राजसेवाफलवदित्यनुमानं ज्ञापयन् फलितमाह **तथाचेति** । किं न स्यादिति सूत्रस्य यास्कवाक्यमूलकत्वे यास्कवाक्ये षण्णां प्रतिपदितत्वेन सूत्रनिष्ठादिपदेनापीतरेषा ग्रहीतुं शक्यत्वात् अन्तर्भावो नास्तीति

ग्रहणे तेषां जगतः स्थितिकाले सम्भाव्यमानत्वान्मूलकारणादुत्पत्तिस्थिति-नाशा जगतो न गृहीताः स्युरित्याशङ्क्येत, तन्मा शङ्कीति योत्पत्तिर्ब्रह्म-णस्तत्रैव स्थितिः प्रलयश्च त एव गृह्यन्ते। न यथोक्तविशेषणस्य जगतो

## रत्नप्रभा

स्थितिकाले भौतिकेषु प्रत्यक्षेण जन्मादिषट्कमुपलभ्य निरुक्तवाक्यं चकार, तन्मूली-कृत्य जन्मादिषट्ककारणत्वं लक्षणं सूत्रार्थ इति ग्रहणे सूत्रकृता ब्रह्मलक्षणं न संगृहीतं, किन्तु महाभूतानां लक्षणमुक्तमिति शङ्का स्यात्, सा मा भूदिति ये श्रुत्युक्ता जन्मा-द्यस्त एव गृह्यन्त इत्यर्थः । **यदि** निरुक्तस्यापि श्रुतिर्मूलमिति महाभूतजन्मादिक-मर्थः, **तर्हि** सा श्रुतिरेव सूत्रस्य मूलमस्तु, किमन्तर्गडुना निरुक्तेनेति भावः । **यदि** जगतो ब्रह्मातिरिक्तं कारणं स्यात्, **तदा** ब्रह्मलक्षणस्य तत्रातिव्याप्त्यादिदोषः स्यात्, अतस्तन्निरासाय लक्षणसूत्रेण ब्रह्म विना जगज्जन्मादिकं न सम्भवति कारणान्तरासम्भवादिति युक्तिः सूत्रिता । सा तर्कपादे (२-२) विस्तरेण वक्ष्यते । अधुना संक्षेपेण तां दर्शयति—**न यथोक्तेत्यादिना** । नामरूपाभ्यां व्याकृतस्येत्या-

## पूर्णानन्दीया

शङ्कितुरभिप्रायः । **जगत इति** पदस्यार्थमाह **महाभूतानामिति** । भौतिकेषु भूत-कार्यदेहादिष्वित्यर्थः । **किंत्विति** । देहादौ दृश्यमानजन्मादिषट्ककारणत्वं साक्षान्महा-भूतानामेवास्ति न ब्रह्मण इति तेषामेव लक्षणमुक्तमिति शङ्का स्यादिति भाव । योत्पत्तिर्ब्र-ह्मणस्तत्रैवेत्यादिभाष्यस्यार्थकथनपूर्वकमन्वय स्फुटीकरोति **ये श्रुत्युक्ता इति**। यस्माद्ब्रह्मणः सकाशाद्या जगदुत्पत्तिः तत्रैव ब्रह्मणि या च स्थितिः यश्च लयस्त एव श्रुत्युक्ता उत्पत्त्या दयो गृह्यन्ते इति भाष्यवाक्यस्यार्थः । सूत्रस्य यास्कवाक्यमूलत्वासंभवादितरेषा भाववि-काराणामन्तर्भाव एवोचित इति सिद्धान्त्यभिप्राय ।

ननु यास्कमुनिवाक्यस्याकाशादिमहाभूतनिष्ठं जन्मादिषट्कमेवार्थ न भौतिकनिष्ठ-जन्मादिषट्कं तत्र महाभूतानामुत्पत्त्यादेः प्रत्यक्षेण गृहीतुमशक्यत्वेन वाक्यरचनानुपपत्ते. श्रुतिरेव वाक्यस्य मूलमिति वक्तव्यं तथा च त्रितयप्रतिपादिकायाः 'यतो वा इमानी'-त्यादिश्रुतेस्तात्पर्यानुसारेण जन्मादिषट्कप्रतिपादकं वाक्य मुनिश्चकारेति वाक्यमूलकत्व सूत्रस्य स्यात्तस्मान्न ब्रह्मलक्षणसिद्धिरिति शङ्कामुज्जीवयति **यदि निरुक्तस्यापीति** । भगवता महर्षिणा श्रीमद्वेदव्यासेन प्रणीतस्य सूत्रस्य श्रुतिमूलकत्वे सम्भवति तस्यार्षे-यवाक्यमूलकत्वमकिञ्चित्करमिति तज्जीवनमुच्छिनत्ति **तर्हि सा श्रुतिरेवेति** । सूत्राणा श्रुत्यर्थपरत्वाच्च श्रुतिमूलत्वमेव युक्तमिति भाव. । **न यथोक्तेत्यादि** भाष्यस्योत्तरभा-ष्येण पौनरुक्त्यशङ्कां परिहरन् भाष्यमवतारयति **यदि जगत इति। अतस्तन्निरासा-येति** । अतिरिक्तकारणत्वसंभावनामात्रात् प्राप्तो योऽतिव्याप्त्यादिदोषस्तान्निरासायेत्यर्थः । सूत्रेण लक्षणं प्रतिपाद्यते न युक्तिभिरित्यभिप्रेत्योक्तं **सूत्रितेति** । सूत्रेणार्थिकार्थतया

यथोक्तविशेषणमीश्वरं मुक्त्वान्यतः प्रधानादचेतनादणुभ्योऽभावात्संसारिणो वा उत्पत्त्यादि सम्भावयितुं शक्यम् । नच स्वभावतः, विशिष्टदेशकालनिमित्तानामिहोपादानात् । एतदेवानुमानं संसारिव्यतिरिक्तेश्वरास्तित्वादिसाधनं मन्यन्त ईश्वरकारणिनः । नन्विहापि तदेवोपन्यस्तं जन्मादिसूत्रे । न । वेदान्तवाक्यकुसुमग्रथनार्थत्वात्सूत्राणाम् । वेदान्तवाक्यानि हि सूत्रै-

रत्नप्रभा

दीनां चतुर्णां जगद्विशेषणानां व्याख्यानावसरे प्रधानशून्ययोः संसारिणश्च निरासो दर्शितः । परमाणूनामचेतनानां स्वतः प्रवृत्त्ययोगाज्जीवादन्यस्य ज्ञानशून्यत्वनियमेनानुमानात्सर्वज्ञेश्वरासिद्धौ तेषां प्रेरकाभावाज्जगदारम्भकत्वासम्भव इति भावः । स्वभावादेव विचित्रं जगदिति **लोकायतः** । तं प्रत्याह—**न चेति** । जगत उत्पत्त्यादि सम्भावयितुं न शक्यमित्यन्वयः । **किं स्वयमेव** स्वस्य हेतुरिति स्वभावः, **उत** कारणानपेक्षत्वम् ? **नाद्यः**, आत्माश्रयात् । **न द्वितीयः** इत्याह—**विशिष्टेति** । विशिष्टान्यसाधारणानि देशकालनिमित्तानि तेषां कार्यार्थिभिरुपादीयमानत्वात्, कार्यस्य कारणानपेक्षत्वं न युक्तमित्यर्थः । अनपेक्षत्वे धान्यार्थिनां भूविशेषे वर्षादिकाले बीजादिनिमित्ते च प्रवृत्तिर्न स्यादिति भावः । पूर्वोक्तसर्वज्ञत्वादिविशेषणकमीश्वरं मुक्त्वा जगत उत्पत्त्यादिकं न सम्भवतीति भाष्येण कर्त्तारं विना कार्यं नास्तीति व्यतिरेक उक्तः । तेन यत् कार्यं तत् सकर्तृकमिति व्याप्तिर्ज्ञायते । एतदेव व्याप्तिज्ञानं जगति पक्षे कर्तारं साधयत्सत् सर्वज्ञेश्वरं साधयति, किं श्रुत्येति तार्किकाणां भ्रान्तिमुपन्यस्यति—**एतदेवेति** । एतदेवानुमानमेव साधनं न श्रुतिरिति मन्यन्ते इति **योजना** । अथ वै-

पूर्णानन्दीया

प्रतिपादितेत्यर्थः । **सूचितेति** पाठेऽप्ययमेवार्थः । **संसारिणश्चेति** । चेतनस्यापि परिच्छिन्नज्ञानशक्तिमतो हिरण्यगर्भादेरित्यर्थः ।

**भाष्ये प्रधानादिति** । परपरिकल्पितात् प्रधानादित्यर्थः । **अणुभ्य इति** । अचेतनेभ्योऽणुभ्य इत्यर्थः । **अभावादिति** । शून्यादित्यर्थः ।

व्याख्याने तार्किकमतं दूषयति **परमाणूनामिति** ।

नन्वचेतनत्वात्परमाणूनां स्वतःप्रवृत्त्यभावेऽपि निमित्तकारणत्वेनानुमानादिसिद्धसर्वज्ञेश्वरः तत्प्रेरकः स्यात्तत्राह **जीवादन्यस्येति** । **प्रत्याहेति** । तिरस्करोतीत्यर्थः । 'न च स्वभावत' इत्यनेन भाष्येणापेक्षितं पदजातमनुषङ्गेण पूरयति **जगत इति** । स्वभावपदार्थं विकल्प्य खण्डयति **किं स्वयमेवेत्यादिना** । कर्मधारयसमासमाह **विशिष्टानीति** । नन्वनुमानस्य पूर्वभाष्येणाप्रतिपाद्यत्वादेतदेवानुमानमित्युत्तरभाष्यं कथमित्याशङ्क्याह **पूर्वोक्तेति** । एतदेव **व्याप्तिज्ञानमिति** । एतद्व्याप्तिज्ञानात्मकमनुमानमेवेत्यर्थः । **एतदनुमानमेवेति** । व्याप्तिज्ञानात्मकमनुमानमेवेत्यर्थः । **साधनमिति** । ईश्वरसिद्धौ

## रत्नप्रभा

तद्व्याप्तिज्ञानमेव श्रुत्यनुग्राहकयुक्तिमात्रत्वेनास्मत्सम्मतं सदनुमानं स्वतन्त्रमिति मन्यन्त इत्यर्थः। सर्वज्ञत्वमादिशब्दार्थः। यद्वा व्याप्तिज्ञानसहकृतमेतल्लक्षणमेवानुमानं मन्यन्त इत्यर्थः। **तत्रायं विभागः**–व्याप्तिज्ञानाज्जगतः कर्त्तास्तीत्यस्तित्वसिद्धिः, पश्चात्स कर्त्ता सर्वज्ञः जगत्कारणत्वाद्व्यतिरेकेण कुलालादिवदिति सर्वज्ञत्वसिद्धिर्लक्षणादिति। अत्र "मन्यन्ते" इत्यनुमानस्याभासत्वं सूचितम्। तथाहि–अंकुरादौ तावज्जीवः कर्त्ता न भवति जीवाद्भिन्नस्य घटवदचेतनत्वनियमादन्यः कर्त्ता नास्त्येवेति व्यतिरेकनिश्चयात्,

## पूर्णानन्दीया

सर्वज्ञत्वादिसिद्धौ च प्रमाणमित्यर्थः। एवकारव्यावर्त्यमाह **न श्रुतिरिति**। अङ्कुरादिकं सकर्तृकं कार्यत्वात् घटवदित्यनुमानेन सकर्तृकत्वे साधिते सति कर्तुरनेकत्वे गौरवादेकत्वे तु लाघवमिति लाघवज्ञानसहकारेण एककर्तृकत्वं सिध्यति, तच्च सर्वज्ञत्वमन्तरा न सम्भवतीति सर्वज्ञत्वं च सिध्यति, तथा च सर्वज्ञेश्वरसिद्धिस्तस्मादनुमानमेव प्रमाण श्रुतिस्तु न प्रमाणमिति तार्किका मन्यन्त इति भावः। ईश्वरसद्भावे श्रुतेरप्रामाण्ये तार्किकस्यावैदिकत्वापत्तिरित्यस्वरसादाह **अथवेति। स्वतन्त्रमिति**। स्वतन्त्रप्रमाणमित्यर्थ। तथाच श्रुतेरनुमानसिद्धार्थानुवादकत्वेन प्रामाण्यमिति भाव। एकेनैवानुमानेन सर्वज्ञकर्तृकत्वसाध्यसिद्धौ दृष्टान्ताभावान्न सर्वज्ञेश्वरसिद्धिरित्यस्वरसादाह **यद्वेति**। व्याख्यानद्वयेपि व्याप्तिज्ञानार्थकत्वेन एतत्पदं व्याख्याय सम्प्रति लक्षणार्थकत्वेन व्याख्याति **एतल्लक्षणमिति**। जन्मादिसूत्रोक्तजगत्कारणत्वलक्षणमेव कर्तुः सर्वज्ञत्वसिद्धौ हेतुरिति मन्यन्त इत्यर्थः। लक्षणसूचितेन पूर्वोक्तानुमानेन सकर्तृकत्वमात्र साध्यते सर्वज्ञत्वं तु लक्षणहेतुकानुमानान्तरेणेत्यभिप्रायं स्फुटयति **तत्रायमिति**। लक्षणहेतुकानुमानान्तर रचयति **सकर्तेति**। **लक्षणादिति**। सर्वज्ञत्वं विना सर्वजगत्कारणत्वं न सम्भवति तथा च सर्वजगत्कारणत्वलक्षणसामर्थ्यात्सर्वज्ञत्वसिद्धिरिति भाव। ईश्वरः जगतः कारणं येषां ते ईश्वरकारणका काणादप्रभृतय इति भाष्यार्थ। तत्तन्मतवैलक्षण्येनानुमानवैलक्षण्य विस्तरेण तर्कपादे वक्ष्यते अधुना काणादमतानुसारेण मार्गप्रदर्शनमात्रमत्र कृतं विस्तरभयादिति मन्तव्यम्। न **स(१)म्भवतीति**। असमर्थत्वादिति भावः। **एतस्माद्भिन्नस्येति** पाठे जीवाद्भिन्नस्येत्यर्थ। यत्कार्यं तत्सकर्तृकमिति सामान्यव्याप्तिज्ञानादङ्कुरादिकार्यस्यापि सकर्तृकत्वसिद्धौ स च कर्ता क इत्युक्ते सति असामर्थ्याज्जीवो न भवति परिशेषादीश्वर इति तत्सिद्धिर्वक्तव्या सैव न सम्भवति जीवादन्यस्य घटादिवदचेतनत्वनियमेन अङ्कुरादिकार्यस्य कर्तैव नास्तीत्यकर्तृकत्वनिश्चये सति सकर्तृकत्वज्ञानासम्भवेन सामान्यव्याप्तिज्ञानासिद्धेस्तथा च कार्यत्वलिङ्गकानुमानं न सकर्तृकत्वसाधकं येनेश्वरसिद्धिः स्यादिति प्रथमानुमानं दूषयित्वा द्वितीयमनु

(१) अत्र न भवतीत्येव सर्वपुस्तकेषूपलभ्यते रत्नप्राभया पाठ इति स एव मुद्रितः।

## ❀ रत्नप्रभा ❀

यत् कार्यं तत् सकर्तृकमिति व्याप्तिज्ञानासिद्धिः । लक्षणलिङ्गकानुमाने तु बाधः, अशरीरस्य जन्यज्ञानायोगात् यज्ज्ञानं तन्मनोजन्यमिति व्याप्तिविरोधेन नित्यज्ञानासिद्धेर्ज्ञानाभावनिश्चयात् । तस्मादतीन्द्रियार्थे श्रुतिरेव शरणम् । श्रुत्यर्थसम्भावनार्थत्वेनानुमानं युक्तिमात्रं न स्वतन्त्रमिति भावः । **नन्विदमयुक्तं** श्रुतेरनुमानान्तर्भावमभिप्रेत्य भवदीयसूत्रकृताऽनुमानस्यैवोपन्यस्तत्वादिति वैशेषिकः **शङ्कते-नन्विति** । ततो 'मन्यन्ते' इत्यनुमानस्याभासोक्तिरयुक्तेति भावः । **यदि** श्रुतीनां स्वतन्त्रमानत्वं न स्यात्तर्हि **"तत्तु समन्वयाद्"** (१।१।४।(४) ) इत्यादिना तासां तात्पर्यं सूत्रकृन्न विचारयेत्, तस्मादुत्तरसूत्राणां श्रुतिविचारार्थत्वाज्जन्मादिसूत्रेऽपि श्रुतिरेव स्वातन्त्र्येण विचार्यते, नानुमानमिति परिहरति—**नेति** । **किञ्च** मुमुक्षोर्ब्रह्मावगतिरभीष्टा, **यद्**-र्थमस्य शास्त्रस्यारम्भः, **सा च** नानुमानात्, "तन्त्वौपनिषदम्" (बृ०३।९।२६)

## ❀ पूर्णानन्दीया ❀

मानं दूषयति **लक्षणलिङ्गकेति।** बाध साध्याभावनिश्चय इत्यर्थः। ईश्वरस्य तन्मते सर्वज्ञत्व नाम सर्वविषयकज्ञानाश्रयत्वं तच्च ज्ञानं जन्यमजन्यं वा ? नाद्य इत्याह **अशरीरस्येति** । न द्वितीय इत्याह **यज्ज्ञानमिति** । ज्ञानपदमाश्रितज्ञानपरं तथा च लक्षणलिङ्गकानुमानबाधान्न सर्वज्ञत्वसाधनं येन सर्वज्ञत्वं सिध्येदिति भाव. ॥

श्लोक·—

सर्वज्ञ कारणं खादे कृष्णाख्य श्रुतिसम्मतम् ।
वन्देहमीश्वरं गोपीचित्तपद्ममधुव्रतम् ॥

परवादिना अनुमानाद्धीश्वरसिद्धिरित्युक्ते तत्खण्डनार्थं नेश्वरसिद्धिरित्याद्युच्चरितशब्दजन्यदोषनिरासायात्र मङ्गल कृतमिति मन्तव्यम्। सर्वज्ञेश्वरसिद्धौ श्रुते प्रामाण्यं स्वातन्त्र्येण दर्शयन्ननुमानस्य तन्निरस्यति **तस्मादिति। श्रुत्यर्थसम्भावनार्थत्वेनेति** । श्रुत्यर्थे संशयादिनिवर्तकत्वेनेत्यर्थ । सिद्धान्ते सर्वज्ञत्वं नाम सर्वावभासक्षमविज्ञानस्वरूपत्व तथा च श्रुत्या सर्वज्ञेश्वरसिद्धौ व्याप्तिज्ञानसत्त्वात् आश्रितज्ञानस्य मनोजन्यत्वनियमेन प्राप्तो यो बाधस्तस्यासम्भवाच्चानुमानद्वयं स्वसाध्यसाधकं सत्सर्वज्ञेश्वरं साधयतीति भाव । **अनुमानान्तर्भावमभिप्रेत्येति** । अनुमानसिद्धार्थानुवादकत्वेनोपपत्तिमभिप्रेत्येत्यर्थ । **वैशेषिक इति** । शब्दपक्षकानुवादी वैशेषिक, इत्युच्यते जन्मादिसूत्रेणानुमानस्यैव प्रतिपादितत्वादनुमानमेव स्वतन्त्रं प्रमाणमिति शङ्कितुरभिप्रायः ।

भाष्ये **वेदान्तवाक्यकुसुमग्रथनार्थत्वादिति**। श्रुतिविचारार्थत्वादित्यर्थ । वेदान्तवाक्यार्थपरिष्कारार्थत्वादिति यावत् । एतदेवोपपादयति **वेदान्तवाक्यानीति** । **जगत इति** । जगतो यज्जन्मादि तत्कारणं यद्ब्रह्म तत्प्रतिपादकेष्वित्यर्थ ।

व्याख्याने **सा चेति** । ब्रह्मावगतिरित्यर्थ । वाक्यार्थविचारोऽन्यत्र वाक्यस्य

रुदाहृत्य विचार्यन्ते । वाक्यार्थविचारणाध्यवमाननिर्वृत्ता हि ब्रह्मावगति-र्नानुमानादिप्रमाणान्तरनिर्वृत्ता । सत्सु तु वेदान्तवाक्येषु जगतो जन्मादिकारणवादिषु तदर्थग्रहणदार्ढ्यायानुमानमपि वेदान्तवाक्याविरोधि प्रमाणं भवन्न निवार्यते, श्रुत्यैव च सहायत्वेन तर्कस्याभ्युपेतत्वात् । तथा-

## रत्नप्रभा

इति श्रुतेः, अतो नानुमानं विचार्यमित्याह—**वाक्यार्थेति** । वाक्यस्य तदर्थस्य च विचाराद्यदध्यवसानं तात्पर्यनिश्चयः प्रमेयसम्भवनिश्चयश्च तेन जाता ब्रह्मावगतिर्मुक्तये भवतीत्यर्थः । अत्र सम्भवो बाधाभावः । **ननु** किमनुमानमुपेक्षितमेव, नेत्याह—**सत्सु त्विति** । विमतमभिन्ननिमित्तोपादानकं, विमतं चेतनप्रकृतिकं कार्यत्वात् सुखादिवदित्यनुमानं श्रुत्यर्थदार्ढ्यायापेक्षितमित्यर्थः । **दार्ढ्यं**—संशयविपर्यासनिवृत्तिः । **"मन्तव्यः"** (बृ० २।४।५) इति श्रुत्यर्थस्तर्केण सम्भावनीय इत्यर्थः । **यथा**—कश्चिद् गन्धारदेशेभ्यश्चोरैरन्यत्रारण्ये बद्धनेत्र एव त्यक्तः केनचिन्मुक्तबन्धस्तदुक्तमार्गग्रहणसमर्थः पण्डितः स्वयं तर्ककुशलो मेधावी स्वदेशानेव प्राप्नुयाद्, **एवमेवेहा**विद्याकामादिभिः स्वरूपानन्दात् प्रच्याव्यास्मिन्नरण्ये संसारे क्षिप्तः केनचिद्दयापरवशेनाचार्येण

## पूर्णानन्दीया

तदर्थस्य च विचार इति पदच्छेदपूर्वकं भाष्यं व्याकरोति **वाक्यस्य तदर्थस्य चेति** । वाक्यविचारादेतद्वाक्यमेतस्मिन्नर्थे तात्पर्यकमिति तात्पर्यनिश्चयो जायते वाक्यार्थविचारात्प्रमेये बाधाभावनिश्चय इति भावः । **विमतमिति** । जगदित्यर्थः । निमित्तं च उपादानं च निमित्तोपादाने अभिन्ने निमित्तोपादाने यस्य तदिति विग्रहः । भिन्ने निमित्तोपादाने यस्य तद्भिन्ननिमित्तोपादानकं तन्न भवतीत्यभिन्ननिमित्तोपादानकमिति वा विग्रहः । अत्रेदमनुसन्धेयम् । ब्रह्म विवर्तोपादानं माया तु परिणाम्युपादानमिति पक्षे स्वरूपानुपमर्दनेन अन्यथाभावः विवर्तः स्वरूपोपमर्दनेनान्यथाभावः परिणाम इति तयोर्भेदः विभावनीयः । माया हि कारणमेवेति पक्षान्तरमिति । **दार्ढ्यायेति** । श्रुत्या जगत्कारणस्योभयकारणत्वे बोधितेपि वादिभिरन्यथार्थस्य प्रतिपादितत्वात्पुरुषस्य संशयादिरुत्पद्यते तन्निवृत्त्यर्थमित्यर्थः । श्रुत्यैवानुमानमङ्गीकृतमिति भाष्याशयं स्फुटीकर्तुं श्रुत्यंशं संगृह्णाति **मन्तव्य इतीति** । श्रुत्यर्थः श्रुत्यादिविचाररूपश्रवणेन गृहीतार्थः । मन्तव्यपदार्थमाह **तर्केणेति** । अनुमानेनेत्यर्थः । तथा **'श्रोतव्य' इति** श्रुत्या गृहीतार्थः । 'मन्तव्य' इत्येवं श्रुत्याप्यनुमानमभ्युपेतमिति भावः । श्रुत्यन्तरस्याप्यनुमाने सम्मतिरस्तीति भाष्यभावं स्फुटीकर्तुं श्रुत्यर्थकथनार्थमाख्यायिकामारभते **यथा कश्चिदित्यादिना** । श्रुतिगतैवंशब्दद्योतितदृष्टान्तमाह **यथेति** । पण्डितो मेधावीति पदद्वयस्य क्रमेणार्थमाह **तदुक्तमार्गेति** । दार्ष्टान्तिके सादृश्यमुपपादयन् श्रुतेरनुमानापेक्षाया तात्पर्यं स्फुटीकरोति **एवमेवेहेति** । इयता

हि—'श्रोतव्यो मन्तव्यः' ( बृह० २।४।५ ) इति श्रुतिः 'पण्डितो मेधावी गन्धारानेवोपसंपद्येतैवमेवेहाचार्यवान्पुरुषो वेद' (छान्दो० ६।१४।२) इति च पुरुषबुद्धिसाहाय्यमात्मनो दर्शयति । न धर्मजिज्ञासायामिव श्रुत्यादय एव प्रमाणं, ब्रह्मजिज्ञासायाम् । किंतु श्रुत्यादयोऽनुभवादयश्च यथासंभवमिह प्रमाणं अनुभवावसानत्वाद्भूतवस्तुविषयत्वाच्च ब्रह्मज्ञानस्य । कर्तव्ये हि विषये नानुभवापेक्षास्तीति श्रुत्यादीनामेव प्रामाण्यं

---

## रत्नप्रभा

नासि त्वं संसारी, किन्तु "तत्त्वमसि" (छा०६।८।७-१६) इत्युपदिष्टस्वरूपः स्वयं तर्ककुशलश्चेत् 'स्वरूपं जानीयान्नान्यथेति' श्रुतिः स्वस्य पुरुषमतिरूपतर्कापेक्षां दर्शयतीत्याह—**पण्डित इति । आत्मनः** श्रुतिरित्यर्थः । **ननु** ब्रह्मणो मननाद्यपेक्षा न युक्ता वेदार्थत्वाद्धर्मवत् , किन्तु श्रुतिलिङ्गवाक्यादय एवापेक्षिता इत्यत आह—**नेति ।** जिज्ञास्ये धर्म इव जिज्ञास्ये ब्रह्मणि इति व्याख्येयम् । अनुभवः ब्रह्मसाक्षात्काराख्यो विद्वदनुभवः । **आदि**पदान्मनननिदिध्यासनयोर्ग्रहः । तत्र हेतुमाह—**अनुभवेति ।** मुक्त्यर्थं ब्रह्मज्ञानस्य शाब्दस्य साक्षात्कारावसानत्वापेक्षणात् प्रत्यग्भूतसिद्धब्रह्मगोचरत्वेन साक्षात्कारफलकत्वसम्भवात्तदर्थं मननाद्यपेक्षा युक्ता । धर्मे तु नित्यपरोक्षे साध्ये साक्षात्कारस्यानपेक्षितत्वादसम्भवाच्च श्रुत्या निर्णयमात्रमनुष्ठानायापेक्षितम् । लिङ्गादयस्तु श्रुत्यन्तर्भूता एव श्रुतिद्वारा निर्णयोपयोगित्वेनापेक्ष्यन्ते । **न** मननादयः । अनुपयोगादित्यर्थः । निरपेक्षः शब्दः—**श्रुतिः ।** शब्दस्यार्थप्रकाशसामर्थ्यं-**लिङ्गम् ।**

## पूर्णानन्दीया

ग्रन्थेनातीन्द्रियार्थे श्रुतिरेव स्वतन्त्रप्रमाणमिति प्रतिपाद्य श्रुत्यर्थसम्भावनार्थत्वेन मननरूपस्यानुमानस्य यत्प्रामाण्यमुक्तं तद्दूषणपरत्वेन शङ्कामुद्घाटयति **ननु ब्रह्मण इति ।** ननु धर्मब्रह्मणो प्रमाणस्य श्रुत्यादेः कथं जिज्ञासान्तर्गतविचारे प्रामाण्यमित्याशंक्य भाष्यमन्यथा योजयति **जिज्ञास्ये धर्म इवेति ।** मननादेर्दुरितरूपप्रतिबन्धकानिवर्तकत्वेन ज्ञानद्वारा प्रामाण्यमिति ज्ञापनार्थं यत्र स्वत सिद्धदुरिताभावः तत्र मननादेर्न हेतुतेति ज्ञापनार्थं च भाष्ये यथासम्भवमिह प्रमाणमित्युक्तमिति द्रष्टव्यम् । **मुक्त्यर्थमिति ।** ब्रह्मज्ञानस्यापरोक्षरूपसाक्षात्कारत्वेनैवाज्ञाननिवर्तकत्वात्साक्षात्कारावसानत्वापेक्षा उचितेति भावः । द्वितीयहेतोरर्थमाह **प्रत्यग्भूतेति।** 'कर्मकर्तव्ये हि विषय' इत्यादि भाष्यं व्याचष्टे **धर्मे त्विति ।** नित्यपरोक्षे साध्य इति पदद्वयं हेतुगर्भविशेषणम् । **असम्भवाच्चेति।** अयोग्यत्वाच्चेत्यर्थः । धर्मस्य साध्यत्वेन अनपेक्षितानुभवत्वान्नित्यपरोक्षत्वेनापरोक्षायोग्यत्वाच्चेति भाव । **निरपेक्ष इति ।** प्रमाणान्तरानपेक्षत्वे सति स्वार्थबोधकत्व निरपेक्षत्वम्। श्रुत्यादय इति भाष्यस्थादिशब्दार्थ लक्षणपूर्वकं

स्यात्पुरुषाधीनात्मलाभत्वाच्च कर्तव्यस्य । कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं लौकिकं वैदिकं च कर्म, यथाश्वेन गच्छति, पद्भ्यामन्यथा वा, न

रत्नप्रभा

पदं योग्येतरपदाकांक्षं—**वाक्यम्** । अङ्गवाक्यसापेक्षं प्रधानवाक्यं—**प्रकरणम्** । क्रमपठितानामर्थानां क्रमपठितैर्यथाक्रमं सम्बन्धः—**स्थानम्** । **यथा** ऐन्द्राग्न्यादय इष्टयो दश क्रमेण पठिताः, दशमन्त्राश्च **"इन्द्राग्नी रोचना दिवः"** इत्याद्याः । तत्र प्रथमेष्टौ प्रथममन्त्रस्य विनियोग इत्याद्यूहनीयम् । संज्ञासाम्यं—**समाख्या** । **यथा**ऽऽध्वर्यवसंज्ञकानां मन्त्राणामाध्वर्यवसंज्ञके कर्मणि विनियोग इति विवेकः । **एवं तावद्** ब्रह्म न मननाद्यपेक्षं वेदार्थत्वाद् धर्मवदित्यनुमाने साध्यत्वेन धर्मस्यानुभवायोग्यत्वम्, अनपेक्षितानुभवत्वं चोपाधिरित्युक्तम्, उपाधिव्यतिरेकाद् ब्रह्मणि मननाद्यपेक्षित्वं चोक्तम् । तत्र **यदि** वेदार्थत्वमात्रेण ब्रह्मणो धर्मेण साम्यं त्वयोच्येत, **तर्हि** कृतिसाध्यत्वं विधिनिषेधविकल्पोत्सर्गापवादाश्च ब्रह्मणि धर्मवत् स्युरिति। विपक्षे बाधकमाह—**पुरुषे**-

पूर्णानन्दीया

विवृणोति **शब्दस्येत्यादिना** । **पदं योग्येतरेति** । योग्यमितरं च यत्पदं तेनाकाङ्क्षा यस्य तदिति विग्रहः। आकाङ्क्षायोग्यतासन्निधिमतां पदानां समूह एव वाक्यमित्यर्थः । कर्मकाण्डे क्रमपठितानामर्थाना मन्त्रकाण्डे क्रमपठितैरित्यर्थः । **सम्बन्ध इति** । विनियोग इत्यर्थः। स्थानमुक्तलक्षणमुदाहरति **यथेति** । **आध्वर्यवसंज्ञकानामिति** । अध्वर्युणा पठितानामिति यावत् । **आध्वर्यवसंज्ञक इति** । अध्वर्युणा कर्तव्य इति यावत् । श्रुत्यादीनामनुभवादीना च ब्रह्मणि प्रामाण्यमुक्त्वा परोक्तमनुमानं दूषयति **एवं तावद्ब्रह्मेति** । **साध्यत्वेनेति** । धर्मस्य जन्यत्वेनेत्यर्थः । साक्षात्कारस्यानपेक्षितत्वादसम्भवाच्चेति स्वोक्तं हेतुद्वयम्, अस्मिन्ननुमाने प्रत्येकमुपाधिरित्याह **अनुभवायोग्यत्वमिति**। पक्षातिरिक्ते दृष्टान्ते धर्मे साध्यव्यापकत्व पक्षे ब्रह्मणि साधनाव्यापकत्वमिति विवेकः । साधित मननाद्यपेक्षत्वं स्मारयति **उपाधिव्यतिरेकादिति** । साध्यव्यापक साधनाव्यापक उपाधिः, तथा च उपाधिद्वयस्याभावादित्यर्थः। ब्रह्मणः उपाधिद्वयरहितत्वान्मननाद्यपेक्षा युक्तेति भाव । पूर्वपक्ष्युक्तमनुमानं स्वसाध्यासाधकमिति दूषणमुक्त्वा प्रतिबन्द्या दूषणान्तरपरत्वेन भाष्यमवतारयति **तत्रेति** । ब्रह्मानुभवाद्यपेक्षं सिद्धवस्तुत्वात् घटवदिति सिद्धान्त्यभिमतानुमाने हेतुरस्तु साध्यं मास्त्वित्याकारकविपक्षागमुपपादयति **यदीति** । वेदार्थत्वमात्रेण वेदप्रमेयत्वाविशेषेणेत्यर्थः । **साम्यं त्वयोच्येतेति** । साम्यमङ्गीकृत्य मननाद्यनपेक्षत्व त्वयोच्येतेत्यर्थः । बाधकांशमुपपादयति **तर्हीति** । धर्मसाम्यात् ब्रह्मणि मननाद्यनपेक्षत्व स्यादित्याकारकविपक्षे कृतिसाध्यत्वादिना किमपराद्धं तदपि स्यादिति बाधकमाहेत्यर्थः ।

भाष्ये **पुरुषाधीनात्मलाभत्वाच्च कर्तव्यस्येति** । धर्मस्य कृतिसाध्यत्वाच्चे

वा गच्छतीति । तथा 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाति' 'उदिते जुहोति' 'अनुदिते जुहोति' इति विधिप्रतिषेधाश्चात्रा-

## रत्नप्रभा

**त्यादिना** । पुरुषकृत्यधीनः आत्मलाभः उत्पत्तिर्यस्य तद्भावाच्च धर्मे श्रुत्यादीनामेव प्रामाण्यमित्यन्वयः । धर्मस्य साध्यत्वं लौकिककर्मदृष्टान्तेन स्फुटयति-**कर्तुमिति** । लौकिकवदित्यर्थः । दृष्टान्तं स्फुटयति—**यथेति** । दार्ष्टान्तिकमाह—**तथेति** । तद्वद्ध-र्मस्य कर्तुमकर्तुं शक्यत्वमुक्त्वाऽन्यथाकर्तुं शक्यत्वमाह—**उदित इति** । धर्मस्य साध्यत्वमुपपाद्य तत्र विध्यादियोग्यतामाह-**विधीति** । **विधीप्रतिषेधाश्च** विकल्पा-द्यश्च धर्मे साध्ये येऽर्थवन्तः सावकाशा भवन्ति ते ब्रह्मण्यपि स्युरित्यर्थः । **"यजेत" "न सुरां पिबेद्"** इत्यादयो विधिनिषेधाः । व्रीहिभिर्यवैर्वा यजेतेति संभावितो विक-ल्पः, ग्रहणाग्रहणयोरैच्छिकः, उदितानुदितहोमयोर्व्यवस्थितविकल्पः । **"न हिंस्याद्"**

## पूर्णानन्दीया

त्यर्थः । 'कर्तव्ये ही'त्यादिभाष्यपरिष्कृतस्य अनपेक्षितानुभवत्वादपरोक्षायोग्यत्वादिति हेतुद्वयस्य समुच्चयार्थश्चशब्द । यथाश्वेनेति लौकिकस्य गमनरूपकर्मण अश्वेन गच्छ ति पद्भ्या वेति द्वयेन कर्तु शक्यत्वं प्रतिपादितम्, अन्यथा वा गच्छतीत्यनेन उन्मत्तादि-सादृश्येन वा गच्छतीति अन्यथा कर्तु शक्यत्वमुपपादित न वा गच्छतीत्यनेनाकर्तु शक्यत्वमुपपादितं भवतीति भावः । दृष्टान्तस्य लौकिककर्मण. कर्तु शक्यत्वादित्रितयमुप-पाद्य वैदिककर्मणः धर्मस्य तत्र त्रितयमुपपादयति **तथेति** । ग्रहणाग्रहणयो इच्छाधी-नत्वान्न विरोध इत्याभिप्रेत्याह **नातिरात्र इति** । **षोडशिनमिति** । षोडशिनामकं सोमरसपानाख्यग्रहं व्यापाररूपग्रहणेन सस्कुर्यादित्यर्थ ।

व्याख्याने **अन्यथाकर्तुमिति** । शाखाभेदेन अर्थद्वयेऽपि विधे सत्त्वादन्यथा-कर्तु शक्यतामाहेत्यर्थः । **धर्मस्येति** । अधर्मस्येदमुपलक्षणम् । धर्माधर्मयो साध्य-त्वमुपपाद्येत्यर्थ । **तत्रेति** । धर्माधर्मयोरित्यर्थ.। आदिशब्देन निषेधादिक गृह्यते धर्मे यजे-तेति विधि अधर्मे सुरापाने तु न सुराम्पिबेदिति निषेध इति विवेक । विधयश्च प्रतिषेधा-श्चेति द्वन्द्वसमास । धर्म इति अधर्मस्येदमुपलक्षणम् । उपपादनफलमाह **ब्रह्मण्यपीति** । यजेतेति धर्मे विधेयत्ववत् ब्रह्मण्यपि विधेयत्वं स्यात्, अधर्मे न पिबेदिति निषेध्यत्ववत् ब्रह्मण. प्रतिषेध्यत्वं च स्यात्, व्रीहिभिर्यवैर्वा यजेतेतिवत् ब्रह्म वा स्थाणुर्वेति विकल्पः स्यात्, उदिते जुहोत्यनुदिते जुहोतीति शाखाभेदेन व्यवस्थावत् क्वचिद्ब्रह्म भवति न भ-वतीति व्यवस्था स्यात्, न हिंस्यात्सर्वाभूतानि अग्नीषोमीयं पशुमालभेतेतिवत् सामान्य-प्रतिपन्ने ब्रह्मणि विशेषोपवादः स्यादिति भाव । क्रमेण विध्यादीन् पञ्चोपपादयति **यजेते-त्यादिना** । विकल्पस्त्रिविध. सम्भावित ऐच्छिकः व्यवस्थित इति तान् क्रमेणोदाहरति **व्रीहिभिरिति** । **ग्रहणेति** । अतिरात्रे षोडशिनं गृह्णाति न गृह्णातीति ग्रहणा-

र्थवन्तः स्युः, विकल्पोत्सर्गापवादाश्च । नतु वस्त्वेवं नैवमस्ति नास्तीति वा विकल्प्यते । विकल्पनास्तु पुरुषबुद्ध्यपेक्षाः, न वस्तुयाथात्म्यज्ञानं

## रत्नप्रभा

इत्युत्सर्गः । "अग्नीषोमीयं पशुमालभेत" इत्यपवादः । तथा "आहवनीये जुहोति" इत्युत्सर्गः, "अश्वस्य पदेपदे जुहोति" इत्यपवाद इति विवेक । एते ब्रह्मणि स्युरित्यत्रेष्टापत्तिं वारयति—न त्वित्यादिना—भूतवस्तुविषयत्वादित्यन्तेन । इदं वस्तु एवं नैवं घटः पटो वेति प्रकारविकल्पः । अस्ति नास्ति वेति सत्तास्वरूपविकल्पः । ननु वस्तुन्यप्यात्मादौ वादिनामस्ति नास्तीत्यादिविकल्पा दृश्यन्ते तत्राह—विकल्पनास्त्विति । अस्तित्वादिकोटिस्मरणं पुरुषबुद्धिः, तन्मूला मनस्पन्दितमात्राः संशयविपर्ययविकल्पाः, न प्रमारूपा इत्यक्षरार्थः । अयं भावः—धर्मो हि यथायथा ज्ञायते, तथातथा कर्तुं शक्यते इति यथाशास्त्रं पुरुषबुद्ध्यपेक्षाः विकल्पाः सर्वे प्रमारूपा एव भवन्ति । तत्साम्ये ब्रह्मण्यपि सर्वे विकल्पा

## पूर्णानन्दीया

ग्रहणयोरित्यर्थः । उदिते जुहोत्यनुदिते जुहोतीत्युदितानुदितहोमयोरित्यर्थः । उत्सर्गः सामान्यवचनमित्यर्थः । एत इति । षट्संख्याकाः कृतिसाध्यत्वादय इत्यर्थः । नत्विल्यादिनेति । सिद्धे ब्रह्मणि वृत्तिजन्यत्वादेरिष्टापत्तौ दूषणमुपेक्षावशादनुक्त्वा अस्ति नास्तीत्यादिविकल्पमात्रं दूषयतीति भाव । 'नतु वस्त्वेव'मित्यादिभाष्ये वस्त्वेवं नैवमित्यंशेन प्रकारविकल्पः प्रतिपाद्यते अस्ति नास्तीत्यंशेन स्वरूपविकल्पः तथा च नत्वित्यत्र नञ्वस्त्वेवं नैवमिति न विकल्प्यते अस्ति नास्तीति न विकल्प्यत इति उभयत्रान्वयमभिप्रेत्य भाष्यं व्याचष्टे इदं वस्त्विति । एवमिति । एतादृशधर्मवदित्यर्थः । नैवमिति । एतादृशधर्मवन्नेत्यर्थः । प्रकारविकल्पे दृष्टान्तमाह घट इति । मन्दान्धकारसमये पुरोवर्तिपदार्थः घटत्वप्रकारवान् पटत्वप्रकारवान् वेतिवत् इदं ब्रह्म एवं नैवमिति—प्रकारविकल्पवन्नेति भाव । आत्मादौ वादिना विकल्पा दृश्यन्त इत्याशङ्कायां परिहारं स्फोरयितुमर्थमाह अस्तित्वादिकोटिस्मरणमिति । इदं दोषादेरुपलक्षणम् । ब्रह्मणि सर्वे मनस्पन्दितमात्राः अस्ति नास्तीत्यादिविकल्पाः पुरुषनिष्ठदोषसंस्कारकोटिजन्यत्वान्न प्रमारूपा इति भाव । अक्षरार्थकथनेन ब्रह्मणि विकल्पानामप्रमात्वमुक्त्वा यदि ब्रह्मणो धर्मसाम्यमङ्गीक्रियेत तदा धर्मे विकल्पानां प्रमात्ववत् ब्रह्मण्यपि विकल्पाना प्रमात्वं स्यादित्यनिष्टमापादयति अयं भाव इति । यथेति । शाखाभेदेन विधीनां सत्त्वाद्यथा यथा ज्ञायत इत्यर्थः । शास्त्रमनतिक्रम्य यथाशास्त्रं शास्त्रमनुसृत्येति यावत् । पुरुषबुद्ध्यपेक्षा इति । षोडशिनं गृह्णात्युदिते जुहोत्यनुदिते जुहोतीत्यादिकोटिद्वयसत्त्वादत्र कोटिस्मरणमात्रं पुरुषबुद्धिशब्दार्थः तथा च पुरुषबुद्धिमूलका इत्यर्थः । प्रमाणभूताः प्रमाभूता इत्यर्थः । विधिप्रतिपादितानां कर्मणां वस्तुत्वेन यथार्थत्वसत्त्वात्तद्विषयकाः विकल्पा

पुरुषबुद्ध्यपेक्षम् , किं तर्हि ? वस्तुतन्त्रमेव तत् । नहि स्थाणावेकस्मिन्स्थाणुर्वा पुरुषोऽन्यो वेति तत्त्वज्ञानं भवति । तत्र पुरुषोऽन्यो वेति मिथ्याज्ञानम् , स्थाणुरेवेति तत्त्वज्ञानं, वस्तुतन्त्रत्वात् । एवंभूतवस्तुविषयाणां प्रामाण्यं वस्तुतन्त्रम् । तत्रैव सति ब्रह्मज्ञानमपि वस्तुतन्त्रमेव, भूतवस्तु

---

## रत्नप्रभा

यथार्थाः स्युरिति । तत्रापि ओमिति वदन्तं प्रत्याह–**नेति** । यदि सिद्धवस्तुज्ञानमपि साध्यज्ञानवत् पुरुषबुद्धिमपेक्ष्य जायेत, तदा सिद्धे विकल्पा यथार्थाः स्युः न सिद्धवस्तुज्ञानं पौरुषम् । **किं तर्हि** ? प्रमाणवस्तुजन्यम् । तथा च वस्तुन एकरूपत्वादेकमेव ज्ञानं प्रमा, अन्ये विकल्पा अयथार्था एवेत्यर्थः । अत्र दृष्टान्तमाह—**न हि स्थाणाविति** । स्थाणुरेवेत्यवधारणे सिद्धे सर्वे विकल्पा यथार्था न भवन्तीत्यर्थः । तत्र यद्वस्तुतन्त्रं ज्ञानं तद्यथार्थं, यत् पुरुषतन्त्रं तन्मिथ्येति विभजते–**तत्रेति** । स्थाणावित्यर्थः । स्थाणावुक्तन्यायं घटादिष्वतिदिशति—**एवमिति** । प्रकृतमाह—**तत्रैवं सतीति** । सिद्धेऽर्थे ज्ञानप्रमात्वस्य वस्त्वधीनत्वे सति ब्रह्मज्ञानमपि वस्तुजन्यमेव यथार्थं, न पुरुषतन्त्रं, भूतार्थविषयत्वात् स्थाणुज्ञानवदित्यर्थः । अतः साध्येऽर्थे सर्वे विकल्पा. पुन्तन्त्राः, न सिद्धेऽर्थे इति वैलक्षण्यान्न धर्मसाम्यं ब्रह्मण इति

## पूर्णानन्दीया

तद्वति तत्प्रकारकत्वात्प्रमारूपा एवेति भाव । **तत्साम्य इति** । धर्मसाम्ये ब्रह्मण्यङ्गीकारे सतीत्यर्थ । यथार्था प्रमास्वरूपा इत्यर्थः । इतिपदस्य पूर्वेणायमभिप्राय इत्यनेनान्वयः । ॐ इत्यङ्गीकारे, ब्रह्मण्यपि विकल्पानां प्रमात्वमिष्टमिति वदन्त तिरस्कारोतीत्यर्थ. । **सिद्धवस्तुज्ञानमपीति** । उपक्रमादिषड्विधलिङ्गावधृताद्वितीयब्रह्मतात्पर्यकश्रुत्यादिभि. प्रमीतं सिद्धं यत् वस्तु ब्रह्म तद्विषयकज्ञानमपीत्यर्थ । **साध्यज्ञानवदिति** । व्रीहिभिर्यवैर्वा यजेति वैकल्पिकद्रव्यजन्ययागज्ञानवदित्यर्थ. । **पौरुषमिति** । पुरुषबुध्यपेक्षमित्यर्थ. । प्रमितत्वेनाबाधितं यद्वस्तु तज्जन्यमित्यर्थ । सर्वासा श्रुतीनामाद्वितयिब्रह्मबोधकत्वादत्र कोटिद्वयोपस्थापकं शास्त्रमेव नास्ति येन वस्तुज्ञान कोटिद्वयस्मरणरूपपुरुषबुद्धिमपेक्ष्य जायेत येन ब्रह्मणि विकल्पाना प्रमात्वं च स्यादिति भाव । धर्मस्य वैकल्पिकद्रव्यजन्यत्वेनानेकत्वात्तस्मिन् विकल्पाना प्रमात्व युक्तं सिद्धस्य ब्रह्मण एकत्वाद्विकल्पानां न प्रमात्वमित्याह–**तथा चेति**। ज्ञानं द्विविध वस्तुतन्त्रं पुरुषतन्त्रं चेति। तत्र वस्तुतन्त्रमेकमेव ज्ञानं प्रमा पुंतन्त्रमनेकरूपं विकल्पात्मक ज्ञान भ्रम एवेति भाव । **अत्रेत्यादि न पुरुषतन्त्रमित्यन्त**ग्रन्थ स्फुटार्थ । **भूतार्थेति**। सिद्धार्थेत्यर्थः। **साध्येर्थ इति**। कृतिजन्ये धर्म इत्यर्थः । विकल्पा. उदितानुदितहोमज्ञानादिरूपा विकल्पा इत्यर्थ. । पुन्तन्त्राः पुरुषबुद्ध्यपेक्षा इत्यर्थ. । यथार्था अबाधितविषयकत्वात्प्रमारूपा इत्यर्थः । श्रुत्यर्थसंभावनार्थत्वेन मननस्वरूपानुमानादीना प्रामाण्यसिद्धिरित्युपसंहरति **इति वैलक्षण्यादिति** ।

विषयत्वात् । **ननु** भूतवस्तुत्वे ब्रह्मणः प्रमाणान्तरविषयत्वमेवेति वेदान्तवाक्यविचारणानर्थिकैव प्राप्ता । न । इन्द्रियाविषयत्वेन सम्बन्धाग्रहणात् । स्वभावतो विषयविषयाणीन्द्रियाणि, न ब्रह्मविषयाणि । सति हीन्द्रियविषयत्वे ब्रह्मणः, इदं ब्रह्मणा सम्बद्धं कार्यमिति गृह्येत । कार्यमात्रमेव तु गृह्यमाणं किं ब्रह्मणा सम्बद्धं किमन्येन केनचिद्वा सम्बद्धमिति न शक्यं

## रत्नप्रभा

मननाद्यपेक्षा सिद्धेति भावः । **ननु** तर्हि ब्रह्म प्रत्यक्षादिगोचरं धर्मविलक्षणत्वाद् घटादिवत् । तथा च जन्मादिसूत्रे जगत्कारणानुमानं विचार्यम् । सिद्धार्थे तस्य मानत्वात्, न श्रुतिः, सिद्धार्थे तस्या अमानत्वेन तद्विचारस्य निष्फलत्वादिति शङ्कते—**नन्विति** । प्रमाणान्तरविषयत्वमेव प्राप्तमिति कृत्वा प्रमाणान्तरस्यैव विचारप्राप्ताविति शेषः । अत्र पूर्वपक्षी प्रष्टव्यः । किं यत्कार्यं तद्ब्रह्मजमित्यनुमानं ब्रह्मसाधकं, किं वा यत् कार्यं तत्सकारणमिति ? नाद्यः व्याप्त्यव्याप्त्यसिद्धेरित्याह—**नेति** । ब्रह्मण इन्द्रियाग्राह्यत्वात्प्रत्यक्षेण व्याप्तिग्रहायोगान्न प्रमाणान्तरविषयत्वमित्यर्थः । इन्द्रियग्राह्यत्वं कुत इत्यत आह—**स्वभावत इति** । "पराञ्चि खानि व्यतृणत् स्वयम्भूः" (काठ०४।१) इति श्रुतेः, ब्रह्मणो रूपादिहीनत्वाच्चेत्यर्थः । इन्द्रियाग्राह्यत्वेऽपि व्याप्तिग्रहः किं न स्यादत आह—**सति हीति** । तन्नास्तीति शेषः । इदं कार्यं ब्रह्मजम्-इति व्याप्तिप्रत्यक्षं ब्रह्मणोऽतीन्द्रियत्वान्न सम्भवतीत्यर्थः । द्वितीये कारणसिद्धावपि कारणस्य ब्रह्मत्वं श्रुतिं विना ज्ञातुमशक्यमित्याह—**कार्यमात्रमिति** । **सम्बद्धं** कृतं

## पूर्णानन्दीया

धर्मसाम्यानङ्गीकारे पुनरनुमानवादिशङ्कामुत्थापयति **नन्विति** । तथा च ब्रह्मणि प्रत्यक्षानुमानादिकमेव स्वतन्त्रप्रमाणं न श्रुतिरिति भावः । अनुमानस्य स्वातन्त्र्येण प्रामाण्यखण्डनात् प्रत्यक्षप्रामाण्यखण्डनमपि भवत्येवेति तद्धेतुव्याप्तिज्ञानं विकल्प्य खण्डयतीति भाष्यभावं स्फुटीकुर्वन्नुत्तरभाष्यमवतारयति **अत्र पूर्वपक्षीति** । किं ब्रह्मत्वविषयकविशेषव्याप्तिज्ञानं ब्रह्मसाधकमाहोस्वित् कारणत्वविषयकसामान्यव्याप्तिज्ञानमिति विकल्पार्थः । **व्याप्त्येति** । व्याप्तेत्यर्थः । **त(१)त्प्रत्यक्षेणेति** । ब्रह्मप्रत्यक्षेण विशेषव्याप्तिग्रहायोगादित्यर्थः । खानीन्द्रियाणि पराञ्चि विषयोन्मुखानीत्यर्थः । **ब्रह्मणो रूपादीति** । प्रत्यक्षहेतुरूपादेरभावात् ब्रह्मणः न प्रत्यक्षप्रमाविषयत्वमिति भावः । **द्वितीय इति** । सामान्यव्याप्तिज्ञानं हेतुरिति पक्ष इत्यर्थः ।

**भाष्ये-सम्बन्धाग्रहणादिति** । व्याप्तिग्रहायोगादित्यर्थः । **गृह्यमाणमिति** ।

(१) पूर्णानन्दमतेनायं पाठः, किन्तु सर्वत्र मुद्रितरत्नप्रभापुस्तकेषु प्रत्यक्षेणेत्येवोपलभ्यते इति स एव मुद्रितोऽस्माभिः ।

निश्चेतुम् । तस्माज्जन्मादिसूत्रं नानुमानोपन्यासार्थं किं तर्हि वेदान्तवाक्यप्रदर्शनार्थम् । किं पुनस्तद्वेदान्तवाक्यं यत्सूत्रेणेह लिलक्षयिषितम् । 'भृगुर्वै वारुणिः वरुणं पितरमुपससार, अधीहि भगवो ब्रह्मेति' इत्युपक्रम्याह—'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व, तद्ब्रह्मेति' ( तैत्ति० ३।१ ) ।

---

## रत्नप्रभा

यस्मात्, श्रुतिमन्तरेण जगत्कारणं ब्रह्मेति निश्चयालाभः, तस्मात् तल्लाभाय श्रुतिरेव प्राधान्येन विचारणीया । अनुमानं तूपादानत्वादिसामान्यद्वारा मृदादिवद् ब्रह्मणः स्वकार्यात्मकादिश्रौतार्थसम्भावनार्थं गुणतया विचार्यमित्युपसंहरति—**तस्मादिति** । एतत्सूत्रस्य विषयवाक्यं पृच्छति-**किं पुनरिति** । इह ब्रह्मणि-लक्षणार्थत्वेन विचारयितुमिष्टं वाक्यं किमित्यर्थः । अत्र हि प्रथमसूत्रे विशिष्टाधिकारिणो ब्रह्मविचारं प्रतिज्ञाय ब्रह्म ज्ञातुकामस्य द्वितीयसूत्रे लक्षणमुच्यते, **तथैव** श्रुतावपि मुमुक्षोर्ब्रह्म ज्ञातुकामस्य जगत्कारणत्वोपलक्षणानुवादेन ब्रह्म ज्ञाप्यत इति श्रौतार्थक्रमानुसारित्वं सूत्रस्य दर्शयितुं सोपक्रमं वाक्यं पठति-**भृगुरिति** । अधीहि स्मारय उपदिशेत्यर्थः । अत्र येनेत्येकं

## पूर्णानन्दीया

ज्ञानविषयीभूतमित्यर्थः । यत्कार्यं तत्कारणजन्यमिति कारणजन्यत्वेनैव ज्ञानविषयीभूतकार्यं किं ब्रह्मणा सम्बद्धमित्यर्थं ।

**व्याख्याने उपादानत्वादीति** । आदिशब्देन निमित्तकारणत्वसर्वज्ञत्वादिकमुच्यते, उपादानत्वादिरूपो य स सामान्यधर्मः कार्यात्मकत्वादिश्रौतार्थं तद्द्वारा अनुमान विचार्यमित्यन्वय. । अत एव गुणतयेत्युक्तम्। श्रौतार्थं निमित्तीकृत्यैव अनुमानस्य प्रामाण्य न स्वातन्त्र्येणेत्युक्तमेव विवृणोति **मृदादिवादिति** । मृदादिदृष्टान्तेन श्रुत्या प्रतिपादितो य उपादानत्वादिरूपोऽर्थः तस्मिन्पुरुषसंशयनिवृत्त्यर्थमित्यर्थ । अयं भाव. । उपादानत्वं कि कार्यैक्य कि वा तत्तादात्म्यं उत कार्याधिष्ठानत्व किं निमित्तकारणत्वं कर्तृत्वस्वरूपं तद्भिन्नस्वरूपं वा, कि सर्वज्ञत्व सर्वविषयकज्ञानाश्रयत्वं सर्वावभासक्षमविज्ञानस्वरूपत्वं चेत्येव श्रुत्यर्थे पुरुषस्य सन्देहे सति कार्याधिष्ठानत्वादिनिश्चयार्थमनुमानमुपसर्जनतया विचार्य तस्मान्न स्वतन्त्रं प्रमाणमनुमानमित्युपसहरतीति । **तस्मादितीति** । **विषयवाक्यमिति** । यद्वाक्यमुद्दिश्य विचार क्रियते तद्विषयवाक्यमित्यर्थ. । प्रतीकमादाय इहेत्यस्यार्थमाह **इह ब्रह्मणीति** । **लिलक्षयिषितमिति** पदस्यार्थमाह **लक्षणार्थत्वेन विचारयितुमिति** । **लक्षणमुच्यत इति** । यथा लक्षणमुच्यते तथैवेत्यन्वय । **उपलक्षणानुवादेनेति** । तटस्थलक्षणाभिधानमुखेनेत्यर्थ । श्रुते ब्रह्मस्वरूपप्रतिपादन एव मुख्यतात्पर्यं न जगत्कारणत्वप्रतिपादन इति ज्ञापयितुमनुवादेने-

तस्य च निर्णयवाक्यम्—'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्त्यभिसंविशन्तीति'(तैत्ति० ३।६)। अन्यान्यप्येवंजातीयकानि वाक्यानि नित्यशुद्धबुद्धमुक्तस्वभावसर्वज्ञस्वरूपकारणविषयाण्युदाहर्तव्यानि ॥ २ ॥

## रत्नप्रभा

विवक्षितम्, नानात्वे ब्रह्मत्वविधानायोगात्। यज्जगत्कारणं तदेकमित्यवान्तरवाक्यं, यदेकं कारणं तद् ब्रह्मेति वा, यत्कारणं तदेकं ब्रह्मेति वा, महावाक्यमिति भेदः। किं तर्हि स्वरूपलक्षणमित्याशंक्य वाक्यशेषान्निर्णीतो यतश्शब्दार्थः सत्यज्ञानानन्द इत्याह—तस्य चेति। "यः सर्वज्ञः" (मुण्ड०१।१।१०) "तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते" (मुण्ड०१।१।१०) "विज्ञानमानन्दं ब्रह्म" (बृ०३।९।२८) इत्यादिशाखान्तरीयवाक्यान्यप्यस्य विषय इत्याह—अन्यान्यपीति। एवञ्जातीयकत्वमेवाह—नित्येति। तदेवं सर्वासु शाखासु लक्षणद्वयवाक्यानि जिज्ञास्ये ब्रह्मणि समन्वितानि तद्धिया मुक्तिरिति सिद्धम्।

इति द्वितीयसूत्रम् ॥ २ ॥

## पूर्णानन्दीया

त्युक्तम्। एतेन तटस्थलक्षणस्य श्रुतौ पुरोवादाभावादनुवादेनेत्यनुपपन्नमिति निरस्तम्। अनुवादपदस्य ज्ञापनार्थत्वेन व्याख्यातत्वादिति भाव.। तटस्थलक्षण नाम यावल्लक्ष्यकालमनवस्थितत्वे सति तद्व्यावर्तकं तदेव यथा गन्धवत्व पृथिविलक्षणं महाप्रलये परमाणुषु उत्पत्तिकाले घटादिषु च गंधाभावात् प्रकृते जगज्जन्मादिकारणत्वमिति केचिद्वदन्ति।

**भाष्ये यत्प्रयन्त्यभिसंविशन्तीति**। प्रयन्ति म्रियमाणानीत्यर्थ.। अभिसंविशन्ति आभिमुख्येन संविशन्तीत्यर्थः।

व्याख्याने **ब्रह्मत्वविधानायोगादिति**। अद्वितीयत्वरूपब्रह्मत्वविधानायोगादित्यर्थः। **यज्जगदिति**। 'यतो वा इमानिभूतानी'त्यारभ्य 'तद्विजिज्ञासस्वे'त्यन्तं वाक्यं जगत्कारण तदेकमिति यच्छब्दादिविशिष्टत्वेन सामान्यव्याप्तिप्रतिपादकमवान्तरवाक्यमित्यर्थ.। 'यतो वा इमानि भूतानी'त्यारभ्य 'तद्ब्रह्मेती'त्यन्तं वाक्य यदेकं कारणं ब्रह्मशब्दविशिष्टत्वेन विशेषव्याप्तिप्रतिपादकमहावाक्यमित्यर्थः। **किं तर्हीति**। 'यतो वा इमानि भूतानी'त्यादिना तटस्थलक्षणमुक्तं चेत्तर्हि स्वरूपलक्षण किमिति शंकितुरभिप्रायः। **वाक्यशेषादिति**। 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त' इत्यादिवाक्यशेषादित्यर्थः। यतःशब्दार्थः यतो वा इमानीत्यत्र यतःशब्दार्थः। तस्मादेतद्ब्रह्मनामेति तच्छब्दस्य यच्छब्देनान्वयं दर्शयितु श्रुत्यंशं संगृह्णाति **य· सर्वज्ञ इति**। **एवंजातीयकत्वमेवेति**। स्वरूपतटस्थलक्षणद्वयप्रतिपादकत्वमेवेत्यर्थ। फलितमाह **तदेवमिति**।

## ३ शास्त्रयोनित्वाधिकरणम् । सू० ३

न कर्तृ ब्रह्म वेदस्य किं वा कर्तृ न कर्तृ तत् । विरूपानित्यया वाचेत्येवं नित्यत्वकीर्तनात् ॥१॥
कर्तृ निश्वसितात्युक्तेर्नित्यत्वं पूर्वसाम्यत । सर्वावभासिवेदस्य कर्तृत्वात्सर्वविद्भवेत् ॥२॥
अस्त्यन्यमेयताप्यस्य किं वा वेदैकमेयता । घटवत्सिद्धवस्तुत्वाद्ब्रह्मान्येनापि मीयते ॥ १ ॥
रूपलिङ्गादिराहित्यान्नास्य मान्तरयोग्यता । तं त्वौपनिषदेत्यादौ प्रोक्ता वेदैकमेयता ॥ २ ॥

जगत्कारणत्वप्रदर्शनेन सर्वज्ञं ब्रह्मेत्युपक्षिप्त तदेव द्रढयन्नाह—

---

### रत्नप्रभा

यस्य निश्वसितं वेदाः सर्वार्थज्ञानशक्तयः ।
श्रीरामं सर्ववेत्तारं वेदवेद्यमहं भजे ॥ १ ॥

वृत्तानुवादेन सङ्गतिं वदन्नुत्तरसूत्रमवतारयति–**जगदिति** । (१)चैतन्यस्य ब्रह्मणो जगत्कारणत्वोक्त्या सर्वज्ञत्वमर्थात् प्रतिज्ञातं सूत्रकृता, चेतनसृष्टेर्ज्ञानपूर्वकत्वात् । तथा च ब्रह्म सर्वज्ञं सर्वकारणत्वात्, यो यत्कर्ता स तज्ज्ञः यथा कुलाल इति स्थितम्, तदेवार्थिकं सर्वज्ञत्वं प्रधानादिनिरासाय वेदकर्तृत्वहेतुना द्रढयन्नाहेत्यर्थः ; हेतुद्वयस्यैकार्थसाधनत्वादेकविषयत्वम**वान्तरसङ्गतिः** । **यद्वा**—वेदस्य नित्यत्वाद् ब्रह्मणः सर्वहेतुता नास्तीत्याक्षेपसङ्गत्या वेदहेतुत्वमुच्यते । "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः" (बृह०२।४।१०) इति वाक्यं **विषयः** । तत् किं वेदहेतुत्वेन ब्रह्मणः सर्वज्ञत्वं साधयति उत न साधयति इति

### पूर्णानन्दीया

श्रीगुरुभ्यो नमः ।

सत्यानन्दचिदानन्दजगत्कारणमीश्वरम् ।
रुक्मिणीसहितं कृष्णं सर्वज्ञं परमाश्रये ॥

व्याचिख्यासिताव्यवहितसूत्रार्थपरिष्कारद्वारा 'ग्रन्थादौ ग्रन्थमध्ये तु मंगलमाचरेतेति' न्यायेन स्वेष्टदेवतातत्त्वानुस्मरणलक्षणं मंगलमाचरन् शिष्याशिक्षार्थं ग्रन्थतो निबध्नाति **यस्य निःश्वसितमिति** । **वृत्तानुवादेनेति** । पूर्वप्रतिपादितार्थानुवादेनेत्यर्थः । लक्षणद्वयप्रतिपादनपरेण द्वितीयसूत्रेणाप्राधान्यात्सर्वज्ञत्वं प्रतिज्ञातं संप्रति तृतीयसूत्रेण प्राधान्यात्प्रतिपादितम् इत्याभिप्रेत्यावतारिका व्याचष्टे **चेतनस्येति** । **अर्थादिति** । अनुमानादित्यर्थः । उपक्षिप्तपदस्यार्थमाह **प्रतिज्ञातमिति** । तदेवानुमानमाह **तथा चेति** । **आर्थिकमिति** । अनुमानसिद्धमित्यर्थः । **'शास्त्रयोनित्वात्' इति** सूत्रस्य प्रथमव्याख्यानपरिष्कृतार्थमाह **वेदकर्तृत्वहेतुनेति** । सर्वजगद्व्यवस्थावभासिवेदकर्तृत्वहेतुनेत्यर्थः । **आहेति** । आह सूत्रकार इत्यर्थः । **हेतुद्वयस्येति** । जन्मादिकारणत्ववेदकर्तृत्वहेतुद्वयस्य सर्वज्ञत्वरूपैकार्थसाधकत्वादेकार्थप्रतिपादकत्वमवान्तरसङ्गतिरित्यर्थः । अधिकरणमारच्यते **अस्य महतो भूतस्येत्यादिना**। यदृग्वेदादिकं तदेतस्य सर्व-

---

( १ ) टीकाकारमतेनात्र रत्नप्रभाया चेतनस्येति पाठः ।

॥ रत्नप्रभा ॥

सन्देहः। तत्र व्याकरणादिवद्वेदस्य पौरुषेयत्वे मूलप्रमाणसापेक्षत्वेनाप्रामाण्यापातान्न साधयतीति **पूर्वपक्षे** जगद्धेतोश्चेतनत्वासिद्धिः फलम्। **सिद्धान्ते** तत्सिद्धिः। अस्य वेदान्तवाक्यस्य स्पष्टब्रह्मलिङ्गस्य वेदकर्त्तरि समन्वयोक्तेः **श्रुतिशास्त्राध्यायपादसङ्गतयः**। एवमापादं श्रुत्यादिसङ्गतय ऊह्याः। वेदे हि सर्वार्थप्रकाशनशक्तिरुपलभ्यते, सा तदुपादानब्रह्मगतशक्तिपूर्विका तद्गता वा प्रकाशनशक्तित्वात् कार्यगतशक्तित्वाद्वा प्रदीपशक्तिवदिति वेदोपादानत्वेन ब्रह्मणः स्वसम्बद्धाशेषार्थप्रकाशनसामर्थ्यरूपं सर्वसाक्षित्वं सिद्ध्यति। **यद्वा-यथा** अध्येतारः पूर्वक्रमं ज्ञात्वा वेदं

॥ पूर्णानन्दीया ॥

गतस्य नित्यसिद्धस्य ब्रह्मण निःश्वसितं निःश्वास इवाप्रयत्नेन सिद्धमिति श्रुत्यर्थः। **पौरुषेयत्व इति**। पुरुषप्रयत्नजन्यत्व इत्यर्थः। यत्पौरुषेय तन्मूलप्रमाणजन्यमिति व्याप्तेः सत्त्वाद्वेदस्य पौरुषेयत्वे मूलप्रमाणजन्यत्व वक्तव्यं तस्य परोक्तिरूपमूलप्रमाणस्यार्थस्य साकल्येन ज्ञातुमशक्यत्वात् भ्रान्त्या वेदकर्तुरन्यथार्थग्रहणशङ्कया तज्जन्यस्यापि वेदस्याप्रामाण्यं दुर्वारम् तस्मात्सर्वज्ञत्व न साधयतीति पूर्वपक्षार्थः। **अस्येति**। तृतीयसूत्रस्येत्यर्थः। प्रकृतवेदान्तवाक्यस्य यः समन्वयः तत्प्रतिपादकत्वादित्यर्थः। वेदान्तवाक्यस्येत्यनेन विषयवाक्यस्वरूपस्यास्य महतो भूतस्येत्यादिश्रुतेः तृतीयसूत्रस्य च वेदकर्तृत्वरूपैकार्थबोधकत्वरूपा संगति प्रदर्शिता। स्पष्टब्रह्मलिङ्गकस्येति विशेषणेन सूत्रस्य प्रथमपादस्य च स्पष्टब्रह्मलिङ्गकश्रुत्यर्थप्रतिपादकत्वरूपा संगतिः प्रदर्शिता। वेदकर्तरीत्यनेन सूत्रस्य शास्त्रस्य चैकार्थप्रतिपादकत्वरूपा सङ्गतिर्दर्शिता। सूत्रं वेदकर्तृत्वेन ब्रह्मबोधक शास्त्रमपि शास्त्रार्थत्वेन ब्रह्मबोधकमिति भावः। समन्वयोक्तेरित्यनेन सूत्रस्य प्रथमाध्यायस्य च समन्वयप्रतिपादकत्वरूपसङ्गतिर्निरूपिता। एतत्सर्व प्रथमसूत्रसङ्गतिनिरूपणावसरे विस्तरेणोपपादितमिति भावः। सिद्धान्तसूत्रतात्पर्यमाह **वेदे हीति**। **तद्गता वेति**। उपादानब्रह्मगता वेत्यर्थः। कार्ये शक्तिः कारणगतशक्त्यभिन्नेति भावः। **तत्कार्यगतेति**। ब्रह्मकार्यवेदगतशक्तित्वाद्वेदे शक्तिः ब्रह्मशक्तिपूर्विका ब्रह्मशक्तिर्वेत्यर्थः। **प्रदीपशक्तिवदिति**। प्रदीपोपादान तेजः तच्छक्तिपूर्विका तद्गतशक्तिर्वा प्रदीपशक्तिस्तद्वदित्यर्थः। **स्वसम्बद्धेति**। स्वपदेन ब्रह्मोच्यते सर्वो यो वेदार्थः स आध्यासिकतादात्म्यसम्बन्धेन ब्रह्मसम्बद्ध इत्यशेषवेदार्थप्रकाशकत्वसामर्थ्यरूपं सर्वज्ञत्वाभिन्नं सर्वसाक्षित्वं ब्रह्मणः सिद्ध्यति कार्ये सर्वार्थप्रकाशकत्वस्य कारणे सर्वार्थप्रकाशकत्वमन्तरा अनुपपन्नत्वादिति भावः। यदाश्रितं ज्ञानं तन्मनोजन्यमिति व्याप्त्या खण्डितं तार्किकमतसिद्ध नित्यज्ञानाश्रयत्वरूपसर्वज्ञत्वं यत्तद्वैलक्षण्यायोक्तं **सर्वसाक्षित्वमिति**। सर्वसाक्षित्वरूपं सर्वज्ञत्वमित्यर्थः। अनेनानुमानेन सिद्धं सर्वज्ञत्वं मनोजन्यमित्युक्तव्याप्त्या खण्डयितुमशक्य साक्ष्यात्मकनित्यज्ञानस्वरूपत्वेन आश्रितज्ञानत्वाभावादिति भाव। सर्वार्थप्रकाशने वेदस्य करणत्वं ब्रह्मणस्तु कर्तृत्वमिति भेदः। स्वप्रकाशे निर्विकारे ब्रह्मणि विद्यमाने सर्वस्य प्रकाशो भवति

## शास्त्रयोनित्वात् ॥ ३ ॥

महत ऋग्वेदादेः शास्त्रस्यानेकविद्यास्थानोपबृंहितस्य प्रदीपवत्सर्वा-

### रत्नप्रभा

कुर्वन्ति, तथा विचित्रगुणमायासहायोऽनावृतानन्तस्वप्रकाशचिन्मात्रः परमेश्वरः स्वकृतपूर्वकल्पीयक्रमसजातीयक्रमवन्तं वेदराशिं तदर्थांश्च युगपज्जानन्नेव करोतीति न वेदस्य पौरुषेयता । यत्र ह्यर्थज्ञानपूर्वकं वाक्यज्ञानं वाक्यसृष्टौ कारणं तत्र पौरुषेयता, अत्र च यौगपद्यान्न सा, अतो वेदकर्त्ता वेदमिव तदर्थमपि स्वसम्बद्धं नान्तरीयकतया जानातीति सर्वज्ञ इति सिद्धान्तयति—**शास्त्रेति** ।

शास्त्रं प्रति हेतुत्वाद् ब्रह्म सर्वज्ञं सर्वकारणं चेति सङ्गतिद्वयानुसारेण सूत्रयोजनामभिप्रेत्य पदानि व्याचष्टे—**महत इति** । हेतोः सर्वज्ञत्वसिद्धये वेदस्य विशेषणानि । तत्र ग्रन्थतोऽर्थतश्च महत्त्वम्, हितशास-

### पूर्णानन्दीया

तस्मात्तत्कर्तृत्वमप्यौपचारिकमिति मन्तव्यम्। यदि वेदादेव सर्वज्ञत्वनिश्चयस्तदा अन्योन्याश्रयः स्यात् । तथाहि वेदप्रामाण्यनिश्चये सर्वज्ञत्वादिनिश्चय· तन्निश्चये भ्रमादिशङ्कानिरासपूर्वकं वेदप्रामाण्यनिश्चय इति तद्वारणाय अनुमानादेव सर्वसाक्षित्वरूपसर्वज्ञत्वनिश्चय इति वक्तव्यम् अनुमान तु वेदे शक्ति ब्रह्मगतशक्तिपूर्विकेत्यादिना उपपादितम् ।

ननु वेदस्य पौरुषेयत्वं तत्कर्तुःसर्वज्ञत्व चाभ्युपगतं चेत्तत्कर्तुर्ब्रह्मण सर्वज्ञत्वेन तस्य मूलप्रमाणसापेक्षत्वाभावादुक्तव्याप्तिविरोध स्यादिति चेन्न । सर्वज्ञभिन्नपुरुषकृतिजन्यं यत्तदेव मूलप्रमाणसापेक्षमिति व्याप्ते संकोचस्य कल्पनीयत्वात्तथा च वेदस्य पौरुषेयत्वमङ्गीकृत्य सर्वार्थप्रकाशकवेदकर्तुः सर्वज्ञत्वादेव वेदस्य मूलप्रमाणसापेक्षत्वाभावेन नाप्रामाण्यमिति तत्कर्तृत्वेन सर्वज्ञत्वं प्रसाधितम् सम्प्रति वेदस्य पौरुषेयत्वमेव नास्तीतिं तत्कर्तुः सर्वज्ञत्वमिति सिद्धान्ततात्पर्य व्याख्यानान्तरेण स्फुटीकरोति **यथेति** । **अध्येतार इति** । उपाध्यायिन इत्यर्थ । **पूर्वक्रमं ज्ञात्वेति** । पूर्ववेदानुपूर्वी स्मृत्वेत्यर्थः । **वेदं कुर्वन्तीति** । वेदक्रमानुसारेण शिष्यान्प्रति बोधयन्तीत्यर्थः । **स्वकृतेति** । स्वकृतः पूर्वकल्पीय पूर्वकृतसम्बन्धी य. क्रम वेदक्रम. वेदानुपूर्वीति यावत् तत्सजातीयो य· क्रमः तद्वन्तमित्यर्थ । पूर्वकल्पे यादृशी वेदानुपूर्वी तादृश्येव कल्पान्तरेपीत्येकानुपूर्वीत्वेन साजात्यं विवक्षितमिति भावः । अत्र यौगपद्यान्न सेति । पदार्थज्ञानस्य वाक्यार्थज्ञानस्य च वाक्ये समुदायरूपवेदराशिरचना प्रति हेतुत्वाभावान्न पौरुषेयता किंतु वेदस्य रचना विजातीया तस्मान्न लोकवाक्यरचनादृष्टान्ततेति भाव । फलितार्थप्रदर्शनद्वारा प्रकृतमुपसहरति **अत इति** । **नान्तरीयकतयेति** । नियमेनेत्यर्थ । **सङ्गतिद्वयेति** । अवान्तराक्षेपसङ्गतिद्वयेनेत्यर्थ । सङ्गतिद्वयानुसारेण वेदकारणत्वादेव सर्वज्ञत्वं सर्वकारणत्वं च ब्रह्मणः सिध्यतीति सूत्रार्थ मनसि निधाय पदानि व्याचष्ट इति भाव.। **ग्रन्थत इति** । शब्दत

र्थावद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म। न हीदृशस्य शास्त्रस्यर्ग्वे-

## रत्नप्रभा

नात् शास्त्रत्वम्। शास्त्रशब्दः शब्दमात्रोपलक्षणार्थ इति मत्वाह—**अनेकेति**। "पुराणान्यायमीमांसाधर्मशास्त्राणि, शिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्योतिषाणि षडङ्गानि" इति दश विद्यास्थानानि वेदार्थज्ञानहेतवः, तैरुपकृतस्येत्यर्थः। अनेन मन्वादिभिः परिगृहीतत्वेन वेदस्य प्रामाण्यं सूचितम्। अबोधकत्वाभावादपि प्रामाण्यमित्याह—**प्रदीपवदिति**। सर्वार्थप्रकाशनशक्तिमत्त्वेऽप्यचेतनत्वात् सर्वज्ञकल्पत्वं योनिरुपादानं कर्तृ च। **ननु** सर्वज्ञस्य यो गुणः सर्वार्थज्ञानशक्तिमत्त्वं वेदस्य तदन्वितत्वेऽपि तद्योनेः सर्वज्ञत्वं कुत इत्यत आह—**न हीति**। उपादाने तच्छक्तिं विना कार्ये तदयोगाद्वेदोपादानस्य सर्वज्ञत्वम्। अनुमानं तु पूर्वं दर्शितम्। **न चाविद्याया**स्तदापत्तिः। शक्तिमत्त्वेऽप्यचेतनत्वादिति भावः। वेदः स्वविषयादधिकार्थज्ञानवज्जन्यः प्रमाणवाक्यत्वात् व्याकरणरामायणादिवदित्यनुमानान्तरम्। तत्र व्याप्ति-

## पूर्णानन्दीया

इत्यर्थः। वेदशब्दोच्चारणमात्रेण सर्वपापक्षयाच्छब्दतो वेदस्वरूपशास्त्रस्य महत्त्वमिति ऋग्वेदादेरित्यनेन भाष्येण प्रतिपादितामिति भावः। **अर्थतश्चेति**। पुराणादिदशविद्यास्थानेषु वेदार्थ एव प्रतिपाद्यते तस्मादर्थतोपि वेदस्य महत्त्वमित्यनेकविद्यास्थानोपबृंहितस्येत्यनेन भाष्येण प्रतिपादितिमिति भाव। **हितशासनादिति**। हितार्थप्रतिपादकत्वादित्यर्थ। **शास्त्रशब्द इति**। मात्रपद कार्त्स्न्यार्थक शब्दमात्रस्य उपलक्षणमर्थो यस्य स तथा न केवलं शास्त्रशब्दस्य वेदशब्दसमुदाय एवार्थः किन्तु कृत्स्नशब्दसमुदाय इति मत्वा हेत्यर्थः। **उपकृतस्येति**। व्याख्यातस्येत्यर्थ। वेदस्य मूलप्रमाणसापेक्षत्वाभावान्नाप्रामाण्यमिति प्रामाण्यमुक्त्वा मन्वादिपरिगृहीतत्वाच्च प्रामाण्यमस्तीत्याह **अनेनेति**। परिगृहीतत्वेन व्याख्यातत्वेनेत्यर्थ। अप्रामाण्यसाधकयुक्तेरभावात् प्रामाण्यमुपपाद्य हेत्वन्तरपरत्वेन भाष्यमवतारयति (१)**बोधकत्वादपीति**। यथा चक्षुरादेर्बोधकत्वात् प्रामाण्य तथा बोधकत्वाद्वेदस्य प्रामाण्यमित्याहेत्यर्थ। **प्रकाशनशक्तीति**। प्रकाशकशक्तीत्यर्थ। **सर्वज्ञकल्पत्वमिति**। सर्वज्ञापेक्षया ईषन्न्यूनताकत्वमित्यर्थ। योनि कारण तद्विवृणोति **योनिरिति। अनुमानं त्विति**। वेदे स्वार्थप्रकाशकशक्तिरुपादानशक्तिपूर्विका तद्गता वेत्याद्यनुमानमित्यर्थः। **तदापत्तिरिति**। उपादानत्वेन ब्रह्मवत्सर्वार्थप्रकाशकशक्तिमत्त्वापत्तिरित्यर्थः। तथा च सर्वज्ञत्वं स्यादिति शंकितुरभिप्रायः। **अचेतनत्वादिति**। अचेतनत्वान्न सर्वज्ञत्वमिति भावः। कार्यगतशक्तिमत्त्वस्य कारणगतशक्तिपूर्वकत्वात्कारणगतशक्त्यभिन्नत्वाच्चोपादानकारणस्य सर्वज्ञत्वमुपपाद्य वेदविषयार्थाधिकार्थज्ञानवत्त्वाच्च सर्वज्ञत्वमुपपादयतीति भाष्यमवतारयति **वेदः स्वविषयादिति**। स्ववि-

(१) सर्वत्र रत्नप्रभायां 'अबोधकत्वाभावादपी' त्येवपाठ उपलभ्यत इति स एव मुद्रित।

ददिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञादन्यतः सम्भवोऽस्ति । यद्यद्वि- स्तरार्थं शास्त्रं यस्मात्पुरुषविशेषात्सम्भवति, यथा व्याकरणादि पाणि- न्यादेर्ज्ञेयैकदेशार्थमपि, स ततोऽप्यधिकतरविज्ञान इति प्रसिद्धं लोके, किमु वक्तव्यमनेकशाखाभेदभिन्नस्य देवतिर्यङ्मनुष्यवर्णाश्रमादिप्रविभाग-

## रत्नप्रभा

माह—यद्यदिति । विस्तरः—शब्दाधिक्यम् । अनेनार्थतोऽल्पत्वं वदन् कर्तुर्ज्ञान- स्यार्थाधिक्यं सूचयति । दृश्यते चार्थवादाधिक्यं वेदे । अत्रैषा योजना—यद्यच्छास्त्रं यस्मादाप्तात् सम्भवति स ततः शास्त्रादधिकार्थज्ञान इति प्रसिद्धम्, यथा शब्दसाधुत्वादिर्ज्ञेयैकदेशोऽर्थो यस्य तदपि व्याकरणादि पाणिन्यादेरधिकार्थज्ञानात्

## पूर्णानन्दीया

षयात्स्वप्रतिपाद्यार्थात् योऽधिकार्थं तद्विषयकज्ञानवज्जन्य इत्यर्थ । विस्तरार्थं शास्त्रमित्यत्र -विस्तरस्यार्थः प्रतिपादनं यस्य तदिति विग्रह, अथवा विस्तरेणार्थं अल्पार्थ यस्मिन् तदिति विग्रहः। यद्वा अर्थशब्द धर्मवाचक विस्तर. शब्दाधिक्यरूप. अर्थ धर्मविशेष. यस्य तद्विस्तरार्थन्तथा च शब्दबाहुल्यकमल्पार्थक शास्त्रमित्यभिप्रेत्य विस्तरशब्दार्थमाह **विस्तर इति । अर्थत आधिक्यमिति ।** अधिकार्थविषयकत्वमित्यर्थ. । **दृश्यते चेति ।** वेदे बहवोऽर्थवादा सन्ति तस्माच्छब्दाधिक्यं दृश्यत इति भावः । यद्यच्छास्त्रं यस्मात्पुरुषविशे- षात्सम्भवति स ततोप्यधिकतरविज्ञान इति सामान्यव्याप्ति भाष्यस्थपदान्यादायान्वयमुखेन अर्थपूर्वकं दर्शयति (१)**अत्रैषाक्षरयोजनेति ।** पुरुषविशेषादित्यस्यार्थमाह **आप्तादिति । स इति ।** आप्तपुरुष इत्यर्थः । यद्यच्छास्त्रं पुरुषविशेषात्संभवति तस्माच्छास्त्रादित्यन्वयमभि- प्रेत्याह **ततः शास्त्रादिति ।** अधिकतरविज्ञान इत्यस्यार्थमाह **अधिकेति ।** यथा व्या- करणादि पाणिन्यादे ज्ञेयैकदेशार्थमपीति भाष्यस्यान्वयपूर्वकमर्थकथनद्वारा शास्त्रस्याल्पार्थ त्वं तत्कर्तुरधिकार्थज्ञत्व च स्फुटीकुर्वन् सामान्यव्याप्ते दृष्टान्तमुपपादयति **यथा शब्दे- ति ।** पाणिन्यादिभिर्ज्ञेयानां बहूनामर्थानां मध्ये शब्दसाधुत्वादिरूपार्थ एकदेशो भवतीत्य र्थ.। ज्ञेयैकदेशार्थमपीति विशेषण वेदैकदेशार्थपरिष्कारोपयोगीति विज्ञेयम् । बहुव्रीहिसमास ज्ञापयति **यस्येति ।** व्याकरणादीति च्छेद.; तथा च ज्ञेयैकदेशार्थव्याकरणादिस्वरूप यच्छा- स्त्रम् यस्मादधिकार्थज्ञात्पाणिन्यादेः सकाशाज्जायते स पाणिन्यादिः तस्माच्छास्त्रादधिकतर- विज्ञानो यथा तथा ज्ञेयैकदेशार्थ ऋग्वेदादि यच्छास्त्रम् तस्मादधिकार्थज्ञात्परमेश्वरात्संभवति स परमेश्वरस्तस्माच्छास्त्रादधिकार्थज्ञानवानिति भाव। इमा व्याप्तिमवलम्ब्य वेदे स्वविषया- दधिकार्थज्ञानवज्जन्यत्व प्रमाणवाक्यत्वरूपहेतुना साध्यते तथा च उक्तव्याप्तिबलेन यत्र

---

(१) अत्र 'अत्रैषायोजने'त्येव सर्वत्र रत्नप्रभापाठ उपलभ्यत इति स एव मुद्रित ।

हेतोर्ऋग्वेदाद्याख्यस्य सर्वज्ञानाकरस्याप्रयत्नेनैव लीलान्यायेन पुरुषनिःश्वासवद्यस्मान्महतो भूताद्योनेः सम्भवः, 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' (बृह०२।४।१०) इत्यादिश्रुतेः, तस्य महतो भूतस्य निरतिशयं सर्वज्ञत्वं सर्वशक्तिमत्त्वं चेति । अथवा यथोक्तमृग्वेदादि-

## रत्नप्रभा

सम्भवति । यद्यल्पार्थमपि शास्त्रमधिकार्थज्ञानात् सम्भवति तदा "अस्य महतः" (बृह०२।४।१०) इत्यादिश्रुतेर्यस्मान्महतोऽपरिच्छिन्नाद्भूतात् सत्याद्योनेः सकाशादनेकशाखेत्यादिविशिष्टस्य वेदस्य पुरुषनिश्श्वासवदप्रयत्नेनैव सम्भवः तस्य सर्वज्ञत्वं सर्वशक्तिमत्त्वं चेति किमु वक्तव्यमिति । तत्र वेदस्य पौरुषेयत्वशङ्कानिरासार्थं श्रुतिस्थनिश्श्वसितपदार्थमाह—**अप्रयत्नेनेति** । प्रमाणान्तरेणार्थज्ञानप्रयासं विना निमेषादिन्यायेनेत्यर्थः । अत्रानुमानेन "यः सर्वज्ञः" (मुण्ड०१।१) इति श्रुत्युक्तसर्वज्ञत्वदार्ढ्याय पाणिन्यादिवद्वेदकर्त्तरि अधिकार्थज्ञानसत्तामात्रं साध्यते, न त्वर्थज्ञानस्य वेदहेतुत्वं निःश्वसितश्रुतिविरोधात्, वेदज्ञानमात्रेणाध्येतृवद्वेदकर्तृत्वोपपत्तेश्च । इयान्विशेषः—अध्येता परापेक्षः, ईश्वरस्तु स्वकृतवेदानुपूर्वीं स्वयमेव स्मृत्वा तथैव कल्पादौ ब्रह्मादिष्वाविर्भावयन्ननावृतज्ञानत्वात्तदर्थमप्यवर्जनीयतया जानातीति सर्वज्ञ इत्यनवद्यम् ।

इति प्रथमवर्णकम् ॥

## पूर्णानन्दीया

प्रमाणवाक्यत्वं तत्र स्वविषयादधिकार्थज्ञानवज्जन्यत्वमितीयं व्याप्तिः परिष्कृतेत्यभिप्रायेणात्रोदाहृतेति मन्तव्यम् ।

ननु वेदस्य सर्वार्थप्रतिपादकत्वेन ततोऽप्यधिकार्थ एव नास्तीति चेन्न । दशविद्यास्थानेषु प्रतिपादितार्थप्रकाशकत्वमेव वेदस्य सर्वार्थप्रकाशकत्वमित्यङ्गीकारात्सर्वजनव्यवहारविषयलौकिकार्थस्याधिकस्य सम्भवेन तत्कर्तुरीश्वरस्याधिकार्थज्ञानवत्त्वं युक्तमित्यनवद्यम् । वृत्तानुवादपूर्वकमस्य महतो भूतस्येत्यादिश्रुतेरर्थं कथयन् भाष्यान्वयपरिष्कारेण सर्वज्ञत्वादिकमाविष्करोति **यद्यल्पार्थमपीति** । किमुवक्तव्यमिति भाष्यस्योत्तरेणेतिपदेनान्वयं दर्शयति **इति किमु वक्तव्यमिति** । 'अवर्जनीयतये'त्यादिप्राक्तनो ग्रन्थ स्पष्टार्थः । **अवर्जनीयतयेति** । नियमेनेत्यर्थः ।

**तृतीयसूत्रे प्रथमवर्णकं समाप्तम् ॥ इति षष्ठवर्णकम् ॥**

शास्त्रं योनिः कारणं प्रमाणमस्य ब्रह्मणो यथावत्स्वरूपाधिगमे । शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्माधिगम्यत इत्यभिप्रायः । शास्त्रमुदाहृतं पूर्वसूत्रे—'यतो वा इमानि भूतानि जायन्ते' इत्यादि । किमर्थं तर्हीदं सूत्रं ? यावता पूर्वसूत्र एवैवंजातीयकं शास्त्रमुदाहरता शास्त्रयोनित्वं

---

## रत्नप्रभा

अधुना ब्रह्मणो लक्षणानन्तरं प्रमाणजिज्ञासायां वर्णकान्तरमाह—**अथ वेति** । लक्षणप्रमाणयोर्ब्रह्मनिर्णयार्थत्वादेकफलकत्वं **सङ्गतिः** । "तन्त्वौपनिषदं पुरुषम्" (बृ०३।९।२६) इति श्रुतिर्ब्रह्मणो वेदैकवेद्यत्वं ब्रूते न वेति **संशये,** कार्यलिङ्गेनैव लाघवात् कर्तुरेकस्य सर्वज्ञस्य ब्रह्मणः सिद्धेर्न ब्रूत इति प्राप्ते वेदप्रमाणकत्वात् ब्रह्मणो न प्रमाणान्तरवेद्यत्वमिति सिद्धान्तयति—**शास्त्रयोनित्वादिति** । तद्व्याचष्टे—**यथोक्तमिति** । सर्वत्र पूर्वोत्तरपक्षयुक्तिद्वयं संशयबीजं द्रष्टव्यम् । अत्र **पूर्वपक्षे** अनुमानस्यैव विचार्यतासिद्धिः फलं, सिद्धान्ते वेदान्तानामिति भेदः । अनुमानादिना ब्रह्मसिद्धिः पूर्वसूत्रे प्रसङ्गान्निरस्ता । **किञ्च विचित्र**प्रपञ्चस्य प्रासादादिवदेककर्तृकताबाधान्न लाघवावतारः । **न च** सर्वज्ञत्वात् कर्तुरेकत्वसम्भवः, एकत्वज्ञानात् सर्वज्ञत्वज्ञानं ततस्तदित्यन्योन्याश्रयमभिप्रेत्याह—**शास्त्रादेवेति** । किं तच्छास्त्रमिति

## पूर्णानन्दीया

श्रीकृष्णाय नम ।

**अधुनेति** । प्रथमसूत्रेण ब्रह्मणः जिज्ञास्यत्वमुक्त्वा द्वितीयसूत्रेण जिज्ञास्यब्रह्मण लक्षणमुक्तम् । लक्षिते ब्रह्मणि किं प्रमाणमित्यधुना प्रमाणजिज्ञासायां व्याख्यानान्तरमाहेत्यर्थ । **एकफलकत्वमिति** । पूर्वोत्तराधिकरणसूत्रयो ब्रह्मनिर्णयरूपैकफलकत्व सङ्गतिरित्यर्थ । अधिकरणरचनार्थं विषयवाक्यमाह **तं त्विति** । शाकल्यम् प्रति याज्ञवल्क्येनोक्तमिदम् वाक्यम्। तंत्वेति पदच्छेदपक्षे त्वा त्वा प्रति पृच्छामीत्यन्वय । त त्विति पदच्छेदपक्षोपि साधुरेवेति मन्तव्यम्। त सकारणस्य हिरण्यगर्भस्याधिष्ठानमित्यर्थ । औपानिषद उपनिषदेकगम्य पुरुष पूर्णमित्यर्थ **कार्यलिङ्गेनैवेति**। जगत्सकर्तृकं कार्यत्वात् घटपटवदिति कार्यत्वलिंगकेन लाघवज्ञानसहकृतेनानुमानेनैव ईश्वरसिद्धिरिति पूर्वपक्षार्थ. । किञ्चेत्यादिप्राक्तनो ग्रन्थस्त्वतिरोहितार्थ । विचित्रं जगदनेककर्तृक विचित्रकार्यत्वात्तक्षाद्यनेककर्तृकप्रासादादिवदिति सत्प्रतिपक्षानुमानेन लाघवज्ञानसहकृतैककर्तृकत्वानुमान बाधितमित्याह किञ्च **विचित्रेति**। ईश्वरस्य सर्वज्ञत्वात्तक्षादिवैलक्षण्य स्यादित्याशंकामुद्भाव्य परिहरति **नचेति। ततस्तदिति**। सर्वज्ञत्वज्ञानादेकत्वज्ञानमित्यर्थ. । अयं भावः । सर्वज्ञत्वरूपहेतुसिद्धि. कथमित्युक्ते विचित्रकार्यकर्ता सर्वज्ञः एकत्वादित्येव एकत्वज्ञानात्सर्वज्ञत्वज्ञानं वक्तव्यम्, एकत्वरूपहेतुसिद्धि कथमित्युक्ते विचित्रकार्यकर्ता सर्वज्ञ एक. सर्वज्ञत्वादित्येव सर्वज्ञत्वज्ञानादेकत्वज्ञानं वक्तव्यम्, तथाचान्यो-

ब्रह्मणो दर्शितम् । **उच्यते**—तत्र पूर्वसूत्राक्षरेण स्पष्टं शास्त्रस्यानुपादानाज्जगतोजन्मादि केवलमनुमानमुपन्यस्तमित्याशङ्क्येत, तामाशङ्कां निवर्तयितुमिदं सूत्रं प्रववृते—'शास्त्रयोनित्वादि'ति ॥ ३ ॥

## रत्नप्रभा

तत्राह—**शास्त्रमिति** । पृथगारम्भमाक्षिपति—**किमर्थमिति** । **येन** हेतुना दर्शितं ततः किमर्थमित्यर्थः । जन्मादिलिङ्गकानुमानस्य स्वातन्त्र्येणोपन्यासशङ्कानिरासार्थं पृथक्सूत्रमित्याह—**उच्यत इति** ।

इति तृतीयसूत्रम् ॥ ३ ॥

## पूर्णानन्दीया

-न्याश्रय इति । यावता तर्हीति पदद्वयस्यार्थकथनपूर्वकमन्वयमाविष्करोति **येनेति** ।तथा च पौनरुक्त्यमिति भावः । केवलपदस्यार्थमाह **स्वातंत्र्येणेति** । यद्यपि जन्मादिसूत्राक्षरैर्लक्षणलिङ्गकानुमान तत्सूत्रतात्पर्येण शास्त्रस्य प्रामाण्य च प्रतिपादितं तथाप्यक्षरैः प्रतिपादितत्वादनुमानमेव स्वतंत्रप्रमाणमिति या शङ्का तन्निरासार्थं अक्षरैः शास्त्रप्रामाण्यप्रतिपादनाय 'शास्त्रयोनित्वादि'त्युत्तरसूत्र प्रवृत्तं भवति तस्मान्न पौनरुक्तिशङ्का नानुमानस्य स्वातन्त्र्येण प्रामाण्यशंका चेति भाव । शास्त्रानुमानयोः प्रामाण्यस्याक्षरप्रतिपादितत्वाच्छास्त्रवदनुमानमपि स्वतन्त्रप्रमाणमिति न शङ्कनीय अतीन्द्रियार्थे श्रुतिरेव स्वतन्त्रप्रमाणमित्युक्तत्वादिति स्थितम् । ततश्चायं सूत्रार्थः—ब्रह्म शास्त्रप्रमाणं शास्त्रैकगम्यत्वादिति ॥ ३ ॥

**॥ तृतीयसूत्रस्य द्वितीयवर्णकं समाप्तम् ॥**

**॥ इति सप्तमवर्णकम् ॥**

**४ समन्वयाधिकरणम् । सू० ४**

कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वमुच्यते ? यावता 'आम्नायस्य क्रि-

## रत्नप्रभा

वेदान्ताः सिद्धब्रह्मपरा उत कार्यपरा इति निष्फलत्वसापेक्षत्वयोः प्रसङ्गाप्रसङ्गाभ्यां संशये पूर्वसूत्रे द्वितीयवर्णकेनाक्षेपसङ्गत्या पूर्वपक्षमाह–**कथं पुनरित्यादिना** । "सदेव सोम्य" (छां०६।२।१) इत्यादीनां सर्वात्मत्वादिस्पष्टब्रह्मलिङ्गानां ब्रह्मणि समन्वयोक्तेः श्रुत्यादिसङ्गतयः । **पूर्वपक्षे** वेदान्तेषु मुमुक्षुप्रवृत्त्यसिद्धिः, **सिद्धान्ते** तत्सिद्धिरिति विवेकः । **कथमिति**—आक्षेपे । । हेतुः—**यावतेति** । यतो जैमिनिसूत्रेण शास्त्रस्य वेदस्य

## पूर्णानन्दीया

श्रीगुरुभ्यो नमः ।

श्रुतीनां निर्गुणे यस्मिन् प्रामाण्यं प्रतिपाद्यते ।<br>तं कृष्णमास्मि प्रणतो राधाचित्तापहारिणम् ॥

'तत्तु समन्वयादि'त्युत्तरसूत्रमवतारयितुं अधिकरणमारच्यते । तत्र 'सदेव सौम्ये'त्यादि विषयवाक्यानि सिद्धवत्कृत्य भट्टमतरीत्या पूर्वपक्षरचनार्थं संशयं प्रतिपादयति **वेदान्ता इति** । 'सदेव सोम्ये'त्यादिवेदान्ता इत्यर्थः । सिद्धब्रह्मपरत्वे तेषां निष्फलत्वसापेक्षत्वयोः प्रसङ्गः अयमर्थोनुपदं स्फुटीक्रियते । कार्यपरत्वे तयोरप्रसङ्गः, तथाहि–धर्मे प्रत्यक्षादीनां प्रामाण्याभावात् प्रत्यक्षादिमानान्तरानपेक्षत्वं फलवत्वं च शास्त्रसिद्धमिति निष्फलत्वमानान्तरसापेक्षत्वयोः प्रसक्तिरेव नास्तीति भावः । **पूर्वसूत्रे इति** । **शास्त्रयोनित्वादिति** पूर्वसूत्रे इत्यर्थः । **पूर्वपक्षमाहेति** । ज्ञानमुपासनाहेतुः मोक्षस्तु सत्यकामसत्यसंकल्प इत्यादिगुणविशिष्टः ब्रह्म नास्त्येवेति भट्टमतं तद्रीत्या पूर्वपक्षमाहेत्यर्थः।'सदेवसोम्येत्या'दि श्रुतिशास्त्रप्रथमाध्यायप्रथमपादैः 'तत्तु समन्वयादिति' सूत्रस्य सङ्गतिं दर्शयति **सदेव सोम्येति** । श्रुतीनां यः समन्वयस्तात्पर्येण बोधकत्वं तस्योक्तेः प्रतिपादनादित्यर्थः । सर्वात्मत्वादित्यनेन श्रुतिसूत्रयोः सर्वात्मत्वादिरूपैकार्थबोधकत्वरूपा सङ्गतिर्दर्शिता । **स्पष्टब्रह्मलिङ्गानामिति**—विशेषणेन स्पष्टब्रह्मलिंगकश्रुत्यर्थप्रतिपादकत्वरूपा पादसंगतिरुक्ता, ब्रह्मणीत्यनेन सूत्रशास्त्रयोः एकार्थकत्वरूपा सङ्गतिः प्रदर्शिता । सूत्रपक्षत्वेन ब्रह्मबोधकं शास्त्रं तु शास्त्रार्थत्वेन ब्रह्मप्रतिपादकमिति विवेकः । समन्वयोक्तेरित्यनेन सूत्राध्याययोः समन्वयरूपैकार्थप्रतिपादकत्वं सगतिरित्युक्तम् । **वेदान्तेष्विति** । वेदान्तेषु मुमुक्षोः न प्रवृत्तिः किन्तु पूर्वमीमांसायां प्रवृत्तिरिति भावः ।

**भाष्ये शास्त्रप्रमाणकत्वमुच्यत इति** । कथमुच्यत इत्यन्वयः । नन्वयमाक्षेपः किंनिबन्धन इति जिज्ञासायां जैमिनिसूत्रप्रामाण्यादित्याह **यावतेति** । अतदर्थानामित्यन्तं सङ्ग्रहवाक्यमर्थवादानां प्रामाण्यं नास्तीति पूर्वपक्षप्रतिपादकम् । क्रियापरत्वमित्यादिवाक्यं सिद्धान्तप्रतिपादकमिति विभागः ।

व्याख्याने **कथमित्याक्षेप इति** । कथमिति थमुप्रत्ययान्तः किंशब्दः आक्षेपार्थ इति

यार्थत्वादानर्थक्यमतदर्थानाम्' (जै०सू० १।२।१) इति क्रियापरत्वं शा-

## रत्नप्रभा

क्रियापरत्वं दर्शितमतोऽक्रियार्थत्वाद्वेदान्तानामानर्थक्यं फलवदर्थशून्यत्वं प्राप्तमित्य-न्वयः। सूत्रस्यायमर्थः। प्रथमसूत्रे तावद्वेदस्याध्ययनकरणकभावनाविधिभाव्यस्य फलवदर्थपरत्वमुक्तम् "चोदनालक्षणोऽर्थो धर्मः" । (जैमि०सू०१।१।२) इति, द्वितीयसूत्रे—धर्मे कार्ये चोदना प्रमाणमिति वेदप्रामाण्यव्यापकं कार्यपरत्वमवसितम्। तत्र "वायुर्वै क्षेपिष्ठा" इत्याद्यर्थवादानां धर्मे प्रामाण्यमस्ति न वेति संशये आम्ना-यप्रामाण्यस्य क्रियार्थत्वेन व्याप्तत्वादर्थवादेषु धर्मस्याप्रतीतेरक्रियार्थानां तेषामान-र्थक्यं निष्फलार्थत्वम्, न चाध्ययनविध्युपात्तानां निष्फले सिद्धेऽर्थे प्रामा-ण्यं युक्तम्' तस्मादनित्यमेषां प्रामाण्यमुच्यते । व्यापकाभावाद्व्याप्यं प्रामाण्यं

## पूर्णानन्दीया

भाव.। यावतेतिपदस्यार्थमाह **यत इति**। आनर्थक्यपदस्यार्थमाह **फलवदिति**। **सूत्रस्येति**। 'आम्नायस्य क्रियार्थत्वादि'त्यादिसूत्रस्येत्यर्थ.। आम्नायस्येत्यादिसूत्रस्यार्थकथनार्थं तत्सङ्गत्या तत्पूर्वसूत्रपरिष्कृतार्थं क्रमेण स्फुटयति **प्रथमसूत्रे इत्यादिना** । **'अथातो धर्मजिज्ञासेति'** प्रथम सूत्र इत्यर्थः। अथ वेदाध्ययनानन्तर अतः वेदस्य फलवदर्थपर-त्वात् धर्मनिर्णयाय कर्मवाक्यविचार· कर्तव्य इत्येवं पदानामर्थमभिप्रेत्य फलितार्थमाह **प्रथमेति**। अध्ययनं गुरूच्चारणानुच्चारणं तत्कर्णिकाया भावना आवृत्तिरूपो व्यापार विशेष· तत्प्रतिपादको य· 'स्वाधायोऽध्येतव्य' इति विधि· तद्भाव्यस्य तत्कर्मिभूतस्य वेद· स्येत्यर्थ·। तथा च स्वाध्यायात्मकवेदमुद्दिश्य विधि· प्रवर्तत इति वेदस्य विधिकर्मत्वमिति भाव फलवान् योऽर्थः धर्माधिकार्यरूप तत्परत्वमित्यर्थ । **चोदनेति**। चोदना विधि-वाक्यं लक्षण प्रमाणं यस्मिन्स तथेत्यर्थः। अर्थ प्रयोजनवानित्यर्थ.। तथा च चोदना-प्रमाणकत्वे सति फलहेतुकर्मत्व धर्मत्वमिति भाव· । **अवसितमिति**। निर्धारितमि-त्यर्थ·। प्रामाण्ये सति वेदवाक्यत्व यत्र तत्र फलवदर्थपरत्वमिति द्वितीयसूत्रेण व्याप्य व्यापकभावो निर्धारित इति भाव । पूर्वतन्त्रस्थप्रथमाध्यायगतद्वितीयपादनिष्ठ 'विधिना त्वेकवाक्यत्वादि'त्यादिसिद्धान्तसूत्रमवतारयितु अधिकरणमारचयति **तत्रेति**। व्याप्तौ निर्धारितायामित्यर्थः। 'वायुर्वै क्षेपिष्ठे'त्यादिविषयवाक्य सिद्धवत्कृत्य पूर्वपक्षरचनार्थं संश-यमाह **वायुर्वै क्षेपिष्ठेति**। 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थाना तस्मादनित्य-मुच्यते' इति पूर्वपक्षसूत्रस्यार्थमाह **आम्नायेत्यादिना**। आम्नायस्येति पदस्य फलिता-तार्थमाह **आम्नायप्रामाण्यस्येति**। वेदप्रामाण्यस्येत्यर्थः। क्रियार्थत्वादिति पदस्य तात्पर्यार्थमाह **क्रियेति**। **अप्रतीतेरिति**। साक्षादप्रतीतेरित्यर्थः। अर्थवादानां साक्षाद्ध-र्मबोधकत्वाभावादिति भाव.। 'तस्मादनित्यमुच्यत' इति सूत्रांशमवतारयितुमध्ययनवि-ध्युपात्तत्वादर्थवादानां सिद्धे प्रामाण्यं स्यादित्याशङ्क्य निष्फलत्वान्नेति परिहरति **नचेति**।

स्तस्य प्रदर्शितम् । अतो वेदान्तानामानर्थक्यम्, अक्रियार्थत्वात् । कर्तृदेवतादिप्रकाशनार्थत्वेन वा क्रियाविधिशेषत्वम्, उपासनादिक्रियान्तर-

---

**रत्नप्रभा**

नास्त्येवेति यावत् । **एवं पूर्वपक्षे "विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः"** (जै०सू०१।२।७) इति सूत्रेण सिद्धान्तमाह—**क्रियापरत्वमिति**। अनित्यमिति प्राप्ते दर्शितमित्यर्थः । 'वायुर्वै क्षिप्रतमगामिनी देवता, तद्देवताकं कर्म क्षिप्रमेव फलं दास्यति' इत्येवं विधेयार्थानां स्तुतिरूपार्थेन द्वारेण **"वायव्यं श्वेतमालभेत"** इत्यादिविधिवाक्यैनैकवाक्यत्वादर्थवादाः सफला स्युः । स्तुतिलक्षणया सफलकार्यपरत्वात् प्रमाणमर्थवाद इति यावत् । **नन्वध्ययनविधिगृहीतानां वेदान्तानामानर्थक्यं न युक्तमित्यत आह—कर्त्रिति**। न वयं वेदान्तानामानर्थक्यं साधयामः । किन्तु लोके सिद्धस्य मानान्तरवेद्यत्वान्निष्फलत्वाच्च सिद्धब्रह्मपरत्वे तेषां मानान्तरसापेक्षत्वनिष्फलत्वयोः प्रसङ्गादप्रामाण्यापातात् कार्यशेषकर्तृदेवताफलानां प्रकाशनद्वारा कार्यपरत्वं वक्तव्यमिति ब्रूमः । तत्र त्वन्तत्पदार्थवाक्यानां कर्तृदेवतास्तावकत्वं, 'वेविदिषादिवाक्यानां फलस्तावकत्वम् । ननु कर्मविशेषमनारभ्य प्रकरणान्तराधीतानां

**पूर्णानन्दीया**

अर्थकथनार्थं सूत्रांशं गृह्णाति **तस्मादिति** । फलवदर्थपरत्वरूपव्यापकाभावादित्यर्थः । अनित्यपदस्य तात्पर्यार्थं सूचयति **नास्त्येवेति** । भाष्यस्थाम्नायस्येत्यादिसूत्रसङ्ग्रहवाक्योपेक्षितं पूरयति **अनित्य प्रामाण्यमिति** । **दर्शितमिति** । क्रियापरत्व दर्शितमित्यर्थ । स्तुत्याकारप्रदर्शनपूर्वकं सिद्धान्तसूत्रं व्याचष्टे **वायुरिति** । वायो शीघ्रगमनवत्त्वात्तद्देवताकं कर्म शीघ्रमेव फल प्रयच्छतीति भाव. । **वायव्यमिति** । वायुदेवताकेन श्वेतगुणविशिष्टपशुद्रव्यकेन यागेनेष्टं भावयेदित्यर्थ । **स्तुतिलक्षणयेति** । अर्थवादाना लक्षणया स्तुतिबोधकत्वं स्तुतिद्वारा विध्येकवाक्यत्वेन फलवदर्थबोधकत्वादित्यर्थः । वेदान्ती शङ्कते **नन्विति** । **कार्यशेषेति** । कर्तृदेवतयोः शेषत्व फलस्य तूद्देश्यत्वमिति विवेक । वेदान्ताना न साक्षात्कार्यबोधकत्व किन्तु कार्यशेषबोधकत्वद्वारा फलवदर्थरूपकार्यबोधकत्वं तस्मान्नानर्थक्यमिति भाव. । **तत्र त्वमिति** । वेदान्तेषु जीव बोधकपदाना सर्वेषा कर्तृत्व ब्रह्मबोधकपदाना तु देवताबोधकत्वं, तथा च जीव कर्ता ब्रह्म तु देवतेति कर्ममाहात्म्यं किं वक्तव्यमिति तत्त्वपदार्थवाक्यानां कर्तृदेवताविषयकस्तुतिजनकत्वमिति भाव । 'तमेतं वेदानुवचनेने'त्यादिविविदिषावाक्यानामित्यर्थ । यद्यपि भट्टमते स्वर्गादिरेव फलं कर्मणः न ब्रह्मज्ञान तथापि स्तोत्रार्थं कर्मण' ब्रह्मज्ञानमपि फलमिति ब्रह्मज्ञानरूपफलविषयकस्तुतिजनकत्वेन विविदिषावाक्यानामुपपत्तिरिति भाव । यद्वा कर्मण कर्ता जीव देवता तु ब्रह्मज्ञानमिति कर्तृरूपजीवादिमाहात्म्य किं वक्तव्यमित्येवं कर्त्रादिस्तावकत्वं वाक्यानामिति भाव । प्रथमव्याख्याने जीवकर्तृकत्वेन कर्मस्तुति द्वितीये

विधानार्थत्वं वा । नहि परिनिष्ठितवस्तुप्रतिपादनं सम्भवति प्रत्यक्षादि-

## रत्नप्रभा

वेदान्तानां कथं तच्छेषत्वम् ? मानाभावादित्यरुच्या पक्षान्तरमाह—**उपासनेति**। मोक्षकामोऽसद्ब्रह्माभेदमारोप्य "अहं ब्रह्मास्मि" (बृ०१।४।१०) इत्युपासीत, इत्युपासनाविधिः। **आदि**शब्दाच्छ्रवणादयः, तत्कार्यपरत्वं वा वक्तव्यमित्यर्थः। **ननु** श्रुतं ब्रह्म विहायाश्रुतं कार्यपरत्वं किमर्थं वक्तव्यमिति तत्राह—**न हीति**। परितः समन्तान्निश्चयेन स्थितं, **परिनिष्ठितम्**। कृत्यनपेक्षं सिद्धमिति यावत्। तस्य प्रतिपादनमज्ञातस्य वेदेन ज्ञापनं तन्न सम्भवति, मानान्तरयोग्येऽर्थे वाक्यस्य संवादे सत्यनुवादकत्वाद्, **"अग्निर्हिमस्य भेषजम्"** इति वाक्यवद्, विसंवादे वाऽबोध-

## पूर्णानन्दीया

कर्मकर्तृत्वेन जीवस्तुतिरिति भेदः। एवमन्यत्र योजनीयम्। अन्यत्प्रकरणं प्रकरणान्तरं तथा च कर्मकाण्डाद्भिन्नब्रह्मकाण्डाधीतानामित्यर्थः। **मानाभावादिति**। विध्येकवाक्यत्वाभावेन मानाभावादिति भाव·। **असद्ब्रह्मेति**। यद्यपि भट्टमते ब्रह्मासदेव तथापि जीवे तदभेदमारोप्येत्यर्थ। अथवा ब्रह्म तिष्ठतु वेदान्तेषु तथा च जीवब्रह्मणोरसदभेदमारोप्येत्यर्थः। **उपासीतेति**। 'अहं ब्रह्मास्मी'त्यत्र उपासीतेति विधिः कल्पनीय इत्यर्थ.। 'अहं ब्रह्मे'त्यभेदमारोप्योपासना विधीयते तथा चोपासनारूपकार्यान्तरस्तुतिद्वारा कल्पितविध्येकवाक्यत्वेन वेदान्तानां फलवदर्थबोधकत्वान्नानर्थक्यमिति भाव.। **आदि-(१)पदादिति**। उपासनेन फल जायते जायमानफलमेतादृशमिति ज्ञानार्थं श्रवणं मननं चावश्यकमिति श्रवणादिरूपकार्यपरत्वाद्वेदान्ताना नानर्थक्यमिति भावः।

वेदान्ती शङ्कते **नन्विति**। **अज्ञातस्य वेदेनेति**। अज्ञातस्य ज्ञापको वेदस्तेनेत्यर्थः। अज्ञातस्य ज्ञापकवेदेन ज्ञातवस्तुप्रतिपादनं न सम्भवतीति भावः। अत्र सदृष्टान्तं हेतुमाह **मानान्तरेति**। भेषजमिति वाक्यवत् यूप इति वाक्यवत् वेदवाक्येन प्रतिपादनं न सम्भवतीति पूर्वेणान्वय·। **संवादे सतीति**। बोधकत्वे सतीत्यर्थः। वेदवाक्यस्य मानान्तरसिद्धवस्तुबोधकत्वाङ्गीकारे अनुवादकत्वादप्रामाण्यं स्यादतः सिद्धबोधकत्वं न सम्भवतीति भावः। **अग्निरिति**। अग्नेर्हिमनाशकत्व प्रत्यक्षप्रमाणसिद्धं पुन·शब्दसमुदायरूपवाक्यमपि तदर्थबोधकं चेदनुवादक भवति तद्वदित्यर्थ। **विसंवाद इति**। बोधकत्वाभावे सतीत्यर्थ। वेदवाक्यस्य अनुवादकत्वभिया सिद्धवस्तुबोधकत्वानङ्गीकारे कार्यबोधकत्वस्याप्यनङ्गीकारेणाबोधकत्वात् ब्रह्मप्रतिपादकत्व सुतरां न सम्भवतीति भाव·। अथवा विसंवादे प्रमाणान्तरेण विरोधे प्राप्ते सतीत्यर्थः। आदित्यो यूपो नेति भेदग्राहिप्रत्यक्षेण विरोधात् यूप इति वाक्यस्याबोधकत्वं यथा तथा नाहं ब्रह्मेति भेदग्राहिप्रत्यक्षेण विरोधात् अहं ब्रह्मेति वाक्यस्याबोधकत्वमिति भाव·। भाष्य-

(१) पदादिति पाठष्टीकाकारस्यैवान्यत्र सर्वत्र शब्दादित्यस्यैवोपलब्धे।

विषयत्वात्परिनिष्ठितवस्तुनः । तत्प्रतिपादने च हेयोपादेयरहिते पुरुषार्थाभावात् । अत एव 'सोऽरोदीत्' इत्येवमादीनामानर्थक्यं मा भूदिति 'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' (जै०सू०१।२।७) इति

**रत्नप्रभा**

कत्वाद्, "आदित्यो यूपः" इति वाक्यवदित्यर्थः । सिद्धो न वेदार्थः मानान्तरयोग्यत्वाद्घटवदित्युक्त्वा निष्फलत्वाच्च तथेत्याह—**तदिति** । सिद्धज्ञापने हेयोपादेयागोचरे फलाभावाच्च तन्न सम्भवतीत्यर्थः । फलं हि सुखावाप्तिर्दुःखहानिश्च । तच्च प्रवृत्तिनिवृत्तिभ्यां साध्यम्, ते चोपादेयस्य प्रवृत्तिप्रयत्नकार्यस्य हेयस्य निवृत्तिप्रयत्नकार्यस्य ज्ञानाभ्यां जायेते, न सिद्धज्ञानादिति भावः । तर्हि सिद्धबोधिवेदवादानां साफल्यं कथमित्याशंक्य "आम्नायस्य"—(जै०सू०१।२।१) त्यादिसंग्रहवाक्यं विवृणोति—**अत एवेति** । सिद्धवस्तुज्ञानात् फलाभावादेवेत्यर्थः । **"देवैर्निरुद्धः सोऽग्निररोदीत्"** इति वाक्यस्याश्रुजत्वेन रजतस्य निन्दाद्वारा **"बर्हिषि न देयम्"** इति सफलनिषेधशेषत्ववद्वेदान्तानां विध्यादिशेषत्वं वाच्यमित्यर्थः । **ननु** तेषां मन्त्रवत् स्वातन्त्र्यमस्तु. नार्थवादवद्विध्येकवाक्यत्वमित्याशंक्य

**पूर्णानन्दीया**

परिष्कृतभासमानं स्फोरयति **सिद्ध इति** । **तथेति** । सिद्धो न वेदार्थ इत्याहेत्यर्थः । उपादेययोगो मत्प्रवृत्तिरूपप्रयत्नसाध्य इति कार्यत्वज्ञानादुपादेययागे अनुष्ठानरूपा प्रवृत्तिर्जायते तया सुखप्राप्तिरूपफलमुत्पद्यते न सिद्धज्ञानादनुष्ठानद्वारा फल तस्मात्सिद्धबोधकत्वे निष्फलत्वमेव तथा हेयेपीत्युभयमाह **फलं हीति । प्रवृत्तिनिवृत्तिभ्यामिति ।** प्रवृत्तिशब्देनानुष्ठानादिकमुच्यते निवृत्तिशब्देन तूष्णीम्भावः । अधर्मान्निवृत्तोहमित्यनुभवेन निवृत्तिपरिपाल्यप्रागभावयोगित्वनिवृत्तिप्रयत्नकार्यत्वमित्याह **निवृत्तिप्रयत्नकार्यस्येति ।** प्रयत्नो द्विविधः प्रवृत्तिरूपो निवृत्तिरूपश्चेति, तथा च निवृत्तिरूपो यः प्रयत्न तत्कार्यस्येत्यर्थ । निवृत्तिप्रयत्नेन अनादिसिद्धः अधर्मप्रागभावस्तथैव तिष्ठतीत्येतावता सुरापानादिरूपाधर्मे निवृत्तिरूपप्रयत्नकार्यत्वव्यवहार, तथा च हेये निवृत्तिप्रयत्नकार्यत्वज्ञानात्तूष्णींभावरूपा निवृत्तिर्जायते तया नरकादेरभावाद् दुःखहानरूपफलमुत्पद्यते न सिद्धज्ञानादिति भाव ।

ननु घटज्ञानस्य सिद्धज्ञानत्वात्तेन फलाभावप्रसङ्ग इति चेन्न । घटादेरप्यर्थक्रियाविशिष्टत्वेन तन्मते साध्यत्वाङ्गीकारादिति मन्तव्यम् । **सङ्ग्रहवाक्यमिति** । सङ्ग्रहवाक्यगतानर्थक्यमतदर्थानामित्यंश विवृणोतीत्यर्थ । 'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं यदश्रु अशीयत तद्रजतꣳ हिरण्यमभवत्तस्माद्रजतꣳ हिरण्यमदक्षिण्यमश्रुज हि यो बर्हिषि ददाति पुरास्य संवत्सराद्गृहे रुदन्ती'ति वाक्यमर्थत पठति **देवैरिति ।** अश्रुजरजतस्य बर्हिषि दाने संवत्सरात्पुरा गृहे रोदनं भवतीति रोदनाभावात्मकानिष्टनिवृ-

विधानार्थत्वं वा । नहि परिनिष्ठितवस्तुप्रतिपादनं सम्भवति प्रत्यक्षादि-

## रत्नप्रभा

वेदान्तानां कथं तच्छेषत्वम् ? मानाभावादित्यरुच्या पक्षान्तरमाह—**उपासनेति।** मोक्षकामोऽसद्ब्रह्माभेदमारोप्य "अहं ब्रह्मास्मि" (बृ०१।४।१०) इत्युपासीत, इत्युपासनाविधिः। **आदि**शब्दाच्छ्रवणादयः, तत्कार्यपरत्वं वा वक्तव्यमित्यर्थः । **ननु** श्रुतं ब्रह्म विहायाश्रुतं कार्यपरत्वं किमर्थं वक्तव्यमिति तत्राह—**न हीति।** परितः समन्तान्निश्चयेन स्थितं, **परिनिष्ठितम्** । कृत्यनपेक्षं सिद्धमिति यावत्। तस्य प्रतिपादनमज्ञातस्य वेदेन ज्ञापनं तन्न सम्भवति, मानान्तरयोग्येऽर्थे वाक्यस्य संवादे सत्यनुवादकत्वाद्, **"अग्निर्हिमस्य भेषजम्"** इति वाक्यवद्, विसंवादे वाऽबोध-

## पूर्णानन्दीया

कर्मकर्तृत्वेन जीवस्तुतिरिति भेदः। एवमन्यत्र योजनीयम्। अन्यत्प्रकरणं प्रकरणान्तरं तथा च कर्मकाण्डाद्भिन्नब्रह्मकाण्डाधीतानामित्यर्थः । **मानाभावादिति** । विध्येकवाक्यत्वाभावेन मानाभावादिति भाव । **असद्ब्रह्मेति।** यद्यपि भट्टमते ब्रह्मासदेव तथापि जीवे तदभेदमारोप्येत्यर्थ· । अथवा ब्रह्म तिष्ठतु वेदान्तेषु तथा च जीवब्रह्मणोरसदभेदमारोप्येत्यर्थः । **उपासीतेति** । 'अहं ब्रह्मास्मी'त्यत्र उपासीतेति विधिः कल्पनीय इत्यर्थ । 'अहं ब्रह्मे'त्यभेदमारोप्योपासना विधीयते तथा चोपासनारूपकार्यान्तरस्तुतिद्वारा कल्पितविध्येकवाक्यत्वेन वेदान्तानां फलवदर्थबोधकत्वान्नानर्थक्यमिति भाव· । **आदि-(१)पदादिति।** उपासनेन फलं जायते जायमानफलमेतादृशमिति ज्ञानार्थं श्रवण मननं चावश्यकमिति श्रवणादिरूपकार्यपरत्वाद्वेदान्तानां नानर्थक्यमिति भावः ।

वेदान्ती शङ्कते **नन्विति। अज्ञातस्य वेदेनेति।** अज्ञातस्य ज्ञापको वेदस्तेनेत्यर्थः। अज्ञातस्य ज्ञापकवेदेन ज्ञातवस्तुप्रतिपादनं न सम्भवतीति भावः । अत्र सदृष्टान्तं हेतुमाह **मानान्तरेति** । भेषजमिति वाक्यवत् यूप इति वाक्यवत् वेदवाक्येन प्रतिपादनं न सम्भवतीति पूर्वेणान्वयः। **संवादे सतीति।** बोधकत्वे सतीत्यर्थः। वेदवाक्यस्य मानान्तरसिद्धवस्तुबोधकत्वाङ्गीकारे अनुवादकत्वादप्रामाण्यं स्यादतः सिद्ध बोधकत्वं न सम्भवतीति भावः । **अग्निरिति।** अग्नेर्हिमनाशकत्व प्रत्यक्षप्रमाणसिद्धं पुन·शब्दसमुदायरूपवाक्यमपि तदर्थबोधकं चेदनुवादक भवति तद्वदित्यर्थ । **विसंवाद इति।** बोधकत्वाभावे सतीत्यर्थ । वेदवाक्यस्य अनुवादकत्वभिया सिद्धवस्तुबोधकत्वानङ्गीकारे कार्यबोधकत्वस्याप्यनङ्गीकारेणाबोधकत्वात् ब्रह्मप्रतिपादकत्व सुतरां न सम्भवतीति भावः। अथवा विसवादे प्रमाणान्तरेण विरोधे प्राप्ते सतीत्यर्थः। आदित्यो यूपो नेति भेदग्राहिप्रत्यक्षेण विरोधात् यूप इति वाक्यस्याबोधकत्वं यथा तथा नाहं ब्रह्मेति भेदग्राहिप्रत्यक्षेण विरोधात् अहं ब्रह्मेति वाक्यस्याबोधकत्वमिति भाव· । भाष्य-

(१) पदादिति पाठष्टीकाकारस्यैवान्यत्र सर्वत्र शब्दादित्यस्यैवोपलब्धे ।

विषयत्वात्परिनिष्ठितवस्तुनः । तत्प्रतिपादने च हेयोपादेयरहिते पुरुषार्थाभावात् । अत एव 'सोऽरोदीत्' इत्येवमादीनामानर्थक्यं मा भूदिति 'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' (जै०सू० १।२।७) इति

## रत्नप्रभा

कत्वाद्, "आदित्यो यूपः" इति वाक्यवदित्यर्थः । सिद्धो न वेदार्थः मानान्तरयोग्यत्वाद्घटवदित्युक्त्वा निष्फलत्वाच्च तथेत्याह—**तदिति** । सिद्धज्ञापने हेयोपादेयागोचरे फलाभावाच्च तन्न सम्भवतीत्यर्थः । फलं हि सुखावाप्तिर्दुःखहानिश्च । तच्च प्रवृत्तिनिवृत्तिभ्यां साध्यम्, ते चोपादेयस्य प्रवृत्तिप्रयत्नकार्यस्य हेयस्य निवृत्तिप्रयत्नकार्यस्य ज्ञानाभ्यां जायेते, न सिद्धज्ञानादिति भावः । तर्हि सिद्धबोधिवेदवादानां साफल्यं कथमित्याशंक्य "आम्नायस्य"—(जै०सू०१।२।१) त्यादिसंग्रहवाक्यं विवृणोति—**अत एवेति** । सिद्धवस्तुज्ञानात् फलाभावादेवेत्यर्थः । **"देवैर्निरुद्धः सोऽग्निररोदीत्"** इति वाक्यस्याश्रुजत्वेन रजतस्य निन्दाद्वारा **"बर्हिषि न देयम्"** इति सफलनिषेधशेषत्ववद्वेदान्तानां विध्यादिशेषत्वं वाच्यमित्यर्थः । **ननु** तेषां मन्त्रवत् स्वातन्त्र्यमस्तु, नार्थवादवद्विध्येकवाक्यत्वमित्याशंक्ये

## पूर्णानन्दीया

परिष्कृतभासमानं स्फोरयति **सिद्ध इति । तथेति** । सिद्धो न वेदार्थ इत्याहेत्यर्थः । उपादेययोगो मत्प्रवृत्तिरूपप्रयत्नसाध्य इति कार्यत्वज्ञानादुपादेययागे अनुष्ठानरूपा प्रवृत्तिर्जायते तया सुखप्राप्तिरूपफलमुत्पद्यते न सिद्धज्ञानादनुष्ठानद्वारा फल तस्मात्सिद्धबोधकत्वे निष्फलत्वमेव तथा हेयेपीत्युभयमाह **फलं हीति । प्रवृत्तिनिवृत्तिभ्यामिति** । प्रवृत्तिशब्देनानुष्ठानादिकमुच्यते निवृत्तिशब्देन तूष्णीम्भावः । अधर्मान्निवृत्तोहमित्यनुभवेन निवृत्तिपरिपाल्यप्रागभावयोगित्वनिवृत्तिप्रयत्नकार्यत्वमित्याह **निवृत्तिप्रयत्नकार्यस्येति** । प्रयत्नो द्विविधः प्रवृत्तिरूपो निवृत्तिरूपश्चेति, तथा च निवृत्तिरूपो य प्रयत्न तत्कार्यस्येत्यर्थ । निवृत्तिप्रयत्नेन अनादिसिद्धः अधर्मप्रागभावस्तथैव तिष्ठतीत्येतावता सुरापानादिरूपाधर्मे निवृत्तिरूपप्रयत्नकार्यत्वव्यवहार, तथा च हेये निवृत्तिप्रयत्नकार्यत्वज्ञानात्तूष्णींभावरूपा निवृत्तिर्जायते तया नरकादेरभावाद् दुखहानरूपफलमुत्पद्यते न सिद्धज्ञानादिति भाव. ।

ननु घटज्ञानस्य सिद्धज्ञानत्वात्तेन फलाभावप्रसङ्ग इति चेन्न । घटादेरप्यर्थक्रियाविशिष्टत्वेन तन्मते साध्यत्वाङ्गीकारादिति मन्तव्यम् । **सङ्ग्रहवाक्यमिति** । सङ्ग्रहवाक्यगतानर्थक्यमतदर्थानामित्यंश विवृणोतीत्यर्थ । 'सोऽरोदीद्यदरोदत्तिद्रुद्रस्य रुद्रत्वं यदश्रु अशीयत तद्रजतꣳ हिरण्यमभवत्तस्माद्रजतꣳ हिरण्यमदक्षिण्यमश्रुजं हि यो बर्हिषि ददाति पुरास्य संवत्सराद्गृहे रुदन्ती'ति वाक्यमर्थत पठति **देवैरिति** । अश्रुजरजतस्य बर्हिषि दाने सवत्सरात्पुरा गृहे रोदनं भवतीति रोदनाभावात्मकानिष्टनिवृ-

स्तावकत्वेनार्थवत्त्वमुक्तम् । मन्त्राणा च 'इषे त्वा' इत्यादीनां क्रियात-

## रत्नप्रभा

दृष्टान्तासिद्धिमाह—**मन्त्राणां चेति** । प्रमाणलक्षणेर्थवादलक्षणचिन्तानन्तरं मन्त्रचिन्ता कृता, "इषेत्वा" (तै०सं०१।१।१) इति मन्त्रे छिनद्मीत्यध्याहाराच्छाखाच्छेदनक्रियाप्रतीतेः, "अग्निर्मूर्द्धा" इत्यादौ च क्रियासाधनदेवतादिप्रतीतेर्मन्त्राः श्रुत्यादिभिः क्रतौ विनियुक्ताः, ते किमुच्चारणमात्रेणादृष्टं कुर्वन्तः क्रतावुपकुर्वन्ति, उत दृष्टेनैवार्थस्मरणेनेति सन्देहे चिन्तादिनाप्यध्ययनकालागवतमन्त्रार्थस्य स्मृतिसम्भवाददृष्टार्था मन्त्रा इति प्राप्ते सिद्धान्तः । **"अविशिष्टस्तु वाक्यार्थः"** (जै०सू०१।२।४०) इति लोकवेदयोर्वाक्यार्थस्याविशेषान्मन्त्रवाक्यानां दृष्टेनैव स्वार्थप्रकाशनेन क्रतूपकारकत्वसम्भवाद् दृष्टे सम्भवत्यदृष्टकल्पनानुपपत्तेः फलवदनुष्ठानापेक्षितेन क्रियातत्साधनस्मरणेन द्वारेण मन्त्राणां कर्माङ्गत्वम् । **"मन्त्रैरेवार्थः स्मर्तव्यः"** इति नियमस्त्वदृष्टार्थ इति । **तथा** चार्थवादानां स्तुतिपदार्थद्वारा

## पूर्णानन्दीया

त्तिरूपफलसहितः रजतस्य देवनिरुद्धाग्नेरश्रुजन्यत्वेन निन्दितत्वाद्रजतदक्षिणाकयागं न कुर्यादिति निषेधो यस्तच्छेषत्वं 'सोरोदी दि'त्यादिवाक्यस्य यथा तद्वदित्यर्थ । **दृष्टान्तेति** । मन्त्राणा स्वातन्त्र्यमेव नास्तीत्याहेत्यर्थः । अविशिष्टस्तु वाक्यार्थ इति । पूर्वतन्त्रस्थसिद्धान्तसूत्रमवतारयितुमधिकरणमारचयति **प्रमाणलक्षण इति** । प्रथमाध्याय इत्यर्थ. । **चिन्ता कृतेति**। प्रामाण्यचिन्ता कृतेत्यर्थ. । विषयवाक्यप्रतिपादनद्वारा चिन्ता बीजं दर्शयति **इषेत्वेति** । अस्यार्थ.–हेशाखे इषे फलरूपान्नाय त्वा त्वा छिनद्मि छेदनं करोमीति । मन्त्राणां क्रियातत्साधनदेवताप्रकाशकत्वं तूपकारत्वं च प्रतीयते तस्माच्चिन्ता युक्तेति भावः । पूर्वपक्षरचनार्थ संशयं प्रतिपादयति **ते (१)चेति । अध्ययनकालेति।** अध्ययनकाले अवगतो यो मन्त्रार्थ तद्विषयस्मृत 'सदृशादृष्टचिन्ताद्या स्मृतिबीजस्य बोधका' इति श्लोकोक्तचिन्तादिनापि प्रयोगकाले सम्भवादुच्चारणमात्रेणादृष्टद्वारा मन्त्राणा क्रतूपकारकत्वमिति पूर्वपक्षार्थः । **वाक्यार्थस्येति** । शाब्दबोधस्येत्यर्थ । मन्त्राणा दृष्टस्वार्थप्रकाशनद्वारा क्रत्वङ्गत्वे सिद्धे नियमस्य प्रयोजनमाह—**मन्त्रैरेवेति** । यद्यपि मन्त्रैरेव जनितेन मन्त्रार्थस्मरणेन क्रतूत्पादकमदृष्टमुत्पद्यते तथापि मन्त्राणामदृष्टद्वारा न हेतुत्व किन्तु अदृष्टहेतुमन्त्रार्थस्मरणरूपदृष्टार्थद्वारा हेतुत्वमिति सिद्धान्तार्थः । **स्तुतिपदार्थेति** । स्तुतिरूपो य· पदार्थ तद्वारेत्यर्थः । पदैकवाक्यत्वमर्थवादरूपपदस्य विधिबोधकवाक्यैनैकवाक्यत्वं पदैकवाक्यत्वमित्यर्थ । विधिभि विधिबोधकवाक्यैरित्यर्थ· । अन्वितत्वेनेति शेष ।'वायुर्वै क्षेपिष्ठे'ति अर्थवादपदाना स्वार्थे तात्पर्याभावादवान्तरवाक्यार्थाभावेन लक्षणया स्तुतिसमर्पकत्वद्वारा "वायव्यंश्वेतमालभेतेति" विधिबोधकवाक्ये

(१) अत्र चकार सर्वत्र रत्नप्रभाया नोपलभ्यते इति न मुद्रितः ।

त्साधनाभिधायित्वेन कर्मसमवायित्वमुक्तम् । न क्वचिदपि वेदवाक्यानां विधिसंस्पर्शमन्तरेणार्थवत्ता दृष्टोपपन्ना वा । न च परिनिष्ठिते वस्तुस्वरूपे विधिः सम्भवति, क्रियाविषयत्वाद्विधेः । तस्मात्कर्मापेक्षितकर्तृस्वरूपदेवतादिप्रकाशनेन क्रियाविधिशेषत्वं वेदान्तानाम् । अथ प्रकरणान्तरभयान्नैतदभ्युपगम्यते, तथापि स्ववाक्यगतोपासनादिकर्मपरत्वम् । तस्मान्न

## रत्नप्रभा

पदैकवाक्यत्वं विधिभिः, मन्त्राणां तु वाक्यार्थज्ञानद्वारा तैर्वाक्यैकवाक्यत्वमिति विभागः । **नन्वस्तु** कर्मप्रकरणस्थवाक्यानां विध्येकवाक्यत्वं, वेदान्तानां तु सिद्धे प्रामाण्यं किं न स्यादिति तत्राह—**न क्वचिदिति** । वेदान्ताः विध्येकवाक्यत्वेनैवार्थवन्तः सिद्धार्थवेदकत्वात् मन्त्रार्थवादादिवदित्यर्थः । अन्यत्रादृष्टापि वेदान्तेषु कल्प्यतामिति तत्राह—**उपपन्ना वेति** । नेत्यनुषङ्गः । सिद्धे फलाभावस्योक्तत्वादिति भावः । **तर्हि** ब्रह्मण्येव स्वार्थो विधिः कल्प्यतां कृतं वेदान्तानां विध्यन्तरशेषत्वेनेत्यत आह—**न चेति** । **ननु** "दध्ना जुहोति" इहि सिद्धे दधनि विधिर्दृष्टः तत्राह—**क्रियेति** । दध्नः क्रियासाधनस्य प्रयुज्यमानतया साध्यत्वाद्विधेयता, निष्क्रियब्रह्मणः कथमप्यसाध्यत्वान्न विधेयत्वमित्यर्थः । भाट्टमतमुपसंहरति—**तस्मादिति** ।

## पूर्णानन्दीया

नान्वयात्पदैकवाक्यत्व तस्मान्न स्वातन्त्र्यमिति भावः । **मन्त्राणान्त्विति** । तैर्विधिवाक्यैरित्यर्थः । अन्वितत्वेनेति शेष । मन्त्राणा तु स्वार्थस्य सत्त्वादवान्तरवाक्यार्थज्ञानाद्वारा विधिबोधकमहावाक्येनान्वयाद्वाक्यैकवाक्यत्वमतो न स्वातन्त्र्यमिति भाव । **कर्मसमवायित्वमिति** । कर्मविधिशेषत्वमिति भाष्यार्थ । **न क्वचिदिति** । 'अतो न क्वचि'दिति प्रतीकग्रहणे युक्ते सति न क्वचिदिति प्रतीकग्रहणं लेखदोषादिति विभावनीयम् । व्याप्तेः सत्त्वमत -शब्दार्थ । भाष्यपरिष्कृतमनुमानं ज्ञापयति **वेदान्ता इति** । **सिद्धार्थवेदकत्वादिति** । सिद्धार्थबोधकत्वादित्यर्थः । **अन्यत्रेति** । विधिसस्पर्शमन्तरेणार्थवत्तेति शेषः । न केवलमनुमानं किन्तु यदि विध्यैकवाक्यत्वेनार्थवत्त्वं न स्यात्तर्हि फलाभावेन वाक्यस्य सिद्धार्थबोधकत्वमपि न स्यादित्यनुकूलतर्कोऽप्यनुमानस्तीत्यभिप्रेत्याह—**सिद्धे फलेति** । **तर्हीति** । विध्येकवाक्यत्वं विना अर्थवत्त्वाभावश्चेदित्यर्थ । **अलमिति** । **कृतमिति**(१) पाठेप्यलमित्येवार्थ । सिद्धस्य दध्नः क्रियासाधनत्वविशिष्टत्वात्साध्यत्व युक्तं न तु ब्रह्मण इत्याह—**दध्नः क्रियेति** । **प्रयुज्यमानतयेति** । साधनकोटिप्रविष्टतयेत्यर्थ । **असाध्यत्वादिति** । अप्रयुज्यमानत्वेनासाध्यत्वादित्यर्थ । **स्वयमेवेति** । प्रथमपक्षमुपसंहृत्य स्वयमेवारुचि वदन् द्वितीयपक्षमप्युपसंहरतीत्यर्थ ।

**समन्वयसूत्रप्रथमवर्णकपूर्वपक्षग्रन्थव्याख्या समाप्ता ।**

---

(१) अयमेव पाठ सर्वत्र मुद्रितपुस्तकेषूपलभ्यत इति स एव मुद्रित ।

ब्रह्मणः शास्त्रयोनित्वमिति प्राप्ते उच्यते—

वेदान्ताः कर्तृदेवादिपरा ब्रह्मपरा उत । अनुष्ठानोपयोगित्वात्कर्त्रादिप्रतिपादकाः ॥१॥
भिन्नप्रकरणाल्लिङ्गषट्‌काच्च ब्रह्मबोधकाः । सति प्रयोजनेऽनर्थहानेऽनुष्ठानतोऽत्र किम् ॥२॥
प्रतिपत्तिं विधित्सन्ति ब्रह्मण्यवसिता उत । शास्त्रत्वात्ते विधातारो मननादेश्च कीर्तनात् ॥१॥
नाकर्तृतन्त्रेऽस्ति विधिः शास्त्रत्वं शंसनादपि । मननादेः पुरा बोधाद्ब्रह्मण्यवसितास्तत· ॥२॥

## तत्तु समन्वयात् ॥ ४ ॥

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । तद्ब्रह्म सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादेवावगम्यते । कथम् ? समन्वयात् । सर्वेषु हि वेदान्तेषु वाक्यानि (१)तात्पर्येणैतस्यार्थस्य प्रतिपादकत्वेन समनु·

### रत्नप्रभा

स्वयमेवारुचिं वदन्पक्षान्तरमाह—**तुशब्द इति** । तद्ब्रह्म वेदान्तप्रमाणकम् इति प्रतिज्ञातेऽर्थे हेतुं पृच्छति—**कथमिति** । हेतुमाह—**समिति** । **अन्वयः**—तात्पर्यविषयत्वं, तस्मादित्येव हेतुः, तात्पर्यस्य **सम्यक्त्वम्** अखण्डार्थविषयकत्वं सूचयितुं संपदं प्रतिज्ञान्तर्गतमेव, तथा चाखण्डं ब्रह्म वेदान्तजप्रमाविषयः वेदान्ततात्पर्यविषयत्वात् **यो** यद्वाक्यतात्पर्यविषयः, **स** तद्वाक्यप्रमेयः, **यथा** कर्मवाक्यप्रमेयो धर्म इति **प्रयोगः** । वाक्यार्थस्य **अखण्डत्वम्** असंसृष्टत्वम्, वाक्यस्य चाखण्डार्थकत्वं, स्वपदोपस्थिताः ये पदार्थाः **तेषां यः** संसर्गः

### पूर्णानन्दीया

**भाष्ये पक्षव्यावृत्त्यर्थ इति** । पक्षपद पूर्वपक्षपरम्, **वेदान्तवाक्यादिति** । वेदान्तशास्त्रादित्यर्थ· ।

व्याख्याने **प्रतिज्ञान्तर्गतमवेति** । पक्षान्तर्गतमेवेत्यर्थः । सम्पदस्य हेत्वन्तर्गतत्वे 'यत्परः शब्दः सशब्दार्थ' इति न्यायेन अन्वयरूपतात्पर्यादेवाखण्डत्वे सिद्धे सम्पदस्य प्रयोजनाभावः । पक्षान्तर्गतत्वे तु सगुणब्रह्मव्यावृत्त्या अर्थान्तरवारकत्वं सम्भवति तथाच शबलव्यावृत्तिः प्रयोजनमिति भावः । अखण्डार्थकसम्पदं सूत्रस्थतत्पदस्य विशेषणं तथा च सम् अखण्डं तत् ब्रह्म वेदान्तप्रमाणकम् अन्वयादिति सूत्रार्थमभिप्रेत्य सूत्रगर्भितमनुमानमाह **तथाचेति** । **असंसृष्टत्वमिति** । इतरपदार्थासम्बन्धित्वमित्यर्थ· । ब्रह्मण· वाक्यार्थस्याखण्डत्वमितरपदार्थाविशिष्टत्वमिति भावः । तदुक्तं श्रीकल्पतरुकारैः—

अविशिष्टमपर्यायानेकशब्दप्रकाशितम् ।
एकवेदान्तनिष्णाता अखण्डं प्रतिपेदिरे ॥

इति । निष्णाताः निष्ठापरा इत्यर्थ· । **स्वपदेति** । स्वशब्देन वाक्यमुच्यते तथा च

( १ ) तात्पर्यणैव तस्येति पाठान्तरम् ।

## रत्नप्रभा

तद्गोचरप्रमाजनकत्वम् । **न चेदमप्रसिद्धम्**, प्रकृष्टप्रकाशश्चन्द्र इत्यादिलक्षणवाक्यानां लोके लक्षणया चन्द्रादिव्यक्तिमात्रप्रमाहेतुत्वात् । सर्वपदलक्षणा चाविरुद्धा ।

## पूर्णानन्दीया

वाक्यस्थपदोपस्थापिता इत्यर्थः । ससर्गः परस्परान्वयरूपसम्बन्धः । तदविषयिणी या अखण्डब्रह्मविषयिणी च प्रमा तज्जनकत्वमित्यर्थ । दृष्टान्तासिद्धिमाशङ्क्य परिहरति **न चेदमिति** । सामान्यतश्चन्द्रज्ञानवता केनचित्कश्चित्पृष्ट· अस्मिन् ज्योतिर्मण्डले कश्चन्द्रनामेति तस्य प्रतिवचनं प्रकृष्टेत्यादिवाक्यमित्यभिप्रेत्याह—**प्रकृष्टेति** । इदं पदं हेतुगर्भविशेषणम्, प्रकाशविशेष· चन्द्रपदवाच्य इत्यर्थ । आदिशब्देन सोयं देवदत्त इत्यादिवाक्यं गृह्यते । अयमाशय । प्रकृष्टशब्द· लक्षणया प्रकर्षगुणाभिधानमुखेन प्रकाशविशेषे वर्तते, प्रकाशशब्दश्च सामान्याभिधानमुखेन लक्षणया व्यक्तिविशेषे वर्तते, तत्र गुणसामान्ययोश्चन्द्रपदवाच्यत्वाभावाज्जहल्लक्षणया तदुभयं परित्यज्य तत्समवायिप्रकाशविशेष एव चन्द्रपदाभिधेयतया समर्प्यत इति प्रकृष्टप्रकाशचन्द्रशब्दानामेकार्थता सिद्धा, तथा च वाक्यस्य चन्द्रव्यक्तिमात्रे लक्षणाङ्गीकारान्न विशिष्टपरत्वं तस्माच्चन्द्रव्यक्तिमात्रविषयकत्वं प्रमाया न परस्पर संसर्गविषयकत्वमिति । **वाक्यवृत्तिव्याख्याने रामानन्दीये** विस्तरेणायमर्थ· प्रतिपादित· । तथाहि—न तावद्वाक्यस्य संसृष्टार्थकत्वनियमः प्रकृष्टप्रकाशश्चन्द्र इति वाक्ये व्यभिचारात्, तथाहि अस्मिन् ज्योतिर्मण्डले कश्चन्द्रनामेति प्रश्नस्योत्तरं प्रकृष्टप्रकाशश्चन्द्र इति वाक्यम्, तत्र न तावच्चन्द्रस्य प्रकृष्टप्रकाशसंसर्गोर्थ· न हि तत्र संसर्गांशो जिज्ञासित किं संसर्ग इति प्रश्नानुपपत्ते, नापि प्रकृष्टप्रकाशरूपः ससर्गनिरूपित प्रकारो जिज्ञासितः तदा कीदृश इति प्रश्नौचित्यात् । न चोत्तरसामर्थ्यात्किंशब्दस्य कीदृशे लक्षणेति वाच्यम्। अनुपपत्त्यभावादुत्तरस्याखण्डार्थत्वेनाप्युपपत्ते· । न चोत्तरस्य सर्वपदलक्षणां विना अखण्डार्थबोधायोगात् ततो वरं किंशब्दस्यैकस्यैव लक्षणेति वाच्यम् । एकस्याप्युपक्रमस्थत्वादसञ्जातविरोधित्वेन मुख्यार्थतौचित्यात्तदनुरोधेन इतरपदानां शक्त्यैकदेशादानलक्षणभागलक्षणाया गौरवानावहतावत् । एतेन चन्द्रपदस्य चन्द्रपदवाच्ये लक्षणया कश्चन्द्रपदवाच्य इत्यर्थ· प्रश्न, उत्तरं च प्रकृष्टप्रकाशश्चन्द्रपदवाच्य इत्यर्थक इति निरस्तम् । प्रश्नोत्तरस्थचन्द्रपदद्वयस्य सर्वदा मुख्यार्थत्यागेन गुरुघटितजहल्लक्षणापेक्षया बहूनामपि वाच्यैकदेशमादाय लघुतरजहदजहल्लक्षणया जातिशक्तिमते शक्तितुल्यनिरूढलक्षणया अखण्डार्थकत्वस्यैव न्याय्यत्वात् । अत एव चन्द्रस्य चन्द्रेतरव्यावर्तकवति वा लक्षणया प्रश्नोत्तरसामानाधिकरण्यं निरस्तम्, चन्द्रेतरव्यावृत्तत्वादिना जिज्ञासाया· प्रश्नस्य तदुत्तरार्थबोधस्य च चन्द्रज्ञानाधीनत्वेन परस्पराश्रयाच्च । चन्द्रो नाम कश्चिच्चन्द्रपदवाच्य· चन्द्रत्वजातिमान् चन्द्रेतरव्यावृत्त इत्यादिकं जानामि चन्द्र परं न जानामि तमेव जिज्ञास इति चन्द्रमात्रज्ञानजिज्ञासयोः स्पष्टमनुभवाच्च । न च तर्हि उत्तरे

## पूर्णानन्दीया

प्रकृष्टप्रकाशग्रहणमयुक्तं अजिज्ञासितत्वादिति वाच्यम्। तेन विना चन्द्र इत्येतावता तज्जिज्ञासानिवर्तकबोधस्य जनयितुमशक्यतया तद्वैशिष्ट्यबोधद्वारा तज्जननायावान्तरतात्पर्येण तद्ग्रहणात् परमतात्पर्यं तु चन्द्रैकबोध इति किमयुक्तम्। अथ तादृशबोधद्वये मानाभाव., शक्त्या जनितमुख्यार्थान्वयबोधस्य पुनर्लक्षणया पुनर्बोधान्तरजनने शब्दस्य व्यापारापत्तिश्चेति चेन्न। लक्षणवाक्याच्चन्द्रे असाधारणधर्मवैशिष्ट्यमवगत्य तद्वारा चन्द्रं ज्ञातवानस्मीति सार्वजानीनानुभवसिद्धत्वान्मुख्यतात्पर्यविषयबोध एव विरम्य व्यापारस्य दोषत्वात्, अर्थवादवाक्यानां शक्त्या स्वार्थबोधजननद्वारैव लक्षणया प्राशस्त्यबोधकत्वाच्च।

ननु वाक्यादसाधारणधर्मज्ञानानन्तरं तेन लिङ्गेन चन्द्रस्वरूपानुमितिरेव अनुभूयत इति चेन्न। चन्द्रपक्षकस्य चन्द्रसाधकस्य वा अनुमानस्य चन्द्रज्ञानाधीनत्वात्तत प्रागनुमानानुदयात्तज्ज्ञानस्य च वाक्येनैव नियतत्वाद्वाक्यस्य च प्रकृष्टप्रकाशससर्गादिपरत्वे प्रागुक्तरीत्या अजिज्ञासितार्थत्वापत्ते, जिज्ञासितस्वरूपमात्रपरत्वे चाखण्डार्थत्वसिद्धि। अथ चन्द्रं नभो न जानामीत्यनुभवस्य चन्द्रत्वविशिष्टविषयकत्वात् तज्जिज्ञासायाश्च तथात्वात्प्रश्नोत्तरयोश्चन्द्रपदस्य चन्द्रत्वविशिष्टपरत्वावश्यंभावे कुतस्तस्याखण्डार्थतेति चेन्न। उत्तरस्थचन्द्रपदस्य विशिष्टपरत्वे विशिष्टशरीरघटकविशेषणीभूतचन्द्रत्वतत्संसर्गयोः प्रकृष्टप्रकाशस्याभेदान्वयबाधाल्लक्षणया चन्द्रत्वोपलक्षितव्यक्तिमात्रपरत्वावश्यंभावे तत्समानार्थकत्वाय प्रश्नगतचन्द्रपदस्यापि लक्षणया तन्मात्रपरत्वौचित्यात्। अत एव दर्शिताज्ञानानुभवजिज्ञासयोरपि तदेकविषयत्वावसायात्। अन्यथा अज्ञानजिज्ञासाप्रश्नानां विशिष्टविषयत्वम् उत्तरस्य व्यक्तिमात्रविषयत्वमिति वैरूप्यापत्ते· विशेषणाद्यंशे पुनः प्रश्नान्तरापत्तेश्च।

ननु प्रकृष्टप्रकाशस्य चन्द्रव्यक्तावभेदेनान्वयाच्चन्द्रत्वे च स्वभिन्नसमवेतत्वसम्बन्धेन अन्वयात् तत्संसर्गरूपे समवाये स्वभिन्नविशेषणतासम्बन्धेनान्वयादुत्तरमपि विशिष्टपरमेवेति चन्द्रत्वतत्संसर्गगोचरजिज्ञासायाः शान्तत्वात्प्रश्नान्तरानवसर इति चेन्न। तत्र सम्बन्धत्रयेणान्वयत्रयस्याननुभवपराहतत्वात् 'नोपसर्जनमुपसर्जनान्तरेणान्वेतीति'न्यायविरोधाच्च। न चैवमपि लक्ष्यतावच्छेदकचन्द्रत्ववैशिष्ट्यानपाय इति वाच्यम्। चन्द्रत्वस्योपलक्षणतयैवातिप्रसङ्गवारकत्वे विशेषणत्वानपेक्षणात्। स्यादेतत्, विषयविशेषाभावेपि प्रश्नहेतुज्ञानान्नाज्ञाननिवृत्ति उत्तरजन्यज्ञानात्तन्निवृत्तिरित्यत्र किं नियामकमिति चेत्। आद्योपदेशजन्यासाधारणधर्मवैशिष्ट्यधीरूपसहकार्यसमवधानसमवधाने एवेति गृहाण। अत एव व्यक्तिमात्रबोधस्य वाक्येन साक्षाल्लक्षणया जननसम्भवे अवान्तरतात्पर्येण द्वारभूतबोधान्तरस्वीकारो व्यर्थ इति निरस्तम्। प्रकृष्टप्रकाशत्ववैशिष्ट्यधीद्वारं विना जनितव्यक्तिमात्रबोधस्यापकृष्टप्रकाशव्यावृत्तविलक्षणविषयताया अलाभात्, न हि चन्द्रव्यक्तिमात्रगोचरं चाक्षुषज्ञानं प्राग्जातमपि तदज्ञाननिवर्तकमासीत्, तदित्थं यथा 'प्रकृष्टप्रकाशश्चन्द्र' इति वाक्य चन्द्रस्य

गतानि—'सदेव सोम्येदमग्र आसीत्', 'एकमेवाद्वितीयम्' (छान्दो०

## रत्नप्रभा

सर्वैरर्थवादपदैरेकस्याः स्तुतेर्लक्ष्यत्वाङ्गीकारात्। तथा सत्यज्ञानादिपदैरखण्डं ब्रह्म भातीति न पक्षासिद्धिः। **नापि** हेत्वसिद्धिः। उपक्रमादिलिङ्गैर्वेदान्तानामद्विती-याखण्डब्रह्मणि तात्पर्यनिर्णयात्। तत्र छान्दोग्यषष्ठे उपक्रमं (१) दर्शयति—**सदेवेति**। उद्दालकः पुत्रमुवाच—'हे सोम्य प्रियदर्शन इदं सर्व जगद् अग्रे उत्पत्तेः प्राक्काले सदबाधितं ब्रह्मैवासीत्'। एवकारेण जगतः पृथक्सत्ता निषिध्यते। सतः सजातीयविजातीयस्वगतभेदनिरासार्थम् "एकमेवाद्वितीयम्" (छा०६।२।१) इति पदत्रयम्। **एवम**द्वितीयं ब्रह्मोपक्रम्य "ऐतदात्म्यमिदं सर्वम्" (छा०६।८।७–१६) इत्युपसंहरति। (१) इदमुपक्रमोपसंहारैकरूप्यं तात्पर्यलिङ्गम् (२)। **तथा** "तत्त्वमसि" (छा० ६।८।७–१६) इति नवकृत्वोऽभ्यासः (३)। रूपादिहीनाद्वितीयब्रह्मणो मानान्तरायोग्यत्वाद् अपूर्वत्वमुक्तम् (४)। "अत्र वाव किल सत्सोम्य न निभालयसे" इति। संघाते स्थितं प्रत्यग्ब्रह्म न जानासीत्यर्थः। "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" (छा०६।१४।२) इति ब्रह्मज्ञानात्फलमुक्तं विदुषः। **तस्य** यावत्कालं देहो न विमोक्ष्यते, **तावदेव** देहपातपर्यन्तो विलम्बः। **अथ** देहपातानन्तरं विद्वान् ब्रह्म सम्पत्स्यते, विदेहकैवल्यमनुभवतीत्यर्थः। "अनेन जीवेनात्मनानुप्रविश्य" (छा०६।

## पूर्णानन्दीया

स्वरूपलक्षणपरमखण्डार्थकं तथैव 'सत्य ज्ञानमनन्तं ब्रह्मेति' वाक्यमुपसंहृतानन्दादिपदकदम्बकं ब्रह्मणः स्वरूपलक्षणपरमखण्डार्थकम्, तथा च प्रकृष्टप्रकाशादिपदै प्रकृष्टत्वाद्युपलक्षितशुद्धचन्द्रव्यक्तिरिव सत्यादिपदै. सत्यत्वाद्युपलक्षितकेवलसच्चिदानन्दैकरसब्रह्मव्यक्तिर्लक्ष्यत इत्यखण्ड एव वाक्यार्थ ससृष्टरूप **इति**। अत्र प्रकृष्टत्वविशिष्टप्रकाशविशेष प्रकृष्टपदवाच्यार्थ. प्रकाशत्वविशिष्टप्रकाशविशेषः प्रकाशपदवाच्यार्थ चन्द्रत्वविशिष्टप्रकाश विशेषः चन्द्रपदवाच्यार्थ., एव च जहदजहल्लक्षणया पदत्रयं चन्द्रव्यक्तिमात्रबोधकं भवति यथा तथैव सत्त्वादिपदजातं जहदजहल्लक्षणया ब्रह्ममात्रबोधकमिति विज्ञेयम्। सत्यादिपदाना वाच्यार्थस्तु पुरस्तादेवोपपादित.। सत्यादिवाक्यं विशिष्टार्थपरत्वरहितं लक्षणवाक्यत्वात् प्रकृष्टप्रकाशादिवाक्यवदिति प्रयोगमभिप्रेत्याह **तथा च** (१)**सत्यज्ञानादिपदैरिति**। **अद्वितीयाखण्डेति**। वेदान्तानामखण्डे ब्रह्मणि तात्पर्य नामाखण्डप्रमितिजनकत्वरूपशब्दधर्म एव तस्य निश्चयादित्यर्थ'। तथा च ब्रह्मणि तात्पर्यनिश्चयविषयत्वं तस्मान्न हेत्वसिद्धिरिति भाव। **उपक्रममिति**। उपक्रमादिषड्विधलिङ्गाना मध्ये उपक्रमं दर्शयतीत्यर्थ। **एवकारेणेति**। प्राथमिकेन एवकारेणेत्यर्थ। **पदत्रयमिति**। यद्यप्यद्वितीयमित्यनेन सजातीयादित्रितयनिरासो वक्तुं शक्यते तथापि श्रुतितात्पर्यानुरोधेन पदप्रयोजनमु-

(१) अयं चकारष्टीकाकारमतेनैवान्यत्रानुपलम्भ त।

६।२।१)। 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐत० २।१।१।१) 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' 'अयमात्मा ब्रह्म सर्वानुभूः' (बृह० २।५।१९) 'ब्रह्मैवेदममृतं पुरस्तात्' (मुण्ड० २।२।११) इत्यादीनि । नच तद्गतानां पदानां ब्रह्मस्वरूपविषये निश्चिते समन्वयेऽवगम्यमानेऽर्थान्तरकल्पना युक्ता, श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । नच तेषां कर्तृस्वरूपप्रतिपादनपरतावसीयते, 'तत्केन कं पश्येत्' (बृह० २।४।१३)

**रत्नप्रभा**

३।२) इत्याद्यद्वितीयज्ञानार्थोऽर्थवादः (५) । मृदादिदृष्टान्तैः प्रकृत्यतिरेकेण विकारो नास्तीत्युपपत्ति(६)रुक्ता । **एवं षड्विधानि** तात्पर्यलिङ्गानि व्यस्तानि समस्तानि **वा**—प्रतिवेदान्तं दृश्यन्त इत्यैतरेयकोपक्रमवाक्यं पठति—**आत्मा वेति** । बृहदारण्यके मधुकाण्डोपसंहारवाक्यं सदात्मनो निर्विशेषत्वार्थमाह—**तदेतदिति** । मायाभिर्बहुरूपं **तद्** ब्रह्म । **एतद्** अपरोक्षम् । **अपूर्वं** कारणशून्यम् । **अनपरं** कार्यरहितम् । **अनन्तरं** जात्यन्तरमस्य नास्तीत्यनन्तरम्, एकरसमित्यर्थः । **अबाह्यम्** अद्वितीयम् । तस्यापरोक्षत्वमुपपादयति—**अयमिति** । सर्वमनुभवतीति—**सर्वानुभूः**, चिन्मात्रमित्यर्थः । ऋग्यजुःसामवाक्यान्युक्त्वा आथर्वणवाक्यमाह—**ब्रह्मैवेदमिति** । यत् **पुरस्तात्** पूर्वदिग्वस्तुजातम् **इदम्** अब्रह्मैवाविदुषां भाति तद् **अमृतं ब्रह्मैव** वस्तु विदुषामित्यर्थः । **आदिपदेन** "सत्यं ज्ञानम्" (तै० २।१।१) इत्यादिवाक्यानि गृह्यन्ते । **नन्वस्तु** ब्रह्मणस्तात्पर्यविषयत्वं वेदान्तानां कार्यमेवार्थः किं न स्यादिति तत्राह—**न चेति** । वेदान्तानां ब्रह्मणि तात्पर्ये निश्चीयमाने कार्यार्थत्वं न युक्तम्, "यत्परः शब्दः स शब्दार्थः" इति न्यायादित्यर्थः । यदुक्तमर्थवादन्यायेन वेदान्तानां कर्त्रादिस्तावकत्वमिति तत्राह—**न च तेषामिति** ।

**पूर्णानन्दीया**

च्यते अन्यथा इतरपदवैयर्थ्यं स्यादिति भावः । **अनुप्रविश्येति** । व्यापकस्य प्रवेशाभावादर्थवाद इति भावः । (१)**प्रकृतिव्यतिरेकेणेति** । उपादानकारणव्यतिरेकेणेत्यर्थः । **व्यस्तानीति** । एकं द्वयं त्रयं वा तात्पर्यग्राहकं भवतीति भावः । समस्तानि मिलितानीत्यर्थः । बहुत्वं तु दार्ढ्यसम्पादकमिति भावः । तच्छब्दापेक्षितं पूरयति **मायाभिर्बहुरूपमिति** । **ऋग्यजुरिति** । 'आत्मा वा इदमेकमेवे'त्यादिकं ऋग्वाक्यं 'तदेतद्ब्रह्मे'त्यादिकं यजुर्वाक्यं 'सदेव सोम्ये'दमित्यादिकं सामवाक्यमिति विभागः । **तात्पर्ये निश्चीयमान इति** । बोधकत्वे निश्चीयमान इत्यर्थः । **यत्पर इति** । यस्मिन् शब्दस्य तात्पर्यं स एव शब्दार्थ इति न्यायादित्यर्थः । **कर्त्रादीति** । कर्ममाहात्म्यं किं वक्तव्यं कर्मकर्त्रादि-

(१) अत्र प्रकृत्यतिरेकेणेति सर्वत्र रत्नप्रभापाठ उपलभ्यते इति स एव मुद्रितः ।

इत्यादि क्रियाकारकफलनिराकरणश्रुतेः । नच परिनिष्ठितवस्तुस्वरूपत्वेऽपि प्रत्यक्षादिविषयत्वं ब्रह्मणः, 'तत्त्वमसि' ( छान्दो० ६।८।७ ) इति ब्रह्मात्मभावस्य शास्त्रमन्तरेणानवगम्यमानत्वात् । यत्तु हेयोपादेयरहितत्वादुपदेशानर्थक्यमिति । नैष दोषः । हेयोपादेयशून्यब्रह्मात्मतावगमादेव

**रत्नप्रभा**

तेषां कर्मशेषस्तावकत्वं न भाति, किन्तु ज्ञानद्वारा कर्मतत्साधननाशकत्वमेव, तत् तत्र विद्याकाले 'कः कर्ता केन कारणेन कं विषयं पश्ये'दिति श्रुतेरित्यर्थः । **अर्थवादानां तु** स्वार्थे फलाभावात स्तुतिलक्षणतेति भावः । **यदुक्तं** सिद्धत्वेन मानान्तरवेद्यं ब्रह्म न वेदार्थं इति, तत्राह—**न च परीति** । "तत्त्वमसि" (छां०६। ८।७) इति शास्त्रमन्तरेणेति **सम्बन्धः** । धर्मो न वेदार्थः साध्यत्वेन पाकवन्मानान्तरवेद्यत्वात् । **यदि** वेदं विना धर्मस्यानिर्णयान्न मानान्तरवेद्यता, **तदा** ब्रह्मण्यपि तुल्यम् । **यच्चोक्तं** निष्फलत्वाद् ब्रह्म न वेदार्थ इति तदनूद्य परिहरति **यत्त्वित्यादिना** । **रहितत्वाद्** भिन्नत्वाद्, ब्रह्मण इति शेषः । **यदप्युक्तम्**–'उपासनापरत्वं वेदान्तानाम्' इति, तत्र किं प्राणपञ्चाग्न्यादिवाक्यानाम् उत सर्वेषामिति ? तत्र

**पूर्णानन्दीया**

सच्चिदानन्दस्वरूप इत्येवं कर्तृस्तावकत्वमित्यर्थ । 'तत्केन कं पश्येदि'त्यत्र तच्छब्दस्य विभक्तिव्यत्यासेनार्थमाह **तत्त्रेति** ।

ननु तर्ह्यर्थवादानां वेदान्तवाक्यापरत्व न स्यादित्याशङ्क्य वैषम्यमाह **अर्थवादानां त्विति** । **यदुक्तमिति** । सिद्ध ब्रह्म न वेदार्थ. मानान्तरवेद्यत्वात् घटवदिति यदुक्त तद्दूषयतीति भावः । पक्षे हेत्वसिद्धे. सोपाधिकत्वाच्च नानुमानमित्यभिप्रेत्य परिहरति **आहेति** । व्यवहितं पद योजयति **तत्त्वमसीति** । दृष्टान्ते साध्यव्यापकत्वात्पक्षे साधनाव्यापकत्वाच्चात्र मानान्तरयोग्यत्वमुपाधिरिति भाव । उक्त दूषणद्वय प्रतिबन्धाय स्फुटीकरोति । **धर्मो न वेदार्थ इति** । धर्मो वेद एव मानन्तस्माद्धर्मो न न वेदार्थ इत्युक्तानुमानहेतोरसिद्धि मानान्तरयोग्यत्वमुपाधिश्चेति यदि दृश्येत तर्हि प्रकृतेपि दीयता सैव दृष्टिरित्याह **तदा ब्रह्मण्यपीति** ।

**भाष्ये हेयोपादेयशून्येति** । स्वापेक्षया यद्भिन्न तद्धेयमुपादेयं च भवति ब्रह्म तु प्रत्यक्त्वेन स्वरूपत्वाद्धेयोपादेयाभ्या भिन्नं तस्माद्धेयोपादेयशून्य यद्ब्रह्म तदात्मैक्यावगमादित्यर्थ । पुरुषार्थ प्रति प्रवृत्तिनिवृत्त्योर्न हेतुता नाय सर्प इति ज्ञानादुत्पन्ने भयकम्पादिनिवृत्तिरूपपुरुषार्थे व्यभिचारात्तथाच सिद्धज्ञानात् प्रवृत्त्याद्यभावेपि पुरुषार्थसिद्धिरिति भाव. । **देवतादिप्रतिपादनस्येति** । देवतादिप्रतिपादकवाक्यस्येत्यर्थ । स्वपद देवतादिपर, तथा च देवतादिप्रतिपादकपञ्चाग्निवाक्यस्य तु पञ्चाग्निगतोपासनापरत्वमिष्टमिति भाव ।

सर्वक्लेशप्रहाणात्पुरुषार्थसिद्धेः । देवतादिप्रतिपादनस्य तु स्ववाक्यगतोपासनार्थत्वेऽपि न कश्चिद्विरोधः । न तु तथा ब्रह्मण उपासनाविधिशेषत्वं सम्भवति, एकत्वे हेयोपादेयशून्यतया क्रियाकारकादिद्वैतविज्ञानोपमर्दोपपत्तेः । न ह्येकत्वविज्ञानेनोन्मथितस्य द्वैतविज्ञानस्य पुनः सम्भवोऽस्ति, येनोपासनाविधिशेषत्वं ब्रह्मणः प्रतिपाद्येत । यद्यप्यन्यत्र वेदवाक्यानां

## रत्नप्रभा

**आद्यम्** अङ्गीकरोति **देवतादीति** । श्रेष्ठत्वादिगुणः फलं च **आदि**शब्दार्थः । **न द्वितीयः**, विधिशून्यानां "सत्यं ज्ञानम्" (तै०आ०२।१।१) इत्यादीनां स्वार्थे फलवतामुपासनापरत्वकल्पनायोगात् । **किञ्च** तदर्थस्य ब्रह्मणस्तच्छेषत्वं ज्ञानात् प्राग्ूर्ध्वं वा ? **आद्ये** अध्यस्तगुणवतस्तस्य तच्छेषत्वेऽपि **न द्वितीय** इत्याह—**न तु तथेति** । प्राणादिदेवतावदित्यर्थः । अहं ब्रह्मास्मीत्येकत्वे ज्ञाते सति हेयोपादेयशून्यतया ब्रह्मात्मनः फलाभावादुपास्योपासकद्वैतभानस्य कारणस्य नाशाच्च नोपासनाशेषत्वमित्याह—**एकत्व इति** । द्वैतज्ञानस्य संस्कारबलात् पुनरुदये विधानमिति नेत्याह—**न हीति** । दृढस्येति शेषः । भ्रान्तित्वानिश्चयो दार्ढ्यम्, संस्कारोत्थं तु भ्रान्तित्वेन निश्चितं न विधिनिमित्तम् । **येनेति** । उपासनायां कारणस्य सत्त्वेने-

## पूर्णानन्दीया

व्याख्याने (१)**ज्येष्ठत्वादिगुणा इति** । 'यो ह वै ज्येष्ठं श्रेष्ठं च'त्यादिश्रुत्या प्राणस्य ज्येष्ठत्वादिगुणाः प्रतिपाद्यन्त इति भावः । द्वितीयपक्षं भाष्यतात्पर्येण ग्रन्थाद्बहिः परिहरति **न द्वितीय इति** । **तदर्थस्येति** । वेदान्तार्थस्येत्यर्थः । तच्छेषत्वं विधिशेषत्वमित्यर्थः । प्रथमकल्पमिष्टापत्त्या ग्रन्थाद्बहिः परिहरति **आद्य अध्यस्तेति** । तस्य प्राणादिरूपस्य ब्रह्मण इत्यर्थः । निर्गुणब्रह्मणः तच्छेषत्वं नास्तीति स्फुटीकुर्वन् एकत्वपदापेक्षितं पूरयति **अहमिति** । ब्रह्मात्मपदस्य पूर्वेणान्वयः । एकत्वज्ञानानन्तरं तज्ज्ञानफलं विना उपासनाजन्यफलाभावान्नोपासनाविधिशेषत्वं ब्रह्मण इति भावः । द्वैतज्ञानस्य सकारणस्य नाशाच्चेति यदुक्तं तन्न सम्भवति ज्ञानकालेपि संस्कारोत्थस्य द्वैतज्ञानस्य सत्त्वादिति शङ्कते **द्वैतज्ञानस्येति** । उपासनाया कारणस्योपासकद्वैतज्ञानस्य संस्कारवशात्पुनरुत्थितस्य सत्त्वादुपासनाविधिशेषत्वं ब्रह्मणः वक्तुं शक्यत इति भावः । उपासनां प्रति भ्रान्तित्वेनानिश्चितद्वैतज्ञानमेव कारणं तच्चैकत्वज्ञानेन नाशात्पुनर्नोपपद्यत एव तथा चैकत्वज्ञाने विद्यमाने संस्कारवशादुत्पन्नमपि द्वैतज्ञानं भ्रान्तित्वेन निश्चितत्वान्नोपासनाविधौ कारणमिति भाष्याशयं स्फुटीकरोति **दृढस्येतीति** । भ्रान्तत्वेनानिश्चितस्येत्यर्थः । **संस्कारोत्थमिति** । संस्कारोत्थद्वैतज्ञानं तु भ्रान्तित्वेन निश्चितत्वान्नोपासनाविधौ

(१) श्रेष्ठत्वादिगुण इत्येव पाठो रत्नप्रभास्पूलभ्यते इति स एव मुद्रितः ।

विधिसंस्पर्शमन्तरेण प्रमाणत्वं न दृष्टं, तथाप्यात्मविज्ञानस्य फलपर्यन्तत्वान्न तद्विषयस्य शास्त्रस्य प्रामाण्यं शक्यं प्रत्याख्यातुम् । न चानुमानगम्यं शास्त्रप्रामाण्यं, येनान्यत्र दृष्टं निदर्शनमपेक्षेत । तस्मात्सिद्धं ब्रह्मणः शास्त्रप्रमाणकत्वम् ।

### रत्नप्रभा

त्यर्थः । वेदप्रामाण्यस्य व्यापकं क्रियार्थकत्वमनुवदति—**यद्यपीति** । कर्मकाण्डेऽर्थवादादीनामित्यर्थः । तथा च व्यापकाभावाद्वेदान्तेषु व्याप्याभावानुमानमिति भावः । वेदान्ताः न स्वार्थे मानम् अक्रियार्थत्वात्, "सोऽरोदीद्" इत्यादिवदित्यनुमाने निष्फलार्थकत्वमुपाधिरित्याह—**तथापीति** । अर्थवादानां निष्फलस्वार्थमानत्वेऽपीत्यर्थः । **तद्विषयस्य** तत्करणस्य । स्वार्थे ब्रह्मात्मनीति शेषः । सफलज्ञानकरणत्वेन वेदान्तानां स्वार्थे मानत्वसिद्धेर्न क्रियार्थकत्वं तद्व्यापकमिति भावः । **ननु** मा भूद्वेदप्रामाण्यस्य व्यापकं क्रियार्थकत्वं, व्याप्यं तु भविष्यति, तदभावाद्वेदान्तानां प्रामाण्यं दुर्ज्ञानमिति नेत्याह—**न चेति** । **येन** वेदप्रामाण्यं स्वस्यानुमानगम्यत्वेनान्यत्र क्वचिद् दृष्टं दृष्टान्तमपेक्षेत तदेव नास्तीत्यर्थः । चक्षुरादिवद्वेदस्य स्वतः प्रामाण्यज्ञानान्न तद्व्याप्तिलिङ्गाद्यपेक्षा । प्रामाण्यसंशये तु फलवदज्ञाताबाधितार्थतात्पर्यात् प्रामाण्यनिश्चयो न क्रियार्थत्वेन, न कूपे पतेदितिवाक्ये व्यभिचारादिति भावः ।

### पूर्णानन्दीया

कारणं तस्मादेकत्वज्ञानकाले ब्रह्मणो न विधिशेषत्वमित्यर्थ । **सत्त्वेनेति** । येन कारणस्य सत्त्वेन विधिशेषत्व तदेव कारणस्य सत्त्व नास्तीति भाव । **व्याप्याभावेति** । व्याप्याभावसाध्यकानुमानमित्यर्थ । तदेवोपपादयति **वेदान्ता इति** । अक्रियार्थत्वात्साक्षात्कार्यबोधकत्वाभावादित्यर्थः । **निष्फलार्थकत्वमिति** । दृष्टान्ते साध्यव्यापकत्वात् पक्षे साधनाव्यापकत्वाच्च निष्फलार्थकत्वमुपाधिरिति भाव । **तत्करणस्येति** । आत्मज्ञानकारणस्येत्यर्थ । सफल यज्ज्ञान तत्करणत्वेनेत्यर्थ । **व्याप्यं तु भविष्यतीति** । वेदान्ताना प्रामाण्यमप्रत्यक्षत्वादनुमानेन ज्ञातव्यम्, अनुमानं तु हेत्वपेक्षकमिति योग्यतया क्रियार्थकत्व हेतुरिति वक्तव्यम्, तथा च हेत्वभावात् हेतुज्ञानाभावेन प्रामाण्यज्ञानाभावान्प्रामाण्यमेव नास्तीति पूर्वपक्षार्थः । **येनेति** । यच्छब्दापेक्षित तच्छब्दं पूरयति **तदेवेति** । अनुमानगम्यत्वमेवेत्यर्थ । निर्दुष्टवेदवाक्यत्वादेव वेदस्य स्वत प्रामाण्यं तज्ज्ञानं च सम्भवति, तस्मान्नानुमानापेक्ष तदित्याशयं सदृष्टान्त स्फोरयति **चक्षुरादिवदिति** । अपौरुषेयत्वात् निर्दुष्टत्वेन वेदस्य स्वत. प्रामाण्येपि पुरुषस्य प्रामाण्यसन्देहे प्राप्ते तन्निश्चयार्थमनुमानापेक्षा स्यादित्याशंक्य परिहरति **प्रामाण्यसंशय इति** । फलवत् अज्ञाताबाधितार्थविषयकप्रमाकरणत्वात् वेदस्य प्रामाण्यनिश्चय. न कार्यपरत्वात्, तथा च नानुमानापेक्षेति भाव । विपक्षे बाधकमाह **कूपे इति** । कूपे पतेदिति वाक्यस्य कूपपतनरूपकार्यार्थकत्वसत्त्वेपि

**रत्नप्रभा**

वर्णकार्थमुपसंहरति—**तस्मादिति**। समन्वयादित्यर्थः। विधिवाक्यानामपि फलवदज्ञातार्थत्वेन प्रामाण्यं तत्तुल्यं वेदान्तानामपीति स्थितम्।

एवं पदानां सिद्धेर्थे व्युत्पत्तिमिच्छतां ब्रह्मनास्तिकानां मतं ब्रह्मणो मानान्तरायोग्यत्वात् सफलत्वाच्च वेदान्तैकमेयत्वमित्युक्त्या **निरस्तम्**। सम्प्रति सर्वेषां पदानां कार्यान्विता-

**पूर्णानन्दीया**

प्रामाण्याभावाव्यभिचारः। यदि कूपे पतेदिति वाक्यस्यापि प्रामाण्य स्यादित्युच्येत तदा सर्वोऽपि कूपपतने प्रवर्तेत न तु प्रवर्तते तस्मात्कूपपतनरूपबाधितार्थबोधकत्वाद्वाक्यस्याप्रामाण्यमेवेति भावः।

ननु तर्हि व्यभिचारात् क्रियार्थत्वेन प्रामाण्याभावे विधिवाक्यानां कथं प्रामाण्यमित्यत आह **विधिवाक्यानामपीति**। फलितमाह **तत्तुल्यमिति**।

**समन्वयसूत्रप्रथमवर्णकं समाप्तमित्यष्टमवर्णकम्।**

श्रीगुरुभ्यो नमः।

**सिद्ध इति**। घटाद्यर्थस्य सिद्धत्वं नाम उत्पत्त्यनन्तरं कृत्यसाध्यत्वं ब्रह्मणस्तु कृत्यसाध्यत्वमिति भेदः। व्युत्पत्तिं शक्तिमित्यर्थः। लोके पदानां योग्येतरसंसृष्टत्वेन स्वार्थप्रतिपादनसामर्थ्यमङ्गीकृत्य सिद्धेर्थे व्युत्पत्तिमिच्छतामिति भावः। **ब्रह्म नास्तिकानामिति**। ब्रह्मैव नास्तीति वदतां भट्टमतानुयायिनामित्यर्थः। **सफलत्वाच्चेति**। सफलज्ञानविषयत्वमेव सफलत्वमिति मन्तव्यम्। **सर्वेषां पदानामिति**। पदानां कार्यान्वित एवार्थे शक्तिरिष्यते तत्रैव शब्दसामर्थ्यान्न तु सिद्धेर्थे तदभावात्तथा च कार्यसंस्पर्शमन्तरेण सिद्धेर्थे शब्दस्य न प्रामाण्यं सिद्धस्यापदार्थत्वादिति कार्यान्वितार्थे शक्तिमिच्छतामिति भावः। अयमर्थोऽनुपदं स्फुटीक्रियते। श्रीगुरुचरणैस्तु **ब्रह्मविद्याभरणे** अयमर्थः अतिस्फुटतया उपपादितः, तथाहि—लौकिकपदार्थव्युत्पत्त्यनुसारेण वेदवाक्यार्थो वर्णनीयः लौकिकी च व्युत्पत्तिः पदानां कार्य एव तत्रैवाद्यव्युत्पत्तिग्रहसम्भवात्, न हि कोशादिभ्यः आद्यव्युत्पत्तिग्रहः सम्भवति अत्यन्ताव्युत्पन्नस्य कोशाद्यर्थज्ञानासम्भवात्ततश्च प्रयोज्यप्रयोजकवृद्धव्यवहाराद्भिन्नः शक्तिग्रहो वर्णनीयः प्रथमं स च व्युत्पित्सोरेवं भवति—प्रयोजकवृद्धस्य घटमानय गा बधानेति शब्दोच्चारणानन्तरं प्रयोज्यवृद्धेन कृतं घटानयन गोबन्धनं च पश्यतः घटानयनगोबन्धनयोः कारणतया स्वीयस्तन्यपानादिदृष्टान्तेन कृतिचिकीर्षयोः मध्यमवृद्धगतयोरनुमाने सति चिकीर्षायाः कार्यताज्ञानमूलकत्वान्नूनमनेन आनयनबन्धनयोः कार्यतावगतेति बुद्धिर्भवति, तस्यां च बुद्धौ शब्दोच्चारणातिरिक्तस्य कारणान्तरस्यासम्भवात् प्रयोजकवृद्धोच्चारितशब्द कार्यविशेषे आनयनादौ शक्त इति निर्णयो भवति, ततश्चावापोद्वापाभ्या यथायथं कार्यसामान्य प्रथमावगतमविहायैव तेषु तेषु समभिव्याहारविशेषेषु तत्तत्कार्यविशेषप्रत्ययः ततश्च कोशादिभ्योऽप्युपजीव्य प्राथमि-

अत्रापरे प्रत्यवतिष्ठन्ते—यद्यपि शास्त्रप्रमाणकं ब्रह्म तथापि प्रतिपत्तिविधिविषयतयैव शास्त्रेण ब्रह्म समर्प्यते । यथा यूपाह-

---

**रत्नप्रभा**

र्थे शक्तिमिच्छतां विधिशेषत्वेन प्रत्यग्ब्रह्म वेदान्तैर्बोध्यते न स्वातन्त्र्येणेति वदतां वृत्तिकाराणां मतनिरासाय सूत्रस्य वर्णकान्तरमारभ्यते । तत्र वेदान्ताः **किमुपासनाविधिशे-**षत्वेन ब्रह्म बोधयन्ति **उत** स्वातन्त्र्येणेति ? इति सिद्धे व्युत्पत्त्यभावाभावाभ्यां संशये, पूर्वपक्षमाह—**अत्रापर इति** । ब्रह्मणो वेदान्तवेद्यत्वोक्तौ वृत्तिकाराः पूर्वपक्षयन्तीत्यर्थः । उपासनातो मुक्तिः पूर्वपक्षे, तत्त्वज्ञानादेवेति **सिद्धान्ते फलम्** । विधिर्नियोगः तस्य **विषयः** प्रतिपत्तिरुपासना । अस्याः **को** विषयः, इत्याकांक्षायां सत्यादिवाक्यैर्विधिपरैरेव ब्रह्म समर्प्यत इत्याह—**प्रतिपत्तीति** । विधिविषयप्रतिपत्तिविषयत-

**पूर्णानन्दीया**

कव्युत्पत्तिग्रहानुसारेण कार्यान्वित एव तत्तत्पदार्थे शक्ति न तु तदनन्वित इति । **प्रयोजकेति** । उत्तमेत्यर्थ. । **प्रयोज्येति** । मध्यमेत्यर्थ । पश्यतः व्युत्पित्सोर्बालस्य बुद्धिर्भवतीत्यन्वयः । कृतिश्च चिकीर्षा च कृतिचिकीर्षे आनयनादिकं प्रति कारणीभूते तयोरित्यर्थ. । मध्यमवृद्धस्य आनयने प्रवृत्ति. कृतिचिकीर्षापूर्विका प्रवृत्तित्वात् स्वीयस्तन्यपानप्रवृत्तिवदिति बालेन व्युत्पित्सुनानुमीयत इति भाव. । **कार्यताज्ञानेति** । आनयनं मत्कृतिसाध्यमिति कार्यत्वज्ञानमूलकत्वादित्यर्थ. । **अनेनेति** । मध्यमवृद्धेनेत्यर्थ । **अशक्तस्येति** । अशक्तशब्दस्येत्यर्थः । यदि शब्दस्य कार्यतायां शक्तिर्न स्यात्तेन कथं कार्यताज्ञानं स्यात्तस्माद्गामानयेत्याद्युच्चरितशब्द. आनयनादिकार्यविशेषे शक्त इति बालस्य निश्चयो भवतीति ब्रह्मविद्याभरणफक्किकार्थ । इति **वदतामिति** । इति ब्रह्मण. सत्त्वं वदतामित्यर्थ । **वृत्तिकाराणामिति** । ज्ञानकर्मसमुच्चयवादिभिन्नानामुपासनैव ज्ञानमुपासनाहेतुर्वा ज्ञानमित्यभ्युपगच्छतामहं ब्रह्मेति प्रत्यगभिन्नब्रह्मोपासनादपूर्वद्वारा स्वर्गवज्जन्योपि मोक्ष. 'न स पुनरावर्तते' ब्रह्मविदाप्नोति परमि' त्यादिशास्त्रबलान्नित्यः ध्वंसवदित्युक्तवतामाचार्यदेशीयाना वृत्तिकाराणामित्यर्थ. ।

अधिकरणमारच्यते **तत्रेति** । सदेव सोम्येत्यादिवेदान्ता इत्यर्थ । 'प्रतिपत्तिविधीति' वाक्ये भाष्यतात्पर्यानुरोधेन विधिप्रतिपत्तिरिति व्यत्यासेन अन्वयं ज्ञापयन् अर्थकथनपूर्वकमवतारयति **विधिर्नियोग इति** । अनुपदं नियोगशब्दार्थोऽपूर्वमिति वक्ष्यते । **विधिपरैरेवेति** । विधि 'तद्विजिज्ञासस्वे'त्यादि तत्परै· स्वार्थे फलाभावात्तदेकवाक्यतापन्नै 'सत्यं ज्ञानमनन्त ब्रह्मे'त्यादिवाक्यै अपूर्वविषयोपासनाविषयतया ब्रह्मणः विधिशेषत्वं समर्प्यत इति । शास्त्रप्रमाणकत्वमाहेत्यर्थ· । विधिरपूर्वरूपो विनियोगस्तद्विषयिणी या प्रतिपत्तिरुपासना तद्विषयतयेति विग्रह. । प्रतिपत्तेर्विधिविषयत्वं नाम विधिहेतुकृतिविषयत्वमि

वनीयादीन्यलौकिकान्यपि विधिशेषतया शास्त्रेण समर्प्यन्ते तद्वत्। कु-

### रत्नप्रभा

येत्यर्थः । विधिपराद्वाक्यात्तच्छेषलाभे दृष्टान्तमाह—**यथेति**। "यूपे पशुं बध्नाति", "आहवनीये जुहोति", "इन्द्रं यजेत" इतिविधिषु, के यूपादय इत्याकांक्षायां "यूपं तक्षत्यष्टास्त्रीकरोति" इति तक्षणादिसंस्कृतं दारु **यूपः**। "अग्नीनादधीत" इत्याधानसंस्कृतोऽग्निः **आहवनीयः**, "वज्रहस्तः पुरन्दरः" इति विधिपरैरेव वाक्यैः समर्प्यन्ते, **तद्वद्** ब्रह्मेत्यर्थः। विधिपरवाक्यस्यापि अन्यार्थबोधित्वे वाक्यभेदः स्यादिति शङ्कानिरासार्थम**पिशब्दः**। मानान्तराज्ञातान्यपि शेषतयोच्यन्ते, न प्रधानत्वेनेति न वाक्यभेदः, प्रधानार्थभेदस्यैव वाक्यभेदकत्वादिति भावः। ननूक्तषड्विधलिङ्गैस्तात्पर्यविषयस्य ब्रह्मणः कुतो विधिशेषत्वमिति शङ्कते—**कुत इति**। वृद्धव्यवहारेण हि शास्त्रतात्पर्यनिश्चयः। वृद्धव्यवहारे च श्रोतुः प्रवृत्तिनिवृत्ती उद्दिश्याप्तप्रयोगो दृश्यते। अतः शास्त्रस्यापि ते एव

### पूर्णानन्दीया

ति मन्तव्यम्। **वाक्यादिति**। सत्यं ज्ञानमित्यादिवाक्यादित्यर्थः। **पशुमिति**। पशोर्बन्धनं कुर्यादित्यर्थः। विधिवाक्यान्युदाहृत्य तत्पराणि वाक्यान्युदाहरति—**यूपं तक्षतीति**। यूपे पशुं बध्नातीति विधौ यूपः क इत्यकाक्षायां यूपं तक्षतीति वाक्येन तक्षणादिसंस्कृतं दारु यूप इति तस्य यूपस्य विधिशेषत्वं बोध्यते यथा तथा तद्विजिज्ञासस्वेति विधौ तद्ब्रह्म किमित्याकाङ्क्षाया सत्यादिवाक्येन सच्चिदानन्दं ब्रह्मेति तस्य ब्रह्मण विधिशेषत्व बोध्यते सत्यादिवाक्यस्य स्वार्थे फलाभावादिति भाव। शेषत्वं स्फुटीकरोति **विधिपरेत्यादिना**।

ननु तथापि सत्यादिपदानां मानान्तरावेद्यब्रह्मबोधकत्वाद्वाक्यभेदो दुर्वार इत्यत आह **मानान्तरेति**। यूपादिन्यपीत्यर्थः। **कुत इति**। कस्माद्धेतोरित्यर्थ। **वृद्धव्यवहारेणेति**। उत्तमवृद्धानां व्यवहारो नाम गामानयेत्यादिशब्दाभिलापस्तेनेत्यर्थः। **शास्त्रतात्पर्यनिश्चय इति**। गामानयेत्यादिवाक्यसमूहात्मकस्यास्य शास्त्रस्यास्मिन्नर्थे तात्पर्यमित्याकारकानिश्चयः मध्यमवृद्धानां जायत इत्यर्थः। उक्तमेव विवृणोति **वृद्धव्यवहारे चेति**। वृद्धव्यवहारस्थले इत्यर्थ। श्रोतु मध्यमवृद्धस्येत्यर्थः। **प्रवृत्तिनिवृत्तीति**। अनुष्ठानरूपा प्रवृत्तिस्तद्विपरीता निवृत्तिरिति विवेक। प्रवृत्तिनिवृत्तिप्रयोजनमन्तरा वाक्यप्रयोगानुपपत्तेः प्रवर्तकज्ञानद्वारा प्रवृत्त्यर्थं गामानयेति वाक्यं प्रयोक्ता उत्तमवृद्धः प्रयुंक्ते तेन वाक्यश्रोतु. मध्यमवृद्धस्य गवानयने प्रवृत्तिर्भवति न भुंक्ष्वेति वाक्यश्रोतुस्तस्य तूर्णीभावरूपा निवृत्तिर्भवति, तथा च श्रोतृप्रवृत्तिनिवृत्त्युद्देश्यक उत्तमवृद्धस्याप्तस्य वाक्यप्रयोग· मध्यमवृद्धस्य शास्त्रतात्पर्यनिश्चये हेतुरिति भावः। तत किमित्यत आह—**अत इति**। **ते एवेति**। वाक्यप्रयोगप्रयोजने प्रवृत्तिनिवृत्ती एवेत्य-

त एतत् ? प्रवृत्तिनिवृत्तिप्रयोजनत्वाच्छास्त्रस्य । तथाहि शास्त्रतात्पर्यविद आहुः--'दृष्टो हि तस्यार्थः कर्मावबोधनम्' इति । 'चोदनेति' क्रियायाः प्रवर्तकं वचनम् । 'तस्य ज्ञानमुपदेशः'-- ( जै०सू० १।१।५ ) 'त-

## ❀ रत्नप्रभा ❀

प्रयोजने, ते च कार्यज्ञानजन्ये इति कार्यपरत्वं शास्त्रस्य, ततः कार्यशेषत्वं ब्रह्मण इत्याह—**प्रवृत्तीति** । शास्त्रस्य नियोगपरत्वे वृद्धसम्मतिमाह—**तथाहीत्यादिना** । क्रिया कार्यं, नियोगो विधिः, धर्मोऽपूर्वमिति अनर्थान्तरम् । को वेदार्थः, इत्याकांक्षायां शाबरभाष्यकृतोक्तम्—**दृष्टो हीति** । **तस्य** वेदस्य । कार्यं वेदार्थः इत्यत्र चोदनासूत्रस्थं भाष्यमाह—**चोदनेति** । क्रियाया नियोगस्य ज्ञानद्वारा प्रवर्तकं वाक्यं **चोदनेत्युच्यत** इत्यर्थः । शबरस्वामिसंमतिमुक्त्वा जैमिनीसंमतिमाह—**तस्य ज्ञानमिति** । **तस्य** धर्मस्य **ज्ञानं** ज्ञापकम् अपौरुषेयविधिवाक्यम् **उपदेशः** तस्य

## ❀ पूर्णानन्दीया ❀

र्थं । ज्योतिष्टोमेनेत्यादिशास्त्रं धर्मे प्रवृत्त्यर्थमधर्मान्निवृत्त्यर्थं च प्रवृत्त तस्मात्ते एव शास्त्रस्यापि प्रयोजन इति भाव । **ते च कार्यजन्ये इति** । धर्मो मत्कृतिसाध्य इति धर्मे कार्यत्वज्ञानेन प्रवृत्तिरुत्पद्यते तत कार्यत्वज्ञानजन्यत्व प्रवृत्तौ प्राप्तम् , एव निवृत्तावप्यस्ति, तथाहि हेय कलञ्जभक्षणादिकं मन्निवृत्तिप्रयत्नकार्यमिति तत्कार्यत्वज्ञानेन निवृत्तिरूपप्रयत्नाभिन्ना तूष्णीभावरूपा निवृत्तिर्जन्यते ततस्तस्यां कार्यत्वज्ञानजन्यत्वं वर्तते, तथा च हेयस्य निवृत्तिप्रयत्नकार्यत्वं नाम निवृत्तिपरिपाल्यप्रागभावप्रतियोगित्वमिति पुरस्तादेवोक्तमिति भाव । प्रकृतमाह **तत इति** । तस्माद्धेतोरित्यर्थ । **इत्याहेति** । इत्येवं वृत्तिकारस्य तात्पर्यमाहेत्यर्थः ।

भाष्ये **कुत एतदिति** । विधिशेषत्व कस्माद्धेतोरित्यर्थ । **अनुक्रमणमिति** । वेदार्थसङ्ग्राहकवाक्यजातमित्यर्थ । अनुक्रमणं शास्त्रस्य कार्यपरत्वमेव बोधयतीति भाव। तदेवोपपादयति **दृष्टो हि तस्यार्थ इति** । अत्र नामपदं व्यर्थं कर्मावबोधनं कार्यज्ञानमित्यर्थ । तथा च ज्ञायमानं कार्यं वेदार्थ इति **दृष्टो हीति** शाबरभाष्यवाक्यार्थ । **ज्ञानमुपदेश इति** । ज्ञानं ज्ञापकमित्यर्थ । उपदेश अपौरुषेयविधिवाक्यमित्यर्थ । **तद्भूतानामिति** । 'तद्भूताना क्रियार्थेन समाम्नायोर्थस्य तन्निमित्तत्वादि'त्येतावत्सूत्रमिति विज्ञेयम् । **विषयविशेष इति** । धर्मादावित्यर्थ । कुतश्चि**द्विषयविशेषादिति** । अधर्मात्सुरापानादेरित्यर्थ । शास्त्रं विधिनिषेधवाक्यमित्यर्थ ।

व्याख्याने–कार्यपरत्वं शास्त्रस्येत्युक्तं नियोगपरत्वं च कुत्रचिदुक्तं तस्य ज्ञानमित्यत्र धर्मबोधकत्वमुक्तम् , भाष्ये तु क्रियायाः प्रवर्तकमित्यत्र क्रियापरत्वं शास्त्रस्येत्युक्तम्, तथाचानेकार्थकत्वात्कथं कार्यपरत्वमेवेत्यत आह–**क्रिया कार्यमिति** । षण्णामेकार्थकत्वात्पर्यायतेत्यर्थः । **सूत्रस्थमिति** । सूत्रार्थकथनपरमित्यर्थ । भाष्यकर्ता शबरस्वामी सूत्र-

द्भूताना क्रियार्थेन समाम्नायः'— (जै०सू०१।१।२५) 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्'— (जै०सू०१।२।१) इति च । अतः पुरुषं क्वचिद्विषयविशेषे प्रवर्तयत्कुतश्चिद्विषयविशेषान्निवर्तयच्चार्थवच्छास्त्रम्, तच्छेषतया चान्यदुपयुक्तम्, तत्सामान्याद्वेदान्तानामपि तथैवार्थवत्त्वं स्यात्। सति च विधिपरत्वे यथा स्वर्गादिकामस्याग्निहोत्रादि साधनं विधीयत एवममृतत्वकामस्य ब्रह्मज्ञानं विधीयत इति युक्तम्।

## रत्नप्रभा

धर्मेणाव्यतिरेकादित्यर्थः। पदानां कार्यान्वितार्थे शक्तिरित्यत्र सूत्रं पठति—**तद्भूतानामिति**। तत् तत्र वेदे **भूतानां** सिद्धार्थनिष्ठानां पदानां **क्रियार्थेन** कार्यवाचिना लिङ्गादिपदेन **समाम्नायः** सहोच्चारणं कर्तव्यम्। पदार्थज्ञानस्य वाक्यार्थरूपकार्यधीनिमित्तत्वादित्यर्थः। कार्यान्वितार्थे शक्तानि पदानि कार्यवाचिपदेन सह पदार्थस्मृतिद्वारा कार्यमेव वाक्यार्थं बोधयन्तीति भावः। फलितमाह—**अत इति**। यतो वृद्धा एवमाहुः, अतो विधिनिषेधवाक्यमेव शास्त्रम्। अर्थवादादिकं तु तच्छेषतयोपक्षीणम्, तेन कर्मशास्त्रेण सामान्यं शास्त्रत्वम्, तस्माद्वेदान्तानां कार्यपरत्वेनैव अर्थवत्त्वं स्यादित्यर्थः। **ननु** वेदान्तेषु नियोज्यस्य विधेयस्य चादर्शनात् कथं कार्यधीरिति तत्राह—**सति चेति**। **ननु** धर्मब्रह्मजिज्ञासासूत्रकाराभ्यामिह काण्डद्वयेऽर्थभेद उक्तः, एककार्यार्थत्वे शास्त्रभेदानुपपत्तेः। तत्र काण्डद्वये जिज्ञास्यभेदे सति

## पूर्णानन्दीया

कर्ता भगवान्जैमिनिरिति विवेकः। **तस्य धर्मेणाव्यतिरेकादिति**। विधिवाक्यस्य धर्मेणाव्यभिचरितत्वादित्यर्थः। विधिवाक्यस्य नियमेन धर्मबोधकत्वादिति यावत्। तथा च यद्विधिवाक्यं तद्धर्मबोधकमिति व्याप्तिप्रतिपादनपरेण श्रीजैमिनिसूत्रेण शास्त्रस्य नियोगपरत्वं दर्शितमिति भावः। **सूत्रमिति**। जैमिनिसूत्रमित्यर्थः। तत्पदं विभक्तिव्यत्यासेन परिष्करोति **तत्तत्रेति**। **सिद्धार्थनिष्ठानामिति**। सिद्धार्थबोधकानामित्यर्थः। **समाम्नायः कर्तव्य इति**। कर्तव्यपदस्यात्राध्याहारः कृत इति विज्ञेयम्। अर्थस्य तन्निमित्तत्वादित्यंशं व्याकरोति **पदार्थज्ञानस्येति**। पदार्थस्मृतेरित्यर्थः। विज्ञानादिपदेन सहोच्चारितसिद्धार्थनिष्ठपदसमुदायात्मकाम्नायः पदार्थस्मृतेर्वाक्यार्थधीनिमित्तत्वात्तद्द्वारा कार्यरूपवाक्यार्थज्ञाने हेतुर्भवतीति सूत्रयोजनामभिप्रेत्य सङ्ग्रहेण तात्पर्यार्थमाह **कार्यान्वितेति**। पदार्थस्मृतिद्वारा पदानि कार्यवाचिपदेन सह वाक्यार्थं बोधयन्तीत्यन्वयः। 'तच्छेषतयान्यदुपयुक्तमि'ति भाष्यार्थमाह **अर्थवादादिकन्त्विति**। **तत्सामान्यादिति** पदद्वयस्यार्थमाह **तेनेति**। शास्त्रत्वधर्मेण कर्मशास्त्रतुल्यत्वाद्वेदान्तानां कार्यपरत्वेनैवार्थवत्त्वमिति भावः।

ननिवह जिज्ञास्यवैलक्षण्यमुक्तम् कर्मकाण्डे भव्यो धर्मो जिज्ञास्यः, इह तु भूतं नित्यनिर्वृत्तं ब्रह्म जिज्ञास्यमिति । तत्र धर्मज्ञानफलादनुष्ठानापेक्षाद्विलक्षणं ब्रह्मज्ञानफलं भवितुमर्हति । नार्हत्येवं भवितुम् । कार्यविधिप्रयुक्तस्यैव ब्रह्मणः प्रतिपाद्यमानत्वात् । 'आत्मा वा अरे द्रष्टव्यः' ( बृह०२।४।५। ) 'य आत्माऽपहतपाप्मा-सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' ( छान्दो० ८।७।१ ) 'आत्मेत्येवोपासीत' (बृ०१।४।७। ) 'आत्मानमेव लोकमुपासीत' (बृ०१।४।१५ ) 'ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड०३।२।९) इत्यादिविधानेषु(१) सत्सु 'कोऽसावात्मा किं तद्ब्रह्म' इत्याकाङ्क्षायां तत्स्वरूपसमर्पणेन सर्वे वेदान्ता उपयुक्ताः—'नित्यः सर्वज्ञः सर्वगतो नित्यतृप्तो नित्यशुद्धबुद्धमुक्तस्वभावो विज्ञानमानन्दं ब्रह्म' इत्येवमादयः । तदुपासनाच्च शास्त्रदृष्टो मोक्षः फल भविष्यतीति(२) ।

## रत्नप्रभा

फलवैलक्षण्यं वाच्यम् । तथा च न मुक्तिफलाय ज्ञानस्य विधेयता, मुक्तेर्विधेयक्रियाजन्यत्वे कर्मफलादविशेषप्रसङ्गात्, अविशेषे जिज्ञास्यभेदासिद्धेः । अतः कर्मफलविलक्षणत्वान्नित्यसिद्धमुक्तेस्तद्व्यञ्जकज्ञानविधिरयुक्त इत्याशङ्कते—**नन्विहेति** । मुक्तेः कर्मफलाद्वैलक्षण्यमसिद्धमिति तदर्थं ज्ञानं विधेयम् । **न च** तर्हि सफलं कार्यमेव वेदान्तेष्वपि जिज्ञास्यमिति तद्भेदासिद्धिरिति **वाच्यम्** । इष्टत्वात् । **न च** ब्रह्मणो जिज्ञास्यत्वसूत्रविरोधः, ज्ञानविधिशेषत्वेन सूत्रकृता ब्रह्मप्रतिपादनादिति परिहरति—**नार्हत्येवमिति** । ब्रह्मणो विधिप्रयुक्तत्वं स्फुटयति—**आत्मा वा इति** । 'ब्रह्म वेदे'त्यत्र ब्रह्मभावकामो ब्रह्मवेदनं कुर्यादिति विधिः परिणम्यत इति द्रष्टव्यम् । लोकं ज्ञानस्वरूपम् । वेदान्तानेवार्थतो दर्शयति—**नित्य इति** । **ननु** किं विधिफल-

## पूर्णानन्दीया

भाष्ये **ब्रह्मज्ञानमिति** । ज्ञानमुपासनमित्यर्थः । तथा च ज्योतिष्टोमवाक्ये यथा स्वर्गकामो नियोज्य यागो विधेय, तथा वेदान्तेऽपि मोक्षकामो नियोज्यः अहं ब्रह्मास्मीति प्रत्यगभिन्नब्रह्मोपासनं च विधेयमस्तीति कार्यपरत्व युक्तमिति भाव ।

**व्याख्याने शङ्कते इति** । ज्ञानं नोपासनं किन्तूपासनातिरिक्तं तच्च न विधेयमित्यभिप्रायेण सिद्धान्तो शङ्कत इति भाव । **ज्ञानविधिशेषत्वेनेति** । ज्ञानमुपासनमित्यर्थः । **विधिप्रयुक्तत्वमिति** । उपासनाविधिशेषत्वमित्यर्थ । 'स विजिज्ञासितव्य' इत्यादौ विधिप्रतीतावपि ब्रह्म वेदेत्यादौ विधि न प्रतीयत इत्यत आह **ब्रह्म वेदेति** । वेदनमु

(१) इत्यादिषु विधानेष्विति पाठान्तरम् । (२) इतिपद नास्ति भा० मु० पुस्तके ।

कर्तव्यविध्यननुप्रवेशे तु वस्तुमात्रकथने हानोपादानासम्भवात्, 'सप्त द्वीपा वसुमती, राजासौ गच्छती'त्यादिवाक्यवद्वेदान्तवाक्यानामानर्थक्यमेव स्यात्। **ननु** वस्तुमात्रकथनेऽपि 'रज्जुरियं नायं सर्प' इत्यादौ भ्रान्तिजनितभीतिनिवर्तनेनार्थवत्त्वं दृष्टं तथेहाप्यसंसार्यात्मवस्तुकथनेन संसारित्वभ्रान्तिनिवर्तनेनार्थवत्त्वं स्यात्। स्यादेतदेवं, यदि रज्जुस्वरूपश्रवण इव सर्पभ्रान्तिः संसारित्वभ्रान्तिर्ब्रह्मस्वरूपश्रवणमात्रेण निवर्तेत, नतु निवर्तते, श्रुतब्रह्मणोऽपि यथापूर्वं सुखदुःखादिसंसारित्वधर्मदर्शनात्। 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृह० २।४।५।) इति च श्रवणोत्तरकालयोर्मनननिदिध्यासनयोर्विधिदर्शनात्। तस्मात्प्रतिपत्तिविधिविषयतयैव शास्त्रप्रमाणकं ब्रह्माभ्युपगन्तव्यमिति।

---

### रत्नप्रभा

मिति तदाह—**तदुपासनादिति**। प्रत्यग्ब्रह्मोपासनाद् 'ब्रह्मविदाप्नोति परमि'ति शास्त्रोक्तो मोक्षः स्वर्गवल्लोकाप्रसिद्धः फलमित्यर्थः। ब्रह्मणः कर्तव्योपासनाविषयकविधिशेषत्वानङ्गीकारे बाधकमाह—**कर्तव्येति**। विध्यसम्बद्धसिद्धबोधे प्रवृत्त्यादिफलाभावाद्वेदान्तानां वैफल्यं स्यादित्यर्थः। **नन्विति** शङ्का स्पष्टार्था। दृष्टान्तवैषम्येण परिहरति—**स्यादिति**। **एतद्** अर्थवत्त्वमेवं चेत् **स्यादि**त्यर्थः। एवंशब्दार्थमाह—**यदीति**। **किञ्च यदि** ज्ञानादेव मुक्तिः, **तदा** श्रवणजन्यज्ञानानन्तरं मननादिविधिर्न स्यात्, तद्विधेश्च कार्यसाध्या मुक्तिरित्याह—**श्रोतव्य इति**। शब्दानां कार्यान्वितशक्तेः प्रवृत्त्यादिफलस्यैव शास्त्रत्वात्सिद्धे फलाभावान्मननादिविधेश्च कार्यपरा वेदान्ता इति पूर्वपक्षमुपसंहरति—**तस्मादिति**।

### पूर्णानन्दीया

पासनमित्यर्थः। **शास्त्रोक्त इति**। शास्त्रबलाद्वित्य इत्युक्त इत्यर्थः। ब्रह्मोपासनादपूर्वद्वाराऽज्ञाननिवृत्त्या सगुणमोक्षो भवति न ज्ञानादिति भावः। चेच्छब्दमध्याहरति **चेदिति**। **एवंशब्देति**। एवंशब्दचेच्छब्दयोरर्थमाहेत्यर्थः। **शब्दानां कार्यान्वितेति**। अन्वितत्वं विशिष्टत्वमिति मन्तव्यम्॥

**समन्वयसूत्रद्वितीयवर्णकपूर्वपक्षग्रन्थव्याख्या समाप्ता।**

अत्राभिधीयते । न । कर्मब्रह्मविद्याफलयोर्वैलक्षण्यात् । शारीरं वाचिकं मानसं च कर्म श्रुतिस्मृतिसिद्धं धर्माख्यं, यद्विषया जिज्ञासा 'अथातो धर्मजिज्ञासा' ( जै०सू०१।१।१ ) इति सूत्रिता । अध-

**रत्नप्रभा**

वेदान्ता न विधिपराः स्वार्थे फलवत्त्वे सति नियोज्यविधुरत्वात्, 'नायं सर्पः' इति वाक्यवत् । "सोऽरोदीत्" "स्वर्गकामो यजेत" इति वाक्ययोर्निरासाय हेतौ विशेषणद्वयमिति सिद्धान्तयति—**अत्रेति** । यदुक्तं मोक्षकामस्य नियोज्यस्य ज्ञानं विधेयमिति, तन्नेत्याह—**नेति** । मोक्षः न विधिजन्यः कर्मफलविलक्षणत्वाद् आत्मवदित्यर्थः । उक्तहेतुज्ञानाय कर्मतत्फले प्रपञ्चयति—**शारीरमित्यादिना वर्णितं संसाररूपमनुवदतीत्यन्तेन** । **अथ** वेदाध्ययनान्तरम्, **अतः** वेदस्य फलवदर्थपरत्वात् । धर्मनिर्णयाय कर्मवाक्यविचारः कर्तव्य इति **सूत्रार्थः** । न केवलं धर्माख्यं कर्म किन्तु अधर्मोऽपीत्याह—**अधर्मोऽपीति** । निषेधवाक्यप्रमाणकत्वादित्यर्थः । कर्मोक्त्वा फल-

**पूर्णानन्दीया**

॥ श्रीगुरुभ्यो नमः ॥

यत्फलं तत् प्रवृत्तिनिवृत्तिजन्यमिति पूर्वपक्ष्यभिमतव्याप्तिरप्रयोजका प्रवृत्त्याद्यजन्यस्य सिद्धज्ञानजन्यस्य कर्मफलविलक्षणस्य विद्वदनुभवसिद्धस्य सर्वानर्थनिवृत्तिरूपस्य फलस्य सम्भवादित्यभिप्रेत्य परिहरतीति भाष्यमवतारयति **वेदान्ता इति** । विधिपराः कार्यबोधका न भवन्तीत्यर्थः । **नियोज्येति** । नियोज्य नियोगकर्ता तत्प्रतिपादकत्वाभावादित्यर्थ. । अथवा विधेयप्रतिपादकत्वाभाववत्त्वादित्यर्थः । साध्याभाववति हेतोर्वृत्तित्व व्यभिचारशब्दार्थः 'सोरोदि'ति वाक्ये साक्षाद्विधेयप्रतिपादकत्वाभावरूपहेतोः सत्त्वाद्विध्येकवाक्यतापन्नतया वाक्यस्य कार्यबोधकत्वेन साध्याभावस्य सत्त्वाच्च व्यभिचार इति विशेषणदलं फलवत्त्वसत्त्वेपि स्वार्थे फलवत्त्वरूपहेतोरभावात् न व्यभिचार । ज्योतिष्टोमवाक्ये विशेषणदलस्य हेतोः सत्त्वाद्वाक्यस्य कार्यबोधकत्वेन साध्याभावस्य सत्त्वाच्च व्यभिचारस्तद्वारणाय विशेष्यदलं विधेयकबोधकत्वेन विशिष्टहेतोरभावान्न व्यभिचार इति भावः । **नियोज्यस्येति** । नियोज्यस्य मोक्षकामस्य ब्रह्मज्ञानमित्यर्थ । **आत्मवदिति** । प्रत्यगात्मवदित्यर्थः ।'न कर्म ब्रह्मविद्याफलयोर्वैलक्षण्यादि'ति श्रीभाष्यकारस्य वस्तुसङ्ग्राहकवाक्यमेतत् । तस्यैव प्रपञ्चः 'अतो न कर्तव्यशेषत्वेन ब्रह्मोपदेशो युक्त' इत्यन्तं भाष्यम् । 'तत्र वर्णितं ससारमनुवदती'त्यन्तं भाष्यं कर्मतत्फलप्रतिपादक 'ब्रह्मोपदेशो युक्त' इत्यन्तं भाष्य तु तद्वैलक्षण्यप्रतिपादकमिति प्रधानोपसर्जनभावेन विभागमभिप्रेत्य भाष्यमवतारयति **उक्तहेत्विति** । कर्मफलवैलक्षण्यादिति हेत्वित्यर्थ. । **धर्मजिज्ञासेति** । सूत्रस्थधर्मपदमधर्मोपलक्षणमिति सूत्रतात्पर्यं स्फुटीकरोतीति भाष्यमवतारयति **न केवलमिति** । जिज्ञास्यमिति शेष· । परिहारायाधर्मोपि जिज्ञास्य इत्यत्र भाष्योक्तहेतुं व्याख्याति **निषे**

र्मोऽपि हिंसादिः प्रतिषेधचोदनालक्षणत्वाज्जिज्ञास्यः परिहाराय । तयोश्चोदनालक्षणयोरर्थानर्थयोर्धर्माधर्मयोः फले प्रत्यक्षे सुखदुःखे शरीरवाङ्मनोभिरेवोपभुज्यमाने विषयेन्द्रियसंयोगजन्ये ब्रह्मादिषु स्थावरान्तेषु प्रसिद्धे । मनुष्यत्वादारभ्य ब्रह्मान्तेषु देहवत्सु सुखतारतम्यमनुश्रूयते । ततश्च तद्धेतोर्धर्मस्य तारतम्यं गम्यते, धर्मतार

❀ रत्नप्रभा ❀

माह—**तयोरिति** । मोक्षस्तु अतीन्द्रियो विशोकः शरीराद्यभोग्यो विषयाद्यजन्योऽनात्मवित्स्वप्रसिद्ध इति वैलक्षण्यज्ञानाय प्रत्यक्षत्वादीनि विशेषणानि । सामान्येन कर्मफलमुक्त्वा धर्मफलं पृथक् प्रपञ्चयति—**मनुष्यत्वादिति** । "स एको मानुष आनन्दः" (तै०आ०२।८।१) ततः शतगुणो गन्धर्वादीनामिति श्रुतेरनुभवानुसारि-

❀ पूर्णानन्दीया ❀

धेति । **कर्मोक्त्वेति** । धर्माधर्मरूपकर्मोक्त्वेत्यर्थः ।

भाष्ये **यद्विषया जिज्ञासेति** । यद्धर्माधर्मविषया जिज्ञासेत्यर्थः । अथातो धर्मजिज्ञासा अधर्मजिज्ञासा चेति यद्विषया जिज्ञासा सूत्रिता तयोर्धर्माधर्मयोः फलं सुखदुःखे स्थावरान्तेषु प्रसिद्धे इत्यर्थः । लक्षणपदं प्रमाणपरम् । **मनुष्यत्वादारभ्येति** । मनुष्यादारभ्येत्यर्थः । **अनुश्रूयत इति** । श्रुत्यानुभूयत इत्यर्थः । 'स एको मानुष आनन्द' इत्यादि श्रुत्या सुखतारतम्यमनुभूयत इति भावः । प्रसिद्धत्वमेवोपपादयति **आर्थित्वेति** । विद्यासमाधीति । विद्यापदमुपासनापरम्, तथा च विद्यारूपो यः समाधिविशेषः ध्यानविशेषः तस्माद्धेतोरित्यर्थः इति केचित् । उपासनाविशिष्टकर्मिणामुत्तरमार्गेण गमनमिति मार्गतारतम्यमुपपादयति **केवलैरिति** । उपासनारहितपुरुषकृतैः कर्मभिरित्यर्थः । **इष्टापूर्त्तेति** । 'अन्येषामपि दृश्यत' इति व्याकरणसूत्रेणेष्टापूर्तेत्यत्र दीर्घो वेदितव्यः । अन्येषामपि लक्ष्याणां प्रयोगानुसारेण पूर्वपदान्तस्य दीर्घो दृश्यते इति सूत्रार्थः । **प्रतिषेधचोदनालक्षणस्येति** । निषेधवाक्यप्रमाणकस्येत्यर्थः । **उपादानेति** । ग्रहणेत्यर्थः । तथा च **श्रुतिरिति** । यथा वर्णितं तथैव न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ती'त्याकारकश्रुतिश्च ससाररूपं तारतम्यमनुवदतीत्यन्वयः ।

व्याख्याने **विशोक इति** । विषयेन्द्रियजन्यसुखस्याप्यनित्यत्वाच्छोकत्वमेव, तथा च 'सुखदुःखे' इत्यनेन भाष्येण मोक्षे विशोकत्वविशेषणं ज्ञापितमिति भावः । **ब्रह्मादिस्थावरान्तेष्विति**—भाष्यस्य व्याख्यानमनात्मवित्स्विति । **विशेषणानीति** । पञ्चविशेषणानीत्यर्थः । **कर्मफलमुक्त्वेति** । धर्माधर्मफलमुक्त्वेत्यर्थः । **पृथगिति** । विशेषणेत्यर्थः । प्रथमत इति शेषः । मनुष्यलोकादूर्ध्वलोकेषु शरीराणां सुखाधिक्यं दुःखस्याल्पत्वं मनुष्यलोकेषु सुखदुःखयोः समत्वं मनुष्यलोकादधोलोकेषु दुःखाधिक्यं

तम्यादधिकारितारतम्यम् । प्रसिद्धं चार्थित्वसामर्थ्यादिकृतमाधिकारितारतम्यम् । तथाच यागाद्यनुष्ठायिनामेव विद्यासमाधिविशेषादुत्तरेण पथा गमनम् । केवलैरिष्टापूर्तदत्तसाधनैर्धूमादिक्रमेण दक्षिणेन पथा गमनम् । तत्रापि सुखतारतम्यं तत्साधनतारतम्य च शास्त्रात् 'यावत्सपातमुषित्वा' (छान्दो०

---

**रत्नप्रभा**

त्वमनुशब्दार्थः । ततश्च सुखतारतम्यादित्यर्थः । मोक्षस्तु निरतिशयः, तत्साधनं च तत्त्वज्ञानमेकरूपमिति वैलक्षण्यम् । किञ्च साधनचतुष्टयसम्पन्न एकरूप एव मोक्षविद्याधिकारी, कर्मणि तु नानाविध इति वैलक्षण्यमाह—**धर्मेति** । गम्यते न केवलं किन्तु प्रसिद्धं चेत्यर्थः । **अर्थित्वं** फलकामित्वम् । **सामर्थ्यं** लौकिकं पुत्रादि । **आदिपदाद्** विद्वत्त्वं, शास्त्रानिन्दितत्वं च । किञ्च कर्मफलं मार्गप्राप्यं, मोक्षस्तु नित्याप्त इति भेदमाह—**तथेति** । उपासनायां चित्तस्थैर्यप्रकर्षादर्चिरादिमार्गेण ब्रह्मलोकगमनं "तेऽर्चिषम्" (छां०४।१५।५) इत्यादिना श्रूयत इत्यर्थः ।

अग्निहोत्रं तपस्सत्यं वेदानां चानुपालनम् ।
आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते ॥ १ ॥
वापीकूपतडागादि देवतायतनानि च ।
अन्नप्रदानमारामः पूर्तमित्यभिधीयते ॥ २ ॥
शरणागतसन्त्राणं भूतानां चाप्यहिंसनम् ।
बहिर्वेदि च यद्दानं दत्तमित्यभिधीयते ॥ ३ ॥

**तत्रापि**—चन्द्रलोकेऽपीत्यर्थः । सम्पतति गच्छति अस्माल्लोकादमुं लोक-

**पूर्णानन्दीया**

सुखाल्पतेति विभागमभिप्रेत्य तस्यापि तारतम्येन भवितव्यमिति धर्मतारतम्यमुपपादयतीत्याह-**स एको मानुष इत्यादिना । अनुशब्देति** । अनुश्रूयत इत्यत्रानुशब्दार्थ इति विज्ञेयम् । **इति(१)फलवैलक्षण्यमिति** । इतिशब्दो हेत्वर्थक·,साधनादिवैलक्षण्यात् फलवैलक्षण्यमिति भाव । **शास्त्रानिन्दितत्वं चेति** । यागाधिकारित्वस्य निन्दितत्वादनिन्दितत्वमधिकारिविशेषणमिति भाव. । 'विद्यासमाधिविशेषादि'ति भाष्यस्यार्थमाह—**उपासनायामिति** । इष्टापूर्तदत्तानि व्याचष्टे **अग्निहोत्रमित्यादिना । बहिर्वेदि चेति** । क्रत्वङ्गभिन्नमित्यर्थ. । **अस्माल्लोकादिति** । मनुष्यलोकादित्यर्थ· । उषित्वेति-

---

(१) अत्र रत्नप्रभासु फलपदं कुत्रापि नोपलभ्यतेऽतष्टीकाकारमतेनैवाय पाठो बोध्य ।

५।१०।५ ) इत्यस्माद्गम्यते । तथा मनुष्यादिषु नारकस्थावरान्तेषु सुखलवश्चोदनालक्षणधर्मसाध्य एवेति गम्यते तारतम्येन वर्तमानः । तथोर्ध्वं गतेष्वधोगतेषु च देहवत्सु दुःखतारतम्यदर्शनात्तद्धेतोरधर्मस्य प्रतिषेधचोदनालक्षणस्य तदनुष्ठायिनां च तारतम्यं गम्यते । एवमविद्यादिदोषवतां धर्माधर्मतारतम्यनिमित्तं शरीरोपादानपूर्वकं सुखदुःखतारतम्यमनित्यं संसाररूपं श्रुतिस्मृतिन्यायप्रसिद्धम् । तथाच श्रुतिः—'न ह वै सशरी

---

## ❧ रत्नप्रभा ❧

मनेनेति **सम्पातः** कर्म, **यावत्** कर्म भोक्तव्यं **तावत्** स्थित्वा पुनरायान्तीत्यर्थः । मनुष्यत्वादूर्ध्वं गतेषु सुखस्य तारतम्यमुक्त्वा अधोगतेषु तदाह—**तथेति** । इदानीं दुःखतद्धेतुतदनुष्ठायिनां तारतम्यं वदन् अधर्मफलं प्रपञ्चयति—**तथोर्ध्वमिति** । **द्विविधं** कर्मफलं मोक्षस्य तद्वैलक्षण्यज्ञानाय प्रपञ्चितमुपसंहरति—**एवमिति** । अस्मिताकामक्रोधभयान्यादिशब्दार्थः । "ते तं भुक्त्वा स्वर्गलोकं विशालम्" (भग०गी०९।२१) इत्याद्या **स्मृतिः** । काष्ठोपचयात् ज्वालोपचयदर्शनात् फलतारतम्येन साधनतारतम्यानुमानं **न्यायः** । श्रुतिमाह—तथा चेति । **मोक्षो** न कर्मफलं कर्मफलविरुद्धातीन्द्रियत्वविशोकत्वशरीराद्यभोग्यत्वादिधर्मवत्त्वात् व्यतिरेकेण स्वर्गादिवदिति न्यायानुग्राह्यां श्रुतिमाह—**अशरीरमिति** । **वावेति**—अवधारणे । तत्त्वतो विदेहं **सन्तम्** आत्मानं वैषयिके सुखदुःखे नैव स्पृशत इत्यर्थः । मोक्षश्चेदुपासनारूपधर्मफलं तदेव प्रियमस्तीति तन्निषेधायोग इत्याह—**धर्मकार्यत्वे**

## ❧ पूर्णानन्दीया ❧

पदस्यार्थमाह—**स्थित्वेति** । अविद्यादिमान् यः शरीरतारतम्येन सुखदुःखान्यतरसम्बन्धीति व्याप्ति भाष्यगर्भिता स्फुटत्वादुपेक्ष्य यस्तारतम्येन फलसम्बन्धीति व्याप्तावग्निवदिति दृष्टान्तं ज्ञापयन्ननुमानमाह—**काष्ठोपचयादिति** । लक्षणया उपचयशब्दस्य तारतम्यमर्थः । अयं तारतम्येन साधनवान् तारतम्येन फलवत्त्वात् अग्निवदिति प्रयोग. । 'तदुपासनाच्च शास्त्रदृष्टोऽदृष्ट' इत्यादिभाष्येण मोक्षः उपासनाकर्मफलमिति यदुक्तं तद्दूषणपरं भाष्यमवतारयति **मोक्षो न कर्मफलमिति** । संसारवर्णनेन ज्ञापितं हेतुमाह—**कर्मफलविरुद्धेति** । विशोकत्वादिकं पृथक्पृथगेव हेतुरिति मन्तव्यम् । **व्यतिरेकेणेति** । यत्र कर्मफलत्वं तत्र विशिष्टहेत्वभावः यथा स्वर्गादिवदिति भावः । वावेत्यस्यार्थं कथयन् व्यवहितेनान्वयमाह—**नैवेति** । विपक्षे बाधकप्रतिपादकं भाष्यमवतारयति **मोक्षश्चेदिति** । **तदेवेति** । मोक्षस्वरूपं धर्मफलमेवेत्यर्थः । प्रियं सुखमित्यर्थः । **तन्निषेधेति** । सुखस्पर्शननिषेधो न सम्भवतीति पूर्ववादिनं प्रत्याहेत्यर्थ. ।

रस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति यथावर्णितं संसाररूपमनुवदति । 'अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः' ( छान्दो० ८।१२।१ ) इति प्रियाप्रियस्पर्श(१)प्रतिषेधाच्चोदनालक्षणधर्मकार्यत्वं मोक्षाख्यस्याशरीरत्वस्य प्रतिषिध्यत इति गम्यते । धर्मकार्यत्वे हि प्रियाप्रियस्पर्शनप्रतिषेधो नोपपद्यते । अशरीरत्वमेव धर्मकार्यमिति चेन्न । तस्य स्वाभाविकत्वात् ।

अशरीरं शरीरेषु अनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥

( काठ० १।२।२१ ) 'अप्राणो ह्यमनाः शुभ्रः' ( मुण्ड० २।

---

## ❁ रत्नप्रभा ❁

हीति । ननु प्रियं नाम वैषयिकं सुखं तन्निषिध्यते, मोक्षस्तु धर्मफलमेव कर्मणां विचित्रफलदानसामर्थ्यादिति शङ्कते—**अशरीरत्वमेवेति** । आत्मनो देहासङ्गित्वमशरीरत्वम् , तस्यानादित्वान्न कर्मसाध्यतेत्याह—**नेति** । **अशरीरं** स्थूलदेहशून्यं देहेष्वनेकेषु अनित्येषु एकं नित्यम् **अवस्थितं महान्तं** व्यापिनम् । आपेक्षिकमहत्त्वं वारयति—**विभुमिति** । तमात्मानं ज्ञात्वा धीरः सन् शोकोपलक्षितं संसारं नानुभवतीत्यर्थः । सूक्ष्मदेहाभावे श्रुतिमाह—**अप्राण इति** । प्राणमनसोः क्रियाज्ञानग-

## ❁ पूर्णानन्दीया ❁

**नन्विति** । धर्मफल द्विविधं, तथाहि–वैषयिकसुखहेतुत्वेन तत्सुखसम्बन्धिरूपं धर्मफलमेकं यथा स्वर्गादि, तथा च स्वर्गादिजनितं सुखं श्रुत्या निषिध्यते तस्मान्न सुखस्पर्शननिषेधायोगः। अपर धर्मफलमशरीरत्वरूपं तच्च पर्यवसानतया शरीराद्यभाव । स तु ध्वंसवत् नित्योपि जन्यश्च, स एव मोक्ष श्रुतिवलात् कर्मणा विचित्रशक्तित्वेन विचित्रफलदानसामर्थ्याच्चेति पूर्ववादी शङ्कत इति भाव । **आत्मन इति** । अशरीरत्वं भावरूपमेव न त्वभावरूपमतो ध्वंसवैलक्षण्याद्दृष्टान्तवैषम्यमिति सिद्धान्त्यभिप्राय. । अशरीरात्मस्वरूपस्य मोक्षस्यानादित्वे भावत्वे च प्रमाणत्वेनोदाहृतां श्रुतिं व्याचष्टे. **अशरीरमिति** । 'महान्त विभुमिति' पदद्वयस्य पौनरुक्त्याशङ्का वारयितुमवातरयति **आपेक्षिकमिति** । सावधिकमित्यर्थ । अनवस्थेष्ववस्थितमित्यनेनानादित्वमितराशेन भावत्वमिति विज्ञेयम् । 'ब्रह्म वेद ब्रह्मैव भवति, विद्ययामृतमश्नुते,ब्रह्मसंस्थोऽमृतत्वमेति, अथायमशरीरोऽमृत. प्राणो ब्रह्मैवे'त्यादिश्रुतिभिर्दर्शितस्य ब्रह्मात्मत्वाशरीरत्वामृतत्वलक्षणस्य मोक्षस्य सादित्वेऽन्तवत्त्वं स्यात् । न चेष्टापत्तिरिति वाच्यम् । अन्तवत्त्वादनित्यत्वेन

---

(१) प्रियाप्रिययो स्पर्शनेति प्रा० मु० पु० पाठ ।

१।२ ) 'असङ्गो ह्ययं पुरुषः' ( बृह० ४।३।१५ ) इत्यादिश्रुतिभ्यः । अत एवानुष्ठेयकर्मफलविलक्षणं मोक्षाख्यमशरीरत्वं नित्यमिति सिद्धम् । तत्र किंचित्परिणामिनित्यं यस्मिन्विक्रियमाणेऽपि तदेवेदमिति बुद्धिर्न विहन्यते । यथा पृथिव्यादि जगन्नित्यत्ववादिनाम् , यथा च

❧ रत्नप्रभा ❧

क्त्योर्निषेधात्, तदधीनानां कर्मज्ञानेन्द्रियाणां निषेधो हि यतः अतः शुद्ध इत्यर्थः । देहद्वयाभावे श्रुतिः—"असङ्गो हि" (नृसिंहोत्तरतापिन्याम् ९) (बृ०४।३।१५) इति, निर्देहात्मस्वरूपमोक्षस्यानादिभावत्वे सिद्धे फलितमाह—**अत एवेति** । नित्यत्वेऽपि परिणामितया धर्मकार्यत्वं मोक्षस्येत्याशंक्य नित्यं द्वेधा विभजते—**तत्र किञ्चिदिति** । नित्यवस्तुमध्य इत्यर्थः । परिणामि च तन्नित्यं चेति परिणामिनित्यम्, आत्मा तु कूटस्थनित्य इति न कर्मसाध्य इत्याह—**इदं त्विति** । परिणामिनो नित्यत्वं प्रत्यभिज्ञाकल्पितं मिथ्यैव, कूटस्थस्य तु नाशकाभावान्नित्यत्वं पारमार्थि-

❧ पूर्णानन्दीया ❧

पुनरावृत्तौ पुनर्बन्धान्मोक्षस्योपचरितार्थत्वप्रसङ्गान्तथा चोक्तश्रुतया उपचरितार्थत्वापादनरूपन्यायेन चानादिभावस्य मोक्षस्य नित्यसिद्धत्वप्रतिपत्तेः नोपासनाक्रियारूपधर्मफलत्वमिति सिद्धान्तार्थः । नित्यं द्विविधं परिणामिनित्यं कूटस्थनित्यं चेति ।

ननु नित्यवस्तुमध्ये यस्मिन् वस्तुनि परिणममाने सति तदेव इदमिति प्रत्यभिज्ञाप्रमाणबलात् सिद्धं परिणामिनित्यत्वमेव मोक्षस्य स्यात् , तथा च यत् परिणामिनित्य तत्कार्यमिति व्याप्तिर्यथा पृथिव्यादि तद्वन्मोक्षस्य धर्मकार्यत्वं च स्यात् इति चेत् । उच्यते—यत् परिणामिनित्यं तत्सावयवमिति व्याप्तिः यथा पृथिव्यादि । तथा च श्रुत्युक्तस्य स्वाभाविकाशरीरामृतब्रह्मलक्षणस्य मोक्षस्य निरवयवत्वान्न परिणामिनित्यत्वं किन्तु कूटस्थनित्यत्वमेव । किञ्च परिणामिनित्यत्वं कल्पितं कूटस्थनित्यत्वन्तु श्रुतेः स्वाभाविकत्वान्नाशकाभावाच्च पारमार्थिकमित्यभ्युपगम्यते ततो न परिणामिनित्यत्वं मोक्षस्य तस्मान्नोपासनाकर्मकार्यत्वमित्येतमर्थं स्फुटीकर्तुं भाष्यमवतारयति **नित्यत्वेपीत्यादिना** ।

भाष्ये **किञ्चिदिति** । तदिति शेषः । किञ्चिद्वस्त्वस्तीत्यर्थः । **न विहन्यत इति** । अप्रतिहता जन्यत इति यावत् । यस्मिन् वस्तुनि परिणममाने सति तदेव वस्त्विदमिति प्रत्यभिज्ञारूपबुद्धिरप्रतिहता जन्यते तत्किञ्चिद्वस्तु प्रत्यभिज्ञाप्रमाणकं परिणामिनित्यं स्यादिति पूर्वेणान्वयः । यथा पृथिव्यादि परिणामिनित्यं यथा च सत्त्वादिगुणत्रयविशिष्टं प्रधानं प्रकृतिशब्दवाच्यं परिणामिनित्यं तद्वदित्यर्थः । योऽहं बाल्येपि तथान्वभूवं सोहं वृद्धोस्मीत्यवस्थारूपधर्मभेदेपि धर्म्यैक्यविषयकप्रत्यभिज्ञाबलात्परिणामिनित्यं ता-

सांख्यानां गुणाः । इदं तु पारमार्थिकं कूटस्थं नित्यं व्योमवत्सर्वव्यापि सर्वविक्रियारहितं नित्यतृप्तं निरवयवं स्वयंज्योतिःस्वभावम् । यत्र धर्माधर्मौ सह कार्येण कालत्रयं च नोपावर्तेते । (१)तदेतदशरीरत्वं मोक्षाख्यम् । 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् , अन्यत्र भूताच्च भव्या

## रत्नप्रभा

कम् । कूटस्थत्वसिद्ध्यर्थं परिस्पन्दाभावमाह—**व्योमवदिति** । परिणामाभावमाह—**सर्वविक्रियारहितमिति** । फलानपेक्षित्वान्न फलार्थापि क्रियेत्याह—**नित्यतृप्तमिति** । तृप्तिरनपेक्षत्वं, विशोकं सुखं वा । निरवयत्वान्न क्रिया । तस्य भानार्थमपि न क्रिया स्वयंज्योतिष्ट्वात् । अतः कूटस्थत्वान्न कर्मसाध्यो मोक्ष इत्युक्तम् । कर्मतत्कार्यासङ्गित्वाच्च तथेत्याह—**यत्रेति** । कालानवच्छिन्नत्वाच्चेत्याह—**कालेति** । कालत्रयं च नोपावर्तते इति योग्यतया सम्बन्धनीयम् । धर्माद्यनवच्छेदे मानमाह—**अन्यत्रेति** । अन्यदित्यर्थः । **कृतात्** कार्यात् । **अकृताच्च** कारणात् । **भूताद्भव्याच्च** । चकाराद्वर्तमानाच्च । अन्यद् **यत् पश्यसि तद्** ब्रह्मेत्यर्थः । **ननूक्ताः** श्रुतयो ब्रह्मणः कूटस्थासङ्गित्वं वदन्तु मोक्षस्य नियोगफलत्वं किं न स्यादिति तत्राह—**अत इति** । **तत्** कैवल्यं ब्रह्मैव, कर्मफलविलक्षणत्वादित्यर्थः । ब्रह्माभेदान्मो-

## पूर्णानन्दीया

र्किकाभिमतं शरीरादिकमादिशब्देनोच्यते **यत्र धर्मधर्माविति**। यस्मिन्धर्माधर्मौ नोपावर्तेते कालत्रयं च नोपावर्तते तदशरीरत्वमित्यन्वय । **तेन कर्तव्येनेति** । कर्तव्येनोपासनेनापूर्वद्वारा साध्यो मोक्ष इत्यभ्युगम्येत अभ्युपगम्यते चेदित्यर्थः । फलितमाह—**तत्रैवं सतीति** । अनित्योऽपि मोक्षः अनित्येषु कश्चिद्विलक्षण इत्यत्र इष्टापत्तिं वारयति **नित्यश्चेदिति** ।

व्याख्याने पञ्चभिर्विशेषणैः कूटस्थत्वं साधयतीत्यभिप्रेत्य भाष्यमवतारयति **कूटस्थत्वसिध्यर्थमित्यादिना** । **परिणामेति** । षड्भावविकाररहित्यमभिप्रेत्य प्रकृतत्वात्परिणामाभावपरत्वेन भाष्यं योजयतीति भावः । **निरवयवत्वादिति** । निरवयवत्वादेवोक्तगमनादिक्रियापि नास्तीति भाव । **न कर्मेति** । उपासनारूपकर्मेत्यर्थः । **कर्मेति** । धर्माधर्माख्यं कर्मेत्यर्थः । **तथेत्याहेति** । उपासनातज्जन्यापूर्वसाध्यत्वं मोक्षस्य नास्तीत्याहेत्यर्थ । **कालानवच्छिन्नत्वादिति** । कालासम्बन्धित्वादित्यर्थः । **धर्माद्यनवच्छेद इति** । धर्माद्यसम्बन्धित्व इत्यर्थ । 'अन्यत्रेति' पदं विभक्तिव्यत्यासेन योजयति **अन्यदिति** । ब्रह्मातिरिक्तो मोक्ष इत्यभिप्रायेण शङ्कते **नन्विति** । तच्छब्दस्य कैवल्यार्थकत्वं कथयन् भाष्य योजयति **तत्कैवल्यमिति** । अत शब्दार्थमाह **कर्मेति** । तथा च मोक्षस्य न नियोगफलत्वमिति परिहारार्थः । अस्मिन् व्याख्याने

(१) तदशरीरत्वमिति प्रा० मु०पु० पाठ ।

### ❀ रत्नप्रभा ❀

क्षस्य कूटस्थत्वं धर्माद्यसङ्गित्वं चेति भावः । **यद्वा** यज्जिज्ञास्यं तद् ब्रह्म अतः पृथक् जिज्ञास्यत्वात् धर्माद्यसंस्पृष्टमित्यर्थः । अतश्शब्दाभावपाठेऽप्ययमेवार्थः । ब्रह्मणो विधिस्पर्शे शास्त्रपृथक्त्वं न स्यात्, कार्यविलक्षणानधिगतविषयालाभात् । **न हि** ब्रह्मात्मैक्यं भेदप्रमाणे जाग्रति विधिपरवाक्याल्लब्धुं शक्यं, न वा तद्विना विधेरनु-

### ❀ पूर्णानन्दीया ❀

यत्पूर्वोक्तमशरीरत्वरूपं तत्कैवल्यं ब्रह्मेवेति यत्पदमध्याहृत्य भाष्यं योजनीयम् । न च यस्य कैवल्यस्येय जिज्ञासा प्रस्तुता तत्कैवल्यं ब्रह्मैवेत्यन्वयस्य युक्तत्वात्किमध्याहारेणेति वाच्यम् । ब्रह्मज्ञानेच्छायाः प्रस्तुत्वेपि मोक्षज्ञानेच्छायाः अप्रस्तुतत्वात् ।

ननु तर्हि यस्येयं जिज्ञासेति यच्छब्दस्यानन्वयः स्यादिति चेन्न। 'तद्यदि कर्तव्यशेषत-ये'त्युत्तरभाष्यस्थतच्छब्देनान्वयसम्भवात्तथा च यत्पदमध्याहर्तव्यमित्यस्वरसात् व्याख्यानान्तरमाह **यद्वेति** । 'यस्य ब्रह्मणो जिज्ञासा प्रस्तुता तद्ब्रह्मेति' भाष्यान्वयमर्थत स्फुटीकरोति **यज्जिज्ञास्यमिति** । तच्छब्दस्य कैवल्यार्थकत्वभ्रमं वारयति **तद्ब्रह्मेति** । प्रतीकमादायातःशब्दार्थमाह **अतः पृथगिति** । 'अथातो ब्रह्मजिज्ञासे'त्यादिना शास्त्रेण जिज्ञास्यत्वादित्यर्थः । **असंस्पृष्टमिति** । असंवन्धीत्यर्थः । प्रथमव्याख्याने अतस्तदित्यादिभाष्यं मोक्षस्य नियोगफलत्वशङ्कानिरासप्रतिपादकं द्वितीये तु ब्रह्मणो धर्माद्यसंस्पृष्टत्व हेतुप्रतिपादकमिति भेदः । द्वितीयव्याख्याने यस्येयं जिज्ञासेति यच्छब्दस्य पूर्वोत्तरस्थतच्छब्दाभ्यामन्वयो वेदितव्यः । ब्रह्म धर्माद्यसस्पृष्टं पृथक् जिज्ञास्यत्वात् व्यतिरेकेण स्वर्गवदित्यनुमानं तस्मिन्नप्रयोजकत्वशङ्कानिरासार्थमनुकूलतर्कमाह **ब्रह्मणो विधिस्पर्श इति** । अहं ब्रह्मास्मीत्यारोप्यैक्यविषयकोपासनाविधिशेषत्वेन ब्रह्मणः विधिसम्बन्धित्वे इत्यर्थः । उपासनायाः कार्यरूपत्वेन कार्यविलक्षणानधिगतविषयाभावाद्वेदान्तशास्त्रस्य कर्मशास्त्रापेक्षया पृथक्त्वं न स्यात्तथा च प्रथमसूत्रेण ब्रह्मण पृथग्जिज्ञास्यत्वानुपपत्तिरिति भाव ।

ननु ब्रह्मण विधिशेषत्वेपि विधिपरात्सत्यादिवाक्यात् ब्रह्मात्मैक्यस्य उपासनाविषयस्य ज्ञातुं शक्यत्वात् कार्यविलक्षणानधिगतब्रह्मात्मैक्यरूपविषयलाभेन वेदान्ताना पृथक्शास्त्रत्वकथनं युक्तमित्यत आह—**न हीति** । नाहमीश्वर इति भेदप्रमाणस्य जागरूकत्वात् न ब्रह्मात्मैक्यं ज्ञातुं शक्यम् विधिपरवाक्यस्य अप्राधान्येन ब्रह्मात्मैक्यबोधकतया दुर्बलत्वात्तथा च शास्त्रपृथक्त्वकथनं व्यर्थमिति भाव ।

ननु प्रत्यगभिन्नब्रह्मोपासनाविधे वास्तवं ब्रह्मात्मैक्यमन्तरानुपपन्नत्वात्तदावश्यकं, तथा चाहं ब्रह्मास्मीति प्रधानविधिवाक्येनैव विषयलाभात् शास्त्रपृथक्त्वं युक्तमित्याशक्य वास्तवैक्य विनैवारोपितैक्यविषयकभ्रमात्मकज्ञानादेव तदुपासनाया सम्भवेन तद्विधेरुपपत्ते न तदपेक्षेति परिहरति **नवेति** । **तद्विनेति** । वास्तवैक्य विनेत्यर्थ ।

च' ( क० २।१४ ) इत्यादिश्रुतिभ्यः । अतस्तद्ब्रह्म यस्येयं जिज्ञासा प्रस्तुता ॥ तद्यदि कर्तव्यशेषत्वेनोपदिश्येत तेन च कर्तव्येन साध्यश्चेन्मोक्षोऽभ्युपगम्येत, अनित्य एव स्यात् । तत्रैवंसति यथोक्तकर्मफलेष्वेव तारतम्यावस्थितेष्वनित्येषु कश्चिदतिशयो मोक्ष इति प्रसज्येत । नित्यश्च मोक्षः सर्वैर्मोक्षवादिभिरभ्युपगम्यते, अतो न कर्तव्यशेषत्वेन ब्रह्मोपदेशो युक्तः । अपि च 'ब्रह्म वेद ब्रह्मैव भवति' ( मुण्ड० ३।२।९ ), 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' ( मुण्ड० २।२।८ ), 'आनन्दं ब्रह्मणो विद्वान्, न बिभेति कुतश्चन' ( तैत्ति० २।९ ), 'अभयं वै जनक प्राप्तोऽसि' ( बृह० ४।२।४ ), 'तदात्मानमेवावेदहं ब्रह्मास्मीति' तस्मात्तत्सर्वमभवत्' ( वाजसनेयिब्राह्मणोप० १।४।१० ), 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' ( ईशा० ७ ) इत्येवमाद्याः श्रुतयो

## रत्नप्रभा

पपत्तिः, योषिदग्न्यैक्योपास्तिविधिदर्शनादिति भावः । अथवा मोक्षस्य नियोगासाध्यत्वे फलितं सूत्रार्थमाह—अत इति । यदत्र जिज्ञास्यं ब्रह्म तत् स्वतन्त्रमेव वेदान्तैरुपदिश्यते, समन्वयादित्यर्थः । विपक्षे दण्डं पातयति—तद्यदीति । तत्रैवं सतीति । मोक्षे साध्यत्वेनानित्ये सतीत्यर्थः । अत इति । मुक्तेर्नियोगासाध्यत्वेन नियोज्यालाभात्कर्तव्यनियोगाभावादित्यर्थः । प्रदीपात्तमोनिवृत्तिवज्ज्ञानादज्ञाननिवृत्तिरूपमोक्षस्य दृष्टफलत्वाच्च न नियोगसाध्यत्वमित्याह—अपि चेति । यो

## पूर्णानन्दीया

आरोपितैक्यविषयकभ्रमात्मकज्ञानादुपासनाद्वारा विधेरुपपत्तिः क्व दृष्टेत्याशङ्क्य 'योषा वाव गौतमाग्निरि'त्यत्र दृष्टेत्याह—योषिदिति । प्रकृते ऐक्योपासना प्रति ऐक्यारोपः आरोप्यैक्य वा हेतु न वास्तवैक्यामिति भाव । स्वपक्षे सूत्रस्वारस्यज्ञापनाय योजनान्तरमाह—अथवेति । सूत्रार्थमिति । 'तत्तु समन्वयादिति' सूत्रस्यार्थमित्यर्थ । 'अथातो ब्रह्मजिज्ञासे'ति सूत्रेण जिज्ञास्यं यद्ब्रह्म तदेव 'तत्तु समन्वयादि'त्यत्र तच्छब्दार्थ इति भाष्यभावं स्फुटीकुर्वन्नन्वयमाविष्करोति यदत्रेति । अतःशब्दार्थमाह—समन्वयादिति । ब्रह्मणः स्वातन्त्र्येणोपदेशानङ्गीकारे अथातो ब्रह्मोपासनाजिज्ञासेति सूत्रं स्यात्, न त्वेवमस्ति तस्माद्ब्रह्म स्वतन्त्रमेवोपादिश्यते इति भाव । नियोगाभावादिति । नियोगकर्त्रभावादित्यर्थ. । न नियोगेति । दृष्टस्याज्ञाननिवृत्तिरूपमोक्षस्यापरोक्षरूपसाक्षात्काराव्यवहितोत्तरजन्यत्वान्न कालान्तरभाव्यदृष्टफलकनियोगजन्यत्वम् अन्यथा मोक्षस्य कालान्तरभाव्यदृष्टफलत्वापत्तेरित्याहेत्यर्थ । यदपूर्वजन्य तत्कालान्तरभावि यथा स्वर्गा-

ब्रह्मविद्यानन्तरं मोक्ष दर्शयन्त्यो मध्ये कार्यान्तरं वारयन्ति । तथा 'तद्धै-तत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च' ( बृह० १।४।१० ) इति ब्रह्मदर्शनसर्वात्मभावयोर्मध्ये कर्तव्यान्तरवारणायोदाहार्यम् । यथा

---

## रत्नप्रभा

'ब्रह्माहमि'ति वेद स ब्रह्मैव भवति। परं कारणम**वरं** कार्यं तद्रूपं तदधिष्ठाने **तस्मिन्** **दृष्टे** सति **अस्य** द्रष्टुरनारब्धफलानि **कर्माणि** नश्यन्ति । ब्रह्मणः स्वरूपमानन्दं विद्वान् निर्भयो भवति द्वितीयाभावात् । '**अभयं** ब्रह्म प्राप्तोऽसि' अज्ञानहानात् । **तत्** जीवाख्यं ब्रह्म गुरूपदेशादात्मानमेव अहं ब्रह्मास्मि इति अवेद् विदितवत् । तस्मात् वेदनाद् तद् ब्रह्म पूर्णमभवत्, परिच्छेदभ्रान्तिहानादेकत्वम् । "अहं ब्रह्म" इत्यनुभवतः तत्र अनुभवकाले मोहशोकौ न स्त इति श्रुतीनामर्थः । तासां तात्पर्यमाह—**ब्रह्मेति** । विद्यातत्फलयोर्मध्य इत्यर्थः । **मोक्षस्य विधिफलत्वे स्वर्गादिवत्** कालान्तरभावित्वं स्यात् । तथा च श्रुतिबाध इति भावः । **इतश्च मोक्षो वैधो ने**-त्याह—**तथेति** । तद् ब्रह्म एतत् प्रत्यगस्मीति **पश्यन्** तस्माज्ज्ञानाद् वामदेवो मुनीन्द्रः शुद्धं ब्रह्म **प्रतिपेदे** ह तत्र ज्ञाने तिष्ठन् दृष्टवानात्ममन्त्रान् स्वस्य सर्वात्मत्वप्रकाशकान् 'अहं मनुः'–इत्यादीन् ददर्शेत्यर्थः । **यद्यपि** स्थितिर्गानक्रियाया लक्षणं, ब्रह्मदर्शनं तु ब्रह्मप्रतिपत्तिक्रियाया हेतुरिति वैषम्यमस्ति, **तथापि** "लक्षणहेत्वोः क्रियायाः" (पा०सू०३।२।१२६) इति सूत्रेण क्रियां प्रति लक्षणहेत्वोरर्थयोर्वर्तमा-

## पूर्णानन्दीया

दि न तथा मोक्षः किन्तु ज्ञानाव्यवहितोत्तरजन्य इत्यत्र प्रमाणत्वेनोदाहृतश्रुतीनामर्थमाह—**यो ब्रह्मेत्यादिना**। यदा हि ज्ञानं तदा मोक्ष इति प्रतिपादकेन वर्तमानार्थकलट्प्रत्ययेन कालान्तरनिरास क्रियत इति भाव । एव सर्वत्र विज्ञेयम् । तस्मिन् दृष्टे सतीत्यनेन ज्ञानाव्यवहितोत्तरजन्यत्वं कर्मनाशस्य प्रतीयत इति भाव । प्रकृते पर्यवसान करोति **मोक्षस्य विधिफलत्व इति । वैध इति** । विधिजन्य इत्यर्थः । **सूर्यश्चेतीति** । अव्यवहितोत्तरजन्यत्वप्रतिपादकं तस्यैतत्पश्यन्नित्यादिसूर्यश्चेतीत्यन्तं वाक्यमुदाहर्तव्यमिति भाष्यान्वय. । तिष्ठतिगायत्योर्मध्ये यदर्थयोर्मध्ये इत्यर्थ । वाक्यार्थमुक्त्वा तात्पर्यार्थमाह—**तत्र ज्ञान इति । लक्षणमिति** । व्यावर्तकं चिन्हशब्दितपरिचायकं वेत्यर्थ । तिष्ठन् गायतीत्यत्र स्थितिकालीनगानक्रियावान् पुरुष इति बोधादितरकाले गानक्रियाव्यावर्तिका स्थितिर्भवति न हेतुरित्यत कार्यान्तरप्रसक्ति, स्थिते कार्यान्तरवारकत्वाभावादुभयार्थकत्वे वाक्यभेद. स्यात्, पश्यन्प्रतिपद इत्यत्र तु ब्रह्मदर्शन ब्रह्मप्राप्तौ हेतुर्भवति, तथा च सामग्र्यव्यवहितोत्तरक्षणे कार्योत्पत्तेरावश्यकत्वान्न कार्यान्तरप्रसक्तिरिति दृष्टान्तवैषम्यमस्तीति भावः । **सूत्रेणेति** । व्याकरणसूत्रेणेत्यर्थ. । सू-

तिष्ठन्गायतीति तिष्ठतिगायत्योर्मध्ये तत्कर्तृकं कार्यान्तरं नास्तीति गम्यते । 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि' (प्र० ६।८) 'श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मवित्' इति, 'सोऽहं भगवः शोचामि तन्मा भगवाञ्छोकस्य परं पारं तारयतु' (छान्दो० ७।१।३) 'तस्मै मृदितकषायाय

## रत्नप्रभा

नाद्धातोः परस्य लटः शतृशानचावादेशौ भवत इति विहितशतृप्रत्ययसामर्थ्यात् तिष्ठन् गायति इत्युक्ते तत्कर्तृकं कार्यान्तरं मध्ये न भातीत्येतावता पश्यन्प्र तिपेदे इत्यस्य दृष्टान्तमाह—**यथेति** । **किञ्च** ज्ञानादज्ञाननिवृत्तिः श्रूयते ज्ञानस्य विधेयत्वे कर्मत्वादविद्यानिवर्तकत्वं न युक्तम्, अतो बोधका एव वेदान्ता न विधायका इत्याह—**त्वं हीति** । भारद्वाजादयः षड् ऋषयः पिप्पलादं गुरुं पादयोः प्रणम्य ऊचिरे—त्वं खल्वस्माकं पिता यस्त्वमविद्यामहोदधेः परं पुनरावृत्तिशून्यं पारं ब्रह्म विद्याप्लवेनास्मांस्तारयसि प्रापयसि, ज्ञानेनाज्ञानं नाशयसीति यावत् । प्रश्नवाक्यमुक्त्वा छान्दोग्यमाह—**श्रुतमिति** । अत्र तारयत्वित्यन्तमुपक्रमस्थं शेषमुपसंहारस्थमिति भेदः ।

## पूर्णानन्दीया

त्रार्थमाह—**क्रियां प्रतीति** । लक्षणपदं व्यावर्तकपरं परिचायकपरं **वा** । **वर्तमानादिति** । विद्यमानादित्यर्थः । लट लट्प्रत्ययस्येत्यर्थः । **इति विहितेति** । व्याकरणसूत्रेण उक्तरीत्या विहितो यः शतृप्रत्ययस्तत्सामर्थ्यादित्यर्थः । उत्तरकालीनगानक्रिया प्रति स्थितेः व्यावर्तकत्वरूपार्थे प्रोच्यमाने विद्यमानधातोः परस्य वर्तमानार्थकलट्प्रत्ययस्यादेशत्वेन विहितो य शतृप्रत्यय सोपि 'स्थानिवदादेश' इति न्यायेन वर्तमानार्थक एव तत्सामर्थ्यात्तिष्ठन् गायतीत्यत्र स्थितेः गानक्रिया प्रति हेतुत्वाप्रतीतावपि तस्याः कार्यान्तरावारकत्वेपि स्थितिकाले गानं कृतवानिति बोधेन तत्कर्तृककार्यान्तराभानात् तत्कर्तुः गानव्यतिरिक्तक्रियान्तरं मध्ये नास्तीति प्रतीयते, दार्ष्टान्तिकेपि ज्ञानकर्तुः ब्रह्मप्रतिपत्तिक्रियाव्यतिरिक्तकार्यान्तरं मध्ये नास्तीति प्रतीयते, तथा च पुरुषकर्तृककार्यान्तराभावरूपसाम्येन तिष्ठन् गायतीति दृष्टान्त पश्यन्प्रतिपेद इत्यस्य युक्त इत्याहेत्यर्थः । कार्यान्तरं मध्ये न भातीति **रामानन्दीय**पाठान्तरमत्र समीचीनं कार्यान्तराभानप्रतिपादकत्वेन सुबोधकत्वादिति वेदितव्यम् । मोक्षस्य नियोगसाध्यत्वेज्ञानाव्यवहितोत्तरजन्यत्वप्रतिपादकश्रुतिविरोधमुपपाद्य सम्प्रति ज्ञानात्साक्षादज्ञाननिवृत्तिप्रतिपादकश्रुतिविरोधमुपपादयति सर्वज्ञ श्रीभाष्यकार इति । भाष्यमवतारयति **किञ्चेति** । **कर्मत्वादिति** । क्रियात्वादित्यर्थः । ज्ञानाज्ञानयोर्विरोधात् ज्ञानस्याज्ञाननिवर्तकत्वं युक्तं कर्माज्ञानयोर्विरोधाभावात् कर्मरूपस्य ज्ञानस्याज्ञाननिवर्तकत्व न युक्तमिति भावः । प्रतीकमादाय परशब्दार्थमाह **परं पुनरावर्तिशून्यमिति** । परशब्दार्थमाह **ब्रह्मेति** । ब्रह्मेति च्छेदः, विद्याप्लवेनास्मान् ब्रह्म प्रापयसीत्यन्वय । अत्र द्विकर्मकप्रयो-

तमसः परं पारं दर्शयति भगवान्सनत्कुमारः' (छान्दो० ७।२६।२) इति चैवमाद्याः श्रुतयो मोक्षप्रतिबन्धनिवृत्तिमात्रमेवात्मज्ञानस्य फलं दर्शयन्ति। तथा चाचार्यप्रणीतं न्यायोपबृंहितं सूत्रम्–'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' (न्या० सू० १।१।२) इति। मिथ्याज्ञानापायश्च ब्रह्मात्मैकत्वविज्ञानाद्भवति। नचेदं ब्रह्मात्मैकत्व-

## रत्नप्रभा

'आत्मविच्छोकं तरतीति' 'भगवत्तुल्येभ्यो मया श्रुतमेव हि न दृष्टम्, 'सोऽहमज्ञत्वात् हे भगवः शोचामि, तं शोचन्तं मां भगवानेव ज्ञानप्लवेन शोकसागरस्य परं पारं प्रापयतु' इति नारदेनोक्तः सनत्कुमारस्तस्मै तपसा दग्धकिल्बिषाय नारदाय तमसः शोकनिदानाज्ञानस्य ज्ञानेन निवृत्तिरूपं परं पारं ब्रह्म दर्शितवानित्यर्थः। 'एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थि विकिरती'ति वाक्यमादिशब्दार्थः। एवं श्रुतेस्तत्त्वप्रमा मुक्तिहेतुर्न कर्मेत्युक्तम्। तत्राक्षपादगौतममुनिसम्मतिमाह **तथा चेति**। गौरोऽहमिति मिथ्याज्ञानस्यापाये रागद्वेषमोहादिदोषाणां नाशः, दोषापायाद्धर्माधर्मस्वरूपप्रवृत्तेरपायः, प्रवृत्त्यपायात्पुनर्देहप्राप्तिरूपजन्मापायः, एवं पाठक्रमेणोत्तरोत्तरस्य हेतुनाशान्नाशे सति तस्य प्रवृत्तिरूपहेतोरनन्तरस्य कार्यस्य जन्मनोऽपायात् दुःखध्वंसरूपोऽपवर्गो भवतीत्यर्थः। **ननु**.पूर्वसूत्रे''तत्त्वज्ञानान्निःश्रेयसाधिगमः''(गौ०सू०१।१।२) इत्युक्ते सतीतरपदार्थभिन्नात्मतत्त्वज्ञानं कथं मोक्षं साधयतीत्याकांक्षायां मिथ्याज्ञाननिवृत्तिद्वारेणेति वक्तुमिदं सूत्रं प्रवृत्तम्। तथा च भिन्नात्मज्ञानान्मुक्तिं वद-

## पूर्णानन्दीया

गो द्रष्टव्य.। मे इत्यस्य विभक्तिव्यत्यासेनान्वयमाह **मयेति**। मृदितकषायायेत्यस्यार्थमाह **तपसा दग्धकिल्बिषायेति**। **तत्त्वप्रमेति**। तत्त्वप्रमैव साक्षान्मुक्तिहेतु. कर्मस्वरूपज्ञानं तु न मुक्तिहेतुरित्युक्तमित्यर्थः। **अक्षपादमुनीति**। तर्कशास्त्रसूत्रकृद्गौतममुनिसम्मतिमाहेत्यर्थ.। मिथ्याज्ञानाकारमाह **गौरोहमिति**। **पाठक्रमेणेति**। 'दु.खजन्मप्रवृत्ती'त्यादिसूत्रपाठक्रमेणेत्यर्थ.। **प्रवृत्तिहेतोरिति**। प्रवृत्तिरूपहेतोरित्यर्थ.। इय षष्ठी व्यधिकरणेति ज्ञेयम्। न विद्यतेऽन्तरं यस्य तत्तथा तस्येत्यर्थः। जन्मप्रवृत्त्योः मध्ये किञ्चिदन्तरं व्यवधायकं नास्तीत्यनन्तरं प्रवृत्तिकार्यं च जन्म भवतीति वाक्यार्थः। अयं भावः। देहे अनुभूतमाध्यात्मिकादिदुःखं प्रति शरीरस्य जन्म कारणं शरीरोत्पत्तिं प्रति धर्माधर्मप्रवृत्तिः कारणं धर्मादिप्रवृत्तौ रागद्वेषमोहादिदोष. कारणं रागादिदोषे गौरोहमित्यादिमिथ्याज्ञानं कारणमित्येवं मिथ्याज्ञानाद्दुःखोत्पत्तिमभिप्रेत्याचार्यः श्रीगोतममुनि. नाशक्रमप्रतिपादकं सूत्रं रचयाञ्चकार,तथाचोत्तरोत्तरकारणनाशेन पूर्वपूर्वकार्यनाशादेकविंशतिदु.खध्वंसरूपो मोक्षो भवतीति तत्त्वज्ञानान्मिथ्याज्ञाननिवृत्तिद्वारा मोक्षः

**विज्ञानं सम्पद्रूपम् , यथा 'अनन्तं वै मनोऽनन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति' ( बृह० ३।१।९ ) इति । न चाध्यासरूपम् , यथा 'मनो ब्रह्मेत्युपासीत' ( छान्दो० ३।१८।१ ) , 'आदित्यो ब्रह्मेत्यादेश.'**

॥ रत्नप्रभा ॥

त्सूत्रं सम्मतं चेत्परमतानुज्ञा स्यादित्यत आह—**मिथ्येति** । तत्त्वज्ञानान्मुक्तिरित्यंशे सम्मतिरुक्ता । भेदज्ञानं तु "यत्र हि द्वैतमिव भवति" (बृ०२।४।१४) इतिश्रुत्या भ्रान्तित्वात् "मृत्युमाप्नोति य इह नानेव पश्यति" (बृ०४।४।१९) इति श्रुत्या अनर्थहेतुत्वाच्च न मुक्तिहेतुरिति भावः । **ननु** ब्रह्मात्मैकत्वविज्ञानमपि भेदज्ञानवन्न प्रमा सम्पदादिरूपत्वेन भ्रान्तित्वादित्यत आह **न चेदमित्यादिना** । अल्पालम्बनतिरस्कारेणोत्कृष्टवस्त्वभेदज्ञानं सम्पद् , **यथा** मनः स्ववृत्त्यानन्त्यादनन्तं तत उत्कृष्टा विश्वेदेवा अप्यनन्ता इत्यनन्तत्वसाम्याद् 'विश्वेदेवा एव मन' इति सम्पत्, तयाऽनन्तफलप्राप्तिर्भवति **तथा** चेतनत्वसाम्याज्जीवे ब्रह्माभेदः सम्पदिति न चेत्यर्थः । आलम्बनस्य प्राधान्येन ध्यानं,प्रतीकोपास्तिरध्यासः । **यथा** ब्रह्मदृष्ट्या मनसः, आदित्यस्य वा । **तथा** ऽहं ब्रह्मेति ज्ञानमध्यासो, नेत्याह—**न चेति** । **आदेशः** उपदेशः, क्रियाविशेषो **विशिष्टक्रिया** तया योगो निमित्तं यस्य ध्यानस्य तत्तथा । **यथा** प्रलयकाले वायुरग्न्यादीन् संवृणोति संहरतीति **संवर्गः**, स्वापकाले प्राणो वागादीन् संहरतीति

॥ पूर्णानन्दीया ॥

प्रतिपादित इत्यस्मिन्नर्थे सम्मतिरुक्तेति । **भेदज्ञानं त्विति** । भेदज्ञानान्मुक्तिरित्यंशे बहुश्रुतिविरोधान्न सम्मतिरुक्तेति भाव ।

ननु वेदान्तानां सामान्योपासनाविधिपरत्वाभावेपि सम्पदाद्यन्यतमरूपविशेषोपासनाविधिपरत्वं स्यात् सगुणवाक्यवन्निर्गुणवाक्यानामुपासनाविधिपरत्वे लाघवादित्याशङ्कां वारयितुमुत्तरभाष्यं प्रवृत्तिमित्याशयं मनसि निधाय तदवतारयति **ननु ब्रह्मेति** । ऐक्यज्ञानस्याप्रमात्वं साधयितु शङ्कितु वेदान्तानां सम्पदादिरूपविशेषोपासनाविधिपरत्वं स्यादित्यभिप्रायः । सिद्धान्तिनस्तु सम्पदादीनामाहार्यारोपरूपाणा विशेषोपासनात्वमङ्गीकृत्याप्रमात्वेनाज्ञानानिवर्तकत्वादिरूपानन्तदोषान्न तत्परत्वं वेदान्तानामिति कुतो लाघवावकाश. प्रमाणिकगौरवस्यादोषत्वात्तथा चैकत्वज्ञानं प्रमात्मकमेव न सम्पदादिरूपमित्यभिप्राय । **अल्पालम्बनेति** । मनस्यल्पत्वबुद्धितिरस्कारेण मनस्त्वबुद्धितिरस्कारेण वा उत्कृष्टविश्वेदेवाभेदध्यानं सम्पदित्यर्थ । एतच्च भेदज्ञानपूर्वकत्वान्न प्रमेति भाव. । एवमुत्तरत्र विज्ञेयम् । **अभेदः सम्पदेति** । अभेदध्यानं ध्यानविषयभूताभेदो वा सम्पदित्यर्थः । प्रतीकस्य सम्पद्भेदमाह—**आलम्बनप्राधान्येनेति** । आरोप्यप्रधाना सम्पत् अधिष्ठानप्रधानोऽध्यास इत्यध्याससम्पदोर्विभाग कल्पतरौ दर्शितः । अर्थं कथयन् अन्वयपूर्वकं उत्तरभाष्यमवतारयति **क्रियाविशेष**

( छान्दो० ३।१९।१ ) इति च मनआदित्यादिषु ब्रह्मदृष्ट्यध्यासः । नापि विशिष्टक्रियायोगनिमित्तम् ,'वायुर्वाव संवर्गः''प्राणो वाव संवर्गः'( छान्दो० ४।३।१।) इतिवत् । नाप्याज्यावेक्षणादिकर्मवत्कर्माङ्गसंस्काररूपम्, संपदादिरूपे हि ब्रह्मात्मैकत्वविज्ञानेऽभ्युपगम्यमाने 'तत्त्वमसि' ( छान्दो० ६।८।७ ) 'अहं ब्रह्मास्मि' ( बृह० १।४।१० ) 'अयमात्मा ब्रह्म' ( बृह० २।५।१९ ) इत्येवमादीनां वाक्यानां ब्रह्मात्मैकत्ववस्तुप्रतिपादनपरः पदसमन्वयः पीड्येत । 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः' ( मुण्ड० २।२।८ ) इति चैवमादीन्यविद्यानिवृत्तिफलश्रवणान्युपरुध्येरन् । 'ब्रह्म वेद ब्रह्मैव भवति' ( मुण्ड० ३।२।९ ) इति चैवमादीनि तद्भावापत्तिवचनानि संपदादिपक्षे न सामञ्जस्येनोपपद्येरन् । तस्मान्न सम्पदादिरूपं

**रत्नप्रभा**

संहारक्रियायोगात् संवर्ग इति ध्यानं छान्दोग्ये विहितं, तथा वृद्धिक्रियायोगाज्जीवो ब्रह्मेति ज्ञानमिति नेत्याह—**नापीति** । **यथा** "पत्न्यवेक्षितमाज्यं भवति" इति उपांशुयागाद्यङ्गस्याज्यस्य संस्कारकमवेक्षणं विहितं, तथा कर्मणि कर्तृत्वेनाङ्गस्यात्मनः संस्कारार्थं ब्रह्मज्ञानं नेत्याह—**नाप्याज्येति** । प्रतिज्ञाचतुष्टये हेतुमाह—**सम्पदादीति** । उपक्रमादिलिङ्गैर्ब्रह्मात्मैकत्ववस्तुनि प्रमितिहेतुर्यः समानाधिकरणवाक्यानां पदनिष्ठः समन्वयः तात्पर्यं निश्चितं तत्पीड्येत । **किञ्चै**कत्वज्ञानादाज्ञानिकस्य हृदयस्यान्तःकरणस्य यो रागादिग्रन्थिश्चिन्मनस्तादात्म्यरूपाहङ्कारग्रन्थिर्वा नश्यतीत्यज्ञाननिवृत्तिफलवाक्यबाधः स्यात्, सम्पदादिज्ञानस्याप्रमात्वेनाज्ञानानिवर्तकत्वात् । **किञ्च**

**पूर्णानन्दीया**

**इति** । अधिदैवतं व्याख्यायाध्यात्मं व्याकरोति । **स्वापकाल इति** । **वृद्धिक्रियेति** । जीवस्य शरीरपरिणामहेतुत्वरूपं यद्बृंहणत्वं तदात्मकवृद्धिक्रियायोगादित्यर्थः । ब्रह्मात्म्यैक्यज्ञानस्य सम्पद्रूपत्वमध्यासरूपत्वं संवर्गध्यानरूपत्वं च न सम्भवतीति प्रतिपादकभाष्यं व्याख्याय सम्प्रति संस्काररूपत्वं न सम्भवतीति प्रतिपादकं भाष्यं व्याख्याति **यथा पत्नीति** । **संस्कारकमिति** । अदृष्टजनकमित्यर्थः । कर्मारम्भसमये अहं ब्रह्मास्मीत्युपासनारूपं ब्रह्मात्मज्ञानमावश्यकं तेन कर्तरि संस्कारद्वारा कर्मकारणमदृष्टं जन्यते तस्मादुपासनापरत्वं वेदान्तानामिति शङ्कितुरभिप्रायः । **समानाधिकरणेति** । पदयोः सामानाधिकरण्यमेकविभक्तिकत्वे सत्येकार्थबोधकत्वरूपं वाक्ये ह्युपचर्यते,तथाच भेदज्ञानपूर्वकसम्पदाद्युपासनापरत्वपक्षे वाक्यस्थपदानां सामानाधिकरण्यं न स्यादन्यथा घटः पट इति सामानाधिकरण्यप्रयोगः स्यादिति भावः । **तात्पर्यमिति** । एकस्मिन्नर्थे

ब्रह्मात्मैकत्वविज्ञानम् । अतो न पुरुषव्यापारतन्त्रा ब्रह्मविद्या । किं तर्हि ? प्रत्यक्षादिप्रमाणविषयवस्तुज्ञानवद्वस्तुतन्त्रा(१)। एवंभूतस्य ब्रह्मणस्तज्ज्ञानस्य च न कयाचिद्युक्त्या शक्यः कार्यानुप्रवेशः कल्पयितुम् । नच विदिक्रियाकर्मत्वेन कार्यानुप्रवेशो ब्रह्मणः, 'अन्यदेव तद्विदितादथोऽविदितादधि' (केन० १।३) इति विदिक्रियाकर्मत्वप्रतिषेधात्, 'येनेदं सर्वं विजानाति तं केन विजानीयात्' (बृह २।४।१३) इति च । तथोपास्तिक्रियाकर्मत्वप्रतिषेधोऽपि भवति—'यद्वाचानभ्युदितं येन वागभ्युद्यते' इत्यविषयत्वं ब्रह्मण उपन्यस्य, 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते'

## ❀ रत्नप्रभा ❀

जीवस्य ब्रह्मत्वसम्पदा कथं तद्भावः । पूर्वरूपे स्थिते नष्टे वान्यस्यान्यात्मतायोगात् । तस्मान्न सम्पदादिरूपमित्यर्थः । सम्पदादिरूपत्वाभावे फलितमाह—**अत इति** । प्रमात्वान्न कृतिसाध्या । **किं तर्हि** ? नित्यैव, न प्रमाणसाध्येत्यर्थः । उक्तरीत्या सिद्धब्रह्मरूपमोक्षस्य कार्यसाध्यत्वं तज्ज्ञानस्य नियोगविषयत्वं च कल्पयितुमशक्यं कृत्यसाध्यत्वादित्याह—**एवम्भूतस्येति** । **ननु** ब्रह्म कार्याङ्गं कारकत्वात् पत्न्यवेक्षणकर्मकारकाज्यवदिति **चेत्, किं** ज्ञाने ब्रह्मणः कर्मकारकत्वम्, **उतोपासनायाम्** ? **नाद्य** इत्याह—**न चेति** । शाब्दज्ञानं विदिक्रियाशब्दार्थः । **विदितं** कार्यम्, **अविदितं** कारणं, तस्माद**धि** अन्यदित्यर्थः । **येनात्मना इदं सर्वं** दृश्यं लोको **विजानाति तं केन** करणेन जानीयात्, तस्मादविषय आत्मेत्यर्थः । **न द्वितीय** इत्याह—**तथेति** । "यन्मनसा न मनुते" (केन०१।६) इति श्रुत्या लोको मनसा यद् ब्रह्म न जानातीत्यविषयत्वमुक्त्वा '**तदेवावेद्यं** ब्रह्म **त्वं विद्धि**' यत्तूपाधिविशिष्टं

## ❀ पूर्णानन्दीया ❀

निश्चितं यत्तात्पर्यं तत्पीड्येतेत्यन्वयः। **कथं तद्भाव इति** । ब्रह्मभावः कथमित्यर्थः। **नष्टे वेति** । नष्टपक्षे अधिकरणस्यैवाभावान्न तद्भावापत्तिरिति भाव । **सम्पदादिरूपत्वाभाव इति** । पुरुषव्यापारतन्त्रसम्पदादिरूपत्वाभाव इत्यर्थ । शङ्कते **किं तर्हि नित्यैवेति** । परिहरति **नेति** । प्रमाणसाध्यत्वं प्रमितवस्तुजन्यत्वं ब्रह्मविद्या न नित्या किन्तु प्रमाणसाध्येति भाव । **प्रमाणविषयेति**—प्रमाणपदं प्रमापरं प्रमाणविषयघटादिवस्तुज्ञानवद्यथार्थवस्तुतन्त्रैवेति भाष्यार्थः। मोक्षस्य कर्मसाध्यत्वं ब्रह्मज्ञानस्य नियोगविषयत्वं च कार्यानुप्रवेशशब्दार्थ इति स्फुटीकुर्वन् भाष्यमवतारयति **उक्तरीत्येति** । **कार्याङ्गमिति** । कर्माङ्गमित्यर्थः । **कारणमिति** । अज्ञानरूपं कारणमित्यर्थः । **अविषयत्वमुक्त्वेति** ।

---

(१) तन्त्रैवेति मा. मु पुस्तके पाठ ।

( केन० १।४ ) इति । अविषयत्वे ब्रह्मणः शास्त्रयोनित्वानुपपत्तिरिति चेत् । न । अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य । न हि शास्त्रमिदन्तया विषयभूतं ब्रह्म प्रतिपिपादयिषति । किं तर्हि ? प्रत्यगात्मत्वेनाविषयतया प्रतिपादयदविद्याकल्पितं वेद्य-वेदितृ-वेदनादिभेदमपनयति । तथाच शास्त्रम्-

## रत्नप्रभा

देवतादिकमित्युपासते जनाः नेदं ब्रह्मेत्यर्थः । ब्रह्मणः शाब्दबोधाविषयत्वे प्रतिज्ञाहानिरिति शङ्कते—**अविषयत्व इति** । वेदान्तजन्यवृत्तिकृताऽविद्यानिवृत्तिफलशालितया शास्त्रप्रमाणकत्वं वृत्तिकृताऽविषयत्वेऽपि स्वप्रकाशब्रह्मणो वृत्त्यभिव्यक्तस्फुरणाविषयत्वादप्रमेयत्वमिति परिहरति—**नेति** । **परत्वात्** फलत्वादित्यर्थः । निवृत्तिरूपब्रह्मतात्पर्यादिति वार्थः । उक्तं विवृणोति—**न हीति** । चिद्विषयत्वमिद-

## पूर्णानन्दीया

प्रत्यक्षाद्यविषयत्वमुक्त्वेत्यर्थः । **नेदमिति** । इदमितीदन्त्वेन निर्दिष्टं न ब्रह्मेत्युक्तमित्यर्थः । तथा च ब्रह्मण. ज्ञानविषयत्वरूपमुपासनाविषयत्वरूपं च यत्कर्मत्वं तस्य प्रतिषेधात्पक्षे हेत्वसिद्धेः नानुमानं स्वसाध्यसाधकमिति भावः । **ब्रह्मणः शाब्देति** । ब्रह्म शास्त्रप्रमाणकं शास्त्रतात्पर्यविषयत्वादिति शब्दात्मकशास्त्रजन्यबोधविषयत्वरूपं ब्रह्मणः शास्त्रप्रमाणकत्वं तृतीयसूत्रे प्रतिज्ञातं सम्प्रति शास्त्रजन्यबोधाविषयत्वे प्रतिज्ञाहानिरिति शङ्कितुरभिप्रायः । **वृत्तीति** । ब्रह्माकारवृत्तीत्यर्थः । ब्रह्मणः शास्त्रजन्यबोधकृताविद्यानिवृत्तिफलशालित्वरूपशास्त्रप्रमाणकत्वमभ्युपगम्यते न शास्त्रजन्यबोधविषयत्वरूपं दृश्यत्वापत्तेरनेकश्रुतिविरोधाच्च, तथा च तत्र बोधविषयत्वेन तस्याप्रतिज्ञातत्वान्न प्रतिज्ञाहानिरिति भावः ।

ननु ब्रह्मणः बोधाविषयत्वे कथमविद्यानिवृत्तिः ज्ञानाज्ञानयोः समानविषयकत्वाभावादित्यत आह **वृत्तिकृताविषयत्वेपीति** । **अप्रमेयत्वमिति** । शाब्दबोधाविषयत्वमिति यावत् । अविद्यानिवृत्त्यर्थं केवलवृत्तिव्याप्तिरूपं ब्रह्मणः शास्त्रजन्यवृत्तिविषयत्वं गौणमभ्युपगम्यते तस्य स्वप्रकाशत्वेन वृत्त्यभिव्यक्तस्फुरणविषयत्वान्मुख्यत्वं वृत्तिप्रतिबिम्बितचैतन्यांशरूपबोधविषयत्वं तु नाभ्युपगम्यते तस्मात्प्रत्यगभिन्नब्रह्मण शाब्दबोधाविषयत्वे हि न काप्यनुपपत्तिरिति भाव. । अत्रेदमनुसन्धेयम् । विषयत्वं द्विविधं मुख्यं गौणं चेति । तत्र विशिष्टनिष्ठत्वं मुख्यत्वं केवलाहङ्कारादिनिष्ठत्वं केवलात्मनिष्ठत्वं वा गौणत्वमित्येवमध्यासभाष्यग्रन्थे प्रतिपादितम् , सम्भावनाभाष्यग्रन्थे तु तथैवोपपादितम् , तथा हि भासमानत्वाख्यं विषयत्वं द्विविधं गौणं मुख्यं चेति । तत्र भानप्रयुक्तफलभाक्त्वरूपत्वं गौणत्वं भानभिन्नत्वविशिष्टत्वं मुख्यत्वमिति। अस्यां फक्किकायामपि विषयत्वं द्विविधं गौण मुख्यं चेति, तत्र वृत्तिव्याप्तिरूपत्व गौणत्वं फलव्याप्तिरूपत्वं मुख्यत्वमिति, तथा च पक्षत्रयेपि आत्मनि गौणमेव विषयत्वं पर्यवसितम् , अहङ्कारे तु गौणं

'यस्याऽमतं तस्य मतं मतं यस्य न वेद सः'। अविज्ञातं विजानतां विज्ञातमविजानताम्' ( केन० २।३ ), 'न दृष्टेर्द्रष्टारं पश्येः' 'न विज्ञातेर्विज्ञातारं विजानीयाः' ( बृह० ३।४।२ ) इति चैवमादि । अतोऽविद्याकल्पितसंसारित्वनिवर्तनेन नित्यमुक्तात्मस्वरूपसमर्पणान्न मोक्षस्यानित्यत्वदोषः । यस्य तूत्पाद्यो मोक्षस्तस्य मानसं वाचिकं कायिकं वा कार्य-

---

## ❧ रत्नप्रभा ❧

न्त्वम् । **अविषयतया** अनिदन्तया । अदृश्यत्वे श्रुतिमाह—**तथा चेति** । **यस्य** ब्रह्म **अमतं** चैतन्याविषय इति निश्चयस्तेन सम्यगवगतम् । **यस्य** त्वज्ञस्य ब्रह्म चैतन्यविषय इति **मतं स न वेद** । उक्तमेव दार्ढ्यार्थमनुवदति—**अविज्ञातमिति** । अविषयतया ब्रह्म **विजानतामविज्ञातम**दृश्यमिति पक्षः, अज्ञानां तु ब्रह्म **विज्ञातं** दृश्यमिति पक्ष इत्यर्थः । दृष्टेर्द्रष्टारं चाक्षुषमनोवृत्तेः साक्षिणमनया दृश्यया दृष्ट्या न पश्येः **विज्ञातेर्**बुद्धिवृत्तेर्निश्चयरूपायाः साक्षिणं तया न विषयं कुर्या इत्याह—**नेति** । **नन्व**विद्यादिनिवर्तकत्वेन शास्त्रस्य प्रामाण्येऽपि निवृत्तेरागन्तुकत्वान्मोक्षस्यानित्यत्वं स्यादिति नेत्याह—**अत इति** । तत्त्वज्ञानादित्यर्थः । ध्वंसस्य नित्यत्वादात्मरूपत्वाच्च नानित्यत्वप्रसङ्ग इत्यर्थः । उत्पत्तिविकाराप्तिसंस्काररूपं चतुर्विधमेव क्रियाफलम्, तद्भिन्नत्वान्मोक्षस्य नोपासनासाध्यत्वमित्याह—**यस्य त्वित्यादिना** त-

## ❧ पूर्णानन्दीया ❧

मुख्यं चेति । अभावस्याधिकरणस्वरूपत्वं मत्वाह **निवृत्तिरूपेति** । तस्य मतमित्यत्र तच्छब्दस्य विभक्तिव्यत्यासेनान्वयमाह **तेनेति । ब्रह्मचैतन्येति** । ब्रह्मेति च्छेद । **अनुवदतीति** । श्रुति. स्वयमेवानुवदतीत्यर्थः। अविज्ञातमिति ज्ञानिनां पक्षः विज्ञातमित्यज्ञानिनां पक्ष इति विवेक. । अविषयत्वे उदाहृतं श्रुत्यन्तरं व्याचष्टे **दृष्टेरिति** । **दृश्येति** । चाक्षुषमनोवृत्त्येत्यर्थः । **तयेति** । बुद्धिवृत्त्येत्यर्थ. । **आगन्तुकत्वादिति** । जन्यत्वादित्यर्थ. । तथा च निवृत्तेर्जन्यत्वेन तद्रूपमोक्षस्यापि जन्यत्वादनित्यत्व स्यादिति शङ्कितुरभिप्राय । **ध्वंसस्येति** । जन्यत्वेपि निवृत्तिरूपध्वंसस्येत्यर्थ. । अविद्याया· कल्पितत्वादन्त्यभावविकाररूपतान्निवृत्तेरपि कल्पितत्वेनाधिष्ठानात्मस्वरूपत्वात्तान्निवृत्तेः परमते ध्वंसरूपत्वेन नित्यत्वप्रसङ्गः तस्मान्न नियोगपरत्वं वेदान्तानामिति भाव. ।

नन्नु मोक्षः क्रियाफलं भवितुमर्हति उत्पत्त्याद्यन्यतमवत्त्वात् घटादिवदित्यनुमानेन मोक्षस्योपासनाजन्यत्वमौपचारिकं स्यादित्याशङ्कां पक्षे हेत्वसिध्या परिहरतीति भाष्यमवतारयति **उत्पत्तीति** । नहि मोक्षस्योत्पत्त्यादिकमेवास्ति येनोत्पत्त्यादेः क्रियाजन्यत्वात् तद्द्वारा क्रियाजन्यत्वं मोक्षस्य स्यात्तथा चोत्पत्त्याद्यन्यतमरूपसाध्यसम्बन्धेन मोक्षस्य साध्यत्वमिति यत्पूर्वपक्षिणो मतं तदसङ्गतमिति सिद्धान्तसमुदायग्रन्थार्थः । उत्पत्ति· सामग्र्यव्यवहितोत्तरक्षणसम्बन्ध इत्यर्थ· । आप्तिः संयोगादिरूपप्राप्तिरित्यर्थ ।

मपेक्षत इति युक्तम् । तथा विकार्यत्वे च । तयोः पक्षयोर्मोक्षस्य ध्रुवमनित्यत्वम् । न हि दध्यादि विकार्यं उत्पाद्यं वा घटादि नित्यं दृष्टं लोके । न चाप्यत्वेनापि कार्यापेक्षा, स्वात्मस्वरूपत्वे सत्यनाप्यत्वात् । स्वरूपव्यतिरिक्तत्वेऽपि ब्रह्मणो नाप्यत्वम्, सर्वगतत्वेन नित्याप्तस्वरूपत्वात्सर्वेण

## रत्नप्रभा

स्माज्ज्ञानमेकं मुक्त्वेत्यन्तेन । तथोत्पाद्यत्ववद्विकार्यत्वे चापेक्षत इति युक्तमित्यन्वयः । दूषयति—**तयोरिति** । स्थितस्यावस्थान्तरं **विकारः** । नन्वनित्यत्वनिरासाय क्रियया स्थितस्यैव ब्रह्मणो ग्रामवदाप्तिरस्तु नेत्याह—**न चेति** । ब्रह्म जीवा-

## पूर्णानन्दीया

**भाष्ये उत्पाद्य इति** । उत्पत्तिमानित्यर्थः । मानसमुपासनाध्यानरूपं वा कायिकमग्निष्टोमादिरूपं कार्यं कर्मेत्यर्थः । **तयोः पक्षयोरिति** । मोक्षस्योत्पाद्यत्वं कश्चिद्वदति कश्चिद्विकार्यत्वं तयोः पक्षयोरित्यर्थः । साध्यश्चेन्मोक्षोऽभ्युपगम्यते अनित्य एव स्यादित्यादिभाष्ये दृढत्वेनानित्यत्वं साधितमिति भावः । **अनाप्यत्वादिति** । क्रियापूर्वकाप्यत्वानुपपत्तेरित्यर्थः । **सर्वेणेति** । सर्ववस्तुनेत्यर्थः । **गुणाधानेनेति** । अत्राभेदे तृतीयाद्वयमिति विभावनीयम् । *व्रीह्यादौ प्रोक्षणादिना गुणाधानलक्षणः संस्कारः सम्भवति* वस्त्रादौ तु क्षालनेन दोषापनयरूपः संस्कारः सम्भवति यथा तथा ब्रह्मणि द्विविधः संस्कारो न सम्भवतीत्याह **न तावदिति** । **अनाधेयातिशयेति** । असङ्गत्वेन गुणाद्यसम्बन्धीत्यर्थः । **स्वात्मधर्म एवेति** । ब्रह्मात्मस्वरूपभूत एवेत्यर्थः ।

व्याख्याने—प्रतीकमादाय तथेत्यस्यार्थमाह **तथोत्पाद्यत्ववदिति** । **अपेक्षत इति** । त्रिविधमध्ये अन्यतमं कर्मापेक्षत इत्यर्थः । **दूषयतीति** । स्वमते मोक्षस्योत्पत्त्याद्यनङ्गीकारान्न नित्यत्वदोषः प्रत्युत परमत एव तदङ्गीकारादनित्यत्वदोष इति दूषयतीत्यर्थः । **स्थितस्यैवेति** । नित्यत्वेन स्थितस्यैवेत्यर्थः । यथा शैववैष्णवादितत्तन्मते नित्यत्वेन स्थितस्य कैलासवैकुण्ठादिग्रामस्याप्तिः गमनरूपया क्रियया भवति तथैव अनित्यत्वनिरासाय नित्यत्वेन स्थितस्यैव ब्रह्मणः उपासनारूपक्रियया आप्तिरस्तीत्यर्थः । नित्यत्वेन स्थितस्यैव ब्रह्मरूपमोक्षस्याप्तिरूपसाध्योपरागेण साध्यत्वं प्राप्तिकर्मता च भवेत्तथा च ब्रह्मप्राप्तेरुपासनाजन्यत्वात्तद्द्वारा मोक्षस्याप्युपासनाजन्यत्वेन वेदान्तानां नियोगपरत्वमिति शङ्कितुरभिप्रायः । **ब्रह्मजीवेति** । जीवस्य ब्रह्मप्राप्तिरित्यत्र तयोरभेदे स्वस्वरूपस्य नित्यमाप्तत्वात्क्रियापूर्वकाप्यत्वानुपपत्तेर्न क्रियापेक्षा भेदे तु ब्रह्मणः सर्वगतत्वेन नित्यमाप्तत्वात् क्रियापूर्वकाप्यत्वानुपपत्तेर्न क्रियापेक्षेत्याहेत्यर्थः ।

नन्वभेदपक्षे कथमाप्तिः भेदनियतत्वादाप्तेस्तथा चोभयथाप्याप्तत्वादित्यनुपपत्तिरिति चेन्न । अभेदे त्वाप्तरोपचारिकत्वादिति भावः । मोक्षस्योत्पाद्यत्वं विकार्यत्वमाप्यत्वं च न सम्भवतीति प्रतिपादकं भाष्यं व्याख्याय संस्कारत्वं न सम्भवतीति प्रतिपादकं भाष्यं

ब्रह्मणः आकाशस्येव। नापि संस्कार्यो मोक्षः, येन व्यापारमपेक्षेत। संस्कारो हि नाम संस्कार्यस्य गुणाधानेन वा स्याद्दोषापनयनेन वा। न तावद्गुणाधानेन सम्भवति, अनाधेयातिशयब्रह्मस्वरूपत्वान्मोक्षस्य। नापि दोषापनयनेन, नित्यशुद्धब्रह्मस्वरूपत्वान्मोक्षस्य। स्वात्मधर्म एव संस्तिरोभूतो मोक्षः क्रिययात्मनि संस्क्रियमाणेऽभिव्यज्यते, यथाऽऽदर्शे निःघर्षणक्रियया संस्क्रियमाणे भास्वरत्वं धर्म (१)इति चेत्। न। क्रियाश्रयत्वानुपपत्तेरात्मनः। यदाश्रया हि क्रिया तमविकुर्वती नैवात्मानं लभते। यद्यात्मा क्रियया विक्रियेतानित्यत्वमात्मनः प्रसज्येत। 'अविकार्योऽयमुच्यते' इति चैवमादीनि वाक्यानि बाध्येरन्। तच्चानिष्टम्। तस्मान्न स्वाश्रया

---

❀ रत्नप्रभा ❀

भिन्नं न वा? उभयथाप्यनाप्यत्वान्न क्रियापेक्षेत्याह—**स्वात्मेत्यादिना**। **यथा** व्रीहीणां संस्कार्यत्वेन प्रोक्षणापेक्षा, **तथा** मोक्षस्य नेत्याह—**नापीत्यादिना**। **गुणाधानं** व्रीहिषु प्रोक्षणादिना वस्त्रादौ मलापनयः। शंकते—**स्वात्मधर्म इति**। ब्रह्मात्मस्वरूप एव मोक्षोऽनाद्यविद्यामलावृतः उपासनया मले नष्टेऽभिव्यज्यते इत्यत्र दृष्टान्तः—**यथेति**। संस्कारो मलनाशः। किमात्मनि मलः सत्यः, कल्पितो वा? द्वितीये ज्ञानादेव तन्नाशो न क्रियया। आद्ये क्रिया किमात्मनिष्ठा, अन्यनिष्ठा वा? नाद्य इत्याह—**न क्रियेति**। अनुपपत्तिं स्फुटयति—**यदीति**। क्रिया हि स्वाश्रये

❀ पूर्णानन्दीया ❀

व्याख्याति **यथा व्रीहिणामिति**। अहं ब्रह्मास्मीति ब्रह्मोपासनया ब्रह्मरूपे मोक्षे गुणाधानाख्यः कश्चिदतिशयरूप. संस्कारो जन्यते यथा व्रीहिषु प्रोक्षणादिना गुणाधानाख्य संस्कारस्तद्वत्तथा चोपासनारूपक्रियाजन्यत्वात्सस्कारस्य तद्द्वारा मोक्षस्यापि क्रियाजन्यत्वेन वेदान्तानां क्रियापरत्वमिति शङ्कितुरभिप्राय·। गुणाधानं दोषापनयश्च संस्कारशब्दार्थ इत्यभिप्रेत्य 'संस्कारो ही'त्यादिभाष्यं व्याचष्टे **गुणाधानमिति**। व्रीह्यादौ गुणाधानलक्षणसंस्कारो नाम स्वर्गोत्पादकत्वरूपातिशयविशेष। **आद्य इति**। सत्यत्वपक्षे स्वविद्यात्मकमलनाशकोपासनारूपक्रिया किमात्मनिष्ठा सती स्वरूपाभिव्यक्त्यर्थं मलं नाशयति अन्यनिष्ठा वा? नाद्य. असङ्गाद्वितीयस्य वस्त्वन्तरसंयोगित्वानुपपत्तेरित्यर्थ.। नैवात्मानं लभत इति भाष्यस्यार्थमाह—**न जायत इति**। या क्रिया सा स्वाश्रयस्य वस्त्वन्तरसंयोगित्वरूपविकारं सम्पादयन्त्येव स्वयं जायत इति फलितार्थ·। तथा चात्मनः क्रियाङ्गीकारे द्रव्यान्तरसंयोगित्वमागत तच्चानिष्टमिति भावः। प्रतीकमादाय तत्पदस्या-

---

(१) भास्वरत्वधर्मं इति भा मु. पु पाठ।

क्रियाऽऽत्मनः सम्भवति। अन्याश्रयायास्तु क्रियाया अविषयत्वान्न तयात्मा संस्क्रियते। ननु देहाश्रयया स्नानाचमनयज्ञोपवीतादिकया क्रियया देही संस्क्रियमाणो दृष्टः। न, देहादिसंहतस्यैवाविद्यागृहीतस्यात्मनः संस्क्रियमाणत्वात्। प्रत्यक्षं हि स्नानाचमनादेर्देहसमवायित्वम्। तया देहाश्रयया तत्संहत एव कश्चिदविद्ययात्मत्वेन परिगृहीतः संस्क्रियत इति युक्तम्। यथा देहाश्रयाचिकित्सानिमित्तेन धातुसाम्येन तत्संहतस्य तदभिमानिन आरोग्यफलं 'अहमरोग' इति यत्र बुद्धिरुत्पद्यते। एव स्नानाचमनयज्ञोपवीतादिना 'अहं शुद्धः संस्कृत' इति यत्र बुद्धिरुत्पद्यते स सं-

---

## रत्नप्रभा

संयोगादिविकारमकुर्वतो न जायते इत्यर्थः। **तच्च** वाक्यबाधनम्। **न** द्वितीय इत्याह—**अन्येति**। **अविषयत्वात्** क्रियाश्रयद्रव्यासंयोगादिति यावत्। दर्पणं तु सावयवं क्रियाश्रयेष्टकाचूर्णादिद्रव्यसंयोगित्वात् संस्क्रियत इति भावः। अन्यक्रियया अन्यो न संस्क्रियत इत्यत्र व्यभिचारं शङ्कते—**नन्विति**। आत्मनो मूलाविद्याप्रतिबिम्बितत्वेन गृहीतस्य नरोऽहमिति भ्रान्त्या देहतादात्म्यमापन्नस्य क्रियाश्रयत्वभ्रान्त्या संस्कार्यत्वभ्रमान्न व्यभिचार इत्याह—**नेति**। **कश्चिदिति**। अनिश्चितब्रह्मस्वरूप इत्यर्थः। **यत्र** आत्मनि विषये आरोग्यबुद्धिरुत्पद्यते तस्य देहसंहतस्यै-

## पूर्णानन्दीया

र्थमाह—**तच्चेति**। यत्रान्यनिष्ठया क्रिययान्यस्य सस्कार्यत्वं तत्र क्रियाश्रयद्रव्यसंयोगित्वमिति व्याप्तिं ज्ञापयन्पूर्ववाद्युक्तदृष्टान्तवैषम्यमाह—**दर्पणं त्विति**। सयोगविभागप्रचयानुकूलहस्तचलनतदनुकूलयत्नानुरूपा या निघर्षणक्रिया तदाश्रयं यदिष्टकाचूर्णादि द्रव्यं तत्संयोगित्वादित्यर्थः। श्रीगुरुचरणै**र्ब्रह्मविद्याभरणे** दृष्टान्तवैषम्यं स्फुटत्वेनोपपादितम्। तथाहि–यद्यपीष्टकाचूर्णस्य दर्पणेन संयोगविभागप्रचयानुकूलो व्यापारः हस्तचलनतदनुकूलयत्नादिरूपोऽन्यगतोपि भवति तथापि मलापकर्षणपुरुषव्यापारस्य द्वारीभूतो यः सयोगविभागप्रचयः स दर्पणगतो भवत्येव नैवं ब्रह्मणि सम्भवति। **अन्यक्रिययेति**। अन्यनिष्ठक्रिययेत्यर्थः। **अन्य इति**। आत्मेत्यर्थ। **व्यभिचारमिति**। यत्र क्रियाश्रयद्रव्यसंयोगित्वाभावस्तत्र अन्यनिष्ठया क्रियया अन्यस्य सस्कार्यत्वाभाव इत्याकारकव्यतिरेकव्याप्तेरात्मनि व्यभिचारं शङ्कत इत्यर्थः। केवलदेहनिष्ठया स्नानादिक्रियया केवलस्यात्मनः संस्कारो दृश्यत इति पूर्वपक्ष्यभिप्रायः। स्नानादिक्रिया देहविशिष्टस्यैव संस्कारेपि देहविशिष्टस्यैव न शुद्धस्यात्मन इति सिद्धान्त्यभिप्रायः। यत्र बुद्धिरुत्पद्यते ततसहतस्य फलमित्यन्वयमर्थपूर्वकं दर्शयति—**यत्रेति**। केवलस्य देहस्य फलभोक्तृत्वं न-

स्क्रियते । स च देहेन संहत एव । तेनैव ह्यहंकर्त्राहंप्रत्ययविषयेण प्रत्ययिना सर्वाः क्रिया निर्वर्त्यन्ते, तत्फलं च स एवाश्नाति,–'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' ( मुण्ड० ३।१।१। ) इति मन्त्रवर्णात् , 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' (काठ० १।३। ४) इति च । तथा 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूता-

## रत्नप्रभा

वारोग्यफलमित्यन्वयः । **ननु** देहाभिन्नस्य कथं संस्कारः ? तस्यामुष्मिकफलभोक्तृत्वायोगादित्यत आह—**तेनेति** । देहसंहतेनैवान्तःकरणप्रतिबिम्बात्मना कर्त्राहमितिभासमानेन प्रत्ययाः कामादयो मनस्तादात्म्यादस्य सन्तीति प्रत्ययिना क्रियाफलं भुज्यत इत्यर्थः । मनोविशिष्टस्यामुष्मिकभोक्तुः संस्कारो युक्त इति भावः । विशिष्टस्य भोक्तृत्वं, न केवलस्य साक्षिण इत्यत्र मानमाह—**तयोरिति** । प्रमातृसाक्षिणोर्मध्ये सत्त्वसंसर्गमात्रेण कल्पितकर्तृत्वादिमान् प्रमाता पिप्पलं कर्मफलं भुंक्ते, स एव शोधितत्वेनान्यः साक्षितया प्रकाशत इत्यर्थः । **आत्मा** देहः । देहादियुक्तं प्रमात्रात्मानमित्यर्थः । **एवं** सोपाधिकस्य चिद्धातोर्मिथ्यासंस्कार्यत्वमुक्त्वा निरुपाधिकस्यासंस्कार्यत्वे मानमाह—**एक इति** । सर्वभूतेष्वद्वितीय **एको देवः** स्वप्रकाशः । **तथापि** मायावृतत्वान्न प्रकाशत इत्याह—**गूढ इति** । **ननु** जीवेनासम्बन्धाद्भिन्नत्वाद्वा देवस्याभानं न तु मायागूहनादिति नेत्याह—**सर्वव्यापी सर्वभूतान्तरात्मेति** । देवस्य विभुत्वात् सर्वप्राणिप्रत्यक्त्वाच्चवारणादेवाभानमित्यर्थः । प्रत्यक्त्वे कर्तृत्वं स्यादिति **चेत्** । **न** । कर्माध्यक्षः क्रियासाक्षीत्यर्थः । तर्हि सा-

## पूर्णानन्दीया

केवलस्यात्मन किन्तु विशिष्टस्य फलभोक्तृत्व स्नानादिक्रियाश्रयत्वादिकं चेत्यात्मनि व्यतिरेकव्याप्तेर्न व्यभिचार इति भावः ।

**भाष्ये तत्संहत एव कश्चिदिति** । देहेन्द्रियादिविशिष्टः कश्चित्पुरुष एवेत्यर्थ. । विशिष्टस्यैव क्रियाश्रयत्वादौ दृष्टान्तमाह—**यथेति** । **धातुसाम्येनेति** । वातपैत्यश्लेष्मधातुसाम्येनेत्यर्थ. । तदभिमानिनः जीवस्येत्यर्थः । दार्ष्टान्तिकमाह—**एवमिति** । यत्र बुद्धिरुत्पद्यत इत्यत्र विद्यमानयत्रेत्यस्य तच्छब्दचतुष्टयेनान्वय' । यत्रात्मनि विषये शुद्धबुद्धिरुत्पद्यत इत्यर्थ. । **तत्फलं चेति** । क्रियाफलं चेत्यर्थः ।

व्याख्याने तृतीयाचतुष्टयस्य क्रमेणार्थ व्युत्पादयति **देहसंहतेनैवेति** । **मनोविशिष्टस्येति** । एकांशरूपस्थूलदेहे विनष्टेपि प्रत्यभिज्ञावलाल्लिङ्गदेहमादाय संस्कारफलं चोपपद्यते यथा एकांशरूपबाल्यपरिमाणे विनिष्टेपीतरांशमादाय प्रत्यभिज्ञानाद्विशिष्टव्यवहारोपपत्तिस्तद्वदिति भावः । **सत्त्वेति** । अन्तःकरणेत्यर्थः । **पिप्पलमिति** । कर्मफलमित्यर्थः । **तद्भू-**

न्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' ( श्वेता० ६।११ ) इति, 'स पर्यगाच्छुक्रमकायमव्रणमस्नाविरꣳशुद्धमपापविद्धम्' (ईशा० ८ ) इति च, एतौ मन्त्रावनाधेयातिशयतां नित्यशुद्धतां च ब्रह्मणो दर्शयतः । ब्रह्मभावश्च मोक्षः । तस्मान्न संस्कार्योऽपि मोक्षः । अतोऽन्यन्मोक्षं प्रति क्रियानुप्रवेशद्वारं न शक्यं केनचिद्दर्शयितुम् । तस्माज्ज्ञानमेकं मुक्त्वा क्रियाया गन्धमात्रस्याप्यनुप्रवेश इह नोपपद्यते । ननु ज्ञानं नाम मानसी क्रिया । न । वैलक्षण्यात् ।

---

**रत्नप्रभा**

क्ष्यमस्तीति द्वैतापत्तिः । न । सर्वभूतानामधिष्ठानं भूत्वा साक्षी भवति । साक्ष्यमधिष्ठाने साक्षिणि कल्पितमिति भावः । साक्षिशब्दार्थमाह—**चेता केवल इति** । बोद्धृत्वे सति, अकर्त्ता **साक्षी** इति लोकप्रसिद्धम् । **चकारः**—दोषाभावसमुच्चयार्थः, निर्गुणत्वान्निर्दोषत्वाच्च । गुणो दोषनाशो वा संस्कारो नेत्यर्थः । **स** इत्युपक्रमात् । शुक्रादिशब्दाः पुंस्त्वेन वाच्याः । **स** एव आत्मा **परि** सर्वम् **अगात्** व्याप्तः, शुक्रो दीप्तिमान्, **अकायो** लिङ्गशून्यः, **अव्रणोऽ**क्षतः, **अस्नाविरः** शिराविधुरः अनश्वर इति वा । आभ्यां पदाभ्यां स्थूलदेहशून्यत्वमुक्तम् । **शुद्धो** रागादिमलशून्यः । **अपापविद्धः** पुण्यपापाभ्यामसंस्पृष्ट इत्यर्थः । **अत इति** । उत्पत्त्याप्तिविकारसंस्कारेभ्योऽन्यत् पञ्चमं क्रियाफलं नास्ति यन्मोक्षस्य क्रियासाध्यत्वे द्वारम् भवेदित्यर्थः । **ननु** मोक्षस्यासाध्यत्वे शास्त्रारम्भो वृथा, **न**, ज्ञानार्थत्वादित्याह—**तस्मादिति** । द्वाराभावादित्यर्थः । व्याघातं शंकते—**नन्विति** । तथा च मोक्षे क्रियानुप्रवेशो नास्तीति व्याहतमिति भावः । मानसमपि ज्ञानं न विधियोग्या क्रिया वस्तुतन्त्रत्वात् कृत्यसाध्यत्वाच्चेत्याह—**नेति** । वैलक्षण्यं प्रपञ्चयति—

**पूर्णानन्दीया**

**त्वेति** । अधिष्ठानं भूत्वेत्यर्थः । द्वैतापत्ति परिहरति **साक्ष्यमिति** । **चेतेति** । चेतृशब्दो ऋकारान्तः । चेता केवल इति पदद्वयस्य क्रमेणार्थं वदन् अनुभवमाह—**बोद्धृत्वे सतीति** । प्रकृते किमायातमित्यत आह—**निर्गुणत्वादिति** । शिराः नाड्य इत्यर्थः ॥ देहद्वयाभावे फलितमाह—**पुण्यपापाभ्यामिति** । उपसंहरतीति ज्ञापयन् भाष्यार्थमाह—**उत्पत्तीति** । परिहरति **नेति** । ज्ञानार्थत्वाच्छास्त्रारम्भ॰ सार्थक इत्याहेत्यर्थ॰ ॥ **व्याघातमिति** । विरोधमित्यर्थः । शास्त्रं ज्ञानार्थञ्चेन्मोक्षे क्रियानुप्रवेश॰ कथं नोपपद्यते ज्ञानस्यैव क्रियात्वादिति विरोधं शङ्कते इति भावः । **मानसमपि इति** । यो विध्यर्थः स कृतिसाध्यत्वविशिष्टः तथा च ज्ञानस्य कृत्यसाध्यत्वं न विध्यर्थत्वायोगात् न विधियोग्यक्रियात्वमिति भावः । **वैलक्षण्यमिति** । भेदमित्यर्थः । ज्ञानस्य ध्यानक्रियावैल-

क्रिया हि नाम सा यत्र वस्तुस्वरूपनिरपेक्षैव चोद्यते, पुरुषचित्तव्यापाराधीना च, यथा 'यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन्' इति, 'संध्यां मनसा ध्यायेत्' ( ऐ० ब्रा०३।८।१ ) इति चैवमादिषु ध्यानं चिन्तनं यद्यपि मानसम्, तथापि पुरुषेण कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं, पुरुषतन्त्रत्वात् । ज्ञानं तु प्रमाणजन्यम् प्रमाणं च यथाभूतवस्तुविषयम्, अतो ज्ञानं कर्तुमकर्तुमन्यथा वा कर्तुमशक्यं केवलं वस्तुतन्त्रमेव तत्, न चोदनातन्त्रम्, नापि पुरुषतन्त्रम्,

---

**रत्नप्रभा**

**क्रिया हीति** । यत्र विषये तदनपेक्षैव **या** चोद्यते **तत्र सा** हि क्रियेति **योजना** । विषयवस्त्वनपेक्षा कृतिसाध्या च क्रियेत्यत्र दृष्टान्तमाह—**यथेति** । गृहीतमध्वर्युणेति शेषः । "वषट् करिष्यन् होता सन्ध्यां देवताम्" इति चैवमादिवाक्येषु यथा यादृशी ध्यानक्रिया वस्त्वनपेक्षा पुन्तन्त्रा च चोद्यते तादृशी क्रियेत्यर्थः । ध्यानमपि मानसत्वाज्ज्ञानवन्न क्रियेत्यत आह—**ध्यानमित्यादिना** । तथापि क्रियैवेति **शेषः** । कृत्यसाध्यत्वमुपाधिरिति भावः । ध्यानक्रियामुक्त्वा ततो वैलक्षण्यं ज्ञानस्य स्फुटयति—**ज्ञान-**

**पूर्णानन्दीया**

क्षण्यं प्रपञ्चयतीति भावः । सामान्यव्याप्तिप्रतिपादकं भाष्यं योजयति **यत्रेति । चोद्यत इति** । चोदनया उत्पद्यत इत्यर्थ । यत्र विषयवस्त्वनपेक्षत्वे सति कृतिसाध्यत्वं तत्र क्रियात्वमिति सामान्यव्याप्तिस्तामुपपादयन् तस्यां दृष्टान्तप्रतिपादकं भाष्यमवतारयति—**विषयवस्त्वनपेक्षेति** । विषयाजन्येत्यर्थः । अनुमित्यादौ विषयस्याहेतुत्वात्तदजन्ये तस्मिन् व्यभिचारवारणाय कृतिजन्यत्वदलम् । कृतिसाध्ये अपूर्वे व्यभिचारवारणाय विषयवस्त्वनपेक्षत्वदलम्, अपूर्वस्य उपादानरूपविषयजन्यत्वेन तदजन्यत्वाभावान्न व्यभिचार. । उपासनायाः अपूर्वविषयत्वं नाम पूर्वहेतुकृतिविषयत्वमिति पुरस्तादुक्तमिति विज्ञेयम् । वषट्करिष्यान्निति हेतौ वषट्करिष्यन् तां देवता ध्यायेदित्यर्थ । वाक्यान्तरमाह—**सन्ध्यामिति** । ध्याने विषयवस्त्वनपेक्षत्वे सति कृतिसाध्यत्वं क्रियात्वं च विद्यत इति व्याप्तिं परिष्करोति **यथा यादृशीति** । यादृशी अनाहार्यप्रमाव्यतिरिक्तेत्यर्थः । **ज्ञानमेवेति** । ज्ञानमिवेत्यर्थः । ध्यानं न क्रिया मानसत्वाज्ज्ञानवदिति प्रयोगः । ध्यानं क्रियां मानसत्वादित्यनुमाने कृत्यसाध्यत्वमुपाधि· दृष्टान्ते साध्यव्यापकत्वात् पक्षे साधनाव्यापकत्वाच्चेत्याह—**कृत्यसाध्यत्वमिति । ज्ञानस्येति** । लोके प्रसिद्धघटादिज्ञानस्येत्यर्थः ।

**भाष्ये**—पूर्वमात्मनः वृत्तिप्रतिफलितचैतन्याविषयत्वेपि वृत्तिविषयत्वमुक्तं तदत्रोपसंहृतं **ज्ञानमेकं मुक्त्वेति । यथेति** । किञ्चिद्ध्यान यथावस्थितवस्त्वनुसार्यऽपि वस्तुनि-

तस्मान्मानसत्वेऽपि ज्ञानस्य महद्वैलक्षण्यम् । यथाच 'पुरुषो वाव गौतमाग्निः', 'योषा वाव गौतमाग्निः' (छान्दो० ५।७,८।१) इत्यत्र योषित्पुरुषयोरग्निबुद्धिर्मानसी भवति. केवलचोदनाजन्यत्वात्क्रियैव सा पुरुरुषतन्त्रा च । या तु प्रसिद्धेऽग्नावग्निबुद्धिर्न सा चोदनातन्त्रा, नापि पुरुषतन्त्रा, किं तर्हि ? प्रत्यक्षविषयवस्तुतन्त्रैवेति ज्ञानमेवैतन्न क्रिया(१) । एवं सर्वप्रमाणविषयवस्तुषु वेदितव्यम् । तत्रैवंसति यथाभूतब्रह्मात्मवि-

❀ रत्नप्रभा ❀

ग्निवति । अतः प्रमात्वात् न चोदनातन्त्रं न विधेर्विषयः । पुरुष. कृतिद्वारा तन्त्रं हेतुर्यस्य तत्पुरुषतन्त्रम्, तस्माद् वस्त्वव्यभिचारादपुंतन्त्रत्वाच ध्यानात् ज्ञानस्य महान् भेद इत्यर्थः । भेदमेव दृष्टान्तान्तरेणाह—यथा चेति । अभेदासत्त्वेऽपि विधितो ध्यानं कर्तुं शक्यम् न ज्ञानमित्यर्थः । ननु प्रत्यक्षज्ञानस्य विषयजन्यतया तत्तन्त्रत्वेऽपि शाब्दबोधस्य तदभावाद्विधेयक्रियात्वमिति नेत्याह एवं सर्वेति । शब्दानुमानाद्यर्थेष्वपि ज्ञानमविधेयक्रियात्वेन ज्ञातव्यम् । तत्रापि मानादेव ज्ञानस्य प्राप्तेर्विध्ययोगादित्यर्थः । तत्रैवंसति लोके ज्ञानस्याविधेयत्वे सती-

❀ पूर्णानन्दीया ❀

रपेक्षं भवति तदभिप्रायेण यस्यै देवताया इति सन्ध्या मनसेति चोदाहरणद्वयम्, किञ्चित्पुनर्ध्यानं वस्त्वननुसार्यपि भवति तदभिप्रायेण पुरुषो वा वेत्युदाहरणम्, अतो ध्यानस्य वस्त्वनुसारे तदननुसारे च न निर्बन्धः, कृतिसाध्यत्वं तु नियतमेवेति तस्य विधेयत्वमुपपद्यते, प्रमाणज्ञानस्य तु कृत्यसाध्यतया न विधेयत्वमिति समुदायार्थ । ज्ञानं तु प्रमाणजन्यमिति । यथार्थवस्तुविषयप्रत्यक्षादिप्रमाणजन्यत्वात् ज्ञानस्य सर्वदानाहार्यप्रमात्मकत्वमेव ध्यानादीनां तु केषाञ्चिदनाहार्यत्व केषाञ्चिद्भ्रमत्वं केषाञ्चित्प्रमात्वं सम्भवति तस्मादपि ज्ञानस्य महद्वैलक्षण्यमिति भावः ।

व्याख्याने प्रतीकमादायेति शब्दार्थमाह—अतः प्रमाणजन्यत्वादिति(२) । प्रतीकमादायार्थमाह—न चोदनेति । ज्ञानस्य प्रमातृजन्यत्वेन, पुरुषतन्त्रताऽस्त्येवेति आशङ्क्य विग्रहप्रतिपादकद्वारा परिहरति पुरुष इति । ज्ञानस्य प्रमातृजन्यत्वेपि कृतिसाध्यत्वाभावान्न पुरुषतन्त्रतेति भावः । प्रतीकमादायार्थमाह—तस्मादिति । ध्यानमिति । आहार्यरूपं ध्यानमित्यर्थ. । नन्विति । प्रत्यक्षात्मकज्ञानं प्रति विषयस्य हेतुत्वेन तज्ज्ञानस्य वस्तुतन्त्रत्वेपि शाब्दबोधात्मकज्ञानं प्रति विषयस्य कारणत्वाभावात् शाब्दबोधादेर्न विषयवस्तुतन्त्रता तस्माद्विधेयक्रियात्वं स्यादिति शङ्कार्थः । शब्दानुमा-

(१) मेव-तन्न क्रियेति भा. मु पुस्तके पाठ ।

(२) अत्र सर्वत्र 'प्रमात्वात्' इत्येवपाठो-रत्नप्रभायामुपलभ्यत इति स एव मुद्रितः ।

यमपि ज्ञानं न चोदनातन्त्रम्। तद्विषये लिङादयः(१) श्रूयमाणा अप्यनि-योज्यविषयत्वात्कुण्ठीभवन्त्युपलादिषु प्रयुक्तक्षुरतैक्ष्ण्यादिवत् अहेयानु-

## रत्नप्रभा

त्यर्थः । **यथाभूतत्वम्** अबाधितत्वम् । **ननु** "आत्मानं पश्येत्" "ब्रह्म त्वं विद्धि" (केन०१।५) "आत्मा—द्रष्टव्यः" (बृ०२।४।५) इति विज्ञाने लिङ्लोट्तव्यप्रत्यया विधायकाः श्रूयन्ते, अतो ज्ञानं विधेयमित्यत आह—**तद्विषय इति** । तस्मिन् ज्ञानरूपविषये विधयः पुरुषं प्रवर्तयितुमशक्ता भवन्ति । अनियोज्यं कृत्यसाध्यं नियोज्यशून्यं वा ज्ञानं तद्विषयकत्वादित्यर्थः । 'ममायं नियोग' इति बोद्धा नियोज्यो विषयश्च विधेर्नास्तीति भावः । तर्हि ज्ञेयं ब्रह्म विधीयतां नेत्याह **अहेयेति** । वस्तुस्व-

## पूर्णानन्दीया

**नाद्यर्थेष्विति**। शब्दादिप्रमाणविषयार्थेष्वित्यर्थः । **मानादेवेति** । अबाधितवस्तुविषयप्रमाणादेवानुमित्यादेः प्राप्तेरित्यर्थः । अनुमित्यादिज्ञाने विषयेन्द्रियसंयोगाभावेन मुख्यवस्तुतन्त्रत्वाभावेपि अनुमित्यादिनिष्ठप्रमात्वस्याबाधितवस्तुतन्त्रत्वमौपचारिकमस्तीति भाव. ।

**भाष्ये** या चोदनाजन्या पुरुषतन्त्रा च क्रिया तां प्रसिद्धां क्रियां तद्विलक्षणप्रसिद्धघटादिज्ञान चोपपाद्य प्रकृतमाविष्करोति **तत्रैवं सतीति** । साक्षात्कारात्मकं शाब्दबोधात्मकमनुमित्यात्मक वा ब्रह्मात्मविषयक ज्ञानं न चोदनातन्त्रं नापि पुरुषतन्त्र परम्परया कृतिजन्यत्वेपि साक्षात्कृतिजन्यत्वाभावात्प्रसिद्धघटादिज्ञानवदिति भावः ।

**व्याख्याने** लिङादित्रयस्य क्रमेणोदाहरणपूर्वकं भाष्यमवतारयति—**नन्विति** । अनियोज्यं ज्ञानं विषयो येषां विध्यादीनामिति बहुव्रीहिसमासमभिप्रेत्य वाक्य व्याकरोति **अनियोज्यमिति । नियोज्यशून्यं वेति** । कृतिसाध्यफलरहितं वेत्यर्थः । नियोज्यश्च विषयश्च नियोज्यविषयौ येषां न विद्येते ते अनियोज्यविषया विधयस्तेषां भावः अनियोज्यविषयत्वं तस्मादिति समासान्तरं तात्पर्यार्थकथनेन स्फोरयति **ममेति** । अय फलहेतुभूतः अपूर्वरूपो नियोग. ममावश्यक इति ज्ञानवान् बोद्धा यः स नियोज्य इत्यर्थ । विषयश्च कृतिसाध्यविषयश्चेत्यर्थः । यथा ज्योतिष्टोमवाक्ये स्वर्गकामरूपनियोज्यः कृतिसाध्ययागरूपविषयश्च विधेरस्ति तद्वदत्र नियोज्यो विषयश्च विधेर्नास्तीति भाव· । बहुव्रीहिसमासभ्रमं वारयति **वस्तुस्वरूप इति** । आत्मस्वरूपत्वात् ब्रह्माहेयमनुपादेयं च भवति स्वव्यतिरिक्तमेव हेयमुपादेय चेति प्रसिद्धं लोके, तस्मादहेयानुपादेयवस्तुस्वरूपत्वात् ब्रह्मण· विधयो ज्ञान इव तास्मिन् न प्रवर्तन्त इति भाव । फलितमाह—**निरतिशयस्येति** । व्याख्यानान्तरं वदन् बहुव्रीहिसमासमभिप्रेत्य भाष्यस्थाहेये-

(१) अतस्तद्विषया लिङादय इति मा. मु. पुस्तकपाठ. ।

पादेयवस्तुविषयत्वात् । किमर्थानि तर्हि 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यः' इत्यादीनि विधिच्छायानि वचनानि ? स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः । यो हि बहिर्मुखः प्रवर्तते पुरुषः 'इष्टं मे भूयादनिष्टं मा भूदिति' नच तत्रात्यन्तिकं पुरुषार्थं लभते । तमात्यन्तिकपुरुषार्थवाञ्छिनं स्वाभाविककार्यकरणसङ्घातप्रवृत्तिगोचराद्विमुखीकृत्य प्रत्यगात्म-

---

**रत्नप्रभा**

रूपो विषयस्तत्त्वाद् ब्रह्मणो निरतिशयस्यासाध्यत्वान्न विधेयत्वमित्यर्थः । उदासीनवस्तुविषयकत्वाच्च ज्ञानं न विधेयं, प्रवृत्त्यादिफलाभावादित्यर्थः । विधिपदानां गतिं पृच्छति—**किमर्थानीति** । **विधिच्छायानि** प्रसिद्धयागादिविधितुल्यानीत्यर्थः । विधिप्रत्ययैरात्मज्ञानं परमपुरुषार्थसाधनमिति स्तूयते स्तुत्या आत्यन्तिकेष्टहेतुत्वभ्रान्त्या या विषयेषु प्रवृत्तिः आत्मश्रवणादिप्रतिबन्धिका, तन्निवृत्तिफलानि विधिपदानीत्याह—**स्वाभाविकेति** । विवृणोति—**यो हीत्यादिना** । तत्र विषयेषु संघातस्य या प्रवृत्तिः तद्गोचराच्छब्दादेरित्यर्थः । स्रोतः चित्तवृत्तिप्रवाहः । **प्रवर्तयन्ति** ज्ञान-

**पूर्णानन्दीया**

त्यादिहेतोरर्थमाह—**उदासीनेति** । अनियोज्येत्यादिहेतुसमुच्चयार्थश्चशब्दः । उदासीनवस्तुविषयकत्वेपि ज्ञानस्य विधेयत्वं स्यादित्याशङ्क्याह **प्रवृत्तीति** । वाशब्दः व्याख्यानन्तरद्योतकः । **स्तुत्येति** । स्तुत्या तन्निवृत्तिफलानीत्यन्वयः । विषयप्रवृत्तौ हेतुमाह—**आत्यन्तिकेति** । उत्कृष्टसुखहेतुत्वभ्रान्त्येत्यर्थः । **विषयेष्विति** । शब्दस्पर्शरूपादिविषयेष्वित्यर्थः । स्रक्चन्दनादिविषयेष्विति फलितार्थः ।

**भाष्ये स्वाभाविकप्रवृत्तीति**। स्वाभाविकी स्वभावसिद्धा या प्रवृत्तिस्तद्विषयेभ्यः स्रक्चन्दनादिभ्यो यद्विमुखीकरणं तदर्थानीति विग्रहः । अथ वा स्वाभाविकेभ्यः प्रवृत्तिविषयेभ्यो यद्विमुखीकरणमिति विग्रहः । विषयाणां स्वाभाविकत्वे लोकप्रमाणसिद्धत्वम् । **तत्रेति** । विषय इत्यर्थः । आत्यन्तिकमुत्कृष्टमित्यर्थः । पुरुषार्थं सुखमित्यर्थः । अनित्यत्वादिति शेषः । **तमिति** । यो हि बहिर्मुखस्तमुत्कृष्टसुखार्थिनमधिकारिणमित्यर्थः । बहिर्मुखस्य सुखे उत्कृष्टवाञ्छयाधिकारित्वं सम्पाद्य त श्रवणादौ वाक्यानि प्रवर्तयन्तीति ज्ञापनार्थमात्यन्तिकेत्यादिविशेषणम् । एतेन साधनचतुष्टयसम्पन्नस्य श्रवणादौ प्रवृत्तिर्युक्ता श्रुतीनां तस्मिन्प्रवर्त्तयितृत्वं च युक्तं कथं बर्हिमुखस्येति शङ्का निरस्ता, कथंचिदधिकारित्वस्य प्रतिपादनादिति भावः । **तत्केन कमिति** । तत्तत्र विद्याकाले केन करणेन कं विषय पश्येदित्यर्थः । **अकर्तव्यप्रधानमिति** । अकर्तव्यं कृत्यसाध्य यद्ब्रह्म तदेव प्रधानं विषयो यस्य तत्तथेत्यर्थः ।

व्याख्याने **विवृणोतीति** । सङ्ग्रहवाक्यं विवृणोतीत्यर्थः । **शब्दादेरिति** । श-

स्रोतस्तया प्रवर्तयन्ति 'आत्मा वा अरे द्रष्टव्यः' इत्यादीनि । तस्यात्मान्वेषणाय प्रवृत्तस्याहेयमनुपादेयं चात्मतत्त्वमुपदिश्यते—'इदं सर्वं यदयमात्मा' ( बृह० २।४।६। ) 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् केन कं विजानीयात्, विज्ञातारमरे केन विजानीयात्' (बृह० ४।५।१५) 'अयमात्मा ब्रह्म' ( बृह० २।५।१९ ) इत्यादिभिः । यदप्यकर्तव्यप्रधानमात्मज्ञानं हानायोपादानाय वा न भवतीति तत्तथैवेत्यभ्युपगम्यते । अलङ्कारो ह्ययमस्माकं यद्ब्रह्मात्मावगतौ सत्यां सर्वकर्तव्यताहानिः कृतकृत्यता चेति । तथाच श्रुतिः—

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ।'(बृह० ४।४।१२)इति ।
एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत।

(भ०गा०१५।२०)इति च स्मृतिः । तस्मान्न प्रतिपत्तिविधिविषयतया ब्रह्मणः समर्पणम् ।

---

**रत्नप्रभा**

साधनश्रवणादावितिः शेषः । श्रवणस्वरूपमाह—**तस्येति** । **अन्वेषणं** ज्ञानम् । यदिदं जगत्तत् सर्वम् आत्मैवेत्यनात्मबाधेन आत्मा बोध्यते । अद्वितीयादृश्यात्मबोधे क्व विधिः तपस्वी द्वैतवनोपजीवनः स्थास्यतीति भावः । आत्मज्ञानिनः कर्तव्याभावे मानमाह— **तथा चेति** । '**अयं** स्वयंप्रभानन्दः परमात्मा **अहमस्मि**' इति **यदि** कश्चित् पुरुष **आत्मानं** जानीयात्, **तदा किं** फलम् **इच्छन् कस्य** वा भोक्तुः प्रीतये **शरीरं** तप्यमानम् **अनुसंज्वरेत्** तप्येत, भोक्तृभोग्यद्वैताभावात् कृतकृत्य आत्मविदित्यभिप्रायः । ज्ञानदौर्लभ्यार्थः **चेत्**शब्दः । **एतद्** गुह्यतमं तत्त्वम् । वृत्तिकारमतनिरासमुपसंहरति-**तस्मादिति** ।

**पूर्णानन्दीया**

ब्दस्पर्शादिविषयादित्यर्थः । **श्रवणस्वरूपमिति** । अधिकारिणो लाभात्तस्य पुरुषार्थवाञ्छिनस्तत्वज्ञानाय श्रवणस्वरूपमाहेत्यर्थः । अनात्मबोधेनात्मा बोध्यत इत्यनेन श्रवणस्वरूपमुक्तमिति भाव । विधिपदानामुक्तरीत्या गतिसम्भवात् क्व वादिनामवकाश इति वादिनं प्रत्युपहासद्वारा स्वमतं परिष्करोति **अद्वितीयेति** । तपस्विन· अरण्यरूपवनापेक्षाया· सत्त्वादिदमाह **द्वैतेति** । शेषपूर्त्यान्वयं दर्शयति **अहमिति** । श्रुत्यर्थ फलितमाह **भोक्तृभोग्येति** । प्रतीकमादाय एतच्छब्दार्थमाह **एतदिति** ।

**इति वृत्तिकारमतनिरासग्रन्थव्याख्या समाप्ता ।**

यदपि केचिदाहुः—'प्रवृत्तिविधितच्छेषव्यतिरेकेण केवलवस्तुवादी वेदभागो नास्ति' इति, तन्न, औपनिषदस्य पुरुषस्यानन्यशेषत्वात्। योऽसावुप-

## रत्नप्रभा

प्राभाकरोक्तमुपन्यस्यति—**यदपि केचिदिति** । कर्त्तात्मा लोकसिद्धत्वान्न वेदान्तार्थः । तदन्यद् ब्रह्म नास्त्येव वेदस्य कार्यपरत्वेन मानाभावादित्यर्थः । मानाभावोऽसिद्ध इत्याह—**नेति** । अज्ञातस्य फलस्वरूपस्यात्मन उपनिषदेकवेद्यस्याकार्यशेषत्वात् कृत्स्नवेदस्य कार्यपरत्वमसिद्धम् । **न च** प्रवृत्तिनिवृत्तिलिङ्गाभ्यां श्रोतुस्तद्धेतुं कार्यबोधमनुमाय वक्तृवाक्यस्य कार्यपरत्वं निश्चित्य वाक्यस्थपदानां कार्यान्विते शक्तिग्रहान्न सिद्धस्याऽपदार्थस्य वाक्यार्थत्वमिति वाच्यम् । पुत्रस्ते जात इति वाक्यश्रोतुः पितुर्हर्षलिङ्गेनेष्टं पुत्रजन्मानुमाय पुत्रादिपदानां सिद्धे सङ्गतिग्रहात् कार्यान्वितापेक्षयान्वितार्थे शक्तिरित्यङ्गीकारे लाघवात्

## पूर्णानन्दीया

॥ श्रीगुरुभ्यो नम. ॥

**प्राभाकरेति** । प्रकृतसिध्यर्थं प्राभाकरोक्तं दूषयितुमुपन्यस्यतीत्यर्थः । ब्रह्मनास्तिकत्वे तुल्येपि भट्टमते सिद्धे पदानां शक्ति प्रभाकरमते तु कार्यान्वितार्थे शक्तिरिति भेदः । कार्यान्वितार्थे शक्तितौल्येपि वृत्तिकारमते ब्रह्मास्तित्वाङ्गीकारेण मतयोर्भेदो विभावनीयः । **मानाभावादिति** । ब्रह्मसद्भावे मानाभावादित्यर्थः । अज्ञातस्येत्यनेन वेदस्य प्रामाण्य सूचितं, फलस्वरूपस्येत्यनेन कार्यशेषत्वाभावः सूचित इति भाव. । **न च प्रवृत्तीति** । मध्यमवृद्धस्य प्रवृत्तिनिवृत्तिभ्यामित्यर्थः । श्रोतुः मध्यमवृद्धस्येत्यर्थः । **अनुमायेति**। व्युत्पित्सुर्बाल इति शेष. । वक्तृवाक्यस्य उत्तमवृद्धवाक्यस्येत्यर्थः । **श्रोतुरिति** । वाक्यश्रोता पिता मध्यस्थश्च भवति, तथा च मध्यस्थस्य सिद्धे सङ्गतिग्रहादित्यर्थः । पुत्रस्ते जात इति वाक्यश्रवणकाले पितुः हर्षपूर्वकस्नानाद्याचरण दृष्ट्वा पुत्रजन्म हर्षपूर्वकस्नानदानाद्याचरणे निमित्तमिति वाक्यश्रोतुर्मध्यस्थस्य बुद्धिर्भवति तेन हेतुना पुत्रस्ते जात इति वाक्यं पुत्रजन्मप्रतिपादकमित्यनेन मध्यस्थेन निर्णीतमतः प्रथमव्युत्पत्तिग्रह सिद्धस्थलेपि भवतीति न कार्यान्वित एव पदानां शक्तिः । यत्र तु आख्यातपदान्वयः तत्र तत्प्रयुक्तकार्यान्वयो भासत इत्येतावता अन्यत्रापि आख्यातपदरहितः पुत्रस्ते जात इत्यादौ पदानां कार्यान्वितार्थ एव शक्तिरिति कल्पनायामाग्रहो न युक्त इति भाव. । पुत्रादिपदानां सिद्धार्थे व्युत्पत्तिं साधयित्वा कार्यान्वितार्थे पदानां शक्तिर्नास्तीत्यत्र हेतुमाह **कार्यान्वितेति** । नीलमित्युक्ते किं नीलमित्याकाङ्क्षाया अनुभवसिद्धत्वादन्वितार्थे शक्तिर्वक्तव्येत्यभिप्रायेणोक्तम् **अन्वितार्थ इति** । परस्परान्वयविशिष्टार्थ इत्यर्थः । सर्वेषां पदानां सिद्धार्थ एव शक्तिः किन्तु प्रयोजनज्ञानायापेक्षिताव्यवहितसम्बन्धसिध्यर्थमितरपदान्वितमात्रमपेक्षितमित्यन्वितार्थे शक्तिरित्युच्यते लाघवात्तथा च

निषत्स्वेवाधिगतः पुरुषोऽसंसारी ब्रह्म उत्पाद्यादिचतुर्विधद्रव्यविलक्षणः स्वप्रकरणस्थोऽनन्यशेषः, नासौ नास्ति नाधिगम्यत इति वा शक्यं वदितुम्, 'स एष नेति नेत्यात्मा' ( बृह० ३।९।२६ ) इत्यात्मशब्दात्, आत्मनश्च प्रत्याख्यातुमशक्यत्वात् । य एव निराकर्ता तस्यैवात्मत्वप्रसङ्गात् । नन्वात्माहंप्रत्ययविषयत्वादुपनिषत्स्वेव विज्ञायत इत्यनुपपन्नम् । न ।

---

## रत्नप्रभा

सिद्धस्यापि वाक्यार्थत्वादित्यलम् । **किञ्च** ब्रह्मणो नास्तित्वादेव कृत्स्नवेदस्य कार्यपरत्वमुत वेदान्तेषु तस्याभानाद्, अथवा कार्यशेषत्वात्, किंवा लोकसिद्धत्वादाहोस्वित् मानान्तरविरोधात् ? तत्र **आद्यं पक्षत्रयं** निराचष्टे—**योऽसाविति** । अनन्यशेषत्वार्थम**संसारी** इत्यादि विशेषणम् । नास्तित्वाभावे हेतुं वेदान्तमानसिद्धत्वमुक्त्वा हेत्वन्तरमात्मत्वमाह— **स एष इति** । इतिरिदमर्थे । 'इदं न इदं ने'ति सर्वदृश्यनिषेधेन य आत्मा उपदिष्टः स एष इत्यर्थः । **चतुर्थं** शंकते— **नन्वात्माहमिति** । आत्मनोऽहंकारादिसाक्षित्वेनाहंधीविषयत्वस्य निरस्तत्वान्न लोकसिद्धते-

## पूर्णानन्दीया

सिद्धस्य ब्रह्मणो वाक्यार्थत्वादुपनिषदर्थता युक्तेति भावः । 'औपनिषदस्य पुरुषस्यानन्यशेषत्वादिति' वस्तुसङ्ग्रहभाष्य तस्यैव प्रपञ्चः 'योसावुपनिषत्स्वेवाधिगत' इत्यादिभाष्यमित्यभिप्रेत्य सिद्धस्य वाक्यार्थत्वे हेत्वन्तरपरत्वेन भाष्यमवतारयति **किञ्चेति** । उपनिषत्स्वेवाधिगत इत्यनेन भाष्येणाभानादिति पक्षनिराकरणं नास्तित्वादेवेति पक्षनिराकरणं च भवति, अनन्यशेष इत्यनेन तृतीयपक्षनिराकरणमित्यभिप्रेत्याह **तत्राद्यं पक्षत्रयमिति** । **अनन्यशेषत्वार्थमिति** । ब्रह्मणः कार्यशेषत्वं नास्तीत्यनन्यशेषत्वं तदर्थमित्यर्थः । तथा हि ब्रह्मण कार्यशेषत्वं न जीववत्कर्तृत्वेन वक्तुं शक्यते तस्यासंसारित्वात्, नापि घटादिवत्क्रियापेक्षत्वेन तस्य उत्पाद्यादिचतुर्विधद्रव्यभिन्नत्वात्, नापि प्रयाजादिवदितिकर्तव्यतात्वेन तस्य स्वप्रकरणप्रतिपाद्यत्वात्, तस्मादससारित्वादिविशेषणत्रयेणानन्यशेषत्वं ब्रह्मण. सिद्धमिति भावः । वेदान्तेषु स्फुटत्वेन भानादात्मत्वाच्च असौ नास्तीति वदितुं न शक्यमिति भाष्यार्थ । **चतुर्थं शंकत इति** । चतुर्थपक्षमवलम्ब्यावधारणमसहमान. उपनिषत्स्वेव विज्ञायते इति यत्तत्कथमिति शङ्कत इत्यर्थ । अथवा चतुर्थं चतुर्थपक्षमवलम्ब्येत्यर्थः । ब्रह्मण. लोकसिद्धत्वेन वेदस्य कार्यपरत्वं स्यादिति शङ्कत इति भाव । चतुर्थशङ्का भाष्यस्था शंकाचतुष्टयं तु भाष्याद्बहिरिति विज्ञेयम् । **अहंप्रत्ययविषयत्वादिति** । अहंप्रत्ययविषयत्वेन लोकसिद्धत्वादिति भाष्यार्थ । **आत्मन इति** । विशिष्टस्यात्मनः अहंधीविषयत्वेऽपि अहंकारादिदेहपर्यन्तसाक्षिणि केवलात्मन्यहंधीविषयत्वस्य निरस्तत्वादुपनिषद्वेद्यत्वमेव वक्तव्यमतो न चतुर्थ पक्ष इति भाव. । विधिकाण्डे

तत्साक्षित्वेन प्रत्युक्तत्वात् । न ह्यहंप्रत्ययविषयकर्तृव्यतिरेकेण तत्साक्षी सर्वभूतस्थः सम एकः कूटस्थनित्यः पुरुषो विधिकाण्डे तर्कसमये वा केनचिदधिगतः सर्वस्यात्मा, अतः स न केनचित्प्रत्याख्यातुं शक्यो विधिशेषत्वं वा नेतुम् । आत्मत्वादेव च सर्वेषां न हेयो नाप्युपादेयः । सर्वं हि विनश्यद्विकारजातं पुरुषान्तं विनश्यति । पुरुषो हि विनाशहेत्वभावादविनाशी, विक्रियाहेत्वभावाच्च कूटस्थनित्यः, अत एव नित्यशुद्धबुद्धमुक्त-

## रत्नप्रभा

त्याह—नेति । यं तीर्थकारा अपि न जानन्ति तस्यालौकिकत्वं किमु वाच्यमित्याह—**न हीति** । **समः** तारतम्यवर्जितः । तत्तन्मते आत्मानधिगतिद्योतकानि विशेषणानि । **पञ्चमं** निरस्यति—**अत इति** । केनचिद् वादिना प्रमाणेन युक्त्या वेत्यर्थः । अगम्यत्वान्न मानान्तरविरोध इति भावः । साक्षी कर्माङ्गं चेतनत्वात् कर्तृवदिति तत्राह—**विधीति** । अज्ञातसाक्षिणोऽनुपयोगाज्ज्ञातस्य (१)घातकत्वान्न कर्मशेषत्वमित्यर्थः । साक्षिणः सर्वशेषित्वादहेयानुपादेयत्वाच्च न कर्मशेषत्वमित्याह—**आत्मत्वादिति** । अनित्यत्वेनात्मनो हेयत्वमाशंक्याह—**सर्वं हीति** । परिणामित्वेन

## पूर्णानन्दीया

तर्कसमये वेति भाष्यस्य तात्पर्यार्थमाह **तीर्थकारा इति** । शास्त्रकर्तार इत्यर्थ । अलौकिकत्वमुपनिषदेकवेद्यत्वम् । **तत्तन्मत इति** । अहंप्रत्ययविषयेत्यादिविशेषणेन सर्वस्यात्मा हि विशिष्टभिन्नप्रत्यक्चेतनत्वेन मीमासकैर्नाधिगत इति द्योत्यते किन्तु कर्तृत्वेनाधिगत इत्यर्थ.। तत्साक्षीत्यनेन विशेषणेन अहंकारादिसाक्षित्वेन बौद्धैरात्मा नाधिगत. किन्तु देहेन्द्रियादिसघातत्वेनाधिगत इति भावः। सर्वभूतस्थ इत्यनेनासद्वादिना हि सत्त्वेनात्मा नाधिगत किन्त्वसत्त्वेनेत्यर्थ । सम इत्यनेन मध्यमपरिमाणवादिना हि समत्वेनात्मा नाधिगत इति द्योत्यते किन्तु तारतम्येनाधिगत इति भाव. । एक इत्यनेन तार्किकैरेकत्वेनात्मा नाधिगतः किन्तु भिन्नत्वेनेत्यर्थः । कूटस्थ इत्यनेन परिमाणवादिना निर्विकारत्वेनात्मा नाधिगतः किन्तु परिमाणरूपविकारवत्त्वेनेत्यर्थ.। नित्य इत्यनेन क्षणिकविज्ञानवादिना स्थैर्यत्वेनात्मा नाधिगतः किन्तु प्रतिक्षणमुत्पत्त्यादिमत्त्वेनाधिगत इत्यर्थः । पूर्ण इत्यनेन विशेषणेन परिच्छिन्नत्ववादिना सर्वस्यात्मा व्यापकत्वेन नाधिगत इति द्योत्यते किन्त्वव्यापकत्वेनाधिगत इत्यर्थ· । तथाचोक्तविशेषणेन विशिष्टात्मा वेदान्तिभिरेव अधिगत इति भाव· । साक्षित्वेनाज्ञानदशाया कर्माङ्गत्वमुच्यते किं ज्ञानदशायामिति विकल्प्य आद्यं निराचष्टे **अज्ञातेति** । कर्माङ्गत्वानुपयोगादित्यर्थ· । द्वितीयं दूषयति **व्याघातकत्वादिति** । कल्पितसर्वदृश्यसाक्षी अहमित्यद्वैतज्ञानदशायां द्वैतज्ञानाभावेन कर्माङ्गत्वविरोधा-

(१) अत्र 'व्याघातकत्वात्' इति टीकाकारसंमत· पाठ ।

स्वभावः, तस्मात् 'पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः' (काठ० १।३।११) 'तं त्वौपनिषदं पुरुषं पृच्छामि'(बृह०३।९।२६) इति चौपनिषदत्वविशेषणं पुरुषस्योपनिषत्सु(१) प्राधान्येन प्रकाश्यमानत्व उपपद्यते। अतो भूतवस्तुपरो वेदभागो नास्तीति वचनं साहसमात्रम् । यदपि शास्त्रतात्पर्यविदामनुक्रमणम्–'दृष्टो हि तस्यार्थः कर्मावबोधनम्' इत्येवमादि, तद्धर्मजिज्ञासाविषयत्वाद्विधिप्रतिषेधशास्त्राभिप्रायं द्रष्टव्यम् । अपि च 'आ-

## रत्नप्रभा

हेयतां निराचष्टे—**विक्रियेति** । उपादेयत्वं निराचष्टे—**अत एवेति** । निर्विकारित्वादित्यर्थः । उपादेयत्वं हि साध्यस्य, न त्वात्मनः, नित्यसिद्धत्वादित्यर्थः । परप्राप्त्यर्थम् आत्मा हेय इत्यत आह—**तस्मात् पुरुषान्न परं किञ्चिदिति** । **काष्ठा** सर्वस्यावधिः । एवात्मनोऽनन्यशेषत्वादबाध्यत्वादपूर्वत्वाद्वेदान्तेषु स्फुटभावाच्च वेदान्तैकवेद्यत्वमुक्तम् । तत्र श्रुतिमाह—**तन्त्वेति** । तं सकारणसूत्रस्याधिष्ठानम् **पुरुषं** पूर्णम् हे शाकल्य **त्वा** त्वां पृच्छामीत्यर्थः । **अत इति** । उक्तलिङ्गैः श्रुत्या च वेदान्तानामात्मवस्तुपरत्वनिश्चयादित्यर्थः। पूर्वोक्तमनुवदति–**यदपीति** । वेदस्य नैरर्थक्ये शङ्किते तस्यार्थवत्तापरमिदं भाष्यम् । **दृष्टो हीति** । तत्र फलवदर्थावबोधनमिति वक्तव्ये धर्मविचारप्रक्रमात् **कर्मावबोधनमित्युक्तम्**, नैतावता वेदान्तानां ब्रह्मपरत्वनिरासः । अत एवानुपलब्धेऽर्थे "तत्प्रमाणमिति" सूत्रकारो धर्मस्य फलवदज्ञातत्वेनैव वेदार्थतां दर्शयति । तच्चाविशिष्टं ब्रह्मण इति न वृद्धवाक्यै-

## पूर्णानन्दीया

दित्यर्थः । **आशंक्येति** । विज्ञानवादिमतानुसारेणाशंक्येत्यर्थः । **परिणामित्वेनेति** । परिणामवादिमतमनुसृत्यात्मनः परिणामित्वेन हेयत्वमाशङ्क्य निराचष्ट इत्यर्थः । **परप्राप्त्यर्थमिति** । परमुत्कृष्टं ब्रह्म तत्प्राप्त्यर्थं मुमुक्षुणा आत्मा हेयस्त्यक्तुं योग्य इति पूर्वपक्षार्थः । ब्रह्मत्वादात्मैव परस्तस्मान्न हेय इति परिहरति **आहेति** । विकल्पपञ्चकनिरासे उक्तहेतुचतुष्टयमनूद्योत्तरग्रन्थमवतारयति **एवमात्मन इति** । स्फुटम्भानादित्यनेन विकल्पद्वयनिरास इति ज्ञेयम् । **सूत्रस्येति** । हिरण्यगर्भस्येत्यर्थ. ।

भाष्ये प्राभाकरमतनिरासमुपसहरति **अतो भूतवस्त्विति** । **अनुक्रमणमिति** । वेदार्थसङ्ग्राहकवाक्यजातमित्यर्थ. ।

व्याख्याने **पूर्वोक्तमिति** । सिंहावलोकनन्यायेन वृत्तिकारमतोक्तमन्यथा उपपादयितुमनुवदतीत्यर्थः । **भाष्यमिति**। शाबरभाष्यमित्यर्थ· । सूत्रकारो भगवान् जैमिनिरित्यर्थ·। **तच्चेति**। फलवदज्ञातत्वेन वेदार्थत्वमित्यर्थः। ब्रह्मण. फलवत्त्वमविद्यानिवृत्तिरूपफलवत्त्वं त-

(१) उपनिषत्स्वेवेति मा० मु० पुस्तकपाठ ।

म्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' इत्येतदेकान्तेनाभ्युपगच्छतां

**❀ रत्नप्रभा ❀**

विरोध इत्याह—**तद्धर्मेति** । निषेधशास्त्रस्यापि निवृत्तिकार्यपरत्वमस्ति, तत्सूत्रभाष्यवाक्यजातं कर्मकाण्डस्य कार्यपरत्वाभिप्रायमित्यर्थः । **वस्तुतस्तु** लिङर्थे कर्मकाण्डस्य तात्पर्यम् , लिङर्थश्च लोके प्रवर्तकज्ञानगोचरत्वेन क्लृप्तं यागादिक्रियागतमिष्टसाधनत्वमेव, न क्रियातोऽतिरिक्तं कार्यं, तस्य कूर्मलोमवदप्रसिद्धत्वादिति तस्यापि पराभिमतकार्यविलक्षणे सिद्धे दधिसोमादौ प्रामाण्यं किमुत ज्ञानकाण्डस्येति मन्तव्यम् । **किञ्च** वेदान्ताः सिद्धवस्तुपराः फलवद्भूतशब्दत्वाद्दध्यादिशब्दवदित्याह—**अपि चेति** । किमक्रियार्थकशब्दानामानर्थक्यमभिधेयाभावः फलाभावो वा ? **आद्ये** आह—**आम्नायस्येति** । इति न्यायेन **एतदभिधेयराहित्यं नियमेनाङ्गीकुर्वतां** "सोमेन यजेत" "दध्ना जुहोति" इत्यादिवाक्येषु दधिसोमादिशब्दानामर्थ-

**❀ पूर्णानन्दीया ❀**

न्निवृत्तिस्वरूपत्वं वेति विज्ञेयम् । अनुक्रमणशब्दार्थं ज्ञापयितुं तच्छब्दस्य प्रतीकमादायार्थमाह—**तत्सूत्रभाष्यवाक्यजातमिति** । यानि सूत्रवाक्यानि भाष्यवाक्यानि च तेषां समूह इत्यर्थः । कर्मकाण्डस्य कार्यपरत्वमङ्गीकृत्य न ज्ञानकाण्डस्येत्युक्तं सम्प्रति कर्मकाण्डस्यापि न कार्यपरत्वं किन्तु सिद्धपरत्वमेवेत्याह **वस्तुतस्त्विति** । **प्रवर्तकज्ञानगोचरत्वेनेति** । यागो मदिष्टसाधनमिति यत्प्रवृत्तिजनकमिष्टसाधनत्वज्ञानं तद्विषयत्वेनेत्यर्थः । क्लृप्त सिद्धमित्यर्थः । एवकारव्यवच्छेद्यमाह—**न क्रियात इति** । क्रियारूपयागादतिरिक्तापूर्वात्मककार्यं न लिङर्थ इत्यर्थः । **तस्येति** । अपूर्वस्येत्यर्थः । प्रवर्तकज्ञानविषयत्वेन सिद्धस्वरूपेष्टसाधनत्वे लिङर्थस्य शक्तिसम्भवेन प्रत्यक्षादिप्रमाणरहिते कूर्मलोमवदिदप्रसिद्धे साध्ये अपूर्वे तस्य शक्तिकल्पनाया अन्याय्यत्वादिष्टसाधनत्वमेव लिङर्थः नापूर्वं न प्रवर्तना वेति भावः । **तस्यापीति** । कर्मकाण्डस्यापीत्यर्थः । **पराभिमतेति** । प्राभाकराद्यभिमतेत्यर्थः । **सिद्ध इति** । सिद्धस्वरूपेष्टसाधनत्व इत्यर्थः । **किमुतेति** । किमु वक्तव्यमित्यर्थः । ज्ञानकाण्डः सिद्धवस्तुपरः वेदत्वात्कर्मकाण्डवदित्यनेनानुमानेन सिद्धं वेदान्तानां सिद्धवस्तुपरत्वं मनसि निधायानुमानान्तरेणापि साधयतीत्यवतारयति—**किञ्चेति । फलवदिति** । फलवद्यद्भूतं सिद्धं वस्तु तत्प्रतिपादको यः शब्दस्तत्त्वादित्यर्थ. । अतदर्थानामित्यस्य **व्याख्यानमक्रियार्थकशब्दानामिति । अभिधेयाभाव इति** । प्रतिपाद्यरूपार्थशून्यत्वमित्यर्थः । इति पदस्य प्रतीकमादायार्थं परिष्करोति **इति न्यायेनेति** । 'आनर्थक्यमतदर्थानामि'त्येतत्सूत्रप्रतिपादितार्थरीत्येति यावत् । एतत्पदस्य प्रतीकमादायार्थमाह **एतदिति** । **नियमेनेति** । एतत्सूत्रार्थानतिलङ्घनेनेत्यर्थः । **अङ्गीकुर्वतामिति** । वृत्तिकाराणामिति शेषः । भूतोपदेशानामित्याद्यंशस्यार्थमाह **सोमेनेति** ।

भूतोपदेशानर्थक्यप्रसङ्गः, प्रवृत्तिनिवृत्तिविधितच्छेषव्यतिरेकेण भूतं चेद्व-स्तूपदिशति भव्यार्थत्वेन, कूटस्थनित्यं भूतं नोपदिशतीति को हेतुः । न हि भूतमुपदिश्यमानं क्रिया भवति । अक्रियात्वेऽपि भूतस्य क्रियासाधनत्वात्क्रियार्थ एव भूतोपदेश इति चेत् । नैष दोषः । क्रियार्थत्वेऽपि

## ❀ रत्नप्रभा ❀

शून्यत्वं स्यादित्यर्थः । **ननु** केनोक्तमभिधेराहित्यमित्याशंक्याह—**प्रवृत्तीति** । कार्यातिरेकेण भव्यार्थत्वेन कार्यशेषत्वेन दध्यादिशब्दो भूतं वक्ति **चेत्, तर्हि** सत्यादिशब्दः कूटस्थं न वक्तीत्यत्र को हेतुः किं कूटस्थस्याक्रियात्वादुताक्रियाशेषत्वाद्वेति प्रश्नः । **ननु** दध्यादेः कार्यान्वयित्वेन कार्यत्वादुपदेशः न कूटस्थस्याकार्यत्वादित्याद्यमाशंक्य निरस्यति—**न हीति** । दध्यादेः कार्यत्वे कार्याभेदे शेषत्वहानिः अतो भूतस्य कार्योद्भिन्नस्य दध्यादेः शब्दार्थत्वं लब्धमिति भावः । **द्वितीयं** शङ्कते—**अक्रियात्वेपीति** । क्रियार्थः कार्यशेषपरः । कूटस्थस्य त्वकार्यशेषत्वान्नोपदेश इति भावः । भूतस्य कार्यशेषत्वं शब्दार्थत्वाय फलाय वा ? **नाद्य**इत्याह—**नैष दोष**

## ❀ पूर्णानन्दीया ❀

**ननु केनोक्तमिति** । दध्यादिशब्दानामर्थवत्त्वमस्त्विति वदन्त पूर्ववादिनं प्रति प्रतिबन्ध्या परिहारमाहेति भावः । प्रवृत्तिनिवृत्तिव्यतिरेकेणेत्यस्यार्थमाह **कार्यातिरेकेणेति** । कार्यं विनेत्यर्थः। कार्यमवोधयित्वापीति यावत् । प्रतीकमादायार्थमाह **भव्यार्थत्वेनेति** । **वक्तीति** । बोधयतीत्यर्थः । कार्यमबोधयन् दध्यादिशब्दः कार्याय दध्यादिरूपं सिद्ध वस्तु बोधयतीति चेदिति **पूर्वपक्षानुवादः**। को हेतुरित्यत्र किंशब्दः प्रश्नार्थकः, तथा च हेतुविषयकं प्रश्नं हेतूद्घाटनद्वारा विवृणोति **किंकूटस्थस्येति**। कूटस्थस्याक्रियात्वात्सत्यादिशब्दः किं कूटस्थं न वक्तीति पूर्वेणान्वयः, अक्रियात्वादकार्यत्वादित्यर्थः । कार्यभिन्नत्वादिति यावत्। अक्रियाशेषत्वादकार्यशेषत्वादित्यर्थः । **प्रश्नः** सिद्धान्तिप्रश्न **इत्यर्थः**। एवं सिद्धान्तिप्रश्ने स्थिते ह्यक्रियात्वान्न वक्तीति पूर्वपक्ष्युत्तरमुत्थापयति **नन्विति** । नन्वित्यादिग्रन्थः नहीत्यादिपरिहारभाष्यस्य शङ्काग्रन्थः प्रश्नश्च पूर्वपक्ष्युत्तरप्रतिपादकग्रन्थ इति भेद. । कूटस्थाद्वैषम्यमाह **दध्यादेरिति**। **निरस्यतीति** । पूर्वपक्षिणोक्तमाद्यं पक्ष सिद्धान्ती निरस्यतीत्यर्थः। पूर्वपक्ष्युत्तरं खण्डयतीति भाव.। **अत इति** । कार्यशेषत्वेन कार्यत्वाभावादित्यर्थः। यथा दध्यादिशब्द. कार्योद्भिन्न दध्यादिकं सिद्धं वस्तु वक्ति तथा सिद्धं कार्योद्भिन्नं कूटस्थं सत्यादिशब्दो वक्तीति भावः । **द्वितीयं शङ्कत इति** । कूटस्थस्य दध्यादिवैषम्यमुपपादयन् द्वितीयपक्षमुत्थापयतीत्यर्थः । अक्रियाशेषत्वान्न वक्तीति पूर्वपक्षिणा उक्तं प्रश्नस्योत्तरं प्रपञ्चयतीति भावः । पूर्वपक्ष पूरयति **कूटस्थस्य त्विति** । दध्यादेः कार्यस्वरूपत्वाभावेपि कार्यशेषत्वप्राधान्येन दध्यादिशब्दसिद्धं वस्तु वक्तीति युक्तं ब्रह्मणस्तु कार्यशेषत्वाभावात् तच्छेषत्वप्राधान्येन सत्यादिशब्दः कूटस्थं न वक्तीति युक्तं तस्माद्वैष-

क्रियानिर्वर्तनशक्तिमद्वस्तूपदिष्टमेव । क्रियार्थत्वं तु प्रयोजनं तस्य । न चैतावता वस्त्वनुपदिष्टं भवति । यदि नामोपदिष्टं किं तव तेन स्यादिति ।

## रत्नप्रभा

**इति** । दध्यादेः कार्यशेषत्वे सत्यपि शब्देन वस्तुमात्रमेवोपदिष्टं न कार्यान्वयी शब्दार्थः । अन्वितार्थमात्रे शब्दानां शक्तिग्रहणादित्यर्थः । **द्वितीयम्** अङ्गीकरोति—**क्रियार्थत्वं त्विति** । तस्य भूतविशेषस्य दध्यादेः क्रियाशेषत्वं फलमुद्दिश्याङ्गीक्रियत इत्यर्थः । न तु ब्रह्मण इति तुशब्दार्थः । **ननु** भूतस्य कार्यशेषत्वाङ्गीकारे स्वातन्त्र्येण कथं शब्दार्थतेति तत्राह—**न चेति** । फलार्थं शेषत्वाङ्गीकारमात्रेण शब्दार्थत्वभङ्गो नास्तीत्यर्थः । आनर्थक्यं फलाभाव इति पक्षं शङ्कते-**यदीति** । **यद्यपि** दध्यादि स्वतो निष्फलमपि क्रियाद्वारा सफलत्वादुपदिष्टम्, **तथापि** कूटस्थब्रह्मवादिनः क्रियाद्वाराभावात्

## पूर्णानन्दीया

म्यमिति भावः । एवकारपदं व्युत्क्रमेण योजयति **वस्तुमात्रमेवेति** । शक्तिमत्त्वविशेषणव्यावृत्त्यर्थं मात्रपदं तेन वस्तु परिशिष्यते तथा च वस्त्वेवोपदिष्टमिति भावः । अथवा मात्रपदं कार्त्स्न्यार्थकं तथा च वस्तुमात्रं वस्तुत्वावच्छिन्नमित्यर्थः । एवकारव्यावर्त्यमाह—**न कार्यान्वयीति** । कार्यशेषत्वविशिष्टः शब्दार्थो न भवतीत्यर्थः । शब्देनार्थ एवोपदिष्टः न कार्यशेषत्वविशिष्टत्वविशिष्ट इति भाव. । शेषत्ववैशिष्ट्यस्य शक्यतावच्छेदककोटौ निवेशो नास्तीत्यत्र हेतुमाह **अन्वितार्थेति** । पदानां सिद्धार्थ एव शक्तिः परन्तु शाब्दबोधार्थमपेक्षिततद्विषयसंसर्गलाभाय वस्तुतः परस्परान्वितत्वमात्रमपेक्षितमिति यदुक्तं तन्न विस्मर्तव्यमिति भावः । क्रियानिर्वर्तनशक्तिमद्वस्त्विातिशब्देन वस्त्वेवोपदिश्यते तद्वस्तु वस्तुतः कार्योत्पादनशक्तिमद्भवतीति भाष्यार्थः । एतेन क्रियानिर्वर्तनशक्तिमत्पदस्वारस्यात् कार्यान्वितार्थ एव शक्तिरङ्गीकृतेति भ्रमो निरस्तः । तस्य पदस्य वस्तुस्वरूपमात्रकथनपरत्वेन व्याख्यातत्वादिति भावनीयम् । प्रतीकमादाय तच्छब्दार्थमाह **तस्येति** । **न तु ब्रह्मण इति** । ब्रह्मणः स्वतः फलरूपत्वेन फलान्तरापेक्षाभावात्फलमुद्दिश्य कार्यशेषत्वं यद्यपि नास्ति तथापि सत्यादिशब्दार्थतास्त्येवेति भावः । दध्यादिदृष्टान्ते विरोधं पूर्वपक्षी शङ्कते **नन्विति** । भूतस्य दध्यादेरित्यर्थ. । एतावतेत्यस्यार्थमाह—**फलार्थमिति** । वस्त्वनुपदिष्टपदस्यार्थमाह—**शब्देति** । **शब्दार्थतायामिति** । शक्यतावच्छेदककोटावित्यर्थः । **पक्षं शङ्कत इति** । द्वितीयपक्ष शङ्कत इत्यर्थ । क्रियाद्वारा सफलभूतार्थप्रतिपादकत्वाद्दध्यादिशब्दानामानर्थक्य नास्त्येव सत्यादिशब्दानां तु क्रियाद्वारानङ्गीकारेण सफलभूतार्थप्रतिपादकत्वाभावात्कथमानर्थक्यं नास्तीति शङ्कत इति भावः । शङ्कां स्फुटीकर्तुं 'यदि नामोपदिष्ट'मित्यादिभाष्यं व्याचष्टे **यद्यपीति** । **क्रियाद्वारा सफलत्वादिति** । कार्यशेषत्वद्वारा कार्यरूपफलसहितत्वादित्यर्थः । **उपदिष्टमिति** । दध्यादिशब्देनेति शेषः । किं तव तेन स्यादित्यंशस्यार्थमाह—**तथापीति** ।

**उच्यते**—अनवगतात्मवस्तूपदेशश्च तथैव भवितुमर्हति । तदवगत्या मिथ्याज्ञानस्य संसारहेतोर्निवृत्तिः प्रयोजनं क्रियत इत्याविशिष्टमर्थव-

---

**रत्नप्रभा**

तेन दृष्टान्तेन किं फलं स्यादित्यर्थः । भूतस्य साफल्ये क्रियैव द्वारमिति न नियमः, रज्ज्वा ज्ञानमात्रेण साफल्यदर्शनादित्याह—**उच्यते इति । तथैव**—दध्यादिवदेवेत्यर्थः । दध्यादेः क्रियाद्वारा साफल्यं, ब्रह्मणस्तु स्वत इति विशेषे सत्यपि वेदान्तानां सफलभूतार्थकत्वमात्रेण दध्याद्युपदेशसाम्यमित्यनवद्यम् । इदानीं वेदान्तानां

**पूर्णानन्दीया**

**क्रियाद्वाराभावादिति ।** क्रियाद्वाराभावेन तद्द्वारा सफलत्वाभावादित्यर्थ । **तेन दृष्टान्तेनेति ।** दध्यादिदृष्टान्तेनेत्यर्थः । **किं फलं स्यादिति ।** साध्यरूपं फल कथं स्यादित्यर्थः । पक्षे हेत्वसिद्धेरिति शेषः । वेदान्ताः सिद्धवस्तुपराः फलवद्भूतशब्दत्वाद्दध्यादिशब्दावादिति सिद्धान्तिनः पूर्वोक्तमनुमानं तत्र दृष्टान्ते हेतुसत्त्वेपि पक्षे हेत्वसिद्धेस्तेन दृष्टान्तेन सिद्धवस्तुपरत्वरूपं साध्यं कथं सिध्येत् न सिध्यत्येव, तथा च सत्यादिपदविशिष्टवेदान्तानां कार्यपरत्वमेवोचितमिति भावः । यथा दध्यादिशब्दानां फलवत्त्वं तथा ब्रह्मणः फलवत्त्वमस्तीत्येतावन्मात्रप्रतिपादकस्य सिद्धान्तभाष्यस्य तात्पर्यमाह—**दध्यादेः क्रियेति ।** पक्षे हेत्वसिद्धि परिहर्तुं फलितं समानधर्ममाह—**सफलेति । दध्याद्युपदेशेति ।** येन उपदिश्यते स उपदेश इति व्युत्पत्त्या दध्यादिशब्द इत्यर्थः । तथा च पक्षे हेतुसत्त्वादनुमान स्वसाध्यसाधकमिति भाव. ।

श्रीगुरुभ्यो नमः ॥

पुत्रादिपदानां सिद्धेर्थे व्युत्पत्तिदर्शनात्कार्यान्वितापेक्षयान्वितार्थे शक्त्यङ्गीकारे लाघवाच्च चतुर्भिरनन्यशेषत्वाद्युक्तलिङ्गैः श्रुत्या च कार्यशेषत्वनिराकरणद्वारा वेदान्तानामात्मवस्तुपरत्वनिश्चयाच्च कर्मकाण्डस्यापि इष्टसाधनत्वरूपे सिद्धे लिङर्थे तात्पर्यस्य साधित त्वाच्च वेदान्तानां सिद्धब्रह्मपरत्व साधयित्वा सम्प्रति निषेधवाक्यपर्यालोचनयापि सिद्धपरत्वमेवेत्युत्तरभाष्यमवतारयति **इदानीमिति । निषेधवाक्यवदिति ।** क्रियान्वयाभिधानवादिनापि निषेधवाक्यस्य सिद्धार्थपरत्वं वक्तव्यं तद्वदित्यर्थ ।

**भाष्ये एवमाद्येति ।** एवमादिवाक्येषु प्रतिपाद्येत्यर्थ. । आदिशब्देन 'न हन्यान्न पिबेदि'त्यादिवाक्यं गृह्यते । अत्र निवृत्तिशब्देन हननाभावरूपा नञर्थो निवृत्तिरुच्यते सा निवृत्तिर्न च क्रिया—कृतिजन्यकार्यरूपा न भवति अत्यन्ताभावरूपत्वेन सिद्धत्वात् । नापि क्रियासाधनं अभावरूपायाः निवृत्तेः कृतिजन्यकार्यं प्रत्यहेतुत्वात् । अभावप्रत्यक्षे कार्ये विषयत्वेनाभावस्य हेतुत्वात्तद्वारणाय कार्ये कृतिजन्यत्वविशेषणमिति मन्तव्यम् । हन्त्यर्थानुरागेण नञ् इति अत्र तृतीया हेत्वर्थे, अनुरागशब्दः सम्बन्धार्थकः, तथा च हनन-

त्वं क्रियासाधनवस्तूपदेशेन। अपि च 'ब्राह्मणो न हन्तव्यः' इति चैवमाद्या निवृत्तिरुपदिश्यते। न च सा क्रिया, नापि क्रियासाधनम्। अक्रियार्थानामुपदेशोऽनर्थकश्चेत् 'ब्राह्मणो न हन्तव्यः' इत्यादिनिवृत्त्युपदेशा-

रत्नप्रभा

निषेधवाक्यत्रत सिद्धार्थपरत्वमित्याह—**अपि चेति**। नञः प्रकृत्यर्थेन सम्बन्धाद्धननाभावो नञर्थः, इष्टसाधनत्वं तव्यादिप्रत्ययार्थः, इष्टश्चात्र नरकदुःखाभावः, तत्परिपालको हननाभाव इति निषेधवाक्यार्थः। हननाभावो दुःखाभावहेतुरित्युक्ता-

पूर्णानन्दीया

रूपेण हन्त्यर्थेन सह नञ्सम्बन्धादित्यर्थः। हन्त्यर्थसम्बन्धित्वान्नञ् इति फलितार्थः। क्रियाशब्दः कार्यवचनः हननरूपा या क्रिया तस्याः अभावरूपा या, निवृत्तिस्तया उपलक्षितं यदौदासीन्यं तद्व्यतिरेकेणेति उपलक्षितपदमध्याहृत्य भाष्यं योजनीयम्। उपलक्षकत्वं परिपालकत्वं समानकालीनत्व वेति विज्ञेयम्। उपलक्षितपदस्य कृत्यमनुपदं वक्ष्यते। औदासीन्यं नाम पुरुषस्य स्वरूपं तच्च तूष्णींभावः अनादिसिद्धहननप्रागभावो वेति फलितार्थः। यावत्पर्यन्तं पुरुषे हननात्यन्ताभावोऽस्ति तावत्पर्यन्त पुरुषनिष्ठतूष्णीभावरूपनिवृत्तिः हननप्रागभावो वा तथैव तिष्ठतीत्येतावता नञर्थहननात्यन्ताभावरूपया निवृत्त्या हननप्रागभावरूपमौदासीन्यमुपलक्षित भवतीत्युच्यते, तेन प्रकृत्यर्थाभावबुद्धिरौदासीन्यकारणमित्युक्तं, तथा च निवृत्तिमात्रमेव नञर्थः तेनैव प्रकृतकार्यार्थकत्ववारणादौदासीन्यं तु नञर्थ साध्यम्।

ननु तर्हि औदासीन्यप्रतिपादनं किमर्थमिति चेत्। तस्य प्रतिपादनस्य औदासीन्यं नञर्थफलमिति ज्ञापनार्थत्वात्, तस्मान्निवृत्तिव्यतिरेकेण नञः क्रियार्थकत्वं कल्पयितु न शक्यमिति भावः। केचित्तु हननक्रियानिवृत्तिरेव औदासीन्यमिति वदन्ति। **नञश्चेति**। **बोधयतीति**। यत् एष नञ्स्वभाव इत्यन्वयः।

व्याख्याने **प्रकृत्यर्थेनेति**। हननेनेत्यर्थः। सिद्धं दुःखाभावं प्रति हननाभावस्य हेतुत्वासम्भवादौपचारिकं हेतुत्वमिति मत्वाह **तत्परिपालक इति**। परिपालनं रक्षणं तस्य हेतुः परिपालक इत्यर्थः। हननाभावः दुःखाभावस्य यथा स्थितिं करोतीत्येतावता साधनत्वव्यपदेश इति भावः। वाक्यार्थमुक्त्वा प्रकृत्यर्थाभावबुद्धिरौदासीन्यस्थापनकारणमिति तात्पर्यार्थमाह—**हननाभावो दुःखेति**। **अर्थादिति**। व्याप्तिबलादित्यर्थः। **हननान्निवर्तत इति**। निवृत्ति द्विविधा अभावरूपा प्रयत्नविशेषरूपा चेति। नञ्वाच्या अभावरूपा निवृत्तिरुक्ता, तथा च हननाभावो दुःखाभावहेतुरिति प्रकृत्यर्थाभावविशेष्यकबुद्ध्या हनने दुःखसाधनत्वधीद्वारा पुरुषनिष्ठप्रयत्नविशेषरूपा तूष्णीम्भावाख्या निवृत्तिरुत्पद्यते तया अनादिसिद्धहननप्रागभावरूपमौदासीन्यं तथैव स्थाप्यते, तस्मात्प्रकृत्यर्थाभावबुद्धिः परम्परया औदासीन्ये कारणमिति भावः।

नामानर्थक्यं प्राप्तम्। तच्चानिष्टम्। न च स्वभावप्राप्तहन्त्यर्थानुरागेण नञः शक्यमप्राप्तक्रियार्थत्वं कल्पयितुं हननक्रियानिवृत्त्यौदासीन्यव्यतिरे-

रत्नप्रभा

वर्थाद्धननस्य दुःखसाधनत्वधिया पुरुषो निवर्त्तते, **नात्र** नियोगः कश्चिदस्ति, तस्य क्रियातत्साधनदध्यादिविषयत्वात्। **न च** हननाभावरूपा नञ्वाच्या निवृत्तिः क्रिया, अभावत्वात्। नापि क्रियासाधनम्, अभावस्य भावार्थाहेतुत्वाद्भावार्थासत्त्वाच्चेत्यर्थः। अतो निषेधशास्त्रस्य सिद्धार्थे प्रामाण्यमिति भावः। विपक्षे दण्डमाह-**अक्रियेति**। **ननु** स्वभावतो रागतः प्राप्तेन हन्त्यर्थेनानुरागेण नञः सम्बन्धेन हेतुना हननविरोधिनी सङ्कल्पक्रिया बोध्यते, सा च नञर्थरूपा तत्राप्राप्तत्वाद्विधीयते 'अहननं कुर्यात्' इति, तथा च कार्यार्थमिदं वाक्यमित्याशंक्य निषेधति—**न चेति**। औदासीन्यं पुरुषस्य स्वरूपम्, तच्च हननक्रियानिवृत्त्युपलक्षितं निवृत्त्यौदासीन्यम्, हननाभाव इति यावत्, तद्व्यतिरेकेण नञः क्रियार्थत्वं कल्पयितुं न च शक्यमिति **योजना**। मुख्यार्थस्याभावस्य नञर्थत्वसम्भवे तद्विरोधिक्रियालक्षणाया अन्याय्यत्वात्, निषेधवाक्यस्यापि कार्यार्थत्वे विधिनिषेधभेदविप्लवापत्तेश्चेति भावः। **ननु** तदभाववत्तदन्यतद्वि-

पूर्णानन्दीया

ननु नञर्थेन हननाभावेनैव नियोगः साध्यते ततश्च नियोगपर्यवसितं वाक्यमिति तत्राह **नात्र नियोग इति**। नियोगोऽपूर्वमित्यर्थः। नियोगो हि क्रियातत्साधनविषयकः प्रकृते तु नास्ति क्रिया साधनं च येन नियोगस्यावकाश इति भावः।

ननु यागानुष्ठानादिव नञर्थानुष्ठानान्नियोगोऽस्तु तथा च अनुष्ठितनञर्थ एव क्रियेत्यत आह—**न चेति। भावार्थाहेतुत्वादिति**। कार्याहेतुत्वादित्यर्थः। भावार्था**सत्त्वाच्चेति**। अभावस्य कार्यासत्स्वरूपत्वाच्चेत्यर्थः। अभावो नाम कार्यस्यासत्स्वरूप एव विरोधिस्वरूप एवेति यावत्। तथा च अभावः कार्यं प्रति हेतुर्न भवतीति भावः। न चेत्यादिभाष्यस्थपदानि व्याचष्टे **स्वभावत इति। हन्त्यर्थेनेति**—तृतीया सहार्थे। **सङ्कल्पक्रियेति**। अप्राप्ता मानसी सङ्कल्पक्रियेत्यर्थः। न चाभावो नाम भावान्तरव्यतिरेकेण कश्चिदस्ति येन तत्पर्यवसितं वाक्यं स्यात्तस्माद्भावान्तरविधिपरं निषेधवाक्यमिति शङ्ककस्याभिप्रायः। **निषेधतीति**। न चाभावस्तद्बुद्धिगोचरत्वान्निवर्तयितुं शक्यः। न च भावान्तरमेवाभावः तस्याभावस्य सप्रतियोगिकत्वात्तस्मात्सिद्धः पृथगेवाभावः स एव नञ्मुख्यार्थ इत्यभिप्रेत्य वाक्यस्य कार्यार्थकत्वं निषेधतीत्यर्थः। उपलक्षितपदमध्याहृत्य भाष्यं योजयति **औदासीन्यमिति। पुरुषस्य स्वरूपमिति**। पुरुषनिष्ठो धर्म इत्यर्थः। तूष्णीभावः हननप्रागभावो वा धर्म इति द्रष्टव्यम्। निवृत्त्युपलक्षितं तच्च औदासीन्यं निवृत्त्यौदासीन्यमित्यन्वयः। किं द्वयोर्नञर्थता नेत्याह **हननाभाव इति**। हननाभाव एव नञर्थः औदासीन्यं तु नञर्थसाध्यमिति भेदः। **क्रियेति**। सङ्कल्पात्मिका क्रियेत्यर्थः। **विप्लवेति**। नाशेत्यर्थः॥

केण । नञश्चैष स्वभावो यत्स्वसम्बन्धिनोऽभावं बोधयतीति । अभाववु-

## ❧ रत्नप्रभा ❧

रुद्धयोरपि नञः शक्तिः किं न स्याद्, 'अब्राह्मणः अधर्मः' इति प्रयोगदर्शनात्,

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च **नञर्थाः षट्** प्रकीर्तिताः ॥

इत्यनेकार्थत्वादिति **चेत्** । **न** । अनेकार्थत्वस्यान्याय्यत्वादित्याह—**नञश्चेति** । गवादिशब्दानां तु अगत्या नानार्थत्वम् । स्वर्गेषुवाग्वज्रादीनां शक्यपशुसम्बन्धाभावेन लक्षणानवतारात् । अन्यविरुद्धयोस्तु लक्ष्यत्वं युक्तं, शक्यसम्बन्धात् । ब्राह्मणादन्यस्मिन् क्षत्रियादौ धर्मविरुद्धे वा पापे ब्राह्मणाद्यभावस्य नञ्शक्यस्य सम्बन्धात्, प्रकृते चाख्यातयोगान्नञ् प्रसज्यप्रतिषेधक एव, न पर्युदासलक्षक इति मन्तव्यम् । **यद्वा** नञः प्रकृत्या न सम्बन्धः । प्रकृतेः प्रत्ययार्थोपस-

## ❧ पूर्णानन्दीया ❧

विधिप्रतिषेधविभागव्यवहारो न स्यादिति फलितार्थः । **तदभाववदिति** । प्रकृते तच्छब्दत्रयेण हननमुच्यते, अधर्म इति छेदः ।

ननु अनेकार्थत्वस्यान्याय्यत्वे गोपदस्य स्वर्गवाग्वज्रादिषु शक्तिर्न स्यादित्यत आह **गवादिशब्दानां त्विति** । गवादिशब्दानां नानार्थे शक्तिरङ्गीकार्येत्यत्र हेतुमाह **स्वर्गेति** । इषुशब्दो बाणवाचकः, गोपदस्य शक्यार्थः पशुः तत्सम्बन्धः स्वर्गादिषु नास्तीति गोपदस्य लक्षणया स्वर्गाद्यर्थकत्वं न सम्भवतीत्यगत्या नानार्थकत्वमेव निश्चीयत इति भावः । तर्हि प्रकृतेपि दीयतां सैव निश्चयात्मिका दृष्टिरित्याशङ्कां वैषम्येण परिहरति **अन्येति** । नञः शक्यार्थः अभावः तत्सम्बन्धोन्यविरुद्धयोरस्तीति नञो लक्षणयान्यविरुद्धार्थकत्वं कल्पयितुमुचितं तस्मात्तयोः न शक्तिरिति भावः । लक्ष्यत्वमुदाहृत्य दर्शयति **ब्राह्मणादिति** । ननु लिङादिविशिष्टधातुराख्यातपदस्यार्थः, तथा च आख्यातयोगादित्यत्र कथं तस्य आख्यातपदस्य धातुमात्रे प्रयोग इति चेन्न । आख्यातजानि रूपाणीत्यादिवृद्धव्यवहारे आख्यातैकदेशे धातुमात्रेप्याख्यातशब्दप्रयोगस्य दर्शनादित्यभिप्रेत्याह **प्रकृत इति** । न हन्तव्य इत्यादावित्यर्थः । चस्त्वर्थकः । अथवा लक्षणाया अन्याय्यत्वादिति हेत्वन्तरसमुच्चयार्थश्चशब्दः । आख्यातयोगादाख्यातैकदेशधातुयोगादित्यर्थः । **यद्वेति**—द्वितीयव्याख्याने नञ् न धातुयोगः किन्तु आख्यातैकदेशप्रत्यययोग इति भावः । **प्रसज्येति** । प्रसक्तेत्यर्थः । हननमिष्टसाधनमेवेति भ्रान्त्या प्रसक्तहनननिषेधार्थकः नञ्शब्द इत्यर्थः । एवकारव्यावर्त्यमाह **न पर्युदासलक्षक इति** । न विरुद्धसङ्कल्पक्रियालक्षक इत्यर्थः । नञ्शब्दो लक्षणया विरुद्धसंकल्पक्रियार्थको न भवतीति भावः । प्रकृत्यर्थस्य हननस्यैव नञ्शब्दान्वयमङ्गीकृत्य तदभावोर्थान्तरं वा न विधेयमित्युक्तमिदानीं स्वयमेवास्वरसं सूचयन्प्रत्ययार्थ एव नञ् सम्बध्यत इति व्याख्यानान्तरमाह **यद्वेति** ।

द्धिश्चौदासीन्यकारणम् , सा च दग्धेन्धनाग्निवत्स्वयमेवोपशाम्यति । त-

## रत्नप्रभा

र्जनत्वात् प्रधानसम्बन्धाच्चाप्रधानानाम् , किन्तु प्रकृत्यर्थनिष्ठेन प्रत्ययार्थे नेष्टसाधनत्वेन सम्बन्धो नञः । इष्टं च स्वापेक्षया बलवदनिष्टाननुबन्धि यत्तदेव, न तात्कालिकसुखमात्रं विषसंयुक्तान्नभोगस्यापि इष्टत्वापत्तेः, तथा च "न हन्तव्यः" इत्यत्र हननं बलवदनिष्टासाधनत्वे सति इष्टसाधनं न भवतीत्यर्थः । अत्र च "हन्तव्य." इति हनने विशिष्टेष्टसाधनत्वं भ्रान्तिप्राप्तमनूद्य नेत्यभावबोधने बलवदनिष्टसाधनं हननमिति बुद्धिर्भवति, हनने तात्कालिकेष्टसाधनत्वरूपविशेष्यसत्त्वेन विशिष्टाभावबुद्धेर्विशेषणाभावपर्यवसानात् । विशेषणं बलवदनिष्टासाधनत्वमिति तदभावो बलवदनिष्टसाधनत्वं नञर्थ इति पर्यवसन्नम् । तद्बुद्धिरौदासीन्यपरिपालिकेत्याह–**अभावेति** । **चोऽप्यर्थः** पक्षान्तरद्योती प्रकृत्यर्थाभावबुद्धिवत् प्रत्ययार्थाभावबुद्धिरपीत्यर्थः। बुद्धेः क्षणिकत्वात्तद-

## पूर्णानन्दीया

ननु भवतु प्रकृतेरुपसर्जनत्वं तथापि प्रकृत्या सह नञ्सम्बन्धः स्यादित्यत आह **प्रधानेति** । प्रत्ययार्थः प्रधानं तेनैव सम्बन्धो वक्तव्य इति भाव. । तदेतदाह **किंत्विति** । इष्टस्य विशेषणमाह **इष्टं चेति** । **स्वापेक्षयेति** । इष्टापेक्षयेत्यर्थ । बलवत् यदनिष्टं तदननुबन्धि तदसंबन्धीत्यर्थः । बलवदनिष्टासाधनत्वे सतीष्टसाधनत्वं तव्यप्रत्ययार्थ इति स्फुटीकर्तुं इष्टविशेषणेन पर्यवसितमिष्टसाधनत्वस्य विशेषणं कथयन्नन्वयमाह **अत्रेति** । **विशिष्टेति** । विशिष्टं च तत् इष्टसाधनत्व चेति कर्मधारय , तथाच हननं बलवदनिष्टासाधन सत् इष्टसाधनमिति हनने बलवदनिष्टासाधनत्वविशिष्टेष्टसाधनत्वं भ्रान्तिप्राप्तमनूद्येत्यर्थः । बलवदनिष्टसाधनं हननमिति बुद्धिर्भवतीति यत्तत्कथमित्यत आह(१) **हनने तावदिति** । अत्र हनने विशिष्टेष्टसाधनत्वमनूद्य नेत्यभावबोधनेन प्राप्तो विशिष्टाभावो विशेषणाभावायत्त इत्याह **विशिष्टाभावेति** । विशेषणविशिष्टस्याभाव. तत् बुद्धेर्विशेषणाभावे पर्यवसानादित्यर्थ. । हनने बलवदनिष्टसाधनत्वस्य सत्वात् तात्कालिकेष्टसाधनत्वरूपविशेष्यस्य सत्त्वाच्च बलवदनिष्टासाधनत्वरूपविशेषणाभावादेव बलवदनिष्टासाधनत्वविशिष्टेष्टसाधनत्वाभावो वक्तव्य इति विशिष्टाभावो नञर्थ इत्यनेन विशेषणाभाव एव पर्यवसानान्नञर्थ इत्युक्तमिति भावः । किं तद्विशेषणमिति जिज्ञासायामाह **विशेषणं चेति** । बलवदनिष्टसाधनत्वं नञर्थ इति बलवदनिष्टसाधनत्वशरीरप्रविष्टाभावांशो नञर्थ इत्युक्तमिति भाव । बलवदनिष्टासाधनत्वं नाम बलवदनिष्टसाधनत्वाभाव., तस्य तव्यप्रत्ययार्थैकदेशस्य विशेषणस्य योऽभावः नञर्थरूपः सन् बलवदनिष्टसाधनत्वरूप एव अभावाभावस्य भावरूपत्वात् ; तथा च चरमाभावागमादाय बलवदनिष्टसाधनत्व नञर्थ इति भाव. । **परिपालिकेति** । रक्षणहेतुरित्यर्थ. । **प्रकृत्यर्थाभाव-**

---

(१ हनने तात्कालिकेति' रत्नप्रभापाठदर्शनादिद प्रतीकग्रहण प्रामादिक प्रतिभाति ।

स्मात्प्रसक्तक्रियानिवृत्त्यौदासीन्यमेव 'ब्राह्मणो न हन्तव्यः' इत्यादिषु प्रतिषेधार्थं मन्यामहे, अन्यत्र प्रजापतिव्रतादिभ्यः । तस्मात्पुरुषार्थानुप-

### रत्नप्रभा

भावे सत्यौदासीन्यात् प्रच्युतिरूपा हननादौ प्रवृत्तिः स्यादिति तत्राह—**सा चेति** । यथाग्निरिन्धनं दग्ध्वा शाम्यति, एवं सा नञर्थाभावबुद्धिः हननादावनिष्टसाधनत्वभ्रान्तिमूलं रागेन्धनं दग्ध्वैव शाम्यतीत्यक्षरार्थः । रागनाशे कुतः प्रच्युतिरिति भावः । यद्वा रागतः प्राप्ता सा क्रिया रागनाशे स्वयमेव शाम्यतीत्यर्थः । परपक्षे तु हननविरोधिक्रिया कार्येत्युक्तेऽपि हननस्येष्टसाधनत्वभ्रान्त्यनिरासात् प्रच्युतिर्दुर्वारा । तस्मात्तदभाव एव नञर्थ इत्युपसंहरति—**तस्मादिति** । भावार्थाभावेन तद्विषय-

### पूर्णानन्दीया

**बुद्धिवदिति** । यथा हननाभावबुद्धिरौदासीन्ये कारण तथा विशेषणविशिष्टविशेष्यं तव्यप्रत्ययार्थस्तदभावो नञर्थः तद्बुद्धिरौदासीन्ये कारणमित्यर्थः । प्रथमव्याख्याने हननाभावो दुखाभावहेतुरिति प्रकृत्यर्थाभावविशेष्यकदुःखाभावहेतुत्वप्रकारकबुध्या हननं दुःख साधनमिति अर्थात् ज्ञानमुत्पद्यते तेन ज्ञानेन हननस्य इष्टसाधनत्वभ्रान्तिनिवृत्तिद्वारा हननात्पुरुषो निवर्तते इति प्रयत्नरूपा निवृत्तिरुत्पद्यते तया सिद्धमौदासीन्यं हननप्रागभावरूपं तथैव तिष्ठतीति प्रकृत्यर्थाभावबुद्धिरौदासीन्ये कारणमिति व्यपदिश्यते । द्वितीयव्याख्याने तु हननं बलवदनिष्टसाधनमिति हननविशेष्यकप्रत्ययार्थैकदेशस्य भावप्रकारकबुध्या हनने विशिष्टेष्टसाधनत्वभ्रान्तिनाशद्वारा हननात्पुरुषो निवर्तते इति प्रयत्नरूपा निवृत्तिरुत्पद्यते तया हननप्रागभावरूपमौदासीन्यं सिद्धं तथैव तिष्ठति तस्मात्प्रत्ययार्थाभावबुद्धिरौदासीन्ये कारणमिति व्यपदिश्यत इति निष्कृष्टार्थः । प्रथमव्याख्यानेऽनिष्टसाधनत्वमार्थिकं तया बोध्यते द्वितीये तु प्रत्ययनञ्शब्दाभ्या बोध्यते इति भेदः । प्रथमे इष्टसाधनत्वमात्रं तव्यप्रत्ययार्थः तेनैव उक्तरीत्या औदासीन्यानिर्वाहात्, द्वितीये बलवदनिष्टासाधनत्वाविशिष्ट साधनत्वं तव्यप्रयार्थ इति भेद. । **औदासीन्यात्प्रच्युतिरूपेति** । औदासीन्यनाशरूपेत्यर्थ । यदा पुरुषस्य हनने प्रवृत्तिस्तदा हननप्रागभावनाशो भवतीति प्रागभावनाशरूपा प्रवृत्तिरिति भाव. ।

ननु नञर्थाभावबुद्धिनाशोक्त्या शङ्कायाः क परिहार इत्यत आह **इत्यक्षरार्थ इति** । तात्पर्यार्थेन शङ्कां परिहरति **रागनाश इति** । अक्षरार्थेन शङ्कां परिहर्तुं व्याख्यानान्तरमाह **यद्वेति** । सा **क्रियेति** । हनने प्रवृत्तिरूपा क्रियेत्यर्थः । अनिष्टसाधनत्वज्ञानेन रागनाशात् स्वयमेव क्रिया शाम्यतीति भावः । **परपक्षे त्विति** । निषेधवाक्यस्य कार्यपरत्वपक्ष इत्यर्थः । 'तस्मात्प्रसक्तक्रियानिवृत्त्यौदासीन्यमेवे'त्याद्युपसंहारभाष्यार्थं सगृह्णाति **तस्मात्तदभाव एव नञर्थ इति** । तस्मान्नञर्थकार्यार्थकत्वाभावादित्यर्थः । तदभाव· तयोरभाव इति विग्रहः, तयो· प्रकृत्यर्थप्रत्ययार्थयोरभाव एव इत्यनेन

**रत्नप्रभा**

कक्रृत्यभावात् कार्याभावस्तच्छब्दार्थः । यद्वेत्युक्तपक्षे निवृत्त्युपलक्षितमौदासीन्यं यस्माद्विशिष्टाभावायत्तमेवेति व्याख्येयम् । स्वतःसिद्धस्यौदासीन्यस्य नञर्थ-

**पूर्णानन्दीया**

प्रसक्तक्रियेत्यादिभाष्यार्थ इति, नञर्थ इत्यनेन प्रतिषेधार्थ इति भाष्यार्थश्च संगृहीत इति भावः । एवकारो तदन्यतद्विरुद्धव्यवच्छेदार्थक' ।

ननु हननाभावे इष्टसाधनमिति ज्ञानस्य जायमानत्वेन विधेयत्वात् कथं निषेधवाक्यस्य कार्यार्थकत्वं नास्तीत्यत आह—**भावार्थाभावेनेति** । विधेयार्थाभावेनेत्यर्थः । मानसं तु ज्ञानं प्रमाणप्रमेयजन्यं न कृतिजन्यकार्यं तस्मान्न कार्यपरत्वं वाक्यस्येति भावः । प्रसक्तक्रियानिवृत्त्यौदासीन्यं यस्माद्विशिष्टाभावायत्त तस्माद्विशिष्टाभावमेव 'ब्राह्मणो न हन्तव्य' इत्यादिषु प्रतिषेधार्थं मन्यामह इत्यपेक्षितपदान्यध्याहृत्य उपसंहारभाष्यं व्याख्येयमित्याह—**यद्वेति** । यद्वा नञ्प्रकृत्येत्युक्तपक्ष इत्यर्थः । **यस्मादिति** । नञ्कार्यार्थकत्वाभावादित्यर्थः । औदासीन्य विशिष्टाभावसाध्यमेव न कार्यसाध्य कार्यस्याभावादित्यभिप्रेत्योक्तं विशिष्टाभावायत्तमिति । **यद्वेति**—द्वितीयव्याख्याने बलवदनिष्टासाधनत्वविशिष्टेष्टसाधनत्व तव्यप्रत्ययार्थं इत्युक्त तथा च विशिष्टस्य प्रत्ययार्थस्यै यः अभावः तेनायत्तं सम्पादितमित्यर्थः । निवृत्त्युपलक्षितमौदासीन्यं यस्मान्नञ्कार्यार्थकत्वाभावाद्विशिष्टाभावायत्तमेव न कार्यायत्तं तस्मान्नञ्कार्यार्थकत्वाभावेन औदासीन्यस्य विशिष्टाभावायत्तत्वाद्विशिष्टाभाव एव नञर्थ इति पदजातमध्याहृत्य उपसंहारवाक्यं यद्वेति पक्षे व्याख्येयमिति फलितार्थः । औदासीन्यं हि नञर्थायत्त तस्य विशिष्टाभावायत्तं चेद्विशिष्टाभाव एव नञर्थ इति पर्यवसितमिति भाव । एतेन प्रथमपक्षोक्तप्रकृत्यर्थाभाव एवोपसंहृतः न प्रत्ययार्थाभावः द्वितीयपक्षोक्त· वाक्यस्य तद्बोधकत्वाभावादिति निरस्तम् । अध्याहारेण वाक्यस्य प्रत्ययार्थाभावबोधकत्वेनापि व्याख्यातत्वादिति सुधीभिर्विभावनीयम् ।

ननु प्रथमव्याख्याने हननाभावः द्वितीये विशिष्टाभावो नञर्थश्चेत्तत्साध्यमौदासीन्यं भवत्येव किमुपलक्षितत्वविशेषणेनेत्यत आह—**स्वतःसिद्धस्येति** । अत्राभावरूपा निवृत्ति' नञर्थ· प्रकृत्यर्थाभावबुद्धौ प्रकृत्यर्थाभावस्य नञर्थस्य हेतुत्वं विद्यते प्रमायाः वस्तुतन्त्रत्वात्तद्बुद्धिद्वारा प्रयत्नरूपनिवृत्तिं प्रति हेतुत्व नञर्थस्य निवृत्तिद्वारा हेतुत्वमौदासीन्यं प्रति तस्मान्नञर्थसाध्यत्वमौदासीन्यस्येति भाव· । एवं प्रत्ययार्थाभावबुद्धौ विज्ञेयम् ।

नन्वनादिसिद्धस्य प्रागभावरूपस्यौदासीन्य कथं तत्साध्यत्वमिति चेत् । साध्योपरागेणेति ब्रूम· । तथाहि यदा हि पुरुषे प्रयत्नविशेषरूपा निवृत्तिस्तदा हननप्रागभाव इत्यन्वयव्याप्तिबलात्सामानाधिकरण्येन सम्बन्धेन सिद्धस्य निवृत्तिरूपसाध्यसम्बन्धित्वमित्येतावता साध्यत्वमौपचारिकमित्यनवद्यम् ।

**रत्नप्रभा**

साध्यत्वोपपादनार्थम् निवृत्त्युपलक्षितत्वमिति ध्येयम् । तस्य बटोर्व्रतमित्यनुष्ठेयक्रियावाचिव्रतशब्देन कार्यमुपक्रम्य "नेक्षेतोद्यन्तमादित्यम्" इति प्रजापतिव्रतमुक्तम् । अत उपक्रमबलात्तत्र नञ ईक्षणविरोधिसङ्कल्पक्रियालक्षणाङ्गीकृता, एवमगौरसुरा अधर्म इत्यादौ नामधात्वर्थयुक्तस्य नञः प्रतिषेधवाचित्वायोगाद् अन्यविरुद्धलक्षकत्वम् । एतेभ्यः प्रजापतिव्रतादिभ्योऽन्यत्राभावमेव नञर्थं मन्यामह इत्यर्थः । दुःखाभावफलके नञर्थे सिद्धे निषेधशास्त्रमानत्ववद्वेदान्तानां ब्रह्मणि मानत्वमितिभावः । तर्ह्याक्रियार्थानामानर्थक्यमिति सूत्रं किंविषयमिति तत्राह—**तस्मा-**

**पूर्णानन्दीया**

ननु 'नेक्षेतोद्यन्तमादित्यमि'त्यादौ ईक्षणविरोधिनी मानसीसङ्कल्पक्रिया नेक्षेतेति विधीयते यथा तथा 'न हन्यादिति' हननविरोधिनी मानसी सङ्कल्पक्रिया एव विधीयतामित्यत आह—**तस्य बटोरिति** । प्राजापत्यसंज्ञकं व्रतमित्यर्थः । तस्य बटोर्व्रतामिति गुरुशुश्रूषाद्यनुष्ठेयक्रियारूपकार्योपक्रमात्तु विरोधिसङ्कल्पक्रियायां नञ्शब्दस्य लक्षणा अङ्गीकृता तद्वदत्र किं नापवादकं किञ्चिदस्ति येन विरोधिक्रियायां लक्षणामङ्गीकृत्य सा विधीयेतेति भावः । **नामधात्वर्थेति** । 'अगौरसुरा' इत्यादौ नामार्थयुक्तत्वं 'नेक्षेते'त्यत्र धात्वर्थयुक्तत्वामिति विवेकः । 'प्रजापतिव्रतादिभ्योऽन्यत्र ब्राह्मणो न हन्तव्य' इत्यादिषु प्रतिषेधार्थं मन्यामह इति भाष्ययोजनामभिप्रेत्य व्याचष्टे **एतेभ्य इति** । अन्यत्र अन्येषु ब्राह्मणो न हन्तव्य इत्यादिष्वित्यर्थः ।

ननु 'न हन्यादि'त्यादौ धात्वर्थयोगे सति नञः कथमभावार्थकत्वं 'नामधात्वर्थयोगे तु नैव नञ् प्रतिषेधक' इति वचनविरोधात्। अत्रोच्यते । वचनस्यायमभिप्रायः—यत्रापवादकमस्ति तत्र नामधात्वर्थयोगेपि स नैवाभावार्थको नञ् भवतीति, अत एव 'नेक्षेतोद्यन्तमादित्यमि'त्यत्र कार्योपक्रमस्यापवादकस्य सत्त्वान्नञो नाभावार्थकत्वं किन्तु ईक्षणविरोधिसङ्कल्पक्रियार्थकत्वं 'न हन्यादि'त्यादौ तु कस्यचिदप्यपवादकस्याभावान्नञः अभावार्थकत्वमेव युक्तमिति श्रीविवरणाचार्यैर्बहुधा प्रपञ्चितम् , तस्माद्वचनविरोधाभावा'न्न हन्यादि'त्यादौ धात्वर्थाद्यन्वितोपि नञ् प्रतिषेधार्थक एवेति भावः ।

**नञ्भाष्यग्रन्थव्याख्या समाप्ता ॥**

थ्योग्युपाख्यानादिभूतार्थवादविषयमानर्थक्याभिधानं द्रष्टव्यम् । यदप्युक्तं-'कर्तव्यविध्यनुप्रवेशमन्तरेण वस्तुमात्रमुच्यमानमनर्थकं स्यात् 'सप्तद्वीपा वसुमती' इत्यादिवत्'इति, तत्परिहृतम्, रज्जुरियं नायं सर्प इति वस्तुमात्रकथनेऽपि प्रयोजनस्य दृष्टत्वात् । **ननु** श्रुतब्रह्मणोऽपि यथापूर्वं संसारित्वदर्शनान्न रज्जुस्वरूपकथनवदर्थवत्त्वमित्युक्तम् । **अत्रोच्यते**-नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वं शक्यं दर्शयितुं वेदप्रमाणजनितब्रह्मात्मभावविरोधात् । न हि शरीराद्यात्माभिमानिनो दुःखभयादिमत्त्वं दृष्टमिति तस्यैव वेदप्रमाणजनितब्रह्मात्मावगमे तदभिमाननिवृत्तौ तदेव मिथ्याज्ञाननिमित्तं दुःखभयादिमत्त्वं भवतीति शक्यं कल्पयितुम् । न हि धनिनो गृहस्थस्य धनाभिमानिनो धनापहारनिमित्तं दुःखं दृष्टमिति तस्यैव प्रव्राजितस्य धनाभिमानरहितस्य तदेव धनापहारनिमित्तं दुःखं भवति । न च कुण्डलिनः कुण्डलित्वाभिमाननिमित्तं सुखं दृष्टमिति तस्यैव कुण्डलवियुक्तस्य कुण्डलित्वाभिमानरहितस्य तदेव कुण्डलित्वाभिमाननिमित्तं

---

**रत्नप्रभा**

**दिति** । वेदान्तानां स्वार्थे फलवत्त्वाद्व्यर्थकथाविषयं तदित्यर्थः । **यदपीत्यादि** स्पष्टार्थम् । श्रवणज्ञानमात्रात् संसारानिवृत्तावपि साक्षात्काराज्जीवत एव मुक्तिर्दुरपह्नवेति सदृष्टान्तमाह-**अत्रोच्यते इत्यादिना** । ब्रह्माहमिति साक्षात्कारविरोधादित्यर्थः ।

**पूर्णानन्दीया**

श्रीगुरुभ्यो नमः ॥

तस्मादित्यस्यार्थमाह-**वेदान्तानां स्वार्थे फलवत्त्वादिति** । पुरुषार्थानुपयोगादित्यस्यार्थमाह—**व्यर्थेति** । उपाख्यानपदस्यार्थमाह—**कथेति** । व्यर्थकथाप्रतिपादकार्थवादविषयमानर्थक्यसूत्रमित्यर्थः ।

भाष्ये सिंहावलोकनन्यायेन वृत्तिकारमतोक्तमनुवदति—**यदप्युक्तमिति** । राजासौ गच्छतीति वाक्यमादिशब्दग्राह्यम् । यथा लोकवार्ता निमित्तीकृत्य प्रवृत्तस्य राजासौ गच्छतीति सिद्धराजगमनप्रतिपादकवाक्यस्य प्रयोजनाभावः तद्वद्वेदान्तशास्त्रस्येति भावः । **दृष्टत्वादिति** । तथा च दृष्टान्तवैषम्यमिति भावः । **नहि शरीराद्यात्मेति** । भयादिमत्त्वं नहि भवतीत्यन्वयः । **मिथ्याज्ञाननिमित्तमिति** । देहाभिमाननिमित्तमित्यर्थः । **नहि धनिन इति** । दुःखं नहि भवतीत्यन्वयः । सुखं नहि भवतीत्यन्वयः ।

व्याख्याने **साक्षात्कारादिति** । देहे विद्यमानेपि साक्षात्कारेण देहाभिमानाभा-

सुखं भवति । तदुक्तं श्रुत्या–'अशरीरं वावसन्तं न प्रियाप्रिये स्पृशतः' (छान्दो० ८।१२।१) इति । शरीरे पतितेऽशरीरत्वं स्यात् न जीवत इति चेन्न । सशरीरत्वस्य मिथ्याज्ञाननिमित्तत्वात् । न ह्यात्मनः शरीरात्माभिमानलक्षणं मिथ्याज्ञानं मुक्त्वाऽन्यतः सशरीरत्वं शक्यं कल्पयितुम् । नित्यमशरीरत्वमकर्मनिमित्तत्वादित्यवोचाम । तत्कृतधर्माधर्मनिमित्तं सशरीरत्वमिति चेन्न । शरीरसम्बन्धस्यासिद्धत्वाद्धर्माधर्मयोरात्मकृतत्वासिद्धेः । शरीरसम्बन्धस्य धर्माधर्मयोस्तत्कृतत्वस्य चेतरेतराश्रयत्वप्रसङ्गादन्धपरम्परैषानादित्वकल्पना । क्रियासमवायाभावाच्चात्मनः कर्तृत्वानुपपत्तेः । सं-

**रत्नप्रभा**

तत्त्वविदा जीवन्मुक्तौ मानमाह—**तदुक्तं श्रुत्येति** । जीवतोऽशरीरत्वं विरुद्धमिति शङ्कते—**शरीर इति** । आत्मनो देहसम्बन्धस्य भ्रान्तिप्रयुक्तत्वात्तत्त्वधिया तन्नाशरूपमशरीरत्वं जीवतो युक्तमित्याह—**नेत्यादिना** । असङ्गात्मस्वरूपं त्वशरीरत्वं भ्रान्त्यावृतं तत्त्वधिया जीवतो व्यज्यत इत्याह—**नित्यमिति** । देहात्मनोः सम्बन्धः सत्य इति शङ्कते—**तत्कृतेति** । तन्नाशार्थं कार्यापेक्षेति भावः । आत्मनः शरीरसम्बन्धे जाते धर्माधर्मोत्पत्तिः, तस्यां सत्यां सम्बन्धजन्मेत्यन्योन्याश्रयादेकस्यासिद्धया

**पूर्णानन्दीया**

वात् जीवतोपि मुक्तिर्दुरपन्हवेति सदृष्टान्तमाहेत्यर्थः । **जीवन्मुक्ताविति** । देहाभिमानराहित्यमभिव्यक्तासङ्गात्मस्वरूपं जीवन्मुक्तिः तस्यामित्यर्थः । **जीवतोऽशरीरत्वमिति** । अशरीरत्वं श्रुत्या प्रतिपाद्यते तदेव जीवन्मुक्तिश्चेत् जीवतः पुरुषस्य शरीरसम्बन्धराहित्यरूपाशरीरत्वस्य विरुद्धत्वान्न जीवन्मुक्तिरिति शङ्कार्थः । न च शरीरसम्बन्धराहित्यमशरीरत्वं किन्तु तत्त्वज्ञानेन आत्मनो देहसम्बन्धभ्रान्तिनाशात् शरीराद्यभिमानराहित्यं भवति तदेवाशरीरत्वं तदेव च जीवन्मुक्तिस्तथा च न जीवतो जीवन्मुक्तिविरोध इति प्रतिपादकं भाष्यमवतारयति—**असङ्गात्मस्वरूपं त्विति** । तुशब्दः पक्षान्तरद्योतकः । नित्यस्यासङ्गात्मस्वरूपस्य तत्त्वज्ञानेनाभिव्यक्तिः अभिव्यङ्ग्यासङ्गात्मस्वरूपं वा जीवन्मुक्तिरित्यर्थः । **अवोचामेति** । अनुष्ठेयकर्मफलविलक्षणं मोक्षाख्यमशरीरं नित्यमिति सिद्धमित्यत्रावोचामेति भाष्यार्थः । **तन्नाशार्थमिति** । अनादिसिद्धत्वेन सत्यो यः सम्बन्धस्तन्नाशार्थमुपासनारूपकार्यापेक्षेति वेदान्तानां कार्यपरत्वमिति भावः । 'आत्मनः शरीरे'त्यादि 'प्रत्यक्ष' इत्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः । प्रत्यक्षः प्रत्यक्षविषय इत्यर्थः । प्रत्यक्षेणात्मनः पूर्वकर्मकृतत्वविशिष्टदेहसम्बन्धो नहि दृश्यते इति भावः । 'नाप्यस्ति कश्चि'दित्यादि 'येन तस्य गौणमुख्यते'त्यतः प्राक्तनो ग्रन्थस्त्वतिरोहितार्थः । येन पुरुषेणेत्यर्थः । तस्य वस्तुभेदज्ञानवतः पुरुषस्येत्यर्थः ।

निधानमात्रेण राजप्रभृतीनां दृष्टं कर्तृत्वमिति चेन्न । धनदानाद्युपार्जित-वृत्त्यसम्बन्धित्वात्तेषां कर्तृत्वोपपत्तेः । न त्वात्मनो धनदानादिवच्छरीरा-दिभिः स्वस्वामिसम्बन्धनिमित्तं किञ्चिच्छक्यं कल्पयितुम् । मिथ्याभिमा-नस्तु प्रत्यक्षः सम्बन्धहेतुः । एतेन यजमानत्वमात्मनो व्याख्यातम् । अत्राहुः—देहादिव्यतिरिक्तस्यात्मन आत्मीये देहादावभिमानो गौणो न मिथ्येति चेन्न । प्रसिद्धवस्तुभेदस्य गौणत्वमुख्यत्वप्रसिद्धेः । यस्य हि प्रसिद्धो वस्तुभेदः, यथा केसरादिमानाकृतिविशेषोऽन्वयव्यतिरेकाभ्यां सिंहशब्दप्रत्ययभाङ्मुख्योऽन्यः प्रसिद्धः, ततश्चान्यः पुरुषः प्रायिकैः क्रौ-

---

❀ रत्नप्रभा ❀

द्वितीयस्यासिद्धिः स्यादिति परिहरति—नेत्यादिना । नन्वेतद्देहजन्यधर्माधर्मकर्मण एतद्देहसम्बन्धहेतुत्वे स्यादन्योन्याश्रयः, पूर्वदेहकर्मण एतद्देहसम्बन्धोत्पत्तिः, पूर्वदेहश्च तत्पूर्वदेहकृतकर्मण इति बीजाङ्कुरवदनादित्वान्नायं दोष इत्यत आह—**अन्धेति** । अप्रामाणिकीत्यर्थः । न हि बीजादङ्कुरः ततो बीजान्तरं च यथा प्रत्यक्षेण दृश्यते तद्वदात्मनो देहसम्बन्धः पूर्वकर्मकृतः प्रत्यक्षः, नाप्यस्ति कश्चिदागमः प्रत्युत 'असङ्गो ही'त्यादिः श्रुतिः सर्वकर्तृत्वं वारयतीति भावः । तत्र युक्तिमाह—**क्रियेति** । कूटस्थस्य कृत्ययोगान्न कर्तृत्वमित्यर्थः । स्वतो निष्क्रियस्यापि कारकसन्निधानात् कर्तृत्वमिति शङ्कां दृष्टान्तवैषम्येण निरस्यति—**नेति** । राजादीनां स्वक्रीतभृत्यकार्ये कर्तृत्वं युक्तं नात्मन इत्यर्थः । देहकर्मणोरविद्याभूमौ बीजाङ्कुरवदावर्तमानयोरात्मना सम्बन्धो भ्रान्तिकृत एवेत्याह—**मिथ्येति** । ननु "यजेत" इति विध्यनुपपत्त्यात्मनः

❀ पूर्णानन्दीया ❀

भाष्ये—ये तु देहादावात्माभिमानो न मिथ्या किन्तु आत्मीयत्वगुणयोगाद्गौण. मा-णवकादौ सिंहाद्यभिमान इतीवेति वदन्ति तन्मतं दूषयितुं उपन्यस्यति—**अत्राहुरिति** । आत्मीयत्वगुणं ज्ञापयति **आत्मीयेति** । आत्मीयत्वं आत्मसम्बन्धित्व तच्चात्मसम्बन्ध एव स च द्विनिष्ठत्वाद्गुण इति भाव । अत्र देहेऽहमिति भासमानत्वं वा गुण इति विज्ञे-यम् । सङ्ग्रहवाक्य विवृणोति **यस्य हि प्रसिद्ध इति** । यस्य चैत्रस्य मैत्रसिंहयोर्भेद प्रसिद्ध इत्यर्थ । **ततश्चान्य इति** । मुख्यात् सिंहादन्यो मैत्र इत्यर्थ । **तस्येति** । चैत्रस्येत्यर्थः । **तस्मिन् पुरुषे इति** । सिंहादन्यस्मिन्मैत्रनामके पुरुष इत्यर्थ । सिंहा-दन्यो मैत्रो मैत्रादन्यः सिह इति परस्परभेदज्ञानवतश्चैत्रस्य सिंहे सिंहशब्दप्रत्ययौ मु-ख्यौ मैत्रे तु तौ शौर्यादिगुणयोगाद्गौणौ भवतः तदा चैत्रस्य गौणमुख्यज्ञानाश्रयत्वं गौ-णादिज्ञानहेतोर्भेदज्ञानस्य सत्त्वादिति भाव । **न गौणाविति** । भेदज्ञानरूपहेतोरभा-वादिति भाव । संशयहेतुमाह **मन्देति** । द्विकोटिकमुदाहृत्य एककोटिकस्थलमुदाहरति

र्यशौर्यादिभिः सिंहगुणैः सपन्नः सिद्धः, तस्य पुरुषे सिंहशब्दप्रत्ययौ गौणौ भवतो नाप्रसिद्धवस्तुभेदस्य। तस्य त्वन्यत्रान्यशब्दप्रत्ययौ भ्रान्तिनिमित्तावेव भवतो न गौणौ। यथा मन्दान्धकारे स्थाणुरयमित्यगृह्यमाणविशेषे पुरुषशब्दप्रत्ययौ स्थाणुविषयौ, यथा वा शुक्तिकायामकस्माद्रजतमिति निश्चितौ शब्दप्रत्ययौ, तद्वद्देहादिसङ्घातेऽहमिति निरुपचारेण शब्दप्रत्ययावात्मानात्माविवेकेनोत्पद्यमानौ कथं गौणौ शक्यौ वदितुम्। आत्मानात्मविवेकिनामपि पण्डितानामजाविपालानामिवाविविक्तौ शब्दप्रत्ययौ भवतः। तस्माद्देहादिव्यतिरिक्तात्मास्तित्ववादिनां देहादावहंप्रत्य-

## ❀ रत्नप्रभा ❀

कर्तृत्वमेष्टव्यमिति तत्राह—**एतेनेति**। भ्रान्तिकृतेन देहादिसम्बन्धेन यागादिकर्तृत्वमाब्रह्मबोधाद्व्याख्यातमित्यर्थः। **अत्राहुः**—प्राभाकरा इत्यर्थः। भ्रान्त्यभावाद्देहसम्बन्धादिकं सत्यमिति भावः। भेदज्ञानाभावान्न गौण इत्याह—**नेति**। प्रसिद्धो ज्ञातो वस्तुनोर्भेदो येन **तस्य** गौणमुख्यज्ञानाश्रयत्वप्रसिद्धेरित्यर्थः। यस्य तस्य पुंसो गौणौ भवत इत्यन्वयः। शौर्यादिगुणविषयावित्यर्थः। **तस्य त्विति**। भेदज्ञानशून्यस्य पुंस इत्यर्थः। **शब्दप्रत्ययाविति**। शब्दः शाब्दबोधश्चेत्यर्थः। संसयमूलौ तावुदाहरति—**यथा मन्देति**। **यदा** संशयमूलयोर्न गौणत्वं **तदा** भ्रान्तिमूलयोः किं वाच्यमित्याह—**यथा वेति**। **अकस्मादिति**। अतर्किताद्दृष्टादिना संस्कारोद्बोधे सतीत्यर्थः। **निरुपचारेण**—गुणज्ञानं विनेत्यर्थः। **देहादिव्यतिरिक्तात्मास्तित्ववादिनामिति**। देहात्मवादिनां तु प्रमेत्यभिमान इति भावः। जीव-

## ❀ पूर्णानन्दीया ❀

**यथा वेति**। **कथं गौणाविति**। आत्मानात्मनोर्भेदज्ञानाभावेन हेतोरभावादिति भावः। आत्मानात्मविवेकिनामपि श्रवणमननकुशलतामात्रपण्डितानामित्यर्थः। अनुत्पन्नतत्त्वसाक्षात्काराणामिति यावत्। **अजावीति**। अविरजाविशेषः स्त्रीरूपः। **अविविक्ताविति**। आत्मानात्मविवेकेनोत्पद्यमानावित्यर्थः। **निश्चिताविति**। विषयनिश्चितत्वापादकावित्यर्थः।

व्याख्याने—ननु भ्रान्तेरुचितकारणजन्यत्वात्कथमकस्मादिति कारणं विनैव जातत्वमुच्यत इत्याशङ्क्य दृष्टरूपाया रजतैकपक्षपातिन्या भ्रमसामग्र्या असम्भवाददृष्टाद्यपेक्षत्वमकस्माच्छब्देन विवक्षितमित्याह **अतर्किताद्दृष्टादिनेति**। भ्रमरूपकार्योत्पत्तेः पूर्वं प्रमाणेनानिश्चितत्वमदृष्टस्य अतर्कितत्वम्। एतेन कार्यैकोन्नेयमदृष्टमित्युक्तं भवति। आदिशब्देन 'सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः' इति श्लोकोक्तचिन्तादिकमुच्यते। तथा च दृष्टकारणस्य रजतकोट्येकपक्षपातिनः निरूपयितुमशक्यत्वाददृष्टादिकमेव तदसाधारणं

त्यो मिथ्यैव न गौणः । तस्मान्मिथ्याप्रत्ययनिमित्तत्वात्सशरीरत्वस्य सिद्धं जीवतोऽपि विदुषोऽशरीरत्वम् । तथाच ब्रह्मविद्विषया श्रुतिः—'तद्यथाहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते, अथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव' ( बृह० ४।४।७) इति । 'सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव सवागवागिव समना अमना इव सप्राणोऽप्राण इव' इति च । स्मृतिरपि च—'स्थितप्रज्ञस्य का भाषा' ( भ० गी० २।५४ ) इत्याद्या स्थितप्रज्ञलक्षणान्याचक्षाणा विदुषः सर्वप्रवृत्त्यसम्बन्धं दर्शयति । तस्मान्नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वम् । यस्य तु यथापूर्वं संसारित्वं नासाववगतब्रह्मात्मभाव इत्यनवद्यम् । यत्पुन(१)रुक्तं श्रवणात्पराचीनयोर्मनननिदिध्यासनयोर्दर्शनाद्विधिशेषत्वं ब्रह्मणो न स्वरूपपर्यवसायित्वमिति । न । श्रवणवत् अवगत्यर्थत्वान्मनननिदि-

## रत्नप्रभा

न्मुक्तौ प्रमाणमाह—**तथा** चेति । तत् तत्र जीवन्मुक्तस्य देहे **यथा** दृष्टान्तः । **अहिनिर्ल्वयनी** सर्पत्वक् वल्मीकादौ **प्रत्यस्ता** निक्षिप्ता **मृता** सर्पेण त्यक्ताभिमाना वर्तते, **एवमेवेदं** विदुषा त्यक्ताभिमानं शरीरं तिष्ठति । **अथ तथा** त्वचानिर्मुक्तसर्पवदेव **अयम्** देहस्थः **अशरीरः** । विदुषो देहे सर्पस्य त्वचीवाभिमानाभावाद् अशरीरत्वाद् **अमृतः** प्राणितीति **प्राणो** जीवन्नपि **ब्रह्मैव** । किं तद्ब्रह्म **तेजः** स्वयंज्योतिः आनन्द एवेत्यर्थः, **वस्तुतो**ऽचक्षुरपि बाधितचक्षुराद्यनुवृत्त्या सचक्षुरिवेत्यादि **योज्यम्** । **इत्यनवद्यमिति** । ब्रह्मात्मज्ञानान्मुक्तिलाभात् सिद्धं वेदान्तानां प्रामाण्यं हितशासनाच्छास्त्रत्वं च निर्दोषतया स्थितमित्यर्थः । ब्रह्मज्ञानमुद्दिश्य श्रवणवन्मनननिदिध्यासनयोरप्यवान्तरवाक्यभेदेन विध्यङ्गीकारान्न ब्रह्मणो

## पूर्णानन्दीया

कल्प्यते, अदृष्टस्य कार्यैकोन्नेयतया यथाकार्यमेव तत्कल्प्यते, एतदभिप्रायेणैव अदृष्टस्य अतर्कितत्वविशेषणं दत्तमिति भावः । दृष्टरूपाया रजतैकपक्षपातिभ्रमसामग्र्याः निरूपयितुमशक्यत्वं बहुधा **ब्रह्मविद्याभरणे श्रीगुरुचरणैः** प्रपञ्चितमिह विस्तरभयादुपरम्यते । **प्राणितीति** प्राण—इत्यत. प्राक्तनो ग्रन्थ. स्फुटार्थः । प्राणशब्दस्य फलितार्थमाह **जीवन्नपीति** । 'पश्वादिभिश्चाविशेषादिति' भाष्यव्याख्यानावसरे बाधिताध्यासानुवृत्त्या ह्यपरोक्षज्ञानिनां व्यवहार इति समन्वयसूत्रे वक्ष्यत इत्युक्तम् तदत्र भाष्यार्थकथनद्वारा द्योतयित्वा श्रुत्यर्थकथनद्वारा स्फुटयति **वस्तुत इति** । समन्वयसूत्रार्थोपसंहारव्याजेन तत्सूत्रप्रथमवर्णकार्थं स्फोरयति **ब्रह्मात्मज्ञानादिति** । **अवान्तरवाक्यभेदेनेति** । 'म-

(१) यत्तु पुनरिति प्रा० मु० पुस्तके पाठ ।

ध्यासनयोः । यदि ह्यवगतं ब्रह्मान्यत्र विनियुज्येत भवेत्तदा विधिशेषत्वम्। न तु तदस्ति, मननिदिध्यासनयोरपि श्रवणवदवगत्यर्थत्वात् । तस्मान्न प्रतिपत्तिविधिविषयतया शास्त्रप्रमाणकत्वं ब्रह्मणः सम्भवतीत्यतः स्वतन्त्र-मेव ब्रह्म शास्त्रप्रमाणकं वेदान्तवाक्यसमन्वयादिति सिद्धम् । एवंच सति

---

रत्नप्रभा

विधिशेषत्वमुद्देश्यज्ञानलभ्यतया प्राधान्यादित्याह—**नेति** । श्रवणं ज्ञानकरणवेदान्त-गोचरत्वात् प्रधानं, मननिदिध्यासनयोः प्रमेयगोचरत्वात्तदङ्गत्वं, नियमादृष्टस्य ज्ञाने उपयोगः **सर्वापेक्षान्यायादिति** मन्तव्यम् । तर्हि ज्ञाने विधिः किमिति त्यक्तः, तत्राह—**यदि हीति** । यदि ज्ञाने विधिमङ्गीकृत्य वेदान्तैरवगतं ब्रह्म विधे-यज्ञाने कर्मकारकत्वेन विनियुज्येत, **तदा** विधिशेषत्वं स्यात् । न त्ववगतस्य विनियुक्तत्वमस्ति, प्राप्ताऽवगत्या फललाभे विध्ययोगादित्यर्थः । **तस्मात्** विध्य-सम्भवात्, **अतः** शेषत्वासम्भवात्, सत्यादिवाक्यैर्लब्धज्ञानेन अज्ञाननिवृत्तिरूपफल-लाभे सतीत्यर्थः । सूत्रं योजयति—**स्वतन्त्रमिति** । **एवं च सतीति** । **चो**ऽव-

पूर्णानन्दीया

न्तव्यो निदिध्यासितव्य" इत्यवान्तरवाक्यभेदेनेत्यर्थः ।'आत्मा वा अरे द्रष्टव्यः' इत्यादिक-मत्र महावाक्यमिति विज्ञेयम् । **श्रवणमिति** । ब्रह्मात्मविषयकशाब्दज्ञाने करणत्वेन वेदान्तरूपशब्दस्य प्राधान्यं तद्गोचरत्वेन श्रवणज्ञानकरणं सत्प्रधानमित्यर्थः । **नियमेति** । नियमविधिपक्षे वेदान्तवाक्यैरेव श्रवणं कर्तव्यमित्याकारकनियमस्यादृष्टद्वारा ज्ञाने उपयोगः, तथा चोद्देश्यत्वादज्ञानं सर्वप्रधानं भवति श्रवणापेक्षया वेदान्तशास्त्रं तु प्रधानं मननापेक्षया श्रवणं तु प्रधानं भवतीति भावः । इयांस्तु विशेषः । श्रवणं प्रति मननादिकं अङ्गं ज्ञानं प्रति नियमादृष्टं कारणमिति । **सर्वापेक्षेति** । 'सर्वा-पेक्षा च यज्ञादिश्रुतेरश्ववदिति' भगवतः श्रीवेदव्यासस्य सूत्रम् । तस्यार्थः । विद्यायाः स्वोत्पत्तौ सर्वेषां आश्रमकर्मणां अपेक्षास्ति । कुतः ? यज्ञादिश्रुतेः सर्वकर्मणां ज्ञानसाधनत्वबोधिकायाः 'तमेतं वेदानुवचनेन' इत्यादिश्रुतेरित्यर्थः । ननु विद्यायाः स्वोत्पत्तौ परम्परया कर्मापेक्षावत् मोक्षेऽपि तदपेक्षास्त्वित्यत आह **अश्ववदिति** । यथा अश्वो योग्यताबलाद्रथचर्यायां नियुज्यते न लाङ्गलकर्मणि तदभा-वात् तद्वत्कर्मणां मोक्षे योग्यताया अभावान्नापेक्ष्यत इत्यर्थः । तथा च ज्ञानोत्पत्तौ नियमादृष्टं कारणं न मोक्षोत्पत्तावयोग्यत्वादित्यत्र सर्वापेक्षान्याय उपपादित इति मन्त-व्यम् । अन्यत्रेत्यस्यार्थमाह **विधेयज्ञान इति** । तच्छब्दार्थमाह **विनियुक्तत्वमिति** । ज्ञानेनैव मोक्षरूपफललाभात् येन फलार्थं ज्ञातस्य ब्रह्मणः विधेयज्ञाने विनियुक्तत्वं स्यात्त-स्मान्न विधिशेषत्वमिति भावः । पुनरारब्धवृत्तिकारमतनिरासोपसंहारद्वारा द्वितीयवर्ण-कार्थमुपसंहरतीत्यभिप्रेत्य प्रतीकमादाय तच्छब्दातःशब्दयोरर्थमाह **तस्मादिति** ।

'अथातो ब्रह्मजिज्ञासा' इति तद्विषयः पृथक्शास्त्रारम्भ उपपद्यते । प्रतिपत्तिविधिपरत्वे हि 'अथातो धर्मजिज्ञासे'त्येवारब्धत्वान्न पृथक्शास्त्रमारभ्येत । आरभ्यमाणं चैवमारभ्येत—'अथातः परिशिष्टधर्मजिज्ञासेति', 'अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा' ( जै० ४।१।१ ) इतिवत्, ब्रह्मात्मैक्यावगतिस्त्वप्रतिज्ञातेति तदर्थो युक्तः शास्त्रारम्भः—'अथातो ब्रह्मजि-

## रत्नप्रभा

धारणे । उक्तरीत्या ब्रह्मणः स्वातन्त्र्ये सत्येव भगवतो व्यासस्य पृथक् शास्त्रकृतिर्युक्ता, धर्मविलक्षणप्रमेयलाभात् । वेदान्तानाम् कार्यपरत्वे तु प्रमेयाभेदान्न युक्तेत्यर्थः । ननु मानसधर्मविचारार्थं पृथगारम्भ इत्याशङ्क्याह—**आरभ्यमाणं चेति** । **अथ** बाह्यसाधनधर्मविचारानन्तरम्, **अतः** बाह्यधर्मस्य शुद्धिद्वारा मानसोपासनाधर्महेतुत्वात्, परिशिष्टो मानसधर्मो जिज्ञास्य इति सूत्रं स्यादित्यत्र दृष्टान्तमाह—**अथेति** । तृतीयाध्याये श्रुत्यादिभिः शेषशेषित्वनिर्णयानन्तरं शेषिणा शेषस्य प्रयोगसम्भवात् कः क्रतुशेषः को वा पुरुषशेष इति जिज्ञास्यत इत्यर्थः । **एवमारभ्येत** न त्वारब्धं तस्मादवान्तरधर्मार्थमारम्भ इत्ययुक्तमिति भावः । स्वमते सूत्रानुगुण्यमस्तीत्याह—**ब्रह्मेति** । जैमिनिना ब्रह्म न विचारितमिति तज्जिज्ञास्यत्वसूत्रणं युक्तमित्यर्थः । वेदान्तार्थश्चेदद्वैतं तर्हि द्वैतसापेक्षविध्यादीनां का गतिरित्याशङ्क्य, ज्ञानात् प्रागेव

## पूर्णानन्दीया

**सूत्रमिति** । इदानीं वर्णकद्वयेनोक्तमर्थं अनुवदन् समन्वयसूत्रं योजयतीत्यर्थः ।

भाष्ये स्वतन्त्रमित्यनेन द्वितीयवर्णकार्थं उक्तः शास्त्रप्रमाणकमित्यनेन प्रथमवर्णकार्थं उक्त इति विवेकः । **आरभ्यमाणं चेति** । यद्यर्थकः चशब्दः, पृथक् सूत्रं यद्यारब्धव्यं तर्ह्य'थातः परिशिष्टधर्मजिज्ञासे'त्येव आरब्धव्यं स्यादिति भावः ।

व्याख्याने—**मानसधर्मविचारार्थमिति** । मानसोपासनारूपान्तरधर्मविचारार्थमित्यर्थः । उपासनारूपान्तरधर्मजिज्ञास्यत्वपक्षे पूर्ववाद्यभिप्रायेण रचितसूत्रस्यार्थमाह **अथ बाह्येति । तृतीयाध्याय इति** । पूर्वतन्त्रस्य तृतीयाध्याय इत्यर्थः । अथशब्दार्थमुक्त्वा अतःशब्दार्थं माह—**शेषिणेति । एवमारभ्येतेति** मानसोपासनारूपधर्मजिज्ञासा प्रस्तुता चेदथातः परिशिष्टधर्मजिज्ञासेत्येवमारभ्येत न त्वारब्धम्, तथाचाथातो ब्रह्मजिज्ञासेत्येवारब्धत्वान्नान्तरोपासना प्रस्तुतेति गम्यते तस्मात्तदर्थमारम्भ इत्ययुक्तमिति भावः ।

ननु तर्हि पूर्वकाण्डेप्यविचारितत्वात् कथमान्तरोपासना ज्ञातव्येति चेत् । किंनिष्ठोऽयमपराधः ब्रह्मजिज्ञासेत्यारब्धत्वात् 'आन्तरोपासनार्थमारम्भ' इत्ययुक्तमित्युक्तम्, अत एवोपासनानि प्रसक्तानुप्रसक्त्या उत्तरत्र विचारितानीति मन्तव्यम् । **सूत्रणमिति** । सूत्रकरणमित्यर्थः । सूत्ररचना युक्तेति भावः । चक्षुरादीन्यद्वैतात्मावगतौ सत्यां प्रमेयादिरहितत्वा-

ज्ञासा' इति । तस्मादहं ब्रह्मास्मीत्येतदवसाना एव सर्वे विधयः सर्वाणि चेतराणि प्रमाणानि । न ह्यहेयानुपादेयाद्वैतात्मावगतौ निर्विषयाण्यप्रमातृकाणि च प्रमाणानि भवितुमर्हन्तीति । अपि चाहुः—

गौणमिथ्यात्मनोऽसत्त्वे पुत्रदेहादिबाधनात् ।
सद्ब्रह्मात्माहमित्येवं बोधे कार्यं कथं भवेत् ॥
अन्वेष्टव्यात्मविज्ञानात्प्राक्प्रमातृत्वमात्मनः ।

---

### ❧ रत्नप्रभा ❧

तेषां प्रामाण्यं न पश्चादित्याह—**तस्मादिति** । ज्ञानस्य प्रमेयप्रमातृबाधकत्वादित्यर्थः । ब्रह्म न कार्यशेषः तद्बोधात् प्रागेव सर्वव्यवहार इत्यत्र ब्रह्मविदां गाथामुदाहरति—**अपि चेति** । सदबाधितं ब्रह्म पूर्णमात्मा विषयानादत्त इति सर्वसाक्ष्यहमित्येवं बोधे जाते सति पुत्रदेहादेः सत्ताबाधनात् मायामात्रत्वनिश्चयात् पुत्रदारादिरहमिति स्वीयदुःखसुखभाक्त्वगुणयोगाद्गौणात्माभिमानस्य 'नरोऽहं कर्त्ता मूढः' इति मिथ्यात्माभिमानस्य च सर्वव्यवहारहेतोः **सत्त्वे कार्यं** विधिनिषेधादिव्यवहारः **कथं भवेत्**, हेत्वभावान्न कथंचिद्भवेदित्यर्थः । **नन्वहं** ब्रह्मेति बोधो बाधितः, अहमर्थस्य प्रमातुः ब्रह्मत्वायोगादित्याशङ्क्य, प्रमातृत्वस्याज्ञानविलसितान्तःकरणतादात्म्यकृतत्वान्न बाध इत्याह—**अन्वेष्टव्य इति** । "य आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासस्सत्यकामस्सत्यसंकल्पस्सोऽन्वेष्टव्यः" (छा० ८।४।१) इति श्रुतेः ज्ञातव्यपरमात्मविज्ञानात् प्रागेवाज्ञानाच्चिद्धातोः **आत्मनः प्रमातृत्वम्**, प्रमातैव ज्ञातः सन् पाप्मरागद्वेषमरणविवर्जितः परमात्मा स्यादित्यर्थः । प्रमातृत्वस्य कल्पितत्वे तदाश्रितानां प्रमाणानां प्रामाण्यं कथमित्यत आह—**देहेति** ।

### ❧ पूर्णानन्दीया ❧

त्प्रमाणानि भवितुं नार्हन्तीति भाष्यार्थमाह **न पश्चादिति** । हेतुलाभार्थं प्रथमतः प्रथमश्लोकस्य उत्तरार्धं व्याचष्टे **सदबाधितमिति** । प्रतीकमादायात्मशब्दार्थमाह **आत्मेति** । विषयानादत्त इत्यात्मशब्दार्थमुक्त्वा तात्पर्यमाह **साक्षीति** । आत्मा त्रिविधः गौणात्मा मिथ्यात्मा मुख्यात्मा चेति । आद्य आह **पुत्रादिरिति** । गौणश्चासावात्माभिमानश्चेति विग्रह । पुत्रदारादिषु आत्माभिमानो गौणः यथा स्वसुखेन सुखी स्वदुःखेन दुःखी तथा पुत्रदारादिगतेनापीति सोयं गौण. न मिथ्याभिमानः भेदस्यानुभवसिद्धत्वात्तथा च पुत्रदारादिष्वहमित्यात्माभिमानेन पुत्रादिर्गौणात्मेति भाव । द्वितीय आह **नरोहमिति** । देहेन्द्रियादिष्वभेदानुभवेन भेदज्ञानाभावान्नात्माभिमानो गौण· किन्तु शुक्तौ रजतज्ञानवन्मिथ्या तथा च देहादावहमित्यभिमानेन देहादिर्मिथ्यात्मेति भाव । मुख्यात्मानं निरूपयितु द्वितीयश्लोकमवतारयति **नन्विति** । अन्वेष्टव्येत्यस्य व्याख्यानं **ज्ञातव्येति** । अन्विष्टपदस्यार्थमाह **ज्ञात इति** । तृतीयश्लोकमवतारयति **प्रमातृत्वस्येति** । यद्वादित्यस्यार्थमाह

अन्विष्टः स्यात्प्रमातैव पाप्मदोषादिवर्जितः ॥
देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः ।
लौकिकं तद्वदेवेदं प्रमाणं त्वाऽऽत्मनिश्चयात् ॥ इति ॥ ४ ॥

इति चतुःसूत्री समाप्ता ।

---

## रत्नप्रभा

यथा **देहात्मप्रत्ययः** कल्पितो भ्रमेऽपि व्यवहाराङ्गतया मानत्वेनेष्यते वैदिकैः, **तद्वल्लौकिकम्** अध्यक्षादिकमात्मबोधावधि व्यवहारकाले बाधाभावाद् व्यावहारिकं प्रामाण्यमिष्यताम्, वेदान्तानां तु कालत्रयाबाध्यबोधित्वात् तत्त्वावेदकं प्रामाण्यमिति **तुशब्दार्थः** । **आत्मनिश्चयात्** । आ आत्मनिश्चयादित्याङ् मर्यादायाम् । प्रमातृत्वस्य कल्पितत्वेऽपि विषयाबाधात् प्रामाण्यमिति भावः ।

रामनाम्नि परे धाम्नि कृत्स्नाम्नायसमन्वयः ।
कार्यतात्पर्यबाधेन साधितः शुद्धबुद्धये ॥ ४ ॥

इति चतुःसूत्री समाप्ता ॥

---

## पूर्णानन्दीया

**यथेति** । आत्मबोधावधि प्रामाण्यमित्यन्वय ।

ननु ज्ञानानन्तरं यथा चक्षुरादीनां अप्रामाण्यं तथा वेदान्तानामप्रामाण्यं स्यात् इत्यत आह **वेदान्तानान्त्विति** । ज्ञानानन्तरं वेदान्तानां मिथ्यात्वेपि अबाध्यवस्तुबोधकत्वात् नाप्रामाण्यम् । न च तर्हि प्रामाण्य स्यादिति वाच्यम् । अद्वैतज्ञानिन शब्दतज्जन्यप्रमाया अभावेन प्रमाकरणत्वरूपप्रामाण्यस्याभावात्, तस्मात् ज्ञानानन्तरं वेदान्तानां नाप्रामाण्यं न प्रामाण्य चेति रहस्यम् । **अकः सवर्णे दीर्घ इति**–सूत्रेणात्मनिश्चयादित्यत्र सन्धिमभिप्रेत्य प्रतीकमादाय पदविभाग माह **आत्मनिश्चयादिति** । आब्रह्मस्वरूपसाक्षात्कारादित्यर्थ । शङ्कायाः कः परिहार इति जिज्ञासायामाह **प्रमातृत्वस्येति** । अद्वितीयनिरतिशयानन्दचैतन्यैकज्ञानसर्वज्ञसर्वेश्वरसर्वशक्तिनिरवयवस्वप्रकाशप्रत्यग्भूतब्रह्मात्मन्यपरोक्षानुभवात्प्राग्भेदात्मप्रत्ययवत्सर्वो व्यवहारो यथा दर्शनमुपपद्यते अस्मिंश्चापरोक्षे अवभासमानादिप्रमात्रादिबाधात्सर्वो व्यवहारो निवर्तत इति श्लोकार्थः । स्वाभिमतमिष्टदेवतानामोच्चारणपूर्वकं फलितं समन्वयार्थमाह **रामनाम्नीति** ।

## पूर्णानन्दीया

नमस्तेभ्यो गुरुभ्यो यैरयमर्थं प्रबोधितः ।
परनिष्ठैः परात्मज्ञैः परसन्तुष्टमानसैः ॥
अभिव्यक्ताभिधाभृङ्गसेवाद्वारा विशेषतः ।
प्राप्ताभूत्कृष्णपादाब्जप्रसिद्धानन्दवाञ्छया ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदद्वैतानन्दपूज्यपादशिष्यपूर्णप्रकाशानन्दसरस्वतीविरचिता चतु:सूत्रिकाभाष्यरत्नप्रभाव्याख्याभिव्यक्ता व्याख्या समाप्ता ।

**नवमवर्णकं समाप्तम् ।**

मनने मम तात्पर्यं न ग्रन्थकरणे ततः ।
ग्रन्थस्थदोषबाहुल्यं क्षन्तव्यं विबुधैरिह ॥

**समाप्तोऽयं ग्रन्थः ।**

करकृतमपराधं क्षन्तुमर्हन्ति सन्तः ।
श्रीजगन्नाथार्पणमस्तु ।

-अयं ग्रन्थो वझे इत्युपनामकभैरवसुतव्यङ्कटेशेन संवत् १९३७ विजयनामाब्दस्य भाद्रकृष्णसप्तम्या लेखनं समाप्तिमगमत् ।

बुधोपकाराय श्रीमान्प्रतिनिध्यधिकारिणा ।
काश्यां बाबाभिधानेन सङ्गृहीतामिदं मुदा ॥ १ ॥
वह्न्यशीतिधरासंज्ञे शके विजयवत्सरे ।
इषे शुक्ले द्वितीयायां रवौ स्वात्यां यशोदयात् ॥२॥

एवं तावद्वेदान्तवाक्यानां ब्रह्मात्मावगतिप्रयोजनानां ब्रह्मात्मनि तात्पर्येण समन्वितानामन्तरेणापि कार्यानुप्रवेशं ब्रह्मणि पर्यवसानमुक्तम् । ब्रह्म च सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिनाशकारणमित्युक्तम् । साङ्ख्यादयस्तु परिनिष्ठितं वस्तु प्रमाणान्तरगम्यमेवेति मन्यमानाः प्रधानादीनि कारणान्तराण्यनुमिमानास्तत्परतयैव वेदान्तवाक्यानि योजयन्ति, सर्वेष्वेव वेदान्तवाक्येषु सृष्टिविषयेष्वनुमानेनैव कार्येण कारणं लिलक्षयिषन्ति ॥

प्रधानपुरुषसंयोगा नित्यानुमेया इति साङ्ख्या मन्यन्ते । काणादास्त्वेतेभ्य एव वाक्येभ्य ईश्वरं निमित्तकारणमनुमिमीते । अणूंश्च समवायिकारणम् । एवमन्येपि तार्किका वाक्याभासयुक्त्याभासावष्टम्भाः पूर्वपक्षवादिन इहोत्तिष्ठन्ते ॥

तत्र पदवाच्यप्रमाणज्ञेनाचार्येण वेदान्तवाक्यानां ब्रह्मावगतिपरत्वप्रदर्शनाय वाक्याभासयुक्त्याभासप्रतिपत्तयः पूर्वपक्षीकृत्य निराक्रियन्ते ।

---

**रत्नप्रभा**

वृत्तमनूद्याक्षेपलक्षणमवान्तरसङ्गतिमाह—साङ्ख्यादयस्त्विति । भवतु सिद्धे वेदान्तानां समन्वयः, तथापि मानान्तरायोग्ये ब्रह्मणि शक्तिग्रहायोगात् कूटस्थत्वेन (अविकारित्वेन) कारणत्वायोगाच्च न समन्वयः, किन्तु सर्गाद्यं कार्यं जडप्रकृतिकं कार्यत्वात् घटवद् इत्यनुमानगम्ये त्रिगुणे प्रधाने समन्वय इत्याक्षिपन्तीत्यर्थः । सिद्धं मानान्तरगम्यमेवेत्याग्रहः शक्तिग्रहार्थः । अत एव प्रधानादावनुमानोपस्थिते शक्तिग्रहसम्भवात् तत्परतया वाक्यानि योजयन्तीत्युक्तम् । किञ्च "तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ" (छा०६।८।४) इत्याद्याः श्रुतयः शुङ्गेन लिङ्गेन कारणस्य स्वतोऽन्वेषणं दर्शयन्त्यो मानान्तरसिद्धमेव जगत्कारणं वदन्तीत्याह—सर्वेष्विति ।

नन्वतीन्द्रियत्वेन प्रधानादेर्व्याप्तिग्रहायोगात् कथमनुमानं तत्राह—प्रधानेति । यत्कार्यं तज्जडप्रकृतिकं यथा घटः, यज्जडं तच्चेतनसंयुक्तं यथा रथादिरिति सामान्यतोदृष्टानुमानगम्याः प्रधानपुरुषसंयोगा इत्यर्थः । अद्वितीयब्रह्मणः कारणत्वविरोधिमतान्तरमाह—काणादास्त्विति । सृष्टिवाक्येभ्य एव परार्थानुमानरूपेभ्यो यत्कार्यं तद्बुद्धिमत्कर्तृकमिति ईश्वरं कर्त्तारं परमाणूंश्च यत्कार्यद्रव्यं तत्स्वन्यूनपरिमाणद्रव्यारब्धमित्यनुमिमत इत्यर्थः । अन्येऽपि बौद्धादय. "असद्वा इदमग्र आसीद्" (तै०आ०२।७।१) इत्यादिवाक्याभासः । यद्वस्तु तच्छून्यावसानं यथा दीप इति युक्त्याभासः ।

एवं वादिविप्रतिपत्तिमुक्त्वा तन्निरासायोत्तरसूत्रसन्दर्भमवतारयति—तत्रेति ।

तत्र साङ्ख्याः प्रधानं त्रिगुणमचेतनं जगतः कारणमिति मन्यमाना आहुः—यानि वेदान्तवाक्यानि सर्वज्ञस्य सर्वशक्तेर्ब्रह्मणो जगत्कारणत्वं दर्शयन्तीत्यवोचस्तानि प्रधानकारणपक्षेऽपि योजयितुं शक्यन्ते। सर्वशक्तित्वं तावत्प्रधानस्यापि स्वविकारविषयमुपपद्यते। एवं सर्वज्ञत्वमप्युपपद्यते। कथम्? यत्तु ज्ञानं मन्यसे स सत्त्वधर्मः 'सत्त्वात्संजायते ज्ञानम्' (गी० १४।१७) इति स्मृतेः। तेन च सत्त्वधर्मेण ज्ञानेन कार्यकारणवन्तः पुरुषाः सर्वज्ञा योगिनः प्रसिद्धाः। सत्त्वस्य हि निरतिशयोत्कर्षे सर्वज्ञत्वं प्रसिद्धम्। न केवलस्याकार्यकारणस्य पुरुषस्योपलब्धिमात्रस्य सर्वज्ञत्वं किंचिज्ज्ञत्वं वा कल्पयितुं शक्यम्। त्रिगुणत्वात्तु प्रधानस्य सर्वज्ञानकारणभूतं सत्त्वं प्रधानावस्थायामपि विद्यत इति प्रधानस्याचेतनस्यैव सतः सर्वज्ञत्वमुपचर्यते। वेदान्तवाक्येष्ववश्यं च त्वयापि सर्वज्ञं ब्रह्माभ्युपगच्छता सर्वज्ञानशक्तिमत्त्वेनैव सर्वज्ञत्वमुपगन्तव्यम्। नहि सर्वविषयं ज्ञानं कुर्वदेव ब्रह्म वर्तते। तथाहि—ज्ञानस्य नित्यत्वे ज्ञानक्रियां प्रति स्वातन्त्र्यं ब्रह्मणो हीयते। अथानित्यं तदिति ज्ञानक्रियाया उपरमेतापि ब्रह्म, तदा सर्वज्ञानशक्तिमत्त्वेनैव सर्वज्ञत्वमापतति। अपिच प्रागुत्पत्तेः सर्वकारकशून्यं ब्रह्मेष्यते त्वया। न च ज्ञानसाधनानां शरीरेन्द्रियादीनां

---

**रत्नप्रभा**

वादिविवादे सतीत्यर्थः। व्याकरणमीमांसान्यायनिधित्वात् पदवाक्यप्रमाणज्ञत्वम्।

यज्जगत्कारणं तच्चेतनमचेतनं वेति ईक्षणस्य मुख्यत्वगौणत्वाभ्यां संशये पूर्वपक्षमाह—**तत्र सांख्या इति**। **अपि**शब्दौ एवकारार्थौ। सदेवेत्यादिस्पष्टब्रह्मलिङ्गवाक्यानां प्रधानपरत्वनिरासेन ब्रह्मपरत्वोक्तेः **श्रुत्यादिसङ्गतयः**। **पूर्वपक्षे** जीवस्य प्रधानैक्योपास्तिः **सिद्धान्ते** ब्रह्मैक्यज्ञानमिति विवेकः। अचेतनसत्त्वस्यैव सर्वज्ञत्वं न चेतनस्येत्याह—**तेन च सत्त्वधर्मेणेति**। **न केवलस्येति**। जन्यज्ञानस्य सत्त्वधर्मत्वात् नित्योपलब्धेरकार्यत्वाच्चिन्मात्रस्य न सर्वज्ञानकर्तृत्वमित्यर्थः। **ननु** गुणानां साम्यावस्था **प्रधानम्** इति सांख्या वदन्ति। तदवस्थायां सत्त्वस्योत्कर्षाभावात् कथं सर्वज्ञतेत्याह—**त्रिगुणत्वादिति**। त्रयो गुणा एव प्रधानं, तस्य साम्यावस्था तदभेदात् **प्रधानम्** इत्युच्यते। तदवस्थायामपि प्रलये सर्वज्ञानशक्तिमत्त्वरूपं सर्वज्ञत्वमक्षतमित्यर्थः। **ननु** मया किमिति शक्तिमत्त्वरूपं गौणं सर्वज्ञत्वमङ्गीकार्यमिति तत्राह—**अपि चेति**। मतद्वयसाम्यमुक्त्वा स्वमते विशेष-

-मभावे ज्ञानोत्पत्तिः कस्यचिदुपपन्ना । अपि च प्रधानस्यानेकात्मकस्य परिणामसंभवात्कारणत्वोपपत्तिर्मृदादिवत्, नासंहतस्यैकात्मकस्य ब्रह्मण इत्येवं प्राप्त इदं सूत्रमारभ्यते—

तदैक्षतेति वाक्येन प्रधानं ब्रह्म वोच्यते । ज्ञानक्रियाशक्तिमत्त्वात्प्रधानं सर्वकारणम् ॥
ईक्षणाच्चेतनं ब्रह्म क्रियाज्ञाने तु मायया । आत्मशब्दात्मतादात्म्ये प्रधानस्य विरोधिनी ॥

## ईक्षतेर्नाशब्दम् ॥ ५ ॥

न सांख्यपरिकल्पितमचेतनं प्रधानं जगतः कारणं शक्यं वेदान्तेष्वाश्रयितुम् । अशब्दं हि तत् । कथमशब्दत्वम् ? ईक्षतेः—ईक्षितृत्वश्रवणात्कारणस्य । कथम् ? एवंहि श्रूयते—'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छान्दो० ६।२।१) इत्युपक्रम्य 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत, (छान्दो० ६।२।३) इति । तत्रेदंशब्दवाच्यं नामरूपव्याकृतं जगत्प्रागुत्पत्तेः सदात्मनावधार्य तस्यैव प्रकृतस्य सच्छब्दवाच्यस्येक्षणपूर्वकं तेजःप्रभृतेः स्रष्टृत्वं दर्शयति । तथान्यत्र—'आत्मा वा इदमेक एवाग्र आसीत् । नान्यत्किंचन मिषत् । स ईक्षत लोकान्नु सृजा इति । स इमॉल्लोकानसृजत' (ऐत० १।१।१) इतीक्षापूर्विकामेव सृष्टिमाचष्टे । क्वचिच्च षोडशकलं पुरुषं प्रस्तुत्याह—स ईक्षांचक्रे । स

---

### ❧ रत्नप्रभा ❧

माह—अपि चेति ।

ब्रह्मणः कारणत्वं **स्मृतिपादे** समर्थ्यते प्रधानादेः कारणत्वं **तर्कपादे** युक्तिभिर्निरस्यते । अधुना तु श्रुतिभिर्निरस्यति—**ईक्षतेर्नाशब्दमिति** । ईक्षणश्रवणात् वेदशब्दावाच्यमशब्दं प्रधानम् । अशब्दत्वान्न कारणमिति **सूत्रयोजना** । **तत्** सच्छब्दवाच्यं कारणम् **ऐक्षत** । ईक्षणमेवाह—**बह्विति** । बहु प्रपञ्चरूपेण । स्थित्यर्थमहमेवोपादानतया कार्याभेदाज्जनिष्यामीत्याह—**प्रजेति** । एवं तत् सदीक्षित्वा आकाशं वायुं च सृष्ट्वा तेजः सृष्टवदित्याह—**तदिति** । **मिषत्** चलत् सत्त्वाक्रान्तमिति यावत् । स जीवाभिन्नः परमात्मा । "प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोकाः लोकेषु नाम च" (प्रश्न०६।४) इत्युक्ताः षोडशकलाः । **ननु** "इकश्तिपौ धातुनिर्देशे" इति कात्यायनस्मरणादीक्षतेरिति पदेन तिबन्तेन धातुरुच्यते, तेन धात्वर्थ ईक्षणं कथं व्याख्यायत

प्राणमसृजत' (प्रश्न० ६।३ ) इति । ईक्षतेरिति च धात्वर्थनिर्देशोऽभिप्रेतः, यजतेरितिवत् । न धातुनिर्देशः । तेन 'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' ( मुण्ड० १।१९ ) इत्येवमादीन्यपि सर्वज्ञेश्वरकारणपराणि वाक्यान्युदाहर्तव्यानि । ननूक्तं सत्त्वधर्मेण ज्ञानेन सर्वज्ञं प्रधानं भविष्यतीति, तन्नोपपद्यते । नहि प्रधानावस्थायां गुणसाम्यात्सत्त्वधर्मो ज्ञानं संभवति । ननूक्तं सर्वज्ञानशक्तिमत्त्वेन सर्वज्ञं भविष्यतीति । तदपि नोपपद्यते । यदि गुणासाम्ये सति सत्त्वव्यपाश्रयां ज्ञानशक्तिमाश्रित्य सर्वज्ञं प्रधानमुच्येत कामं रजस्तमोव्यपाश्रयामपि ज्ञानप्रतिबन्धकशक्तिमाश्रित्य किंचिज्ज्ञमुच्येत । अपि च नासाक्षिका सत्त्ववृत्तिर्जानातिनाऽभिधीयते । न चाचेतनस्य प्रधानस्य साक्षित्वमस्ति । तस्मादनुपपन्नं प्रधानस्य सर्वज्ञत्वम् । योगिनां तु चेतनत्वात्सत्त्वोत्कर्षनिमित्तं सर्वज्ञत्वमुपपन्नमित्यनुदाहरणम् । अथ पुनः साक्षिनिमित्तमीक्षितृत्वं प्रधानस्य कल्प्येत, यथाग्निनिमित्तमयःपिण्डादेर्दग्धृत्वम् । तथासति यन्निमित्तमीक्षितृत्वं प्रधानस्य तदेव सर्वज्ञं मुख्यं ब्रह्म जगतः कारणमिति युक्तम् । यत्पुनरुक्तं–ब्रह्मणोऽपि न मुख्यं सर्वज्ञत्वमुपपद्यते, नित्यज्ञानक्रियत्वे ज्ञानक्रियां प्रति स्वातन्त्र्यासम्भवादिति ।

---

## रत्नप्रभा

इत्याशंक्य लक्षणयेत्याह—ईक्षतेरिति चेति । "इतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्वम्" (७।४।१) इति जैमिनिसूत्रे यथा यजतिपदेन लक्षणया धात्वर्थो याग उच्यते तद्वदिहापीत्यर्थः । सौर्यादिविकृतियागस्याङ्गानामविधानात् पूर्ववत्त्वं दर्शादिप्रकृतिस्थाङ्गवत्त्वमिति सूत्रार्थः । धात्वर्थनिर्देशेन लाभमाह—तेनेति । सामान्यतः सर्वज्ञो विशेषतः सर्वविद् इति भेदः । ज्ञानम् ईक्षणमेव तपः । तपस्विनः फलमाह—तस्मादिति । एतत् कार्यं सूत्राख्यं ब्रह्म । केवलसत्त्ववृत्तेर्ज्ञानत्वमङ्गीकृत्य प्रधानस्य सर्वज्ञत्वं निरस्तम्, सम्प्रति न केवलजडवृत्तिर्ज्ञानशब्दार्थः किन्तु साक्षिबोधविशिष्टा वृत्तिर्वृत्तिव्यक्तबोधो वा ज्ञानं, तच्चान्धस्य नास्तीत्याह—अपि चेति । साक्षित्वमस्ति, येनोक्तज्ञानवत्त्वं स्यादिति शेषः । ननु सत्त्ववृत्तिमात्रेण योगिनां सर्वज्ञत्वमुक्तमित्यत आह—योगिनां त्विति । सेश्वरं साङ्ख्यमतमाह—अथेति । सर्वज्ञत्वं नाम सर्वगोचरज्ञानवत्त्वं न ज्ञानकर्तृत्वं ज्ञानस्य कृत्यसाध्यत्वादिति हृदि

**अत्रोच्यते**—इदं तावद्भवान्प्रष्टव्यः, कथं नित्यज्ञानक्रियत्वे सर्वज्ञत्वहानिरिति । यस्य हि सर्वविषयावभासनक्षमं ज्ञानं नित्यमस्ति सोऽसर्वज्ञ इति विप्रतिषिद्धम् । अनित्यत्वे हि ज्ञानस्य कदाचिज्जानाति कदाचिन्न जानातीत्यसर्वज्ञत्वमपि स्यात् नासौ ज्ञाननित्यत्वे दोषोऽस्ति । ज्ञाननित्यत्वे ज्ञानविषयः स्वातन्त्र्यव्यपदेशो नोपपद्यत इति चेत्, न प्रततौष्ण्यप्रकाशेऽपि सवितरि दहति प्रकाशयतीति स्वातन्त्र्यव्यपदेशदर्शनात् । **ननु** सवितुर्दाह्यप्रकाश्यसंयोगे सति दहति प्रकाशयतीति व्यपदेशः स्यात्, न तु ब्रह्मणः प्रागुत्पत्तेर्ज्ञानकर्मसंयोगोऽस्तीति विषमो दृष्टान्तः । न । असत्यपि कर्मणि सविता प्रकाशत इति कर्तृत्वव्यपदेशदर्शनात् । एवमसत्यपि ज्ञानकर्मणि ब्रह्मणः 'तदैक्षत' इति कर्तृत्वव्यपदेशोपपत्तेर्न वैषम्यम् । कर्मापेक्षायां तु ब्रह्मणीक्षितृत्वश्रुतयः सुतरामुपपन्नाः । किं पुनस्तत्कर्म,

---

### रत्नप्रभा

कृत्वा पृच्छति—**इदं तावदिति** । सर्वं जानातीति शब्दासाधुत्वं शङ्कते—**ज्ञाननित्यत्व इति** । नित्यस्यापि ज्ञानस्य तत्तदर्थोपहितत्वेन ब्रह्मस्वरूपाद्भेदं कल्पयित्वा कार्यत्वोपचाराद्ब्रह्मणस्तत्कर्तृत्वव्यपदेशः साधुरिति स दृष्टान्तमाह—**न प्रततेति** । सन्ततेत्यर्थः । **असत्यपि**—अविवक्षितेऽपि । **ननु** प्रकाशतेरकर्मकत्वात् सविता प्रकाशत इति प्रयोगेऽपि जानातेः सकर्मकत्वात् कर्माभावे तदैक्षतेत्ययुक्तमिति तत्राह—**कर्मापेक्षायां त्विति** । कर्माविवक्षायामपि प्रकाशरूपे सवितरि प्रकाशत इति कथञ्चित्प्रकाशक्रियाश्रयत्वेन कर्तृत्वोपचारवच्चिदात्मन्यपि चिद्रूपेक्षणकर्तृत्वोपचारान्न वैषम्यमित्युक्तं पूर्वम्, अधुना तु कुम्भकारस्य स्वोपाध्यन्तःकरणवृत्तिरूपेक्षणवदीश्वरस्यापि स्वोपाध्यविद्यायाः विविधसृष्टिसंस्कारायाः प्रलयावसानेनोद्बुद्धसंस्कारायाः सर्गोन्मुखः कश्चित् परिणामः सम्भवति, अतः तस्यां सूक्ष्मरूपेण निलीनसर्वकार्यविषयकमीक्षणं तस्य कार्यत्वात् कर्मसद्भावाच्च तत्कर्तृत्वं मुख्यमिति द्योतयति—**सुतरामिति** । **ननु** मायोपाधिकबिम्बचिन्मात्रस्येश्वरस्य कथमीक्षणं प्रति मुख्यं कर्तृत्वं कृत्यभावादिति **चेत्** । **न** । कार्यानुकूलज्ञानवत एव कर्तृत्वादीश्वरस्यापि ईक्षणानुकूलनित्यज्ञानवत्त्वात् । **न च** नित्यज्ञानेनैव कर्तृत्वनिर्वाहात् किमीक्षणेनेति **वाच्यम्** । वाय्वादेरेव शब्दवत्त्वसम्भवात्किमाकाशेनेत्यतिप्रसङ्गात् । अतः श्रुतत्वाद्वाय्वादिकारणत्वेनाकाशवदैक्षतेत्यागन्तुकत्वेन श्रुतमीक्षणमाकाशादिहेतुत्वेनाङ्गीकार्यमित्यलम् । **अव्याकृते**—सूक्ष्मात्मना स्थिते, **व्याकर्तुं** स्थूलीकर्तुमिष्टे इत्यर्थः । अव्याकृतकार्योपरक्तचैतन्यरूपेक्षणस्य कारकानपेक्षत्वेऽपि वृत्तिरूपेक्षणस्य कारकं वाच्यमित्याश-

यत्प्रागुत्पत्तेरीश्वरज्ञानस्य विषयो भवतीति ? तत्त्वान्यत्वाभ्यामनिर्वचनीये नामरूपे अव्याकृते व्याचिकीर्षिते इति ब्रूमः। यत्प्रसादाद्धि योगिनामप्यतीतानागतविषयं प्रत्यक्षं ज्ञानमिच्छन्ति योगशास्त्रविदः, किमु वक्तव्यं तस्य नित्यसिद्धस्येश्वरस्य सृष्टिस्थितिसंहृतिविषयं नित्यज्ञानं भवतीति। यदप्युक्तम्—प्रागुत्पत्तेर्ब्रह्मणः शरीरादिसंबन्धमन्तरेणेक्षितृत्वमनुपपन्नमिति, न तच्चोद्यमवतरति, सवितृप्रकाशवद्ब्रह्मणो ज्ञानस्वरूपनित्यत्वे ज्ञानसाधनापेक्षानुपपत्तेः। अपिचाऽविद्यादिमतः संसारिणः शरीराद्यपेक्षा ज्ञानोत्पत्तिः स्यान्न ज्ञानप्रतिबन्धकारणरहितस्येश्वरस्य। मन्त्रौ चेमावीश्वरस्य शरीराद्यनपेक्षतामनावरणज्ञानतां च दर्शयतः—

न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च॥
(श्वेता० ६।८) इति।

अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्॥
(श्वेता० ३।१९) इति च।

**ननु** नास्ति तावज्ज्ञानप्रतिबन्धकारणवानीश्वरादन्यः संसारी, 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति विज्ञाता' (बृह० ३।७।२३) इति श्रुतेः। तत्र

---

❦ रत्नप्रभा ❦

द्धक्याह—**अपि चाविद्यादिमत** इति। यथैकस्य ज्ञानं तथान्यस्यापीति नियमाभावान्मायिनोऽशरीरस्यापि जन्येक्षणकारकत्वमिति भावः। ननु यज्जन्यज्ञानं तत् शरीरसाध्यमिति व्याप्तिरस्तीत्याशङ्क्य श्रुतिबाधमाह—**मन्त्रौ चेति**। कार्यं शरीरम्। **करणम्** इन्द्रियम्। **अस्य** ईश्वरस्य। **शक्तिः** माया स्वकार्यापेक्षया **परा** विचित्रकार्यकारित्वाद् **विविधा** सा त्वैतिह्यमात्रसिद्धा न प्रमाणसिद्धेत्याह—**श्रूयत** इति। ज्ञानरूपेण बलेन या सृष्टिक्रिया सा **स्वभाविकी** अनादिमायात्मकत्वादित्यर्थः। ज्ञानस्य चैतन्यस्य बलं मायावृत्तिप्रतिबिम्बितत्वेन स्फुटत्वम्। तस्य क्रिया नाम बिम्बत्वेन ब्रह्मणो जनकता ज्ञातृतापि स्वभाविकीति वार्थः। **अपाणिरपि ग्रहीता। अपादोऽपि जवनः।** ईश्वरस्य स्वकार्ये लौकिकहेत्वपेक्षा नास्तीति भावः। **अग्र्यम्** अनादिं, **पुरुषं** अनन्तम्, **महान्तं** विभुमित्यर्थः। अपसिद्धान्तं शङ्कते—**नन्विति**। ज्ञाने प्रतिबन्धककारणान्यविद्यारागादीनि। श्रुतावत ईश्वरादन्यो नास्ती-

किमिदमुच्यते संसारिणः शरीराद्यपेक्षा ज्ञानोत्पत्तिर्नेश्वरस्येति । **अत्रोच्यते**—सत्यं, नेश्वरादन्यः संसारी । तथापि देहादिसंघातोपाधिसंबन्ध इष्यत एव, घटकरकगिरिगुहाद्युपाधिसंबन्ध इव व्योम्नः । तत्कृतश्च शब्दप्रत्ययव्यवहारो लोकस्य दृष्टो घटच्छिद्रं करकादिच्छिद्रमित्यादिराकाशाव्यतिरेकेऽपि, तत्कृता चाकाशे घटाकाशादिभेदमिथ्याबुद्धिर्दृष्टा । तथेहापि देहादिसंघातोपाधिसम्बन्धाविवेककृतेश्वरसंसारिभेदमिथ्याबुद्धिः । दृश्यते चात्मन एव सतो देहादिसंघातेऽनात्मन्यात्मत्वाभिनिवेशो मिथ्याबुद्धिमात्रेण पूर्वपूर्वेण । सति चैवं संसारित्वे देहाद्यपेक्षमीक्षितृत्वमुपपन्नं संसारिणः । यदप्युक्तम्—प्रधानस्यानेकात्मकत्वान्मृदादिवत्कारणत्वोपपत्तिर्नासहतस्य ब्रह्मण इति, तत्प्रधानस्याशब्दत्वेनैव प्रत्युक्तम् । यथा तु तर्केणापि ब्रह्मण एव कारणत्वं निर्वोढुं शक्यते न प्रधानादीनाम् तथा प्रपञ्चयिष्यति—'न विलक्षणत्वादस्य–' ( ब्र० २।१।४ ) इत्येवमादिना ॥५॥

---

## ❦ रत्नप्रभा ❦

त्यन्वयः । औपाधिकस्य जीवेश्वरभेदस्य मयोक्तत्वान्नापसिद्धान्त इत्याह—**अत्रोच्यत इति** । तत्कृत उपाधिसम्बन्धकृतः शब्दतज्जन्यप्रत्ययरूपो **व्यवहारः** । असङ्कीर्ण इति शेषः । अव्यतिरेके कथमसङ्करस्तत्राह—**तत्कृता चेति** । उपाधिसम्बन्धकृतेत्यर्थः । **तथेति** । देहादिसम्बन्धस्य हेतुरविवेकोऽनाद्यविद्या तया कृत इत्यर्थः । अविद्यायां हि प्रतिबिम्बो **जीवः** बिम्बचैतन्यम् **ईश्वरः** इति भेदोऽविद्याधीनसत्ताकः, अनादिभेदस्य कार्यत्वायोगात् । कार्यबुद्ध्यादिकृतप्रमाणादिभेदश्च कार्य एवेति विवेकः । नन्वखण्डस्वप्रकाशात्मनि कथमविवेकः, तत्राह—**दृश्यते चेति** । वस्तुतो देहादिभिन्नस्वप्रकाशस्यैव सत आत्मनो नरोऽहमिति भ्रमो दृष्टत्वाद्दुरपह्नवः । स च मिथ्याबुद्ध्या मीयत इति मिथ्याबुद्धिमात्रेण भ्रान्तिसिद्धाज्ञानेन कल्पित इति चकारार्थः । यद्वोक्तमिथ्याबुद्धौ लोकानुभवमाह—**दृश्यते चेति** । इत्थंभावे तृतीया । भ्रान्त्यात्मना दृश्यत इत्यर्थः । पूर्वपूर्वभ्रान्तिमात्रेण दृश्यते, न च प्रमयेति वार्थः । कूटस्थस्यापि मायिकं कारणत्वं युक्तमित्याह—**यथा त्विति** । यत्त्ववेद्ये शब्दशक्तिग्रहायोग इति । तन्न । सत्यादिपदानामबाधिताद्यर्थेषु लोकावगतशक्तिकानां वाच्यैकदेशत्वेनोपस्थिताखण्डब्रह्मलक्षकत्वादिति स्थितम् ॥ ९ ॥

अथवा पूर्वेण सूत्रेण शरीरपरिमाणस्यात्मन उपचितापचितशरीरान्तरप्रतिपत्तावकार्त्स्न्यप्रसञ्जनद्वारेणानित्यतायां चोदितायां पुनः पर्यायेण परिमाणानवस्थानेऽपि स्रोतःसन्ताननित्यतान्यायेनात्मनो नित्यता स्यात्, यथा रक्तपटादीनां विज्ञानानवस्थानेऽपि तत्सन्ताननित्यता तद्वद्विसिचामपीत्याशङ्क्यानेन सूत्रेणोत्तरमुच्यते। सन्तानस्य तावदवस्तुत्वे नैरात्म्यवादप्रसङ्गः, वस्तुत्वेऽप्यात्मनो विकारादिदोषसङ्गादस्य पक्षस्यानुपपत्तिरिति ॥ ३५ ॥

**अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥**

अपि चान्त्यस्य मोक्षावस्थाभाविनो जीवपरिमाणस्य नित्यत्वमिष्यते जैनैः, तद्वत् पूर्वयोरप्याद्यमध्यमयोर्जीवपरिमाणयोर्नित्यत्वप्रसङ्गादविशेषप्रसङ्गः स्यात्, एकशरीरपरिमाणतैव स्यान्नोपचितापचितशरीरान्तरप्राप्तिः। अथ वान्त्यस्य जीवपरिमाणस्यावस्थितत्वात्पूर्वयोरप्यवस्थयोरवस्थितपरिमाण

---

त्युपसंहरति—**अत इति**।

सूत्रस्यार्थान्तरमाह—**अथ वेति**। स्थूलसूक्ष्मशरीरप्राप्तावकार्त्स्न्योक्तिद्वारेणाऽऽत्मानित्यतायामुक्तायां सुगतवत् सन्तानरूपेणाऽऽत्मनित्यतामाशंक्याऽनेनोत्तरमुच्यत इत्यन्वयः। **पर्यायेणेति** अस्य व्याख्या **स्रोत इति**। देहभेदेन परिमाणस्यात्मनश्चाऽनवस्थानेऽपि नाशेपि, स्रोतः प्रवाहः, तदात्मकस्याऽऽत्मव्यक्तिसन्तानस्य नित्यतयाऽऽत्मनित्यता स्यादित्यत्र दृष्टान्तमाह—**यथेति**। **सिग्** वस्त्रं विगतं येभ्यः ते **विसिचो** दिगम्बराः, तेषामित्यर्थः। "**पर्यायात्**" सन्तानादप्यात्मनित्यत्वस्य **अविरोधः इति न च**। कुतः? "**विकारादिभ्यः**"। सन्तानस्यावस्तुनः आत्मत्वे शून्यवादः, सन्तानस्य वस्तुत्वे सन्तान्यतिरेके च कूटस्थात्मवादः, अनतिरेके जन्मादिविकारो विनाशो मुक्त्यभाव इत्युक्तदोषप्रसङ्गात्सन्तानात्मपक्षोऽनुपपन्न इति सूत्रार्थः ॥ ३५ ॥

यं स्थूलं वा सूक्ष्मं वा देहं गृह्णाति तद्देहपरिमाण एव जीव इति नियमं दूषयति—**अन्त्येति**। अन्त्यशरीरपरिमाणस्यावस्थितेर्नित्यत्वदर्शनादुभयोराद्यमध्यमपरिमाणयोर्नित्यत्वप्रसङ्गादविशेषस्त्रयाणां नित्यपरिमाणानां साम्यं स्याद्विरुद्धपरिमाणानामेकत्रायोगादिति **सूत्रयोजना**। आद्यमध्यमपरिमाणे नित्ये आत्मपरिमाणत्वादन्त्यपरिमाणवत्। न चाप्रयोजकता, परिमाणनाशे सत्यात्मनोऽपि नाशादन्त्यपरिमाणनित्यत्वायोगादिति भावः। परिमाणत्रयसाम्यापादनफलमाह—**एकेति**। अन्त्यशरीरसमान्येव पूर्वशरीराणि स्युः विषमशरीरप्राप्तावात्मनस्तत्परिमाणत्वे परिमाणत्रयसाम्यानुमानविरोधादित्यर्थः। पूर्वं कालत्रये परिमाणत्रयमङ्गीकृत्या-

एव जीवः स्यात्, ततश्चाविशेषेण सर्वदैवाणुर्महान्वा जीवोऽभ्युपगन्तव्यो न शरीरपरिमाणः, अतश्च सौगतवदार्हतमपि मतमसंगतमित्युपेक्षितव्यम् ३६॥

७ पत्यधिकरणम् । सू० ३७—४१

तटस्थेश्वरवादो यः स युक्तोऽथ न युज्यते । युक्तः कुलालदृष्टान्तान्नियन्तृत्वस्य सम्भवात् ॥
न युक्तो विषमत्वादिदोषाद्वैदिक ईश्वरे । अभ्युपेते तटस्थत्वं त्याज्यं श्रुतिविरोधतः ॥

**पत्युरसामञ्जस्यात् ॥ ३७ ॥**

इदानीं केवलाधिष्ठात्रीश्वरकारणवादः प्रतिषिध्यते । तत्कथमवगम्यते ? 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' 'अभिध्योपदेशाच्च' (ब्र० १।४।२३, २४) इत्यत्र प्रकृतिभावेनाधिष्ठातृभावेन चोभयस्वभावस्येश्वरस्य स्वयमेवाचार्येण प्रतिष्ठापितत्वात् । यदि पुनरविशेषेणेश्वरकारणवादमात्रमिह प्रतिषिध्येत पूर्वोत्तरविरोधाद्व्याहताभिव्याहारः सूत्रकार इत्येतदापद्येत । तस्मादप्रकृतिरधिष्ठाता केवलं निमित्तकारणमीश्वर इत्येष पक्षो वेदान्तविहितब्रह्मैकत्वप्रतिपक्षत्वाद्यत्नेनात्र प्रतिषिध्यते । सा चेयं वेदबाह्येश्वरकल्पनानेकप्रकारा । केचित्तावत्सांख्ययोगव्यपाश्रयाः कल्पयन्ति—प्रधानपुरुषयोरधिष्ठाता केवलं निमित्तकारणमीश्वर इतरेतरविलक्षणाः प्रधानपुरुषेश्वरा—इति ।

---

न्त्यदृष्टान्तेन नित्यत्वमनुमाय साम्यमापादितम्, सम्प्रत्यन्त्यस्य मुक्तपरिमाणस्याणुत्वस्थूलत्वयोरन्यतरत्वेनाऽवस्थितेस्तदेवान्त्यमाद्यमध्यमकालयोरपि नित्यत्वात् स्यात्, प्रागसतो नित्यत्वायोगात्, तथा चाविशेषः कालत्रयेऽपि जीवपरिमाणभेद इत्याह—**अथ चेति** । तस्माद् भ्रान्त्येकशरणक्षपणकसिद्धान्तेनाऽविरोधः समन्वयस्येति सिद्धम् ॥ ३६ ॥

**पत्युरसामञ्जस्यात्** । लुञ्चितकेशमतनिरासानन्तरं जटाधारिशैवमतं बुद्धिस्थं निराक्रियते इति प्रसङ्गसङ्गतिमाह **इदानीमिति** । सामान्यत ईश्वरनिरास एवात्र किं न स्यादिति शङ्कते—**तदिति** । स्वोक्तिविरोधान्नैवमित्याह—**प्रकृतिश्चेत्यादिना** । प्रतिष्ठापितत्वात् केवलनिमित्तेश्वरप्रतिषेधोऽवगम्यत इत्यन्वयः । व्याहतो विरुद्धोऽभिव्याहार उक्तिर्यस्य सः तथा । अद्वितीयब्रह्मप्रकृतिकं जगदिति वदतो वेदान्तसमन्वयस्य कर्तैवेश्वरो न प्रकृतिरिति शैवादिमतेन विरोधोऽस्ति न वेति सन्देहे तन्मतस्य मानमूलत्वाद्विरोधे सति वेदान्तोक्ताद्वयब्रह्मासिद्धिरिति फलमभिप्रेत्य सत्त्वासत्त्वयोरेकत्रासम्भववत् कर्तृत्वोपादानत्वयोरप्येकत्रासम्भवात् कर्तैवेश्वर इति पूर्वपक्षं कुर्वन्नवान्तरमतभेदमाह—**सा चेति** । सेश्वराः सांख्याः, सांख्यशब्दार्थः चत्वारो माहेश्वराः—शैवाः पाशुपताः कारुणिकसिद्धान्तिनः कापालिकाश्चेति । सर्वेऽप्यमी महेश्वरप्रोक्तागमानुगामित्वान्माहेश्वरा उच्यन्ते । कार्यं महदादिकम् १, कारणं प्रधा-

माहेश्वरास्तु मन्यन्ते कार्यकारणयोगविधिदुःखान्ताः पञ्च पदार्थाः पशुपतिनेश्वरेण पशुपाशविमोक्षणायोपदिष्टाः, पशुमतिरीश्वरो निमित्तकारणमिति वर्णयन्ति । तथा वैशेषिकादयोऽपि केचित्कथंचित्स्वप्रक्रियानुसारेण निमित्तकारणमीश्वर इति वर्णयन्ति(१) ।

अत उत्तरमुच्यते—'पत्युरसामञ्जस्यात्' इति । पत्युरीश्वरस्य प्रधानपुरुषयोरधिष्ठातृत्वेन जगत्कारणत्वं नोपपद्यते, कस्यात् ? असामञ्जस्यात् । किं पुनरसामञ्जस्यम् ? हीनमध्यमोत्तमभावेन हि प्राणिभेदान्विदधत ईश्वरस्य रागद्वेषादिदोषप्रसक्तेरस्मदादिवदनीश्वरत्वं प्रसज्येत । प्राणिकर्मापे-

नमीश्वरश्च २, योगः समाधिः ३, विधिः त्रिषवणस्नानादिः ४, दुःखान्तो मोक्ष ५ इति **पञ्च पदार्थाः** । **पशवः** जीवाः तेषां **पाशः** बन्धस्तन्नाशायेत्यर्थः । पाशुपतागमप्रामाण्यात् पशुपतिर्निमित्तमेवेति मतमुक्त्वाऽऽनुमानिकेश्वरमतमाह—**तथेति** । विमतं सकर्तृकं कार्यत्वाद् घटवदिति **वैशेषिकाः** कर्तारमीश्वरं साधयन्ति । कर्मफलं सपरिकराभिज्ञदातृकं कालान्तरभाविफलत्वात् सेवाफलवदिति **गौतमा दिगम्बराश्च** । ज्ञानैश्वर्योत्कर्षः क्वचिद्विश्रान्तः सातिशयत्वात् परिमाणवदिति सांख्यसौगतपातञ्जला इति मत्वोक्तम्—**केचित् कथञ्चिदिति** ।

सिद्धान्तयति—**अत इति** । आगमादिना निर्दोषेश्वरसिद्धेः कथं दोषवत्त्वमित्याह—**किमिति** । न तावत् स्वस्वागमादीश्वरनिर्णयः, आगमानां निर्मूलत्वेनाप्रामाण्यात् । न च सर्वज्ञज्ञानं मूलम्, तत्र मानाभावात् । न चागम एव मानम्, आगममानत्वनिश्चये मूलनिश्चयस्तन्निश्चये तन्निश्चय इत्यन्योन्याश्रयात् । न च पुरुषवचसां स्वतो मानत्वं युक्तम्, मिथो विरोधेन तत्त्वाव्यवस्थानाच्च । नाप्यनुमानादीश्वरः सर्वज्ञः कर्त्तैवेति निर्णयः सम्भवति, अनुमानस्य दृष्टानुसारित्वेन दृष्टविपरीतार्थासाधकत्वात् । तथा च लोके यादृशाः कर्त्तारो दृष्टास्तादृशा एव जगत्कर्त्तारो रागद्वेषादिमन्तः सिध्येयुः। यदि लोके विचित्रप्रासादादिकर्तुरेकत्वाद्यदर्शनेऽपि जगत्कर्त्तरि लाघवादेकत्वं नित्यज्ञानं निर्दोषत्वं च कल्प्येत, तर्हि द्रव्योपादानत्वमपि कल्प्यताम् । कर्तुरेवोपादानत्वेन लाघवात् । अन्यथा स्वतन्त्रप्रधानपरमाण्वाद्युपादानकल्पनागौरवात्, अदृष्टत्वाच्चेत् कर्तुर्द्रव्योपादानत्वासिद्धिरेकत्वादिकमपि न सिध्येत् । अस्माकन्त्वपौरुषेयतया स्वतःसिद्धप्रमाणभावया श्रुत्या स्वप्रमेयबोधने दृष्टान्तानपेक्षया भवत्येव लौकिककर्तृविपरीताऽद्वितीयकर्त्रुपादानात्मकसर्वज्ञनिर्दोषेश्वरनिर्णयः । निर्णीते च तस्मिन् धर्मिग्राहकमानबाधान्न रागादिदोषापादानस्यावकाश इत्यानुमानिकेश्वरादिभ्यो वैषम्यम्, तदभिप्रेत्याऽश्रौतस्येश्वरस्याऽसामञ्जस्यमाह—**हीनेति** । यदि कर्त्तुरुपादानत्वम-

(१) 'वर्णयन्ति' इति प्रा० मु० पु० नास्ति ।

क्षितत्वाददोष इति चेत् । न । कर्मेश्वरयोः प्रवर्त्यप्रवर्तयितृत्वे इतरेतराश्रयदोषप्रसङ्गात् । (१)नानादित्वादिति चेत् । न वर्तमानकालवदतीतेष्वपि कालेष्वितरेतराश्रयदोषाविशेषादन्धपरम्परान्यायापत्तेः । अपि च 'प्रवर्तनालक्षणा दोषाः' (न्यायसू० १।१।१८) इति न्यायवित्समयः । नहि कश्चिददोषप्रयुक्तः स्वार्थे परार्थे वा प्रवर्तमानो दृश्यते । स्वार्थे प्रयुक्त एव च सर्वो जनः परार्थेऽपि प्रवर्तत इत्येवमप्यसामञ्जस्यं, स्वार्थवत्त्वादीश्वरस्यानीश्वरत्वप्रसङ्गात् । पुरुषविशेषत्वाभ्युपगमाच्चेश्वरस्य पुरुषस्य चौदासीन्याभ्युपगमादसामञ्जस्यम् ॥ ३७ ॥

---

दृष्टत्वान्न कल्प्यते, तर्हि निर्दोषत्वस्याप्यदृष्टत्वात् यो विषमकारी स दोषवानिति व्याप्तिदृष्टेश्च जगत्कर्ता दोषवान् स्यात् । न चात्र धर्मिग्राहकानुमानबाधः, कार्यत्वलिङ्गस्य कर्तृमात्रसाधकत्वेन निर्दोषत्वादावुदासीनत्वात् । न चोत्कर्षसमा जातिः, व्यापकधर्मापादनात् । दोषाभावे तद्व्याप्यविषमकर्तृकत्वायोगाच्च, दृष्टान्तस्थाव्यापकधर्माणां पक्षे आपादनं ह्युत्कर्षसमा जातिः, यथा शब्दो यदि कृतकत्वेन हेतुना घटवदनित्यः स्यात्, तर्हि तेनैव हेतुना सावयवोऽपि स्यादिति । न ह्यत्रानित्यत्वस्य व्यापकं सावयवत्वम्, गन्धादौ व्यभिचारादिति भावः । ननु प्राणिकर्मप्रेरित ईश्वरो विषमफलान् प्राणिनः करोति, न स्वेच्छयेति शङ्कते-प्राणीति । जडस्य कर्मणः प्रेरकत्वायोगान्मैवमित्याह-नेति । न चेश्वरप्रेरितं कर्मेश्वरस्य प्रेरकमिति वाच्यमित्याह कर्मेति । अतीतकर्मणा प्रेरित ईश्वरो वर्तमानं कर्म तत्फलाय प्रेरयतीत्यनादित्वात् प्रेर्यप्रेरकभावस्य नानुपपत्तिरिति शङ्कते-(२)नानादित्वादिति । अतीतकर्मणोऽपि जडत्वान्नेश्वरप्रेरकता, न च तदपीश्वरेण प्रेरितं सदीश्वरं प्रेरयति, उक्तान्योन्याश्रयात्, ततोऽप्यतीतकर्मप्रेरितेश्वरप्रेरितं तदेवेश्वरं वर्तमाने कर्मणि फलदानाय प्रेरयतीति चेन्न ।मानहीनाया मूलक्षयावहाया अनवस्थायाः प्रसङ्गात्, अतः कर्मनिरपेक्ष एवेश्वरो विषमस्रष्टेत्यसामञ्जस्यं दुर्वारमित्यर्थः । यत्तु फलदाने ईश्वरस्य कर्म निमित्तमात्रं, न प्रेरकमिति नोक्तदोष इति । तन्न । विषमकर्म कारयितुरीश्वरस्य दोषवत्त्वानपायात्, पूर्वकर्मापेक्षया कर्मकारयितृत्वे चोक्ताप्रामाणिकानवस्थानात् । अस्माकं त्वेष ह्येव साध्वसाधु कारयतीति निरवद्यमिति च श्रुतिमूलं पूर्वकर्मापेक्षाकल्पनमिति वैषम्यम् । किञ्च परमतानुसारेणापीश्वरस्य रागादिमत्त्वं प्राप्नोतीत्याह- अपि चेति । प्रवर्तकत्वलिङ्गाः दोषाः इति तार्किकाणां स्थितिः, तथा चेश्वरः स्वार्थरागादिमान् प्रवर्तकत्वात् सम्मतवत् । न च कारुणिके व्यभिचारः, परदुःखप्रयुक्तस्वदुःखनिवृत्त्यर्थित्वात्तस्येत्यर्थः । उदासीनः प्रवर्तक इति च व्याहतमिति योगान् प्रत्याह-पुरुषेति॥३७॥

---

(१) 'अनादित्वा'दिति प्रा० मु० पु० पाठ ।

(२) अत्रापि 'अनादित्वात' इत्येव पाठ प्रा० मु० पु० वर्तते ।

## सम्बन्धानुपपत्तेश्च ॥ ३८ ॥

पुनरप्यसामञ्जस्यमेव, नहि प्रधानपुरुषव्यतिरिक्त ईश्वरोऽन्तरेण संबन्धं प्रधानपुरुषयोरीशिता । न तावत्संयोगलक्षणः संबन्धः संभवति, प्रधानपुरुषेश्वराणां सर्वगतत्वान्निरवयवत्वाच्च । नापि समवायलक्षणः संबन्धः, आश्रयाश्रयिभावानिरूपणात् । नाप्यन्यः कश्चित्कार्यगम्यः संबन्धः शक्यते कल्पयितुं, कार्यकारणभावस्यैवाद्याप्यसिद्धत्वात् । ब्रह्मवादिनः कथमिति चेत् । न । तस्य तादात्म्यलक्षणसंबन्धोपपत्तेः । अपि चागमबलेन ब्रह्मवादी कारणादिस्वरूपं निरूपयतीति नावश्यं तस्य यथादृष्टमेव सर्वमभ्युपगन्तव्यमिति नियमोऽस्ति, परस्य तु दृष्टान्तबलेन कारणादिस्वरूपं निरूपयतो यथादृष्टमेव सर्वमभ्युपगन्तव्यमित्ययमस्त्यतिशयः । परस्यापि सर्वज्ञप्रणीतागमसद्भावात्समानमागमबलमिति चेत् । न । इतरेतराश्रयत्वप्रसङ्गादागमप्रत्ययात्सर्वज्ञत्वसिद्धिः सर्वज्ञप्रत्ययाच्चागमसिद्धिरिति । तस्मादनुपपन्ना सांख्ययोगवादिनामीश्वरकल्पना । एवमन्यास्वपि वेदबाह्यास्वीश्वरकल्पनासु यथासंभवमसामञ्जस्यं योजयितव्यम् ॥ ३८ ॥

## अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य । स हि परिकल्प्यमानः

---

प्रधानवादे दोषान्तरमाह सूत्रकारः–सम्बन्धेति । ईश्वरेणासम्बद्धस्य प्रधानादेः प्रेर्यत्वायोगात् सम्बन्धो वाच्यः, स च संयोगः समवायो वा नाऽस्तीत्यर्थः । कार्यबलात् प्रेरणयोग्यत्वाख्यः सम्बन्धः कल्प्यतामित्यत आह–नाप्यन्य इति । ईश्वरप्रेरितप्रधानकार्यं जगदिति सिद्धं चेत् सम्बन्धकल्पना स्यात्, तच्चाद्याप्यसिद्धमित्यर्थः। मायाब्रह्मणोस्त्वनिर्वाच्यतादात्म्यसम्बन्धः, "देवात्मशक्तिम्" [ श्वेता० १ । ३ ] इति श्रुतेः । किंच वेदस्यापूर्वार्थत्वान्न लोकदृष्टमृत्कुलालसम्बन्धो वैदिकेनानुसर्तव्यः। आनुमानिकेन त्वनुसर्तव्य इति विशेषमाह—अपि चेति । सर्वज्ञस्यागमप्रामाण्यस्य च ज्ञप्तावन्योन्याश्रयः अनुमानात् सर्वज्ञसिद्धेर्निरस्तत्वात्, न ह्यमनस्कस्य ज्ञानं संभवति, ज्ञानं मनोजन्यमिति व्याप्तिविरोधान्नित्यज्ञानकल्पनाऽनवकाशादिति भावः । प्रधानवत् परमाणूनामपि निरवयवेश्वरेण संयोगाद्यसत्त्वात् प्रेर्यत्वायोगः, प्रेरकत्वे चेश्वरस्य दोषवत्त्वमित्याह–एवमन्यास्वपीति ॥ ३८ ॥

ईश्वरस्य प्रधानादिप्रेरणानुपपत्तेश्च, असामञ्जस्यमित्याह सूत्रकारः–अधिष्ठानेति ।

कुम्भकार इव मृदादीनि प्रधानादीन्यधिष्ठाय प्रवर्तयेत्। न चैवमुपपद्यते। न ह्यप्रत्यक्षं रूपादिहीनं च प्रधानमीश्वरस्याधिष्ठेयं सम्भवति, मृदादिवैलक्षण्यात्॥ ३९॥

**करणवच्चेन्न भोगादिभ्यः॥ ४०॥**

स्यादेतत्, यथा कारणग्रामं चक्षुरादिकमप्रत्यक्षं रूपादिहीनं च पुरुषोऽधितिष्ठत्येवं प्रधानमपीश्वरोऽधिष्ठास्यतीति। तथापि नोपपद्यते। भोगादिदर्शनाद्धि करणग्रामस्याधिष्ठितत्वं गम्यते। न चात्र भोगादयो दृश्यन्ते। करणग्रामसाम्ये वाभ्युपगम्यमाने संसारिणामिवेश्वरस्यापि भोगादयः प्रसज्येरन्।

अन्यथा वा सूत्रद्वयं व्याख्यायते। 'अधिष्ठानानुपपत्तेश्च'। इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य। साधिष्ठानो हि लोके सशरीरो राजा राष्ट्रस्येश्वरो दृश्यते न निरधिष्ठानः, अतश्च तद्दृष्टान्तवशेनादृष्टमीश्वरं कल्पयितुमिच्छत ईश्वरस्यापि किंचिच्छरीरं करणायतनं वर्णयितव्यं स्यात्, न च तद्वर्णयितुं शक्यते। सृष्ट्युत्तरकालभावित्वाच्छरीरस्य प्राक्सृष्टेस्तदनुपपत्तेः। निरधिष्ठानत्वे चेश्वरस्य प्रवर्तकत्वानुपपत्तिः एवं लोके दृष्ट-

---

प्रधानादिकं चेतनस्यानधिष्ठेयं अप्रत्यक्षत्वादीश्वरवद्व्यतिरेकेण मृदादिवच्चेत्यर्थः॥ ३९॥

चक्षुरादौ व्यभिचारमाशंक्य निषेधति—करणवदिति। रूपमुद्भूतं नास्तीत्यप्रत्यक्षत्वं स्फुटयति—रूपेति। स्वभोगाहेतुत्वे सतीति विशेषणान्न व्यभिचार इत्याह—तथापीति। भोगः सुखदुःखानुभवः। आदिपदाद् विषयानुभवग्रहः। न च यद् येनाधिष्ठेयं तत्तदीयभोग हेतुत्वे सति प्रत्यक्षमिति व्यतिरेकव्याप्तौ करणेषु व्यभिचारतादवस्थ्यमिति वाच्यम्। भोगाहेतुत्वविशिष्टाप्रत्यक्षत्वस्य हेतुत्वात्, करणेषु च विशेषणाभावेन विशिष्टस्य हेतोरभावात्। न च विशेष्यवैयर्थ्यम्। परार्थपाचकाधिष्ठेयकाष्ठादौ व्यभिचारात्। न च प्रधानादेरीश्वरप्रत्यक्षत्वाद्विशेष्यासिद्धिः, अतीन्द्रियत्वरूपाप्रत्यक्षत्वस्य सत्त्वादित्यभिप्रायः। जीवे करणकृताः भोगादयो दृश्यन्ते ईश्वरे तु प्रधानकृतास्ते न दृश्यन्त इत्यक्षरार्थः। विपक्षे दोषं वदन् अप्रयोजकत्वं हेतोर्निरस्यति—करणेति। प्रधानादेः प्रेर्यत्वाङ्गीकारे प्रेरकभोगहेतुत्वं स्यादतीन्द्रियस्य प्रेर्यस्य भोगहेतुत्वनियमादित्यर्थः। सूत्रद्वयस्यार्थान्तरमाह—अन्यथा वेति। यः प्रवर्तकश्चेतनः स शरीरीति लोके व्याप्तिर्दृष्टा। ईश्वरस्य च शरीरानुपपत्तेर्न प्रवर्तकत्वमिति सूत्रार्थमाह—इतश्चेति। विमतं सेश्वरं कार्यत्वाद्राष्ट्रवदिति कल्पयतो राजवत् सशरीर एवेश्वरः स्यादित्युक्तम्, तत्रेष्टापत्तिं निरस्यति—न च तद्वर्णयितुमिति। न च नित्यं शरीरं सर्गात् प्रागपि

त्वात् । 'करणवच्चेन्न भोगादिभ्यः' । अथ लोकदर्शनानुसारेणेश्वरस्यापि किंचित्करणानामायतनं शरीरं कामेन कल्प्येत, एवमपि नोपपद्यते । सशरीरत्वे हि सति संसारिवद्भोगादिप्रसङ्गादीश्वरस्याप्यनीश्वरत्वं प्रसज्येत ॥ ४० ॥

**अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥**

इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य । स हि सर्वज्ञस्तैरभ्युपगम्यतेऽनन्तश्च, अनन्तं च प्रधानमनन्ताश्च पुरुषा मिथो भिन्ना अभ्युपगम्यन्ते । तत्र सर्वज्ञेनेश्वरेण प्रधानस्य पुरुषाणामात्मनश्चेयत्ता परिच्छिद्येत वा न वा परिच्छिद्येत, उभयथापि दोषोऽनुषक्त एव । कथम् ? पूर्वस्मिंस्तावद्विकल्पे इयत्तापरिच्छिन्नत्वात्प्रधानपुरुषेश्वराणामन्तवत्त्वमवश्यं भाव्येवं लोके दृष्टत्वात् । यद्धि लोके इयत्तापरिच्छिन्नं वस्तु घटादि तदन्तवद्दृष्टं तथा प्रधानपुरुषेश्वरत्रयमपीयत्तापरिच्छिन्नत्वादन्तवत्स्यात् । संख्यापरिमाणं तावत्प्रधानपुरुषेश्वरत्रयरूपेण परिच्छिन्नम् , स्वरूपपरिमाणमपि तद्गतमीश्वरेण परिच्छिद्येतेति । पुरुषगता च महासङ्ख्या । ततश्चेयत्तापरिच्छिन्नानां

---

सम्भवतीति वाच्यम् , शरीरस्य भौतिकत्वनियमादित्यर्थः । अतस्त्वशरीर एवेश्वर इत्यत आह—**निरधिष्ठानत्वेन चेति** । जीवस्यैव शरीरं भौतिकम् , ईश्वरस्य तु स्वेच्छानिर्मितं प्रागपि स्यादित्याशङ्कां निरस्यति—**करणवदिति** । करणान्यत्र सन्तीति करणवच्छरीरम् , इच्छामयशरीरकल्पनैवानुपपन्ना मानाभावाद्, दृष्टभौतिकत्वनियमविरोधाच्चेति मन्तव्यम् ॥ ४० ॥

एवमीश्वरस्य शुष्कतर्केण कर्तृत्वनिर्णयो नेत्युपपाद्य नित्यत्वसर्वज्ञत्वनिर्णयोऽपि न सम्भवतीत्याह सूत्रकारः—**अन्तवत्त्वमिति** । प्रधानपुरुषेश्वरत्रयमनित्यम् इयत्तापरिच्छिन्नत्वाद् घटवदित्याह—**पूर्वस्मिन्निति** । संख्या वा परिमाणं वा **इयत्ता** । तथा च निश्चितसंख्यत्वान्निश्चितपरिमाणत्वाच्चेति हेतुद्वयम् । यद्यपि संख्यावत्त्वमात्रं हेतुः सम्भवति तथापि सर्वज्ञत्वनिश्चयेन हेत्वसिद्धिनिरासं द्योतयितुं निश्चितपदम् । तत्राद्यहेतोरसिद्धिर्नास्तीत्याह—**संख्यापरिमाणमिति** । संख्यास्वरूपमित्यर्थः । द्वितीयहेतुं साधयति—**स्वरूपेति** । प्रधानादयः निश्चितपरिमाणाः वस्तुतोऽभिन्नत्वाद् घटवदित्यर्थः । **ननु** प्रधानपुरुषेश्वरास्त्रय इति ज्ञातेऽपि जीवानामानन्त्यात् कथं संख्यानिश्चयः, तत्राह—**पुरुषेति** । जीवसंख्यापीश्वरेण निश्चीयेत, अनिश्चये सर्वज्ञत्वायोगादित्यर्थः। हेतुसिद्धेः फलमाह—**ततश्चेति** । माषराशिवत् केषाञ्चिज्जीवानां सङ्गः, तद्बन्धश्च नश्येदित्येवं सर्वमुक्तेरिदानीं शून्यं जगत् स्यादित्यर्थः । नित्यस्यानवशेषादिति भावः । **ननु** ईश्वरः शिष्यतामिति चेन्न । तस्यापि भिन्नत्वेनान्तवत्त्वात् ।

मध्ये ये संसारिणः संसारान्मुच्यन्ते तेषा संसारोऽन्तवान्संसारित्वं च तेषामन्तवत्, एवमितरेष्वपि क्रमेण मुच्यमानेषु संसारस्य संसारिणां चान्तवत्त्वं स्यात्। प्रधानं च सविकारं पुरुषार्थमीश्वरस्याधिष्ठेयं संसारित्वेनाभिमतं तच्छून्यतायामीश्वरः किमधितिष्ठेत्, किंविषये वा सर्वज्ञतेश्वरते स्याताम्। प्रधानपुरुषेश्वराणां चैवमन्तवत्त्वे सत्यादिमत्त्वप्रसङ्गः, आद्यन्तवत्त्वे च शून्यवादप्रसङ्गः। अथ मा भूदेष दोष इत्युत्तरो विकल्पोऽभ्युपगम्येत—न प्रधानस्य पुरुषाणामात्मनश्चेयत्तेश्वरेण परिच्छिद्यत—इति, तत ईश्वरस्य सर्वज्ञत्वाभ्युपगमहानिरपरो दोषः प्रसज्येत। तस्मादप्यसङ्गतस्तार्किकपरिगृहीत ईश्वरकारणवादः ॥ ४१ ॥

८ उत्पत्त्यसंभवाधिकरणम्। सू० ४२-४५

जीवोत्पत्त्यादिकं पाञ्चरात्रोक्तं युज्यते न वा। युक्तं नारायणव्यूहतत्समाराधनादिवत्॥
युज्यतामविरुद्धोंशो जीवोत्पत्तिर्न युज्यते। उत्पन्नस्य विनाशित्वे कृतनाशादिदोषतः॥

## उत्पत्त्यसंभवात् ॥ ४२ ॥

येषामप्रकृतिराधिष्ठाता केवलनिमित्तकारणमीश्वरोऽभिमतस्तेषां पक्षः प्रत्याख्यातः, येषां पुनः प्रकृतिश्चाधिष्ठाता चोभयात्मकं कारणमीश्वरोऽभिमतस्तेषां पक्षः प्रत्याख्यायते। **ननु** श्रुतिसमाश्रयणेनाप्येवंरूप एवेश्वरः प्राङ्निर्धारितः प्रकृतिश्चाधिष्ठाता चेति, श्रुत्यनुसारिणी च स्मृतिः प्रमाणमिति स्थितिः, तत्कस्य हेतोरेष पक्षः प्रत्याचिख्यासित इति। **उच्यते**। यद्यप्येवंजातीयकोंऽशः समानत्वान्न विसंवादगोचरो भवत्य-

---

किञ्चेशितव्याभावादीश्वराभावः स्यादित्याह—प्रधानमिति। दोषान्तरमाह—प्रधानेति। इयत्तानिश्चयाभावान्न शून्यतेति द्वितीयं शङ्कते—अथेति। इयत्ता नास्ति, न निश्चीयते चेत्यर्थः। प्रधानादयः संख्यापरिमाणवन्तः द्रव्यत्वान्माषादिवदित्यनुमानादस्तीयत्ता, तदज्ञाने स्यादसर्वज्ञता, इयत्तायां चान्तवत्त्वमप्यक्षतमिति परिहरति—तत इति। **तस्मात्** केवलकर्त्रीश्वरवादस्य निर्मूलत्वान्न कर्त्रुपादानाद्वयेश्वरसमन्वयविरोध इति सिद्धम् ॥ ४१ ॥ (७) ॥

पञ्चपदार्थवादिमाहेश्वरमतनिरासानन्तरं चतुर्व्यूहवादं बुद्धिस्थं निरस्यति—उत्पत्त्यसम्भवादिति। अधिकरणतात्पर्यमाह—येषामिति। अधिकरणारम्भमाक्षिपति—नन्विति। वेदाविरुद्धांशमङ्गीकृत्य वेदविरुद्धं जीवोत्पत्त्याद्यंशं निराकर्तुमधिकरणारम्भ इत्याह—उच्यत इति। अत्र भागवतपाञ्चरात्रागमो विषयः, स किं जीवोत्पत्त्या-

ऽस्ति त्वंशान्तरं विसंवादस्थानमित्यतस्तत्प्रत्याख्यानायारम्भः । तत्र भागवता मन्यन्ते—भगवानेवैको वासुदेवो निरञ्जनज्ञानस्वरूपः परमार्थतत्त्वं, स चतुर्धाऽऽत्मानं प्रविभज्य प्रतिष्ठितो वासुदेवव्यूहरूपेण संकर्षणव्यूहरूपेण प्रद्युम्नव्यूहरूपेणानिरुद्धव्यूहरूपेण च । वासुदेवो नाम परमात्मोच्यते । संकर्षणो नाम जीवः । प्रद्युम्नो नाम मनः । अनिरुद्धो नामाहंकारः । तेषां वासुदेवः परा प्रकृतिरितरे संकर्षणादयः कार्यम् । तमित्थंभूतं परमेश्वरं भगवन्तमभिगमनोपादानेज्यास्वाध्याययोगैर्वर्षशतमिष्ट्वा क्षीणक्लेशो भगवन्तमेव प्रतिपद्यत—इति ।

तत्र यत्तावदुच्यते—योऽसौ नारायणः परोऽव्यक्तात्प्रसिद्धः परमात्मा सर्वात्मा स आत्मनाऽऽत्मानमनेकधा व्यूह्यावस्थित—इति, तन्न निराक्रियते, 'स एकधा भवति त्रिधा भवति' (छां० ७।२६।२) इत्यादिश्रुतिभ्यः परमात्मनोऽनेकधा भावस्याधिगतत्वात् । यदपि तस्य भगवतोऽभिगमनादिलक्षणमाराधनमजस्रमनन्यचित्ततयाभिप्रेयते, तदपि न प्रतिषिध्यते, श्रुतिस्मृत्योरीश्वरप्रणिधानस्य प्रसिद्धत्वात् । यत्पुनरिदमुच्यते—वासुदेवात्संकर्षण उत्पद्यते संकर्षणाच्च प्रद्युम्नः प्रद्युम्नाच्चानिरुद्ध—इति । अत्र ब्रूमः । न वासुदेवसंज्ञकात्परमात्मनः संकर्षणसंज्ञकस्य जीवस्योत्पत्तिः संभवति, अ-

---

ंशे माने न वेति सन्देहे बाधानुपलम्भान्मानमिति पूर्वपक्षयति—तत्रेति । पूर्वपक्षे तदागमविरोधाज्जीवाभिन्नब्रह्मसमन्वयासिद्धिः, सिद्धान्ते तदंशे तस्याऽमानत्वादविरोधात्तत्सिद्धिरिति फलभेदः । सावयवत्वं निरस्यति—निरञ्जनेति । कथं तर्ह्यद्वितीये वासुदेवे मूर्तिभेदः, तत्राह—स इति । व्यूहः मूर्तिः । सविशेषं शास्त्रार्थमुक्त्वा सहेतुं पुरुषार्थमाह—तमित्थम्भूतमिति । यथोक्तव्यूहवन्तं सर्वप्रकृतिं निरञ्जनं विज्ञानरूपं परमात्मानमिति यावत् । वाक्कायचेतसामवधानपूर्वकं देवतागृहगमनम् अभिगमनम् । पूजाद्रव्याणामर्जनम् उपादानम् । इज्या पूजा । स्वाध्यायः अष्टाक्षरादिजपः । योगः ध्यानम् ।

तत्राविरुद्धांशमुपादत्ते—तत्रेति । "समाहितः श्रद्धावित्तो भूत्वा" इति "तं यथायथोपासते" इत्याद्या च श्रुतिः । "मत्कर्मकृन्मत्परमः" [भ०गी०११।५५] इत्याद्या स्मृतिः । विरुद्धांशमनूद्य दूषयति—यत्पुनरिति । कृतहान्यादिदोषः आदिशब्दार्थः । न्यायोपेतया "अज आत्मा" [वृ०४।४] [२।२४।२५] इत्यादि-

नित्यत्वादिदोषप्रसङ्गात् । उत्पत्तिमत्त्वे हि जीवस्यानित्यत्वादयो दोषाः प्रसज्येरन् , ततश्च नैवास्य भगवत्प्राप्तिर्मोक्षः स्यात् , कारणप्राप्तौ कार्यस्य प्रविलयप्रसङ्गात । प्रतिषेधिष्यति चाचार्यो जीवस्योत्पत्तिम्—'नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः' (ब्र०सू०२।३।१७) इति । तस्मादसङ्गतैषा कल्पना ॥४२॥

## न च कर्तुः करणम् ॥ ४३ ॥

इतश्चासंगतैषा कल्पना, यस्मान्न हि लोके कर्तुर्देवदत्तादेः करणं परश्वाद्युत्पद्यमानं दृश्यते । वर्णयन्ति च भागवताः—कर्तुर्जीवात्संकर्षणसंज्ञकात्करणं मनः प्रद्युम्नसंज्ञकमुत्पद्यते कर्तृजाच्च तस्मादनिरुद्धसंज्ञकोऽहंकार उत्पद्यत—इति । न चैतद्दृष्टान्तमन्तरेणाध्यवसातुं शक्नुमः, न चैवंभूतां श्रुतिमुपलभामहे ॥ ४३ ॥

## विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

अथापि स्यान्न चैते संकर्षणादयो जीवादिभावेनाभिप्रेयन्ते, किं तर्हि? ईश्वरा एवैते सर्वे ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिरैश्वरैर्धर्मैरन्विता अभ्युपगम्यन्ते वासुदेवा एवैते सर्वे निर्दोषा निरधिष्ठाना निरवद्याश्चेति, त-

---

श्रुत्या पाञ्चरात्रागमस्योत्पत्त्यंशे मानत्वाभावनिश्चयाज्जीवाभिन्नब्रह्मसमन्वयस्थैर्यमिति भावः ॥४२ ॥

जीवस्योत्पत्तिं निरस्य जीवान्मनस उत्पत्तिं निरस्यति—न च कर्त्तुरिति । यस्मात् कर्तुः करणोत्पत्तिर्न दृश्यते, तस्मादसङ्गता कल्पनेत्यन्वयः । सिद्धानां करणानां प्रयोक्ता कर्त्तेति प्रसिद्ध्यर्थो हिशब्दः । वर्णनं निर्मूलमित्याह—न चेति । ननु लोके कश्चिच्छिल्पिवरः कुठारं निर्माय तेन वृक्षं छिनत्तीति दृष्टमिति चेत् । सत्यम् । शिल्पिनो हस्तादिकरणान्तरसत्त्वात् कुठारकर्तृत्वं युक्तम् , जीवस्य तु करणान्तरासत्वान्न मनसः कर्तृत्वम् । विनैव करणं कर्तृत्वे वा मनोवैयर्थ्यमिति भावः ॥ ४३ ॥

विज्ञानादिभावे वा तदप्रतिषेधः । संकर्षणादीनामुत्पत्त्यसम्भवेऽपि व्यूहचतुष्टयं स्यादिति सूत्रव्यावर्त्यमाशङ्कते—अथापि स्यादिति । ज्ञानैश्वर्ययोः शक्तिरान्तरं सामर्थ्यम्, बलं शरीरसामर्थ्यम् , वीर्यं शौर्यम् , तेजः प्रागल्भ्यम् । एतैरन्विताः यस्मात् सङ्कर्षणादयः तस्मादीश्वरा एवेत्यर्थः । सर्वेषामीश्वरत्वं पाञ्चरात्रोक्तिमाह—वासुदेवा एवेति । निर्दोषाः रागादिशून्याः, निरधिष्ठानाः प्रकृत्यजन्याः, निरवद्याः नाशादिरहिता इत्यर्थः । ईश्वरत्वाजन्मासम्भवो गुण एवेत्याह—

स्मान्नायं यथावर्णित उत्पत्त्यसंभवो दोषः प्राप्नोतीति । अत्रोच्यते । एव-मपि तदप्रतिषेध उत्पत्त्यसंभवस्याप्रतिषेधः प्राप्नोत्येव । अयमुत्पत्त्यसंभवो दोषः प्रकारान्तरेणेत्यभिप्रायः । कथम्? यदि तावदयमभिप्रायः परस्पर-भिन्ना एवैते वासुदेवादयश्चत्वार ईश्वरास्तुल्यधर्माणो नैषामेकात्मकत्वम-स्तीति, ततोऽनेकेश्वरकल्पनानर्थक्यम्, एकेनैवेश्वरेणेश्वरकार्यसिद्धेः । सिद्धा-न्तहानिश्च, भगवानेवैको वासुदेवः परमार्थतत्त्वमित्यभ्युपगमात् । अथा-यमभिप्रायः—एकस्यैव भगवत एते चत्वारो व्यूहास्तुल्यधर्माणः—इति, तथापि तदवस्थ एवोत्पत्त्यसंभवः । न हि वासुदेवात्संकर्षणस्योत्पत्तिः संभवति संकर्षणाच्च प्रद्युम्नस्य प्रद्युम्नाच्चानिरुद्धस्य, अतिशयाभावात् । भवितव्यं हि कार्यकारणयोरतिशयेन यथा मृद्घटयोः । न ह्यसत्यतिशये कार्यं कारण-मित्यवकल्पते । न च पञ्चरात्रसिद्धान्तिभिर्वासुदेवादिष्वेकैकस्मिन्सर्वेषु वा ज्ञानैश्वर्यादितारतम्यकृतः कश्चिद्भेदोऽभ्युपगम्यते वासुदेवा एव हि सर्वे व्यूहा निर्विशेषा इष्यन्ते । न चैते भगवद्व्यूहाश्चतुःसंख्यायामेवावतिष्ठेरन्, ब्रह्मादिस्तम्बपर्यन्तस्य समस्तस्यैव जगतो भगवद्व्यूहत्वावगमात् ॥४४॥

## विप्रतिषेधाच्च ॥ ४५ ॥

विप्रतिषेधश्चास्मिञ्छास्त्रे बहुविध उपलभ्यते गुणगुणित्वकल्पनादिल-क्षणः । ज्ञानैश्वर्यशक्तिबलवीर्यतेजांसि गुणाः, आत्मान एवैते भगवन्तो वासुदेवा इत्यादिदर्शनात् । वेदविप्रतिषेधश्च भवति, चतुर्षु वेदेषु परं

---

तस्मादिति । सूत्रेण सिद्धान्तयति—अत्रेति । एवमपि चतुर्णामीश्वरत्वेन विज्ञान-शक्त्यादिभावेऽपीत्यर्थः । प्रकारान्तरं पृच्छति—कथमिति । किं चत्वारः स्वतन्त्रा भिन्ना एव, उत एकस्य विकारत्वेनाभिन्नाः? आद्यम् अनूद्य दूषयति—यदीत्या-दिना । द्वितीये विकाराः प्रकृतितुल्या वा न्यूना वा? आद्यम् उत्थाप्य निषे-धति—अथेत्यादिना । न्यूनत्वपक्षेऽपसिद्धान्तमाह—न च पञ्चेति । यदि न्यूना अपि भगवतो व्यूहाः, तदा चतुष्ट्वव्याघात इत्याह—न चैत इति । ॥ ४४ ॥

इतश्च जीवोत्पत्तिवाद उपेक्ष्य इत्याह सूत्रकारः—विप्रतिषेधाच्चेति । स्वस्यैव गुणत्वं गुणित्वं च विरुद्धम् आदिपदात् प्रद्युम्नानिरुद्धौ भिन्नौ, आत्मन इत्युक्त्वा आत्मान एवैते इति विरुद्धोक्तिग्रहः । पूर्वापरविरोधादसाङ्गत्यमिति सूत्रार्थमुक्त्वार्थान्त-रमाह—वेदेति । एकस्यापि तन्त्राक्षरस्य अध्येता चतुर्वेदिभ्योऽधिक इति निन्दा

श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रमधिगतवानित्यादिवेदनिन्दादर्शनात् । तस्मादसङ्गतैषा कल्पनेति सिद्धम् ॥ ४५ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवत्पूज्यपादकृतौ शारीरकमीमांसाभाष्ये द्वितीयाध्यायस्य द्वितीयः पादः समाप्तः ॥ २ ॥



॥ इति द्वितीयाध्यायस्य सांख्यादिमतानां दुष्टत्वप्रदर्शनं नाम द्वितीयः पादः ॥

---

आदिपदार्थः । तस्मान्मिथो विरुद्धाभिः पौरुषेयकल्पनाभिर्नापौरुषेयवेदान्तसमन्वयविरोध इति सिद्धम् ॥ ४५ ॥ ( ८ ) ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमद्गोपालसरस्वतीपूज्यपादशिष्यश्रीगोविन्दानन्दभगवत्पादकृतौ शारीरकमीमांसादर्शनभाष्यव्याख्यायां (भाष्य) रत्नप्रभायां द्वितीयाध्यायस्य द्वितीयः पादः समाप्तः ॥ २ ॥ २ ॥

सर्वविधपुस्तक प्राप्तिस्थानम्—

जयकृष्णदास हरिदास गुप्तः—

**चौखम्बा संस्कृत सीरिज़ आफिस,**

विद्याविलास प्रेस, गोपालमन्दिर के उत्तरफाटक,

**बनारस सिटी ।**



THE

KASHI SANSKRIT SERIES

( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )

NO. 116.

( Vedânta Section, No. 11 )

THE

# BHÂMATÎ

## A GLOSS ON SHÂNKARA BHÂSHYA

by

VÂCHASPATI MIS'RA

*Edited with full notes*

By

*Pandit Dhundhirâj S'âstri Nyâyopâdhyâya*

Principal, Nityânanda Veda Vidyālâyā, Benares.

**(PART-I)**

PUBLISHED & SOLD BY

JAYA KRISHNA DÂS HARIDÂS GUPTA

*The Chowkhambâ Sanskrit Series Office.*

Benâres City.

1935.

ह रि दा स सं स्कृ त ग्र न्थ मा ला स मा ख्य-

काशीसंस्कृतसीरिज़्पुस्तकमालायाः—

११६

वेदान्तविभागे (११) एकादशं पुष्पम् ।

ब्रह्मसूत्रशाङ्करभाष्यव्याख्या

# भामती

सर्वतन्त्रस्वतन्त्रश्रीमद्वाचस्पतिमिश्रविरचिता ।

वाराणसेयनित्यानन्दवेदविद्यालयीय-

प्रधानाध्यापकेन न्यायोपाध्यायेन

पं० ढुण्ढिराजशास्त्रिणा

सङ्कलितया विषमस्थलटिप्पण्या समलङ्कृता तेनैव संस्कृता च ।

( प्रथमो भागः । )

प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस

बनारस सिटी ।

१९९२

राजशासनानुरोधेन सर्वेऽधिकाराः प्रकाशकेन स्वायत्तीकृताः ।

# भूमिका।

इह खलु प्रथितेष्वास्तिकनास्तिकदर्शनेषु परमवैराग्योत्पादनद्वारा निःश्रेयसजनकत्वेन विख्यातमद्वैतदर्शनमेव सिद्धान्तभूतमिति सुप्रसिद्धं विवेचकानाम्। यत्किल महर्षिप्रवरेण भगवदवताररूपेण व्यासेन सूत्रितं जगद्गुरुभिराद्यशङ्करभगवत्पादैः प्रणीतेन भाष्येण यथावद्विवृततात्पर्यं शमदमादिसाधनसम्पन्नैर्दीर्घकालादरनैरन्तर्येणासेव्यमानं निःश्रेयसाय कल्पत इति श्रद्दधतेऽधुनापि सर्वे साम्प्रदायिकाः। तदेतद्भाष्यं गूढगभीरार्थतयाऽनायासेन नार्थबोधायालमित्यालोच्य चतुःसूत्रीपर्यन्तया पूर्णानन्दीयव्याख्यया समलङ्कृतेन रत्नप्रभाख्यव्याख्यानेन समन्वितं चौखम्बासंस्कृतसीरिजाध्यक्षप्रार्थनया संस्कृत्य प्रकाशितमपि समस्तदर्शनेष्वप्रतिमप्रतिभेन वाचस्पतिमिश्रकृतेन भामतीव्याख्यानेन विनाऽनेकविश्वविद्यालयीयपरीक्षार्थिनां छात्राणां विदुषां च प्रमोदाय नालमिति विभाव्योक्तमुद्रितभाष्यपुस्तकस्थपृष्ठपङ्क्त्यङ्कप्रदर्शनपूर्वकं विषमस्थलटिप्पणीसमेतं भामतीव्याख्यानमप्यस्माभिः प्रकाश्यते। यद्यपीयं भामती पूर्वमन्यत्रानेकवारं प्रकाशिता तथापि विषमस्थलानां दुरूहाणामर्थबोधस्य तात्पर्यज्ञानस्य च मूलमात्रभामतीपठनेनाशक्यत्वात्कल्पतरुपरिमलादिसाहाय्येन छात्राणामुपकारार्थं चौखम्बासंस्कृतसीरिजपुस्तकालयाध्यक्षश्रेष्ठिकुलावतंसजयकृष्णदासगुप्तमहोदयप्रार्थनावशंवदोऽहमेतच्छोधनेऽपि प्रवृत्तोऽभूवम्। एतच्छोधनसाहाय्ये मुख्यतया काशीस्थभूतपूर्वसुप्रसिद्धपण्डितप्रवर बालिशास्त्रिभिः संस्कृतं पुस्तकं द्वितीयतया जीवानन्दभट्टाचार्यसंशोधितमाश्रितम्। यद्यपि मोहमय्यादावप्येतत्संस्करणान्यनेकानि मुद्रितानि, तथापि तेषामुक्तपुस्तकद्वयापेक्षया स्थलविशेषेष्वशुद्धप्रायत्वमिति दृष्ट्वा तेषामालम्बनं न विहितमस्माभिः। विद्यार्थिनां सौलभ्यार्थमस्यापि भाष्यपुस्तकवत् भागद्वयं कल्पितम्। यस्य द्वितीयाध्यायतृतीयपादमारभ्य समाप्तिपर्यन्तो द्वितीयभागोप्याशास्यते सत्वरमेव पाठकानां करकमलेषु समर्पयिष्यत इति। भामतीकारविषयमैतिह्यं द्वितीयभागे पर्यालोचयिष्यतेऽन्यत्रानेकैर्विद्वद्भिः प्रकाशितमपि। एवं महता श्रमेण कृतश्रमेऽप्यस्मिन्भामतीसंस्करणे शीसकाक्षरयोजकदोषेणास्मदीयमतिमान्द्याच्च सुलभानि स्खलितानि क्षान्त्वा सफलयन्तु मामकीनं परिश्रमं, प्रसीदन्तु चानेन प्रयत्नेन श्रीभाष्यकारादिचरणा इति मुहुरभ्यर्थ्यते—

दीपावली १९९२<br>अगस्त्याश्रम काशी। } ढुण्ढिराजशास्त्री।

# अथ भामतीस्थविषयाणामनुक्रमणिका ।

## जिज्ञासाधिकरणे

## अथ जन्माद्यधिकरणे



## शास्त्रयोनित्वाधिकरणे—

## ईक्षत्यधिकरणे



## अथानन्दमयाधिकरणे



## अथान्तरधिकरणे

विषयः ।

## अथाकाशाधिकरणे

पूर्वाधिकरणदृष्टान्तेन सङ्गतिनिरूपणेन संशयप्रदर्शनेन "प्रथमत्वात् प्रधानत्वादाकाशं मुख्यमेव नः । तदानुगुण्येनान्यानि नेयानीति विनिश्चय" इति पूर्वपक्षसङ्ग्रहश्लोकतद्विवरणे ।

सामानाधिकरण्येन प्रश्नतत्प्रति वाक्ययो । पौर्वापर्यपरामर्शात् प्रधानत्वेऽपि गौणतेति सिद्धान्तसङ्ग्रहश्लोकतद्विवरणे ।

## प्राणाधिकरणे

उद्गीथप्रतीहारयोः कार्यकरणसङ्घातदेवतापरत्वेन तत्प्रायपाठात् प्राणोऽपि देवता भवितुमर्हतीति पूर्वपक्ष ।

छन्दोभिधानादिति सूत्रतद्भाष्ये ।

आकाशाधिकरणेन गतार्थत्वशङ्का, अधिकाशंका तत्परिहारश्च ।

गायत्रीशब्दस्य तदनुगतब्रह्मपरत्वपक्षोपपादनम् ।

पुंवाक्यस्य बलीयस्त्व मानान्तरसमागमात् । अपौरुषेये वेदे तत्सङ्गति किं करिष्यतीति सिद्धान्तसङ्ग्रहश्लोकतद्विवरणे ।

## ज्योतिरधिकरणे

विषयविशयनिर्देशपूर्वक औत्सर्गिकत्वाद्वाक्यस्य तेजोलिङ्गोपलम्भानदिति पूर्वपक्षसङ्ग्रहश्लोकतद्विवरणे ।

## इन्द्रप्रतर्दनाधिकरणे

उपासनत्रितयपूर्वपक्षेणोक्ताधिकरणगतार्थताशङ्कानिरास. ।

---

# अथ प्रथमाध्यायस्य द्वितीयः पादः ।

## सर्वत्रप्रसिद्धाधिकरणे

सर्वं खल्वित्यादिविषयवाक्यार्थसङ्ग्रहः ।

स क्रतुं कुर्वीतेति विहितध्यानाङ्गतया शमविधिहेतुमाग्निगदार्थवादस्योपास्यब्रह्मसमपर्कत्वासम्भवेन मनोमयादिशब्दबोधितजीवोपासनापूर्वपक्ष ।

समास सर्वनामार्थ सन्निकृष्टमपेक्षते । तद्धितार्थेऽपि सामार्थ्यं नापेक्षाया निवर्तक इति सिद्धान्तसङ्ग्रहश्लोकतद्विवरणे ।

जीवलिङ्गानाम् ब्रह्मणि समन्वय', न तु ब्रह्मलिङ्गानाम् जीव इति समारोप्यस्य रूपेण विषयो रूपवान् भवेत् इति सङ्ग्रहश्लोकतद्विवरणाभ्यां निरूपणम् ।

शारीरपरमात्माभेदेऽपि परमात्मसंसारित्वादे. अनुपपत्तेस्तु न शारीर इति सूत्रनिर्देशस्य चोपपत्ति ।

## अत्त्रधिकरणे

ब्रह्मक्षत्रेषु ओदनत्वनिर्देशस्य गौणस्य भोग्यत्वेन नाश्यत्वेन वा विवक्षणीयत्वेन तत्सिद्धस्यात्तृत्वस्य भोक्तृत्वरूपस्य संहर्तृत्वस्य वाऽनभति अविक्रिये च परमात्मन्यसम्भवेन जीवाग्निपरत्वमिति पूर्वपक्षः ।

मृत्यूपसेचनसूचित–सकलजगद्भोक्तृत्वस्य तत्संहर्तृत्वरूपस्य वा परात्मनोऽन्यत्रासम्भवात् ब्रह्मक्षत्रपदयोर्लक्षणया सर्वोपलक्षणत्वाच्च परमात्मैवात्तेति सिद्धान्तनिरूपणम् ।

## गुहाधिकरणे

ऋतं पिबन्तावित्यत्र पिबन्तावित्यस्य बुद्धिजीवपरत्वं जीवपरमात्मपरत्वं वा मुख्यमुख्टिमन्त्रोपधेये. ष्टकानां मुष्टिशब्देनैव लाभात् संशयसमर्थनम् ।

नियताधारता बुद्धिजीवसम्भविनी नहीति पूर्वपक्षसङ्ग्रहश्लोकतद्विवरणे ।

विषयः । पृ० पं०

## अथ प्रथमाध्यायस्य चतुर्थः पादः ।

### अथानुमानिकाधिकरणे



### न संख्योपसंग्रहाधिकरणे



### कारणत्वाधिकरणे



### वाक्यान्वयाधिकरणे



इति प्रथमाध्यायस्य चतुर्थः पादः ।

---

## अथ द्वितीयाध्याये प्रथमः पादः ।

### स्मृत्यधिकरणे



### योगप्रत्युक्त्यधिकरणे

विषयः। पृ० पं०

## एकस्मिन्नसम्भवाधिकरणे



## उत्पत्त्यसम्भवाधिकरणे



इति द्वितीयाध्यायस्य द्वितीयः पादः।



# भामती ।

## शाङ्करब्रह्मसूत्रभाष्यव्याख्या

सर्वतन्त्रस्वतन्त्रश्रीमहामहोपाध्यायवाचस्पतिमिश्रविरचिता ।

### ( उपोद्घातः )

श्रीगणेशाय नमः ।

अनिर्वाच्याविद्या(१)द्वितयसचिवस्य (२)प्रभवतो (३)विवर्ता यस्यैते वियदनिलतेजोऽबवनयः ॥
यतश्चाभूद्विश्वं चरमचरमुच्चावचमिदं नमामस्तद्ब्रह्मापरिमितसुखज्ञानममृतम् ॥ १ ॥

निश्श्वसितमस्य वेदा (४)वीक्षितमेतस्य पञ्च भूतानि ।
स्मितमेतस्य चराचरमस्य च सुप्तं महाप्रलयः ॥ २ ॥

षड्भिरङ्गै(५)रुपेताय विविधैरव्ययै(६)रपि ।
शाश्वताय नमस्कुर्मो वेदाय च भवाय च ॥ ३ ॥

मार्तण्डतिलकस्वामिमहागणपतीन् वयम् ।
विश्ववन्द्यान् नमस्यामः सर्वसिद्धिविधायिन (७) ॥ ४ ॥

ब्रह्मसूत्रकृते तस्मै वेदव्यासाय वेधसे ।
ज्ञानशक्त्यवताराय नमो भगवतो हरे ॥ ५ ॥

नत्वा विशुद्धविज्ञानं शङ्करं करुणाकरम् ।
भाष्यं प्रसन्नगम्भीरं तत्प्रणीतं विभज्यते ॥ ६ ॥

आचार्यकृतिनिवेशनमप्यवधूतं वचोऽस्मदादीनाम् ।
रथ्योदकमिव गङ्गाप्रवाहपात. पवित्रयति ॥ ७ ॥

---

( १ ) अनादिर्भावरूपैका मूलाविद्या पूर्वपूर्वविभ्रमसंस्काररूपा तूलाविद्यान्येति द्वितयमविद्याया बोध्यम् ।

( २ ) अविद्यासाचिव्येपि स्वतन्त्रस्येत्यर्थ ।

( ३ ) अतत्त्वतोऽन्यथाभावो विवर्त इति कल्पतरु ।

( ४ ) वीक्षणमात्रेण स्रष्टृत्वाद्भूतानि वीक्षितम् ।

( ५ ) "सर्वज्ञता तृप्तिरनादिबोध स्वतन्त्रता नित्यमलुप्तशक्तिः । अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ॥" इतीश्वराङ्गानि, वेदाङ्गानि प्रसिद्धानि ।

( ६ ) "ज्ञान विरागतैश्वर्यं तप सत्य क्षमा धृति । स्रष्टृत्वमात्मसम्बोधो ह्यधिष्ठातृत्वमेव च । अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे ॥" इतीश्वराव्ययानि, वेदाव्ययानि चादीनि ।

( ७ ) "आदित्यस्य सदा पूजा तिलकस्वामिनस्तथा । महागणपतेश्चैव कुर्वन् सिद्धिमवाप्नुयात् ॥" इति स्मृति ॥

अथ यदसन्दिग्धमप्रयोजनं च न तत्प्रेक्षावत्प्रतिपित्सागोचरो, यथा समनस्केन्द्रियसन्निकृष्टः स्फीतालोकमध्यवर्ती घटः (१)करटदन्ता वा, तथा चेदं ब्रह्मेति (२)व्यापकविरुद्धोपलब्धिः । तथाहि "बृहत्त्वाद्बृंह(३)णत्वाद्वाऽऽत्मैव ब्रह्मेति गीयते", स चायमाकीटपतङ्गेभ्य आ च देवर्षिभ्यः प्राणभृन्मात्रस्येदङ्कारास्पदेभ्यो देहेन्द्रियमनोबुद्धिविषयेभ्यो विवेकेना'हमि'त्यसन्दिग्धाविपर्यस्तापरोक्षानुभवसिद्ध इति न जिज्ञासास्पदम्, नहि जातु कश्चिदत्र संदिग्धे'ऽहं वा नाहं वे'ति, न च विपर्यस्यति 'नाहमेवे'ति । न चाहं कृशः स्थूलो गच्छामीत्यादिदेहधर्मसामानाधिकरण्यदर्शनात् देहालम्बनोऽयमहङ्कार इति साम्प्रतम् । तदालम्बनत्वे हि योऽहं बाल्ये पितरावन्वभवं स एव स्थाविरे प्रणप्तॄननुभवामीति प्रतिसन्धानं न भवेत् । नहि बालस्थविरयोः शरीरयोरस्ति मनागपि प्रत्यभिज्ञानगन्धो येनैकत्वमध्यवसीयेत । तस्माद्येषु व्यावर्तमानेषु यदनुवर्तते तत्तेभ्यो भिन्नं, यथा कुसुमेभ्यः सूत्रम् । तथा च बालादिशरीरेषु व्यावर्तमानेष्वपि परस्परमहङ्कारास्पदमनुवर्तमानं तेभ्यो भिद्यते । (४)अपि च स्वप्नान्ते दिव्यं शरीरभेदमास्थाय तदुचितान् भोगान् भुञ्जान एव प्रतिबुद्धो मनुष्यशरीरमात्मानं पश्यन् 'नाहं देवो मनुष्य एवे'ति देवशरीरे बाध्यमानेऽप्यहमास्पदमबाध्यमानं शरीराद्भिन्नं प्रतिपद्यते । अपि च योगव्याघ्रः(५) शरीरभेदेऽपि आत्मानमभिन्नमनुभवतीति नाहङ्कारालम्बनं देहः । अत एव नेन्द्रियाण्यप्यस्यालम्बनम्, इन्द्रियभेदेऽपि 'योऽहमद्राक्षं स एवैतर्हि स्पृशामी'त्यहमालम्बनस्य प्रत्यभिज्ञानात् । विषयेभ्यस्त्वस्य विवेकः स्थवीयानेव । बुद्धिमनसोश्च करणयो'रहमिति'कर्तृप्रतिभास(६)प्रत्ययानालम्बनत्वायोगः । कृशोहमन्धोहमित्यादयश्च प्रयोगा असत्यप्यभेदे कथञ्चि'न्मञ्चाः क्रोशन्ती'त्यादिवदौपचारिका इति युक्तमुत्पश्यामः । तस्मादिदङ्कारास्पदेभ्यो देहेन्द्रियमनोबुद्धिविषयेभ्यो व्यावृत्तः स्फुटतराहमनुभवगम्य आत्मा संशयाभावादजिज्ञास्य इति सिद्धम् । अप्रयोजनत्वाच्च । तथाहि संसारनिवृत्तिरपवर्ग इह प्रयोजनं विवक्षितम् । संसारश्चात्मयाथात्म्याननुभवनिमित्त आत्मयाथात्म्यज्ञानेन निवर्तनीयः । स चेदयमनादिरनादिनाऽऽत्मयाथात्म्यज्ञानेन सहानुवर्तते कुतोऽस्य निवृत्तिरविरोधात् । कुतश्चात्मयाथात्म्याननुभवो ? नह्यहमित्यनुभवादन्यदात्मयाथात्म्यज्ञानमस्ति, न चाहमिति सर्वजनीनस्फुटतरानुभवसमर्थित आत्मा देहेन्द्रियादिव्यतिरिक्तः शक्य उपनिषदां सहस्रैरप्यन्यथयितुमनुभवविरोधात् । नह्यागमाः सहस्रमपि घटं पटयितुमीशते । तस्मादनुभवविरोधादुपचरितार्था एवोपनिषद इति युक्तमुत्पश्याम इत्याशयवानाशङ्क्य परिहरति—**युष्मदस्मत्प्रत्ययगोचरयोरिति** ( पृ० १५ पं० १ ) ।

---

(१) करटः काकः ।

(२) व्यापकेति । जिज्ञास्यत्वव्यापके संदिग्धत्वसप्रयोजनत्वे तद्विरुद्धे चासन्दिग्धत्वानिष्प्रयोजनत्वे तयोरुपलब्धिस्ततश्च व्यापकाभावे व्याप्याजिज्ञास्यत्वाभावस्तथा च मुमुक्षुणा ब्रह्म न जिज्ञास्यम् असन्दिग्धत्वाद्घटवत्, अप्रयोजनत्वात्काकदन्तवदित्यनुमानप्रयोगौ । एतदेव स्फुटयति तथा हीत्यादिना ।

(३) बृहणत्वाद्देहादीनां परिणमयितृत्वात् ।

(४) परिमाणभेदेऽपि देहैक्यं गृहीत्वाऽऽह अपि चेति ।

(५) मनुष्य सन् कृपया व्याघ्रशरीरमभिमन्यमानो योगव्याघ्रः ।

(६) [illegible]

अत्र च युष्मदस्मदित्यादिर्मिथ्याभवितुं युक्तमित्यन्तः शङ्काग्रन्थः । तथापीत्यादिपरिहारग्रन्थः । तथापीत्यभिसम्बन्धाच्छङ्कायां यद्यपीति पठितव्यम् । (१)इदमस्मत्प्रत्ययगोचरयोरिति वक्तव्ये युष्मद्ग्रहणमत्यन्तभेदोपलक्षणार्थम् । यथा ह्यहंकारप्रतियोगी त्वंकारो नैवमिदंकारः, 'एते वयमिमे वयमास्महे' इति बहुलं प्रयोगदर्शनादिति । चित्स्वभाव आत्मा विषयी, जडस्वभावा बुद्धीन्द्रियदेहविषया विषयाः । एते हि चिदात्मानं विसिन्वन्ति अवबध्नन्ति, स्वेन रूपेण निरूपणीयं कुर्वन्तीति यावत् । (२)परस्परानध्यासहेतावत्यन्तवैलक्षण्ये दृष्टान्त 'स्तमःप्रकाशवदि'ति । नहि जातु कश्चित्समुदाचरद्वृत्तिनी(३) प्रकाशतमसी परस्परात्मतया प्रतिपत्तुमर्हति । तदिदमुक्तमितरेतरभावानुपपत्ताविति । इतरेतरभाव (४)इतरेतरत्व, तादात्म्यमिति यावत् । तस्यानुपपत्ताविति ।

स्यादेतत् । मा भूद्धर्मिणोः परस्परभावस्तद्धर्माणां तु जाड्यचैतन्यनित्यत्वानित्यत्वादीनामेतरेतराध्यासो भविष्यति, दृश्यते हि धर्मिणोर्विवेकग्रहणेऽपि तद्धर्माणामध्यासो, यथा कुसुमाद्भेदेन गृह्यमाणेऽपि स्फटिकमणावतिस्वच्छतया जपाकुसुमप्रतिबिम्बोद्ग्राहिण्यरुणः स्फटिक इत्यारुण्यविभ्रम इत्यत उक्तम्—**तद्धर्माणामपीति** । इतरेतरत्र धर्मिणि धर्माणां भावो (५)विनिमयस्तस्यानुपपत्तिः । अयमभिसन्धिः । रूपवद्धि द्रव्यमतिस्वच्छतया रूपवतो द्रव्यान्तरस्य तद्विवेकेन गृह्यमाणस्यापि छायां गृह्णीयात्, चिदात्मा त्वरूपो विषयी न विषयच्छायामुद्ग्राहयितुमर्हति । यथाहुः—"शब्दगन्धरसानां च कीदृशी प्रतिबिम्बता" इति । तदिह पारिशेष्याद्विषयविषयिणोरन्योन्यात्मसम्भेदेनेव तद्धर्माणामपि परस्परसम्भेदेन विनिमयात्मना भवितव्यम्, तौ चेद्धर्मिणावत्यन्तविवेकेन गृह्यमाणावसंभिन्नौ, असम्भिन्नाः सुतरां तयोर्धर्माः, स्वाश्रयाभ्यां व्यवधानेन दूरापेतत्वात्, तदिदमुक्तं **सुतरामिति । तद्विपर्ययेणेति** । विषयविपर्ययेणेत्यर्थः । मिथ्याशब्दोऽपह्नववचनः । एतदुक्तं भवति । अध्यासो भेदाग्रहेण व्याप्तस्तद्विरुद्धश्चेहास्ति भेदग्रहः, स भेदाग्रहं निवर्तयंस्तद्व्याप्तमध्यासमपि निवर्तयतीति । **मिथ्येति भवितुं युक्तं यद्यपि तथापीति योजना** (पृ० २९ प० १) । इदमत्राकूतम् । भवेदेतदेव यद्यहमित्यनुभवे आत्मतत्त्वं प्रकाशेत, नत्वेतदस्ति । तथाहि—समस्तोपाध्यनवच्छिन्नानन्तानन्दचैतन्यैकरसमुदासीनमेकमद्वितीयमात्मतत्त्वं श्रुतिस्मृतीतिहासपुराणेषु गीयते । न चैतान्युपक्रमपरामर्शोपसंहारै (६) क्रियासमभिहारेणेदगात्मतत्त्वमभिदधति तत्पराणि सन्ति शक्यानि शक्रेणाप्युपचरितार्थानि(७) कर्तुम् । अभ्यासे हि भूयस्त्वमर्थस्य भवति, यथाऽहो

(१) ननु पुरुषान्तरवचनो युष्मच्छब्द कथमचेतने देहादौ प्रयुक्तोऽत आह इदमस्मदिति ।

(२) अत्र परस्परानध्यासोऽन्योन्यात्मनाऽस्फुरणं न तु सहानवस्थानं दार्ष्टान्तिकेऽसत्त्वादिति बोध्यम् ।

(३) समुदाचरन्त्यौ, भेदेन भासमाने, वृत्ती, वर्तने, ययोस्ते तथा ।

(४) इतरस्येतरत्र भाव इति योजने धर्मिणोरपि संसर्गाध्यासनिषेध इति सिद्धसाधनं स्यात्तादात्म्याध्यासाभ्युपगमाच्च तद्व्यावृत्त्यर्थमाहेतरेतरत्वमिति । (५) विनिमयो व्यत्यास ।

(६) उपक्रम आरम्भवाक्यं, परामर्शो मध्यनिर्देश, उपसंहारोऽन्तिमनिर्देश इति भेद । पौनःपुन्य क्रियासमभिहार. ।

(७) लाक्षणिकार्थबोधकानि । तेजोबन्नादिसृष्टिक्रमस्यैव श्रुतिवाक्येषु मुख्यतया प्रतिपादनेनात्मतत्त्वप्रतिपादन लक्षणयैवेति उपचरितार्थानि श्रुतिवचनानि नैव सम्भवन्ति 'सदेव सौम्येदमग्र आसीदि'त्याद्युपक्रमादिलिङ्गसद्भावेनाखण्डात्मतत्त्वप्रतिपादनस्यैव मुख्यार्थत्वादिति भाव ।

दर्शनीयाऽहो दर्शनीयेति, न न्यूनत्वं प्रागेवोपचरितत्वमिति । अहमनुभवस्तु प्रादेशिकमनेकविधशोकदुःखादिप्रपञ्चोपप्लुतमात्मानमादर्शयन् कथमात्मतत्त्वगोचरः कथं वाऽनुपप्लव.(१) । न च ज्येष्ठप्रमाणप्रत्यक्षविरोधादाम्नायस्यैव तदपेक्षस्याप्रामाण्यमुपचरितार्थत्वं चोत युक्तम् । तस्यापौरुषेयतया (२)निरस्तसमस्तदोषाशङ्कस्य बोधकतया स्वतःसिद्धप्रमाणभावस्य स्वकार्ये प्रमितावनपेक्षत्वात् । (३)प्रमितावनपेक्षत्वेऽप्युत्पत्तौ प्रत्यक्षापेक्षत्वात्तद्विरोधादनुत्पत्तिलक्षणमप्रामाण्यमिति चेन्न । उत्पादकाप्रतिद्वन्द्वित्वात् । न ह्यागमज्ञानं सांव्यवहारिकप्रत्यक्षस्य प्रामाण्यमुपहन्ति, येन (४)कारणाभावान्न भवेदपि तु तात्त्विकम् । न च तत्तस्योत्पादकम् , अतात्त्विकप्रमाणभावेभ्योऽपि सांव्यवहारिकप्रमाणेभ्यस्तत्त्वज्ञानोत्पत्तिदर्शनात् । तथा च वर्णे ह्रस्वदीर्घत्वादयोऽन्यधर्मा अपि समारोपितास्तत्त्वप्रतिपत्तिहेतवो, नहि लौकिका नाग इति वा नग इति वा पदात् कुञ्जरं वा तरुं वा प्रतिपद्यमाना भवन्ति भ्रान्ता । (५)न चानन्यपरं वाक्यं स्वार्थ उपचरितार्थं युक्तम् । उक्तं हि "न विधौ परः शब्दार्थ" इति । (६)ज्येष्ठत्वं चानपेक्षितस्य बाध्यत्वे हेतुर्न बाधकत्वे, रजतज्ञानस्य ज्यायसः शुक्तिज्ञानेन कनीयसा बाधदर्शनात् । तदनपबाधने तदपबाधात्मनस्तस्योत्पत्तेरनुत्पत्तेः । दर्शितं च तात्त्विकप्रमाणभावस्यानपेक्षितत्वम् । तथा च पारमर्षं सूत्रं (७)"पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' (अ०६पा०५सू०५४) इति । तथा "पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम् । अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्॥" इति । (८)अपि च येऽप्यहङ्कारास्पदमात्मानमास्थिषत तैरप्यस्य न तात्त्विकत्वमभ्युपेतव्यम् , 'अहमिहैवास्मि सदने जानान' इति सर्वव्यापिनः प्रादेशिकत्वेन ग्रहात् , उच्चतरगिरिशिखरवर्तिषु महातरुषु भूयिष्ठस्य दूर्वाप्रवालनिर्भासप्रत्ययवत् । न चेदं देहस्य प्रादेशिकत्वमनुभूयते न त्वात्मन इति सांप्रतम् । (९)नहि तदैवं भवत्यहमिति, गौणत्वे वा न जानामीति । अपि च परशब्दः परत्र लक्ष्यमाणगुणयोगेन वर्तत इति

(१) विपर्यासशून्यः ॥

(२) निरस्तेति विशेषणेनाऽऽगमस्य स्वजन्यज्ञानप्रमितित्वे प्रत्यक्षापेक्षायां विपर्यासशङ्कया, स्वतःसिद्धेतिविशेषणेन च तत्र सम्वादापेक्षायाश्च निरासो बोध्य ।

(३) आगमस्योत्पत्तौ प्रत्यक्षापेक्षामाशङ्कते प्रमिताविति ।

(४) प्रत्यक्षाभावात्मकप्रतिबन्धकाभावरूपकारणाभावादित्यर्थ ।

(५) अप्रामाण्यं निरस्योपचरितार्थत्वं निरस्यति न चेति ।

(६) एवमुपजीव्यत्वं प्रत्यक्षस्य निराकृत्य मुख्यत्वमात्रस्य प्राबल्यहेतुत्वं निरस्यति ज्येष्ठत्वं चेति ।

(७) पौर्वापर्येति । पौर्वापर्ये सति निमित्तयोः पूर्वस्य नैमित्तिकस्य दौर्बल्यमुत्तरस्य निरपेक्षस्य तद्बाधकतयोदितत्वात्पूर्वोदयकाले उत्तरस्याप्राप्ततया तेन बाध्यत्वायोगात् इत्यर्थः । इदं च ज्योतिष्टोमे सह निर्गच्छताम्‌ऋत्विजां विच्छेदनिमित्तं प्रायश्चित्तमुक्तम् । तत्र क्रमेण विच्छेदे विरुद्धप्रायश्चित्तासंभवात् किं पूर्वं कार्यमुतोत्तरमिति संशयेऽनुपजातविरोधित्वात्पूर्वमिति पूर्वपक्षे, सिद्धान्तसूत्रं षष्ठाध्यायस्य द्रष्टव्यम् । प्रकृतिवदिति । यथा प्रकृतौ क्लृप्तोपकाराः कुशाः 'प्रकृतिवद्विकृतिः कर्तव्या' इत्यतिदेशेन प्रथमं प्राप्ताः पश्चादुत्पन्नैर्निरपेक्षैः शरैर्बाध्यन्ते तद्वदित्यर्थः ।

(८) एवं श्रुत्यादिगम्यात्मतत्त्वस्य अहंप्रत्ययेऽनवभासमानत्वादविविक्तविषयत्वमुक्तमधुना वादिसम्मतस्यात्मनोऽनवभासमानत्वेऽपि तदेवाह अपि चेति ।

(९) नहि तदैवमिति । त्वन्मतेऽहंप्रत्ययस्य विविक्तात्मविषयत्वादित्यर्थः । गौणत्वे वेति । उपचरितात्मविषयस्य देहस्य ज्ञातृत्वानुपपत्त्या जानामि इति प्रतीतिर्न स्यादित्यर्थः ।

यत्र प्रयोक्तृप्रतिपत्त्रोः संप्रतिपत्तिः स गौणः, स च भेदप्रत्ययपुरःसरः । तद्यथा (१)नैयमिकाग्निहोत्रवचनोऽग्निहोत्रशब्दः (अ० १पा० ४सू० ४) प्रकरणान्तरावधृतभेदे कौण्डपायिनामयनगते कर्मणि 'मासमग्निहोत्रं जुहोती'(अ० ७ पा० ३ सू १)त्यत्र साध्यसादृश्येन गौणः, माणवके चानुभवसिद्धभेदे सिंहात्सिंहशब्दः । न त्वहङ्कारस्य मुख्योऽर्थो निर्लुठितगर्भतया(२) देहादिभ्यो भिन्नो ऽनुभूयते येन परशब्दः शरीरादौ गौणो भवेत् । न चात्यन्तनिरूढतया गौणेपि न गौणत्वाभिमानः सार्षपादिषु तैलशब्दवदिति वेदितव्यम् । तत्रापि स्नेहात्तिलभवाद्भेदे सिद्ध एव सार्षपादीनां तैलशब्दवाच्यत्वाभिमानो, न त्वर्थयोस्तैलसार्षपयोरभेदाध्यवसायः । तस्मिद्धं गौणत्वमुभयदर्शिनो गौणमुख्यविवेकविज्ञानेन व्याप्तम्, तदिह व्यापकं विवेकज्ञानं निवर्तमानं गौणतामपि निवर्तयतीति । न च बालस्थविरशरीरभेदेऽपि सोऽहमित्येकस्यात्मनः प्रतिसंधानाद्देहादिभ्यो भेदेनास्त्यात्मानुभव इति वाच्यम् । परीक्षकाणां खल्वियं कथा न लौकिकानाम् । परीक्षका अपि हि व्यवहारसमये न लोकसामान्यमतिवर्तन्ते(३) । वक्ष्यत्यनन्तरमेव हि भगवान् भाष्यकारः—"पश्वादिभिश्चाविशेषादि"ति । बाह्या अप्याहुः—"शास्त्रचिन्तकाः खल्वेवं विवेचयन्ति न प्रतिपत्तार" इति । तत्पारिशेष्याच्चिदात्मगोचरमहङ्कार-'महमिहास्मि सदन' इति प्रयुञ्जानो लौकिकः शरीराद्यभेदग्रहादात्मनः प्रादेशिकत्वमभिमन्यते, नभस इव घटमणिकमल्लिकाद्युपाध्यवच्छेदादिति युक्तमुत्पश्यामः । न चाहङ्कारप्रामाण्याय देहादिवदात्मापि प्रादेशिक इति युक्तम् । तदा खल्वयमणुपरिमाणो वा स्याद्देहपरिमाणो वा? अणुपरिमाणत्वे स्थूलोऽहं दीर्घ इति च न स्यात् । देहपरिमाणत्वे तु सावयवतया देहवदनित्यत्वप्रसङ्गः(४) । किं चास्मिन् पक्षेऽवयवसमुदायो वा चेतयत्प्रत्येकं वाऽवयवाः? प्रत्येकं चेतनत्वपक्षे बहूनां चेतनानां स्वतन्त्राणामेकवाक्यताभावादपर्यायं विरुद्धदिक्क्रियतया शरीरमुन्मथ्येत, अक्रियं वा प्रसज्येत । समुदायस्य तु चैतन्ययोगे वृक्ण एकस्मिन्नवयवे चिदात्मनोऽप्यवयवे वृक्ण इति न चेतयेत् । (५)न च बहूनामवयवानामविनाभावनियमो दृष्टो, य एवावयवो विशीर्णस्तदा तदभावे न चेतयेत् । (६)विज्ञानालम्बनत्वेऽप्यहंप्रत्ययस्य भ्रान्तत्वं तदवस्थमेव, तस्य स्थिरवस्तुनिर्भासत्वादस्थिरत्वाच्च विज्ञानानाम् । एतेन 'स्थूलो-

(१) नैयमिकेति । 'अग्निहोत्रं जुहोती'त्यत्र किमग्निहोत्रशब्दोऽग्निदेवतागुणविधिरुत कर्मनामेति संशयेऽग्नये होत्रं हविरस्मिन्निति समासान्तर्गतचतुर्थ्याऽग्नेर्होमदेवतात्वप्रतीतेर्गुणविधिरिति पूर्वपक्षे, 'यदग्नये च प्रजापतये च सायं जुहोती'त्यग्नेर्होमे देवतात्वप्रख्यापनादन्यग्निहोत्रकर्मनामधेयार्थोऽग्निहोत्रशब्दः प्रकरणभेदेन सिद्धभेदे 'मासमग्निहोत्रं जुहोती'त्यादिनोक्ते कौण्डपायिनामयनगते कर्मणि जुहोतीतिसाध्यसादृश्येन लाक्षणिकोऽनेकार्थस्यान्याय्यत्वादिति भावः ।

(२) निष्कृष्य लुठितः प्रतिभासितो गर्भोऽसाधारणाकारो यस्य स तथा, तस्य भावस्तत्ता तयेत्यर्थः ।

(३) अपरोक्षभ्रमस्य यौक्तिकबाधादुच्छेदो नेत्यर्थः ।

(४) प्रसङ्गेनानेनावयवारब्धावयविपक्षो देहपरिमाणपक्षे निरस्तो बोध्यः ।

(५) आत्मावयवानां चैतन्यं निरस्य समुदायपक्षे शरीरोपाधिकी समुदायापत्तिः स्वत एव वा काकतालीयन वेति विकल्पत्रयाभिप्रायेणाद्या 'समुदायस्ये'त्यादिना निरस्ताऽधुना द्वितीया तृतीया चाक्षिपति न च बहूनामिति । य एवेति । काकतालीयन्यायेन यस्यावयवस्य विशीर्णता जाता तदभावे न चेतयेदित्यर्थः । स्वस्थानामप्यकस्माच्चैतन्यं स्यादिति भावः ।

(६) क्षणिकविज्ञानात्मपक्षेप्यहंप्रत्ययस्य भ्रान्तत्वं समर्थयति विज्ञानेति ।

ऽहमन्धोऽहं गच्छामी'त्यादयोऽप्यध्यासतया व्याख्याताः । (१)तदेवमुक्तक्रमेणाहंप्रत्यये पूतिकूष्माण्डीकृते भगवती श्रुतिरप्रत्यूहं कर्तृत्वभोक्तृत्वसुखदुःखशोकाद्यात्मत्वमहमनुभवप्रसञ्जितमात्मनो निषेद्धुमर्हतीति । तदेवं सर्वप्रवादिश्रुतिस्मृतीतिहासपुराणप्रथितमिथ्याभावस्याहंप्रत्ययस्य (२)स्वरूपनिमित्तफलैरुपव्याख्यान**मन्योन्यस्मिन्नित्यादि** ।

अत्र चान्योन्यस्मिन् धर्मिणि आत्मशरीरादावन्योन्यात्मकतामध्यस्याहमिदं शरीरादीति । इदमिति च (३)वस्तुतो न प्रतीतितः । लोकव्यवहारो लोकानां व्यवहारः, स चायमहमिति व्यपदेशः । इतिशब्दसूचितश्च शरीराद्यनुकूलं प्रतिकूलं च प्रमेयजातं प्रमाणेन प्रमाय तदुपादानपरिवर्जनादिः(४) । **अन्योन्यधर्मांश्चाध्यस्या**न्योन्यस्मिन् धर्मिणि देहादिधर्मान् जन्ममरणजराव्याध्यादीनात्मनि धर्मिणि अध्यस्तदेहात्मभावे समारोप्य, तथा चैतन्यादीनात्मधर्मान् देहादावध्यस्तात्मभावे समारोप्य, ममेदं जरामरणपुत्रपशुस्वाम्यादीति व्यवहारो व्यपदेश , इतिशब्दसूचितश्च तदनुरूपः प्रवृत्त्यादिः । (५)अत्र चाध्यासव्यवहारक्रियाभ्यां यः कर्तोन्नीतः स समान इति समानकर्तृकत्वेनाध्यस्य व्यवहार इत्युपपन्नम् । पूर्वकालत्वसूचितमध्यासस्य व्यवहारकारणत्वं सूचयति—**मिथ्याज्ञाननिमित्तो** व्यवहारः । मिथ्याज्ञानमध्यासस्तन्निमित्तस्तद्भावाभावानुविधानाद्व्यवहारभावाभावयोरित्यर्थः । तदेवमध्यासस्वरूपं फलं च व्यवहारमुक्त्वा तस्य निमित्तमाह—**इतरेतराविवेकेन,** विवेकाग्रहेणेत्यर्थः । अथाविवेक एव कस्मान्न भवति, तथा च नाध्यास इत्यत आह—**अत्यन्तविविक्तयोर्धर्मधर्मिणोः** । परमार्थतो धर्मिणोरतादात्म्यं विवेको धर्माणां चासंकीर्णता विवेक' ।

स्यादेतत् । विविक्तयोर्वस्तुसतोर्भेदाग्रहनिबन्धनस्तादात्म्यविभ्रमो युज्यते शुक्तेरिव रजताद्भेदाग्रहे रजततादात्म्यविभ्रमः, इह तु (६)परमार्थसतश्चिदात्मनो न भिन्न देहादास्ति वस्तुसत्तत्कुतश्चिदात्मनो भेदाग्रहः कुतश्च तादात्म्यविभ्रम इत्यत आह–(७)**सत्यानृते मिथुनीकृत्य (पृ०३४पं०१)** । विवेकाग्रहादध्यस्येति योजना । सत्यं चिदात्मा,ऽनृत बुद्धीन्द्रियदेहादि, ते द्वे धर्मिणी मिथुनीकृत्य, युगलीकृत्येत्यर्थ. । न च सम्वृतिपरमार्थसतोः पारमार्थिकं मिथुनमस्तीत्यभूततद्भावार्थस्य च्वे' प्रयोगः । एतदुक्तं भवति । अप्रतीतस्यारोपायोगादारोप्यस्य

---

(१) अहंप्रत्ययस्याविविक्तविषयत्वे शास्त्रीयविषयसिद्धिं प्रदर्श्य प्रयोजनसिद्धिं प्रदर्शयति तदेवमिति ।

(२) स्वरूपेति । अन्योन्यात्मकताऽन्योन्यधर्माध्यासश्च स्वरूपम् । इतरेतराविवेको निमित्तम् । व्यवहार फलम् ।

(३) वस्तुत इति । अहमितिप्रतीतेपि वास्तवमनात्मत्वमस्तीति इदंशब्दप्रयोग इत्यर्थः । अनेनाहमिदं शरीरमिति प्रतीत्यभावाद्व्यासङ्गतिरित्याशङ्का निरस्ता ।

(४) परिवर्जनादिरिति । व्यवहार इति शेष ।

(५) नन्वध्यस्य व्यवहार इत्यनुपपन्न 'भुक्त्वा व्रजतीति'वदेकस्य क्रियाद्वये कर्तृत्वानभिधानादत आह अत्रेति । व्यवहारक्रियाविशिष्टस्य कर्तुरध्यासेपि कर्तृत्वात क्त्वाप्रत्यय इत्यर्थ ।

(६) अयमेव पाठ [क] [ख] चिह्नित पुस्तके दृश्यते किन्तु 'परमार्थत' इत्येव युक्तः । 'परमार्थत ' इति पक्षे तु 'चिदात्मनो' इति पंचम्यन्तपाठस्यैव युक्तत्वादिति बोध्यम् ।

(७) सत्यानृते इति । मिथुनीकरणाद्विवेकाग्रहस्ततोऽध्यास इत्यर्थ. । युगलीकरणमभिहितानात्मयो [illegible] युद्धौ भानम् । अथ च्वेःप्रयोगस्य फलमाह नचेति । अभूततद्भावे च्वे प्रयोगः मिथुनीभावोऽध्यवास्तव इत्यर्थः ।

प्रतीतिरुपयुज्यते न वस्तुसत्तेति । स्यादेतत् । आरोप्यस्य प्रतीतौ सत्यां पूर्वदृष्टस्य समारोपः, समारोपनिबन्धना च प्रतीतिरिति दुर्वारं परस्पराश्रयत्वमित्यत आह **नैसर्गिक इति।** स्वाभाविकोऽनादिरयं व्यवहारः । व्यवहारानादितया तत्कारणस्याप्यध्यासस्यानादितोक्ता । ततश्च पूर्वपूर्वमिथ्याज्ञानोपदर्शितस्य बुद्धीन्द्रियशरीरादेरुत्तरोत्तराध्यासोपयोग इत्यनादित्वाद्वीजाङ्कुरवन्न परस्पराश्रयत्वमित्यर्थः ।

(१)स्यादेतत् । अद्धा पूर्वप्रतीतिमात्रमुपयुज्यते आरोपे, न तु प्रतीयमानस्य परमार्थसत्ता । प्रतीतिरेव त्वत्यन्तासतो गगनकमलिनीकल्पस्य देहेन्द्रियादेर्नोपपद्यते । (२)प्रकाशमानत्वमेव हि चिदात्मनोऽपि सत्त्वं, न तु तदतिरिक्तं सत्तासामान्यसमवायोऽर्थक्रियाकारिता वा, द्वैतापत्तेः । सत्तायाश्चार्थक्रियाकारितायाश्च सत्तान्तरार्थक्रियाकारितान्तरकल्पनेऽनवस्थापातात्, प्रकाशमानतैव सत्ताऽभ्युपेतव्या । तथा च देहादयः प्रकाशमानत्वान्नासन्तश्चिदात्मवद्, असत्त्वे वा न प्रकाशमानास्तत् कथं सत्यानृतयोर्मिथुनीभावस्तदभावे वा कस्य कुतो भेदाग्रहस्तदसम्भवे कुतो ऽध्यास इत्याशयवानाह—**आह** आक्षेप्ता—**कोयमध्यासो नाम** (पृ० ४० पं० १) । क इत्याक्षेपे । समाधाता लोकसिद्धमध्यासलक्षणमाचक्षाण एवाक्षेपं प्रतिक्षिपति—**उच्यते स्मृतिरूपः परत्र पूर्वदृष्टावभासः** (पृ० ४५ पं० १) । (३)अवसन्नोऽवमतो वा भासोऽवभासः । प्रत्ययान्तरबाधश्चास्यावसादोऽवमानो वा । एतावता मिथ्याज्ञानमित्युक्तं भवति । (४)तस्येदमुपव्याख्यानं 'पूर्वदृष्टे'त्यादि । पूर्वदृष्टस्यावभासः पूर्वदृष्टावभासः । मिथ्याप्रत्ययश्चारोपविषयारोपणीयस्य मिथुनमन्तरेण न भवतीति पूर्वदृष्टग्रहणेनानृतमारोपणीयमुपस्थापयति, तस्य च दृष्टत्वमात्रमुपयुज्यते न वस्तुसत्तेति दृष्टग्रहणम् । तथापि वर्तमानं दृष्टं दर्शनं नारोपोपयोगीति पूर्वेत्युक्तम् । तत्र पूर्वदृष्टं स्वरूपेण सदप्यारोपणीयतयाऽनिर्वाच्यमित्यनृतम् । आरोपविषयं सत्यमाह—**परत्रेति**(५) । परत्र शुक्तिकादौ परमार्थसति, तदनेन सत्यानृतमिथुनमुक्तम् । (६)स्यादेतत्, परत्र पूर्वदृष्टावभास इत्यलक्षणमतिव्यापकत्वात् । अस्ति हि स्वस्तिमत्यां गवि पूर्वदृष्टस्य गोत्वस्य परत्र कालाक्ष्यामवभासः । (७)अस्ति च पाटलिपुत्रे पूर्वदृष्टस्य देवदत्तस्य परत्र माहिष्मत्यामवभासः समीचीनः । (८)अवभासपदं च समीचीनेऽपि

---

(१) आरोप्यशरीरादेः प्रतीतिमात्रमुपयोगि न सत्तेति उक्त, तत्रानृतस्य प्रतीतिरेवायुक्तेत्यभिप्रायकमुत्तरभाष्यमवतारयन्नाह स्यादेतदित्यादिना। युष्मदस्मादित्यादिस्तु विवेकग्रहादाक्षेप पूर्वमुक्त इत्यनयोर्भेदो बोध्य ।

(२) प्रकाशमानत्वेन हेतुना देहादीनां सत्त्वसाधनाय भूमिकामारचयति प्रकाशमानत्वमिति ।

(३) अवभासपदस्यावयवार्थव्युत्पत्तिद्वारा संक्षिप्तमध्यासलक्षणमाह अवसन्न इति । अवसाद उच्छेदः । अवमानो युक्त्या तिरस्कार. ।

(४) अवभासपदस्य रूढार्थकथनद्वारा भाष्यवाक्यार्थेन विस्तृतं लक्षणं प्रदर्शयन्नाह तस्येति ।

(५) अनेनासत्ख्यातिनिरासो बोध्य ।

(६) स्मृतिरूप इति पदस्य कृत्य वक्तुमवतारयति स्यादेतदिति ।

(७) पूर्वदृष्टस्य परत्राभेदावभासरूपधर्म्यध्यासस्यातिव्याप्तिं प्रदर्श्य, परत्राश्रये परधर्मावभासरूपस्य धर्माध्यासस्यापि तां प्रदर्शयति अस्ति च पाटलीति ।

(८) ननु संक्षिप्ताध्यासलक्षणप्रदर्शितावभासपदार्थस्य नयोरुदाहरणयोरसम्भवात्कथमतिव्याप्तिरत आह अवभासपद चेति ।

प्रत्यये प्रसिद्धं, यथा नीलस्यावभासः पीतस्यावभास इत्यत आह—**स्मृतिरूप इति** । स्मृते रूपमिव रूपमस्येति स्मृतिरूपः । असन्निहितविषयत्वं च स्मृतिरूपत्वं, सन्निहितविषयं च प्रत्यभिज्ञानं समीचीनमिति नातिव्याप्तिः । (१)नाप्यव्याप्तिः—स्वप्नज्ञानस्यापि स्मृतिविभ्रमरूपस्यैवंरूपत्वात्तत्रापि हि स्मर्यमाणे पित्रादौ निद्रोपप्लववशादसन्निधानपरामर्शे तत्रतत्र पूर्वदृष्टस्यैव सन्निहितदेशकालत्वस्य समारोपः । एवं पीतः शङ्खस्तिक्तो गुड इत्यत्राप्येतल्लक्षणं योजनीयम् । तथाहि—वहिर्विनिर्गच्छदत्यच्छनयनरश्मिसम्पृक्तपित्तद्रव्यवर्तिनीं पीततां पित्तरहितामनुभवन् शङ्खं च दोषाच्छादितशुक्लिमानमनुभवन् पीततायाश्च शङ्खासम्बन्धमननुभवन्नसम्बन्धाग्रहणसारूप्येण 'पीतं तपनीयपिण्डं पीतं बिल्वफलमि'त्यादौ पूर्वदृष्टं सामानाधिकरण्यं पीतत्वशङ्खत्वयोरारोप्याह 'पीतः शङ्ख' इति । एतेन तिक्तो गुड इति प्रत्ययो व्याख्यातः । (२)एवं विज्ञातृपुरुषाभिमुखेष्वादर्शोदकादिषु स्वच्छेषु चाक्षुषं तेजो लग्नमपि बलीयसा सौर्येण तेजसा प्रतिस्रोतःप्रवर्तितं मुखसंयुक्तं मुखं ग्राहयद्दोषवशात्तद्देशतामनभिमुखतां च मुखस्याग्राहयत्पूर्व(३)दृष्टाभिमुखादर्शोदकदेशतामाभिमुख्यं च मुखस्यारोपयतीति प्रतिबिम्बविभ्रमोऽपि लक्षितो भवति । एतेन द्विचन्द्रदिङ्मोहालातचक्रगन्धर्वनगरवंशोरगादिविभ्रमेष्वपि यथासम्भवं लक्षणं योजनीयम् ।

एतदुक्तं भवति । न प्रकाशमानतामात्रं सत्त्वं येन देहेन्द्रियादेः प्रकाशमानतया सद्भावो भवेत् । नहि सर्पादिभावेन रज्ज्वादयो वा स्फटिकादयो वा रक्तादिगुणयोगिनो न प्रतिभासन्ते, प्रतिभासमाना वा भवन्ति तदात्मानस्तद्धर्माणो वा । (४)तथासति मरुषु मरीचिचयमुच्चावचमुच्चलत्तुङ्गतरङ्गसङ्गमालेयमभ्यर्णमवतीर्णा मन्दाकिनीत्यभिसंधाय प्रवृत्तः स्यात्, तोयमवाप्य पिपासामुपशमयेत् । तस्मादबाधेनापि आरोपितस्य प्रकाशमानस्यापि न वस्तुसत्त्वमभ्युपगमनीयम् । न च मरीचिरूपेण सलिलमवस्तुसत् स्वरूपेण तु परमार्थसदेव, देहेन्द्रियादयस्तु स्वरूपेणापि असन्त इत्यनुभवागोचरत्वात्कथमारोप्यत इति साम्प्रतम् । यतो यद्यसन्तो नानुभवगोचराः, कथं तर्हि मरीच्यादीनामसता तोयतयाऽनुभवगोचरत्वम्, न च स्वरूपसत्त्वेन तोयात्मनापि सन्तो भवन्ति ।

(५)यद्युच्येत नाभावो नाम भावादन्यः कश्चिदस्ति, अपि तु भाव एव भावान्तरात्मनाऽभावः स्वरूपेण तु भावः, यथाहुः—'भावान्तरमभावो हि कयाचित्तु व्यपेक्षये'ति, ततश्च भावात्मनोपाख्येयतयाऽस्य युज्येतानुभवगोचरता, प्रपञ्चस्य पुनरत्यन्तासतो निरस्तसमस्त-

---

(१) स्वप्नज्ञाने प्रमाणयोग्यवस्तुन्याधिष्ठानाभावात्परत्रेतिविशेषणासत्त्वनिबन्धनाव्याप्तिमाशङ्क्याह नापीति । स्मृतौ विभ्रमः स्मृतिविभ्रमः, स्मर्यमाणे स्मर्यमाणरूपान्तरारोप इति यावत् ।

(२) आदर्शादिष्वारोप्यमुखस्य स्वचक्षुषा पूर्वदृष्टत्वाभावेनाव्याप्तिमाशङ्क्याह एवमिति ।

(३) पूर्वदृष्टेति । पूर्वदृष्टयोरभिमुखयोरादर्शोदकयोर्देश एव देशो यस्य तस्य भावस्तत्ता, तयोरेवाभिमुख्यं च, तथा च मुखादौ तदारोप इत्यर्थः ।

(४) तथासतीति—प्रतिभासमात्रेण रज्ज्वादीनां सर्पात्मत्वादेः सत्त्वे सतीत्यर्थः । मरुष्विति । मरीचिचयमभ्यर्णमवतीर्णोच्चलत्तुङ्गतरङ्गमाला मन्दाकिनीत्यन्वयः ।

(५) मरीचीनां तोयात्मत्वं न सदित्युक्तं यन्मरीचीनां जलरूपेणासत्त्वं तन्मरीचय एवात्मना ऽसत्ख्यातिरिति शङ्कते सद्वादी यद्युच्येतेति ।

सामर्थ्यस्य निस्तत्त्वस्य कुतोऽनुभवविषयभावः कुतो वा चिदात्मन्यारोपः ? । (१)न च विषयस्य समस्तसामर्थ्यस्य विरहेऽपि ज्ञानमेव तत्तादृशं स्वप्रत्ययसामर्थ्यासादितादृष्टानासिद्धस्वभावभेदमुपजातमसतः प्रकाशनं, तस्मादसत्प्रकाशनशक्तिरेवाविद्येति सांप्रतम् । यतो येयमसत्प्रकाशनशक्तिर्विज्ञानस्य किं पुनरस्याः शक्यम् ? असदिति चेत् । किं तत्कार्यमाहोस्विदस्य ज्ञाप्यम् ? न तावत्कार्यम्, असतस्तत्त्वानुपपत्तेः । नापि ज्ञाप्यम्, ज्ञानान्तरानुपलब्धेः, (२)अनवस्थापाताच्च । विज्ञानस्वरूपमेवासतः प्रकाश इति चेत् । कः पुनरेष सदसतोः सम्बन्धः ? असदधीननिरूपणत्वं सतो ज्ञानस्यासता सम्बन्ध इति चेत् । अहो बतायमतिनिर्वृत्तः प्रत्ययतपस्वी(३) यस्यासत्यपि निरूपणमायत्तते, न च प्रत्ययस्तत्राधत्ते किंचित्, असत आधारत्वायोगात् । (४)असदन्तरेण प्रत्ययो न प्रथते इति प्रत्ययस्यैवैष स्वभावो न त्वसदधीनमस्य किंचिदिति चेत् । अहो(५) बतास्यासत्पक्षपातो यदयमतदुत्पत्तिरतदात्मा च तदविनाभावनियतः प्रत्यय इति । तस्मादत्यन्तासन्तः शरीरेन्द्रियादयो निस्तत्त्वा नानुभवविषया भवितुमर्हन्तीति ।

(६)अत्र ब्रूमः । निस्तत्त्वं चेन्नानुभवगोचरस्तत्किमिदानीं मरीचयोऽपि तोयात्मना सतत्त्वा यदनुभवगोचराः स्युः । न (७)सतत्त्वास्तदात्मना मरीचीनामसत्त्वात् । (८)द्विविधं च वस्तूनां तत्त्वं सत्त्वमसत्त्वं च । तत्र पूर्वं स्वतः, परं तु परतः । यथाहुः—

स्वरूपपररूपाभ्यां नित्यं सदसदात्मके ।
वस्तुनि ज्ञायते किंचिद्रूपं कैश्चित्कदा च न ॥ इति ।

(९)तत्किं मरीचिषु तोयनिर्भासप्रत्ययस्तत्त्वगोचरः, तथा च समीचीन इति न भ्रान्तो नापि बाध्येत । (१०)अद्धा न बाध्येत यदि मरीचीनतोयात्मतत्त्वान्

---

(१) एवं सद्वादी शङ्कितोऽनिर्वचनीय( वेदान्ति )मतं निरस्य शून्यवादनिरासाय तन्मतं दर्शयति नचेति । स्वप्रत्ययः स्वसमानाकारः पूर्वप्रत्ययस्तत्सामर्थ्येनासादितासाधारणस्वभावभेदं ज्ञानमेव शून्यमपि वस्तु प्रकाशयतीत्यर्थः । नच तन्मते ज्ञानस्यापि शून्यत्वात्सर्वत्रानाश्वासप्रसङ्गः, यतस्तन्मते ज्ञानस्यापि पूर्वज्ञानाधीनसत्त्वाङ्गीकारेण स्वरूपसत्त्वस्य क्वचिदप्यसत्त्वात् ।

(२) शक्त्याश्रयत्वेनाभिमताज्ज्ञानाज्ज्ञानान्तरानुपलब्धेरित्यर्थः । उपलब्धौ वा तस्यापि ज्ञापकत्वेन ज्ञानान्तरापेक्षायामनवस्थापाताच्चेत्यर्थः ।

(३) प्रत्ययतपस्वीति । तपस्विपदमुपहासार्थम्, यतः सति कस्मिंश्चित्कस्यचिदुपकारो जायते, प्रत्ययस्य निरूपणं तु शून्यवादेऽसत्यायत्तम्, न च स्वोपकारिण्यसति प्रत्युपकारं काञ्चित्करोतीति ।

(४) असतः प्रत्ययप्रथनस्य चाविनाभावसम्बन्ध एव सदसतोः सम्बन्ध इत्याक्षिपति शून्यवादी असदन्तरेणेति ।

(५) सद्वादी समाधत्ते अहो बतेति । एवंचेत् कार्यकारणभावः स्वभावश्च बौद्धैरभिमतोऽविनाभावमूलं विहतः स्यादित्यर्थः । (६) सद्वादिमतं निरस्यति सिद्धान्ती अत्र ब्रूम इति ।

(७) पूर्वपक्ष्याह न सतत्त्वा इति । तोयात्मनेत्यनुषङ्गः ।

(८) ननु तोयात्मना मरीचीनामसत्त्वे सद्वादिनाप्यसत्ख्यातिः स्वीकृता स्यादत आह द्विविधं चेति । तोयमपेक्ष्य ज्ञातं मरीचिरूपमेव तोयरूपेणासत् तच्च भावरूपमिति नासत्ख्यातिरित्यर्थः ।

(९) सिद्धान्त्याह तत्किमिति ।

(१०) पूर्वपक्ष्याह अद्धेति । मरीचीनामतोयात्मत्वं भ्रमे न भासते किन्तु भावान्तरतोयात्मत्वमिति उपपद्यते तद्बाधः ।

अतोयात्मना गृह्णीयात्, तोयात्मना तु गृह्णन् कथमभ्रान्तः कथं वाऽबाध्यः ? (१)हन्त तोयाभावात्मनां मरीचीनां तोयभावात्मत्वं तावन्न सत् । तेषां तोयाभावादभेदेन तोयभावात्मतानुपपत्तेः । नाप्यसत्, वस्त्वन्तरमेव हि वस्त्वन्तरस्यासत्त्वमास्थीयते 'भावान्तरमभावोऽन्यो न कश्चिदनिरूपणादि'ति वदद्भिः । न चारोपितं रूपं वस्त्वन्तरं, तद्धि मरीचयो वा भवेद् गङ्गादिगतं तोयं वा । (२)पूर्वस्मिन् कल्पे मरीचय इति प्रत्ययः स्यात्, न तोयमिति। उत्तरस्मिंस्तु गङ्गायां तोयमिति स्यात्, न पुनरिहेति। देशभेदात् स्मरणे तोयमिति स्यान्न पुनरिहेति । (३)न चेदमत्यन्तमसन्निरस्तसमस्तस्वरूपमलीकमेवास्त्विति साम्प्रतम् । तस्यानुभवगोचरत्वानुपपत्तेरित्युक्तमधस्तात् । तस्मान्न सत्, नापि सदसत्, परस्परविरोधादिति अनिर्वाच्यमेवारोपणीयं मरीचिषु तोयमास्थेयम् । (४)तदनेन क्रमेणाध्यस्तं तोयं परमार्थतोयमिव, (५)अत एव पूर्वदृष्टमिव, तत्त्वतस्तु न तोयं न च पूर्वदृष्टं, किंत्वनृतमनिर्वाच्यम् । एवं च देहेन्द्रियादिप्रपञ्चोऽप्यनिर्वाच्योऽपूर्वोऽपि पूर्वमिथ्याप्रत्ययोपदर्शित इव परत्र चिदात्मन्यध्यस्यत इति उपपन्नमध्यासलक्षणयोगात् । (६)देहेन्द्रियादिप्रपञ्चबाधनं चोपपादयिष्यते । (७)चिदात्मा तु श्रुतिस्मृतीतिहासपुराणगोचरस्तन्मूलतदविरुद्धन्यायनिर्णीतशुद्धबुद्धमुक्तस्वभावः सत्त्वेनैव निर्वाच्योऽबाधिता स्वयंप्रकाशतैवाऽस्य सत्ता, सा च (८)स्वरूपमेव चिदात्मनो न तु तदतिरिक्ता सत्तासामान्यसमवायोऽर्थक्रियाकारिता वा इति सर्वमवदातम् ।

(९)स चायमेवंलक्षणकोऽध्यासोऽनिर्वचनीयः सर्वेषामेव सम्मतः परीक्षकाणम्, तद्भेदे परं विप्रतिपत्तिरित्यनिर्वचनीयतां द्रढयितुमाह **तं केचिदन्यत्राऽन्यधर्माध्यास इति वदन्ति**(पृ०४६)। अन्यधर्मस्य ज्ञानधर्मस्य, रजतस्य, ज्ञानाकारस्येति यावत्, अध्यासोऽन्यत्र बाह्ये ।

---

(१) तोयाभावात्मकमरीचिरूपे आरोपितं तोयत्वं सदसद्वेति विकल्प्य निरस्यति सिद्धान्ती हन्तेति ।

(२) अत्र भ्रमे मरीचयस्तोयं चेति वस्तुद्वयं भासते । तत्र मरीचितोयतादात्म्यं वस्तु चेत्तोयाद्वस्त्वन्तरभूता मरीचयो वा स्युर्मरीचिभ्यो वस्त्वन्तरं तोयं वा स्यान्नान्यत् अन्यस्यात्र भ्रमेऽनवभासादुभयत्र दूषणमाह पूर्वस्मिन्निति ।

(३) सिंहावलोकनन्यायेन निरस्तामसत्ख्यातिं स्मारयन्नुपसंहरति नचेदमिति ।

(४) स्वरूपेणानिर्वाच्यमपि तोयं भ्रमे ऽवभासेतेत्यमुष्य देशान्तरे सत्त्वकल्पना व्यर्थेत्यभिप्रेत्याह तदनेनेति । परमार्थतोयमिवेति । नतु परमार्थमेवेत्यर्थः ।

(५) पूर्वदृष्टमिवेति । नन्वभिनवतोयाभासस्वीकारे कथं पूर्वदृष्टत्वं भाष्योक्तं सगच्छेतेति चेन्न । अभिनवत्वेपि आरोपस्य पूर्वदृष्टग्रहणमुपयुज्यते आरोपणीयसमानमिथ्यावस्त्वन्तरोपदर्शकस्य पूर्वदर्शनसंस्कारद्वारेणोपयोगादिति ।

(६) देहेति । एतेन देहादि सन् भासमानत्वादात्मवदित्यनुमानेऽबाधितत्वमुपाधिः प्रदर्शितः । न च साधनव्याप्तिर्देहादिबाधस्य तत्र तत्र वक्ष्यमाणत्वादिति भावः ।

(७) ननु प्रत्यक्षसिद्धदेहादेर्यदि मिथ्यात्वं तदाऽऽत्मनि कथं सत्त्वमत आह चिदात्मेति । तत्त्वावेदकप्रमाणप्रमितत्वादात्मनः सत्त्वं न व्यावहारिकप्रमाणसिद्धदेहादेरिति च वक्ष्यते इत्यर्थः ।

(८) स्वरूपमेवेति । अन्यथा सत्तातद्वतोर्भेदादद्वैतहानिरित्यर्थः ।

(९) नन्वध्यासलक्षणे मतान्तरप्रदर्शनं मतिसंवादाय दूषणाय वा । नाद्यो विप्रतिपत्तेः, नापरो दूषणानभिधानादत आह स चायमिति । तथा च परत्र परावभास इति लक्षणे मतिसंवाद एव । विप्रतिपत्तिस्त्वधिष्ठानारोप्यविशेषविषयैवैवंलक्षणकत्वं चाध्यासस्यानिर्वाच्यतयैवेति मरुमरीचिकोदके दर्शितमिति भावः ।

(१)सौत्रान्तिकनये तावद्बाह्यमस्ति वस्तु सत्तत्र ज्ञानाकारस्यारोपः । विज्ञानवादिनामपि यद्यपि न बाह्यं वस्तु सत्तथाप्यनाद्यविद्यावासनारोपितमलीकं बाह्यं, तत्र ज्ञानाकारस्यारोपः । उपपत्तिश्च यद्यादृशमनुभवसिद्धं रूपं तत्तादृशमेवाभ्युपेतव्यमित्युत्सर्गोऽन्यथात्वं पुनरस्य बलवद्बाधकप्रत्ययवशात्, नेदं रजतमिति च बाधस्येदन्तामात्रबाधेनोपपत्तौ न रजतगोचरतोचिता । रजतस्य धर्मिणो बाधे हि रजतं च तस्य च धर्म इदन्ता बाधिते भवेताम्, तद्वरमिदन्तैवास्य धर्मो बाध्यतां न पुना रजतमपि धर्मि, (२)तथा च रजतं बहिर्बाधितमर्थादान्तरे ज्ञाने व्यवतिष्ठत इति ज्ञानाकारस्य बहिरध्यासः सिध्यति ।

केचित्तु ज्ञानाकारख्यातावपरितुष्यन्तो वदन्ति **"यत्र यदध्यासस्तद्विवेकाग्रहनिबन्धनो भ्रम"**इति (पृ०४६पं० १) । अपरितोषकारणं चाहु विज्ञानाकारता रजतादेरनुभवाद्वा व्यवस्थाप्येतानुमानाद्वा ? (३)तत्रानुमानमुपरिष्टान्निराकरिष्यते । अनुभवोऽपि रजतप्रत्ययो वा स्याद् बाधकप्रत्ययो वा ? न तावद्रजतानुभवः । स हीदंकारास्पदं रजतमावेदयति न त्वान्तरम्, अहमिति हि तदा स्यात् प्रतिपत्तु.(४) प्रत्ययादव्यतिरेकात् । (५)भ्रान्तं विज्ञानं स्वाकारमेव बाह्यतयाऽध्यवस्यति, तथा च नाहङ्कारास्पदमस्य गोचरो, ज्ञानाकारता पुनरस्य बाधकप्रत्ययप्रवेदनीयेति चेत् । हन्त बाधकप्रत्ययमालोचयत्वायुष्मान् । किं पुरोवर्त्ति द्रव्यं रजताद्विवेचयत्याहो ज्ञानाकारतामप्यस्य दर्शयति । तत्र ज्ञानाकारतोपदर्शनव्यापारं बाधकप्रत्ययस्य ब्रुवाणः श्लाघनीयप्रज्ञो देवानांप्रियः । (६)पुरोवर्त्तित्वप्रतिषेधादर्थादस्य ज्ञानाकारतेति चेत्, न, (७)असन्निधानाग्रहनिषेधाद् असन्निहितो भवति प्रतिपत्तुरत्यन्तसान्निधानं त्वस्य प्रतिपत्त्रात्मकं कुतस्त्यम् । (८)नचैष रजतस्य निषेधो न चेदन्तायाः, किन्तु विवेकाग्रहप्रसञ्जितस्य रजतव्यहारस्य । (९)न च रजतमेव शुक्तिकायां प्रसञ्जितं रजतज्ञानेन, नहि रजतनिर्भासस्य शुक्तिकालम्बनं युक्तमनुभवविरोधात् । न खलु सत्तामात्रेणालम्बनम्, अतिप्रसङ्गात् । सर्वेषामर्थानां सत्वाविशेषादालम्बनत्वप्रसङ्गात् । नापि कारणत्वेन, इन्द्रियादीनामपि कारणत्वात्, तथा च भासमानतैवालम्बनार्थः । न च रजतज्ञाने शुक्तिका भासत इति कथमालम्बनं, भासमानताभ्युपगमे वा कथं

---

(१) बौद्धनयविशेषेण भ्रमाधिष्ठानमाह सौत्रान्तिकेति ।

(२) तथाचेति । इदमत्र तात्पर्यम् । इदं रजतमित्यत्र रजतानुयोगिकइदन्त्वप्रतियोगिकतादात्म्यस्यैव भानात् नेदं रजतमित्यत्र तदेव बाधितं भवति 'प्रतियोग्यभावौ तुल्ययोगक्षेमावि'ति न्यायात्, नतु रजतस्य, तथासति उभयबाधस्वीकारापत्ते । एवं चात्मख्यातिवादिमते बाह्यशुक्त्यादौ बुद्धिरूपात्मनो धर्मस्य रजतस्याध्यास आन्तरस्य रजतस्य बहिर्वदवभासोऽन्यथाख्यातिवादिमतेऽन्यत्र शुक्त्यादावन्यधर्मस्य देशान्तरस्थरूप्यादेरध्यास इति ।

(३) सहोपलम्भहेतुकं मितिमेययोरभेदसाधकमनुमानमित्यर्थ ।

(४) ज्ञानरूपात्मप्रतिपत्तुरभेदादित्यर्थ, समानाधिकरणपञ्चमीप्रयोगात् ।

(५) अहमुल्लेखयोग्यस्यापि रजतस्य भ्रमादिदन्तया प्रतीतिरित्यभिप्रायेणाशङ्कते भ्रान्तमिति ।

(६) एवं बाधकप्रत्ययस्य साक्षाज्ज्ञानाकारप्रदर्शकत्वं निरस्यार्थादपि तन्निरस्यति पुरोवर्त्तित्वेति ।

(७) अनिदंतागमकस्येदन्तानिषेधस्य 'देशान्तरसत्त्वयाप्युपपत्तिरित्याह असन्निधानेति । रजतस्याऽसन्निधानाग्रहः सन्निहितत्वेन व्यवहारहेतुत्वादभ्रम, तन्निषेधोऽसंनिधानग्रहरूपो बोध, प्रागभावनिवृत्त्यात्मकत्वाद्भावस्य, तस्मादख्यातिमते आरोप्योऽर्थ प्रतिपत्तुरसंनिहितो जायते इति भाव ।

(८) रजतबाधोक्तगौरवं निरस्यन्नाह नचैष इति ।

(९) व्यवहारनिषेधेपि शुक्तौ रजतप्रतीत्याऽन्यथाख्यातिरित्याशङ्कां निरस्यति नचेति ।

नानुभवविरोधः । (१)अपि चन्द्रियादीनां समीचीनज्ञानोपजनने सामर्थ्यमुपलब्धमिति कथमेभ्यो मिथ्याज्ञानसम्भवः । दोषसहितानां तेषां मिथ्याप्रत्ययेऽपि सामर्थ्यमिति चेत्, न, दोषाणां कार्योपजननसामर्थ्यविघातमात्रे हेतुत्वात्, अन्यथा दुष्टादपि कुटजबीजाद् वटाङ्कुरोत्पत्तिप्रसङ्गात् । अपि च स्वगोचरव्यभिचारे विज्ञानानां सर्वत्रानाश्वासप्रसङ्गः । तस्मात् सर्वं ज्ञानं समीचीनमास्थेयम् । (२)तथा च रजतमिदमिति च द्वे विज्ञाने स्मृत्यनुभवरूपे, तत्रेदमिति पुरोवर्तिद्रव्यमात्रग्रहणं दोषवशात् तद्गतशुक्तित्वसामान्यविशेषस्याग्रहात्, तन्मात्रं च गृहीतं सदृशतया संस्कारोद्बोधक्रमेण रजते स्मृतिं जनयति । सा च (३)गृहीतग्रहणस्वभावापि दोषवशाद्गृहीतत्वांशप्रमोषाद् ग्रहणमात्रमवतिष्ठते । तथा च रजतस्मृतेः पुरोवर्तिद्रव्यमात्रग्रहणस्य च मिथः स्वरूपतो विषयतश्च भेदाग्रहात् (४)सन्निहितरजतगोचरज्ञानसारूप्येणेदं रजतमिति भिन्ने अपि स्मरणग्रहणे अभेदव्यवहारं च सामानाधिकरण्यव्यपदेशं च प्रवर्तयतः । क्वचित्पुनर्ग्रहण एव मिथो गृहीतभेदे, यथा पीतः शङ्ख इति । अत्र हि विनिर्गच्छन्नयनरश्मिवर्तिनः पित्तद्रव्यस्य काचस्येव स्वच्छस्य पीतत्वं गृह्यते पित्तं तु न गृह्यते । शङ्खोऽपि दोषवशात् शुक्लगुणरहितः स्वरूपमात्रेण गृह्यते । तदनयोर्गुणगुणिनोरसंसर्गाग्रहसारूप्यात् पीततपनीयपिण्डप्रत्ययाविशेषेणाभेदव्यवहारः समानाधिकरणव्यपदेशश्च । (५)भेदाग्रहप्रसञ्जिताभेदव्यवहारबाधनाच्च नेदमिति विवेकप्रत्ययस्य बाधकत्वमप्युपपद्यते, तदुपपत्तौ च प्राक्तनस्य प्रत्ययस्य भ्रान्तत्वमपि लोकसिद्धं सिद्धं भवति । तस्माद्यथार्थाः सर्वे विप्रतिपन्नाः संदेहविभ्रमाः प्रत्ययत्वात्, घटादिप्रत्ययवत् । तदिदमुक्तं **यत्र यदध्यास इति** । यस्मिन् शुक्तिकादौ यस्य रजतादेरध्यास इति लोकप्रसिद्धिः नासावन्यथाख्यातिनिबन्धना, किन्तु गृहीतस्य रजतादेस्तत्स्मरणस्य च गृहीततांशप्रमोषेण गृहीतमात्रस्य य इदमिति पुरोवस्थिताद्द्रव्यमात्रात्तत्प्रज्ञानाच्च विवेकस्तदग्रहणनिबन्धनो भ्रमः । भ्रान्तत्वं च ग्रहणस्मरणयोरितरेतरसामानाधिकरण्यव्यपदेशो रजतादिव्यवहारश्चेति ।

**अन्ये तु** अत्राप्यपरितुष्यन्तो **यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामाचक्षते** (पृ० ४७ पं० १) । अत्रेदमाकूतम्—अस्ति तावद्रजतार्थिनो रजतमिदमिति प्रत्ययात्पुरोवर्तिनि द्रव्ये प्रवृत्तिः, सामानाधिकरण्यव्यपदेशश्चेति सर्वजनीनम् । तदेतन्न तावद्ग्रहणस्मरणयोस्तद्गोचरयोश्च मिथो भेदाग्रहमात्राद्भवितुमर्हति(६) । ग्रहणनिबन्धनौ हि चेत-

---

( १ ) एवमारोपितमर्थं निरस्य मिथ्याज्ञानमपि प्रतिषेधति अपि चेति ।

( २ ) ननु तथापि मिथ्याज्ञानसिध्यर्थं विपर्ययो वाच्य अत आह तथाचेति । इदमात्मकसामान्यार्थं शुक्तिस्वरूपविशेषस्याग्रहादिदमिति द्रव्यमात्रग्रहणं भवतीत्यर्थः ।

( ३ ) गृहीतेति । गृहीतमिदमिति प्रकाशनस्वभावेत्यर्थः ।

( ४ ) सन्निहितेति । सन्निहितरजतविषयं ज्ञानं यथा इदमो रजतस्य चासंसर्गं न गृह्णाति समृष्टत्वाच्चथा ग्रहणस्मरणे अपि परस्परं भिन्ने स्वगतभेदं स्वविषयासमृष्टत्वं न गृह्णातीति इत्यत्र सारूप्यं बोध्यम् ।

( ५ ) निषेध्यभ्रमाभावे निषेधानुपपत्तिमाशङ्क्याह भेदाग्रहेति । इतरेतराभावबोधादितरेतराभावाग्रहनिवृत्तौ तद्धेतुकव्यवहारनिवृत्तिरूपं बाधस्य फलं भवतीत्यर्थः ।

( ६ ) अर्हतीति । किन्तु रजतमित्येवरूपात्सामानाधिकरण्यप्रत्ययाद्भवतीत्यर्थः ।

नस्य व्यवहारव्यपदेशौ कथमग्रहणमात्राद्भवेताम् । (१)ननूक्तं—नाग्रहणमात्रात्किन्तु ग्रहण-स्मरणे एव मिथः स्वरूपतो विषयतश्चागृहीतभेदे समीचीनपुरःस्थितरजतविज्ञानसादृश्येन अभेदव्यवहारं सामानाधिकरण्यव्यपदेशं च प्रवर्तयतः । (२)अथ समीचीनज्ञानसारूप्यमनयोर्गृह्यमाणं वा व्यवहारप्रवृत्तिहेतुरगृह्यमाणं वा ? सत्तामात्रेण गृह्यमाणेऽपि समीचीनज्ञानसारूप्यमनयोरिदमिति रजतमिति च ज्ञानयोरिति ग्रहणम् , अथ वा तयोरेव स्वरूपतो विषयतश्च मिथो भेदाग्रह इति ग्रहणम् । तत्र न तावत्समीचीनज्ञानसदृशी इति ज्ञानं समीचीनज्ञानव्यवहारप्रवर्तकम् , नहि गोसदृशो गवय इति ज्ञानं गवार्थिनं गवये प्रवर्तयति । अनयोरेव भेदाग्रह इति तु ज्ञानं पराहतं, नहि भेदाग्रहेऽनयोरिति भवति, अनयोरिति ग्रहे भेदाग्रहणमिति च (३)भवति। तस्मात्सत्तामात्रेण भेदाग्रहोऽगृहीत एव व्यवहारहेतुरिति (४)वक्तव्यम् । तत्र किमयमारोपोत्पादक्रमेण व्यवहारहेतुराहो अनुत्पादितारोप एव स्वत इति। वयं तु(५) पश्यामः चेतनव्यवहारस्याज्ञानपूर्वकत्वानुपपत्तेरारोपज्ञानोत्पादक्रमेणैवेति । (६) ननु सत्यं चेतनव्यवहारो नाऽज्ञानपूर्वकः किन्त्वविदितविवेकग्रहणस्मरणपूर्वक इति । मैवम्(७) । नहि रजतप्रातिपदिकार्थमात्रस्मरणं प्रवृत्तावुपयुज्यते । इदंकारास्पदाभिमुखी खलु रजतार्थिनां प्रवृत्तिरित्यविवादम् । कथं चायमिदङ्कारास्पदे प्रवर्तेत, यदि तु न तदिच्छेत् । अन्यदिच्छत्यन्यत्करोतीति व्याहतम् । न चेदिदङ्कारास्पदं रजतमिति जानीयात्कथं रजतार्थी तदिच्छेत् । यद्यत्तथात्वेनाग्रहणादिति ब्रूयात्स च प्रतिवक्तव्योऽथ तथात्वेनाग्रहणात्कस्मान्नोपेक्षेतेति । सोऽयमुपादानोपेक्षाभ्यामभिमत आकृष्यमाणश्चेतनोऽव्यवस्थित इदङ्कारास्पदे रजतसमारोपेणोपादान एव व्यवस्थाप्यत इति भेदाग्रहः समारोपोत्पादक्रमेण चेतनप्रवृत्तिहेतुः । तथाहि—भेदाग्रहादिदङ्कारास्पदे रजतत्वं समारोप्य तज्जातीयस्योपकारहेतुभावमनुचिन्त्य तज्जातीयतयेदङ्कारास्पदे रजते तमनुमाय तदर्थी प्रवर्तते इत्यानुपूर्व्यं सिद्धम् । न च तटस्थरजतस्मृतिरिदङ्कारास्पदस्योपकारहेतुभावमनुमापयितुमर्हति, रजतत्वस्य हेतोरपक्षधर्मत्वात् । एकदेशदर्शनं खल्वनुमापकं न त्वनेकदेशदर्शनम् । यथाहुः(८)—'ज्ञातसम्बन्धस्यैकदेशदर्शनादि'ति । समारोपे त्वेकदेशदर्शनमस्ति । तत्सिद्धमेतद्विवादाध्यासितं रजतादिज्ञानं पुरोवर्तिवस्तुविषयं रजताद्यर्थिनस्तत्र नियमेन प्रवर्तकत्वात् , यद्यदर्थिनं यत्र (९)नियमेन

---

(१) अग्रहणहेतुवादी शंकते ननूक्तमिति ।

(२) तत्र पृच्छति सामानाधिकरणवादी अथेति ।

(३) भवतीत्यत्रापि नञोऽनुषङ्गः ।

(४) वक्तव्यमिति । अग्रहणवादिना भवतेति भाव ।

(५) तत्र स्वमतं प्रदर्शयति वयन्त्वित्यादिना । (६) अग्रहणवादी शङ्कते नन्विति ।

(७) समाधत्ते मैवमिति । यद्यपि अविदितविवेकस्य स्मरणस्य ग्रहणस्य च ज्ञानयोर्यौगपद्याभावान्नान्यथाव्यवहारहेतुत्वमेकदा सम्भवति, तथापि प्रत्येकं स्यादत आह नहीति । ग्रहणपक्षेपि तुल्यमेतत् यदि तदिच्छेत्तर्ह्येव प्रवर्तेतेत्यर्थ ।

(८) यथाहु शबरस्वामिन इत्यर्थ । ज्ञाताविनाभावसम्बन्धस्य पुंस लिङ्गविशिष्टधर्म्येकदेशदर्शनाद्विशिष्टधर्म्येकदर्शने लिङ्गे बुद्धिरनुमानमिति ।

(९) नियमेनेति । अनेन साधनप्रवर्तके फलज्ञाने व्यभिचाराभाव प्रदर्शित, तस्योपायान्तरसाध्यत्वेन तज्ज्ञानस्य नियमेनाप्रवर्तकत्वात् ।

प्रवर्तयति तज्ज्ञानं तद्विषयं यथोभयसिद्धसमीचीनरजतज्ञानं, तथा चेदं, तस्मात्तथेति । यच्चोक्तमनवभासमानतया न शुक्तिरालम्बनमिति, तत्र भवान् पृष्टो व्याचष्टां किं शुक्तिकात्वस्येदं रजतमिति ज्ञानं प्रत्यनालम्बनत्वमाहोस्विद् द्रव्यमात्रस्य पुरःस्थितस्य सितभास्वरस्य ? यदि शुक्तिकात्वस्यानालम्बनत्वम् , अद्धा । उत्तरस्यानालम्बनत्वं ब्रुवाणस्य तवैवानुभवविरोधः । तथाहि--रजतमिदमित्यनुभवन्ननुभाविना पुरोवर्ति वस्त्वङ्गुल्यादिना निर्दिशति । (१)दृष्टं च दुष्टानां कारणानामौत्सर्गिककार्यप्रतिबन्धेन कार्यान्तरोपजननसामर्थ्यम् , यथा दावाग्निदग्धानां वेत्रबीजानां कदलीकाण्डजनकत्वम्, भस्मकदुष्टस्य चौदर्यस्य तेजसो बहुन्नपचनमिति । प्रत्यक्षबाधापहृतविषयं च विभ्रमाणां यथार्थत्वानुमानमाभासो (२)हुतवहानुष्णत्वानुमानवत् । यच्चोक्तं--मिथ्याप्रत्ययस्य व्यभिचारे सर्वप्रमाणेष्वनाश्वास-इति । तद् बोधकत्वेन स्वतः प्रामाण्यं नाव्यभिचारेणेति व्युत्पादयद्भिरस्माभिः परिहृतं न्यायकणिका(३)यामिति नेह प्रतन्यते । दिङ्मात्रं चास्य स्मृति(४)प्रमोषभङ्गस्योक्तम् । विस्तरस्तु ब्रह्मतत्त्वसमीक्षायामवगन्तव्य इति, तदिदमुक्तम्--"अन्ये तु यत्र यदध्यासस्तस्यैव विपरीतधर्मकल्पनमाचक्षत" इति । यत्र शुक्तिकादौ यस्य रजतादेरध्यासस्तस्यैव शुक्तिकादेर्विपरीतधर्मकल्पनं रजतत्वधर्मकल्पनमिति योजना । ननु सन्तु नाम परीक्षकाणां विप्रतिपत्तयः प्रकृते तु किमायातमित्यत आह--**"सर्वथापि त्वन्यस्याऽन्यधर्मकल्पनां न व्यभिचरति"** ( पृ० ४७) । (५)अन्यस्यान्यधर्मकल्पनाऽनृतता, सा चानिर्वचनीयतेत्यधस्तादुपपादितम् । तेन सर्वेषामेव परीक्षकाणां मतेऽन्यस्यान्यधर्मकल्पनानिर्वचनीयताऽवश्यम्भाविनीत्यनिर्वचनीयता सर्वतन्त्रसिद्धान्त इत्यर्थः । अख्यातिवादिभिरकामैरपि सामानाधिकरण्यव्यपदेशप्रवृत्तिनियमस्नेहादिदमभ्युपेयमिति भावः । न केवलमियमनृतता परीक्षकाणां सिद्धाऽपि तु लौकिकानामपीत्याह--**"तथा च लोकेऽनुभवः शुक्तिका हि रजतवदवभासत" इति** । न पुना रजतमिदमिति शेषः । स्यादेतत् । अन्यस्यान्यात्मताविभ्रमो लोकसिद्धः, एकस्य त्वभिन्नस्य भेदभ्रमो न दृष्ट इति कुतश्चिदात्मनोऽभिन्नानां जीवानां भेदविभ्रम इत्यत आह--**"एकश्चन्द्रः सद्वितीयवदिति"** । ( पृ० ४८ पं० १ ) ।

---

( १ ) समीचीनज्ञानान्मिथ्याज्ञानं न जन्यत इति यदुक्तं तन्निराचष्टे दृष्टञ्चेति ।

( २ ) 'सर्वे विप्रतिपन्ना'इत्यादिनोक्तमनुमानं प्रत्यक्षबाधितविषयत्वाद्वह्निरनुष्णो द्रव्यत्वादित्यनुमानवद्बाधितमित्यर्थः ।

( ३ ) "किमव्यभिचारितैवप्रामाण्यमुत तद्धेतुरथ तद्व्यापिका, येन क्वचिद्व्यभिचारदर्शनाज्ज्ञानानामप्रामाण्यमापतेत् । सर्वथाप्यसम्भव, व्यभिचारिणामपि सितनीलादिषु चक्षुरादीनां बोधकत्वेन प्रामाण्यादव्यभिचारिणामपि दहनादौ धूमादीनां कुतश्चिन्निमित्तादनुपजनितदहनादिज्ञानानामप्रामाण्यादि"त्यादिना न्यायकणिकायां व्युत्पादितं तत्रैव द्रष्टव्यम् ।

( ४ ) स्मृतीति । 'गृहीतत्वांशप्रमोषादि'त्यादिनोक्तस्य स्मृतिप्रमोषस्य भंगो दिङ्मात्रेणात्र कृतो विस्तरतो ब्रह्मतत्त्वसमीक्षाख्ये निबन्धे द्रष्टव्य इत्यर्थः ।

( ५ ) ननु भाष्यकारेणापि किं तर्हि भ्रमोऽङ्गीकृत इत्याशंकानिरासाय व्याचष्टे अन्यस्येति । कल्पनाऽवभासपदार्थः ।

(१)पुनरपि चिदात्मन्यध्यासमाक्षिपति—'**कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयतद्धर्माणाम्**'' (पृ० ४८ पं० २) । अयमर्थः । चिदात्मा प्रकाशते न वा ? न चेत् प्रकाशते, कथमस्मिन्नध्यासो विषयतद्धर्माणाम् । न खल्वप्रतिभासमाने पुरोवर्तिनि द्रव्ये रजतस्य वा तद्धर्माणां वा समारोपः सम्भवतीति । प्रतिभासे वा न तावदयमात्मा जडो घटादिवत् पराधीनप्रकाश इति युक्तम् । न खलु स एव कर्ता च कर्म च भवति, विरोधात्, परसमवेतक्रियाफलशालि हि कर्म, न च ज्ञानक्रिया परसमवायिनीति कथमस्यां कर्म, न च तदेव स्व च परं च, विरोधात्। (२)आत्मान्तरसमवायाभ्युपगमे तु ज्ञेयस्यात्मनोऽनात्मत्वप्रसङ्गः । एवं तस्यतस्येत्यनवस्थाप्रसङ्गः ।

स्यादेतत्(३) । आत्मा जडोपि सर्वार्थज्ञानेषु भासमानोपि कर्तैव न कर्म, परसमवेतक्रियाफलशालित्वाभावात् चैत्रवत् । यथा हि चैत्रसमवेतक्रियया चैत्रनगरप्राप्तावुभयसमवेतायामपि क्रियमाणायां नगरस्यैव कर्मता परसमवेतक्रियाफलशालित्वात्, न तु चैत्रस्य क्रियाफलशालिनोऽपि चैत्रसमवायाद्गमनक्रियाया इति । तन्न । श्रुतिविरोधात् । श्रूयते हि 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति । उपपद्यते च, (४)तथाहि—योयमर्थप्रकाशः फलं यस्मिन्नर्थश्च आत्मा च प्रथेते स किं जडः स्वयंप्रकाशो वा ? जडश्चेद्विषयात्मानावपि जडाविति कस्मिन् किं प्रकाशेताविशेषात्, इति प्राप्तमान्ध्यमशेषस्य जगतः । तथा चाभाणकः—'अन्धस्येवान्धलग्नस्य विनिपातः पदेपदे' । न च निलीनमेव विज्ञानमर्थात्मानौ ज्ञापयति चक्षुरादिवदिति वाच्यम् । ज्ञापनं हि ज्ञानजननं, जनितं च ज्ञानं जडं सन्नोक्त(५)दूषणमतिवर्तेतेति । एवमुत्तरोत्तराण्यपि ज्ञानानि जडानीत्यनवस्था । तस्मादपराधीनप्रकाशा संविदुपेतव्या । (६)तथापि किमायातं विषयात्मनोः स्वभावजडयोः ? एतदायातं यत्तयोः संविदजडेति । (७)तत्किं पुत्रः पण्डित इति पितापि पण्डितोऽस्तु, स्वभाव एष संविदः स्वयंप्रकाशाया यदर्थात्मसम्बन्धितेति चेद् । (८)हन्त पुत्रस्यापि पण्डितस्य स्वभाव एष यत् पितृसम्बन्धितेति समानम् । (९)सहार्थात्मप्रकाशेन संवित्प्रकाशो न त्वर्थात्मप्रकाशं विनेति तस्याः स्वभाव

---

(१) एवमारोप्यसिध्यसम्भवप्रयुक्ते आक्षेपे निरस्ते पुनरात्मनोऽधिष्ठानत्वानुपपत्त्या तमाक्षिपति पुनरपीति ।

(२) एवमात्मनः स्वग्राह्यत्वं निरस्य परग्राह्यत्वं निरस्यन्नाह आत्मान्तरेति ।

(३) बौद्धनैयायिक शङ्कते स्यादेतदिति । संविदाश्रयत्वेनात्मसिद्धिः स्यादित्यर्थः ।

(४) स्वप्रकाशफलस्य जन्मादिनिषेधेनात्मत्वमुपपादयति तथाहीत्यादिना ।

[५] उक्तदूषणमिति । जगदान्ध्यमित्यर्थः ।

[६] संविदोऽपराधीनप्रकाशत्वेपि आत्मा कुतो न जड इति वादिनं प्रत्यात्मस्वप्रकाशत्वायाह तथापीति ।

[७] पुत्रे पण्डितेपि पितुरपाण्डित्यवदर्थात्मसम्बन्धिन्यामजडायामपि संविदि नार्थात्मनोः प्रकाशमानतासिद्धिरित्यभिप्रायेणाक्षिपति तत्किमिति । आश्रयविषययोः पारतन्त्र्यनियमात्स्वभावसम्बद्धा संवित्, न पुत्रः पित्रभावेपि तदभावादिति आक्षेपार्थः ।

[८] समाधत्ते हन्तेति । पुत्रपित्रोरपि जन्यजनकत्वे स्वभावसम्बद्ध इति समाधानार्थः ।

[९] सहेति । अर्थात्मनोः प्रकाशेन सहेत्यर्थः ।

इति चेत्, तत्किं संविदो भिन्नौ संविदर्थात्मप्रकाशौ ? (१)तथा च न स्वयप्रकाशा संविन्न च संविदर्थात्मप्रकाश इति । अथ संविदर्थात्मप्रकाशौ न सविदो भिद्येते, संविदेव तौ। एवं चेत्, यावदुक्तं भवति संविदात्मार्थौ सहेति तावदुक्तं भवति सविदर्थात्मप्रकाशौ सहेति, तथा च न (२) विवक्षितार्थसिद्धिः । (३)नचातीतानागतार्थगोचरायाः सविदोऽर्थसहभावोऽपि । तद्विषयहानोपादानोपेक्षाबुद्धिजननादर्थसहभाव इति चेन्न । अर्थसंविद इव हानादिबुद्धीनामपि तद्विषयत्वानुपपत्तेः । हानादिजननाद्धानादिबुद्धीनामर्थविषयत्वम् , अर्थविषयहानादिबुद्धिजननाच्चार्थसंविदस्तद्विषयत्वमिति चेत् ,तत् किं देहस्य प्रयत्नवदात्मसंयोगो देहप्रवृत्तिनिवृत्तिहेतुरर्थे इत्यर्थप्रकाशोस्तु । जाड्याद्देहात्मसंयोगो नार्थप्रकाश इति चेत्, नन्वयं स्वयंप्रकाशोऽपि स्वात्मन्येव खद्योतवत्प्रकाश, अर्थे तु जड इत्युपपादितम्। न च प्रकाशस्यात्मानो विषयाः । ते हि विच्छिन्नदीर्घस्थूलतयाऽनुभूयन्ते, प्रकाशश्चायमान्तरोऽस्थूलोऽनणुरह्रस्वोऽदीर्घश्चेति प्रकाशते, (४)तस्माच्चन्द्रेऽनुभूयमान इव द्वितीयश्चन्द्रमा स्वप्रकाशादन्योऽर्थोऽनिर्वचनीय एवेति युक्तमुत्पश्यामः । न चास्य प्रकाशस्या(५)जानतः स्वलक्षणभेदोऽनुभूयते । न चानिर्वाच्यार्थभेदः प्रकाश निर्वाच्यं भेत्तुमर्हति, अतिप्रसङ्गात् । न चार्थानामपि परस्परं भेदः समीचीनज्ञानपद्धतिमध्यास्ते इत्युपरिष्टादुपपादयिष्यते । (६)तदयं प्रकाश एव स्वयंप्रकाश एकः कूटस्थो नित्यो निरंश. प्रत्यगात्माऽ(७)शक्यनिर्वचनीयेभ्यो देहेन्द्रियादिभ्य आत्मानं प्रतीपं निर्वचनीयमञ्चति जानातीति प्रत्यङ् स चात्मेति प्रत्यगात्मा, स चापराधीनप्रकाशत्वादनंशत्वाच्चाविषयस्तस्मिन्नध्यासो विषयधर्माणां देहेन्द्रियादिधर्माणां, कथम् ? किमाक्षेपे, अयुक्तोऽयमध्यास इत्याक्षेपः । कस्मादयमयुक्त इत्यत आह **"सर्वो हि पुरोवस्थिते विषये विषयान्तरमध्यस्यति"** ( पृ० ४८ पं० ३ ) । एतदुक्तं भवति यत्पराधीनप्रकाशमंशवच्च तत्सामान्यांशग्रहे, कारणदोषवशाच्च विशेषाग्रहेऽन्यथा प्रकाशते । प्रत्यगात्मा त्वपराधीनप्रकाशतया न स्वज्ञाने कारणान्यपेक्षते येन तदाश्रयदोषैर्दूष्येत । न चांशवान्, येन कश्चिदस्यांशो गृह्येत कश्चिन्न गृह्येत, नहि तदेव तदानीमेव तेनैव गृहीतमगृहीतं च सम्भवतीति न स्वयंप्रकाशपक्षेऽध्यासः । सदातनेऽप्यप्रकाशे पुरोवस्थितत्वस्यापरोक्षत्वस्याभावान्नाध्यासः । नहि शुक्तावपुरःस्थितायां रजतमध्यस्यतीदं रजतमिति । तस्मादत्यन्तग्रहेऽत्यन्ताग्रहे च नाध्यास इति सिद्धम् ॥ स्यादेतत् । अविषयत्वे हि चिदात्मनो नाध्यासो, विषय एव तु चिदात्माऽस्मत्प्रत्ययस्य, तत्कथं नाध्यास इत्यत आह—**"युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्व ब्रवी-**

---

[ १ ] तथाचेति । संविदर्थात्मप्रकाशानां संविदो भेदे सविदः स्वयप्रकाशत्वमर्थात्मप्रकाशत्वं चानुपपन्नमिति तस्या घटवदप्रकाशत्वमर्थात्मज्ञापकत्वेनानवस्था च स्यादित्यर्थ ।

[ २ ] नेति । संविद्भिन्नप्रकाशानङ्गीकारे संविदर्थात्मना साहित्यमिति पुत्रपाडित्यतुल्यतेति भाव ।

( ३ ) एवमर्थसविदो सहभावानुपयोग प्रदर्श्य कांचित्तस्यासिद्धिमाह नचेति ।

( ४ ) एव बौद्धमतं निरस्य स्वमतमुपसंहारन्नाह तस्मादिति ।

( ५ ) आजानत —स्वभावतः, अनेन सविद आत्मत्वासिद्धिरुक्ता ।

( ६ ) एवं स्वप्रकाश आत्मेति स्थिते वेदान्तिना पक्षेऽध्यासाक्षेपकतया भाष्य योजयन्नाह तदयमिति ।

( ७ ) प्रत्यक्शब्दार्थं प्रदर्शयन्नाह अशक्येति ।

षि" ॥ विषयत्वे हि चिदात्मनोऽन्यो विषयी भवेत्, तथा च यो विषयी स एव चिदात्मा, विषयस्तु ततोऽन्यो युष्मत्प्रत्ययगोचरोऽभ्युपेयः । तस्मादनात्मत्वप्रसङ्गादनवस्थापरिहाराय युष्मत्प्रत्ययापेतत्वम् अत एवाविषयत्वमात्मनो वक्तव्यं, तथा च नाध्यास इत्यर्थः ।

परिहरति—**"उच्यते न तावदयमेकान्तेनाविषयः"** कुतः? **"अस्मत्प्रत्ययविषयत्वात्"** (पृ० ४९ पं० १) अयमर्थः । (१)सत्यं प्रत्यगात्मा स्वयप्रकाशत्वादविषयोऽनंशश्च, तथाप्यनिर्वचनीयानाद्यविद्यापरिकल्पितबुद्धिमनःसूक्ष्मस्थूलशरीरेन्द्रियावच्छेदेनानवच्छिन्नोपि वस्तुतोऽवच्छिन्न इवाभिन्नोपि भिन्न इवाकर्तापि कर्तेवाभोक्तापि भोक्तेवाविषयोप्यस्मत्प्रत्ययविषय इव जीवभावमापन्नोऽवभासते, नभ इव घटमणिकमल्लिकाद्यवच्छेदभेदेन भिन्नमिवानेकविधधर्मकमिवेति । (२)नहि चिदेकरसस्यात्मनश्चिदंशे गृहीतेऽगृहीतं किंचिदस्ति, न खल्वानन्दनित्यत्वविभुत्वादयोऽस्य चिद्रूपाद्वस्तुतो भिद्यन्ते, येन तद्ग्रहे न गृह्येरन् । गृहीता एव तु कल्पितेन भेदेन न विवेचिता इत्यगृहीता इवाभान्ति । (३)न चात्मनो बुद्ध्यादिभ्यो भेदस्तात्त्विको, येन चिदात्मनि गृह्यमाणे सोऽपि गृहीतो भवेत्, बुद्ध्यादीनामनिर्वाच्यत्वेन तद्भेदस्याप्यनिर्वचनीयत्वात् । तस्माच्चिदात्मन स्वयप्रकाशस्यैवानवच्छिन्नस्यावच्छिन्नेभ्यो बुद्ध्यादिभ्यो भेदाग्रहात् तदध्यासेन जीवभाव इति । (४)तस्य चानिदमिदमात्मनोऽस्मत्प्रत्ययविषयत्वमुपपद्यते । तथाहि कर्ता भोक्ता चिदात्माऽहंप्रत्यये प्रत्यवभासते । न चोदासीनस्य तस्य क्रियाशक्तिर्भोगशक्तिर्वा सम्भवति । यस्य च बुद्ध्यादेः कार्यकरणसङ्घातस्य क्रियाभोगशक्ती न तस्य चैतन्यम् । तस्माच्चिदात्मैव कार्यकरणसङ्घातेन ग्रथितो लब्धक्रियाभोगशक्तिः स्वयंप्रकाशोऽपि बुद्ध्यादिविषयविच्छुरणात् कथंचिदस्मत्प्रत्ययविषयोऽहंकारास्पदं जीव इति च जन्तुरिति च क्षेत्रज्ञ इति चाख्यायते । (५)न खलु जीवश्चिदात्मनो भिद्यते । तथा च श्रुतिः "अनेन जीवेनात्मने"ति । तस्माच्चिदात्मनोऽव्यतिरेकाज्जीवः स्वयंप्रकाशोऽप्यहंप्रत्ययेन कर्तृभोक्तृतया (६)व्यवहारयोग्यः क्रियत इत्यहंप्रत्ययालम्बनमुच्यते । न चाध्यासे सति विषयत्वं विषयत्वे चाध्यास इत्यन्योन्याश्रयमिति साम्प्रतम् । बीजाङ्कुरवदनादित्वात्, पूर्वपूर्वाध्यासतद्वासनाविषयीकृतस्योत्तरोत्तराध्यासविषयत्वाविरोधादित्युक्तं **'नैसर्गिकोऽयं लोकव्यवहार'** इति भाष्यग्रन्थेन । तस्मात् सुष्ठूक्तं **'न तावदयमेकान्तेनाविषय' इति** । जीवो हि चिदात्मतया स्वयंप्रकाशतयाऽविषयोप्यौपाधिकेन रूपेण विषय इति भावः ।

---

(१) स्वप्रकाशस्य विषयत्वासम्भवाद्भाष्यकारोक्तमस्मत्प्रत्ययविषयत्वेनात्मनो विषयत्वमसम्भवीत्याशङ्कायां औपाधिकविषयताङ्गीकारद्वारा समाधानमाह सत्यमित्यादिना ।

(२) नहीति । अनेनात्मनो निरंशत्वप्रतिपादनेन स्वतोऽविषयत्वमौपाधिकं विषयत्वं चेति कुतः? शुक्तिग्रहणाग्रहणे एवात्मनो किमिति नाङ्गीक्रियते इत्याशङ्का परास्ता बोध्या ।

(३) यदि चिद्भाने तदात्मकतया आनन्दादयो भान्ति तदा तेभ्यश्चिदात्मनो भेदोपि प्रतीयात इत्याशङ्क्याह नचेति । तथाचानन्दादीनां वास्तवत्वाच्चैतन्यैकरसता न भेदस्यापीत्यभानमित्यर्थः ।

(४) तस्येति । इदमात्मकतया विषयत्वमनिदमात्मकतयाऽस्मदुल्लेखश्चात्मन उपपद्यत इत्यर्थः । एतेन विषयत्वे युष्मत्प्रत्ययविषयत्वापत्तिस्ततश्चानात्मत्वमात्मन इत्याक्षेप परिहृत ।

(५) ननूपाधिपरिच्छेदमन्तरेणान्य एव परमात्मनो जीवोऽहंप्रत्ययविषयोऽस्तु, तत्राह न खल्विति ।

(६) अनेनौपाधिकविषयत्वात्पूर्वोक्तकर्मकर्तृत्वविरोधोप्यपहृतो वेदितव्यः ।

(१)स्यादेतत्। न वयमपराधीनप्रकाशतयाऽविषयत्वेनाध्यासमपाकुर्मः, किन्तु प्रत्यगात्मा न स्वतो नापि परतः प्रथत इत्यविषय इति ब्रूमः। तथा च सर्वथाऽप्रथमाने प्रत्यगात्मनि कुतोऽध्यास इत्यत आह **"अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः"** (पृ० ५० पं०१)। प्रतीच आत्मनः प्रसिद्धिः प्रथा तस्या अपरोक्षत्वात्। यद्यपि प्रत्यगात्मनि नान्या प्रथाऽस्ति, तथापि भेदोपचारः यथा पुरुषस्य चैतन्यमिति। एतदुक्तं भवति। अवश्य चिदात्माऽपरोक्षोऽभ्युपेतव्यस्तदप्रथायां सर्वस्याप्रथनेन जगदान्ध्यप्रसङ्गादित्युक्तम्। श्रुतिश्चात्र भवति 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती'ति। तदेवं परमार्थपरिहारमुक्त्वाऽभ्युपेत्यापि चिदात्मनः परोक्षतां प्रौढवादितया परिहारान्तरमाह **"न चायमस्ति नियमः पुरोवस्थित एव अपरोक्ष एव, विषये विषयान्तरमध्यसितव्यम्"**। कस्मादयं न नियम इत्यत आह **"अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति"**। हिर्यस्मादर्थे। नभो हि द्रव्यं सद् (२)रूपस्पर्शविरहान्न बाह्येन्द्रियप्रत्यक्षम्। नापि मानसं, मनसोऽसहायस्य बाह्येऽप्रवृत्तेः। तस्मादप्रत्यक्षम्। अथ च तत्र बाला अविवेकिनः परदर्शितदर्शिनः कदाचित्पार्थिवच्छायां श्यामतामारोप्य, कदाचित्तैजसं शुक्लत्वमारोप्य नीलोत्पलपलाशश्याममिति वा राजहंसमालाधवलमिति वा निर्वर्णयन्ति, तत्रापि पूर्वदृष्टस्य तैजसस्य वा तामसस्य रूपस्य परत्र नभसि स्मृतिरूपोऽवभास इति। एवं तदेव तलमध्यस्यन्ति अवाङ्मुखीभूतं महेन्द्रनीलमणिमयमकटाहकल्पमित्यर्थः। उपसंहरति **"एवम्—"** उक्तेन प्रकारेण सर्वाक्षेपपरिहारात्, **अविरुद्धः प्रत्यगात्मन्यप्यनात्मनां**—बुद्ध्यादीनाम्, **अध्यासः"**। ननु सन्ति च सहस्रमध्यासास्तत्किमर्थमयमेवाध्यास आक्षेपसमाधानाभ्यां व्युत्पादितः, नाध्यासमात्रमित्यत आह **"तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते"** (पृ० ५२ पं० १)। अविद्या हि सर्वानर्थबीजमिति श्रुतिस्मृतीतिहासपुराणादिषु प्रसिद्धम्, तदुच्छेदाय वेदान्ताः प्रवृत्ता इति वक्ष्यति। प्रत्यगात्मन्यनात्माध्यास एव सर्वानर्थहेतुर्न पुना रजतादिविभ्रमा इति स एवाविद्या, तत्स्वरूपं चाविज्ञातं न शक्यमुच्छेत्तुमिति तदेव व्युत्पाद्यं नाध्यासमात्रम्। अत्र च 'एवंलक्षणमित्ये'वंरूपतयाऽनर्थहेतुतोक्ता। यस्मात्प्रत्यगात्मन्यशनायादिरहितेऽशनायाद्युपेतान्तःकरणाद्यहितारोपेण प्रत्यगात्मानमदुःखं दुःखाकरोति,(३) तस्मादनर्थहेतुः। न चैवं पृथग्जना अपि मन्यन्तेऽध्यासं, येन न व्युत्पाद्येतेत्यत उक्तम् **पण्डिता मन्यन्ते**। नन्वियमनादिरतिनिरूढनिबिडवासनानुबद्धाऽविद्या न शक्या निरोद्धुमुपायाभावादिति यो मन्यते तं प्रति तन्निरोधोपायमाह— **"तद्विवेकेन च वस्तुस्वरूपावधारण**-निर्विचिकित्सं ज्ञानं, **विद्यामाहुः"** ( पृ० ५२-पं० २ ) पण्डिताः प्रत्यगात्मनि खल्वत्यन्तविविक्ते बुद्ध्या-

(१) एवं पूर्वपूर्वाध्यासवशादप्रकाशसमर्थनेन स्वप्रकाशे यावत्तत्त्वप्रकाशनात्कथमारोप इति पक्षं निराकृत्याऽप्रथमाने कथमारोप इति पक्षनिरासाभिप्रायक भाष्यमवतारयन्नाह स्यादेतदिति।

(२) तथाचाकाशं न बाह्येन्द्रियप्रत्यक्षविषयः द्रव्यत्वे सति रूपरहितत्वात् स्पर्शरहितत्वाद्वेति हेतुद्वयोक्तिरियम्, तत्र वायो स्पार्शनमगीकुर्वतां प्राचीननैयायिकानां मतेन द्वितीय एव हेतुर्बोध्यः।

(३) वस्तुतोऽदुःखिनमप्यात्मानं दुःखिनं करोतीत्यर्थः।

दिभ्यो बुद्ध्यादिभेदाग्रहनिमित्तो बुद्ध्याद्यात्मत्वतद्धर्माध्यासः । तत्र श्रवणमननादिभिर्यद्विवेकविज्ञानं तेन विवेकाग्रहे निवर्तितेऽध्यासापबाधात्मकं वस्तुस्वरूपावधारणं विद्या (१)चिदात्मरूप स्वरूपे व्यवतिष्ठत इत्यर्थः । स्यादेतत् । अतिनिरूढनिबिडवासनानुविद्धाऽविद्या विद्ययाऽपबाधिताऽपि स्ववासनावशात्पुनरुद्भविष्यति, प्रवर्तयिष्यति च वासनादि कार्यं स्वोचितमित्यत आह— "**तत्रैवं सति**—एवभूतवस्तुतत्त्वावधारणे सति, **यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि स न सम्बध्यते**"—ऽन्तःकरणादिदोषेणाशनायादिना चिदात्मा, चिदात्मनो गुणेन चैतन्यानन्दादिनाऽन्तःकरणादि न सम्बध्यते । एतदुक्तं भवति । तत्त्वावधारणाभ्यासस्य हि स्वभाव एव स तादृशो यदनादिमपि निरूढनिबिडवासनमपि मिथ्याप्रत्ययमपनयति । तत्त्वपक्षपातो हि स्वभावो धियाम् । यथाऽऽहुर्बाह्या अपि—(२)'निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः । न बाधो यत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपातः ॥" इति । विशेषतस्तु चिदात्मस्वभावस्य तत्त्वज्ञानस्यात्यन्तान्तरङ्गस्य कुतोऽनिर्वाच्ययाऽविद्यया बाध इति । यदुक्त 'सत्यानृते मिथुनीकृत्य विवेकाग्रहादध्यस्याहमिदं ममेदमिति लोकव्यवहार' इति, तत्र व्यपदेशलक्षणो व्यवहारः कण्ठोक्त, । इतिशब्दसूचितं लोकव्यवहारमादर्शयति—"**तमेतमविद्याख्य**"**मिति** । निगदव्याख्यातम् ॥

आक्षिपति—"**कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि**" (पृ० ५३ पं० २) तत्त्वपरिच्छेदो हि प्रमा विद्या, तत्साधनानि प्रमाणानि कथमविद्यावद्विषयाणि । नाविद्यावन्तं प्रमाणान्याश्रयन्ति, तत्कार्यस्य विद्याया अविद्याविरोधित्वादिति भावः । सन्तु वा प्रत्यक्षादीनि संवृत्यापि यथा तथा, शास्त्राणि तु पुरुषहितानुशासनपराण्यविद्याप्रतिपक्षतया नाविद्यावद्विषयाणि भवितुमर्हन्तीत्याह—"**शास्त्राणि चेति**" ॥

समाधत्ते—"**उच्यते देहेन्द्रियादिष्वहंममाभिमानहीनस्य**—(३)तादात्म्य तद्धर्माध्यासहीनस्य, **प्रमातृत्वानुपपत्तौ** सत्यां, **प्रमाणप्रवृत्त्यनुपपत्तेः**" (पृ० ५६ पं० १) । अयमर्थः । प्रमातृत्व हि प्रमां प्रति कर्तृत्व तच्च स्वातन्त्र्यं, स्वातन्त्र्यं च प्रमातुरितरकारकाप्रयोज्यस्य समस्तकारकप्रयोक्तृत्वम् । तदनेन प्रमाकरण प्रमाणं प्रयोजनीयम् । न च स्वव्यापारमन्तरेण करणं प्रयोक्तुमर्हति । न च कूटस्थनित्यश्चिदात्माऽपरिणामी स्वतो व्यापारवान् । तस्माद्व्यापारवद्बुद्ध्यादितादात्म्याध्यासाद् व्यापारवत्तया प्रमाणमधिष्ठातुमर्हतीति भवत्यविद्यावत्पुरुषविषयत्वमविद्यावत्पुरुषाश्रयत्वं प्रमाणानामिति(४) । अथ मा प्रवर्तिषत प्रमाणानि किं नश्छिन्नमित्यत आह—"**नहीन्द्रियाण्यनुपादाय प्रत्यक्षा-**

---

(१) वस्तुस्वरूप च तदवधारण चेति कर्मधारयाभिप्रायेणाभिव्यक्त स्वरूपज्ञानमाह चिदात्मरूपमिति ।

(२) भावनाबलोत्पन्नेनाऽमलाभेन सर्वविषयेण ज्ञानेन विषयीकृतस्य निरुपद्रवपरमार्थस्वभावस्य संस्कारवशादनुवर्तमानै विपर्ययै बाधो न भवति, यत परमार्थभावनोत्पन्नाया• बुद्धेर्वस्तुपक्षपातात्मक स्वभावोऽनपह्नवनीयत्वेन प्रबलोऽधिकप्रयत्नानपेक्षत्वेपीति कारिकार्थः ।

(३) तादात्म्येति । तादात्म्याध्यास —देहादिधर्मैक्याभास , एतद्व्योक्तस्याहमभिमानस्य, तद्धर्माध्यास इति च ममाभिमानस्य व्याख्यान बोध्यम् ।

(४) प्रमाणानामितीति । तथाचाध्यासं विना प्रमातृत्वमेवानुपपन्नं स्यादिति निर्व्यापारे चिदात्मनि प्रमाणप्रेरणं व्यापारः परोपाधिरध्यस्त इति प्रमाणानामविद्यावत्त्वेर्यत्वमिति भावः ।

न्द्रियव्यवहारः संभवति"। व्यवह्रियतेऽनेनेति व्यवहारः फल, प्रत्यक्षादीनां प्रमाणानां फलमित्यर्थः। इन्द्रियाणीति इन्द्रियलिङ्गादीनिति द्रष्टव्यम्, दण्डिनो गच्छन्तीति(१)वत्। एव हि प्रत्यक्षादीत्युपपद्यते। (२)व्यवहारक्रियया च व्यवहार्याक्षेपात्समानकर्तृकता। (३)अनुपादाय यो व्यवहार इति योजना। किमिति पुनः प्रमातोपादत्ते प्रमाणानि, अथ स्वयमेव कस्मान्न प्रवर्तते इत्यत आह-"न चाधिष्ठानमन्तरेणेन्द्रियाणां व्यापारः-प्रमाणाना व्यापारः, संभवति"। न जातु करणान्यनधिष्ठितानि कर्त्रा स्वकार्ये व्याप्रियन्ते। मा भूत्कुविन्दरहितेभ्यो वेमादिभ्यः पटोत्पत्तिरिति। अथ देह एवाधिष्ठाता कस्मान्न भवति, कृतमत्रात्माध्यासेनेत्यत आह—"(४)न चानध्यस्तात्मभावेन देहेन कश्चिद्व्याप्रियते"। सुषुप्तेऽपि व्यापारप्रसङ्गादिति भाव.। स्यादेतत। यथाऽनध्यस्तात्मभावं वेमादिकं कुविन्दो व्यापारयन् पटस्य कर्तैवमनध्यस्तात्मभावं देहेन्द्रियादि व्यापारयन् भविष्यति तदाभिज्ञः प्रमातेत्यत आह-"न चैतस्मिन् सर्वस्मिन्-इतरेतराध्यासे इतरेतरधर्माध्यासे चासति, आत्मनोऽसङ्गस्य सर्वथा सर्वदा सर्वधर्मधर्मिवियुक्तस्य प्रमातृत्वमुपपद्यते। ( पृ० ५७ प० १ ) व्यापारवन्तो हि कुविन्दादयो वेमादीनधिष्ठाय व्यापारयन्ति, अनध्यस्तात्मभावस्य तु देहादिष्वात्मनो न व्यापारयोगोऽसङ्गत्वादित्यर्थः। अतश्चाध्यासाश्रयाणि प्रमाणानीत्याह-'न च प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति" (५)प्रमायां खलु फले स्वतन्त्रः प्रमाता भवति। अन्तःकरणपरिणामभेदश्च प्रमेयप्रवणः कर्तृस्थश्चित्स्वभावः प्रमा। कथं च जडस्यान्तःकरणस्य परिणामश्चिद्रूपो भवेत्, यदि चिदात्मा तत्र नाध्यस्येत। कथं चैष चिदात्मकर्तृको भवेत्, यद्यन्तःकरणं व्यापारवच्चिदात्मनि नाध्यस्येत्। तस्मादितरेतराध्यासाच्चिदात्मकर्तृस्थं प्रमाफलं सिध्यति। तत्सिद्धौ च प्रमातृत्वं, (६)तामेव च प्रमामुररीकृत्य प्रमाणस्य प्रवृत्तिः। प्रमातृत्वेन च प्रमोपलक्ष्येत। प्रमायाः फलस्याभावे प्रमाण न प्रवर्तेत। तथा च प्रमाणमप्रमाण स्यादित्यर्थः। उपसंहरति "तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि"। स्यादेतत्। भवतु पृथग्जनानामेवम्, आगमोपपत्तिप्रतिपन्नप्रत्यगात्मतत्त्वानां व्युत्पन्नानामपि पुंसां प्रमाणप्रमेयव्यवहारा दृश्यन्त इति कथमविद्यावद्विषयाण्येव प्रमाणानीत्यत आह-"पश्वादिभि-

---

(१) यथात्र दण्डिशब्दो दण्डवदण्डिसमूहपरस्तथेन्द्रियशब्दो इन्द्रियानिन्द्रियप्रमाणपर इत्यर्थ।

(२) व्यवहार इति क्रियामात्रोपादानात्समानकर्तृकक्रियापेक्ष क्त्वाप्रत्यय' कथमित्याशङ्का परिहर्तु कर्तुराक्षेपमाह व्यवहारक्रिययेति।

(३) अनुपादायेति। नैवमत्र सबन्धोऽनुपादाय न सम्भवतीति किन्तु अनुपादाय यो व्यवहारः स न सम्भवतीति।

(४) 'किमिति पुनरिति' ग्रन्थेन सांख्यस्वभाववादिनोराक्षेप प्रदर्श्य तस्य 'नचे'त्यादिभाष्येण समाधानं कृत्वाऽथेत्यादिनोक्तस्य लौकायतिकस्य समाधानायाह नचेति।

(५) ननु प्रमातृत्व विना प्रमाणप्रवृत्तेरसम्भवेपि प्रमाणानामध्यासाश्रितत्व कथमिति चेन्न। चिदचिद्रूपसम्वलितप्रमाया आश्रयः प्रमातापि तत्स्वभाव एव स्यात, चिदचित्सम्वलनञ्चाध्यासमन्तरेण न सम्भवतीति प्रमाणानामध्यासाश्रयत्वमिदमेवाह प्रमायामित्यादिना।

(६) तामेव चेति। अनेन 'तत्त्वपरिच्छेदो ही'त्यादिग्रन्थस्य 'परिहार','तत्सिद्धौ' चेत्यनेन च 'अविद्यावन्तमि'त्यादिग्रन्थस्य परिहारः प्रदर्शित।

**श्चाविशेषादि**"ति ( पृ० ५८ पं० १ )। विदन्तु नामागमोपपत्तिभ्यां "देहेन्द्रियादिभ्यो भिन्नं प्रत्यगात्मानं, प्रमाणप्रमेयव्यवहारे तु प्रमाणभृन्मात्रधर्मान्नातिवर्तन्ते । यादृशो हि पशुशकुन्तादीनामविप्रतिपन्नमुग्धभावानां व्यवहारस्तादृशो व्युत्पन्नानामपि पुंसां दृश्यते । तेन तत्सामान्यात्तेषामपि व्यवहारसमयेऽविद्यावत्त्व(१)मनुमेयम् । चशब्दः समुच्चये । उक्तशङ्कानिवर्तनसहितपूर्वोक्तोपपत्तिरविद्यावत्पुरुषविषयत्वं प्रमाणानां साधयतीत्यर्थः । एतदेव(२) विभजते "**तथा हि पश्वादय**" इति । अत्र च "**शब्दादिभिः श्रोत्रादीनां संबन्धे सती**"ति प्रत्यक्षं प्रमाणं दर्शितम् । "**शब्दादिविज्ञान**" इति तत्फलमुक्तम् । "**प्रतिकूल**" इति चानुमानफलम् । तथाहि शब्दादिस्वरूपमुपलभ्य तज्जातीयस्य प्रतिकूलतामनुस्मृत्य तज्जातीयतयोपलभ्यमानस्य प्रतिकूलतामनुमिमीत(३) इति । उदाहरति— "**यथा दण्डेति**" । शेषमतिरोहितार्थम् । स्यादेतत् । भवन्तु प्रत्यक्षादीन्यविद्यावद्विषयाणि, शास्त्रं तु 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यादि न देहात्माध्यासेन प्रवर्तितुमर्हति । अत्र खल्वामुष्मिकफलोपभोगयोग्योऽधिकारी प्रतीयते । तथा च पारमर्षं सूत्रम्–'(४)शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्तस्मात्स्वयं प्रयोगे स्यादि'ति (अ० ३ पा० ७ सू० १८) । न च देहादि भस्मीभूतं पारलौकिकाय फलाय कल्पत इति देहाद्यतिरिक्तं कंचिदधिकारिणमाक्षिपति शास्त्रं, तदवगमश्च विद्येति कथमविद्यावद्विषयं शास्त्रमित्याशङ्क्याह—"**शास्त्रीये त्वि**"ति ( पृ० ६०-पं०११)। तुशब्दः प्रत्यक्षादिव्यवहाराद्भिनत्ति शास्त्रीयम् । अधिकारशास्त्रं हि स्वर्गकामस्य पुंसः परलोकसम्बन्धं विना न निर्वहतीति तावन्मात्रमाक्षिपेत्, न त्वस्यासंसारित्वमपि तस्याधिकारेऽनुपयोगात् । प्रत्युतौपनिषदस्य पुरुषस्याकर्तुरभोक्तुराधिकारविरोधात् । (५)प्रयोक्ता हि कर्मणः कर्मजनितफलभोगभागी कर्मण्यधिकारी स्वामी भवति । तत्र कथमकर्ता प्रयोक्ता, कथं वाऽभोक्ता कर्मजनितफलभागभोगी । तस्मादनाद्यविद्यालब्धकर्तृत्वभोक्तृत्वब्राह्मणत्वाद्यभिमानिनं नरमधिकृत्य विधिनिषेधशास्त्रं प्रवर्तते । एवं वेदान्ता अप्यविद्यावत्पुरुषविषया एव । नहि प्रमात्रादिविभागादृते तदर्थाधिगमः । ते त्वविद्यावन्तमनुशासन्तो निर्मृष्टनिखिलाविद्यमनुशिष्टं स्वरूपे व्यवस्थापयन्तीत्येतावानेषां विशेषः । तस्मादविद्यावत्पुरुषविषयाण्येव शास्त्राणीति सिद्धम् ।

स्यादेतत् । यद्यपि विरोधानुपयोगाभ्यामौपनिषदः पुरुषोऽधिकारे नापेक्ष्यते, तथाप्युपनि-

---

( १ ) अत्रायं प्रयोग —विवेकिनोऽप्यध्यासवन्तः व्यवहारवत्त्वात् पश्वादिवदिति ।

( २ ) एतदेवेति । पश्वादिभिश्चाविशेषादिति वाक्यं विवृणोतीत्यर्थः ।

( ३ ) अयं शब्दो मदिष्टसाधनमिष्टसाधनजातीयत्वात् , अयं चानिष्टसाधनं तत एवेति दार्ष्टान्ते, अयं दण्डो मदिष्टसाधनं दण्डत्वात् अनुभूतदण्डवत् , इदं तृणं मदनिष्टसाधनं अनुभूततृणजातीयत्वात् अनुभूततृणवदिति च दृष्टान्तेऽनुमानाकारो बोध्य ।

( ४ ) यस्मात्तल्लक्षणत्वाच्छब्दप्रमाणत्वाच्छास्त्रगम्यं फलं प्रयोक्तरि कर्तरि प्रतीयते तस्मात् साङ्गप्रधानकर्मणोऽनुष्ठाने यजमानः स्वयं प्रयोक्ता स्यादिति सूत्रार्थः ।

( ५ ) प्रयोक्ता हीति । विशेषणत्रयेण भाष्योक्तानामशनायाद्यतीतादिपदसूचितानामकर्तृत्वाभोक्तृत्वानधिकारित्वानां वैपरीत्यं सूचितम् ।

षष्ठ्योऽवगम्यमान. शक्तोत्यधिकार(१) निरोद्धुम् । तथा च परस्परापहतार्थत्वेन कृत्स्न एव वेदः प्रामाण्यमपजह्यादित्यत आह **"प्राक् च तथाभूतात्मेति" (पृ० ६१ पं० २)।** सत्यमौपनिषदपुरुषाधिगमोऽधिकारविरोधी, तस्मात्तु पुरस्तात् कर्मविषयः स्वोचित व्यवहारं निर्वर्तयन्तो नानुपजातेन ब्रह्मज्ञानेन शक्या निरोद्धुम् । न च (२)परस्परापहतिः, विद्याविद्यावत्पुरुषभेदेन व्यवस्थोपपत्ते. । यथा 'न हिंस्यात् सर्वा भूतानी'ति साध्याशनिषेधेऽपि 'श्येनेनाभिचरन् यजेते'ति शास्त्रं प्रवर्तमानं न हिंस्यादित्यनेन न विरुध्यते, तत् कस्य हेतोः ? पुरुषभेदादिति । अवजितक्रोधारातय. पुरुषा निषेधेऽधिक्रियन्ते, क्रोधारातिवशीकृतास्तु श्येनादिशास्त्र इति । अविद्यावत्पुरुषविषयत्वं नातिवर्तत इति यदुक्तं तदेव स्फोरयति **"तथाही"ति** । (३)वर्णाध्यासः राजा राजसूयेन यजेतेत्यादिः । आश्रमाध्यासः गृहस्थः सदृशीं भार्यां विन्देदित्यादि । वयोध्यासः कृष्णकेशोऽग्नीनादधीतेत्यादिः । अवस्थाध्यासः अप्रतिसमाधेयव्याधीनां जलादिप्रवेशेन प्राणत्याग इति । आदिग्रहण (४)महापातकोपपातकसङ्करीकरणापात्रीकरणमलिनीकरणाद्यध्यासोपसंग्रहार्थम् । तदेवमात्मानात्मनोः परस्पराध्यासमाक्षेपसमाधानाभ्यामुपपाद्य प्रमाणप्रमेयव्यवहारप्रवर्तनेन च दृढीकृत्य तस्यानर्थहेतुतामुदाहरणप्रपञ्चेन प्रतिपादयितुं तत्स्वरूपमुक्तं स्मारयति **"अध्यासो नामातस्मिंस्तद्बुद्धिरित्यवोचाम" पृ० ६२ पं० १ )** । 'स्मृतिरूप. परत्र पूर्वदृष्टावभास' इत्यस्य संक्षेपाभिधानमेतत् । (५)तत्राहमिति धर्मितादात्म्याध्यासमात्रं ममेत्यनुत्पादितधर्माध्यासं नानर्थहेतुरिति धर्माध्यासमेव ममकार साक्षादशेषानर्थसंसारकारणमुदाहरणप्रपञ्चेनाह **"तद्यथा पुत्रभार्यादिष्वि"ति।** (६)देहतादात्म्यमात्मन्यध्यस्य देहधर्मं पुत्रकलत्रादिस्वाम्यं च कृशत्वादिवदारोप्याहा**हमेव विकलः सकल** इति । स्वस्य खलु साकल्येन स्वाम्यसाकल्यात् स्वामीश्वर. सकलः सम्पूर्णो भवति । तथा स्वस्य वैकल्येन स्वाम्यवैकल्यात् स्वामीश्वरः विकलोऽसम्पूर्णो भवति । बाह्यधर्मा ये वैकल्यादयः स्वाम्यप्रणालिकया संचारिताः शरीरे तानात्मन्यध्यस्यतीत्यर्थ. । यदा च परोपाध्यपेक्षे देहधर्मे स्वाम्ये इय गतिस्तदा कैव कथाऽनौपाधिकेषु देहधर्मेषु कृशत्वादिष्वित्याशयवानाह **"तथा देहधर्मानि"ति** । देहादेरप्यन्तरङ्गाणामिन्द्रियाणामभ्यस्तात्मभावाना धर्मान्मूकत्वादींस्ततोऽप्यन्तरङ्गस्यान्तःकरणस्याध्यस्तात्मभावस्य धर्मान् कामसङ्कल्पादीन् आत्मन्यध्यस्यतीति योजना । तदनेन प्रपञ्चेन धर्मा·

---

( १ ) अधिकारमिति । कर्मणीति शेष ।

( २ ) नन्वग्रे ब्रह्मज्ञानेन कर्मविधीना यदि बाधस्तदापि तेषामप्रामाण्य दुष्परिहरमेवेत्याशङ्कायामाह नच परस्परेति ।

( ३ ) वर्णेति । तथाच 'राजा यजेत' इत्याद्यागम राजादिपदैरधिकारिणं वर्णाद्यभिमानिनमनुवदन्नध्यासं गमयतीति भाव ।

( ४ ) महापातकेति । ब्रह्महत्यादि महापातक, गोवधाद्युपपातक, खराश्वादिवधो सङ्करीकरणम् , निन्दितधनादानवाणिज्यशूद्रसेवाऽसत्यभाषणान्यपात्रीकरण, कृम्यादिहत्या–मद्यपान–फलैध पुष्पादिस्तेयाधैर्याणि मलिनीकरण, विज्ञेयम् । अत्रादिपदेन जातिभ्रंशकरादिक ग्राह्यम् ।

( ५ ) धर्म्यध्यासस्याभ्यर्हितत्वात्प्रथम वक्तव्यत्वेपि धर्माध्यासस्य पूर्वमभिधाने हेतुमाह तत्राहमित्यादिना ।

( ६ ) गृहीतविवेकत्वात्पुत्रादीनामात्मनि तद्धर्माध्यास कथमित्याशङ्क्याह देहतादात्म्यमिति ।

ध्यासमुक्त्वा तस्य मूलं धर्म्यध्यासमाह **"एवमहम्प्रत्ययिनम्**-अहंप्रत्ययो वृत्तिर्यस्मिन्नन्तःकरणादौ सोऽयमहंप्रत्ययी तं, **स्वप्रचारसाक्षिणि**-अन्तःकरणप्रचारसाक्षिणि (१)चैतन्योदासीनताभ्यां, **प्रत्यगात्मन्यध्यस्य**, तदनेन कर्तृत्वभोक्तृत्वे (२)उपपादिते । चैतन्यमुपपादयति **तं च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेण**-अन्तःकरणादिविपर्ययेण, अन्तःकरणाद्यचेतनं तस्य विपर्ययः चैतन्यं तेन, इत्थंभूतलक्षणे तृतीया । **अन्तःकरणादिष्वध्यस्यति"**(पृ० ६३ पं० ३) । (३)तदनेनान्तःकरणाद्यवच्छिन्नः प्रत्यगात्मा इदमनिदंरूपश्चेतनः कर्ता भोक्ता कार्यकारणाविद्याद्वयाधारोऽहंकारास्पदं संसारी सर्वानर्थसम्भारभाजनं जीवात्मा इतरेतराध्यासोपादानस्तदुपादानश्चाध्यास इत्यनादित्वाद्बीजाङ्कुरवन्नेतरेतराश्रयत्वमित्युक्तं भवति । प्रमाणप्रमेयव्यवहारदृढीकृतमपि शिष्यहिताय स्वरूपाभिधानपूर्वकं सर्वलोकप्रत्यक्षतयाऽध्यासं सुदृढीकरोति-**"एवमयमनादिरनन्तः**-तत्त्वज्ञानमन्तरेणाशक्यसमुच्छेदः । अनाद्यनन्तत्वे हेतुरुक्तो **नैसर्गिक**-इति । **मिथ्याप्रत्ययरूपो"** मिथ्याप्रत्ययानां रूपमनिर्वचनीयत्वं तद्यस्य स तथोक्तः, अनिर्वचनीय इत्यर्थः । (४)प्रकृतमुपसहरति-**"अस्यानर्थहेतोः प्रहाणाय** (पृ० ६४ पं० १) विरोधिप्रत्ययं विना कुतोऽस्य प्रहाणमित्यत उक्तम्—**आत्मैकत्वविद्याप्रतिपत्तये"** । प्रतिपत्तिः प्राप्तिः तस्यै, न तु जपमात्राय, नापि कर्मसु प्रवृत्तये, आत्मैकत्वं विगलितनिखिलप्रपञ्चत्वमानन्दरूपस्य सतस्तत्प्रतिपत्तिं निर्विचिकित्सां भावयन्तो वेदान्ताः समूलघातमध्यासमुपघ्नन्ति । (५)एतदुक्तं भवति । अस्मत्प्रत्ययस्यात्मविषयस्य समीचीनत्वे सति ब्रह्मणो ज्ञातत्वान्निष्प्रयोजनत्वाच्च न जिज्ञासा स्यात् । तदभावे च न ब्रह्मज्ञानाय वेदान्ताः पठ्येरन् । अपि त्वविवक्षितार्था जपमात्रे उपयुज्येरन् । नहि तदौपनिषदात्मप्रत्ययः प्रमाणतामश्नुते । न चासावप्रमाणमभ्यस्तोऽपि वास्तवं कर्तृत्वभोक्तृत्वाद्यात्मनोऽपनेतुमर्हति । आरोपितं हि रूपं तत्त्वज्ञानेनापोद्यते, न तु वास्तवमतत्त्वज्ञानेन । नहि रज्जवा रज्जुत्वं सहस्रमपि सर्पधाराप्रत्यया अपवदितुं समुत्सहन्ते । मिथ्याज्ञानप्रसञ्जितं च स्वरूपं शक्यं तत्त्वज्ञानेनापवदितुम् । मिथ्याज्ञानसंस्कारश्च सुदृढोऽपि तत्त्वज्ञानसंस्कारेणादरनैरन्तर्यदीर्घकालतत्त्वज्ञानाभ्यासजन्मनेति । स्यादेतत् । प्राणाद्युपासना अपि वेदान्तेषु बहुलमुपलभ्यन्ते तत्कथं सर्वेषां वेदान्तानामात्मैकत्वप्रतिपादनमर्थ इत्यत आह—**"यथा चायमर्थः सर्वेषां वेदान्तानां तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः"** (पृ० ६४ पं० २)। शरीरमेव शरीरकं तत्र निवासी शारीरको जीवात्मा, तस्य त्वंपदाभिधेयस्य तत्पदाभिधेयप-

---

(१) चैतन्योदासीनताभ्यामिति साक्षित्वे हेतूक्तिः ।

(२) उपपादिते इति । सक्रियोपाधेरात्मन्यारोपादात्मनि कर्तृत्वभोक्तृत्वे उपपादिते इत्यर्थः ।

(३) साक्षिणीति निर्देशात् शुद्धेऽध्यास इति भ्रमं निरस्यति तदनेनेति ।

(४) अध्यासं वर्णयतो भाष्यकारस्य बुद्धिस्थतया प्रकृतं विषयप्रयोजनमित्यर्थः ।

(५) एवमध्याससाधनात् आक्षेपावसरोक्तस्य ब्रह्मणः प्रसिद्धत्वादाजिज्ञास्यत्वस्य निरासो जात इत्याह एतदुक्तं भवतीत्यादिना ।

रमात्मरूपतामीमांसा या सा तथोक्ता । (१)एतावानत्रार्थसंक्षेपः । (२)यद्यपि च स्वाध्यायाध्ययनविधिना स्वाध्यायपदवाच्यस्य वेदराशेः फलवदर्थावबोधपरतामापादयता कर्मविधिनिषेधानामिव वेदान्तानामपि स्वाध्यायशब्दवाच्यानां फलवदर्थावबोधपरत्वमापादितं, यद्यपि च 'अविशिष्टस्तु वाक्यार्थः' इतिन्यायान्मन्त्राणामिव वेदान्तानामर्थपरत्वमौत्सर्गिकं, यद्यपि च वेदान्तेभ्यश्चैतन्यानन्दघनः कर्तृत्वभोक्तृत्वरहितो निष्प्रपञ्च एकः प्रत्यगात्माऽवगम्यते, (३)तथापि कर्तृत्वभोक्तृत्वदुःखशोकमोहमयमात्मानमवगाहमानेनाहंप्रत्ययेन सन्देहबाधविरहिणा विरुध्यमाना वेदान्ताः स्वार्थात्प्रच्युता उपचरितार्था वा जपमात्रोपयोगिनो वेत्यविवक्षितस्वार्थाः । तथा च तदर्थविचारात्मिका चतुर्लक्षणी शारीरकमीमांसा नारब्धव्या । न च सर्वजनीनाहमनुभवसिद्ध आत्मा सन्दिग्धो वा सप्रयोजनो वा, येन जिज्ञास्यः सन् विचारं प्रयुञ्जीतेति पूर्वः पक्षः ॥

(४)सिद्धान्तस्तु भवेदेतदेवं यद्यहंप्रत्ययः प्रमाणं, तस्य तूक्तेन क्रमेण श्रुत्यादिबाधकत्वानुपपत्तेः । श्रुत्यादिभिश्च समस्ततीर्थकरैश्च प्रामाण्यानभ्युपगमादध्यासत्वम् । एवं वेदान्ता नाविवक्षितार्था, नाप्युपचरितार्था , किन्तूक्तलक्षणाः । प्रत्यगात्मैव तेषा मुख्योऽर्थः । तस्य च वक्ष्यमाणेन क्रमेण संदिग्धत्वात्प्रयोजनवत्त्वाच्च युक्ता जिज्ञासा, इत्याशयवान्सूत्रकारः तज्जिज्ञासासूत्रमसूत्रयत्—

## (सू०) अथातो ब्रह्मजिज्ञासा ॥ १ ॥

इति । जिज्ञासया संदेहप्रयोजने सूचयति । तत्र साक्षादिच्छाव्याप्यत्वाद्ब्रह्मज्ञानं कण्ठोक्तं प्रयोजनम् । न च कर्मज्ञानात्पराचीनमनुष्ठानमिव ब्रह्मज्ञानात्पराचीनं किञ्चिदस्ति, येनैतदवान्तरप्रयोजनं भवेत् । [किंतु ब्रह्ममीमांसाख्यतर्केतिकर्तव्यतानुज्ञातविषयैर्वेदान्तैराहितं निर्विचिकित्सं(५) ब्रह्मज्ञानमेव समस्तदुःखोपशमरूपमानन्दैकरसं परमं प्रयोजनम् ] तमर्थमधिकृत्य हि प्रेक्षावन्तः प्रवर्तन्तेतराम् । तच्च प्राप्तमप्यनाद्यविद्यावशादप्राप्तमिवेति प्रेप्सितं भवति । यथा स्वग्रीवागतमपि(६) ग्रैवेयकं कुतश्चिद्भ्रमान्नास्तीति मन्यमानः परेण प्रतिपादितमप्राप्तमिव प्राप्नोति । (७)जिज्ञासा तु संशयस्य कार्यमिति स्वकारणं संशयं सूचयति ।

---

(१) ब्रह्मजिज्ञासाख्यप्रथमाधिकरणस्य स्वरूपं प्रदर्शयन्नाह एतावानिति । अत्र च वेदान्तशास्त्रमनारभ्यमारभ्यं वेति विषयप्रयोजनासम्भवसम्भवाभ्यां संशयः । अध्ययनविधिना सामान्यतः प्रयोजनवदर्थबोधपरत्वं नीतैः विशेषतश्च संदिह्यमानार्थतया विचाराकाङ्क्षैर्वेदान्तैराक्षेपादस्याधिकरणस्य श्रुतिसङ्गतिः । समन्वयादिविचारहेतुत्वाच्छास्त्रप्रथमाध्यायप्रथमपादसङ्गतयः ।

(२) पूर्वपक्षे सिद्धान्त्याशङ्कात्रयमाह यद्यपीति । अध्ययनविधेर्दृष्टार्थत्वस्य तुल्यत्वात् [१]लोकवेदयोर्वाक्यार्थस्याविशेषात् सिद्धरूपे ब्रह्मण्यपि देवतादौ मन्त्राणामिव प्रामाण्यसम्भवात् [२] ब्रह्मात्मैक्यबोधकत्वादनुत्पत्तिलक्षणाप्रामाण्यस्यासम्भवाच्च[३] आरभ्यमेव वेदान्तशास्त्रमित्याशङ्कार्थः ।

(३) शङ्का निराकृत्यानारभ्यत्वपूर्वपक्षं स्थापयति तथापीति । प्रमाणप्रमेयस्वरूपपर्यालोचनया मीमांसाऽनारभ्येति पूर्वपक्षतात्पर्यम् ।

(४) सिद्धान्तमाह सिद्धान्तस्त्विति । वक्ष्यमाणेन—तत्पुनर्ब्रह्मेत्यत्र ग्रन्थे इत्यर्थः ।

(५) निर्विचिकित्सं—सन्देहरहितम् ।

(६) ग्रैवेयकं कण्ठभूषणम् , प्रतिपादितं बोधितम् ।

(७) इष्यमाणत्वेन ज्ञानस्य प्रयोजनसूचनमुपपाद्य संशयसूचनमुपपादयति जिज्ञासा त्विति ।

संशयश्च मीमांसारम्भं प्रयोजयति । तथा च शास्त्रे प्रेक्षावत्प्रवृत्तिहेतुसंशयप्रयोजनसूचनाद् युक्तमस्य सूत्रस्य शास्त्रादित्वमित्याह भगवान् भाष्यकारः—**"वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्य"** अस्माभिः **"इदमादिमं सूत्रम्"** (पृ०६५पं३) पूजितविचारवचनो मीमांसाशब्दः । परमपुरुषार्थहेतुभूतसूक्ष्मतमार्थनिर्णयफलता विचारस्य पूजितता । तस्या मीमांसायाः शास्त्रम्, सा ह्यनेन शिष्यते शिष्येभ्यो यथावत्प्रतिपाद्यत इति । सूत्रं च (१)बह्वर्थसूचनाद्भवति । यथाहुः—

> (२)लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च ।
> सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः ॥ इति ।

तदेवं सूत्रतात्पर्यं व्याख्याय तस्य प्रथमपदमथेति व्याचष्टे **"तत्राथशब्द आनन्तर्यार्थः परिगृह्यते"** ( पृ० ६६ प० १ )। तेषु सूत्रपदेषु मध्ये योऽयमथशब्दः स आनन्तर्यार्थ इति योजना । नन्वधिकारार्थोऽप्यथशब्दो दृश्यते, यथा 'अथैष ज्योति'-रिति वेदे, यथा वा लोके 'अथ शब्दानुशासनम्' 'अथ योगानुशासनम्' इति । तत्किमत्राधिकारार्थो न गृह्यत इत्यत आह **"नाधिकारार्थः"** । कुतः ? **"ब्रह्मजिज्ञासाया अनधिकार्यत्वात्"** । जिज्ञासा तावदिह सूत्रे ब्रह्मणश्च तत्प्रज्ञानाच्च शब्दतः प्रधान(३) प्रतीयते । (४)न च यथा 'दण्डी प्रैषानन्वाहे'त्यत्राप्रधानमपि दण्डशब्दार्थो विवक्ष्यते, एवमिहापि ब्रह्मतज्ज्ञाने इति युक्तम्, ब्रह्ममीमांसाशास्त्रप्रवृत्त्यङ्गसंशयप्रयोजनसूचनार्थत्वेन जिज्ञासाया एव विवक्षितत्वात् । तदविवक्षायां तदसूचनेन काकदन्तपरीक्षायामिव ब्रह्ममीमांसायां न प्रेक्षावन्तः प्रवर्तेरन् । नहि तदानीं ब्रह्म वा तज्ज्ञानं वाऽभिधेयप्रयोजने भवितुमर्हतः, अनध्यस्ताहंप्रत्ययविरोधेन वेदान्तानामेवविधेऽर्थे प्रामाण्यानुपपत्तेः । कर्मप्रवृत्त्युपयोगितयोपचरितार्थानां वा जपोपयोगिनां वा 'हुमि'त्येवमादीनामविवक्षितार्थानामपि स्वाध्यायाध्ययनविध्यधीनग्रहणत्वस्य संभवात् । तस्मात्सन्देहप्रयोजनसूचनी जिज्ञासा इह पदतो वाक्यतश्च प्रधानं विवक्षितव्या । न च तस्या अधिकार्यत्वम्, अप्रस्तूयमानत्वात्(५), येन तत्समभिव्याहृतोऽथशब्दोऽधिकारार्थः स्यात् । जिज्ञासाविशेषणं तु ब्रह्म तज्ज्ञानमधिकार्यं भवेत् । न च तदप्यथशब्देन सबध्यते, प्राधान्याभावात् । न च जिज्ञासा मीमांसा, येन योगानुशासनवदधिक्रियेत । ज्ञान्ततं निपात्यं 'माङ् मान' इत्यस्माद्वा 'मान पूजायामि'त्यस्माद्वा धातो'र्मान्बधे'त्या-

---

(१) विषयप्रयोजनब्रह्मस्वरूपप्रमाणयुक्तिसाधनफलविचाराणां प्रतिज्ञानाद्बह्वर्थसूचनता सूत्राणां बोध्या ।

(२) असंदिग्धार्थत्वं लघुत्वम्, सांशयिकस्य नानार्थस्फोरकत्वेन गुरुत्वात् ।

(३) प्रधानमिति । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधजनकत्वनियमात् ब्रह्मज्ञानविषयिण्याश्चैव प्रधानमित्यर्थः ।

(४) ननु जिज्ञासाया शास्त्रेणाप्रतिपाद्यमानत्वात्तत्प्रतिपादनमारम्भार्थो माभूत् ब्रह्मतज्ज्ञानप्रारम्भार्थस्तु स्यादित्याशङ्क्याह नचेति । 'दण्डी प्रैषानन्वाह' इत्यत्र 'मैत्रावरुण प्रैष्यति चान्वाह' इति मन्त्रेण प्रैषानुवचने मैत्रावरुणस्य प्राप्तत्वेन दण्डस्याप्रधानस्यापि विवक्षा युक्ता, अत्र तु जिज्ञासाया अविवक्षाया विषयप्रयोजनसूचन न स्यादित्यविवक्षाकारणाभावात्तदर्थ एवारम्भो युक्त इति परिहारार्थः ।

(५) प्रत्याधिकरणमप्रतिपाद्यमानत्वात् ।

दिनाऽनिच्छार्थे सनि व्युत्पादितस्य मीमांसाशब्दस्य पूजितविचारवचनत्वात्(१)। ज्ञानेच्छावाचकत्वाज्जिज्ञासापदस्य प्रवर्तिका हि मीमांसायां जिज्ञासा स्यात्। न च प्रवर्त्यप्रवर्त्तकयोरैक्यम्, एकत्वे तद्भावानुपपत्तेः। (२)न च स्वार्थपरत्वस्योपपत्तौ सत्यामन्यार्थपरत्वकल्पना युक्ता, अतिप्रसङ्गात्। तस्मात्सुष्ठूक्तं जिज्ञासाया अनधिकार्यत्वादिति ॥ अथ मङ्गलार्थोऽथशब्दः कस्मान्न भवति? तथा च मङ्गलहेतुत्वात्प्रत्यहं ब्रह्मजिज्ञासा कर्तव्येति सूत्रार्थः संपद्यत इत्यत आह "**मङ्गलस्य च वाक्यार्थे समन्वयाभावात्**"। पदार्थ एव हि वाक्यार्थे समन्वीयते, स च वाच्यो वा लक्ष्यो वा। न चेह मङ्गलमथशब्दस्य वाच्यं वा लक्ष्यं वा, किन्तु मृदङ्गशङ्खध्वनिवदथशब्दश्रवणमात्रकार्यम्। न च कार्यज्ञाप्ययोर्वाक्यार्थे समन्वयः शब्दव्यवहारे दृष्ट इत्यर्थः ॥ तत्किमिदानीं मङ्गलार्थोऽथशब्दस्तेषु तेषु न प्रयोक्तव्यः।तथा च

ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥

इति स्मृतिव्याकोप इत्यत आह "**अर्थान्तरप्रयुक्त एव ह्यथशब्दः श्रुत्या मङ्गलप्रयोजनो भवति**"। अर्थान्तरेषु आनन्तर्यादिषु प्रयुक्तोऽथशब्दः श्रुत्या श्रवणमात्रेण वेणुवीणाध्वनिवद् मङ्गलं कुर्वन्मङ्गलप्रयोजनो भवति, अन्यार्थमानीयमानोदकुम्भदर्शनवत्। तेन न स्मृतिव्याकोपः।न चेहानन्तर्यार्थस्य सतो न श्रवणमात्रेण मङ्गलार्थतेत्यर्थः। स्यादेतत् पूर्वप्रकृतापेक्षोऽथशब्दो भविष्यति विनैवानन्तर्यार्थत्वम्, तद्यथेममेवाथशब्द प्रकृत्य विमृश्यते–किमयमथशब्द आनन्तर्येऽधिकारे–इति, अत्र विमर्शवाक्येऽथशब्द पूर्वं प्रकृतमथशब्दमपेक्ष्य प्रथमपक्षोपन्यासपूर्वक पक्षान्तरोपन्यासे, न चास्यानन्तर्यमर्थः, पूर्वप्रकृतस्य प्रथमपक्षोपन्यासेन व्यवायात्, न च प्रकृतानपेक्षा, तदनपेक्षस्य तद्विषयत्वाभावेनासमानविषयतया विकल्पानुपपत्तेः, नहि जातु भवति किं नित्य आत्मा, अथानित्या बुद्धिरिति, तस्मादानन्तर्यं विना पूर्वप्रकृतापेक्ष इहाथशब्दः कस्मान्न भवतीत्यत आह–"**पूर्वप्रकृतापेक्षायाश्च फलत आनन्तर्याव्यतिरेकात्**" (पृ०६८पं०१)। (३)अस्यार्थः न वयमानन्तर्यार्थतां व्यसनितया रोचयामहे, किन्तु ब्रह्मजिज्ञासाहेतुभूतपूर्वप्रकृतसिद्धये। सा च पूर्वप्रकृतार्थापेक्षत्वेऽप्यथशब्दस्य सिध्यतीति व्यर्थ आनन्तर्यार्थत्वावधारणाग्रहोऽस्माकमिति। तदिदमुक्तं "फलत" इति। (४)परमार्थतस्तु कल्पान्तरोपन्यासे पूर्वप्रकृतापेक्षा, न चेह कल्पान्तरोपन्यास इति पारिशेष्यादानन्तर्यार्थ एवेति युक्तम्। भवत्वानन्तर्यार्थः किमेव सतीत्यत आह–"**सति चानन्तर्यार्थत्व**" इति (पृ० ७० पं०१) न तावद्यस्य कस्यचिदत्रानन्तर्यमिति वक्तव्यं, तस्याभिधानमन्तरेणापि प्राप्तत्वात्। अवश्यं

(१) 'मानवधदानशानभ्यो दीर्घश्चाभ्यासस्य' (पा० ३।१।६) सूत्रेणाडानुबन्धस्य माङ्धातोर्नान्तत्व निपातितम्, तस्य च पूजितविचारार्थकत्व प्रतिद्धिवलादास्थेयम् इति भाव।

(२) लक्षितविचारप्रारम्भार्थोऽथशब्दो भवत्वित्याशङ्कायामाह—न च स्वार्थेति।

(३) अनेन भाष्येण पूर्वप्रकृतापेक्षाया आनन्तर्यरूपत्वं नोच्यते, आनन्तर्यरूपत्वपक्षे विकल्पाप्रतिभानात्, किन्तूभयत्रापि ब्रह्मजिज्ञासाहेतुभूतप्रकृतसिद्धिरस्ति प्रयोजनमत फलद्वारेणाव्यतिरेक इत्युच्यत इत्याह अस्यार्थ इति।

(४) ननूभयथा फलाभेदो यदि तर्हि आनन्तर्याग्रहो व्यर्थ इत्यत आह परमार्थतस्त्विति।

हि पुरुषः किंचित्कृत्वा किंचित्करोति । न चानन्तर्यमात्रस्य दृष्टमदृष्टं वा प्रयोजनं पश्यामः । तस्मात्तस्यात्रानन्तर्यं वक्तव्यं यद्विना ब्रह्मजिज्ञासा न भवति, यस्मिन् सति तु भवन्ती भवत्येव, तदिदमुक्तम् "यत्पूर्ववृत्तं नियमेनापेक्षत" इति । स्यादेतत् । धर्मजिज्ञासाया इव ब्रह्मजिज्ञासाया अपि योग्यत्वात्स्वाध्यायानन्तर्यं(१), धर्मवद्ब्रह्मणोऽप्याम्नायैकप्रमाणगम्यत्वात्, तस्य चागृहीतस्य स्वविषये विज्ञानाजननाद्, ग्रहणस्य च स्वाध्यायोऽध्येतव्य इत्यध्ययनेनैव नियतत्वात्, तस्माद् वेदाध्ययनानन्तर्यमेव ब्रह्मजिज्ञासाया अथशब्दार्थ इत्यत आह "**स्वाध्यायानन्तर्यं तु समानं**" धर्मब्रह्मजिज्ञासयोः । अत्र च स्वाध्यायेन विषयेण तद्विषयमध्ययनं लक्षयति, तथा चा'थातो धर्मजिज्ञासे'त्यनेनैव गतमिति नेदं सूत्रमारब्धव्यम् । धर्मशब्दस्य वेदार्थमात्रोपलक्षणतया धर्मवद्ब्रह्मणोपि वेदार्थत्वाविशेषेण वेदाध्ययनानन्तर्योपदेशसाम्यादित्यर्थः(२) ॥

चोदयति "**नन्विह कर्मावबोधानन्तर्यं विशेषो**" धर्मजिज्ञासातो ब्रह्मजिज्ञासायाः । अस्यार्थः 'विविदिषन्ति यज्ञेने'ति तृतीयाश्रुत्या यज्ञादीनामङ्गत्वेन ब्रह्मज्ञाने विनियोगात्, (३)ज्ञानस्यैव कर्मतयेच्छां प्रति प्राधान्यात्, प्रधानसंबन्धाच्चाप्रधानानां पदार्थान्तराणाम् । तत्रापि च न वाक्यार्थज्ञानोत्पत्तावङ्गभावो यज्ञादीनां, वाक्यार्थज्ञानस्य वाक्यादेवोत्पत्तेः । न च वाक्यं सहकारितया कर्माण्यपेक्षत इति युक्तम् । अकृतकर्मणामपि विदितपदतदर्थसंगतीनां (४)समधिगतशाब्दन्यायतत्त्वानां गुणप्रधानभूतपूर्वापरपदार्थाकाङ्क्षासंनिधियोग्यतानुसन्धानवतामप्रत्यूहं वाक्यार्थप्रत्ययोत्पत्तेः । (५)अनुत्पत्तौ वा विधिनिषेधवाक्यार्थप्रत्ययाभावेन तदर्थानुष्ठानपरिवर्जनाभावप्रसङ्गः । (६)तद्बोधतस्तु तदर्थानुष्ठानपरिवर्जने परस्पराश्रयः-तस्मिन् सति तदर्थानुष्ठानपरिवर्जनं ततश्च तद्बोध-इति । न च वेदान्तवाक्यानामेव स्वार्थप्रत्यायने कर्मापेक्षा, न वाक्यान्तराणामिति सांप्रतम् । विशेषहेतोरभावात् । (७)'तत्त्वमसी'तिवाक्यात् त्वपदार्थस्य कर्तृभोक्तृरूपस्य जीवात्मनो नित्यशुद्धबुद्धोदासीनस्वभावेन तत्पदार्थेन परमात्मनैक्यमशक्यं द्रागित्येव प्रतिपत्तुम्, आपाततोऽशुद्धसत्त्वैर्योग्यताविरहनिश्चयात् । यज्ञतपोदानतनूकृतान्तर्मलास्तु विशुद्धसत्त्वाः श्रद्दधाना योग्यतावगमपुरःसरं तादात्म्यमवगमिष्यन्तीति चेत् । (८)तत्किमिदानीं प्रमाणकारणं योग्यतावधारणमप्रमाणात्कर्मणो

---

(१) अत्र स्वाध्यायशब्देन लक्षणया स्वाध्यायाध्ययन ग्राह्य स्वाध्यायस्य नित्यत्वात्तथाच स्वाध्यायाध्ययनानन्तरं ब्रह्मजिज्ञासाया भवितुं शक्यत्वात्तदानन्तर्यमथशब्देनाभिधानार्हमिति भाव ।

(२) अनेन धर्मजिज्ञासासूत्रे ब्रह्मानुपादानात्कथं तेन गतार्थतेति शङ्का परास्ता ।

(३) ननु यज्ञादीनामङ्गत्वेन ब्रह्मजिज्ञासाया विनियोगो न ज्ञाने इत्यत्राह ज्ञानस्यैवेति । अर्थात् प्राधान्यात् ज्ञानस्य तत्रैव विनियोग इत्यर्थ. ।

(४) ज्ञातव्याकरणशास्त्राणाम् ।

(५) अकृतकर्मणां वाक्यार्थप्रतीत्यनुत्पादे ।

(६) तद्बोधत - विधिविहितकर्मादिबोधत ।

(७) विशेषहेत्वभावोऽसिद्ध इत्याशङ्कते तत्त्वमसीति ।

(८) अभेदज्ञानहेतुभूतयोग्यतावधारणे किं कर्माप्रमाणं सदुपयुज्यते प्रमाणरूपं वेति विकल्प्याद्य निरस्यति तत्किमिति । प्रमाण कारणं यस्य तादृश योग्यतावधारणमप्रमाणात्कर्मणो प्रमाणकार्योत्पादव्याघातान्न संभवतीत्यर्थः ।

वक्तुमध्यवसितोऽसि, (१)प्रत्यक्षाद्यतिरिक्तं वा कर्मापि प्रमाणम्। वेदान्तानिरुद्धतन्मूलन्यायबलेन तु योग्यतावधारणे कृत कर्मभिः। तस्मात् 'तत्त्वमसी'त्यादेः श्रुतमयेन ज्ञानेन जीवात्मनः परमात्मभावं गृहीत्वा तन्मूलया चोपपत्त्या व्यवस्थाप्य तदुपासनायां भावनापराभिधानायां दीर्घकालनैरन्तर्यवत्यां ब्रह्मसाक्षात्कारफलायां यज्ञादीनामुपयोगः(२)। यथाहुः—'स (३)तु दीर्घकालादरनैरन्तर्यसत्काराऽऽसेवितो दृढभूमि'रिति। ब्रह्मचर्यतपःश्रद्धायज्ञादयश्च सत्कारः। अत एव श्रुतिः 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मण' इति। विज्ञाय तर्कोपकरणेन शब्देन प्रज्ञां भावनां कुर्वीतेत्यर्थः। अत्र च यज्ञादीनां श्रेयःपरिपन्थिकल्मषनिबर्हणद्वारेणोपयोग इति केचित्। पुरुषसंस्कारद्वारेणेत्यन्ये। यज्ञादिसंस्कृतो हि पुरुष आदरनैरन्तर्यदीर्घकालैरासेवमानो (४)ब्रह्मभावनामनाद्यविद्यावासनां समूलकाषं कषति। ततोऽस्य प्रत्यगात्मा सुप्रसन्नः केवलो विशदीभवति। अत एव स्मृतिः—

'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः'।
'यस्यैते ऽष्टाचत्वारिंशत्संस्कारा' इति च॥

अपरे तु ऋणत्रयापाकरणेन ब्रह्मज्ञानोपयोगं कर्मणामाहुः। अस्ति हि स्मृतिः—
'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेदि'ति॥

(५)अन्ये तु 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेने'त्यादिश्रुतिभ्यस्तत्तत्फलाय चोदितानामपि कर्मणां संयोगपृथक्त्वेन ब्रह्मभावनां प्रत्यङ्गभावमाचक्षते, (६)क्रत्वर्थस्येव खादिरत्वस्य वीर्यार्थताम्, 'एकस्य तूभयार्थत्वे संयोगपृथक्त्व'मिति न्यायात्। अत एव पारमर्षं सूत्रम् 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदि'ति (ब्र० अ० ३ पा० ४ सू० २६)। यज्ञतपोदानादि सर्वं, तदपेक्षा ब्रह्मभावनेत्यर्थः। तस्माद्यदि श्रुत्यादयः प्रमाणं यदि वा पारमर्षं सूत्रं सर्वथा यज्ञादिकर्मसमुच्चिता ब्रह्मोपासना (७)विशेषणत्रयवत्यनाद्यविद्यातद्वासनासमुच्छेदक्रमेण ब्रह्मसाक्षात्काराय मोक्षापरनाम्ने कल्पत इति तदर्थं कर्माण्यनुष्ठेयानि। (८)न चैतानि

---

(१) द्वितीयं निरस्यन्नाह प्रत्यक्षादीति। प्रमाण वक्तुमध्यवसितोसीत्यनुषङ्ग। कर्मणः प्रमाणत्वाप्रसिध्या तन्न युक्तमित्यर्थः।

(२) एतेन कर्मावबोधस्य ब्रह्मज्ञाने साक्षात् उपयोग इति वदन्तः परास्ता।

(३) सः चित्तवृत्तिनिरोध दीर्घकालादिभिरासेवितो तत्त्वप्रतिपत्तौ दृढ उपाय इति सूत्रार्थः।

(४) ब्रह्मभावनामासेवमानोऽनाद्यविद्यावासनां समूलकाषं कषतीत्यन्वय। समूलमुच्छिनत्तीत्यर्थः।

(५) विनियोगवचनबलेन सर्वकर्मणामुत्पत्तिविधिविहितरूपमुपादाय भावनाङ्गतेति वादिनां मतमाह अन्ये त्विति।

(६) 'खादिरे पशुं बध्नाति' 'खादिरं वीर्यकामस्य यूपं कुर्वीत' इति श्रुतस्य खादिरत्वस्यैकस्यैव क्रत्वर्थत्वं पुरुषार्थत्वं च यथा पूर्वमीमांसायामवधारितं, तथैकस्यैव कर्मण तत्तत्फलार्थत्वं ब्रह्मभावनाङ्गत्वं चेत्युभयार्थत्वं स्यादित्यर्थ।

(७) विशेषणेति। आदरनैरन्तर्यदीर्घकालत्वरूपविशेषणत्रयवतीत्यर्थ।

(८) कर्मापेक्षित्वेन ब्रह्मभावनायास्तदवबोधापेक्षामुपपादयन् कर्मावबोधानन्तर्यमिति भाष्यं संगमयति नचेति। दृष्टस्तुषविमोकादिरदृष्टः प्रोक्षणादिज य सामवायिक क्रतुरूपसमवायी आराद्दूरे फलापूर्वसिद्ध्युपकारश्च तस्य हेतुभूतान्यौपदेशिकानि प्रत्यक्षविहितानि आतिदेशिकानि प्रकृतेर्विकृतावतिदेशप्राप्तानि क्रमपर्यन्तानि क्रमिकाणि यान्यङ्गानि तेषां ग्राम समूहस्तत्सहितं यत्परस्परावैमिश्रं कर्मस्वरूप तदधिकारिविशेषश्च तयोर्ज्ञानं विना कर्माण्यनुष्ठातुं न शक्यानीत्यन्वय।

दृष्टादृष्टसामवायिकारादुपकारहेतुभूतौपदेशिकातिदेशिकक्रमपर्यन्ताङ्गग्रामसहितपरस्परविभिन्नकर्मस्वरूपतदधिकारिभेदपरिज्ञानं विना शक्यान्यनुष्ठातुम् । न च धर्ममीमांसापरिशीलनं विना तत्परिज्ञानम् । तस्मात्साधूक्तं 'कर्मावबोधानन्तर्यं विशेष' इति । कर्मावबोधेन हि कर्मानुष्ठानसाहित्यं भवति ब्रह्मोपासनाया इत्यर्थः । तदेतन्निराकरोति "न" । कुतः ? "कर्मावबोधात्प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः" ( पृ० ७१ प० १ )। इदमत्राकूतम् । ब्रह्मोपासनया भावनापराभिधानया कर्माण्यपेक्ष्यन्त इत्युक्त, तत्र ब्रूमः–क्व पुनरस्याः कर्मापेक्षा ? किं कार्ये यथाऽऽग्नेयादीनां परमापूर्वे चरमभाविफलानुकूले जनयितव्ये समिदाद्यपेक्षा, स्वरूपे वा यथा तेषामेव (१)द्विरवत्तपुरोडाशादिद्रव्याग्निदेवताद्यपेक्षा । न तावत्कार्ये, तस्य विकल्पासहत्वात । तथाहि ब्रह्मोपासनाया ब्रह्मस्वरूपसाक्षात्कारः कार्यमभ्युपेयः, स चोत्पाद्यो वा स्याद्, यथा संयवनस्य पिण्डः । विकार्यो वा, यथाऽवघातस्य व्रीहयः । संस्कार्यो वा, यथा प्रोक्षणस्योलूखलादयः । प्राप्यो वा, यथा दोहनस्य पयः । न तावदुत्पाद्यः, न खलु घटादिसाक्षात्कार इव जडस्वभावेभ्यो घटादिभ्यो भिन्न इन्द्रियाद्याधेयो ब्रह्मसाक्षात्कारो भावनाधेय. संभवति, ब्रह्मणोऽपराधीनप्रकाशतया तत्साक्षात्कारस्य तत्स्वभाव्येन नित्यतयोत्पाद्यत्वा(२)नुपपत्तेः । ततो भिन्नस्य वा भावनाधेयस्य साक्षात्कारस्य प्रतिभाप्रत्ययवत्संशयाक्रान्ततया प्रामाण्यायोगात्(३), तद्विधस्य तत्सामग्रीकस्यैव बहुल व्यभिचारोपलब्धे । न खल्वनुमानविबुद्धं वह्निं भावयतः शीतातुरस्य शिशिरभरमन्थरतरकायकाण्डस्य स्फुरज्ज्वालाजटिलानलसाक्षात्कारः प्रमाणान्तरेण संवाद्यते, विसंवादस्य बहुलमुपलम्भात्, तस्मात्प्रामाणिकसाक्षात्कारलक्षणकार्याभावान्नोपासनाया उत्पाद्ये कर्मापेक्षा । (४)न च कूटस्थनित्यस्य सर्वव्यापिनो ब्रह्मण उपासनातो विकारसंस्कारप्राप्तयः संभवन्ति ।

(५)स्यादेतत् । मा भूद्ब्रह्मसाक्षात्कार उत्पाद्यादिरूप उपासनाया., संस्कार्यस्त्वनिर्वचनीयोऽनाद्यविद्याद्वयपिधानापनयनेन भविष्यति, (६)प्रतिसीरापिहिता नर्तकीव प्रतिसीरापनयद्वारा रङ्गव्यापृतेन(७) । तत्र च कर्मणामुपयोगः । एतावांस्तु विशेषः–प्रतिसीरापनये पारिषदानां नर्तकीविषयसाक्षात्कारो भवति, इह तु अविद्यापिधानापनयमात्रमेव नापरमुत्पाद्यमस्ति, ब्रह्मसाक्षात्कारस्य ब्रह्मस्वभावस्य नित्यत्वेनानुत्पाद्यत्वात ।

अत्रोच्यते । का पुनरियं ब्रह्मोपासना ? किं शाब्दज्ञानमात्रसन्ततिराहो निर्विचिकित्स

---

( १ ) द्विरवत्तेति । यथा आग्नेययाग स्वोत्पत्तये द्व्यवदानं जुहोती'ति वाक्याद्द्विर्हविषोऽवद्यतीति विहित द्विरवत्तपुरोडाशमपेक्षते, तथा ब्रह्मोपासना स्वोत्पत्तये कर्माण्यपेक्षते किमिति प्रश्नार्थः ।

( २ ) तथाच भावनासाध्ये साक्षात्कारे यदि कर्मापेक्षा स्यात्तर्हि तस्य ब्रह्मस्वरूपता न स्यात ब्रह्मणो नित्यत्वादिति भाव ।

( ३ ) साक्षात्कारस्य ब्रह्मस्वरूपाद्भेदे ब्रह्म जड भवेत, तच नेन्द्रियगोचरं शब्दश्चाप्रत्यक्षप्रमाहेतुरिति केवलभावनाजन्य साक्षात्कारो प्रमा न भवेदिति भावः ।

( ४ ) पक्षत्रय युगपन्निरस्यन्नाह न च कूटस्थेति । कूटस्थनित्यतया पूर्वरूपापायलक्षणो विकारोऽभिनवगुणोदयरूपसंस्कारश्च न सम्भवत, सर्वव्यापितया प्राप्तिपक्षोपि न सम्भवतीति भाव ।

( ५ ) ब्रह्मसाक्षात्कारस्य संस्कार्यत्ववादी आक्षिपति स्यादेतदिति । अत्र कूटस्थनित्यत्वाविरुद्धोऽविद्याद्वयरूपदोषविघात एव संस्कारो ग्राह्य ।

( ६ ) प्रतिसीरा जवनिका तिरस्करिणीत्यर्थः ।　　( ७ ) नटेनेत्यर्थ ।

शाब्दज्ञानसन्ततिः ? यदि शाब्दज्ञानमात्रसन्ततिः, किमियमभ्यस्यमानाप्यविद्यां समुच्छेत्तु-मर्हति । तत्वविनिश्चयस्तदभ्यासो वा सवासनं विपर्यासमुन्मूलयेत्, न संशयाभ्यासः, सामान्यमात्रदर्शनाभ्यासो वा । नहि स्थाणुर्वा पुरुषो वेति वाऽऽरोहपरिणाहवद् द्रव्यमिति वा शतशोऽपि ज्ञानमभ्यस्यमानं पुरुष एवेति निश्चयाय पर्याप्तमृते विशेषदर्शनात् । (१)ननूक्तं-श्रुतमयेन ज्ञानेन जीवात्मनः परमात्मभावं गृहीत्वा युक्तिमयेन च व्यवस्थाप्यत-इति । तस्मान्निर्विचिकित्सशाब्दज्ञानसन्ततिरूपोपासना कर्मसहकारिण्यविद्याद्वयोच्छेदहेतुः । (२)न चासावनुत्पादितब्रह्मानुभवा तदुच्छेदाय पर्याप्ता । साक्षात्काररूपो हि विपर्यासः साक्षात्काररूपेणैव तत्वज्ञानेनोच्छिद्यते न तु परोक्षावभासेन, (३)दिङ्मोहालातचक्रचलद्वृक्षमरुमरीचिसलिलादिविभ्रमेष्वपरोक्षावभासिषु अपरोक्षावभासिभिरेव दिगादितत्वप्रत्ययैर्निवृत्तिदर्शनात्, नो खल्वाप्तवचनलिङ्गादिनिश्चितदिगादितत्वानां दिङ्मोहादयो निवर्तन्ते । तस्मात् त्वम्पदार्थस्य तत्पदार्थत्वेन साक्षात्कार एषितव्यः । एतावता हि त्वम्पदार्थस्य दुःखिशोकित्वादिसाक्षात्कारनिवृत्तिर्नान्यथा । (४)न चैष साक्षात्कारो मीमांसासहितस्यापि शब्दस्य प्रमाणस्य फलम्, अपि तु प्रत्यक्षस्य तस्यैव तत्फलत्वनियमात्, अन्यथा कुटजबीजादपि वटाङ्कुरोत्पत्तिप्रसङ्गात् । तस्मान्निर्विचिकित्सवाक्यार्थभावनापरिपाकसहितमन्तःकरणं त्वंपदार्थस्यापरोक्षस्य तत्तदुपाध्याकारनिषेधेन तत्पदार्थतामनुभावयतीति युक्तम् । (५)न चायमनुभवो ब्रह्मस्वभावो येन न जन्येत, अपि त्वन्तःकरणस्यैव वृत्तिभेदो ब्रह्मविषयः । (६)न चैतावता ब्रह्मणो नापराधीनप्रकाशता । नहि शाब्दज्ञानप्रकाश्यं ब्रह्म स्वयंप्रकाशं न भवति । सर्वोपाधिरहितं हि स्वयंज्योतिरिति गीयते, न तूपहितमपि । यथाह स्म भगवान् भाष्यकारः–'नायमेकान्तेनाविषय' इति । (७)न चान्तःकरणवृत्तावप्यस्य साक्षात्कारे सर्वोपाधिविनिर्मोकः, तस्यैव तदुपाधेर्विनश्यदवस्थस्य स्वपरोपाधिविरोधिनो विद्यमानत्वात्, (८)अन्यथा चैतन्यच्छायापत्तिं विना-

---

( १ ) आपातज्ञानाभ्यासरूपोपासनापक्षं निराकृत्य निश्चयाभ्यासरूपोपासनापक्षमाशङ्कते नन्विति ।

( २ ) ननूपासनैवाविद्याविरोधिनी भवतु किं कर्मोपयोगिना साक्षात्कारेणाकिंचित्करेणेत्यत्राह नचेति ।

( ३ ) प्रत्यक्षप्रमाया एव प्रत्यक्षभ्रमनिवर्तकत्वे दृष्टान्तमाह दिङ्मोहेति ।

( ४ ) नचैष इति । इदमत्र तात्पर्यम् । स्वतोऽपरोक्षस्यापि ब्रह्मणः पारोक्ष्यं भ्रमेण गृह्यते तत्रापरोक्षकरणादेव तत्साक्षात्कारः, अन्तःकरणं च सोपाधिके आत्मनि अहं वृत्तिं जनयतीति सिद्धमस्यात्मन्यपरोक्षधीकारणत्वम् । तच्च शाब्दजनितब्रह्मात्मैक्यधीसंततिवासितं तत्पदलक्ष्यब्रह्मात्मतां जीवस्य साक्षात्कारयति अक्षमिव पूर्वानुभवसंस्कारवासितं तत्तेदन्तोपलक्षितैक्यविषयप्रत्यभिज्ञाहेतुरिति ।

( ५ ) स्वरूपप्रकाशस्याभिव्यक्तिसंस्कारमुपपाद्य व्यञ्जकान्तःकरणवृत्तेरुत्पाद्यतामाह नचेति ।

( ६ ) नचैतावता—उक्तानुभवस्य ब्रह्मविषयत्वेऽपि, स्वप्रकाशस्यैव शाब्दज्ञानविषयत्वं त्वयाप्यभिमतमित्यर्थः ।

( ७ ) ननु निरुपाधिब्रह्मणः साक्षात्कारविषयत्वात्कथमुपहितत्वेत्यत्राह न चान्तःकरणेति । ब्रह्म निरुपाधीति विषयिणी वृत्तिः स्वस्वेतरोपाधिनिवृत्तिहेतुरुदेति स्वस्या अप्युपाधित्वाविशेषात्, तत्र स्वसत्ताया विनाशहेतुसान्निध्याद्विनश्यदवस्थत्वम् । एवं च नानुपहितस्य विषयता, न चोपाधेर्निवर्तकान्तरापेक्षेति भावः ।

( ८ ) नन्वेवं तर्हि उपाधिसम्बन्धाद्विषयत्वं विषयत्वे चोपाधिसम्बन्धो विषयविषयित्वलक्षण इत्यन्योन्याश्रय इत्यत आह अन्यथेति । ब्रह्मसाक्षात्कारस्य ब्रह्मविषयत्वप्रयुक्तं न चैतन्यप्रतिबिम्बितत्वं, किन्तु स्वतः घटादिवृत्तिषु साम्यात्, चैतन्यं च ब्रह्मेति स्वाभाविको वृत्तेस्तत्सम्बन्ध इति नान्योन्याश्रयो दोष इत्यर्थः ।

ऽन्तःकरणवृत्तेः स्वयमचेतनायाः स्वप्रकाशत्वानुपपत्तौ साक्षात्कारत्वायोगात् । न चानुमितभावितवह्निसाक्षात्कारवत्प्रतिभात्वेनास्याप्रामाण्य, तत्र वह्नित्वलक्षणस्य परोक्षत्वात् । इह तु ब्रह्मरूपस्योपाधिकल्पितस्य जीवस्य प्रागप्यपरोक्षत्वात् । (१)नहि शुद्धबुद्धत्वादयो वस्तुतस्ततोऽतिरिच्यन्ते, जीव एव तु तत्तदुपाधिविरहितः शुद्धबुद्धादिस्वभावो ब्रह्मेति गीयते । न च तत्तदुपाधिविरहोऽपि ततोऽतिरिच्यते । (२)तस्माद्यथा गान्धर्वशास्त्रार्थज्ञानाभ्यासाहितसंस्कारसचिवश्रोत्रेन्द्रियेण षड्जादिस्वरग्राममूर्च्छनाभेदमध्यक्षमनुभवति, एवं वेदान्तार्थज्ञानाभ्यासाहितसंस्कारो जीवस्य ब्रह्मभावमन्तःकरणेनेति । (३)अन्तःकरणवृत्तौ ब्रह्मसाक्षात्कारे जनयितव्येऽस्ति तदुपासनायाः कर्मापेक्षेति चेत् । (४)न । तस्याः कर्मानुष्ठानेन सहभावाभावेन तत्सहकारित्वानुपपत्तेः । न खलु 'तत्त्वमसी'त्यादेर्वाक्यान्निर्विचिकित्सं शुद्धबुद्धोदासीनस्वभावमकर्तृत्वाद्युपेतमपेतब्राह्मणत्वादिजातिं देहाद्यतिरिक्तमेकमात्मान प्रतिपद्यमानः कर्मस्वधिकारमवबोद्धुमर्हति । अनर्हश्च कथं कर्ता वाऽधिकृतो वा ।

(५)यद्युच्येत—निश्चितेऽपि तत्त्वे विपर्यासनिबन्धनो व्यवहारोऽनुवर्तमानो दृश्यते, यथा गुडस्य माधुर्यविनिश्चयेऽपि पित्तोपहतेन्द्रियाणां तिक्तावभासानुवृत्तिरास्वाद्य थूत्कृत्य त्यागात् । तस्मादविद्यासंस्कारानुवृत्त्या कर्मानुष्ठानं, तेन च विद्यासहकारिणा तत्समुच्छेद उपपत्स्यते । न च कर्माविद्यात्मकं कथमविद्यामुच्छिनत्ति, कर्मणो वा तदुच्छेदकस्य कुत उच्छेद इति वाच्यम् । सजातीयस्वपरविरोधिनां भावानां बहुलमुपलब्धेः, यथा पयः पयोन्तरं जरयति, स्वयं च जीर्यति । यथा विषं विषान्तरं शमयति, स्वयं च शाम्यति । यथा वा कतकरजो रजोन्तराविले पाथसि प्रक्षिप्तं रजोन्तराणि भिन्दत् स्वयमपि भिद्यमानमनाविलं पाथः करोति । एवं कर्माविद्यात्मकमपि अविद्यान्तराणि अपगमयत्स्वयमप्यपगच्छति—इति ॥

(६)अत्रोच्यते । सत्यं 'सदेव सोम्येदमि'त्युपक्रमात् 'तत्त्वमसी'त्यन्तात् शब्दाद् ब्रह्ममीमांसोपकरणादसकृदभ्यस्ताद् निर्विचिकित्सेऽनाद्यविद्योपादानदेहाद्यतिरिक्तप्रत्यगात्मतत्त्वावबोधे जातेऽपि अविद्यासंस्कारानुवृत्तावनुवर्तन्ते सांसारिकाः प्रत्ययास्तद्व्यवहाराश्च, तथापि तानप्ययं व्यवहारप्रत्ययान् मिथ्येति मन्यमानो विद्वान्न श्रद्धत्ते पित्तोपहतेन्द्रिय इव गुडं थूत्कृत्य त्यजन्नपि तस्य तिक्तताम् । तथा चायं क्रियाकरणेतिकर्तव्यताफलप्रपञ्चमतात्त्विकं विनिश्चिन्वन् कथमधिकृतो नाम, (७)विदुषो ह्यधिकारोऽन्यथा पशुशूद्रा-

---

(१) जीवस्य प्रागपरोक्षत्वेपि शुद्धबुद्धत्वादे पारोक्ष्यान्न तत्साक्षात्कारो यथार्थ इत्याशङ्क्याह नहीति ।

(२) उपसंहरति तस्मादिति । (३) समुच्चयवादी शङ्कते अन्तःकरणेति ।

(४) निराकरोति नेति । किमुपासनाकार्ये साक्षात्कारे कर्मणामुपयोग उतोपासनास्वरूपे समुच्चयवादिनाङ्गीक्रियते ? तत्र न कार्य इत्याह तस्या इति ।

(५) समुच्चयवादिनोऽविद्यात्मककर्मणोऽनुष्ठान तत्त्वावगतावपि विपर्यासदर्शनात्सम्भवतीति पक्षमुपस्थापयति यद्युच्येतेति ।

(६) तत्त्वज्ञानिनोऽनधिकारान्नैवमित्यभिप्रायेण समुच्चयवादिपक्षं खण्डयति अत्रोच्यत इत्यादिना ।

(७) क्रियाकर्त्रादिर्वास्तव इति निश्चयवत इत्यर्थः ।

दीनामप्यधिकारो दुर्वारः स्यात् । (१)क्रियाकर्त्रादिस्वरूपविभाग च विद्वस्यमान इह विद्वानभिमतः कर्मकाण्डे । (२)अत एव भगवानविद्वद्विषयत्वं शास्त्रस्य वर्णयाम्बभूव भाष्यकारः । तस्माद्यथा राजजातीयाभिमानकर्तृके राजसूये न विप्रवैश्यजातीयाभिमानिनोरधिकारः, एव द्विजातिकर्तृक्रियाकरणादिविभागाभिमानिकर्तृके कर्मणि न तदनभिमानिनोऽधिकारः। न चानधिकृतेन समर्थेनापि कृतं वैदिक कर्म फलाय कल्पते वैश्यस्तोम इव ब्राह्मणराजन्याभ्याम् । तेन दृष्टार्थेषु कर्मसु शक्तः प्रवर्तमानः प्राप्नोतु फल दृष्टत्वात् । अदृष्टार्थेषु तु शास्त्रैकसमधिगम्यं फलमनधिकारिणि न युज्यत इति नोपासनाकार्ये कर्मापेक्षा ।

(३)स्यादेतत् मनुष्याभिमानवदधिकारिके कर्मणि विहिते यथा तदभिमानरहितस्यानधिकारः, एव निषेधविधयोपि मनुष्याधिकारा इति तदभिमानरहितस्तेष्वपि नाधिक्रियेत पश्वादिवत् । तथा चायं निषिद्धमनुतिष्ठन् न प्रत्यवेयात् तिर्यगादिवदिति भिन्नकर्मतापातः ।

नैवम्(४) । न खल्वयं सर्वथा मनुष्याभिमानरहितः, किन्त्वविद्यासंस्कारानुवृत्त्याऽस्य मात्रया तदभिमानोऽनुवर्तते अनुवर्तमान च मिथ्येति मन्यमानो न श्रद्धत्त इत्युक्तम् । किमतः ? यद्येवम् एतदतो भवति–विधिषु श्राद्धोऽधिकारी नाश्राद्धः । ततश्च मनुष्याद्यभिमानेन श्रद्धधानो न विधिशास्त्रेणाधिक्रियते । तथा च स्मृतिः–'अश्रद्धया हुत दत्तमि'त्यादिका । निषेधशास्त्रं तु न श्रद्धामपेक्षते, अपि तु निषिध्यमानक्रियोन्मुखो नर इत्येव प्रवर्तते । तथा च सांसारिक इव श्रद्धावगतब्रह्मतत्त्वोऽपि निषेधमतिक्रम्य प्रवर्तमानः प्रत्यवैतीति न भिन्नकर्मदर्शनाभ्युपगम । तस्मान्नोपासनायाः कार्ये कर्मापेक्षा । (५)अत एव नोपासनोत्पत्तावपि, निर्विचिकित्सशाब्दज्ञानोत्पत्त्युत्तरकालमनधिकारः कर्मणीत्युक्तम् । तथा च श्रुति.–

न कर्मणा न प्रजया धनेन (६)त्यागेनैके अमृतत्वमानशुः ।

(७)तत्किमिदानीमनुपयोग एव सर्वथेह कर्मणाम् , तथा च 'विविदिषन्ति यज्ञेने'त्याद्याः श्रुतयो विरुध्येरन् । न । (८)आरादुपकारकत्वात् कर्मणां यज्ञादीनाम् । तथाहि–'तमेतमात्मानं

---

(१) ननु विदुषश्चेत्कर्मस्वधिकारस्तर्हि क्रियाकर्त्रादेर्वास्तवत्व स्यादित्यत्राह क्रियाकर्त्रादीति । विद्वस्यमानोऽविद्वानपि विद्वान् भवन्विद्वदाभास इत्यर्थ ।

(२) अत एव—विद्वदाभासोऽविद्वानेव कर्मकाण्डेऽधिकार्यभिमत इत्यस्माद्धेतोः ।

(३) शङ्कते स्यादेतदिति । यदि प्रतीयमानाधिकारनिमित्तस्य ब्राह्मण्यादेः शास्त्रनिमित्तामिथ्यात्वप्रत्ययादश्रद्धधानो विध्यनधिकारी तदोल्लङ्घितशास्त्रनिषिद्धकर्मतापात इत्याशङ्काभिप्राय ।

(४) समाधत्ते नैवमिति । अवगतमिथ्याभावस्याप्याधिकारनिमित्तस्य प्रतीयमानत्वान्निषेधाधिकारहेतुता । न च श्रद्धधानता इहाधिकारहेतु, अतत्त्वज्ञस्यापि नास्तिकत्वेनाश्रद्धधतो निषेधाधिकाराद, इतरथा निषेधलंघिनस्तस्य प्रत्यवायाभावाद्विधिषु तु श्रद्धाप्यधिकारहेतुरिति ब्रह्मविदो नाधिकार इति समाधानार्थसक्षेप ।

(५) अत एव—यत एवावगतब्रह्मभावस्य विधिषु नाधिकारस्तत एव ज्ञानानन्तर कर्मानुष्ठानस्यासम्भवान्नोपासनोत्पत्तौ कर्मापेक्षेति न द्वितीयकल्पस्यावकाश इति भाव ।

(६) त्यागेन—त्यागसाध्यज्ञानेनामृतत्वं प्रापुर्न पितृलोकाद्यासिद्धेतुभिः कर्मप्रजाधनशब्दवाच्यापरविद्याभिरिति श्रुत्यर्थ । (७) शङ्कते तत्किमिति ।

(८) समाधत्ते आरादिति । इह भवान्तरे वाऽनुष्ठितं कर्म चित्तशुद्धिद्वारा ज्ञानोत्पत्तिहेतुरिति समाधा-

वेदानुवचनेन' नित्यस्वाध्यायेन 'ब्राह्मणा विविदिषन्ति' वेदितुमिच्छन्ति, न तु विदन्ति । वस्तुतः प्रधानस्यापि वेदनस्य प्रकृत्यर्थतया शब्दतो गुणत्वादिच्छायाश्च प्रत्ययार्थतया प्राधान्यात्, (१)प्रधानेन च कार्यसम्प्रत्ययात् । नहि राजपुरुषमानयेत्युक्ते वस्तुतः प्रधानमपि राजा पुरुषविशेषणतया शब्दत उपसर्जनमानीयतेऽपि तु पुरुष एव, शब्दतस्तस्य प्राधान्यात् । एवं वेदानुवचनस्येव यज्ञस्यापीच्छासाधनतया विधानम् । एवं तपसोऽनाशकस्य । कामानशनमेव तपः । हितमितमेध्याशिनो हि ब्रह्मणि विविदिषा भवति, न तु सर्वथाऽनश्नतो, मरणात् । नापि चान्द्रायणादितपःशीलस्य, धातुवैषम्यापत्तेः । एतानि च नित्यान्युपात्तदुरितनिबर्हणेन पुरुषं संस्कुर्वन्ति । तथा च श्रुतिः—'स ह वा आत्मयाजी यो वेद इदं मेऽनेनाङ्गं संस्क्रियत इदं मेऽनेनाङ्गमुपधीयते'(२) इति । अनेनेति प्रकृतं यज्ञादि परामृशति । स्मृतिश्च 'यस्यैतेऽष्टाचत्वारिंशत्संस्काराः' इति । नित्यनैमित्तिकानुष्ठानप्रक्षीणकल्मषस्य च विशुद्धसत्त्वस्याविदुष एव उत्पन्नविविदिषस्य ज्ञानोत्पत्तिं दर्शयत्याथर्वणी श्रुतिः—'विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः' इति । स्मृतिश्च—'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इत्यादिका । (३)क्लृप्तेनैव च नित्यानां कर्मणां नित्येहितेनोपात्तदुरितनिवर्हणेन पुरुषसंस्कारेण ज्ञानोत्पत्तावङ्गभावोपपत्तौ न संयोगपृथक्त्वेन साक्षादङ्गभावो युक्तः(४), कल्पनागौरवापत्तेः । । तथाहि नित्यकर्मानुष्ठानाद्धर्मोत्पादः ततः पाप्मा निवर्तते, स ह्यनित्याशुचिदुःखरूपे संसारे नित्यशुचिसुखख्यातिलक्षणेन विपर्यासेन चित्तसत्त्वं मलिनयति, अतः पापनिवृत्तौ (५)प्रत्यक्षोपपत्तिद्वारापावरणे सति प्रत्यक्षोपपत्तिभ्यां संसारस्यानित्याशुचिदुःखरूपतामप्रत्यूहमवबुध्यते, ततोऽस्यास्मिन्ननभिरतिसंज्ञं वैराग्यमुपजायते, ततस्तज्जिहासोपावर्तते, ततो हानोपायं पर्येषते, पर्येषमाणश्चात्मतत्त्वज्ञानमस्योपायं इत्युपश्रुत्य तज्जिज्ञासते, ततः श्रवणादिक्रमेण तज्जानातीत्यारादुपकारकत्वं तत्त्वज्ञानोत्पदं प्रति चित्तसत्त्वशुद्ध्या कर्मणां युक्तम् । इमं चार्थमनुवदति भगवद्गीता—

> आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
> योगारूढस्य तस्यैव शमः कारणमुच्यते ॥

एवं चाननुष्ठितकर्मापि प्राग्भवीयकर्मवशाद्यो विशुद्धसत्त्वः संसारासारतादर्शनेन निष्प-

---

नाभिप्रायमुपपादयन्नाह तथाहीति ।

(१) प्रधानेनेति । प्रधानेन सम्प्रत्ययार्थेनेच्छयाऽऽख्यातोपात्तभावनाया कार्यस्य सम्प्रत्ययः तत्समन्वयादित्यर्थः ।

(२) अनेन कर्मणा इदं ममाङ्गमन्तःकरणं संस्क्रियते पुण्येन चोपधीयते उपचीयत इति यो विदित्वाऽऽचरति कर्म स आत्मशुद्ध्यर्थं यजन्नात्मयाजी, स च देवयाजिनः काम्यकर्तुः श्रेयानिति शतपथश्रुत्यर्थो बोध्यः ।

(३) एवं नित्यानां संस्कारद्वारा ज्ञानोत्पादकत्वमुक्त्वाऽधुना सर्वेषां कर्मणां ज्ञानकार्ये मोक्षे समुच्चय इति समुच्चयवाद्युक्तं निरस्यन्नाह क्लृप्तेनैवेति । नित्यानां पापक्षयरूपं फलं ज्ञानमपेक्षते न स्वर्गादि, तत्र यथा प्रकृतौ क्लृप्तोपकाराणामङ्गानामतिदेशे न प्रकृतोपकारातिरिक्तोपकारकल्पनमेवं ज्ञाने विनियुक्तयज्ञानां क्लृप्तनित्यफलपापक्षयातिरेकेण न नित्यकाम्यकर्मसाधारणमोक्षोपयोग्युपकारकल्पनमिति भावः ।

(४) युक्त इति । अनेन साक्षादङ्गत्वं निषिध्यते न संयोगपृथक्त्वम्, सर्वापेक्षाधिकरणे संयोगभेदस्य वक्ष्यमाणत्वात् । आरादङ्गभावेन संयोगपृथक्त्वस्योपपद्यमानत्वेन न साक्षादङ्गत्वसिद्धिरित्यभिप्रायः ।

(५) प्रत्यक्षेति । दृष्टविषये प्रत्यक्षेणादृष्टविषये चोपपत्त्या पापकपाटनिवृत्त्यावरणे उद्घाटने सतीत्यर्थः ।

त्रवैराग्यः कृतं तस्य कर्मानुष्ठानेन वैराग्योत्पादोपयोगिना, प्राग्भवीयकर्मानुष्ठानादेव तत्सिद्धेः। इममेव च पुरुषधौरेयभेदमधिकृत्य प्रववृते श्रुतिः—'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेदि'ति। तदिदमुक्तम्—कर्मावबोधात् **"प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्ते"**रिति। अत एव न ब्रह्मचारिण ऋणानि सन्ति, येन तदपाकरणार्थं कर्मानुतिष्ठेत्। एतदनुरोधाच्च 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते' इति गृहस्थः सपद्यमान इति व्याख्येयम्। अन्यथा 'यदि वेतरथा ब्रह्मचर्यादेवे'ति श्रुतिर्निरुध्येत। गृहस्थस्यापि च ऋणापाकरण सत्त्व शुद्ध्यर्थमेव। जरामर्यवादो भस्मान्ततावादोन्त्येष्टयश्च कर्मजडानविदुषः प्रति, न त्वात्मतत्त्व पण्डितान्। तस्मात्तस्यानन्तर्यमथशब्दार्थो यद्विना ब्रह्मजिज्ञासा न भवति यस्मिंस्तु सति भवन्ती भवत्येव। न चेत्थं कर्मावबोधानन्तर्यं, तस्मान्न कर्मावबोधानन्तर्यमथशब्दार्थ इति सर्वमवदातम्।

(१)स्यादेतत्। मा भूदग्निहोत्रयवागूपाकवदार्थः क्रमः श्रौतस्तु भविष्यति, 'गृही भूत्वा वनी भवेत्' 'वनी भूत्वा प्रव्रजे'दिति जाबालश्रुतिर्गार्हस्थ्येन हि यज्ञाद्यनुष्ठानं सूचयति। स्मरन्ति च--

अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्मतः।
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत्॥

निन्दति च--

अनधीत्य द्विजो वेदाननुत्पाद्य तथात्मजान्।
अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः॥

इति, अत आह--**"यथा च हृदयाद्यवदानानामानन्तर्यनियमः"**। कुतः? 'हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षस' इत्यथाग्रशब्दाभ्यां **क्रमस्य विवक्षितत्वात्, न तथेह क्रमो विवक्षित**। श्रुत्या तथैवानियमप्रदर्शनात् 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वे'ति। एतावता हि वैराग्यमुपलक्षयति। अत एव 'यदहरेव विरजेत्तदहरेव प्रव्रजे'ति श्रुतिः। निन्दावचनं चाविशुद्धसत्त्वपुरुषाभिप्रायम्। अविशुद्धसत्त्वो हि मोक्षमिच्छन्नालस्यात्तदुपायेऽप्रवर्तमानो गृहस्थधर्ममपि नित्यनैमित्तिकमनाचरन् प्रतिक्षणमुपचीयमानपाप्माऽधोगतिं गच्छतीत्यर्थः।

स्यादेतत्। मा भूच्छ्रौत आर्थो वा क्रमः, (२)पाठस्थानमुख्यप्रवृत्तिप्रमाणकस्तु कस्मान्न

---

(१) धर्मब्रह्मावबोधयोर्हेतुहेतुमद्भावाभावेऽपि क्त्वाप्रत्ययश्रुत्या पौर्वापर्यं स्यादित्यभिप्रायेणाशङ्कते स्यादेतदिति। यथा 'अग्निहोत्रं जुहोति, यवागूं पचतीति' श्रूयते। तत्र क्रमसंशये द्रव्यमन्तरा यागानिष्पत्तेरन्यद्रव्यानयने श्रुतवैयर्थ्यात् दृष्टप्रयोजने आरादुपकारकत्वस्यान्याय्यत्वात् यथा यवागूं पक्त्वा जुहोतीति क्रमस्तथेह न सम्भवतीति भाव।

(२) 'समिधो यजती'त्यादयः पञ्च प्रयाजा दर्शपौर्णमासाङ्गतयाम्नाताः, तेषां पाठतः क्रमः। तथा ज्योतिष्टोमविकारे साद्यस्कयागेऽतिदेशप्राप्ताश्च पशवः अग्नीषोमीयः सवनीयः अनुबन्ध्यश्च। विकृतौ 'सह पशूनालभेत' इति श्रवणात्प्राकृतः क्रमो निवर्तते। सहत्वं चेद सवनीयस्थाने। तथासति इतरयोस्तुल्यं स्थानचलनं भवति। तत्रैककालत्वलक्षणसहत्वस्यासम्भवात्स्थानात्सवनीयप्राथम्य नियम्यत इत्ययं स्थानक्रम। तथा 'सारस्वतौ भवत एतद्वै दैव्यं मिथुनं यत्सरस्वती सरस्वांश्च' इति युगपत्कर्मद्वयं श्रूयते। तत्र प्रथमं सरस्वतीदैवतस्य याज्यानुवाक्यायुगलं पठ्यते ततो सरस्वद्दैवतस्य। तस्मादेतत्क्रमेण कर्मद्वयक्रम इति पा-

भवतीत्यत आह—"शेषशेषित्वे प्रमाणाभावात्" (पृ० ७२ प० १)। शेषाणां समिदादीनां शेषिणां चाग्नेयादीनां(१)मेकफलवदुपकारोपनिबद्धानामेकफलावच्छिन्नानामेकप्रयोगवचनोपगृहीतानामेकाधिकारिकर्तृकाणामेकपौर्णमास्यमावस्याकालसंबद्धाना युगपदनुष्ठानाशक्तेः सामर्थ्यात्क्रमप्राप्तौ तद्विशेषापेक्षायां पाठादयस्तद्भेदनियमाय प्रभवन्ति । यत्र तु न शेषशेषिभावो नाप्येकाधिकारावच्छेदो यथा (२)सौर्यार्यम्णप्राजापत्यादीनां, तत्र क्रमभेदापेक्षाभावान्न पाठादिः क्रमविशेषनियमे प्रमाणम्, अवर्जनीयतया तस्य तत्रागतत्वात् । न चेह धर्मब्रह्मजिज्ञासयोः शेषशेषिभावे श्रुत्यादीनामन्यतम प्रमाणमस्तीति । ननु शेषशेषिभावाभावेपि क्रमनियमो दृष्टो, यथा गोदोहनस्य पुरुषार्थस्य दर्शपौर्णमासिकैरङ्गैः सह, यथा वा दर्शपौर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति दर्शपौर्णमाससोमयोरशेषशेषिणोरित्यत आह—"अधिकृताधिकारे च प्रमाणाभावात्" इति योजना । स्वर्गकामस्य हि दर्शपौर्णमासाधिकृतस्य पशुकामस्य सतो दर्शपौर्णमासक्रत्वर्थापूप्रणयनाश्रिते गोदोहनेऽधिकार । नो खलु गोदोहनद्रव्यमव्याप्रियमाणं साक्षात् पशून् भावयितुमर्हति । न च व्यापारान्तराविष्ट श्रूयते यतस्तदङ्गक्रममतिपतेत् । अप्प्रणयनाश्रितं तु प्रतीयते 'चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्ये'ति समभिव्याहारात् । योग्यत्वाच्चास्यापां प्रणयनं प्रति । तस्मात् क्रत्वर्थाप्प्रणयनाश्रितत्वाद्गोदोहनस्य तत्क्रमेण पुरुषार्थमपि गोदोहनं क्रमवदिति सिद्धम्(३) । श्रुतिनिराकरणेनैवेष्टिसोमक्रमवदपि क्रमोऽप्यपास्तो वेदितव्यः ।

शेषशेषित्वाधिकृताधिकाराभावेपि क्रमो विवक्ष्येत, यद्येकफलावच्छेदो भवेत्, यथाग्नेयादीनां षण्णामेकस्वर्गफलावच्छिन्नानां, यदि वा जिज्ञास्यब्रह्मणोंशो धर्मः स्यात्, यथा चतुर्लक्षणीव्युत्पाद्यं ब्रह्म केनचित्केनचिदंशेनैकैकेन लक्षणेन व्युत्पाद्यते, तत्र चतुर्णां लक्षणानां जिज्ञास्याभेदेन परस्परसम्बन्धे सति क्रमो विवक्षितस्तथेहाप्येकजिज्ञास्यतया धर्मब्रह्मजिज्ञासयोः क्रमो विवक्ष्येत, न चैतदुभयमप्यस्तीत्याह—"फलजिज्ञास्यभेदाच्च" । फलभेदं विभजते "अभ्युदयफलं धर्मज्ञान"मिति ।

---

यते मन्त्राणां प्रयोगशेषत्वात् । अङ्गविशेषनिर्वापादीनां क्रमाकाङ्क्षायां मुख्यक्रमेणैव क्रम इति नियम्यते सोऽयं मुख्यक्रमः । इद च प्रवृत्तिक्रमस्याप्युदाहरणं बोध्यम् । याज्यानुवाक्याप्रवृत्तिक्रमेण निर्वापादीनां क्रमस्य सिद्धत्वादित्यलं विस्तरस्तु कल्पतरौ द्रष्टव्य ।

(१) एकप्रयोगवचनपरिग्रहे हेतुमाह एकफलवदिति । एकश्चासौ फलवत प्रधानस्य दर्शपौर्णमासादेरुपकारस्तस्मिन्समुच्चित्य साधनत्वेनोपनिबद्धाः शेषा शेषिणश्चात एकवचनोपगृहीतानामित्यर्थ । एकाधिकारिकाणामित्यनेन कर्तृभेदाभावात्क्रमापेक्षाऽऽवश्यकीति प्रदर्शितम् ।

(२) 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम' 'आर्यमणं चरुं निर्वपेत्स्वर्गकाम' 'प्राजापत्यं चरुं निर्वपेत् शतकृष्णलकाम' इत्य दिभिन्नफलकयागानान्त्वसम्बन्धात् न क्रम युगपत्पाठासम्भवादवर्जनीयतया प्राप्त पाठक्रमोऽध्ययनार्थ इति भाव ।

(३) इदमत्र तात्पर्यम् । अपां प्रणयनं दर्शपूर्णमासाङ्गमाश्रित्य 'गोदोहनेन पशुकामस्य' इति विहितस्य गोदोहनस्य, 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति दर्शाद्युत्तरकाले विहितस्य सोमयागस्य च शेषशेषिभावाभावेपि दर्शाद्यधिकृताधिकारत्वादेकवचनगृहीतानां तेषां युगपदनुष्ठानासम्भवात्क्रमाकाङ्क्षायां श्रुत्यादिभिः क्रमो बोध्यत इति स सम्भवति, अत्र तु जिज्ञास्ययोरधिकृताधिकारत्वाभावान्न क्रमसम्भव इति ।

अवैराग्यः कृतं तस्य कर्मानुष्ठानेन वैराग्योत्पादोपयोगिना, प्राग्भवीयकर्मानुष्ठानादेव तत्सिद्धेः। इममेव च पुरुषधौरेयभेदमधिकृत्य प्रवृत्ते श्रुतिः—'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेदि'ति। तदिदमुक्तम्—कर्मावबोधात् **"प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्ते"**रिति। अत एव न ब्रह्मचारिण ऋणानि सन्ति, येन तदपाकरणार्थं कर्मानुतिष्ठेत्। एतदनुरोधाच्च 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते' इति गृहस्थः सपद्यमान इति व्याख्येयम्। अन्यथा 'यदि वेतरथा ब्रह्मचर्यादेवे'ति श्रुतिर्विरुध्येत। गृहस्थस्यापि च ऋणापाकरण सत्त्व शुद्ध्यर्थमेव। जरामर्यवादो भस्मान्ततावादोन्त्येष्टयश्च कर्मजडानविदुषः प्रति, न त्वात्मतत्त्व पण्डितान्। तस्मात्तस्यानन्तर्यमथशब्दार्थो यद्विना ब्रह्मजिज्ञासा न भवति यस्मिंस्तु सति भवन्ती भवत्येव। न चेत्थं कर्मावबोधानन्तर्यं, तस्मान्न कर्मावबोधानन्तर्यमथशब्दार्थ इति सर्वमवदातम्।

(१)स्यादेतत्। मा भूदग्निहोत्रयवागूपाकवदार्थः क्रमः श्रौतस्तु भविष्यति, 'गृही भूत्वा वनी भवेत्' 'वनी भूत्वा प्रव्रजे'दिति जाबालश्रुतिर्गार्हस्थ्येन हि यज्ञाद्यनुष्ठानं सूचयति। स्मरन्ति च—

अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्मतः।
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत्॥

निन्दति च—

अनधीत्य द्विजो वेदाननुत्पाद्य तथात्मजान्।
अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः॥

इति, अत आह—**"यथा च हृदयाद्यवदानानामानन्तर्यनियमः"**। कुतः? 'हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षस' इत्यथाग्रशब्दाभ्यां **क्रमस्य विवक्षितत्वात्, न तथेह क्रमो विवक्षितः**। श्रुत्या तयैवानियमप्रदर्शनात् 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वे'ति। एतावता हि वैराग्यमुपलक्षयति। अत एव 'यदहरेव विरजेत्तदहरेव प्रव्रजदे'ति श्रुतिः। निन्दावचनं चाविशुद्धसत्त्वपुरुषाभिप्रायम्। अविशुद्धसत्त्वो हि मोक्षमिच्छन्नालस्यात्तदुपायेऽप्रवर्तमानो गृहस्थधर्ममपि नित्यनैमित्तिकमनाचरन् प्रतिक्षणमुपचीयमानपाप्माऽधोगतिं गच्छतीत्यर्थः।

स्यादेतत्। मा भूच्छ्रौत आर्थो वा क्रमः, (२)पाठस्थानमुख्यप्रवृत्तिप्रमाणकस्तु कस्मान्न

(१) धर्मब्रह्मावबोधयोर्हेतुहेतुमद्भावाभावेऽपि क्त्वाप्रत्ययश्रुत्या पौर्वापर्यं स्यादित्यभिप्रायेणाशङ्कते स्यादेत'दिति। यथा 'अग्निहोत्रं जुहोति, यवागूं पचतीति' श्रूयते। तत्र क्रमसंशये द्रव्यमन्तरा यागानिष्पत्तेरन्यद्रव्यानयने श्रुतवैयर्थ्यात् दृष्टप्रयोजने आरादुपकारकत्वस्यान्याय्यत्वात् यथा यवागूं पक्त्वा जुहोतीति क्रमस्तथेह न सम्भवतीति भावः।

(२) 'समिधो यजती'त्यादयः पञ्च प्रयाजा दर्शपौर्णमासाङ्गतया म्नाताः, तेषां पाठतः क्रमः। तथा ज्योतिष्टोमविकारे साद्यस्कयागेऽतिदेशप्राप्तास्त्रयः पशवः अग्नीषोमीयः सवनीयः अनुबन्ध्यश्च। विकृतौ 'सह पशूनालभेत' इति श्रवणात्प्राकृतः क्रमो निवर्तते। सहत्वं चेद सवनीयस्थाने। तथासति इतरयोस्तुल्यं स्थानचलनं भवति। तत्रैककालत्वलक्षणसहत्वस्यासम्भवात्स्थानात्सवनीयप्राथम्यं नियम्यत इत्ययं स्थानक्रमः। तथा 'सारस्वतौ भवत एतद्वै दैव्यं मिथुनं यत्सरस्वती सरस्वांश्च' इति युगपत्कर्मद्वयं श्रूयते। तत्र प्रथमं सरस्वतीदैवतस्य याज्यानुवाक्यायुगलं पठ्यते ततो सारस्वदैवतस्य। तस्मादेतत्क्रमेण कर्मद्वयक्रम इति शा-

भवतीत्यत आह—"**शेषशेषित्वे प्रमाणाभावात्**" (पृ० ७२ प० १)। शेषाणां समिदादीनां शेषिणां चाग्नेयादीना(१)मेकफलवदुपकारोपनिबद्धानामेकफलावच्छिन्नानामेकप्रयोगवचनोपगृहीतानामेकाधिकारिकर्तृकाणामेकपौर्णमास्यमावस्याकालसंबद्धाना युगपदनुष्ठानाशक्तेः सामर्थ्यात्क्रमप्राप्तौ तद्विशेषापेक्षायां पाठादयस्तद्भेदनियमाय प्रभवन्ति । यत्र तु न शेषशेषिभावो नाप्येकाधिकारावच्छेदो यथा (२)सौर्यार्यम्णप्राजापत्यादीना, तत्र क्रमभेदापेक्षाभावान्न पाठादिः क्रमविशेषनियमे प्रमाणम्, अवर्जनीयतया तस्य तत्रागतत्वात् । न चेह धर्मब्रह्मजिज्ञासयोः शेषशेषिभावे श्रुत्यादीनामन्यतम प्रमाणमस्तीति । ननु शेषशेषिभावाभावेपि क्रमनियमो दृष्टो, यथा गोदोहनस्य पुरुषार्थस्य दर्शपौर्णमासिकैरङ्गैः सह, यथा वा दर्शपौर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति दर्शपौर्णमाससोमयोरशेषशेषिणोरित्यत आह—"**अधिकृताधिकारे च प्रमाणाभावात्**"इति योजना । स्वर्गकामस्य हि दर्शपौर्णमासाधिकृतस्य पशुकामस्य सतो दर्शपौर्णमासक्रत्वर्थाप्प्रणयनाश्रिते गोदोहनेऽधिकारः । नो खलु गोदोहनद्रव्यमव्याप्रियमाणं साक्षात् पशून् भावयितुमर्हति । न च व्यापारान्तराविष्ट श्रूयते यतस्तदङ्गक्रममतिपतेत् । अप्प्रणयनाश्रितं तु प्रतीयते 'चमसेनाप. प्रणयेद्गोदोहनेन पशुकामस्ये'ति समभिव्याहारात् । योग्यत्वाच्चास्यापा प्रणयन प्रति । तस्मात् क्रत्वर्थाप्प्रणयनाश्रितत्वाद्गोदोहनस्य तत्क्रमेण पुरुषार्थमपि गोदोहनं क्रमवदिति सिद्धम्(३) । श्रुतिनिराकरणेनैवेष्टिसोमक्रमवदपि क्रमोप्यपास्तो वेदितव्यः ।

शेषशेषित्वाधिकृताधिकाराभावेपि क्रमो विवक्ष्येत, यद्येकफलावच्छेदो भवेत्, यथाग्नेयादीनां षण्णामेकस्वर्गफलावच्छिन्नाना, यदि वा जिज्ञास्यब्रह्मणोंशो धर्मः स्यात्, यथा चतुर्लक्षणीव्युत्पाद्यं ब्रह्म केनचित्केनचिदंशेनैकैकेन लक्षणेन व्युत्पाद्यते, तत्र चतुर्णां लक्षणानां जिज्ञास्याभेदेन परस्परसम्बन्धे सति क्रमो विवक्षितस्तथेहाप्येकजिज्ञास्यतया धर्मब्रह्मजिज्ञासयोः क्रमो विवक्ष्येत, न चैतदुभयमप्यस्तीत्याह—"**फलजिज्ञास्यभेदाच्च**" । फलभेदं विभजते "**अभ्युदयफलं धर्मज्ञान**"मिति ।

---

यते मन्त्राणां प्रयोगशेषत्वात् । अङ्गविशेषनिर्वापादीना क्रमाकांक्षायां मुख्यक्रमेणैव क्रम इति नियम्यते सोऽय मुख्यक्रमः । इदं च प्रवृत्तिक्रमस्याप्युदाहरण वोध्यम् । याज्यानुवाक्याप्रवृत्तिक्रमेण निर्वापादीना क्रमस्य सिद्धत्वादित्यल विस्तरस्तु कल्पतरौ द्रष्टव्य ।

(१) एकप्रयोगवचनपरिग्रहे हेतुमाह एकफलवदिति । एकश्चासौ फलवत प्रधानस्य दर्शपौर्णमासादेरुपकारस्तस्मिन्समुच्चित्य साधनत्वेनोपनिबद्धा. शेषा शेषिणश्चात एकवचनोपगृहीतानामित्यर्थ । एकाधिकारिकाणामित्यनेन कर्तृभेदाभावात्क्रमापेक्षाऽऽवश्यकीति प्रदर्शितम् ।

(२) 'सौर्यं चरु निर्वपेद्ब्रह्मवर्चसकाम' 'आर्यमण चरु निर्वपेत्स्वर्गकाम' 'प्राजापत्य चरुं निर्वपेत् शतकृष्णलकाम' इत्यादिभिन्नफलकयागानान्त्वसम्बन्धात् न क्रम युगपत्पाठासम्भवादवर्जनीयतया प्राप्त पाठक्रमोऽध्ययनार्थ इति भाव ।

(३) इदमत्र तात्पर्यम् । अपा प्रणयनं दर्शपूर्णमासाङ्गमाश्रित्य 'गोदोहनेन पशुकामस्य' इति विहितस्य गोदोहनस्य, 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति दर्शाद्युत्तरकाले विहितस्य सोमयागस्य च शेषशेषिभावाभावेपि दर्शाद्यधिकृताधिकारत्वादेकवचनगृहीताना तेषा युगपदनुष्ठानासम्भवात्क्रमाकांक्षाया श्रुत्यादिभि क्रमो बोध्यत इति स सम्भवति, अत्र तु जिज्ञासयोरधिकृताधिकारत्वाभावान्न क्रमसम्भव इति ।

(१)जिज्ञासाया वस्तुतो ज्ञानतन्त्रत्वाज्ज्ञानफलं जिज्ञासाफलमिति भावः। (२)न केवलं स्वरूपतः फलभेदः, तदुत्पादनप्रकारभेदादपि तद्भेद इत्याह—"**तच्चानुष्ठानापेक्षं ब्रह्मज्ञानं च नानुष्ठानान्तरापेक्षम्**" ( पृ० ७५ पं० )। शाब्दज्ञानाभ्यासान्नानुष्ठानान्तरमपेक्षते, नित्यनैमित्तिककर्मानुष्ठानसहभावस्यापास्तत्वादिति भावः। जिज्ञास्यभेदमात्यन्तिकमाह—"**भव्यश्च धर्म**" इति। भविता भव्यः, कर्तरि कृत्यः। (३)भविता च भावकव्यापारनिर्वर्त्यतया तत्तन्त्र इति ततः प्राग् ज्ञानकाले नास्तीत्यर्थः। भूतं सत्य(४), सदेकान्ततो न कदाचिदसदित्यर्थः। न केवलं स्वरूपतो जिज्ञास्ययोर्भेदो ज्ञापकप्रमाणप्रवृत्तिभेदादपि भेद इत्याह—"**चोदनाप्रवृत्तिभेदाच्च**"। चोदनेति वैदिकं शब्दमाह, विशेषेण सामान्यस्य लक्षणात्। प्रवृत्तिभेदं विभजते—"**या हि चोदना धर्मस्ये**"ति। (५)आज्ञादीनां पुरुषाभिप्रायभेदानामसम्भवादपौरुषेये वेदे चोदनोपदेशः। अत एवोक्तं '(६)तस्य ज्ञानमुपदेश' इति। सा च स्वसाध्ये पुरुषव्यापारे भावनायां, तद्विषये च यागादौ, स हि भावनाविषयः, तदधीननिरूपणत्वात् प्रयत्नस्य भावनायाः। 'षिञ् बन्धन'इत्यस्य धातोर्विषयपदव्युत्पत्तेः। (७)भावनायास्तद्द्वारेण च यागादेरपेक्षितोपायतामवगमयन्ती तत्रेच्छोपहारमुखेन पुरुषं नियुञ्जानैव यागादिधर्ममवबोधयति नान्यथा। ब्रह्मचोदना तु पुरुषमवबोधयत्येव केवलं न तु प्रवर्तयन्त्यवबोधयति। कुतः? अवबोधस्य प्रवृत्तिरहितस्य चोदनाजन्यत्वात्। नन्वात्मा ज्ञातव्य इत्येतद्विधिपरैर्वेदान्तैस्तदेकवाक्यतयाऽवबोधे प्रवर्तयद्भिरेव पुरुषो ब्रह्मावबोध्यत इति समानत्वं धर्मचोदनाभिर्ब्रह्मचोदनानामित्यत आह—"**न पुरुषोऽवबोधे नियुज्यते**"। अयमभिसन्धिः। न तावद् ब्रह्मसाक्षात्कारे पुरुषो नियोक्तव्यः, तस्य ब्रह्मस्वाभाव्येन नित्यत्वादकार्यत्वात्। नाप्युपासनायां, तस्या अपि ज्ञानप्रकर्षे हेतुभावस्यान्वयव्यतिरेकसिद्धतया प्राप्तत्वेनाविधेयत्वात्। नापि शाब्दबोधे, तस्याप्यधीतवेदस्य पुरुषस्य विदितपदतदर्थस्य समधिगतशाब्द-

---

( १ ) संग्रहे जिज्ञास्ययोः फलादिभेदमभिधाय विभजने ज्ञानयोस्तत्कथनमयुक्तमित्याशंक्याह जिज्ञासाया इति। इच्छाया ज्ञानपारतन्त्र्याज्ज्ञानफलमेव जिज्ञासाफलमिति भावः।

( २ ) फलभेदे वक्तव्ये कारणभेदकथनं भाष्येऽनुपयोगीत्याशंक्याह न केवलमिति। विधेयाविधेयाक्रियाज्ञानफलयोरुत्पाद्यता व्यङ्ग्यता च वैलक्षण्यमित्यर्थः।

( ३ ) ननु भवितुः कथं ज्ञानकाले सत्त्वाभाव इत्याशंक्य ज्ञानोत्तरभाविप्रयोजकव्यापारापेक्षणादित्याह भविता चेति। भवतिरसिद्धक्रियाकर्तृवाची न पच्यादिवत्सिद्धकर्तृकक्रियस्ततो भविता स्वतोऽसिद्धस्सन् भावकव्यापारापेक्षनिष्पत्तिरर्थात् साध्यो भवति इत्यर्थः।

( ४ ) अनेनातीतवाचित्वभ्रमोऽपास्त।

( ५ ) आज्ञादीनामिति। आदिनाऽभ्यर्थनानुज्ञे बोध्ये। तत्र उत्कृष्टपुंसः स्वाभिलषितोपायकार्यत्वाभिधानमाज्ञा यथा गामानयेति, हीनस्यैतदेवाभ्यर्थना यथा वटुमध्यापयेति, प्रवृत्तस्य प्रयोज्यस्य तद्धितोपायोक्तिरनुज्ञा यथा—तथा कुरु यथा हितमिति। नैतासां वेदे सम्भव इत्युपदेशश्चोदनेति भाव।

( ६ ) तस्य धर्मस्य ज्ञानं प्रमाणमुपदेशो विधिरिति जै० १ अ० ५ सूत्रैकदेशार्थो बोध्य। स्वसाध्य इति। स्वस्याः प्रतिपाद्ये विषये भावनायामित्यर्थ।

( ७ ) ननु भावनाधात्वर्थयोर्विधिशब्देन पुरुषप्रवर्तनमशक्यं प्रमाणस्य वाय्वादिवत्प्रेरकत्वासम्भवादित्याशंक्याह भावनाया इति। साक्षाद्भावनायास्तदवच्छेदकत्वद्वारा धात्वर्थस्य चेष्टोपायतां बोधयित्वा तत्रेच्छामुपहरन् विधिः पुरुषं प्रवर्तयतीति चोदनाया धर्मबोधकत्वं सिध्यतीत्यर्थ।

न्यायतत्वस्याप्रत्यूहमुत्पत्तेः । अत्रैव दृष्टान्तमाह–"यथाक्षार्थे"ति ( पृ० ७६ पं० १ )। दार्ष्टान्तिके योजयति "तद्वत्" इति । अपि चात्मज्ञानविधिपरेषु वेदान्तेषु नात्मतत्वविनि-श्चयः शाब्दः स्याद्, नहि तदात्मतत्वपरास्ते, किन्तु तज्ज्ञानविधिपराः, यत्पराश्च ते त एव तेषामर्थाः । न च बोधस्य बोध्यनिष्ठत्वादपेक्षितत्वादन्यपरेभ्योपि बोध्यतत्वविनिश्चयः, (१)समारोपेणापि तदुपपत्तेः । तस्मान्न बोधविधिपरा वेदान्ता इति सिद्धम् । प्रकृतमुपसहरति "तस्मात्किमपि वक्तव्य"मिति (पृ० ७७ पं० १) । यस्मिन्नसति ब्रह्मजिज्ञासा न भव-ति सति तु भवन्ती भवत्येवेत्यर्थः । तदाह–"उच्यते नित्यानित्यवस्तुविवेक" इत्या-दि । नित्यः प्रत्यगात्मा, अनित्या देहेन्द्रियविषयादयः । (२)तद्विषयश्चेद्विवेको निश्चयः, कृत-मस्य ब्रह्मजिज्ञासया, ज्ञातत्वाद् ब्रह्मणः । अथ विवेको ज्ञानमात्रं न निश्चयः, तथासत्येष विपर्या सादन्यः संशयः स्यात्, तथा च न वैराग्य भावयेत्, अभावयन् कथं ब्रह्मजिज्ञासाहेतुः । (३)तस्मादेवं व्याख्येयम्–नित्यानित्ययोर्वसतीति नित्यानित्यवस्तु तद्धर्मः, नित्यानित्ययोर्ध-र्मिणोस्तद्धर्माणां च विवेको नित्यानित्यवस्तुविवेकः । एतदुक्तं भवति–मा भूदिदं तदृतं नित्यमिदं तदनृतमनित्यमिति धर्मिविशेषयोर्विवेकः, धर्मिमात्रयोर्नित्यानित्ययोस्तद्धर्मयोश्च विवेकं निश्चिनोत्येव । नित्यत्वं सत्यत्वं तद्यस्यास्ति तन्नित्यं सत्यं, तथा चाऽऽस्थागोचरः । अनित्यत्वमसत्यत्वं तद्यस्यास्ति तदनित्यमनृतं, तथा चानास्थागोचरः । (४)तदेतेष्वनुभूयमा नेषु युष्मदस्मत्प्रत्ययगोचरेषु विषयविषयिषु यदृतं नित्यं सुखं व्यवस्थास्यते तदास्थागोचरो भविष्यति, यत्त्वनित्यमनृतं भविष्यति तापत्रयपरीतं तत् त्यक्ष्यत इति । सोयं नित्यानित्यव-स्तुविवेकः प्रागभवीयादैहिकाद्वा कर्मणो विशुद्धसत्वस्य भवत्यनुभवोपपत्तिभ्याम्(५) । न खलु सत्यं नाम न किंचिदस्तीति वाच्यम्, तदभावे तदधिष्ठानस्यानृतस्याप्यनुपपत्तेः, शून्यवादि-नामपि शून्यताया एव सत्यत्वात् । (६)अथास्य पुरुषधौरेयस्यानुभवोपपत्तिभ्यामेवं सुनिपुणं नि-रूपयत आ च सत्यलोकाद् आ चावीचे'र्जायस्व म्रियस्वे'ति विपरिवर्तमानं क्षणमुहूर्तयामाहो-रात्रार्धमासमासर्त्वयनवत्सरयुगचतुर्युगमन्वन्तरप्रलयमहाप्रलयमहासर्गावान्तरसर्गसंसारसाग-रोर्मिभिरनिशमुह्यमानं तापत्रयपरीतमात्मानं च जीवलोकं चावलोक्यास्मिन् संसारमण्डले-

---

(१) यथा विशिष्टविधौ विशेषणविधिस्तथा विषयविशिष्टप्रतिपत्तिविधिसामर्थ्यात् ब्रह्मनिश्चयः स्या-दित्याशंक्य समाधत्ते समारोपेणापीति । 'वाचं धेनुमुपासीत' इत्यादावारोप्यस्यापि विधेयज्ञानविषयत्वात्प्र-तिपत्तिविधिर्न विशेषणसत्तामाक्षिपतीति भावः ।

(२) नित्यानित्यवस्तुविवेक इति भाष्यमाक्षिपति तद्विषयश्चेति ।

(३) समाधत्ते तस्मादिति । तथाच निश्चय एव विवेकः । न चैवसति शास्त्रानारम्भः शक्यः, इदं नित्यमिदमनित्यमित्यनिश्चयात् तदर्थं शास्त्रारम्भस्यावश्यकत्वादिति भावः ।

(४) सत्यासत्ययोरुपादेयानुपादेयत्वे हेतुमाह तदेतेष्विति । सुखत्वान्नित्यमुपादेयं दुःखत्वान्नित्यं त्याज्यमित्यर्थः ।

(५) दृष्टेऽनुभवः, उपपत्तिस्त्वदृष्टे ग्राह्या ।

(६) न नित्यादिविवेकमात्रं वैराग्यजनकमपितु तदभ्यास इत्याह अथास्येति । अस्य पुरुषधौरेयस्य संसारमण्डलेऽनित्यत्वादिविषयं प्रसंख्यानं ज्ञानमुपावर्तत इत्यन्वयः । अवीचिः—नरकविशेषः । जायस्व म्रियस्वेति 'क्रियासमभिहारे लोड्'ति पौनःपुन्ये सर्वलकारापवादेन लोड्विधानाज्जननमरणाभ्यामावर्तमानं क्षणादिकाले संसारसागरोर्मिरूपैरनिशमुह्यमानं जीवगणं वीक्ष्येति योजना ।

ऽनित्याशुचिदुःखात्मकं प्रसंख्यानमुपावर्तते, ततोऽस्यैतादृशान्नित्यानित्यवस्तुविवेकलक्षणात् प्रसंख्यानाद् **"इहामुत्रार्थभोगविरागो"** भवति। अर्थ्यते प्रार्थ्यत इत्यर्थः, फलमिति यावत्, तस्मिन् विरागोऽनाभोगात्मिकोपेक्षाबुद्धिः(१), ततः **"शमदमादिसाधनसंपत्"**। रागादिकषायमदिरामत्तं हि मनस्तेषु तेषु विषयेषूच्चावचमिन्द्रियाणि प्रवर्तयद्विविधाश्च प्रवृत्तीः पुण्यापुण्यफला भावयत् पुरुषमतिघोरे विविधदुःखज्वालाजटिले संसारहुतभुजि जुहोति। प्रसंख्यानाभ्यासलब्धवैराग्यपरिपाकभग्नरागादिकषायमदिरामदं तु मनः पुरुषेणावजीयते वशीक्रियते। सोऽयमस्य वैराग्यहेतुको मनोविजयः शम इति वशीकारसंज्ञ इति चाख्यायते। विजितं च मनस्तत्त्वविषयविनियोगयोग्यता नीयते, सेयमस्य योग्यता दमः। यथा दान्तोऽयं वृषभयुवा हलशकटादिवहनयोग्यः कृत इति गम्यते। आदिग्रहणेन च विषयतितिक्षातदुपरमतत्त्वश्रद्धाः सगृह्यन्ते। अत एव श्रुतिः 'तस्मात् शान्तो दान्त उपरतास्तितिक्षुः श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येत् सर्वमात्मनि पश्यती'ति। तदेतस्य शमदमादिरूपसाधनस्य सत्प्रकर्षः शमदमादिसाधनसंपत्। ततोऽस्य संसारबन्धनान्मुमुक्षा भवतीत्याह—**"मुमुक्षुत्वं च"**। (२)तस्य च नित्यशुद्धमुक्तसत्यस्वभावब्रह्मज्ञानं मोक्षस्य कारणमित्युपश्रुत्य तज्जिज्ञासा भवति धर्मजिज्ञासायाः प्रागूर्ध्वं च, तस्मात्तेषामेवानन्तर्यं न धर्मजिज्ञासाया इत्याह **"तेषु ही"**ति। न केवलं जिज्ञासामात्रमपि तु ज्ञानमपीत्याह **"ज्ञातुं च"**। उपसंहरति **"तस्मा"**दिति। ( पृ० ७८ पं० २ )

क्रमप्राप्तमतःशब्दं व्याचष्टे **"अतः शब्दो हेत्वर्थः"**। तमेवातःशब्दस्य हेतुरूपमर्थमाह **"यस्माद्वेद एवे"**ति।(३)अत्रैवं परिचोद्यते—सत्यं यथोक्तसाधनसंपत्त्यनन्तरं ब्रह्मजिज्ञासा भवति, सैव त्वनुपपन्ना, इहामुत्रफलोपभोगविरागस्यानुपपत्तेः। अनुकूलवेदनीयं हि फलम्, इष्टलक्षणत्वात् फलस्य। न चानुरागहेतावस्य वैराग्यं भवितुमर्हति। दुःखानुषङ्गदर्शनात् सुखेऽपि वैराग्यमिति चेत्, हन्त भोः सुखानुषङ्गाद्दुःखेऽप्यनुरागो न कस्माद्भवति। तस्मात्सुख उपादीयमाने दुःखपरिहारे प्रयतितव्यम्। अवर्जनीयतया दुःखमागतमपि परिहृत्य सुखमात्रं भोक्ष्यते। तद्यथा मत्स्यार्थी सशल्कान्(४) सकण्टकान् मत्स्यानुपादत्ते, स यावदादेयं तावदादाय विनिवर्तते। यथा वा धान्यार्थी सपलालानि धान्यान्याहरति, स यावदादेयं तावदुपादाय निवर्तते। तस्माद्दुःखभयान्नानुकूलवेदनीयमैहिकं वाऽऽमुष्मिकं वा सुखं परित्यक्तुमुचितम्। नहि मृगाः सन्तीति शालयो नोप्यन्ते, भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते। अपि च दृष्टं सुखं चन्दनवनितादिसङ्गजन्म क्षयितालक्षणेन दुःखेनाघ्रातत्वादतिभीरुणा त्यज्येतापि, न त्वामुष्मिकं स्वर्गादि, तस्याविनाशित्वात्। श्रूयते हि 'अपाम सोमममृता अभूमे'ति। तथाच 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति'। न

---

(१) आभोगो मनस्कार, आदर इति यावत्, तथाचानादरात्मिकोपेक्षाबुद्धिर्विराग इत्यर्थः।

(२) ननूक्तसम्पत्त्या मोक्षेच्छा भवतु तावता ब्रह्मजिज्ञासा कथं स्यादित्यत आह तस्य चेति।

(३) अत्राथशब्देनैव जिज्ञासाहेतुप्रतिपादनात्किमत शब्देनेत्याशंक्य, नानेन जिज्ञासां प्रति साधनकलापस्य हेतुतोच्यते, किन्तु पूर्वोक्तहेतुस्वरूपासिद्धिपरिहार इत्याह अत्रैवमित्यादिना।

(४) शल्कं-शकलम्।

च कृतकत्वहेतुकं विनाशित्वानुमानमत्र संभवति(१), नराशिरःकपालशौचानुमानवदागमबाधितविषयत्वात्(२)। तस्माद्यथोक्तसाधनसंपत्त्यभावान्न ब्रह्मजिज्ञासेति प्राप्तम्। एवं प्राप्ते आह भगवान् सूत्रकारः "अत" इति। तस्यार्थं व्याचष्टे भाष्यकार· "यस्माद्वेद एवे"ति। अयमभिसन्धि·। सत्य मृगभिक्षुकादयः शक्याः परिहर्तुं पाचककृषीवलादिभिः, दुःखं त्वनेकविधानेककारणसंपातजमशक्यपरिहारम्, अन्ततः साधनपारतन्त्र्यक्षयितालक्षणयोर्दुःखयोः समस्तकृतकसुखाविनाभावनियमात्। नहि मधुविषसंपृक्तमन्नं विषं परित्यज्य समधु शक्यं शिल्पिवरेणापि भोक्तुम्। (३)क्षयितानुमानोपोद्बलितं च "तद्यथेह कर्मचित'इत्यादि वचनं क्षयिताप्रतिपादकम् 'अपाम सोमामि'त्यादिकं वचनं मुख्यासभवे (४)जघन्यवृत्तितामापादयति। यथाहुः पौराणिका·—'आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते' इति।

(५)अत्र च ब्रह्मपदेन तत्प्रमाणं वेद उपस्थापितः। स च योग्यत्वात् 'तद्यथेह कर्मचित' इत्यादिरत इति सर्वनाम्ना परामृश्य हेतुपञ्चम्या निर्दिश्यते। स्यादेतत्, यथा स्वर्गादेः कृतकस्य सुखस्य दुःखानुषङ्गस्तथा ब्रह्मणोऽपीत्यत आह—"तथा ब्रह्मविज्ञानादपी"ति (पृ० ७९-पं० १)। तेनायमर्थ·—अतः स्वर्गादीनां क्षयिताप्रतिपादकाद् ब्रह्मज्ञानस्य च परमपुरुषार्थताप्रतिपादकादागमाद् यथोक्तसाधनसंपत् ततश्च जिज्ञासेति सिद्धम्। ब्रह्मजिज्ञासापदव्याख्यानमाह 'ब्रह्मण" इति। षष्ठीसमासप्रदर्शनेन प्राचां वृत्तिकृतां ब्रह्मणे जिज्ञासा ब्रह्मजिज्ञासेति चतुर्थीसमासः परास्तो वेदितव्यः। (६)'तादर्थ्यसमासे प्रकृतिविकृतिग्रहणं कर्त्तव्यमि'ति कात्यायनीयवचनेन यूपदार्वादिष्वेव प्रकृतिविकारभूतेषु चतुर्थीसमासनियमात्, अप्रकृतिविकारभूत इत्येवमादौ तन्निषेधात्, 'अश्वघासादय· षष्ठीसमासा भविष्यन्ती'त्यश्वघासादिषु षष्ठीसमासप्रतिविधानात्, षष्ठीसमासेऽपि च ब्रह्मणो वास्तवप्राधान्योपपत्तेरिति। स्यादेतत्, ब्रह्मणो जिज्ञासेत्युक्ते तत्रानेकार्थत्वाद् ब्रह्मशब्दस्य सशय·—'कस्य ब्रह्मणो जिज्ञासे'ति। अस्ति ब्रह्मशब्दो विप्रत्वजातौ यथा ब्रह्महत्येति, अस्ति च वेद यथा (७)ब्रह्मोज्झमिति,

---

(१) स्वर्गादि विनश्वरं कृतकत्वाद् घटवदित्यनुमानं न सम्भवतीत्यर्थं।

(२) नरेति। नराशिरःकपालं शुचि प्राण्यङ्गत्वाच्छङ्खवदित्यनुमानस्य यथा 'नार स्पृष्ट्वाऽस्थि सस्नेहं सवासा जलमाविशेत्' इत्यागमेन विरोधस्तथोक्तागमेनास्यानुमानस्य बाधितत्वादित्यर्थ।

(३) कृतकत्वानुमानानुगृहीतात् 'तद्यथेति'वाक्यात् न्यायहीनम् 'अपाम' इत्यादिवाक्यमापेक्षिकामृतत्वादिपरतया व्याख्येयमित्य ह क्षयितेति।

(४) जघन्यवृत्तिर्लक्षणा, तथाचात्र लक्षणायाऽमृतत्वपदेन चिरस्थायित्वं ग्राह्यमिति भावः।

(५) नित्यानित्यविवेकादेरप्रस्तुतत्वात्तदानन्तर्यमथशब्दार्थो न युक्तोऽत एव कर्मणां क्षयिष्णुफलत्वं ब्रह्मज्ञानस्य मोक्षहेतुत्वं चातःशब्देन न परामर्शार्हमिति भास्करमतं भाष्यव्याख्ययाऽनुकम्पयन्नाह अत्र चेति। तर्हि सकलवेदान्ताः परामृश्येरन्नत आह योग्यत्वादिति। अथशब्दोक्तहेतुत्वसमर्थनं योग्यत्वादित्यर्थ।

(६) प्राचीनोक्तचतुर्थीसमासाभावे हेतुमाह तादर्थ्येति। पाणिनिना 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः' इति (२।१।३६) सूत्रेण तादर्थ्यचतुर्थी विहिता, तत्र च कात्यायनेन प्रकृतिविकृतिभावस्यावश्यकत्वं प्रदर्शितम्। अत एव 'यूपाय दारु' इति चतुर्थीसमासो युक्तो न तु अश्वाय घास इति, तथाचात्र ब्रह्मजिज्ञासयो प्रकृति विकाराभावान्न चतुर्थीसमास इति भाव।

(७) ब्रह्मोऽज्झं—वेदत्याग।

अस्ति च परमात्मनि यथा ब्रह्म वेद ब्रह्मैव भवतीति, तमिमं संशयमपाकरोति—"**ब्रह्म च वक्ष्यमाणलक्षण**"मिति ( पृ० ८० पं १ ) यतो ब्रह्मजिज्ञासां प्रतिज्ञाय तज्ज्ञापनाय परमात्मलक्षणं प्रणयति ततोऽवगच्छामः परमात्मजिज्ञासैवेयं न विप्रत्वजात्यादिजिज्ञासेत्यर्थः। 'षष्ठीसमासपरिग्रहेऽपि नेयं कर्मषष्ठी, किन्तु शेषलक्षणा, संबन्धमात्रं च शेष इति ब्रह्मणो जिज्ञासेत्युक्ते ब्रह्मसबन्धिनी जिज्ञासेत्युक्तं भवति, तथा च ब्रह्मस्वरूपप्रमाणयुक्तिसाधनप्रयोजनजिज्ञासाः सर्वा ब्रह्मजिज्ञासार्था ब्रह्मजिज्ञासयाऽवरुद्धा भवन्ति, साक्षात्पारम्पर्येण च ब्रह्मसबन्धात्, कर्मषष्ठ्या तु ब्रह्मशब्दार्थः कर्म, स च स्वरूपमेवेति तत्प्रमाणादयो नावरुध्येरन्, तथा चाप्रतिज्ञातार्थचिन्ता प्रमाणादिषु भवेदि'ति ये मन्यन्ते तान्प्रत्याह "**ब्रह्मण**" इति। "**कर्मणी**"ति। अत्र हेतुमाह "**जिज्ञास्येति**" ( पृ० ८१ पं० १ )। इच्छायाः प्रतिपत्त्यनुबन्धो ज्ञानं, ज्ञानस्य च ज्ञेयं ब्रह्म, न खलु ज्ञानं ज्ञेयं विना निरूप्यते, न च जिज्ञासा ज्ञानं विनेति प्रतिपत्त्यनुबन्धत्वात् प्रथमं जिज्ञासा कर्मैवापेक्षते, न तु संबन्धिमात्रम्, तदन्तरेणापि सति कर्मणि तन्निरूपणात्(१), नहि (२)चन्द्रमसमादित्यं चोपलभ्य कस्यायमिति सम्बन्ध्यन्वेषणा भवति, भवति तु ज्ञानमित्युक्ते विषयान्वेषणा किंविषयमिति, तस्मात्प्रथममपेक्षितत्वात् कर्मतयैव ब्रह्म सबध्यते, न संबन्धितामात्रेण तस्य जघन्यत्वात्, तथा च कर्मणि षष्ठीत्यर्थः। (३)ननु सत्यं न जिज्ञास्यमन्तरेण जिज्ञासा निरूप्यते, जिज्ञास्यान्तरं त्वस्या भविष्यति ब्रह्म तु शेषतया संभन्त्स्यते इत्यत आह—"**जिज्ञास्यन्तरे**"ति। (४)निगूढाभिप्रायश्चोदयति—"**ननु शेषषष्ठीपरिग्रहेऽपी**"ति। सामान्यसम्बन्धस्य विशेषसम्बन्धाविरोधेन कर्मताया अविघातेन जिज्ञासानिरूपणोपपत्तेरित्यर्थः। निगूढाभिप्राय एव दूषयति—"**एवमपि प्रत्यक्षं ब्रह्मण**" इति। (५)वाच्यस्य कर्मत्वस्य जिज्ञासया प्रथममपेक्षितस्य, प्रथमसम्बन्धार्हस्य चान्वयपरित्यागेन पश्चात्कथंचिदपेक्षितस्य सम्बन्धिमात्रस्य सम्बन्धो जघन्यः प्रथमः प्रथमश्च जघन्य इति सुव्याहृतं न्यायतत्त्वम्। (६)प्रत्यक्षपरोक्षाभिधानं च प्राथम्याप्राथम्यस्फुटत्वास्फुटत्वाभिप्रायम्। चोदकः स्वाभिप्रायमुद्घाटयति—"**न व्यर्थो ब्रह्माश्रिताशेषे**"ति (पृ० ८२ पं० १)। व्याख्यातमेतदधस्तात्। समाधाता स्वाभिसन्धिमुद्घाटयति—"**न प्रधानपरिग्रह**" इति। वास्तवं प्राधान्यं ब्रह्मणः। शेषं सनिदर्शनमतिरो-

---

( १ ) तन्निरूपणादिति। अयं भावः। स्वरूपतो जिज्ञासायां निरूपितायां पश्चात्सम्बंध्यपेक्षा जायते, ब्रह्म च ज्ञानद्वारा जिज्ञासारूपनिरूपकमिति प्रथमोदिताकाङ्क्षावशाद् ब्रह्म जिज्ञासाया कर्मत्वेन सम्बध्यते न तु सम्बन्धिमात्रतयेति।

( २ ) जिज्ञासाज्ञानयोर्विषयाधीननिरूपणं वैधर्म्यदृष्टान्तेन प्रपञ्चयन्नाह नहीति।

( ३ ) प्रमाणयुक्त्यादिकमेव जिज्ञासाया कर्म स्यात् ब्रह्म तु सम्बन्धित्वेनैव निर्दिश्यतामित्यभिप्रायेणाशङ्कते नन्विति।

( ४ ) ननु श्रुतकर्मत्यागायोगे स्थिते कथं शेषषष्ठी शंक्यत इत्यत आह निगूढाभिप्राय इति। प्रमाणादिबहुश्रो तत्त्वसिद्धिरित्यभिप्रायस्यात्र निगूढता बोध्या।

( ५ ) वाच्यस्येति। शब्दोपात्तत्वेन साक्षात्सन्निधिः, प्रथमापेक्षितस्येत्याकाङ्क्षा, प्रथमसम्बन्धार्हस्येति योग्यता, एतैर्युक्तस्य कर्मत्वस्य सम्बन्धः प्रथमः सन्नपि जघन्यः एतैर्वियुक्तस्य सम्बन्धिमात्रस्य सम्बन्धो जघन्योऽपि प्रथम इति कल्पनं न युक्तमित्यर्थः।

( ६ ) ननु 'एवमपि प्रत्यक्ष' इति भाष्ये प्रत्यक्षनिर्देशो न युक्तः कर्मत्वस्य शाब्दत्वादत आह प्रत्यक्षेति।

हितार्थम्, श्रुत्यनुगमश्चातिरोहितः । तदेवमभिमतं समासं व्यवस्थाप्य जिज्ञासापदार्थमाह—**"ज्ञातु"मिति** (पृ० ८३ पं० ८) । स्यादेतत्, न ज्ञानमिच्छाविषयः, सुखदुःखावाप्तिपरिहारौ वा तदुपायौ वा तद्द्वारेणेच्छागोचरः, न चैवं ब्रह्मविज्ञानम्, न खल्वेतदनुकूलमिति वा प्रतिकूलनिवृत्तिरिति वाऽनुभूयते, नापि तयोरुपायः, तस्मिन् सत्यपि सुखभेदस्यादर्शनात्, अनुवर्तमानस्य च दुःखस्यानिवृत्तेः, तस्मान्न सूत्रकारवचनमात्रादिषिकर्मता ज्ञानस्येत्यत आह—**"अवगतिपर्यन्त"मिति** । न केवलं ज्ञानमिष्यते किन्त्ववगतिं साक्षात्कारं कुर्वदवगतिपर्यन्तं सन्वाच्याया इच्छायाः कर्म । कस्मात्? **फलविषयत्वादिच्छायाः,** (१)तदुपायं फलपर्यन्तं गोचरयतीच्छेति शेषः । ननु भवत्ववगतिपर्यन्तं ज्ञानं, किमेतावताभीष्टं भवति, नह्यपेक्षणीयविषयमवगतिपर्यन्तमपि ज्ञानमिष्यत इत्यत आह—**"ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्म"** (पृ० ८४ पं० १) । (२)भवतु ब्रह्मविषयावगतिः, एवमपि कथमिष्टेत्यत आह—**"(३)ब्रह्मावगतिर्हि पुरुषार्थः"** । किमभ्युदयः? न, किन्तु निःश्रेयसं विगलितनिखिलदुःखानुषङ्गपरमानन्दघनब्रह्मावगतिर्ब्रह्मणः स्वभाव इति सैव निःश्रेयसं पुरुषार्थ इति । स्यादेतत्, न ब्रह्मावगतिः पुरुषार्थः, पुरुषव्यापारव्याप्यो हि पुरुषार्थः, न चास्या ब्रह्मस्वभावभूताया उत्पत्तिविकारसंस्कारप्राप्तयः सम्भवन्ति, तथासत्यनित्यत्वेन तत्स्वाभाव्यानुपपत्तेः, न चोत्पत्त्याद्यभावे व्यापारव्याप्यता, तस्मान्न ब्रह्मावगतिः पुरुषार्थ इत्यत आह—**"निःशेषसंसारबीजाविद्याद्यनर्थनिबर्हणात्"** । सत्यं, ब्रह्मावगतौ ब्रह्मस्वभावे नोत्पत्त्यादयः सम्भवन्ति, तथाप्यनिर्वचनीयानाद्यविद्यावशाद् ब्रह्मस्वभावोऽपराधीनप्रकाशोऽपि प्रतिभानपि(४) न प्रतिभातीव पराधीनप्रकाश इव देहेन्द्रियादिभ्यो भिन्नोऽप्यभिन्न इव भासत इति संसारबीजाविद्याद्यनर्थनिबर्हणात्, प्रागप्राप्त इव तस्मिन्सति प्राप्त इव भवतीति पुरुषेणार्थ्यमानत्वात्पुरुषार्थ इति युक्तम् । अविद्यादित्यादिग्रहणेन तत्संस्कारोऽवरुध्यते । अविद्यादिनिवृत्तिस्तूपासनाकार्यादन्तःकरणवृत्तिभेदात् साक्षात्कारादिति द्रष्टव्यम्(५) । उपसंहरति—**"(६)तस्माद् ब्रह्म जिज्ञासितव्यम्"** उक्तलक्षणेन मुमुक्षुणा । न खलु तज्ज्ञानं विना सवासनविविधदुःखनिदानमविद्योच्छिद्यते । न च तदुच्छेदमन्तरेण विगलितनिखिलदुःखानुषङ्गानन्दघनब्रह्मात्मतासाक्षात्काराविर्भावो जीवस्य । तस्मादानन्दघनब्रह्मात्मतामिच्छता तदुपायो ज्ञानमेषितव्यम् । (७)तच्च न केवलेभ्यो वेदान्तेभ्योऽपि तु ब्रह्ममी-

---

(१) ननु साक्षात्कारसाधनं ज्ञानमिच्छाविषय इति प्रतिज्ञाय फलविषयत्वादिच्छाया इति हेतुर्व्यधिककरणत्वादयुक्त इत्याशङ्क्याह तदुपायमिति । फलेच्छाया एवोपायपर्यन्तं प्रसरान्न विरोध इति भावः ।

(२) ब्रह्मणोऽपि धर्मवदसुखत्वान्न तदवगतिरित्याशङ्कार्थं भवत्वित्यादिग्रन्थस्य बोध्यः ।

(३) श्रुतिस्वानुभवावगतनिर्दुःखानन्दमभिप्रेत्य परिहारमाह ब्रह्मावगतिर्हीति ।

(४) प्रतिभान्-प्रतिभासमानः ।

(५) द्रष्टव्यमिति । अनेनाविद्यानिवृत्तिर्न स्वरूपावगत्या नित्यनिवृत्त्यापातादपि तु वृत्तित इत्युक्तम् ।

(६) पदार्थान्व्याख्याय सूत्रतात्पर्यार्थमाह तस्मादित्यादिना ।

(७) ननु वेदान्तेभ्य एव तत्सिद्धेः किमिति ज्ञानमन्वेषितव्यमित्याशङ्क्याह तच्चेति । संदेहादिना प्रतिबन्धान्न वेदान्तेभ्य एव तत्सिद्धिरित्यर्थः ।

मांसोपकरणेभ्य इति (१)इच्छानिभेन ब्रह्ममीमांसायां प्रवर्त्यते, न तु वेदान्तेषु तदर्थविचक्षाया वा। तत्र फलवदर्थावबोधपरतां स्वाध्यायाध्ययनविधेः सूत्रयताऽ'थातो धर्मजिज्ञासे'त्यनेनैव प्रवर्त्तितत्वात्, धर्मग्रहणस्य च वेदार्थोपलक्षणत्वेनाधर्मवद् ब्रह्मणोप्युपलक्षणाच्च यद्यपि धर्ममीमांसावद् वेदार्थमीमांसया ब्रह्ममीमांसाप्याक्षेप्तुं शक्यते,(२)तथापि प्राच्या मीमांसया न तद्व्युत्पाद्यते, (३)नापि ब्रह्ममीमांसाया अध्ययनमात्रानन्तर्यमिति ब्रह्ममीमांसारम्भाय नित्यानित्यविवेकाद्यानन्तर्यप्रदर्शनाय चेद सूत्रमारम्भणीयमित्यपौनरुक्त्यम्।

स्यादेतत्, एतेन सूत्रेण ब्रह्मज्ञानं प्रत्युपायता मीमांसायाः प्रतिपाद्यत इत्युक्तम्, तदयुक्त, विकल्पासहत्वादिति चोदयति—"तत्पुनर्ब्रह्मे"ति (पृ०८५पं० १)। (४)वेदान्तेभ्योऽपौरुषेयतया स्वतःसिद्धप्रामाण्येभ्यः प्रसिद्धमप्रसिद्धं वा स्यात्। यदि प्रसिद्धं, वेदान्तवाक्यसमुत्थेन निश्चयज्ञानेन विषयीकृतं ततो न जिज्ञासितव्यम्, निष्पादितक्रिये कर्मणि अविशेषाधायिनः साधनस्य साधनन्यायातिपातात्। अथाप्रसिद्धं वेदान्तेभ्यः, तर्हि न तद्वेदान्ताः प्रतिपादयन्तीति सर्वथाऽप्रसिद्धं नैव शक्यं जिज्ञासितुम्। अनुभूते हि प्रिये भवतीच्छा न तु सर्वथाऽननुभूतपूर्वे। न चेष्यमाणमपि शक्यं ज्ञातुं, प्रमाणाभावात्। शब्दो हि तस्य प्रमाणं वक्तव्यम्। यथा वक्ष्यति 'शास्त्रयोनित्वा'दिति। स चेत्तन्नावबोधयति, कुतस्तस्य तत्र प्रामाण्यम्। न च प्रमाणान्तरं ब्रह्मणि प्रक्रमते। तस्मात्प्रसिद्धस्य ज्ञातुं शक्यस्याप्यजिज्ञासनाद्, अप्रसिद्धस्येच्छाया अविषयत्वाद्, अशक्यज्ञानत्वाच्च न ब्रह्म जिज्ञास्यमित्याक्षेपः। परिहरति—**"उच्यते अस्ति तावद् ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावम्"**। अयमर्थः। (५)प्रागपि ब्रह्ममीमांसाया अधीतवेदस्य निगमनिरुक्तव्याकरणादिपरिशीलनविदितपदतदर्थसम्बन्धस्य 'सदेव सोम्येदमग्र आसीदि'त्युपक्रमात् 'तत्त्वमसी'त्यन्तात् सन्दर्भान्नित्यत्वाद्युपेतब्रह्मस्वरूपावगमस्तावदापाततो विचाराद्विनाऽप्यस्ति। (६)अत्र च ब्रह्मेत्यादिनावगम्येन तद्विषयमवगमं लक्षयति, तदस्तित्वस्य सति विमर्शे विचारात्प्रागनिर्णयात्। **नित्येति** क्षयितालक्षण दुःखमुपक्षिपति। **शुद्धेति** देहाद्युपाधिकमपि दुःखमपाकरोति। **बुद्धे**त्यपराधीनप्रका

(१) नन्विच्छाया विषयसौन्दर्यलभ्यत्वात्किं तत्कर्तव्यतोपदेशेनेत्यत आह इच्छानिभेनेति। ज्ञातुमिच्छा हि सन्दिग्धे विषये निर्णयावहा, स च विचारसाध्य इति तत्कर्तव्यतार्थाऽम्यते; आर्थिके चात्रार्थे कर्तव्यपदाध्याहारः। श्रौतस्तु मुमुक्षानन्तरं ब्रह्मज्ञानेच्छा भवितुं युक्तेत्येष एव। तथा चाधिकारार्थत्वमर्थशब्दस्य निषेद्धु ज्ञानेच्छा जिज्ञासाशब्दार्थ इत्युपपादनान्न विरोध इति भाव।

(२) वेदान्तानामुपलक्षणतयाऽर्थविवक्षाप्रतिज्ञावद्विचारप्रतिज्ञापि तत्रैवास्त्वित्याशङ्क्य, तस्य तत्राप्रतिपादनादिति समाधत्ते तथापीति।

(३) पूर्वं ब्रह्मविचारप्रतिज्ञासम्भवं मत्वा परिहार उक्त, इदानीमविरक्तस्य ब्रह्मविचारे प्रवृत्त्यनर्हत्वात्सम्भव एव नास्तीत्याह नापीति।

(४) 'युष्मदस्मदि'त्यादि उपोद्घातभाष्ये ह्यहंप्रत्यये जीवस्य प्रसिद्धेरससारिब्रह्मात्मभावस्याभावाद्विषयाक्षेप कृतोऽत्र तूपेत्य ब्रह्मात्मभावं वेदान्तेभ्यस्तत्सिद्ध्यसिद्धिभ्यामाक्षेप इति विभागमाह वेदान्तेभ्य इति।

(५) यद्यपि वेदो निर्दोषस्तथापि सामान्यतो दृष्टानिबन्धनवचनव्यक्त्याभास- प्रतिबद्धः सन्दिग्धार्थ स्यादतो विचारात्प्रागापातप्रसिद्धिं दर्शयन्नप्रसिद्धत्वपक्षोक्तं दोषमुद्धरति प्रागपीति।

(६) ननु भाष्ये 'अस्ति तावद्ब्रह्म' इति प्रतिज्ञा, तत्कथं 'ब्रह्मस्वरूपावगम' इत्यत्र व्याख्यानमत आह अत्र चेति। प्रत्याय्येन ब्रह्मणा प्रत्यये लक्षणयाऽवगमव्याख्यानमिति भावः। तत्र हेतुमाह तदस्तित्वस्येति।

शमानन्दात्मानं दर्शयति, आनन्दप्रकाशयोरभेदात् । स्यादेतत् , मुक्तौ(१) सत्यामस्यैते शुद्धत्वादयः प्रथन्ते, ततस्तु प्राग् देहाद्यभेदेन तद्धर्मजन्मजरामरणादिदु खयोगादित्यत उक्तम् "मुक्ते"ति । सदैव मुक्तः सदैव केवलोऽनाद्यविद्यावशात्तु भ्रान्त्या तथाऽवभासत इत्यर्थः । तदेवमनौपाधिकं ब्रह्मणो रूपं दर्शयित्वाऽविद्योपाधिक रूपमाह "सर्वज्ञं सर्वशक्तिसमन्वितम्" । तदनेन जगत्कारणत्वमस्य दर्शितं, शक्तिज्ञानभावाभावानुविधानात्(२) कारणत्वभावाभावयोः । कुतः पुनरेवम्भूतब्रह्मस्वरूपावगतिरित्यत आह—"ब्रह्मशब्दस्य ही"ति(पृ०८६ पं०१)। न केवलं 'सदेव सोम्येदमि'त्यादीनां वाक्यानां पौर्वापर्यालोचनया इत्थम्भूतब्रह्मावगतिः, अपि तु ब्रह्मपदमपि निर्वचनसामर्थ्यादिममेवार्थं स्वहस्तयति । निर्वचनमाह "बृहतेर्धातोरर्थानुगमात्" ( पृ० ८७ पं० १ ) । वृद्धिकर्मा हि बृहतिरतिशायने वर्तते । तच्चेदमतिशायनमनवच्छिन्नं(३) पदान्तरावगमितं नित्यशुद्धबुद्धत्वाद्यस्याभ्यनुजानातीत्यर्थः । तदेवं तत्पदार्थस्य शुद्धत्वादेः प्रसिद्धिमभिधाय त्वंपदार्थस्याप्याह "सर्वस्यात्मत्वाच्च ब्रह्मास्तित्वप्रसिद्धिः" । सर्वस्य पांसुलपादकस्य हालिकस्यापि ब्रह्मास्तित्वप्रसिद्धिः । कुतः ? आत्मत्वात् । एतदेव स्फुटयति "सर्वो ही"ति ( पृ० ८८ पं० १ ) (४)प्रतीतिमेवाप्रतीतिनिराकरणेन द्रढयति "न ने"ति । न न प्रत्येत्यहमस्मीति, किन्तु प्रत्येत्येवेति योजना । नन्वहमस्मीति च ज्ञास्यति मा च ज्ञासीदात्मानमित्यत आह "यदी"ति" । "अहमस्मीति न प्रतीयात्" । अहंकारास्पदं हि जीवात्मानं चेन्न प्रतीयादहमिति न प्रतीयादित्यर्थः । ननु प्रत्येतु सर्वो जन आत्मानमहंकारास्पदं ब्रह्मणि तु किमायातमित्यत आह "आत्मा च ब्रह्म" । (५)तदस्त्वमा सामानाधिकरण्यात्, तस्मात्तत्पदार्थस्य शुद्धबुद्धत्वादेः शब्दतस्त्वंपदार्थस्य च जीवात्मनः प्रत्यक्षतः प्रसिद्धे , पदार्थज्ञानपूर्वकत्वाच्च वाक्यार्थज्ञानस्य त्वंपदार्थस्य ब्रह्मभावावगम'स्तत्त्वमसी'तिवाक्यादुपपद्यत इति भावः । आक्षेप्ता (६)प्रथमकल्पाश्रयं दोषमाह "यदि तर्हि लोक"इति । अध्यापकाध्येतृपरम्परा लोकः । तत्र 'तत्त्वमसी'तिवाक्याद् यदि ब्रह्मात्मत्वेन प्रसिद्धमस्ति, आत्मा ब्रह्मत्वेनेति वक्तव्ये ब्रह्मात्मत्वेनेत्यभेदविवक्षया गमयितव्यम् । परिहरति "न" । कुतः ? "तद्विशेषं

---

( १ ) भेदाभेदवादी शङ्कते मुक्ताविति । समाधत्ते सदैवेति ।

( २ ) यो जानाति शक्नोति च स करोति नेतर इत्यनुविधानादित्यर्थः ।

( ३ ) ननु बृहतिधातुरतिशायनार्थोऽस्तु, तच्च बृहन् कुम्भ इतिवत् आपेक्षिकं स्यादत आहानवच्छिन्नमिति । पदान्तरैः साक्षान्नित्यत्वादिबोधकैर्नित्यादिपदैरवगमितम् । उक्तविशेषणानामन्यतमेन रहितस्य न महत्त्वसिद्धिरतो ब्रह्मपदादुक्तवस्तुसिद्धिरिति प्रकरणादिसंकोचकाभावात् नापेक्षिकं बृहत्त्वमिति भावः ।

( ४ ) सर्वस्य ब्रह्मास्तित्वप्रसिद्धिः सर्वो हि तत्प्रत्येतीति साध्यहेत्वोरविशेषमाशङ्क्याह प्रतीतिमेवेति । अत्र अहं न नास्मीति प्रत्येतीति योजनाया मास्तित्वं न सिध्येत् असत्त्वनिषेधेऽप्यनिर्वाच्यत्वस्यानिवारणात्, अतोऽहमस्मीति न प्रत्येतीति नेति योजनैव साध्वीति भावः ।

( ५ ) तदस्त्वमेति । 'तत्त्वमसी'ति वाक्ये तत्पदस्य प्रकृतसच्छब्दवाच्यब्रह्मपरामर्शिनस्त्वंपदेन सामानाधिकरण्याच्छब्दतस्तत्पदार्थस्य प्रत्यक्षतस्त्वंपदार्थस्य च प्रसिद्ध्याऽवधृतयोः पदार्थयोर्गृहीतसम्बन्धपदद्वयसमभिव्याहारादपूर्वो ब्रह्मात्मभावावगमरूपो वाक्यार्थ उपपद्यत इति भावः ।

( ६ ) प्रथमेति । प्रसिद्धिपक्षाश्रयमित्यर्थः ।

**प्रति विप्रतिपत्तेः"** । (१)तदनेन विप्रतिपत्तिः साधकबाधकप्रमाणाभावे सति संशयबीजमुक्तम्, ततश्च संशयाज्जिज्ञासोपपद्यत इति भावः । (२)विवादाधिकरणं धर्मी सर्वतन्त्रसिद्धान्तसिद्धोऽभ्युपेयः । अन्यथाऽनाश्रया भिन्नाश्रया वा विप्रतिपत्तयो न स्युः । विरुद्धा हि प्रतिपत्तयो विप्रतिपत्तयः । न चानाश्रयाः प्रतिपत्तयो भवन्ति, अनालम्बनत्वापत्तेः । न च भिन्नाश्रया विरुद्धाः । न ह्यनित्या बुद्धिर्नित्य आत्मेति प्रतिपत्तिविप्रतिपत्ती । (३)तस्मात्तत्पदार्थस्य शुद्धत्वादेर्वेदान्तेभ्यः प्रतीतिस्त्वंपदार्थस्य च जीवात्मनो लोकतः सिद्धिः सर्वतन्त्रसिद्धान्तः । (४)तदाभासत्वानाभासत्वेन तत्तद्विशेषेषु परमत्र विप्रतिपत्तयः । तस्मात्सामान्यतः प्रसिद्धे धर्मिणि विशेषतो विप्रतिपत्तौ युक्तस्तद्विशेषेषु संशयः । तत्र त्वंपदार्थे तावद्विप्रतिपत्तीर्दर्शयति **"देहमात्र"** इत्यादिना, **"भोक्तैव केवलं न कर्ता"** इत्यन्तेन (पृ० ८९ पं० २ ) । अत्र देहेन्द्रियमनःक्षणिकविज्ञानचैतन्यपक्षे न तत्पदार्थनित्यत्वादयस्त्वंपदार्थेन सम्बध्यन्ते, योग्यताविरहात् । शून्यपक्षेऽपि सर्वोपाख्यारहितमपदार्थः कथं तत्त्वमोर्गोचरः । कर्तृभोक्तृस्वभावस्यापि परिणामितया तत्पदार्थनित्यत्वाद्यसङ्गतिरेव । अकर्तृत्वेऽपि भोक्तृत्वपक्षे परिणामितया नित्यत्वाद्यसङ्गतिः। अभोक्तृत्वेऽपि नानात्वेनावच्छिन्नत्वाद् अनित्यत्वादिप्रसक्तावद्वैतहानाच्च तत्पदार्थासङ्गतिस्तदवस्थैव । (५)त्वंपदार्थविप्रतिपत्त्या च तत्पदार्थेऽपि विप्रतिपत्तिर्दर्शिता । वेदाप्रामाण्यवादिनो हि लौकायतिकादयस्तत्पदार्थप्रत्ययं मिथ्येति मन्यन्ते । (६)वेदप्रामाण्यवादिनोऽप्यौपचारिकं तत्पदार्थमविवक्षितं वा मन्यन्त इति । तदेव त्वंपदार्थविप्रतिपत्तिद्वारा तत्पदार्थे विप्रतिपत्तिं सूचयित्वा साक्षात्तत्पदार्थे विप्रतिपत्तिमाह—**"अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञः सर्वशक्तिरिति केचित्"** (पृ०८९पं० १) । तदिति जीवात्मानं परामृशति । न केवलं शरीरादिभ्यो(७) जीवात्मभ्योऽपि व्यतिरिक्तः । स च सर्वस्यैव जगत ईष्टे । ऐश्वर्यसिद्ध्यर्थं स्वाभाविकमस्य(८) रूपद्वयमुक्तं–'सर्वज्ञः सर्वशक्तिरि'ति । तस्यापि जीवात्मभ्योऽपि व्यतिरेकान्न त्वंप-

---

( १ ) ननु विरुद्धज्ञानरूपविप्रतिपत्त्या वस्त्वभावः सिध्येत्कथं विषयलाभ इत्यत आह तदनेनेति । न विरुद्धज्ञानमात्रेणाभावसिद्धिः किन्तु प्रमाणमूलतयाऽतः साधकबाधकमानाभावे विप्रतिपत्तिः संशयबीजमित्यर्थः ।

( २ ) ननु साधारणधर्मज्ञानं संशयहेतुर्न त्विह क्षणिकविज्ञानस्थिरभोक्त्रादावस्ति साधारणो धर्म इत्याशंक्य विप्रतिपत्त्यन्यथानुपपत्त्या तं साधयति विवादाधिकरणमिति । देह आत्मा इत्यादिविवादाश्रयो धर्मी परागृत्यावृत्तोऽहमास्पदं सर्वतन्त्रेष्वभ्युपगत इति मन्तव्यम् ।

( ३ ) तस्मादिति । यस्माद्विप्रतिपत्तिरेकाश्रया यतश्चैकत्रालम्बने पूर्वधीविषयनिषेधेन विरुद्धधीरुदेति तस्मात्प्रतियोगितया विप्रतिपत्त्येकस्कन्धत्वेन तत्त्वम्पदार्थतदेकत्वप्रतीतिर्लोकशास्त्राभ्यां सर्वैरेष्टव्येति भावः ।

( ४ ) तदाभासत्वेति । चार्वाकाणां सा प्रतीतिराभास, आस्तिकानां तत्पदार्थप्रतीतेस्तत्त्वमर्थैकत्वप्रतीतेश्च गौणतायां त्वंपदार्थबुद्धेरसङ्गसाक्ष्यालम्बनतायां च विगानाद्विप्रतिपत्तिरिति भावः । अत्र नाभासत्वतत्त्वदिति व. मु. पु. पाठः ।

( ५ ) अत्र लौकायतिकादिनिरीश्वरमतानुभाषणेनैव तत्पदार्थे ईश्वरेपि विप्रतिपत्तिः सूचिताऽतस्तादृगज्ञात्मैकवाक्यार्थेपि विप्रतिपत्तिर्युक्तेत्याह त्वंपदार्थेति ।

( ६ ) वेदप्रामाण्यवादिनो मीमांसकादय । आम्नायस्य क्रियार्थत्वं मन्यमानैस्तैर्वेदान्तानामौपचारिकत्वमाविवक्षितार्थत्वं वेति सिद्धान्तितमित्यर्थः ।

( ७ ) शरीरादिबुद्ध्यन्तपर्यन्तेभ्य इत्यर्थः । ( ८ ) स्वाभाविकमस्येति नैयायिकमतमाश्रित्य बोध्यम् ।

दार्थेन सामानाधिकरण्यमिति स्वमतमाह—**"आत्मा स भोक्तुरित्यपरे"** (पृ०९०पं० १) भोक्तुर्जीवात्मनोऽविद्योपाधिकस्य स ईश्वरस्तत्पदार्थ आत्मा, तत ईश्वरादभिन्नो जीवात्मा, परमाकाशादिव घटाकाशादय इत्यर्थः । विप्रतिपत्तीरुपसंहरन् विप्रतिपत्तिबीजमाह—**"एवं बहव" इति । "युक्ति**(१)**युक्त्याभासवाक्यवाक्याभाससमाश्रयाः सन्त"** इति योजना । ननु सन्तु विप्रतिपत्तयस्तन्निमित्तश्च संशयस्तथापि किमर्थं ब्रह्ममीमांसाऽऽरभ्यत इत्यत आह—**"तत्राविचार्ये"ति** (पृ०९२पं०१) । तत्वज्ञानाच्च निःश्रेयसाधिगमो नातत्वज्ञानाद्भवितुमर्हति । (२)अपि च अतत्वज्ञानान्नास्तिक्ये सत्यनर्थप्राप्तिरित्यर्थः । सूत्रतात्पर्यमुपसंहरति—**"तस्मादि"ति** (पृ०९३पं०१) । (३)वेदान्तमीमांसा तावत्तर्क एव, तदविरोधिनश्च येऽन्येपि तर्का अध्वरमीमांसायां न्याये च वेदप्रत्यक्षादिप्रामाण्यपरिशोधनादिषूक्तास्त उपकरणं यस्याः सा तथोक्ता । तस्मात्परमनिःश्रेयससाधनब्रह्मज्ञानप्रयोजना ब्रह्ममीमांसाऽऽरब्धव्येति सिद्धम् ॥ १ ॥

(४)तदेवं प्रथमेन सूत्रेण मीमांसारम्भमुपपाद्य ब्रह्ममीमांसामारभते—

## (सू०) जन्माद्यस्य यतः ॥ २ ॥

एतस्य सूत्रस्य पातनिकामाह भाष्यकारः—**"ब्रह्म जिज्ञासितव्यमित्युक्तं, किंलक्षणं पुनस्तद्ब्रह्म"** । अत्र यद्यपि ब्रह्मस्वरूपज्ञानस्य प्रधानस्य प्रतिज्ञया तदङ्गान्यपि प्रमाणादीनि प्रतिज्ञातानि, तथापि स्वरूपस्य प्राधान्यात् तदेवाक्षिप्य प्रथमं समर्थ्यते(५) । (६)तत्र यद्यावदनुभूयते तत्सर्वं परिमितम् अविशुद्धमबुद्धं विध्वंसि, न तेनोपलब्धेन तद्विरुद्धस्य नित्यशुद्धबुद्धस्वभावस्य ब्रह्मणः स्वरूपं शक्यं लक्षयितुम् । नहि जातु कश्चित् कृतकत्वेन नित्यं लक्षयति । न च तद्धर्मेण निग्यत्वादिना तल्लक्ष्यते, तस्यानुपलब्धचरत्वात् । प्रसिद्धं हि लक्षणं भवति, नात्यन्ताप्रसिद्धम् । (७) एवं च न शब्दोऽप्यत्र प्रक्रमते, अत्यन्ताप्रसिद्धतया ब्रह्मणोऽपदार्थस्यावाक्यार्थत्वात् । तस्माल्लक्षणाभावाद् न ब्रह्म जिज्ञासितव्य-

---

(१) आत्मा स भोक्तुरिति पक्षे मूल युक्तिवाक्येऽन्यत्र तदाभासौ ग्राह्यावित्यर्थः ।

(२) 'अनर्थं चेयादिति' भाष्यार्थमाह अपि चेति ।

(३) तर्कस्य पृथगुक्तत्वेपि वेदान्तमीमांसापि तर्क एवेत्यभिप्रेत्याह वेदान्तमीमांसेति । अत्रार्थापत्तिरनुमानं च तर्को ग्राह्यस्तद्रूपा वेदान्तमीमांसा, तदविरोधिनो कर्ममीमांसायामुक्ता श्रुतिलिङ्गादयो वेदप्रामाण्यपरिशोधकास्तथा वेदस्य प्रत्यक्षादीनां तदर्थादीनां च लक्षणादीनि न्यायशास्त्रे विचारितानीति तत्रोक्ताश्च सर्वे तर्का प्रमाणानुग्राहकतयोपकरणं यस्याः सेत्यर्थः ।

(४) एवं विषयादिसद्भावात् समर्थिते विचारारम्भे तमुपजीव्योत्तरविचारप्रवृत्तेर्हेतुहेतुमद्भावलक्षणसङ्गतिं प्रदर्शयन्नाह तदेवमिति ।

(५) समर्थ्यत इति । अनेन वेदान्तविचारो ब्रह्मज्ञानाय कर्तव्य इति प्रतिज्ञायां ब्रह्मस्वरूपविचारवत्प्रमाणयुक्तिसाधनफलविचाराणामर्थात् प्रतिभाने कथं प्रथमं ब्रह्मैव विचार्यत इत्याक्षेपः परिहृतः ।

(६) अत्र 'यतो वा इमानि भूतानि जायन्ते' इत्यादिवाक्यं ब्रह्म लक्षयति नवेति लक्षणस्य लोकप्रसिद्ध्यप्रसिद्धिभ्यां संशये पूर्वपक्षमाह तत्रेति ।

(७) ननु लोकतोऽसिद्धमपि वेदेन ज्ञाप्यतामत आह एवञ्चेति ।

मित्याक्षेपाभिप्रायः। तमिममाक्षेपं भगवान् सूत्रकारः परिहरति--"**जन्माद्यस्य यत**" **इति**। मा भूदनुभूयमानं जगत्तद्धर्मतया तादात्म्येन वा ब्रह्मणो लक्षणं तदुत्पत्त्या तु भविष्यति, (१) देशान्तरप्राप्तिरिव सवितुर्व्रज्याया इति तात्पर्यार्थः। सूत्रावयवान् विभजते--"**जन्मोत्पत्तिरादिरस्ये**"ति (पृ० १७ पं०)। (२)लाघवाय सूत्रकृता जन्मादीति नपुंसकप्रयोगः कृतस्तदुपपादनाय समाहारमाह--**जन्मस्थितिभङ्गमिति**। "**जन्मनश्चे**"त्यादिः "**कारणनिर्देश**" इत्यन्तः सन्दर्भो निगदव्याख्यातः (पृ०१८पं०१)। स्यादेतत्, प्रधानकालग्रहलोकपालक्रियायदृच्छास्वभा(३)वाभावेषूपप्लवमानेषु सत्सु सर्वज्ञं सर्वशक्तिस्वभावं ब्रह्म जगज्जन्मादिकारणमिति कुतः सम्भावनेत्यत आह--"**अस्य जगत**" **इति**। अत्र "**नामरूपाभ्यां व्याकृतस्ये**"ति चेतनभावकर्तृकत्वसम्भावनया प्रधानाद्यचेतनकर्तृकत्वं निरुपाख्यकर्तृकत्वं च (४)व्यासेधति। यत् खलु नाम्ना रूपेण च व्याक्रियते तच्चेतनकर्तृकं दृष्टं, यथा घटादि, विवादाध्यासितं च जगन्नामरूपव्याकृतं तस्माच्चेतनकर्तृकं सभाव्यते। चेतनो हि बुद्धावालिख्य नामरूपे घट इति नाम्ना रूपेण च कम्बुग्रीवादिना बाह्यं घटं निष्पादयति। (५)अत एव घटस्य निर्वर्त्यस्याप्यन्तःसंकल्पात्मना सिद्धस्य कर्मकारकभावो-'घटं करोती'ति। यथाहुः--"**बुद्धिसिद्धं तु न तदसत**" **इति**। तथा चाचेतनो बुद्धावनालिखितं करोतीति न शक्यं संभावयितुमिति भावः। स्यादेतत्, चेतना ग्रहा लोकपाला वा नामरूपे बुद्धावालिख्य जगज्जनयिष्यन्ति, कृतमुक्तस्वभावेन ब्रह्मणेत्यत आह-"**अनेककर्तृभोक्तृसंयुक्तस्ये**"ति। केचित् कर्तारो भवन्ति, यथा सूदर्त्विगादयो, न भोक्तारः। केचित्तु भोक्तारो यथा श्राद्ध(६)वैश्वानरीयेष्ट्यादिषु पितापुत्रादयो न कर्तारः। तस्मादुभयग्रहणम्। "**देशकालनिमित्तक्रियाफलानी**"(पृ० १० पं० १)तीतरेतरद्वन्द्वः। देशादीनि च तानि प्रतिनियतानि चेति विग्रहः। तदाश्रयो जगत् तस्य। केचित् खलु प्रतिनियतदेशोत्पादा यथा कृष्णमृगादयः। केचित् प्रतिनियतकालोत्पादाः यथा कोकिलारवादयः। केचित्प्रतिनियतनिमित्ताः यथा नवाम्बुद-

---

(१) देशान्तरेति। यथा देशान्तरप्राप्तिरूपकार्येणादित्यगतेरनुमानं तथा जगदुत्पत्त्यादिकार्येण ब्रह्मणोऽनुमानमित्यर्थः।

(२) जन्म आदिर्ययोः स्थितिभङ्गयोस्तौ जन्मादी इत्यन्यपदार्थौ विशेषरूपेण विवक्ष्यते यदि तदा जन्मादी अस्येति निर्देशे गौरवापत्तिः स्यादिति सामान्यविवक्षया नपुंसकप्रयोगः सूत्रे कृतः। तत्र नपुंसकैकवचनप्रयोगयोग्यं समाहारमाह भाष्यकार इत्याह लाघवायेति।

(३) स्वभाव एव नियन्तेति स्वभावपक्षः, न किञ्चित्कार्योत्पत्तौ नियामकमिति यदृच्छापक्षो बोध्यः।

(४) व्यासेधति—प्रतिषेधति।

(५) उत्पत्तेः प्रागसतः कथं बुद्धावालेखनमत आह अत एवेति।

(६) 'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इत्युपक्रम्य 'पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवती'ति श्रूयते। तत्र पूतत्वादि पितुः फलमुत पुत्रस्येति संदेहे फलस्य कर्तृगामित्वनियमादितरथा प्रेरणानुपपत्तेः पितुरिति पूर्वपक्षे, यस्मिन्जाते निर्वपति स पूत इति जातगामित्वेन फलाम्नानात् पुत्रगामिफलमिति सिद्धान्तितम्। तथाच श्राद्धादौ पित्रादेरकर्तृत्वेऽपि केवलभोक्तृत्वादत्र चानेककर्तृभोक्तृजीवानां व्यत्वेन निर्देशात् जगत्कर्तृत्वायोग्यता प्रदर्शिता।

ध्वानादिनिमित्ता बलाकागर्भादयः । केचित्प्रतिनियतक्रियाः यथा ब्राह्मणानां याजनादयो नेतरेषाम् । एवं प्रतिनियतफलाः यथा केचित्सुखिनः केचिद् दुःखिनः, एवं य एव सुखिनस्त एव कदाचिद् दुःखिनः । सर्वमेतदाकस्मिकापरनाम्नि यादृच्छिकत्वे च स्वाभाविकत्वे चासर्वशक्तिकर्तृकत्वे च न घटते, परिमितज्ञानशक्तिभिर्महलोकपालादिभिर्ज्ञातुं कर्तुं चाशक्यत्वात् । तदिदमुक्तम् **"मनसाप्यचिन्त्यरचनारूपस्ये"ति** । एकस्या अपि हि शरीररचनाया रूप मनसा न शक्यं चिन्तयितुं कदाचित्, प्रागेव जगद्रचनायाः, किमङ्ग पुन. कर्तुमित्यर्थः । सूत्रवाक्यं पूरयति–**"तद्ब्रह्मेति वाक्यशेषः"** । स्यादेतत्, कस्मात् पुनर्जन्मस्थितिभङ्गमात्रमिहादिग्रहणेन गृह्यते, न तु वृद्धिपरिणामापक्षया अपीत्यत आह—**"अन्येषामपि भावविकाराणां** वृद्ध्यादीनां **त्रिष्वेवान्तर्भाव इति"** । वृद्धिस्तावदवयवोपचय. । तेनाल्पावयवादवयविनो द्वितन्तुकादेरन्य एव महान् पटो जायत इति जन्मैव वृद्धिः । परिणामोऽपि त्रिविधो (१)धर्मलक्षणावस्थालक्षण उत्पत्तिरेव । (२)धर्मिणो हि हाटकादेर्धर्मलक्षणः परिणामः कटकमुकुटादिस्तस्योत्पत्तिः । (३)एवं कटकादेरपि प्रत्युत्पन्नत्वादिलक्षण. परिणाम उत्पत्तिः । (४)एवमवस्थापरिणामो नवपुराणत्वाद्युत्पत्तिः । (५)अपक्षयस्त्ववयवह्रासो नाश एव । तस्माज्जन्मादिषु यथास्वमन्तर्भावाद् वृद्ध्यादयः पृथङ्नोक्ता इत्यर्थ. । अथैते वृद्ध्यादयो न जन्मादिष्वन्तर्भवन्ति तथाप्युत्पत्तिस्थितिभङ्गमेवोपादातव्यम्, तथासति हि तत्प्रतिपादके "यतो वा इमानि भूतानी"ति वेदवाक्ये बुद्धिस्थीकृते जगन्मूलकारणं ब्रह्म लक्षितं भवति, अन्यथा तु जायतेऽस्ति वर्धत इत्यादीनां ग्रहणे तत्प्रतिपादकं नैरुक्तवाक्य बुद्धौ भवेत्, तच्च न मूलकारणप्रतिपादनपरम्, महासर्गादूर्ध्वं स्थितिकालेऽपि तद्वाक्योदितानां जन्मादीनां भावविकाराणामुपपत्तेः, इति शङ्कानिराकरणार्थं वेदोक्तोत्पत्तिस्थितिभङ्गग्रहणमित्याह **"यास्कपरिपठितानां त्वि"ति** । नन्वेवमप्युत्पत्तिमात्रं सूच्यता, तन्नान्तरीयकतया तु स्थितिभङ्गं गम्यत इत्यत आह **"योत्पत्तिर्ब्रह्मणः"** ( पृ० १०२ पं० २ ) (६)कारणादिति । त्रिभिरस्योपादानत्वं सूच्यते । (७)उत्पत्तिमात्रं तु निमित्त-

---

(१) धर्मलक्षणेति । धर्म इति लक्षणमिति अवस्थेति त्रीणि लक्षणानि यस्य परिणामस्य स तथोक्तस्त्रिविधोऽप्युत्पत्तावन्तर्भवतीत्यर्थ ।

(२) धर्मपरिणामं विवृणोति धर्मिण इति । साङ्ख्यमते य कनकादेर्धर्मिणो धर्मपरिणामो कटकमुकुटादिस्सैव कनकात्कटकाद्युत्पत्तिरिति भाव ।

(३) लक्षणपरिणाममाह एवमिति । प्रत्युत्पन्नत्वं वर्तमानत्व, कटकादिकार्यस्य वर्तमानत्वातीतत्वभविष्यत्वादिरूप' साङ्ख्यमतसिद्ध लक्षणपरिणामोऽप्युत्पत्तिरित्यर्थ ।

(४) अवस्थापरिणाममाह एवमिति । अतीतादेरेवातीतत्वातीततरत्वातीततमत्वादिरूपो नवपुराणत्वाद्यापत्तिरवस्थापरिणामो य स चोत्पत्तिरेवेत्यर्थ । (५) अपक्षयस्य विनाशेऽन्तर्भावमाह अपक्षयस्त्विति ।

(६) ब्रह्मण इति षष्ठ्यन्तशङ्कानिराकरणायाह कारणादिति ।

(७) उत्पत्तिमात्रादेव लक्षणस्यालक्ष्यव्यावृत्तिसिद्धौ स्थितिलयोपादानमाशङ्कानिवृत्त्यर्थमित्याह उत्पत्तिमात्रमिति । उत्पादकत्व निमित्तेपि दृष्टमित्युपादानसिद्धये लयाश्रयत्वमुक्तमित्यर्थ । नन्वेदमपीनरवैयर्थ्यं लयाधारत्वादेवोपादानत्वसिद्धेर्नहि दण्डादिषु कुम्भादयो लीयन्त इति चेत् । नह्यत्रोपादानत्वसूचनायैव तदुक्त किन्तु प्रकृतिविकाराभेदन्यायेनाद्वैतसिद्धये, एव च ब्रह्मणो जगत उपादानत्व स्यादधिष्ठाता तु तदन्य उत्पत्तिस्थित्योर्भवेत्कुम्भकार इव कुम्भस्योत्पत्ताविदयाशङ्कानिरासायोत्पत्तिस्थितिग्रहणमिति भाव' ।

कारणसाधारणामिति नोपादानं सूचयेत् । तदिदमुक्तं "तत्रैवे"ति । पूर्वोक्तानां कार्यकारण-विशेषणानां प्रयोजनमाह "न यथोक्ते"ति । (१)तदनेन प्रबन्धेन प्रतिज्ञाविषयस्य ब्रह्म स्वरूपस्य लक्षणद्वारेण संभावनोक्ता । तत्र प्रमाणं वक्तव्यम् । यथाहुर्नैयायिकाः—

'संभावितः प्रतिज्ञाया पक्षः साध्येत हेतुना ।

न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो हतः ॥ यथा च 'वन्ध्या जननीत्यादि'रिति ।

इत्थं नाम जन्मादिसंभावनाहेतुः, यदन्ये वैशेषिकादय इत एवानुमानादीश्वरविनिश्चय-मिच्छन्तीति संभावनाहेतुता द्रढयितुमाह "एतदेवे"ति (पृ०१०३पं०३) चोदयति–"न-न्विहापी"ति । एतावतैवाधिकरणार्थे समाप्ते वक्ष्यमाणाधिकरणार्थमनुवदन् सुहृद्भावेन परि-हरति–"ने"ति(२) । वेदान्तेति । वेदान्तवाक्यकुसुमग्रथनार्थतामेव दर्शयति–"वेदान्ते"-ति । विचारस्याध्यवसानं सवासनाविद्याद्वयोच्छेदः । ततो हि ब्रह्मावगतेर्निर्वृत्तिराविर्भावः । तत्किं ब्रह्मणि शब्दादृते न मानान्तरमनुसरणीयम्, तथा च कुतो मननं, कुतश्च तदनुभवः साक्षात्कार इत्यत आह—"सत्सु तु वेदान्तवाक्येष्वि"ति (पृ०१०६ पं०३) अनु-मानं वेदान्ताविरोधि तदुपजीवि चेत्यपि द्रष्टव्यम् । (३)शब्दाविरोधिन्या तदुपजीविन्या च युक्त्या विवेचनं मननम् । युक्तिश्चार्थापत्तिरनुमानं वा । स्यादेतत्, यथा धर्मे न पुरुषबु-द्धिसाहाय्यम्, एवं ब्रह्मण्यपि कस्मान्न भवतीत्यत आह–"न धर्मजिज्ञासायामिवे"-ति (पृ०१०७ पं०३) । "श्रुत्यादय"इति । श्रुतीतिहासपुराणस्मृतयः प्रमाणम् । अनु-भवोऽन्तःकरणवृत्तिभेदो ब्रह्मसाक्षात्कारस्तस्याविद्यानिवृत्तिद्वारेण ब्रह्मस्वरूपाविर्भावः प्रमाणफल-म् । तच्च फलमिव फलमिति गमयितव्यम् । (४)यद्यपि धर्मजिज्ञासायामपि सामग्र्यां प्र-त्यक्षादीनां व्यापारस्तथापि साक्षान्नास्ति, ब्रह्मजिज्ञासायां तु साक्षादनुभवादीनां संभवोऽनुभ-वार्था च ब्रह्मजिज्ञासेत्याह—"अनुभवावसानत्वात्" । ब्रह्मानुभवो ब्रह्मसाक्षात्कारः पर-मपुरुषार्थो निर्मृष्टनिखिलदुःखपरमानन्दरूपत्वादिति । ननु भवतु ब्रह्मानुभवार्था जिज्ञासा, तदनुभव एव त्वशक्यो ब्रह्मणस्तद्विषयत्वायोग्यत्वादित्यत आह–"भूतवस्तुविषयत्वाच्च

---

(१) ननु लक्षणादेव ब्रह्मसिद्धौ शास्त्रयोनित्वसमन्वयाधिकरणयोर्वैयर्थ्यमित्याशङ्क्याह तदनेनेति । लक्षणं हि सिद्धस्य वस्तुनो भेदमवगमयति ईदृशं तदिति न सत्ताम् । कार्येण चात्र कारणं किंचिदस्तीति ज्ञातम्, तच्चैकमनेकं वेति संदिग्धं, तस्य यदैकत्वं सेत्स्यति तदा भवति तत्सर्वज्ञं सर्वशक्ति च नेतरथा, अयमेव संशयः कल्पनालाघवाख्यतर्केणोत्कटैककोटिकतां नीतः सम्भावना, प्रासादादीनां बहुकर्तृकत्वस्य दृष्टत्वान्न तत्र निर्णयोऽतो निर्णयार्थमग्रिमाधिकरणे आवश्यके इति भावः ।

(२) व. श्रु. पुस्तके इति पदं नास्ति ।

(३) यदुक्तं ब्रह्मणो मानान्तराविषयत्वे कुतो मननम् इति, तत्राह शब्दाविरोधिन्येति । जगत्कारणस्य सर्वज्ञत्वादिसिद्धौ युक्तिः शब्दमुपजीवति न स्वतन्त्रा । कारणस्य तत्त्वं संभावयन्तीतिकर्तव्यता च न मानान्तरमित्यर्थः ।

(४) ननु धर्मजिज्ञासाया श्रुत्यादय एव प्रमाणमित्युक्तं वेदविषयश्रोत्रप्रत्यक्षाद्यपेक्षणादित्याशङ्क्य, ज्ञातव्ये धर्मे न साक्षात्कारतदुपयोगियुक्त्यादीनां सम्भवो, ब्रह्मजिज्ञासा तु साक्षात्कारपर्यन्तेत्याह यद्यपीत्यादिना । अनुभवार्था चेति । तत्त्वसाक्षात्कारं विनाऽपरोक्षसंसारभ्रमनिवृत्त्यसम्भवादपि ब्रह्मजिज्ञासाऽनुभवावसानेत्यर्थः ।

**ब्रह्मविज्ञानस्य"** । (१)व्यतिरेकसाक्षात्कारस्य विकल्परूपो विषयविषयिभाव., नत्वेवं धर्मज्ञानमनुभवावसानं, तदनुभवस्य स्वयमपुरुषार्थत्वात्, तदनुष्ठानसाध्यत्वात् पुरुषार्थस्य, अनुष्ठानस्य च विनाप्यनुभवं शाब्दज्ञानमात्रादेव सिद्धेरित्याह—**"कर्त्तव्ये हीत्यादिना"** । न चायं साक्षात्कारविषयतायोग्योऽप्यवर्तमानत्वात्, अवर्तमानश्चानवस्थितत्वादित्याह—**"पुरुषाधीने"**ति । पुरुषाधीनत्वमेव लौकिकवैदिककार्याणामाह—**"कर्तुमकर्तु"**मिति ( पृ० १०८ प० १ ) । लौकिकं कार्यमनवस्थितमुदाहरति—**"यथाऽश्वेने"**ति । लौकिकेनोदाहरणेन सह वैदिकमुदाहरणं समुच्चिनोति—**"तथाऽतिरात्र"** इति ( पृ० १०९ प० १ ) । कर्तुमकर्तुमित्यस्येदमुदाहरणमुक्तम् । कर्तुमन्यथा वा कर्तुमित्यस्योदाहरणमाह—**"उदित इति"** । स्यादेतत्, पुरुषस्वातन्त्र्यात् कर्तव्ये विधिप्रतिषेधानामानर्थक्यम्, अतदधीनत्वात् पुरुषप्रवृत्तिनिवृत्त्योरित्यत आह—**"विधिप्रतिषेधाश्चार्थवन्तः स्युः"** । (२)गृह्णातीति विधिः । न गृह्णातीति प्रतिषेधः । उदितानुदितहोमयोर्विधी । एवं (३)नारास्थिस्पर्शननिषेधो ब्रह्मघ्नश्च तद्धारणविधि(४)रित्येवजातीयका विधिप्रतिषेधा अर्थवन्तः, कुत इत्यत आह—**"विकल्पोत्सर्गापवादाश्च"** (पृ० ११० प० १) । चो हेतौ । यस्माद्ग्रहणाग्रहणयोरुदितानुदितहोमयोश्च विरोधात्समुच्चयासम्भवे तुल्यबलतया च बाध्यबाधकभावाभावे सत्यगत्या विकल्प', नारास्थिस्पर्शननिषेधतद्धारणयोश्च विरुद्धयोरतुल्यबलतया न विकल्प', किन्तु सामान्यशास्त्रस्य स्पर्शननिषेधस्य धारणविधिविषयेण विशेषशास्त्रेण बाधः । (५)एतदुक्तं भवति । विधिप्रतिषेधैरेव स तादृशो विषयोऽनागतोत्पाद्यरूप उपनीतो येन पुरुषस्य विधिनिषेधाधीनप्रवृत्तिनिवृत्त्योरपि स्वातन्त्र्यं भवतीति । भूते वस्तुनि तु नेयमस्ति विधेत्याह—**"न तु वस्त्वेवं नैव"**मिति । तदनेन प्रकारविकल्पो निरस्त. । प्रकारिविकल्पं निषेधति—**"अस्ति नास्ती"**ति । स्यादेतत्, भूतेऽपि वस्तुनि विकल्पो दृष्टः, यथा स्थाणुर्वा पुरुषो वेति, तत्कथं न वस्तु विकल्प्यत इत्यत आह—**"विकल्पनास्त्वि"**ति । **"पुरुषबुद्धि"**रन्त.करणं, तदपेक्षा विकल्पनाः संशयविपर्यासाः, (६)सवासनमनोमात्रयोनयो वा यथा स्वप्ने, सवासनेन्द्रियमनोयोनयो वा यथा स्थाणुर्वा पुरुषो वेति स्थाणौ संशय', पुरुष एवेति वा विपर्यासः, अन्यशब्देन वस्तुतः स्थाणोर-

---

(१) व्यतिरेक प्रपञ्चाभावोपलक्षितब्रह्मस्वरूप, तद्विषयसाक्षात्कारस्य विकल्परूपो ब्रह्मणा सह विषयविषयिभावरूप सम्बन्धोऽस्ति न तु तत्त्वत इति भाव ।

(२) भाष्यस्थविध्यादिशब्दानुदाहृतवाक्येषु योजयति गृह्णातीत्यादिना ।

(३) नारेति । 'नार स्पृष्ट्वाऽस्थि सस्नेह सवासा जलमाविशेत, इति नारास्थिस्पर्शनिषेधो बोध्य ।

(४) "शिर कपाली ध्वजवान भिक्षाशी कर्म वेदयन् । ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात ॥" ( या० ३।२४३ ) इति ब्रह्मघ्न शवशिरसो नारास्थ्नो ध्वजत्वेन धारणविधिर्द्रष्टव्य ।

(५) अत्र भाष्ये प्रतिज्ञामात्र भाति न हेतुरत आह एतदुक्तं भवतीत्यादिना । स्वातन्त्र्येण कर्तु समर्थोऽपि हिताहितोपायत्वमजानन तद्बोधकविधिनिषेधापेक्ष इति भाव ।

(६) अन्त करणजकल्पनाद्वैविध्यमाह सवासनेति । जाग्रद्वासनावासितं मन एव स्वप्नकारणम्, अत स्वप्ने मनोमात्रयोनित्व संशयविपर्यासानाम् । जाग्रत्संशयविपर्यासास्तु संस्कारसहितान्तर्बाह्यकरणा इति भाव ।

न्यस्य पुरुषस्याभिधानात्, "न तु पुरुषतत्त्वं वा स्थाणुतत्त्वं वाऽपेक्षन्ते समानधर्मधर्मिदर्शनमात्राधीनजन्मत्वात्। तस्मादयथावस्तवो(१) विकल्पना न वस्तु विकल्पयन्ति वाऽन्यथयन्ति वेत्यर्थः। तत्त्वज्ञानं तु न बुद्धितन्त्रं, किन्तु वस्तुतन्त्रमतस्ततो वस्तुविनिश्चयो युक्तो, न तु विकल्पनाभ्य इत्याह--"**न वस्तुयाथात्म्ये**"ति। एवमुक्तेन प्रकारेण भूतवस्तुविषयाणां ज्ञानानां प्रामाण्यस्य वस्तुतन्त्रतां प्रसाध्य ब्रह्मज्ञानस्य वस्तुतन्त्रतामाह--"**तत्रैवं सती**"ति (पृ० १११ पं० ४)। अत्र चोदयति-"**ननु भूते**"ति (पृ० ११२ पं०१)। यत् किल भूतार्थं वाक्यं तत्प्रमाणान्तरगोचरार्थतयाऽनुवादकं दृष्टम्, यथा नद्यास्तीरे फलानि सन्तीति, तथा च वेदान्ताः, तस्माद्भूतार्थतया प्रमाणान्तरदृष्टमेवार्थमनुवदेयुः। उक्तं च ब्रह्मणि जगज्जन्मादिहेतुकमनुमानं प्रमाणान्तरम्। एवं च मौलिकं तदेव परीक्षणीयं, न तु वेदान्तवाक्यानि तदधीनसत्यत्वानीति कथं वेदान्तवाक्यग्रथनार्थता सूत्राणामित्यर्थः। परिहरति-"**नन्द्रियाविषयत्वे**"ति। कस्मात्पुनर्नेन्द्रियविषयत्वं प्रतीचः इत्यत आह-"**स्वभावत**" इति। अत एव श्रुतिः--

(२)'पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्म'न्निति।

"**सति हीन्द्रिये**"ति। प्रत्यगात्मनस्त्वविषयत्वमुपपादितम्। यथा च सामान्यतो दृष्टमप्यनुमानं ब्रह्मणि न प्रवर्त्तते तथोपरिष्टान्निपुणतरमुपपादयिष्यामः।(३) उपपादितं चैतदस्माभिर्विस्तरेण न्यायकणिकायाम्। न च भूतार्थतामात्रेणानुवादतेत्युपरिष्टा(४)दुपपादयिष्यामः। तस्मात्सर्वमवदातम्। श्रुतिश्च 'यतो वे'ति जन्म दर्शयति, 'येन जातानि जीवन्ती'ति जीवनं स्थितिं, 'यत्प्रयन्ती'ति तत्रैव लयम्। "**तस्य च निर्णयवाक्यम्**" (पृ० १०४ प०)। (५)अत्र च प्रधानादिसंशये निर्णयवाक्यम् 'आनन्दाद्ध्येवे'ति। (६)एतदुक्तं भवति। यथा रज्ज्वज्ञानसहितरज्जूपादाना धारा रज्ज्वां सत्यामस्ति रज्ज्वामेव च लीयते, एवमविद्यासहितब्रह्मोपादानं जगद् ब्रह्मण्येवास्ति तत्रैव च लीयते इति सिद्धम्॥ २॥

---

(१) अयथावस्तव इति। यथावस्तुत्वं वस्त्वनुसारित्वं यासां नास्ति तास्तथोक्ता, संशया वस्तु न विकल्पयन्ति, विपर्यया नान्यथयन्तीति भाव।

(२) पराञ्चि इति। खानि इन्द्रियाणि, व्यतृणत्—हिंसितवान् पराङ् पश्यति लोक। अत्र प्रत्यगात्मानवलोकनमेवेन्द्रियाणां हिंसा बोध्या।

(३) उपपादितं चेति। विमतं कार्यं बुद्धिमत्कर्तृकं कार्यत्वादित्यनुमानात्सामान्यतोदृष्टादीश्वरसिद्धिर्नैयायिकैः क्रियते। तत्र च जीवजत्वेन सिद्धसाधनम्, उपकरणाद्यभिज्ञकर्तृकत्वसाधने कतिपयतदभिज्ञतायां सर्वज्ञासिद्धिः। सर्वतदभिज्ञकर्तृकत्वे सपक्षस्य साध्यहीनतेत्यादयो दोषा न्यायकणिकायामुपादिता इति भाव।

(४) उपरिष्टात्–समन्वयसूत्रे।

(५) अत्र सूत्रस्य स्वरूपलक्षणपरत्वं दर्शयितुं तस्य चेति भाष्यं व्याचष्टे अत्र चेति। जगद्विशेषणपूर्वं निर्णयेपि श्रुतित इह निर्णीयते। कारणं ब्रह्मानूद्य वाक्येनानन्दत्वविधानात्स्वरूपलक्षणं सिद्धिरित्यर्थः। आनन्दश्च सत्यादेरुपलक्षणं बोध्यम्।

(६) नन्वेवभूतब्रह्मणः कथं जगद्योनित्वमत आह एतदिति।

सूत्रान्तरमवतारयितुं पूर्वसूत्रसंगतिमाह--"**जगत्कारणत्वप्रदर्शनेने**"ति (पृ० ११५ प० ६)।

## (सू०) शास्त्रयोनित्वात् ॥ ३ ॥

न केवलं जगद्योनित्वादस्य भगवतः सर्वज्ञता, शास्त्रयोनित्वादपि बोद्धव्या । शास्त्रयोनित्वस्य सर्वज्ञतासाधनत्वं समर्थयते--(१)"**महत ऋग्वेदादेः शास्त्रस्ये**"ति (पृ० ११७ पं० २) चातुर्वर्ण्यस्य चातुराश्रम्यस्य च यथायथ निषेकादिश्मशानान्तासु ब्राह्ममुहूर्तोपक्रमप्रदोषपरिसमापनीयासु नित्यनैमित्तिककाम्यकर्मपद्धतिषु च ब्रह्मतत्त्वे च शिष्याणां शासनात् शास्त्रमृग्वेदादि, अत एव महाविषयत्वात् महत् । न केवलं महाविषयत्वेनास्य महत्त्वम्, अपि त्वनेकाङ्गोपाङ्गोपकरणतयापीत्याह--"**अनेकविद्यास्थानोपबृंहितस्य**" । पुराणन्यायमीमांसादयो दश(२) विद्यास्थानानि तैस्तया (३)तया द्वारोपकृतस्य । तदनेन समस्तशिष्टजनपरिग्रहेणाप्रामाण्यशङ्काऽप्यपाकृता । पुराणादिप्रणेतारो हि महर्षयः शिष्टास्तैस्तया तया द्वारा वेदान् व्याचक्षाणैस्तदर्थं चादरेणानुतिष्ठद्भिः परिगृहीतो वेद इति । न चायमनवबोधको नाप्यस्पष्टबोधको येनाप्रमाणं स्यादित्याह--"**प्रदीपवत् सर्वार्थावद्योतिनः**"। सर्वमर्थजातं सर्वथाऽवबोधयन् नानवबोधको नाप्यस्पष्टबोधक इत्यर्थः । अत एव "**सर्वज्ञकल्पस्य**" (पृ० ११८ पं० १) सर्वज्ञसदृशस्य । सर्वज्ञस्य हि ज्ञानं सर्वविषयं शास्त्रस्याप्यभिधानं सर्वविषयमिति सादृश्यम् । तदेवमन्वयमुक्त्वा व्यतिरेकमाह-(४)"**न हीदृशस्ये**"ति । सर्वज्ञस्य गुणः सर्वविषयता तदन्वितं शास्त्रम्, अस्यापि सर्वविषत्वात् । उक्तमर्थं प्रमाणयति--(५)"**यद्यद्विस्तरार्थं शास्त्रं यस्मात्पुरुषविशेषात् सम्भवति स पुरुषविशेषस्ततोऽपि शास्त्रादधिकतरविज्ञान**" (पृ० ११९ पं० १) इति योजना । अयत्नेऽप्यस्मदादिभिर्यत्समीचीनार्थविषयं शास्त्रं विरच्यते तत्रास्माकं वक्तॄणां वाक्याज्ज्ञानमधिकविषयम् । नहि ते तेऽसाधारणधर्मा अनुभूयमाना अपि शक्या वक्तुम् । न खल्विक्षुक्षीरगुडादीनां मधुररसभेदाः शक्याः सरस्वत्याप्याख्यातुम् । विस्तरार्थमपि वाक्यं न वक्तृज्ञानेन तुल्यविषयमिति कथयितुं विस्तरग्रहणम् । सोपनयं निगमनमाह--"**किमु वक्तव्य**"मिति । (६)वेदस्य यस्माद् महतो भूताद् योनेः सम्भव. तस्य महतो भूतस्य ब्रह्मणो निरतिशयं सर्वज्ञत्वं सर्वशक्तित्वं च किमु वक्तव्यमिति योजना । "**अनेकशाखे**"ति।

---

(१) अनेन ब्रह्मेत्यन्तेन भाष्येण निश्वसितश्रुत्या विभुत्वहेतूपकृनया ब्रह्मकार्य वेद इत्युक्तम् ।

(२) पुराणन्यायमीमांसाधर्मशास्त्राणि शिक्षाकल्पव्याकरणनिरुक्तछन्दोज्योतिषाख्यानि षडङ्गानि चेति दश विद्यास्थानानि बोध्यानि ।

(३) तया तयाद्वारेति । तत्र सृष्टिवाक्यापेक्षितसर्गादिप्रपञ्चनद्वारा पुराणमद्वैतपर, जातिव्यक्तिलक्षणनिरूपणेन न्यायश्च वैदिकपदार्थशुद्धयर्थं । शेषोपयोगस्तु स्पष्ट एव ।

(४) 'नहीदृशस्ये'त्यारभ्या'स्ती'त्यन्तभाष्येण व्यतिरेकद्वारा ब्रह्मणः सर्वज्ञत्वप्रतिज्ञा प्रदर्शिता ।

(५) अनेन यदित्यादिना लोके इत्यन्तेन भाष्येण व्याप्तिः प्रदर्शिता ।

(६) अयमत्रानुमानाकारः--ब्रह्म वेदविषयादधिकविषयज्ञं तत्कर्तृकत्वात्, यो यद्वाक्यप्रमाणकर्ता स तद्विषयादधिकविषयज्ञो यथा पाणिनिरिति । सर्वावभासकवेदकर्तृत्वेन च पक्षधर्मताबलात्सर्वज्ञत्वसिद्धिर्ब्रह्मणो द्रष्टव्या ।

अत्र चानेकशाखाभेदभिन्नस्येत्यादि· सम्भव इत्यन्त उपनयः। तस्येत्यादि सर्वशक्तित्वं चेत्यन्तं निगमनम्। "अप्रयत्नेनैवे"ति। ( पृ०,१२० पं० १ )। ईषत्प्रयत्नेन, यथाऽलवणा यवागूरिति। देवर्षयो हि महापरिश्रमेणापि यत्राशक्तास्तदयमीषत्प्रयत्नेन लीलयैव करोतीति निरतिशयमस्य सर्वज्ञत्वं सर्वशक्तित्वं चोक्तं भवति। अप्रयत्नेनास्य वेदकर्तृत्वे श्रुतिरुक्ता 'अस्य महतो भूतस्ये'ति।(१)येऽपि तावद् वर्णानां नित्यत्वमास्थिषत तैरपि पदवाक्यादीनामनित्यत्वमभ्युपेयम्। आनुपूर्वीभेदवन्तो हि वर्णाः पदम्। पदानि चानुपूर्वीभेदवन्ति वाक्यम्। व्यक्तिधर्मश्चानुपूर्वी न वर्णधर्मः, वर्णानां नित्यानां विभूनां च कालतो देशतो वा पौर्वापर्यायोगात्। व्यक्तिश्चानित्येति कथं तदुपगृहीतानां वर्णानां नित्यानामपि पदता नित्या। पदानित्यतया च वाक्यादीनामप्यनित्यता व्याख्याता। (२)तस्मान्नृत्यानुकरणवत् पदाद्यनुकरणम्। यथा हि यादृशं गात्रचलनादि नर्तकः करोति तादृशमेव शिक्ष्यमाणाऽनुकरोति नर्तकी, न तु तदेव व्यनक्ति। एवं यादृशीमानुपूर्वीं वैदिकानां वर्णपदादीनां करोत्यध्यापयिता तादृशीमेवानुकरोति माणवको, न तु तामेवोच्चारयति आचार्यव्यक्तिभ्यो माणवकव्यक्तीनामन्यत्वात्। तस्मान्नित्यानित्यवर्णवादिनां न लौकिकवैदिकपदवाक्यादिपौरुषेयत्वे विवादः, केवलं वेदवाक्येषु पुरुषस्वातन्त्र्यास्वातन्त्र्ये विप्रतिपत्तिः। यथाहुः—

यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता।

तत्र सृष्टिप्रलयमनिच्छन्तो जैमिनीया वेदाध्ययनं प्रत्यस्मादृशगुरुशिष्यपरम्परामविच्छिन्नामनादिमाचक्षते। (३)वैयासिकं तु मतमनुवर्तमानाः श्रुतिस्मृतीतिहासादिसिद्धसृष्टिप्रलयानुसारेणानाद्यविद्योपधानलब्धसर्वशक्तिज्ञानस्यापि परमात्मनो नित्यस्य वेदानां योनेरपि न तेषु स्वातन्त्र्यं, पूर्वपूर्वसर्गानुसारेण तादृशतादृशानुपूर्वीविरचनात्। (४)तथा हि यागादिब्रह्महत्यादयोऽर्थानर्थहेतवो ब्रह्मविवर्ता अपि न सर्गान्तरे विपरीयन्ते, नहि जातु क्वचित् सर्गे ब्रह्महत्याऽर्थहेतुरनर्थहेतुश्चाश्वमेधो भवति, अग्निर्वा क्लेदयति, आपो वा दहन्ति, तद्वत्। (५)यथाऽत्र सर्गे नियतानुपूर्व्यं वेदाध्ययनमभ्युदयनिःश्रेयसहेतुरन्यथा तदेव वाग्वज्रतयाऽनर्थहेतुः एवं सर्गान्तरेष्वपीति, तदनुरोधाद् सर्वज्ञोऽपि सर्वशक्तिरपि पूर्वपूर्वसर्गानुसारेण वेदान् विरचयन्न स्वतन्त्रः। पुरुषास्वातन्त्र्यमात्रं चापौरुषेयत्वं रोचयन्ते जैमिनीया अपि, तच्चा-

---

(१) अधुना वेदस्योक्तरीत्या कर्तृमत्त्वाङ्गीकारे सापेक्षतया स्वातन्त्र्यहानिरिति ये वदन्ति तेषां मतमपाकर्तुमुपोद्घातमाह येऽपीति। अयमाशयः। वेदस्य सापेक्षत्वं नाम किं पुरुषनिर्वर्त्यत्वमात्रा[१]द्, अभिनवानुपूर्वीविरचनाद्वा[२], मानान्तरोपलब्धार्थविषयवचनारचनाद्वा, [३]कतिपयकालविराचितसर्वसम्प्रदायस्य वेदस्यैकपुरुषान्निःसरणाद्वा[४]? तत्र नाद्यस्तवापि सम्मतत्वादित्याह वर्णानां नित्यत्वमिति। व्यक्तिरभिव्यक्तिः।

( २ ) द्वितीये क्रमान्यत्वमात्रमभिनवत्वं विसदृशक्रमत्वं वा? आद्यो भवद्भिरप्यङ्गीकृतश्चरमस्तु नास्माभिरप्यङ्गीकृत इत्याह तस्मान्नृत्येति। नृत्तेतिपाठान्तरमत्र बोध्यम्।

( ३ ) तृतीयपक्षस्तु अनभ्युपगमनिरस्त इत्याह वैयासिकं त्विति। अनुवर्तमाना आचक्षते इत्यनुषज्यते।

( ४ ) ननु विवर्तत्वे वेदान्तानां यादृच्छिकत्वापातात् क्रमनियमः स्यात्तत्राह तथा हीति।

( ५ ) सर्वज्ञस्य सर्वशक्तेर्ब्रह्मणो नोपाध्यायवत् क्रमानुरोधो युक्त इति तत्राह यथाऽत्रेति। अत एव च 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तदर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥ इति श्रूयते श्रुतौ।

स्माकमपि समानमन्यत्राभिनिवेशात्। न(१) चैकस्य प्रतिभानेऽनाश्वास इति युक्तम्। नहि बहूनामप्यज्ञाना विज्ञानां वोऽऽशयदोषवतां प्रतिभाने युक्त आश्वास.। तत्त्वज्ञानवतश्चापास्तम मस्तदोपस्यैकस्यापि प्रतिभाने युक्त एवाश्वासः। (२)सर्गादिभुवां प्रजापतिदेवर्षीणां धर्मज्ञानवैराग्यैश्वर्यसम्पन्नानामुपपद्यते तत्स्वरूपावधारण, तत्प्रत्ययेन चार्वाचीनानामपि तत्र सम्प्रत्यय इत्युपपन्नं ब्रह्मणः शास्त्रयोनित्व, शास्त्रस्य चापौरुषेयत्वं प्रामाण्य चेति ॥

वर्णकान्तरमारभते—"अथवे"ति। (पृ० १२१ प०) पूर्वेणाधिकरणेन ब्रह्मस्वरूपलक्षणासम्भवाशङ्का व्युदस्य लक्षणसम्भव उक्तः। तस्यैव तु लक्षणस्यानेनानुमानत्वाशङ्कामपाकृत्यागमोपदर्शनेन ब्रह्मणि शास्त्रं प्रमाणमुक्तम्। अक्षरार्थस्त्वतिरोहितः ॥ ३ ॥

शास्त्रप्रमाणकत्वमुक्तं ब्रह्मण' प्रतिज्ञामात्रेण, तदनेन सूत्रेण प्रतिपादनीयमित्युत्सूत्रं पूर्वपक्षमारचयति भाष्यकारः—"कथं पुनरि"ति। (पृ० १२३ पं० २)। (३)किमाक्षेपे। शुद्धबुद्धोदासीनस्वभावतयोपेक्षणीयं ब्रह्म भूतमभिदधतां वेदान्तानामपुरुषार्थोपदर्शिनामप्रयोजनत्वापत्ते., भूतार्थत्वेन च प्रत्यक्षादिभिः समानविषयतय लौकिकवाक्यवत् तदर्थानुवादकत्वेनाप्रामाण्यप्रसङ्गात्। न खलु लौकिकानि वाक्यानि प्रमाणान्तरविषयमर्थमवबोधयन्ति स्वतः प्रमाणम्, एवं वेदान्ता अपीत्यनपेक्षत्वलक्षणं प्रामाण्यमेषा व्याहन्येत। न च तैरप्रमाणैर्भवितुं युक्तम्, न चाप्रयोजनै', स्वाध्यायाध्ययनविध्यापादितप्रयोजनवत्त्वनियमात्। तस्मात्तद्विहितकर्मापेक्षितकर्तृदेवतादिप्रतिपादनपरत्वेनैव क्रियार्थत्वम्। यदि त्वसंनिधानात्तत्परत्वं न रोचयन्ते, तत' सन्निहितोपासनादिक्रियापरत्वं वेदान्तानाम्। एवं हि प्रत्यक्षाद्यनधिगतगोचरत्वेनानपेक्षतया प्रामाण्य च प्रयोजनवत्त्व च सिध्यतीति तात्पर्यार्थः। पारमर्षसूत्रोपन्यासस्तु पूर्वपक्षदार्ढ्याय। (४)आनर्थक्यं चाप्रयोजनवत्त्वम्, सापेक्षतया प्रमानुत्पादकत्वं चानुवादकत्वादिति। (५)"अत" इत्यादि "वा"ऽन्तं(६)ग्रहणकवाक्यम्। (पृ० १२५ प० १) अस्य विभागभाष्यं "नही"त्या"द्युपपन्ना वे"त्यन्तम्। (पृ० १२६ पं० १)। स्यादेतत्, अक्रियार्थत्वेपि ब्रह्मस्वरूपविधिपरा वेदान्ता भविष्यन्ति, तथा च 'विधिना त्वेकवाक्यत्वादि'ति राद्धान्तसूत्रमनुग्रहीष्यते, न खल्वप्रवृत्तप्रवर्तनमेव विधिः, (७)उत्पत्तिविधेरज्ञातज्ञापनार्थत्वात्, वेदान्ताना चाज्ञातं ब्रह्म ज्ञापयतां तथाभावादित्यत आह—"न च परिनिष्ठित" इति। (पृ० १२९ पं० २)। (८)अनागतोत्पाद्यभाव-

(१) चतुर्थपक्ष निराकरोति न चैकस्येति। सर्वदा सम्प्रदायाविच्छेदमिच्छद्भिरपि सम्प्रदायप्रवर्तकेष्वाश्वास आस्थेय एव, स चरमेकस्मिन्ब्रह्मण्यवगतसार्वज्ञ्ये कृत इति भाव।

(२) नन्वीश्वरस्यादृष्टत्वात्कथं तत्कर्तृके वेदे विश्वास अत आह सर्गादिभुवामिति।

(३) वेदान्ता ब्रह्मणि प्रमाण न वेति सिद्धवस्तुबोधात्फलभावाभावाभ्यां, सिद्ध रूपादिहीन वस्तु बोधयतो वाक्यस्य मानान्तरसापेक्षत्वानपेक्षत्वाभ्यां वा सशये पूर्वाधिकरणद्वितीयवर्णकेनापेक्षिकीं सङ्गतिमुक्त्वा पूर्वपक्षभाष्यं व्याचष्टे किमाक्षेप इत्यादिना। कथमिति थमुप्रत्ययान्त किंशब्द आक्षेपेऽत्र बोध्यः।

(४) आनर्थक्यमिति भाष्यस्याभिधेयाभाव इत्यर्थोऽनुभवविरोधान्न युक्तो वक्तुमित्याहानर्थक्यं चेति।

(५) भाष्ये पौनरुक्त्यमाशक्य सङ्ग्रहविवरणत्वमाह अत इत्यादीति।

(६) वान्तमिति। उपासनादिक्रियान्तरविधानार्थत्वं वेत्येतदन्तमित्यर्थ।

(७) उत्पत्तिविधेरिति। अधिकारविधित प्रवृत्तिलाभादुत्पत्तिविधिरज्ञातकर्मस्वरूपबोधपर इत्यर्थ।

(८) अनागतेति। अनागतत्वादेवोत्पाद्यः भावो भावना तद्विषय· सर्वो विधिरित्यर्थ.। अधिकारेति।

विषय एव हि सर्वो विधिरुपेयोऽधिकारविनियोगप्रयोगोत्पत्तिरूपाणां परस्पराविनाभावात्, (१)तद्वाक्यानां त्वैदम्पर्यं भिद्यते। यथाऽ'ग्निहोत्रं जुहुयात्स्वर्गकाम' इत्यादिभ्योऽधिकारविनियोगप्रयोगाणां प्रतिलम्भा'दग्निहोत्रं जुहोती'त्युत्पत्तिमात्रपरं वाक्यम्। न तत्र विनियोगादयो न सन्ति, सन्तोऽप्यन्यतो लब्धत्वात् केवलमविवक्षिताः। तस्माद् भावनाविषयो विधिर्न सिद्धे वस्तुनि भवितुमर्हतीति। उपसंहरति **"तस्मा"दिति**। अत्रारुचिकारणमुक्त्वा पक्षान्तरमुपसंक्रामति **"अथे"ति**। एवं च सत्युक्तरूपे ब्रह्मणि शब्दस्यातात्पर्यात् प्रमाणान्तरेण (२)यादृशमस्य रूपं व्यवस्थाप्यते न तच्छब्देन विरुध्यते, तस्योपासनापरत्वात्, समारोपेण चोपासनाया उपपत्तेरिति। प्रकृतमुपसंहरति **"तस्मान्ने"ति**। सूत्रेण सिद्धान्तयति **"एवं प्राप्त** उच्यते" ( पृ० १२० पं० १ )—

## ( सू० ) तत्तु समन्वयात् ॥ ४ ॥

तदेतद् व्याचष्टे–**"तुशब्द"** इति। तदित्युत्तरपक्षप्रतिज्ञां विभजते–**"तद्ब्रह्मे"ति**। पूर्वपक्षवादी कर्कशाशयः पृच्छति–**"कथम्"**। कुतः प्रकारादित्यर्थः। सिद्धान्ती स्वपक्षे हेतुं प्रकारभेदमाह—**"समन्वयात्"**। सम्यगन्वयः (३)समन्वयस्तस्मात्। एतदेव विभजते–**"सर्वेषु हि वेदान्तेष्वि"ति**। वेदान्तानामात्यन्तिकीं ब्रह्मपरतामाचिख्यासुर्बहूनि वाक्यान्युदाहरति—**"सदेवे"ति**। ( पृ० १३३ पं १ ) (४)'यतो वा इमानि भूतानी'ति तु वाक्यं पूर्वमुदाहृत जगदुत्पत्तिस्थितिनाशकारणमिति चेह स्मारितमिति न पठितम्। (५)येन हि वाक्यमुपक्रम्यते येन चोपसंह्रियते तदेव वाक्यार्थ इति शाब्दाः। (६)यथोपां-

---

अधिकार फलसम्बन्धबोधनम्, विनियोग क्रियाया फलशेषत्वज्ञापनम्, प्रयोगोऽनुष्ठानम्, उत्पत्तिः कर्मस्वरूपज्ञानम्, फलसम्बन्धः क्रियायाः शेषत्व विना न सम्भवति, तच्च नानुष्ठान विनाऽनुष्ठान च नाज्ञात इति एतेषामविनाभाव। सिद्धं चेत्पुरुषव्यापारानपेक्ष फलमारभेत सदा चारभेतेति नाधिकारादिसम्भव इत्यर्थः।

( १ ) सर्वेषामविनाभावेपि अवान्तरभेदप्रयोजकमाह तद्वाक्यानां त्विति। ऐदंपर्यन्तात्पर्यम्। तदेवाह यथेत्यादिना।

( २ ) यादृश जीवभिन्नम्।

( ३ ) सम्यगन्वय इति। तात्पर्य सम्यक्त्वम्।

( ४ ) नन्विदमधिकरण शास्त्रयोनित्वद्वितीयवर्णकाक्षेपसमाधानरूपं, तत्र च यतो वेत्यादिवाक्यमुदाहृतमिह तत्कुत उपेक्षितमत आह यतो वेति। 'तद्ब्रह्म सर्वज्ञमि'ति भाष्ये यत इत्यादिवाक्यप्रमेयकथनात्तत्प्रमाणं बुद्धिस्थमिति नोदाहृतमित्यर्थः।

( ५ ) वेदान्तानां ब्रह्मात्मैकत्वे उपक्रमोपसंहारैक्यं तात्पर्यलिङ्ग सदृष्टान्तमाह येनेति।

( ६ ) 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ उपांशुयाजमन्तरा यजति विष्णुरुपांशु यष्टव्योऽजामित्वाय' इत्यादिमन्त्रेणाग्नेयाग्नीषोमयो पुरोडाशयो निरन्तरयो करणे जामि—आलस्य भवेदिति उपांशुयागो विधीयते। तत्र किमिदमपूर्वयागविधानमुत 'विष्णुरुपांशु यष्टव्य' इति पठितयागत्रयस्यानुवाद इति संशये, द्रव्यदेवतयोरश्रवणात् विधिप्रत्ययाभावाच्चाग्रे पठितयागत्रयस्यानुवाद इति पूर्वपक्षः। एवंसति एकवाक्यत्वभंगापत्त्या, मन्त्रकाण्डे उपांशुयाजस्थाने पठितवैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्याभिस्तुल्यार्थत्वेन विकल्पमानाभिर्विष्ण्वादिदेवताप्राप्त्याज्यलाभात् 'यजेत' इति पंचमलकारस्य विधिप्रत्ययत्वात् अपूर्वयागविधिरेवायमिति भेदलक्षणाचिन्तायां सिद्धान्तितम्। विष्ण्वादिवाक्यानि चार्थवादा इति संक्षेप।

शुयाजवाक्येऽनूचोः पुरोडाशयोर्जामितादोषसङ्कीर्तनपूर्वकोपांशुयाजविधाने तत्प्रतिसमाधानोपसंहारे चापूर्वोपांशुयाजकर्मविधिपरतैकवाक्यताबलादाश्रिता, एवमत्रापि 'सदेव सोम्येदमि'ति ब्रह्मोपक्रमात् 'तत्त्वमसी'ति च जीवस्य ब्रह्मात्मनोपसंहारात् तत्परतैव वाक्यस्य। (१)एवं वाक्यान्तराणामपि पौर्वापर्यालोचनया ब्रह्मपरत्वमवगन्तव्यम्। न च तत्परत्वस्य दृष्टस्य सति सम्भवेऽन्यपरताऽदृष्टा युक्ता कल्पयितुम्, अतिप्रसङ्गात्। न केवलं कर्तृपरता तेषामदृष्टाऽनुपपन्ना चेत्याह—**"न च तेषा"मिति**। (पृ० १३४ पं० ५) सापेक्षत्वेनाप्रामाण्यं पूर्वपक्षबीजं दूषयति— **'न च परिनिष्ठितवस्तुस्वरूपत्वेपी'**ति। (पृ० ११३ पं० १) (२)अयमभिसन्धिः। पुंवाक्यदृष्टान्तेन हि भूतार्थतया वेदान्तानां सापेक्षत्वमाशङ्क्यते। तत्रैवं भवान् पृष्टो व्याचष्टाम्, किं पुंवाक्यानां सापेक्षता भूतार्थत्वेनाहो पौरुषेयत्वेन। यदि भूतार्थत्वेन ततः प्रत्यक्षादीनामपि(३) परस्परापेक्षत्वेनाप्रामाण्यप्रसङ्गः, तान्यपि भूतार्थान्येव। अथ पुरुषबुद्धिप्रभवतया पुंवाक्यं सापेक्षम्, एवं तर्हि तदपूर्वकाणां वेदान्तानां भूतार्थानामपि नाप्रामाण्यं प्रत्यक्षादीनामिव नियतेन्द्रियलिङ्गादिजन्मनाम्। (४)यद्युच्येत सिद्धे किलापौरुषेयत्वे वेदान्तानामनपेक्षतया प्रामाण्यं सिद्ध्येत्, तदेव तु भूतार्थत्वेन न सिद्ध्यति, भूतार्थस्य शब्दानपेक्षेण पुरुषेण मानान्तरतः शक्यज्ञानत्वाद्बुद्धिपूर्वविरचनोपपत्तेः वाक्यत्वादिलिङ्गकस्य वेदपौरुषेयत्वानु(५)मानस्याप्रत्यूहमुत्पत्तेः। तस्मात्पौरुषेयत्वेन सापेक्षत्वं दुर्वारं, न तु भूतार्थत्वेन। (६)कार्यार्थत्वे तु कार्यस्यापूर्वस्य मानान्तरागोचरतयाऽत्यन्ताननुभूतपूर्वस्य तत्त्वेन समारोपेण वा पुरुषबुद्धावनारोहात् तदर्थानां वेदान्तानामशक्यरचनतया पौरुषेयत्वाभावादनपेक्षं प्रमाणत्वं सिध्यतीति प्रामाण्याय वेदान्तानां कार्यपरत्वमातिष्ठामहे। (७)अत्र ब्रूमः। (८)किं पुनरिदं कार्यमभिमतमायुष्मतः, यदशक्यं पुरुषेण ज्ञातुम्। (९)अपूर्वमिति चेत्, हन्त कुतस्त्यमस्य लिङाद्यर्थत्वं, तेनालौकिकेन सङ्गतिसंवेदनविरहात् लोकानुसारतः क्रियाया एव लौकिक्याः—कार्याया लिङादेरवगमात्। (१०)'स्वर्गकामो यजेते'ति साध्यस्वर्गवि-

---

(१) ऐतरेयके 'आत्मा वा इदमेक एवाग्र आसीत्' इत्युपक्रम्य 'प्रज्ञानं ब्रह्मे'त्युपसंहृतम्। आथर्वणेपि 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती'ति सर्वात्मकं ब्रह्मोपक्रम्य 'ब्रह्मैवेदममृतं पुरस्तात्' इति तदेवोपसंहृतम् इत्यर्थः।

(२) अत्र वेदान्ता मानान्तरसापेक्षाः सिद्धवस्तुपरत्वात् तीरे फलानि सन्तीति पुंवाक्यवदिति पूर्वपक्षिणः प्रसङ्गहेतौ पौरुषेयत्वमुपाधिरिति भाष्यस्थापिशब्देन द्योत्यत इत्याह अयमभिसन्धिरिति।

(३) हेतोरनैकान्तिकत्वमाह प्रत्यक्षादीनामपीति।

(४) वाक्यस्य सत सिद्धवस्तुपरत्वे पौरुषेयत्वापत्तिसाधनव्यापकत्वमुपाधेः शङ्कते यद्युच्येतेति।

(५) वेदान्तवाक्यं पौरुषेयं वाक्यत्वात् दृष्टमानयेतिवाक्यवदित्यनुमानस्येत्यर्थः।

(६) कार्यपरतायां हि वेदान्तवाक्यानां न वाक्यत्वादिना सापेक्षत्वमनुमेयं पौरुषेयत्वस्योपाधित्वात्। एवं न च साधनव्यापकत्वमित्याह कार्यार्थत्व इति।

(७) अकार्ये मानान्तरायोग्यत्वस्यासिद्धत्वात्तत्परत्वेपि वेदान्तानां पौरुषेयत्वं सम्भवति इति समा साधनव्याप्तिः, ततश्च वाक्यत्वादिलिङ्गकानुमानसिद्धं पौरुषेयत्वं दुरपवादमित्याशयेनाह अत्र ब्रूम इत्यादिना।

(८) किं पुनरिति। कृतियोग्यस्य कार्यत्वे भावार्थस्यापि तत्त्वेन मानान्तरयोग्यत्वमित्यर्थः।

(९) अलौकिककार्यत्वाभिप्रायेणाशङ्कते अपूर्वमिति।

(१०) स्वर्गकामपदसमभिव्याहारसंज्ञकतर्कानुगृहीतवेदादेव क्रियाविलक्षणापूर्वे लिङादीनां सम्बन्धग्रह इत्याशयेनाशङ्कते स्वर्गकाम इति।

शिष्टो नियोज्योऽवगम्यते, स च तदेव कार्यमवगच्छति यत् स्वर्गानुकूलं, न च क्रिया क्षणभङ्गुराऽऽमुष्मिकाय स्वर्गाय कल्पत इति पारिशेष्याद्वेदत एवापूर्वे कार्ये लिङादीनां सम्बन्धग्रह इति चेत्। हन्त (१)चैत्यवन्दनादिवाक्येष्वपि स्वर्गकामादिपदसम्बन्धादपूर्वकार्यत्वप्रसङ्गस्तथा च तेषामप्यशक्यरचनत्वेनापौरुषेयत्वापातः, स्पष्टदृष्टेन पौरुषेयत्वेन वा तेषामपूर्वार्थत्वप्रतिषेधे वाक्यत्वादिना लिङ्गेन वेदानामपि पौरुषेयत्वमनुमितमित्यपूर्वार्थता न स्यात्। (२)अन्यतस्तु वाक्यत्वादीनामनुमानाभासत्वोपपादने कृतमपूर्वार्थत्वेनात्र तदुपपादकेन। उपपादितं चापौरुषेयत्वमस्माभिर्न्यायकणिकायाम्(३), इह तु विस्तरभयान्नोक्तम्। तेनापौरुषेयत्वे सिद्धे भूतार्थानामपि वेदान्तानां न सापेक्षतया प्रामाण्यविघातो, न चानधिगतगन्तृता नास्ति येन प्रामाण्यं न स्याज्जीवस्य ब्रह्मताया अन्यतोऽनधिगमात्, तदिदमुक्तं–न च परिनिष्ठितवस्तुस्वरूपत्वेपीति। द्वितीयं पूर्वपक्षबीजं स्मारयित्वा दूषयति–**"यत्तु हेयोपादेयरहितत्वादि"**ति। विध्यर्थावगमात् खलु पारम्पर्येण पुरुषार्थप्रतिलम्भ, इह तु "तत्त्वमसी"त्यवगतिपर्यन्ताद्वाक्यार्थज्ञानाद् बाह्यानुष्ठानायासानपेक्षात्साक्षादेव पुरुषार्थप्रतिलम्भो नायं सर्पो रज्जुरियमिति ज्ञानादिवेति। (४)सोऽयमस्य विध्यर्थज्ञानात् प्रकर्षः (पृ० १३६ प०१)। (५)एतदुक्तं भवति। द्विविधं हीप्सितं पुरुषस्य, किंचिदप्राप्तं ग्रामादि, किंचित् पुनः प्राप्तमपि भ्रमवशादप्राप्तमित्यवगतं, यथा स्वग्रीवावनद्धं ग्रैवेयकम्(६)। एवं जिहासितमपि द्विविधं, किंचिदहीनं जिहासति, यथा वलयितचरणं फणिनं, किंचित्पुनर्हीनमेव जिहासति, यथा चरणाभरणे नूपुरे फणिनमारोपितम्। तत्राप्राप्तप्राप्तौ चात्यक्तत्यागे च बाह्योपायानुष्ठानसाध्यत्वात्तदुपायतत्त्वज्ञानादस्ति पराचीनानुष्ठानापेक्षा। न जातु ज्ञानमात्रं वस्त्वपनयति। नहि सहस्रमपि रज्जुप्रत्यया वस्तुसन्तं फणिनमन्यथयितुमीशते। समारोपिते तु प्रेप्सितजिहासिते तत्त्वसाक्षात्कारमात्रेण बाह्यानुष्ठानानपेक्षेण शक्येते प्राप्तुमिव हातुमिव। समारोपमात्रजीविते हि ते, समारोपितं च तत्त्वसाक्षात्कारः समूलघातमुपहन्तीति। तथेहाप्यविद्यासमारोपितजीवभावे ब्रह्मण्यानन्दे वस्तुतः शोकदुःखादिरहिते समारोपितनिबन्धन(७)स्तद्भाव'स्तत्त्वमसी'तिवाक्यार्थतत्त्वज्ञानादवगतिपर्यन्तान्निवर्तते। तन्निवृत्तौ प्राप्तमप्यानन्दरूपमप्राप्तमिव प्राप्तं भवति, त्यक्तमपि शोकदुःखाद्यत्यक्तमिव त्यक्तं भवति, तदिदमुक्तं **"ब्रह्मात्मावगमादेव"**जीवस्य **सर्वक्लेशस्य** सवासनस्य विपर्यासस्य, स हि क्लिश्नाति जन्तूनतः क्लेशः, तस्य प्रकर्षेण हानात्

(१) उक्ततर्केऽतिप्रसङ्गमाह चैत्येति।

(२) ननु स्मर्यमाणकर्तृकत्वेन वाक्यत्वहेतु सोपाधिक इत्याशंक्य, सिद्धार्थकेषु वेदान्तेष्वपि तत्प्रमानमत कार्यार्थत्वमनपेक्षताप्रयोजकं न भवतीत्याह अन्यतस्त्विति।

(३) वर्तमानसन्निकर्षजन्यप्रत्यक्षस्य कार्यरूपधर्मगोचरत्वानुपपत्तेर्योगसामर्थ्यस्यापीन्द्रियविषयेष्वेवातिशयजनकत्वान्न धर्मस्य प्रत्यक्षता, लिङ्गाद्यभावाच्च नानुमेयता, न चाज्ञाते पुंसां वाक्यरचना सम्भवतीति वेदो न पौरुषेय इति न्यायकणिकायां व्युत्पादितमिति भाव।

(४) सर्वक्लेशप्रहाणादिति भाष्यस्थप्रशब्दार्थमाह सोऽयमिति।

(५) बाह्यानुष्ठानानपेक्षमज्ञाननिवृत्त्यानन्दाविर्भावफलमन्वयव्यतिरेकिदृष्टान्तद्वयप्रदर्शनपूर्वकं प्रपञ्चनस्य दर्शयति एतदुक्तमिति।

(६) ग्रैवेयक–ग्रीवालङ्कारः।

(७) समारोपिताऽविद्या निबन्धनं यस्य जीवभावस्य स तथोक्त।

पुरुषार्थस्य दुःखनिवृत्तिसुखाप्तिलक्षणस्य सिद्धेरिति । यत्तु—आत्मेत्येवोपासीताऽऽत्मानमेव (१)लोकमुपासीतेत्युपासनावाक्यगतदेवतादिप्रतिपादनेनोपासनापरत्वं वेदान्तानामुक्तं, तद्दूषयति—"**देवतादिप्रतिपादनस्य तु** (२)आत्मेत्येतावन्मात्रस्य **स्ववाक्यगतोपासनार्थत्वेपि न कश्चिद्विरोधः**"। यदि न विरोधः, सन्तु तर्हि वेदान्ता देवताप्रतिपादनद्वारेणोपासनाविधिपरा एवेत्यत आह "**न तु तथा ब्रह्मण**" इति । उपास्योपासकोपासनादिभेदसिद्ध्यधीनोपासना न निरस्तसमस्तभेदप्रपञ्चे वेदान्तवेद्ये ब्रह्मणि संभवतीति नोपासनाविधिशेषत्वं वेदान्तानां तद्विरोधित्वादित्यर्थः । (३)स्यादेतत् , यदि विधिविरहेऽपि वेदान्तानां प्रामाण्यं, हन्त तर्हि 'सोऽरोदीदि'त्यादीनामप्यस्तु स्वतन्त्राणामेवोपेक्षणीयार्थानां प्रामाण्यम् , नहि हानोपादानबुद्धी एव प्रमाणस्य फले, उपेक्षाबुद्धेरपि तत्फलत्वेन प्रामाणिकैरभ्युपेतत्वादिति कृत (४)'बर्हिषि रजतं न देयमि'त्यादिनिषेधविधिपरत्वेनैतेषामित्यत आह "**यद्यपी**"ति । ( पृ० १३७ पं० १ ) (५)स्वाध्यायविध्यधीनग्रहणतया हि सर्वो वेदराशिः पुरुषार्थतन्त्र इत्यवगतम् , तत्रैकेनापि वर्णेन नापुरुषार्थेन भवितुं युक्तं, किं पुनरियता 'सोऽरोदी'दित्यादिना पदप्रबन्धेन । न च वेदान्तेभ्य इव तदर्थावगममात्रादेव कश्चित् पुरुषार्थ उपलभ्यते, तेनैष पदसन्दर्भः साकाङ्क्ष एवास्ते पुरुषार्थमुदीक्षमाणः । 'बर्हिषि रजतं न देयमि'त्ययमपि निषेधविधिः स्वनिषेध्यस्य निन्दामपेक्षते । नह्यन्यथा ततश्चेतनः शक्यो निवर्तयितुम् । (६)तद्यदि दूरतोऽपि न निन्दामवाप्स्यत्ततो निषेधविधिरेव रजतनिषेधे च निन्दायां च दर्विहोमवत् सामर्थ्यद्वयमकल्पयिष्यत् । तदेवमुक्तयोः 'सोऽरोदीदि'ति च 'बर्हिषि रजतं न देयमि'ति च पदसन्दर्भयो(७)र्लक्ष्यमाणनिन्दाद्वारेण नष्टाश्वदग्धरथवत् परस्परं समन्वयः । न त्वेवं वेदान्तेषु पुरुषार्थापेक्षा, तदर्थावगमादेवानपेक्षात् परमपुरुषार्थलाभादित्युक्तम् । ननु विध्यसंस्पर्शिनो वेदस्यान्यस्य न प्रामाण्यं दृष्टमिति कथं वेदान्तानां तदस्पृशां तद्भविष्यतीत्यत आह—"**न चानुमानगम्य'मिति** । अबाधितानधिगतासंदिग्धबोधजनकत्वं हि प्रमाणत्वं प्रमाणानां, तच्च स्वत इत्युपपादितम्(८)। (९)यद्यपि चैषामीदृग्बोधजनकत्वं का-

---

( १ ) आत्मानमेव लोकं चैतन्यमित्यर्थः । देवता—सगुणं ब्रह्म । आदिशब्दात् प्राणविद्युदादि गृह्यते ।

( २ ) उपासनावाक्यैकदेशस्थमुपास्यसमर्थकं विविनक्ति आत्मेतीति ।

( ३ ) यदि विध्यभावेऽपि वेदान्तवाक्यानां प्रामाण्यं तर्हि अर्थवादा अपि प्रमाणं स्युरिति पूर्वपक्षतात्पर्यम् ।

( ४ ) बर्हिषीति । तत्राग्नि यागे रजतं न देयमिति निषेधविधिपरत्वाभावेऽपि प्रामाण्योपपादनस्य शक्यत्वादित्यर्थः ।

( ५ ) अर्थवादानामुपेक्षाफलस्यासम्भवान्निषेधशेषपरतयैवोक्तार्थवादानां प्रामाण्यसम्भव । इत्याशयेन परिहारमाह स्वाध्यायेति ।

( ६ ) ननु निषेध एव स्वनिषेध्यस्यानर्थहेतुत्वान्यथानुपपत्त्या निन्दां कल्पयिष्यतीत्याशंक्य, नैवमित्याह तद्यदीति । अर्थवादादेव निन्दालाभे निषेधकस्य निषेधे निन्दायां च तात्पर्यं न कल्प्यमिति भाव ।

( ७ )ननु 'सोऽरोदीदि'ति वाक्ये निन्दा न भासते किन्तु भूतानुवाद इत्याशंक्य मुख्यार्थे प्रयोजनाभावान्निन्दा लक्ष्यत इत्याह लक्ष्यमाणेति । ( ८ ) न्यायकणिकायामित्यर्थः ।

( ९ ) ननु प्रमायाः कार्येण प्रमाणानां तज्जनकत्वमनुमेयम् , तत्कथं नानुगम्यमिति भाष्य सङ्गच्छत इत्याशङ्क्याह यद्यपीति । कार्यार्थापत्त्यपरपर्यायानुमानेन मानान्तरेण वा प्रमा नोत्पद्यते किन्तूदितायां तस्यामनुमानं प्रवर्तत इत्यर्थः ।

र्यार्थापत्तिसमधिगम्यं, तथापि तद्बोधोपजनने मानान्तरं नापेक्षन्ते, नापीमामेवार्थापत्तिं, (१)परस्पराश्रयप्रसङ्गादिति स्वत इत्युक्तम् । ईदृग्बोधजनकत्वं च कार्य इव विधीनां वेदान्तानां ब्रह्मण्यस्तीति दृष्टान्तानपेक्षं तेषां ब्रह्मणि प्रामाण्यं सिद्ध भवति, अन्यथा नेन्द्रियान्तराणां रूपप्रकाशन दृष्टमिति चक्षुरपि न रूप प्रकाशयेदिति । प्रकृतमुपसंहरति **"तस्मादि"ति** ।

आचार्य्यदेशीयानां मतमुत्थापयति **"अत्रापरे प्रत्यवतिष्ठन्त"इति** ( पृ० १२१ पं० १ )। तथाहि—

(२)अज्ञातसंगतित्वेन शास्त्रत्वेनार्थवत्तया ।
मननादिप्रतीत्या च कार्यार्थाद्ब्रह्मनिश्चयः ॥

न खलु वेदान्ताः सिद्धब्रह्मरूपपरा भवितुमर्हन्ति, तत्राविदितसंगतित्वात् । यत्र हि शब्दा लोकेन न प्रयुज्यन्ते तत्र न तेषां संगतिग्रहः । न चाहेयमनुपादेयं रूपमात्रं कश्चिद्विवक्षति प्रेक्षावान् , तस्याबुभुत्सितत्वात्, अबुभुत्सितावबोधने च प्रेक्षावत्ताविघातात् । तस्मात् प्रतिपित्सितं प्रतिपिपादयिषन्नयं लोकः प्रवृत्तिनिवृत्तिहेतुभूतमेवार्थं प्रतिपादयेत्, कार्यं चावगतं तद्धेतुरिति तदेव बोधयेत् । एवं च वृद्धव्यवहारप्रयोगात् पदानां कार्यपरतामवगच्छति । तत्र किञ्चित्साक्षात्कार्याभिधायकं, किञ्चित्कार्यार्थस्वार्थाभिधायकं, न तु भूतार्थपरता पदानाम् । अपि च नरान्तरस्य व्युत्पन्नस्यार्थप्रत्ययमनुमाय(३) तस्य च शब्दभावाभावानुविधानमवगम्य शब्दस्य तद्विषयबोधकत्वं निश्चेतव्यम् । न च भूतार्थरूपमात्रप्रत्यये परनरवर्त्तिनि किंचिल्लिङ्गमस्ति । कार्यप्रत्यये तु नरान्तरवर्तिनि प्रवृत्तिनिवृत्ती स्तो हेतू इत्यज्ञातसंगतित्वान्न ब्रह्मरूपपरा वेदान्ताः । अपि च वेदान्तानां वेदत्वात् शास्त्रत्वप्रसिद्धिरस्ति, प्रवृत्तिनिवृत्तिपराणां च संदर्भाणा शास्त्रत्वम् । यथाहुः—

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसा येनोपदिश्येत तच्छास्त्रमभिधीयते ॥

इति । तस्माच्छास्त्रत्वप्रसिध्या व्याहतमेषां स्वरूपपरत्वम् । (४)अपि च न ब्रह्मरूपप्रतिपादनपराणामेषामर्थवत्त्वं पश्यामः । (५)न च रज्जुरियं न भुजङ्ग इति यथाकथंचिल्लक्षणया वाक्यार्थतत्त्वनिश्चये यथा भयकम्पादिनिवृत्तिः, एवं 'तत्त्वमसी'तिवाक्यार्थावगमान्निवृत्तिर्भवति सांसारिकाणां धर्माणाम् , श्रुतवाक्यार्थस्यापि पुंसस्तेषां तादवस्थ्यात् । अपि च यदि श्रुतब्रह्मणो भवति सांसारिकधर्मनिवृत्तिः कस्मात्पुनः श्रवणस्योपरि मननादयः

---

(१) परस्परेति । उत्पन्नाया प्रमायां प्रमाणानां प्रमाजनकत्वस्यानुमानं ततश्च प्रमोत्पत्तिरित्यन्योन्याश्रयप्रसङ्गो बोध्यः ।

(२) कार्यान्वित एवार्थे पदसङ्गतिग्रहेण सिद्धं वस्तु न शब्दप्रमेयमिति वेदान्तानामुपासननियोगपरत्वं मन्यमानामेकदेशीयानां मतेन पूर्वपक्षमाह अज्ञातेति ।

(३) अनुमायेति । अस्येयं घटानयने प्रवृत्ति अर्थज्ञानपूर्विका प्रवृत्तित्वान्मदीयप्रवृत्तिवत्, तच्चार्थज्ञानं घटमानयेति वाक्यजन्यं तद्वाक्यभावाभावानुविधायित्वादित्यादिरनुमानाकारोऽत्र द्रष्टव्यः ।

(४) शास्त्रत्वेनेत्यादिहेतून् व्याचष्टे अपि चेत्यादिना ।

(५) न चेति । सांसारिकाणां धर्माणां न च निवृत्तिरिति योजना । यथाकथञ्चिदिति। सिद्धसंसर्गस्य नियोगाविनाभावेनाप्राप्तेः 'मा भैषीः' इति नियोगं कल्पयित्वाऽन्यपरादेव वाक्यात्सिद्धार्थनिश्चयो जायत इत्यर्थः ।

श्रूयन्ते । तस्मात्तेषां वैयर्थ्यप्रसङ्गादपि न ब्रह्मस्वरूपपरा वेदान्ताः, किन्त्वात्मप्रतिपत्तिविषयकार्यपराः । तच्च कार्यं स्वात्मनि नियोज्यं नियुञ्जानं नियोग इति च मानान्तरापूर्वतयाऽपूर्वमिति चाख्यायते । (१)न च विषयानुष्ठानं विना तत्सिद्धिरिति स्वसिद्ध्यर्थं तदेव कार्यं स्वविषयस्य करणस्यात्मज्ञानस्यानुष्ठानमाक्षिपति । यथा च कार्यं स्वविषयाधीननिरूपणमिति ज्ञानेन विषयेण निरूप्यते, एव ज्ञानमपि स्वविषयमात्मानमन्तरेणाशक्यनिरूपणमिति तन्निरूपणाय तादृशमात्मानमाक्षिपति, तदेव कार्यम् । (२)यथाहुः—'यत्तु तत्सिद्ध्यर्थमुपादीयते आक्षिप्यते तदपि विधेयमिति तन्त्रे व्यवहार' इति । (३)विधेयता च नियोगविषयस्य ज्ञानस्य भावार्थतयाऽनुष्ठेयता, तद्विषयस्य त्वात्मनः स्वरूपसत्ताविनिश्चितिः,(४)आरोपितद्भावस्य त्वन्यस्य निरूपकत्वे तेन तन्निरूपितं न स्यात् । तस्मात्तादृगात्मप्रतिपत्तिविधिपरेभ्यो वेदान्तेभ्यस्तादृगात्मविनिश्चयः । तदेतत्सर्वमाह **"यद्यपी"ति** । विधिपरेभ्योऽपि वस्तुतत्त्वविनिश्चय इत्यत्र निदर्शनमुक्तं—**"यथा यूपे"ति** । 'यूपे पशुं बध्नाती'ति बन्धनाय विनियुक्ते यूपे तस्यालौकिकत्वात् कोऽसौ यूप इत्यपेक्षिते 'खादिरो यूपो भवति यूपं तक्षति यूपमष्टाश्रीकरोती'त्यादिभिर्वाक्यैस्तक्षणादिविधिपरैरपि संस्काराविष्टं विशिष्टसंस्थानं दारु यूप इति गम्यते । (५)एवमाहवनीयादयोऽप्यवगन्तव्याः । प्रवृत्तिनिवृत्तिपरस्य शास्त्रत्वं न स्वरूपपरस्य, कार्यएव सम्बन्धो न स्वरूप, इति हेतुद्वयं भाष्यवाक्येनोपपादितम्—**"प्रवृत्तिनिवृत्तिप्रयोजनत्वादित्यादिना ( पृ० १४१ पं० १ ) तत्सामान्याद्वेदान्तानामपि तथैवार्थवत्त्वं स्या"दित्यन्तेन** ( पृ० १४२ पं० ४ ) । न च स्वतन्त्रं कार्यं नियोज्यमधिकारिणमनुष्ठातारमन्तरेणेति नियोज्यभेदमाह **"सति च विधिपरत्व"इति** । 'ब्रह्म वेद ब्रह्मैव भवती'ति सिद्धवदर्थवादावगतस्यापि ब्रह्मभवनस्य नियोज्यविशेषाकाङ्क्षायां ब्रह्मबुभूषोर्नियोज्यविशेषस्य (६)रात्रिसत्रन्यायेन प्रतिलम्भः । पिण्डपितृयज्ञन्यायेन

---

(१) ननु कार्यपरेभ्यो वेदान्तेभ्यस्तर्हि कथं वस्तुसिद्धिरित्याशङ्क्य, विध्याक्षेपलक्षणोपादानप्रमाणादित्युत्तरमाह नचेति ।

(२) ननु कार्यं स्वविषयज्ञाननिरूपणाय ज्ञायमानमात्मानमपेक्षते चेत्तर्हि तस्य श्रौतत्वं न स्यादित्याशङ्क्य, विध्याक्षिप्तस्य श्रुतिमूलत्वे गुरुसंमतिमाह यथाहुरिति ।

(३) ज्ञानस्य प्रमात्वात्प्रत्यक्षवन्न विधेयताऽऽत्मनश्च नित्यत्वात्तदसम्बन्ध इत्याशङ्क्याह विधेयता चेति । ज्ञानमिहोपासनं तच्च क्रियेत्यनुष्ठानम् आत्मनस्तु स्वरूपसत्ताविनिश्चितिरज्ञातज्ञप्तिर्विधेयतेति न विरोध इति भाव ।

(४) ननु 'वाचं धेनुमुपासीत' इत्यादिवाग्धेनूपास्त्यादाविवारोप्यस्य विधेयबुद्धिविषयत्वं किं न स्यादत आह आरोपितेति । ब्रह्मास्मीति ज्ञाने यादृशार्थभानं तद्भाव आरोपितो यस्य स तथा, तस्यान्यस्य ज्ञाननिरूपकत्वे तेन प्रतिभासमानार्थेन 'तज्ज्ञानं निरूपितं न स्यात् , सत्यां गतौ आरोपो न युक्त इति तात्पर्यम् ।

(५) 'यदाहवनीये जुहोती'ति विहिते क आहवनीय इत्याकाङ्क्षायां 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिविधिभिः संस्कारविशिष्टोऽग्निराहवनीय इति गम्यते, एवमपूर्वदेवतास्वर्गादिकमपि विधिपरेण शास्त्रेणैव समर्थ्यत इति भाव ।

(६) 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इति रात्रिशब्देन सोमविशेषाणां विधानम् । तत्र किं तद्वाक्योक्तप्रतिष्ठा फलं स्वर्गो वेति संशये एवंकाम इत्यश्रवणात् विधिशक्तिलभ्यत्वात् स्वर्गस्य नियतफलत्वेन वाक्यशेषावगतप्रतिष्ठानभ्युपगमात् स्वर्ग एव फलमिति पूर्वपक्षे, प्रतिष्ठाफलस्य साक्षान्निर्देशेनानुमा-

(१)तु स्वर्गकामस्य नियोज्यस्य कल्पनायामर्थवादस्यासमवेतार्थतयाऽत्यन्तपरोक्षा वृत्तिः स्यादिति । ब्रह्मभावश्चामृतत्वमिति "अमृतत्वकामस्ये"त्युक्तम् । अमृतत्वं चामृतत्वादेव न कृतकत्वेन शक्यमनित्यमनुमातुम्, आगमविरोधादिति भावः । उक्तेन धर्मब्रह्मज्ञानयोर्वैलक्षण्येन विध्यविषयत्वं चोदयति "नन्वि"ति । परिहरति "नार्हत्येव"मिति । अत्र चात्मदर्शनं न विधेयम् । तद्धि (२)दृशेरुपलब्धिवचनत्वात् श्रावणं वा स्यात् प्रत्यक्षं वा । प्रत्यक्षमपि लौकिकमर्हत्प्रत्ययो वा, भावनाप्रकर्षपर्यन्तजं वा । तत्र श्रावणं न विधेयं, स्वाध्यायविधिनैवास्य प्रापितत्वात्, कर्मश्रावणवत् । नापि लौकिकं प्रत्यक्षं, तस्य नैसर्गिकत्वात् । न चौपनिषदात्मविषयं (३)भावनाधेयवैशद्यं विधेयं, तस्योपासनाविधानादेव (४)वाजिनवदनुनिष्पादितत्वात् । तस्मादौपनिषदात्मोपासनाऽमृतत्वकामं नियोज्यं प्रति विधीयते । 'द्रष्टव्य' इत्यादयस्तु विधिसरूपा न विधय इति । तदिदमुक्तं "तदुपासनाच्चे"ति । अर्थवत्तया मननादिप्रतीत्या चेत्यस्य शेषः प्रपञ्चो निगदव्याख्यातः ॥

तदेकदेशिमतं दूषयति--"अत्राभिधीयते" (०पृ १४५ प० १) "न" एकदेशिमतम्, कुतः ? "कर्मब्रह्मविद्याफलयोर्वैलक्षण्यात्" । (५)पुण्यापुण्यकर्मफले सुखदुःखे । तत्र मनुष्यलोकमारभ्याब्रह्मलोकात्सुखस्य तारतम्यम् अधिकोत्कर्षः । एवं मनुष्यलोकमारभ्य दुःखतारतम्यमा चावीचिलोकात् । तच्च सर्वं कार्यं च विनाशि च । (६)आत्यन्तिकं त्वशरीरत्वमनातिशयं स्वभावसिद्धतया नित्यमकार्यमात्मज्ञानस्य फलम् । तद्धि फलमिव फलम्, अविद्यापनयमात्रेणाविर्भावात् । (७)एतदुक्तं भवति । (८)त्वयाप्युपासनाविधिपरत्वं वेदान्तानामभ्युपगच्छता नित्यशुद्धबुद्धत्वादिरूपब्रह्मात्मता जीवस्य स्वाभाविकी वेदान्तगम्याऽऽस्थीयते । सा चोपासनाविषयस्य विधेर्न फलं, नित्यत्वादकार्यत्वात् । नाप्य-

---

निकस्वर्गफलकल्पनाया अन्याय्यत्वात्प्रतिष्ठैव फलमिति राद्धान्तितं, तदभिसन्धिमांश्च तत्र नियोज्य इति लभ्यत इत्यर्थः ।

(१) 'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति, इत्यनारभ्याधीतवाक्ये विहित पिंडपितृयज्ञ' क्रत्वर्थो वा पुरुषार्थो वेति संशये फलकल्पनापरिहारायामावास्याशब्दस्य कर्मार्थकत्वेन कल्पनीयत्वात्क्रत्वर्थत्वमिति पूर्वपक्षे, अपराह्णशब्दसामानाधिकरण्याद्रूढत्वाच्चामावास्याशब्दस्य कालपरत्वात्स्वर्गकामनियोज्यकल्पनया स्वर्गफलः पिण्डपितृयज्ञ इति पुरुषार्थत्वं सिद्धान्तितम् । तद्वदत्र कल्पने तु स्वर्गार्थः ब्रह्मभवनशब्देनासमवेतः स्यात्तथा च परोक्षवृत्तितापात इति भावः ।

(२) दृशेरिति । द्रष्टव्य इति वाक्येोपात्तदृशिधातोरुपलब्धिवचनत्वेनोपासनानाभिधायकत्वादित्यर्थः ।

(३) भावनयाऽऽधेयं जन्यं वैशद्य यस्य तत्प्रत्यक्षं तथा ।

(४) वाजिनवदिति । यथाऽऽमिक्षार्थविहितदध्यानयनाद्वाजिनमप्रयोजकमानुषङ्गिकतया जायते एवममृतत्वाय विहितादुपासनात्साक्षात्कारो जायते इति तदुत्पादनं न विधेयमित्यर्थः ।

(५) वेदान्ता यद्युपासनाविधिपरास्तर्हि विहितोपासनायाः पञ्चमासादिकालपरिमितया तत्साध्यफलमपि सातिशयमनित्यं च स्यादतो न विधिपरत्वं वेदान्तानामिति तात्पर्यम् 'अतो न कर्तव्यशेषत्वेन ब्रह्मोपदेशो युक्तम्' इत्यन्तभाष्यस्य प्रदर्शयन्नाह पुण्यापुण्येत्यादिना ।

(६) आत्यन्तिकमिति । देवदत्तस्यात्यान्तिकमशरीरत्वं देवदत्तशरीरप्रागभावासमानकालीनो देवदत्तान्त्यशरीरध्वंस, सर्वोपाधिप्रत्यस्तमयोपलक्षितं स्वरूपमिति यावत् ।

(७) विधेयोपास्तिवादिनं प्रति तत्फलस्य मोक्षस्य नित्यत्वादिप्रसञ्जनमिष्टप्रसङ्ग इत्याशंक्याह एतदिति ।

(८) उपास्तिविधेः फलं ब्रह्मात्मत्वमुताविद्यानिवृत्तिर्विद्योदयो वेति विकल्प्य क्रमेण निराकरोति त्वयेति ।

नाथविद्यापिधानापनयः, तस्य स्वविरोधिविद्योदयादेव भावात् । नापि विद्योदयः, तस्यापि श्रवणमननपूर्वकोपासनाजनितसंस्कारसचिवादेव चेतसो भावात् । उपासनासंस्कारवदुपासनाऽपूर्वमपि चेतःसहकारी(१)ति चेद्, दृष्टं च खलु नैयोगिकं फलमैहिकमपि, यथा (२)चित्राकारीर्यादिनियोगानामनियतनियतफलानाम्, न, गान्धर्वशास्त्रोपासनावासनाया इवापूर्वानपेक्षायाः षड्जादिसाक्षात्कारे वेदान्तार्थोपासनावासनाया जीवब्रह्मभावसाक्षात्कारेऽनपेक्षाया एव सामर्थ्यात् । तथा चामृतभावं प्रत्यहेतुत्वादुपासनापूर्वस्य नामृतत्वकामस्तत्कार्यमवबोद्धुमर्हति, अन्यदिच्छत्यन्यत् करोतीति हि विप्रतिषिद्धम् । (३)न च तत्कामः क्रियामेव कार्यमवगमिष्यति नापूर्वमिति साम्प्रतम्, तस्या मानान्तरादेव तत्साधनत्वप्रतीतेर्विधेर्वैयर्थ्यात् । न चावघातादिविधितुल्यता, तत्रापि नियमापूर्वस्यान्यतोऽनवगतेः । (४)न च ब्रह्मभूयादन्यदमृतत्वमार्थवादिकं किंचिदस्ति, येन तत्काम उपासनायामधिक्रियेत, विश्वजिन्न्यायेन(५) तु स्वर्गकल्पनायां तस्य सातिशयत्वं क्षयित्वं चेति न नित्यफलत्वमुपासनायाः । तस्माद्ब्रह्मभूयस्याविद्यापिधानापनयमात्रेणाविर्भावाद् अविद्यापनयस्य च वेदान्तार्थविज्ञानादवगतिपर्यन्तादेव सम्भवाद्, उपासनायाः संस्कारहेतुभावस्य संस्कारस्य च साक्षात्कारोपजनने मनःसाचिव्यस्य च मानान्तरासिद्धत्वाद्, 'आत्मेत्येवोपासीते'ति न विधिः, अपि तु विधिसरूपोऽयम्, यथोपांशुयाजवाक्ये 'विष्णुरुपांशु यष्टव्य' इत्यादयो विधिसरूपा न विधय इति तात्पर्यार्थः । श्रुतिस्मृतिन्यायसिद्धमित्युक्तं, तत्र श्रुतिं दर्शयति **"तथा च श्रुति"रिति ।** ( पृ० १४८ पं० ६ ) न्यायमाह—**'अत एवेति'** ( पृ० १५० पं० २ )। (६)यत्किल स्वाभाविकं तन्नित्यं, यथा चैतन्यं, स्वाभाविकं चेदं, तस्मान्नित्यम् । (७)परे हि द्वयीं नित्यतामाहुः । कूटस्थनित्यता परिणामिनित्यता च, तत्र नित्यमित्युक्ते मा भूदस्य परिणा(८)मिनित्यतेत्यत आह—**"तत्र किंचिदि"ति** । परिणामिनित्यता हि न पारमार्थिकी । तथाहि–तत्सर्वात्मना वा परिणमेदेकदेशेन वा ? सर्वात्मना परिणामे कथं न तत्त्वव्याहतिः । एकदेशपरिणामे वा स एकदेशस्ततो भिन्नो वाऽभिन्नो वा ? (९)भिन्नश्चेत्, कथं तस्य परि-

---

(१) अतश्च विध्यवसर इति शेषः ।

(२) 'चित्रया पशुकामो यजेत' इति विहितचित्रानियोगफलं पश्वादि भुविभोग्यमपीह वा जन्मान्तरे वा भवतीत्यनियतम्, कारीर्यादिनियोगफलन्त्विहैव जन्मनि नियतसस्यर्ध्यादीति नियतमिति भावः ।

(३) यद्यपूर्वं न साक्षात्कारोपयोगि तर्हि उपासनक्रियैव तदर्थं विधीयतामित्याशङ्क्याह नचेति ।

(४) नन्ववघातवदुपास्तावप्यस्तु नियमापूर्वमित्याशङ्कायामाह नच ब्रह्मेति । इह परमापूर्ववन्नियमापूर्वसाध्यं नास्ति ब्रह्मभावस्य नित्यत्वादित्यर्थः ।

(५) इदमश्रुताधिकारमुदाहरणम् । तत्र 'स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात्' इति सर्वाभिलषितस्वर्गकामनावानधिकारी कल्पितः । एवमिहापि कल्पनेऽनित्यफलकत्वं स्यादिति भावः ।

(६) यत्किलेति । स्वाभाविकनित्यचैतन्यात्मकस्य ब्रह्मात्मत्वस्य साध्यत्वं व्याहतमित्यर्थः ।

(७) इदानित्वित्यादि भाष्ये कूटस्थनित्यमिति विशेषणं न परिणामिव्यवच्छेदार्थं सिद्धान्ते तन्नित्यत्वासङ्केतरतो वैयर्थ्यमित्याशङ्क्याह परेहीति ।

(८) पूर्वरूपपरित्यागेन रूपान्तरापत्तिः परिणामः ।

(९) य एकदेशो नश्यति स धर्मिणो भिन्न इति पक्षे न धर्मिणः परिणामः किन्त्वेकदेशस्य स चानित्य इति न परिणामिनित्यत्वसिद्धिरित्याह भिन्नश्चेदिति ।

णामः । नह्यन्यस्मिन्परिणममानेऽन्य. परिणमतेऽतिप्रसङ्गात् । (१)अभेदे वा कथं न सर्वात्मना परिणामः ।

भिन्नाभिन्नं तदिति चेत्, तथाहि तदेव कारणात्मनाऽभिन्नं, भिन्नं च कार्यात्मना, कटकादय इवाभिन्ना हाटकात्मना, भिन्नाश्च कटकाद्यात्मना । न च भेदाभेदयोर्विरोधान्नैकत्र समवाय इति युक्तम् । (२) विरुद्धमिति नः क्व सम्प्रत्ययो यत्प्रमाणविपर्ययेण वर्तते । यत्तु यथा प्रमाणेनावगम्यते तस्य तथाभाव एव । (३) कुण्डलमिदं सुवर्णमिति सामानाधिकरण्यप्रत्यये व्यक्त भेदाभेदौ चकास्तः । तथाह्यात्यन्तिकेऽभेदेन्यतरस्य द्विरवभासप्रसङ्गः । भेदे चात्यन्तिके न सामानाधिकरण्यं, गवाश्ववत् । (४)आधाराधेयभावे एकाश्रयत्वे वा न सामानाधिकरण्यं, नहि भवति कुण्डं बदरमिति । नाप्येकासनस्थयोश्चैत्रमैत्रयोश्चैत्रो मैत्र इति । सोऽयमबाधितोऽसंदिग्धः सर्वजनीनः सामानाधिकरण्यप्रत्यय एव कार्यकारणयोर्भेदाभेदौ व्यवस्थापयति । (५)तथा च कार्याणां कारणात्मत्वात् कारणस्य च सद्रूपस्य सर्वत्रानुगमात् सद्रूपेणाभेदः कार्यस्य जगतो, भेदः कार्यरूपेण गोघटादिनेति । यथाहुः—

कार्यरूपेण नानात्वमभेदः कारणात्मना ।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ॥ इति ।

अत्रोच्यते । कः पुनरयं भेदो नाम, यः सहाभेदेनैकत्र भवेत् । परस्पराभाव इति चेत्, किमय कार्यकारणयोः कटकहाटकयोरस्ति न वा ? न चेदेकत्वमेवास्ति न च भेदः । अस्ति चेद्भेद एव नाभेदः । न च भावाभावयोरविरोधः, सहावस्थानासम्भवात् । सम्भवे वा कटकवर्धमानकयोरपि (६)तत्त्वेनाभेदप्रसङ्गः भेदस्याभेदाविरोधात् । (७)अपि च कटकस्य हाटकादभेदे यथा हाटकात्मना कटकमुकुटकुण्डलादयो न भिद्यन्ते एवं कटकात्मनापि न भिद्येरन् कटकस्य हाटकादभेदात् । तथा च हाटकमेव वस्तु सन्न कटकादयो भेदस्याप्रतिभासनात् । (८)अथ हाटकत्वेनैवाभेदो न कटकत्वेन तेन तु भेद एव कुण्डलादेः । (९)यदि हाटकादभिन्नः कटकः,

---

(१) नश्यतश्चैकदेशस्य धर्म्यभेदे सर्वात्मना वस्त्वपगमान्न नित्यत्वमित्याहाभेदे इति ।

(२) यत्प्रमाणविपर्ययेण विरोधेन वर्तते तद्विरुद्धमिति क्व सम्प्रत्यय इत्यर्थ ।

(३) एकस्य कार्यकारणरूपेण द्व्यात्मकत्वे दृष्टान्तमाह कुण्डलमिति ।

(४) ननु हेमकुण्डलयोराधाराधेयभावादेकाश्रयत्वाद्वा सामानाधिकरण्यं नाभेदादित्याशङ्क्य व्यभिचारमाह आधारेति ।

(५) भेदाभेदपक्षमुपसंहरति तथाचेति । लोके कार्यस्य कुण्डलादे कारणात्मकत्वात्परमकारणस्य च सत सर्वत्र हेमवदनुगतत्वात् सन् घट इत्यादिसामानाधिकरण्यबलेन जगत कार्यस्य सत्ताकारणरूपेणाभेदो, व्यावृत्तकार्यरूपेण भेदश्च सिध्यतीत्यर्थ. ।

(६) तत्त्वेनेति । कटकत्ववर्धमानकत्वरूपेण तयोरितरेतराभेदप्रसङ्ग इत्यर्थ ।

(७) कार्यस्य कारणादभेदे च सर्वकार्याणामेककार्यात्मकत्वप्रसङ्ग एककार्यस्य सर्वकार्याभिन्नेन कारणेनाभेदादित्याशयेनाह अपिचेति ।

(८) कटकस्य द्वे रूपे हाटकत्वं कटकत्वं च, तत्र हाटकरूपेणास्य कुण्डलादिभिरभेदोऽभिमत एव न कटकरूपेण व्यावृत्तत्वात्तस्येति स्वप्रक्रियया पुन शङ्कते अथेति ।

(९) समाधत्ते यदीति । कटकहाटकयोरभेदाद्धाटकस्य कुण्डलादिष्वनुवृत्तेरभेदे कटकस्यापि तैरभेदः स्यादिति समाधानार्थः पूर्वोक्त एव स्मारित इति भाव ।

कथमयं कुण्डलादिषु नानुवर्तते, नानुवर्तते चेत्, कथं हाटकादभिन्नः कटकः । (१)ये हि यस्मिन्ननुवर्तमाने व्यावर्तन्ते ते ततो भिन्ना एव, यथा सूत्रात् कुसुमभेदाः । नानुवर्तन्ते चानुवर्तमानेऽपि हाटकत्वे कुण्डलादयः, तस्मात्तेऽपि हाटकाद्भिन्ना एवेति । (२)सत्तानुवृत्त्या च सर्ववस्त्वनुगमे इदमिह नेदं, इदमस्मान्नेदम्, इदमिदानीं नेदम्, इदमेवं नेदमिति विभागो न स्यात्, कस्यचित् क्वचित् कदाचित् कथंचिद्विवेकहेतोरभावात् । (३)अपि च दूरात्कनकमित्यवगते न तस्य कुण्डलादयो विशेषा जिज्ञास्येरन्, कनकादभेदात्तेषां तस्य च ज्ञातत्वात् । अथ भेदोऽप्यस्ति कनकात् कुण्डलादीनामिति कनकावगमेऽप्यज्ञातास्ते । नन्वभेदोऽप्यस्तीति किं न ज्ञाताः ? प्रत्युत ज्ञानमेव तेषां(४) युक्तं, कारणाभावे हि कार्याभाव औत्सर्गिकः, स च कारणसत्तयाऽपोद्यते । अस्ति चाभेदे कारणसत्तेति कनके ज्ञाते ज्ञाता एव कुण्डलादय इति तज्जिज्ञासाज्ञानानि चानर्थकानि स्युः । तेन यस्मिन् गृह्यमाणे यन्न गृह्यते तत्ततो भिद्यते, यथा करभे गृह्यमाणेऽगृह्यमाणो रासभः करभात् । गृह्यमाणे च दूरतो हेम्नि न गृह्यन्ते तस्य भेदाः कुण्डलादयः, तस्मात्ते हेम्नो भिद्यन्ते । कथं तर्हि हेम कुण्डलमिति सामानाधिकरण्यमिति चेद्, (५)नह्याधाराधेयभावे समानाश्रयत्वे वा सामानाधिकरण्यमित्युक्तम् । अथानुवृत्तिव्यावृत्तिव्यवस्था च हेम्नि ज्ञाते कुण्डलादिजिज्ञासा च कथम् ? (६)न खल्वभेदे ऐकान्तिकेऽनैकान्तिके चैतदुभयमुपपद्यते 'यत' इत्युक्तम् । (७)तस्माद्भेदाभेदयोरन्यतरस्मिन्नवहेयेऽभेदोपादानैव भेदकल्पना न भेदोपादानाऽभेदकल्पनेति युक्तम् । भिद्यमानतन्त्रत्वाद्भेदस्य भिद्यमानानां च प्रत्येकमेकत्वाद्, एकाभावे चानाश्रयस्य भेदस्यायोगाद्, एकस्य च भेदानधीनत्वाद्, (८)नायमयमिति च भेदग्रहस्य प्रतियोगिग्रहसापेक्षत्वादेकत्वग्रहस्य चान्यानपेक्षत्वादभेदोपादानैवानिर्वचनीयभेदकल्पनेति सांप्रतम् । तथा च श्रुतिः 'मृत्तिकेत्येव सत्य'मिति। तस्मात् कूटस्थनित्यतैव पारमार्थिकी न परिणामिनित्यतेति सिद्धम् । "व्योमवदि"ति (पृ० १५१ पं० १) च दृष्टान्तः परसिद्धः, अस्मन्मते तस्यापि कार्यत्वेनानित्यत्वात् ।

---

(१) अनुवृत्ताद्व्यावृत्तस्य भेदे व्याप्तिमाह ये हीति ।

(२) सत्तानुवृत्त्येति । कुण्डलादिषु हेमानुवृत्त्या यदि तदभेदात्कटकादीनामनुगमस्तदा सत्तानुवृत्त्या तदभिन्नवस्तूनामितरेतराभेदापत्तेरिह क्षीरे दधि न तैलमिति संसर्गतदभावव्यवस्था, इदं पटादिकमस्मात्कुड्याद्भिन्नमिदं कुड्यमस्मात्कुड्यान्न भिन्नमित्यसंकरो, इदानीं वसन्ते इदं कोकिलरुतमिदमम्बुदध्वानं नेति व्यवस्था, इदं कुम्भ एवेवकम्बुग्रीवाद्याकारं इदं पटादि नैवमिति प्रकारासंकरश्च न स्यादिति भाव । विभागो न स्यादिति प्रत्येकमन्वय ।

(३) कार्यकारणयोर्वास्तवाभेदेऽनुपपत्त्यन्तरमाहापिचेति ।

(४) तेषां कुण्डलादीनाम् । कारणस्याभेदस्याभावे कार्यस्य निर्णयस्याभाव औत्सर्गिकः प्राप्त, स च कारणस्याभेदस्य सत्त्वादपोद्यते घटसामग्रीत इव तत्प्रागभाव इत्यर्थ ।

(५) अत्यन्तभेदाभेदयो सामानाधिकरण्यासम्भवाद्भेदाभेदानङ्गीकारे हेमकुण्डलमिति सामानाधिकरण्यानुपपत्तिमाशंक्योत्तरयति नहीति ।

(६) भेदाभेदानङ्गीकारेऽनुवृत्तिव्यावृत्तिव्यवस्थां हेम्नि ज्ञाते कुण्डलादिजिज्ञासा च कथमित्याशंक्य समाधत्ते न खल्विति ।

(७) एवं समाहितेऽनेकान्तवादे स्वमतेन सामानाधिकरण्यमुपपादयति तस्मादिति ।

(८) भेदसंज्ञायामभेदसापेक्षत्वं प्रदर्श्य तत्प्रतीतावपि अभेदापेक्षामाह नायमिति ।

अत्र च "**कूटस्थनित्य**"मिति निर्वर्त्यकर्मतामपाकरोति । "**सर्वव्यापी**"ति प्राप्यकर्मताम्। "**सर्वविक्रियारहित**"मिति विकार्यकर्मताम्। "**निरवयव**"मिति संस्कार्यकर्मताम्। व्रीहीणां खलु प्रोक्षणेन संस्काराख्योऽशो यथा जन्यते, नैवं ब्रह्मणि कश्चिदंशः क्रियाधेयोऽस्त्यनवयवत्वात्, अनंशत्वादित्यर्थः । पुरुषार्थतामाह–"**नित्यतृप्त**"मिति। तृप्त्या दुःखरहितं सुखमुपलक्षयति । क्षुद्दुःखनिवृत्तिसहितं हि सुखं तृप्तिः । सुखं चाप्रतीयमानं न पुरुषार्थ इत्यत आह "**स्वयं ज्योति**"रिति । (१)तदेवं स्वमतेन मोक्षाख्यं फलं नित्यं श्रुत्यादिभिरुपपाद्य क्रियानिष्पाद्यस्य तु मोक्षस्यानित्यत्वं प्रसञ्जयति—"**तद्यदी**"ति (पृ० १५३ प०२)। न चागमबाधः, आगमस्योक्तेन प्रकारेणोपपत्तेः । अपि च ज्ञानजन्यापूर्वजनितो मोक्षो नैयोगिक इत्यस्यार्थस्य सन्ति भूयस्यः श्रुतयो निवारिका इत्याह—"**अपि च ब्रह्म वेदे**"ति । (२)अविद्याद्वयप्रतिबन्धापनयमात्रेण च विद्याया मोक्षसाधनत्वं न स्वतोऽपूर्वोत्पादेन चेत्यत्रापि श्रुतिमुदाहरति—"**त्वं हि नः पिते**"ति ( पृ० १५५ प० २ )। न केवलमस्मिन्नर्थे श्रुत्यादयोऽपि त्वक्षपादाचार्यसूत्रमपि न्यायमूलमस्तीत्याह "**तथा चाचार्यप्रणीत**"मिति ( पृ० १५६ पं० ३ ) आचार्यश्चोक्तलक्षणः पुराणे—

आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि ।
स्वयमाचरते यस्मादाचार्यस्तेन चोच्यते(३) ॥ इति ।

तेन हि प्रणीत सूत्रं "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावा(४)दपवर्ग" इति । पाठापेक्षया कारणमुत्तरं, कार्यं च पूर्वं, कारणापाये कार्यापायः, कफापाय इव कफोद्भवस्य ज्वरस्यापायः । जन्मापाये दुःखापायः, प्रवृत्त्यपाये जन्मापायः, दोषापाये प्रवृत्त्यपायः, मिथ्याज्ञानापाये दोषापायः । मिथ्याज्ञानं चाविद्या, रागाद्युपजनितक्रमेण दृष्टेनैव संसारस्य परमं निदानम् । सा च तत्त्वज्ञानेन ब्रह्मात्मैकत्वविज्ञानेनावगतिपर्यन्तेन विरोधिना निवर्त्यते । ततोऽविद्यानिवृत्त्या ब्रह्मरूपाविर्भावो मोक्षः, न तु विद्याकार्यस्तज्जनितापूर्वकार्यो वेति सूत्रार्थः । तत्त्वज्ञानान्मिथ्याज्ञानापाय इत्येतावन्मात्रेण सूत्रोपन्यासो, न त्वक्षपादसंमतं तत्त्वज्ञानमिह संमतम् । तदनेनाचार्यान्तरसंवादेनायमर्थो दृढीकृतः ॥

स्यादेतत्, नैकत्वविज्ञानं स्थितवस्तुविषयं, येन मिथ्याज्ञानं भेदावभासं निवर्तयन्न विधिविषयो भवेत्, अपि तु सम्पदा(५)दिरूपम्, तथा च विधेः प्रागप्राप्तं पुरुषेच्छया कर्त्तव्यं सद् विधिगोचरो भविष्यति, यथा वृत्त्यनन्तत्वेन मनसो विश्वदेवसाम्याद् विश्वान् देवान् मनसि सम्पाद्य मन आलम्बनमविद्यमानसमं कृत्वा प्राधान्येन सम्पाद्यानां विश्वेषामेव देवानामनुचिन्तनं तेन चानन्तलोकप्राप्तिः, एवं चिद्रूपसाम्याज्जीवस्य ब्रह्मरूपतां सम्पाद्य जीवमालम्बनमविद्यमानसमं कृत्वा प्राधान्येन ब्रह्मानुचिन्तनं तेन चामृतत्वफलप्राप्तिः । अध्यासे

---

( १ ) प्राग् विमोक्षनित्यत्वान्नियोगायोग उक्त, सम्प्रति तत्साधनज्ञानस्य केवलदृष्टार्थत्वाच्च स उच्यत इत्याह तदेवमित्यादिना ।

( २ ) एवं फलस्वभावेन नियोगाभावमभिधाय फलिज्ञानस्वभावेनाप्युच्यत इत्याहाविद्याद्वयेति ।

( ३ ) संस्कृत इति पाठान्तरम् । सोच्यत इत्यपि पाठ उपलभ्यते स चार्षत्वात्कथञ्चित्सङ्गमनीय ।

( ४ ) तदनन्तरापायादिति पाठान्तरम् ।

( ५ ) आरोप्यप्रधाना सम्पदधिष्ठानप्रधानोऽध्यास इति आरोप्यत्वसाम्येऽप्यध्यासात्सम्पदो भेदो बोध्यः ।

त्वालम्बनस्यैव प्राधान्येनारोपिततद्भावस्या(१)नुचिन्तन, यथा मनो 'ब्रह्मेत्युपासीत, आदित्यो ब्रह्मेत्यादेशः' । एवं जीवमब्रह्म 'ब्रह्मेत्युपासीते'ति । क्रियाविशेषयोगाद्वा, यथा 'वायुर्वाव सवर्गः,प्राणो वाव संवर्ग.', वाह्या खलु वायुदेवता वन्ह्यादीन् संवृङ्क्ते, महाप्रलयसमये हि वायुर्वन्ह्यादीन् संवृज्य संहृत्यात्मनि स्थापयति, यथाह द्रविडाचार्यः 'संहरणाद्वा सवरणाद्वा (२)सात्मीभावाद्वायु· संवर्ग' इति, अध्यात्मं च प्राणः संवर्ग इति, स हि सर्वाणि वाग दीनि संवृङ्क्ते, प्रायणकाले हि स एव सर्वाणीन्द्रियाणि संगृह्योत्क्रामतीति, (३)सेय संवर्गदृष्टिर्वायौ प्राणे च दशाशागतं जगद्दर्शयति यथा, (४)एव जीवात्मनि बृंहणक्रियया ब्रह्मदृष्टिरमृतत्वाय फलाय कल्पत इति, तदेतेषु त्रिष्वपि पक्षेष्वात्मदर्शनोपासनादयः प्रधानकर्माण्यपूर्वविषयत्वात् (५)स्तुतशस्त्रवत् । आत्मा तु द्रव्यं कर्मणि गुण इति, संस्कारो वाऽऽत्मनो दर्शनं विधीयते, यथा दर्शपूर्णमासप्रकरणे 'पत्न्यवेक्षि(६)तमाज्यं भवती'ति समाम्नात, प्रकरणिना च गृहीतमुपांशुयाजाङ्गभूताज्यद्रव्यसंस्कारतयाऽवेक्षण गुणकर्म विधीयते, एवं कर्तृत्वेन क्रत्वङ्गभूते आत्मनि 'आत्मा वा अरे द्रष्टव्य'इति दर्शनं गुणकर्म विधीयते, (७)'यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयते' इति न्यायात्, अत आह—**"न चेदं ब्रह्मात्मैकत्वविज्ञान"मिति । कुतः ? "सम्पदादिरूपे हि ब्रह्मात्मैकत्वविज्ञान"इति** । (पृ० १५८ पं० ४) दर्शपूर्णमासप्रकरणे हि समाम्नातमाज्यावेक्षण तदङ्गभूताज्यसंस्कार इति युज्यते । न च 'आत्मा वा अरे द्रष्टव्य' इत्यादि कस्यचित् प्रकरणे समाम्नातम् । (८)न चानारभ्याधीतमपि, 'यस्य पर्णमयी जुहूर्भवती'त्यव्यभिचरितक्रतुसम्बन्धजुहूद्वारेण जुहूपदं क्रतुं स्मारयद्वाक्येन यथा पर्णतायाः क्रतुशेषभावमापादयति, एवमात्मा नाव्यभिचरितक्रतुसम्बन्धो येन तद्दर्शनं क्रत्वङ्ग सदात्मानं क्रत्वर्थं संस्कुर्यात् । तेन यद्यगं विधिस्तथापि (९)'सुवर्ण भार्य'मि'तिवद्

---

(१) आरोपितेति । आरोपितस्तद्भावो ब्रह्मादिभावो यस्य तन्मन आदि तथा ।

(२) सात्मीभावादिति । साम्येन कारणात्मत्वोपगमनादित्यर्थं ।

(३) सर्वाश्रयत्वाद्वायुप्राणयोरुपास्यत्वमाह सेयमिति । दशाशागतन्दशदिग्गतम् ।———

(४) सवर्गदृष्टान्त निगमय्य दार्ष्टान्तिकमाह एवमिति । बृंहणक्रियया—देहादिपरिणमनक्रियया ।

(५) स्तुतशस्त्रवदिति । 'आज्यै स्तुवते प्रउग शंसति' इति अत्र स्तुतशस्त्रे समाम्नाते । तत्र प्रगीतमन्त्रसाध्य देवतागुणसम्बन्धाभिधान स्तोत्रम, अप्रगीतमन्त्रसाध्यं शस्त्रम् । अत्र 'मन्त्रैरेवार्थः स्मर्तव्य' इति नियमाद्देवताप्रकाशनसंस्कारार्थत्वेनैते गुणकर्मणी वाऽपूर्वार्थत्वेन प्रधानकर्मणी वेति संदेहे, क्रतूपयुक्तदेवतास्मरणस्य दृष्टत्वाद्गुणकर्मत्व इति पूर्वपक्षे, गुणाभिधानेन स्वरूपप्रकाशनरूपस्तुतिरत्र विहिता श्रूयते 'स्तुवते शंसती'ति । अभिधानविवक्षायां स्तुतेरसम्भवात् स्तौतिशंसती अपूर्वोत्पत्तिं प्रति स्तोत्रशस्त्रे विदध्याताम् इति सिद्धान्त । एवमिहापि आत्मोपासनदर्शने प्रधानकर्मेत्यभिप्राय ।

(६) अवेक्षितमिति निष्ठयाऽऽज्ये कर्मण्यवेक्षण गुणीकृत बोध्यम् । भाव्युपयोगमाज्यस्याह दर्शेति । पूषानुमन्त्रणवदुत्कर्ष वारयति प्रकरणिना चेति ।

(७) द्रव्यसंस्कारकस्य गुणकर्मत्वे जैमिनीय (२।१।८) सूत्रमुदाहरति यैरिति । यैरवघातादिभिर्द्रव्यं संस्कर्तुमिष्यते गुणस्तत्र प्रतीयेत द्रव्ये गुणभूत कर्म प्रतीयेतेत्यर्थ ।

(८) आत्मोपास्त्यादे संस्कारकर्मत्व दर्शपूर्णमासप्रकरणेऽऽज्यावेक्षणवत्प्रकरणान्न सम्भवति इति दृष्टान्तवैषम्यप्रदर्शनपूर्वकमभिधाय वाक्यादपि तन्न सम्भवतीत्याहानारभ्याधीतमिति ।

(९) सुवर्णमिति । 'तस्मात्सुवर्ण हिरण्य भार्य दुर्वर्णोऽस्य भ्रातृव्यो भवति' इत्यनारभ्याधीयते । तत्र किं शोभनहिरण्यधारण क्रत्वङ्गमुत पुरुषार्थ इति संशये, दुर्वर्णकाम इत्यश्रवणात् स्वतन्त्रफलकल्पनायां क्र-

विनियोगभङ्गेन प्रधानकर्मैवापूर्वविषयत्वान्न गुणकर्मेति स्थवीयस्तयैतद्दूषणमनभिधाय सर्व-पक्षसाधारणं दूषणमुक्तम्। तदतिरोहितार्थतया न व्याख्यातम्। किञ्च ज्ञानक्रियाविषयत्व-विधानमस्य बहुश्रुतिविरुद्धमित्याह—"न च विदिक्रिये"ति। ( पृ० १५९-पं० ३ ) शङ्कते "अविषयत्व" इति। ( पृ० १६० पं० १ ) ततश्च शान्तिकर्मणि वेतालोदय इति भावः। निराकरोति "न" कुतः ? "अविद्याकल्पितभेदनिवृत्तिविषयत्वा-दि"ति। सर्वमेव हि वाक्यं नेदन्तया वस्तुभेदं बोधयितुमर्हति, नहीक्षुक्षीरगुडादीनां मधु-ररसभेदः शक्य आख्यातुम्। एवमन्यत्रापि सर्वत्र द्रष्टव्यम्। तेन प्रमाणान्तरसिद्धे (१)लौ-किक एवार्थे यदा गतिरीदृशी शब्दस्य, तदा कैव कथा प्रत्यगात्मन्यलौकिके। अदूरविप्रक-र्षेण तु कथञ्चित्प्रतिपादनमिहापि समानम्। (२)त्वंपदार्थो हि प्रमाता प्रमाणाधीनया प्रमि-त्या प्रमेयं घटादि व्याप्नोतीत्यविद्याविलसितम्। (३)तदस्याविषयीभूतोदासीनतत्पदार्थप्रत्य-गात्मसामानाधिकरण्येन प्रमातृत्वाभावात् तन्निवृत्तौ प्रमाणादयस्तिस्रो विधा निवर्तन्ते। नहि पक्तुरकर्तृत्वे पाक्यपाकपचनानि वस्तुसन्ति भवितुमर्हन्तीति। तथाहि—

(४)विगलितपराग्वृत्त्यर्थत्वं पदस्य तदस्तदा त्वमिति हि पदेनैकार्थत्वे त्वमित्यपि यत्पदम्।
तदपि च तदा गतवैकार्थ्यं विशुद्धचिदात्मतां त्यजति सकलान् कर्तृत्वादीन् पदार्थमलानिजान्॥

इत्यान्तरश्लोकः। अत्रैवार्थे श्रुतीरुदाहरति—"तथा च शास्त्रं यस्यामतमि"ति। ( पृ० १६१ पं० १ ) प्रकृतमुपसंहरति—"अतोऽविद्याकल्पिते"ति। (५)प-रपक्षे मोक्षस्यानित्यतामापादयति—"यस्य त्वि"ति। कार्यमपूर्वं यागादिव्यापारजन्यं तदपेक्षते मोक्षः स्वोत्पत्ताविति। "तयोः पक्षयो"रिति। ( पृ० १६२ पं० १ ) निर्व-र्त्यविकार्ययोः। क्षणिकं ज्ञानमात्मेति बौद्धाः। तथा च विशुद्धविज्ञानोत्पादो मोक्ष इति निर्व-र्त्यो मोक्षः। अन्येषां तु संसाररूपावस्थामपहाय या कैवल्यावस्थावाप्तिरात्मनः स मोक्ष इति विकार्यो मोक्षः। यथा पयसः पूर्वावस्थापहानेनावस्थान्तरप्राप्तिर्विकारो दधीति। तदेतयोः

---

त्वङ्गमिति पूर्वपक्ष। तत्र हिरण्यधारणस्य लोकेपि विद्यमानत्वेन पर्णमयीतावत्क्रतुत्वव्यभिचाराभावात् हिर-ण्यसाधनकं धारणं वाक्यशेषगतफलाय विधीयते इति पुरुषार्थत्वमिति सिद्धान्तितम् यथा, तथेहाप्यात्मसाधन-कदर्शनेनामृतत्वं भावयेदिति विधानात् प्रधानकर्मत्वैवेत्यर्थ।

( १ ) गामानयेति लौकिकवाक्ये हि गवानयनकर्तव्यार्थ, सोपि अन्यवाक्यसाधारण इति न विवक्षित गवानयन वक्ति वाक्यं, प्रकरणादिवशेन त्वर्थात्सिद्धिर्यदि तदाऽलौकिकवाक्येऽर्थात्प्रत्यगात्मसिद्धिरिति किमु वक्तव्यमिति भाव।

( २ )वेदान्तानामदूरविप्रकर्षेण पदार्थबोधकत्व प्रतिपादयति त्वपदार्थ इति।

( ३ ) तादिति। तत्र सतीत्यर्थ.। अविषयीभूतोदासीनतत्पदार्थस्य प्रत्यगात्मनश्च तत्त्वमसीति सामाना-धिकरण्येनास्य संसारिण प्रमातृत्वाभाव त तन्निवृत्तौ प्रमित्या प्रमेयं व्याप्नोतीत्येवंभावस्य निवृत्तौ त्रिपुटीप्र-कारा निर्वतन्ते इति भाव।

( ४ ) विगलितेति। त्वमिति पदेनैकार्थत्वे जाते तस्मिन् काले तदस्तत्पदस्य विगलिता पराक्त्वेन वृ-त्तिर्वर्तनं यस्य स विगलितपराग्वृत्तिस्तादृश प्रत्यक्त्वमापन्नोऽर्थो यस्य तद्विगलितपराग्वृत्त्यर्थ तस्य भाव-स्तत्त्वं भवति, त्वमिति पदमपि तत्पदेनैकार्थ्य विशुद्धचिदात्मत्व प्राप्य कर्तृत्वादीन दोषान् त्यजतीति श्लो-कार्थ। तत्त्वंपदयोरुपाधिविगमाच्छुद्धचैतन्योदय इति तात्पर्यम्।

( ५ ] मोक्षस्योत्पाद्यत्वविकार्यत्वोभयपक्षे नित्यत्वं प्रदर्शयन्भाष्यमवतारयति परपक्षे इति।

पक्षयोरनित्यता मोक्षस्य, कार्यत्वाद् दधिघटादिवत् । अथ 'यदतः परो दिवो ज्योतिर्दीप्यत' इति श्रुतेर्ब्रह्मणो विकृताविकृतदेशभेदावगमादविकृतदेशब्रह्मप्राप्तिरुपासनादिविधिकार्या भविष्यति, तथा च प्राप्यकर्मता ब्रह्मण इत्यत आह—**"न चाप्यत्वेनापी"**ति । अन्यदन्येन विकृतदेशपरिहाण्याऽविकृतदेशं प्राप्यते । तद्यथोपवेल जलधिरतिबहल(१)चपलकल्लोलमालापरस्परास्फालनसमुल्लसत्फेनपुञ्जस्तबकतया विकृतो, मध्ये तु प्रशान्तसकलकल्लोलोदसर्गः स्वस्थः स्थिरतयाऽविकृतस्तस्य मध्यमविकृतं पौतिकः(२) पोतेन प्राप्नोति । जीवस्तु ब्रह्मैवेति किं केन प्राप्यतां, भेदाश्रयत्वात् प्राप्तेरित्यर्थः । अथ जीवो ब्रह्मणो भिन्नस्तथापि न तेन ब्रह्माप्यते, ब्रह्मणो विभुत्वेन नित्यप्राप्तत्वादित्याह—**"स्वरूपव्यतिरिक्तत्वेपी"**ति । संस्कार्यकर्मतामपाकरोति—**"नापि संस्कार्य"** इति । ( पृ० १७३ पं० १ ) द्वयी हि संस्कार्यता, गुणाधानेन वा यथा बीजपूरकुसुमस्य लाक्षारसावसेकस्तेन हि तत् कुसुमं संस्कृतं लाक्षासवर्णं फलं प्रसूते । दोषापनयेन वा यथा मलिनमादर्शतलं निघृष्टमिष्टकाचूर्णेनोद्भासित भास्वरत्वं संस्कृतं भवति । तत्र न तावद् ब्रह्मणि गुणाधानं सम्भवति । गुणो हि ब्रह्मणः स्वभावो वा भिन्नो वा ? स्वभावश्चेत् कथमाधेयस्तस्य नित्यत्वात् । भिन्नत्वे तु कार्यत्वेन मोक्षस्यानित्यत्वप्रसङ्गः । न च भेदे धर्मधर्मिभावो गवाश्ववत् । भेदाभेदश्च व्युदस्तो विरोधात् । तदनेनाभिसन्धिनोक्तम् **"अनाधेयातिशयब्रह्मस्वरूपत्वान्मोक्षस्य"** । द्वितीयं पक्षमपक्षिपति—**"नापि दोषापनयनेने"**ति । अशुद्धिः सती दर्पणे निवर्तते, (३)न तु ब्रह्मण्यसती निवर्तनीया, नित्यनिवृत्तत्वादित्यर्थः । शङ्कते(४)—**"स्वात्मधर्म एवे"**ति । ब्रह्मस्वभाव एव मोक्षोऽनाद्यविद्यामलावृत उपासनादिक्रिययाऽऽत्मनि संस्क्रियमाणेऽभिव्यज्यते, न तु क्रियते । एतदुक्तं भवति नित्यशुद्धत्वमात्मनोऽसिद्धं, संसारावस्थायामविद्यामलिनत्वादिति । शङ्कां निराकरोति—**"न"** । कुतः ? **"क्रियाश्रयत्वानुपपत्तेः"** । नाविद्या ब्रह्माश्रया, किं तु जीवे, सा त्वनिर्वचनीयेत्युक्त, तेन नित्यशुद्धमेव ब्रह्म । अभ्युपेत्य त्वशुद्धिं क्रियासंस्कार्यत्वं दूष्यते । क्रिया हि ब्रह्मसमवेता वा ब्रह्म संस्कुर्याद्, यथा निघर्षणमिष्टकाचूर्णसंयोगविभागप्रचयो निरन्तर आदर्शतलसमवेतः । अन्यसमवेता वा । न तावद् ब्रह्मधर्मः क्रिया, तस्याः स्वाश्रयविकारहेतुत्वेन ब्रह्मणो नित्यत्वव्याघातात् । (५)अन्याश्रया तु कथमन्यस्योपकरोति, अतिप्रसङ्गात् । नहि दर्पणे निघृष्यमाणे मणिर्विशुद्धो दृष्टः । **"तच्चानिष्ट"**मिति । (६)तदा बाधनं परामृशति । अत्र व्यभिचारं चोदयति—**"ननु देहाश्रयये"**-

---

( १ ) वेलासमीपे विकृतत्वे हेतुरतिबहलेति ।

( २ ) पौतिकः पोतेन दीव्यति व्यवहरति यः स, पोतवणिगित्यर्थः ।

( ३ ) अशुद्धिर्ब्रह्मणि सत्यसती वेति विकल्प्य भिन्नाभिन्नविकल्पाभ्यां प्रथमपक्षं निरस्तं मत्वा द्वितीयं निरस्यन्नाह नात्विति । ( ४ ) अविद्या वास्तविकीति मत्वा शंकत इत्यर्थः ।

( ५ ) अन्याश्रयेति । यद्यपि स्पन्दरूपा भावना चैत्रस्थिता दर्पणस्योपकरोति, तथापि संयोगविभागाख्यधात्वर्थद्वारा तौ च नात्मनीत्यर्थः । संयोगविभागातिरिक्तधात्वर्थपक्षेप्येतत्तुल्यं, धात्वर्थस्य संयोगविभागद्वाराऽतिशयजनकत्वात्, न चात्मनि क्रियाजन्यातिशयसम्भव इति ।

( ६ ) तदेति । तच्छब्देन 'बाध्येरन्' इत्युक्तबाधनस्य व्यवहितत्वात्परामर्शो न तु अनित्यत्वप्रसक्तेर्व्यवहितत्वादित्यर्थः ।

ति ( पृ० १६४ पं० २ )। परिहरति—"न, देहादिसंहतस्ये"ति। (१)अनाद्य-
निर्वाच्याविद्योपधानमेव ब्रह्मणो जीव इति च क्षेत्रज्ञ इति चाचक्षते। स च स्थूलसूक्ष्मशरी
रेन्द्रियादिसंहतस्तत्संघातमध्यपतितस्तदभेदेनाहमितिप्रत्ययविषयीभूतोऽतः शरीरादिसंस्कार-
शरीरादिधर्मोऽप्यात्मनो भवति, तदभेदाध्यवसायात्। यथाऽङ्गरागधर्मः सुगन्धिता कामिनीना
व्यपदिश्यते। (२)तेनात्रापि यदाश्रिता क्रिया सांव्यवहारिकप्रमाणविषयीकृता तस्यैव सं-
स्कारो नान्यस्येति न व्यभिचारः। तत्त्वतस्तु न क्रिया न संस्कार इति। सनिदर्शनं तु शेष-
मध्यासभाष्य एव कृतव्याख्यानमिति नेह व्याख्यातम्। "तयोरन्यः पिप्पल"मिति(पृ०
१६५पं०२)। अन्यो जीवात्मा। पिप्पलं कर्मफलम्। "अनश्नन्नन्य" इति। परमात्मा।
संहतस्यैव भोक्तृत्वमाह मन्त्रवर्णः—"आत्मेन्द्रिये"ति। अनुपहितशुद्धस्वभावब्रह्मप्रदर्शनपरौ
मन्त्रौ पठति—"एको देव"इति। "शुक्र" (पृ०१६६पं०७) दीप्तिमत्, "अव्रण"दुःखर-
हितम्, "अस्नाविरम्" (३)अविगलितम्, अविनाशीति यावत्। उपसंहरति—"तस्मा-
दि"ति। ननु मा भून्निर्वर्त्यादिकर्मताचतुष्टयी(४), पञ्चमी तु काचिद् विधा भविष्यति यया मो
क्षस्य कर्मता घटिष्यत इत्यत आह "अतोऽन्य"दिति। एभ्यः प्रकारेभ्यो न प्रकारान्तर-
मन्यदस्ति, यतो मोक्षस्य क्रियानुप्रवेशो भविष्यति। (५)एतदुक्तं भवति चतसृणां विधानां
मध्येऽन्यतमतया क्रियाफलत्वं व्याप्तं, सा च मोक्षाद् व्यावर्तमाना व्यापकानुपलब्ध्या मोक्ष
स्य क्रियाफलत्वं व्यावर्तयतीति। तत् किं मोक्षे क्रियैव नास्ति, तथा च तदर्थानि शास्त्राणि
तदर्थाश्च प्रवृत्तयोऽनर्थकानीत्यत उपसंहारव्याजेनाह—"तस्माज्ज्ञानमेक"मिति।
अथ ज्ञानं क्रिया मानसी कस्मान्न विधिगोचरः, कस्माच्च तस्याः फलं निर्वर्त्यादिष्वन्यतमं न
मोक्ष इति चोदयति—"ननु ज्ञानमि"ति। परिहरति "न, वैलक्षण्यात्"। अयमर्थ—
(६)सत्यं, ज्ञानं मानसी क्रिया, न त्वियं ब्रह्मणि फलं जनयितुमर्हति, तस्य स्वयंप्रकाशतया
विदिक्रियाकर्मभावानुपपत्तेरित्युक्तम्। तदेतस्मिन्वैलक्षण्ये स्थिते एव (७)वैलक्षण्यान्तरमाह—
"क्रिया हि नाम से"ति ( पृ० १६७ पं० १ )। "यत्र विषये, वस्तुस्वरूपानि-
रपेक्षैव चोद्यते"। यथा देवतासंप्रदानकहविर्ग्रहणे देवतावस्तुस्वरूपानपेक्षा देवताध्यान-
क्रिया, यथा वा योषिति अग्निवस्त्वनपेक्षाऽग्निबुद्धिर्या सा क्रिया हि नामेति योजना।

---

(१) ननु देहादावहविभ्रमवत इव संस्कार्यत्वमिति कुत ? स्वत एव किं न संस्कार्यत्वमत आह अ
नाद्यनिर्वाच्येति।

(२) निष्कृष्टार्थमाह तेनेति। देहादावैक्येनाध्यस्ते आत्मनि क्रियारोपस्तज्जन्यसंस्कारश्चातो नान्याश्रि-
तक्रियाफलभाक्त्वमन्यस्येति न व्यभिचार इत्यर्थ।

(३) अविगलितमिति 'स्नुप्रस्रवणे इति धातुमभिप्रेत्यार्थो द्रष्टव्य।

(४) निर्वर्त्यदीति। उत्पाद्यविकार्याप्यसंस्कार्यकर्मताचतुष्टयीत्यर्थ.।

(५) क्रियानुप्रवेशस्य द्वारान्तरं भवत्वित्याशंकायामतोऽन्यदिति भाष्ये तदभावप्रतिज्ञामात्रमतस्तत्र
हेतुप्रदर्शनायाह एतदुक्तमित्यादिना।

(६) ज्ञानस्य मानसक्रियात्वमभ्युपेत्य विधेयत्वनिराकरणाभिप्रायेणाह सत्यमिति। वस्तुतो विदिक्रि-
याया. कर्मभावानुपपत्तेरित्यर्थ।

(७) वैलक्षण्यान्तरमिति। ज्ञेयस्य वैलक्षण्यं पूर्वमुक्तमिदानीं ज्ञानस्याविधेयत्व वैलक्षण्यमुच्यत इत्यर्थ।

(१)नहि 'यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्नि'त्यस्माद्विधेः प्राग्देवताध्यानं प्राप्तं, प्राप्तं त्वधीतवेदान्तस्य विदितपदतदर्थसंबन्धस्याधिगतशब्दन्यायतत्त्वस्य 'सदेव सौम्ये-दमि'त्यादे'स्तत्त्वमसी'त्यन्तात्सदर्भाद्ब्रह्मात्मभावज्ञानं शब्दप्रमाणसामर्थ्यात्, इन्द्रियार्थसंनिकर्षसामर्थ्यादिव प्रणिहितमनसः स्फीतालोकमध्यवर्तिकुम्भानुभवः । नह्यसौ स्वसामग्रीबललब्धजन्मा मनुजेच्छयाऽन्यथाकर्तुमकर्तुं वा शक्यो, देवताध्यानवद्, येनार्थवानत्र विधिः स्यात् । (२) न चोपसना वा ऽनुभवपर्यन्तता वा ऽस्य विधेर्गोचरस्तयोरन्वयव्यतिरेकावधृतसामर्थ्ययोः साक्षात्कारे वाऽनाद्यविद्यापनये वा विधिमन्तरेण प्राप्तत्वेन पुरुषेच्छयाऽन्यथाकर्तुमकर्तुं वाऽशक्यत्वात् । तस्माद्ब्रह्मज्ञानं मानसी क्रियाऽऽपि न विधिगोचरः । पुरुषचित्तव्यापाराधीनायास्तु क्रियाया वस्तुस्वरूपनिरपेक्षता क्वचिदविरोधिनी, यथा देवताध्यानक्रियायाः, नह्यत्र वस्तुस्वरूपेण कश्चिद्विरोधः । (३)क्वचिद्वस्तुस्वरूपविरोधिनी, यथा योषित्पुरुषयोरग्निबुद्धिरित्येतावता भेदेन निदर्शनमिथुनद्वयोपन्यासः । क्रियैवेत्येवकारेण वस्तुतन्त्रत्वमपाकरोति । नन्वा'त्मेत्येवोपासीते'त्यादयो विधयः श्रूयन्ते, न च प्रमत्तगीताः, तुल्यं हि (४)सांप्रदायिकं, तस्माद्विधेयेनात्र भवितव्यमित्यत आह—**"तद्विषया लिङादय" इति** ( पृ० १६९ प० १ ) । सत्य श्रूयन्ते लिङादयो, न त्वमी (५)विधिविषयाः, तद्विषयत्वे ऽप्रामाण्यप्रसङ्गात् । हेयोपादेयविषयो हि विधिः । स एव च हेय उपादेयो वा यं पुरुषः कर्तुमकर्तुमन्यथा वा कर्तुं शक्नोति । तत्रैव च समर्थः कर्ताऽधिकृतो नियोज्यो भवति । न (६)चैवभूतान्यात्मश्रवणमननोपासनदर्शनानीति विषयतदनुष्ठात्रोर्विधिव्यापकयोरभावाद् विधेरभाव इति प्रत्युक्ता अपि लिङादय प्रवर्तनायामसमर्था उपल इव क्षुरतैक्ष्ण्यं कुण्ठमप्रामाणीभवन्तीति । **"अनियोज्यविषयत्वादि"ति** । समर्थो हि कर्ताऽधिकारी नियोज्य इत्यर्थ । असामर्थ्येतु न कर्तृता ततो नाधिकृतोऽतो न नियोज्य इत्यर्थः । यदि विधेरभावान्न विधिवचनानि, किमर्थानि तर्हि वचनान्येतानि विधिच्छायानीति पृच्छति—**"किमर्थानी"ति** ( पृ० १७० पं० १ ) । न चानर्थकानि युक्तानि, स्वाध्यायविध्यधीनग्रहणत्वानुपपत्तेरिति भावः । उत्तरम्—**"स्वाभाविके"ति** । (७)अन्यतः प्राप्ता एव हि श्रवणादयो विधिसरूपैर्वाक्यैरनूद्यन्ते । न चानुवादोऽऽप्यप्रयोजन', प्रवृत्तिविशेषकरत्वात् । तथाहि—तत्तदिष्टानिष्टविषयेप्साजिहासापहृतहृदयतया वहिर्मुखो न प्रत्यगात्मनि समाधातुमर्हति । आत्म-

---

(१) ध्यानस्य वस्त्वनपेक्षत्वमुक्त्वा पुरुषेच्छाधीनत्वमुपपादयति न हीति । वषट्करिष्यन् होता । विध्यर्थानुष्ठानात्प्राक् प्रमाणवशाद्ध्यानं न सिध्यति तत पुरुषेच्छावशवर्तीति भाव ।

(२) शब्दज्ञानाभ्यासो वा तस्यैव साक्षात्कारपर्यन्तता वा पुरुषेच्छाधीनेत्याशंक्याह नचेति । उपासनाया. साक्षात्कारेऽनुभवपर्यन्तता शब्दोक्तसाक्षात्कारस्याविद्यापनये प्राप्तत्वादित्यर्थ ।

(३) क्वचित्क्रियाया वस्तुस्वरूपविरोधित्वं प्रमाणज्ञानाद्वैलक्षण्यमित्याह क्वचिदिति ।

(४) साम्प्रदायिकं—गुरुमुखाध्ययनादि । (५) विधिविषया —कार्यविषया ।

(६) एवंभूतानीति । क्रियावत्कर्तव्यताविधियुक्तानि कर्तुमकर्तुमन्यथा वा कर्तुं शक्यानि आत्मश्रवणादीनि न, श्रवणस्य तात्पर्यावगमरूपत्वात मननस्य चालोचनरूपत्वादुपासनस्यापि प्रत्ययावृत्त्यात्मकत्वादित्यर्थः ।

(७) अन्यत इति । आत्मदर्शनार्थं कर्तव्यत्वेनान्वयव्यतिरेकप्राप्ता एव श्रवणादयो विधिसमानरूपैरुक्तवाक्यैरनूद्य तत्तत्प्राशस्त्यलक्षणया तेषु रुचिमुत्पाद्यानात्मचिन्तायामरुचिर्जन्यत इत्यर्थ । इदमेवाह तथाहीत्यादिना ।

श्रवणादिविधिसरूपैस्तु वचनैर्मनसो विषयस्रोतः खिलीकृत्य प्रत्यगात्मस्रोत उद्घाट्यते इति प्रवृत्तिविशेषकरतानुवादानामस्तीति सप्रयोजनतया स्वाध्यायविध्यधीनग्रहणत्वमुपपद्यत इति। यच्च चोदितमात्मज्ञानमनुष्ठानानङ्गत्वादपुरुषार्थमिति। तदयुक्तम्, स्वतोऽस्य पुरुषार्थत्वे सिद्धे यदनुष्ठानानङ्गत्वं तद्भूषणं न दूषणमित्याह—"यद्यपी"ति (पृ० १७१ पं० ५)। "अनुसंज्वरेत्" शरीरं परितप्यमानमनुतप्येत। सुगममन्यत्। प्रकृतमुपसंहरति। "तस्मान्न प्रतिपत्ती"ति। (१)प्रकृतसिध्यर्थमेकदेशिमतं दूषयितुमनुभाषते "यदपि केचिदाहु"रिति (पृ० १७२ पं० १)। दूषयति—"तन्ने"ति। इदमत्राकूतम्—

(२)कार्यबोधे यथा चेष्टा लिङ्गं हर्षादयस्तथा।
सिद्धबोधेऽर्थवत्तैवं शास्त्रत्वं हितशासनात्॥

(३)यदि हि पदानां कार्याभिधाने तदर्थस्वार्थाभिधाने वा नियमेन वृद्धव्यवहारे सामर्थ्यमवधृतं भवेत्, न भवेत् अहेयोपादेयभूतब्रह्मात्मतापरत्वमुपनिषदाम्, तत्राविदितसामर्थ्यत्वात्पदानां लोके तत्पूर्वकत्वाच्च वैदिकार्थप्रतीतेः। (४)अथ तु भूतेऽप्यर्थे पदानां लोके शक्यः संगतिग्रहस्तत उपनिषदां तत्परत्वं पौर्वापर्यपर्यालोचनयाऽवगम्यमानमपह्नुत्य न कार्यपरत्वं शक्यं कल्पयितुं, श्रुतहान्यश्रुतकल्पनाप्रसङ्गात्। (५)तत्र तावदेवमकार्येऽर्थे न संगतिग्रहो, यदि तत्परः प्रयोगो न लोके दृश्येत, तत्प्रत्ययो वा व्युत्पन्नस्योन्नेतुं न शक्येत। न तावत्तत्पदः प्रयोगो न दृश्यते लोके। कुतूहलभयादिनिवृत्त्यर्थानामकार्यपराणां पदसन्दर्भाणां प्रयोगस्य लोके बहुलमुपलब्धेः। तद्यथाऽऽखण्डलादिलोकपालचक्रवालादिवसतिः सिद्धविद्याधरगन्धर्वाप्सरःपरिवारो ब्रह्मलोकावतीर्णमन्दाकिनीपयःप्रवाहपातधौतकलधौतमयशिलातलो नन्दनादिप्रमदवनविहारिमणिमयशकुन्तकमनीयनिनदमनोहरः पर्वतराजः सुमेरुरिति, नैष भुजङ्गो रज्जुरियमित्यादि(६)। नापि भूतार्थबुद्धिर्व्युत्पन्नपुरुषवर्तिना न शक्या समुन्नेतुं, हर्षादे-

(१) प्रकृतसिध्यर्थ—सिद्धे वस्तुनि वेदान्तप्रामाण्यसिध्यर्थम्। सिद्धे वस्तुनि संगतिग्रहविरहादिकं दूषयितुमित्यर्थः।

(२) परपुरुषवर्तिशब्दार्थज्ञानलिङ्गरूपाया प्रवृत्ते सिद्धवस्तुन्यसम्भवात् वेदान्तवाक्यानां तत्र संगतिग्रहो न स्यादिति प्रभाकरमतं न युक्तमित्याह कार्यबोध इति। अयमत्र तेषामाशयः—प्रवृत्तिनिवृत्तिलिङ्गाभ्यां श्रोतुस्तद्धेतुकार्यबोधमनुमाय वक्तृवाक्यस्य कार्यपरत्वं निश्चित्य वाक्यस्थपदानां कार्यान्विते शक्तिग्रहान्न सिद्धस्यापदार्थवाक्यमिति न केवलवस्तुवादी वेदभाग इति। तन्न युक्तम्। यतः पुत्रस्ते जात इति वाक्यश्रोतुः पितुर्हर्षलिङ्गेनेष्टपुत्रजन्मानुमाय पुत्रादिपदानां सिद्धेऽर्थे पुत्रादावपि संकेतग्रहात् कार्यान्वितापेक्षयान्वितमात्रे शक्तिरित्यङ्गीकारे लाघवात्सिद्धस्यापि वाक्यार्थत्वसम्भवादिति संक्षेपः। यथा कार्यार्थज्ञाने चेष्टा तथा हर्षादयापि सिद्धबोधे लिङ्गं, तथाच कार्यबोध इव पुत्रजन्मरूपसिद्धार्थबोधेपि हर्षादिप्रयोजनसम्भवादर्थवत्ता, इत्थं हितशासनात् प्रयोजनबोधनात्सिद्धार्थबोधे वेदान्तानामपि शास्त्रत्वमिति कारिकार्थः।

(३) इदमेव विवृणोति यदि हीत्यादिना। भवेत्तर्हि न भवेदुपनिषदां ब्रह्मात्मपरत्वमित्यन्वयः। अत्र हेतुमाह तत्रेति। लोके पदानां सिद्धार्थेऽविदितसामर्थ्याद्वैदिकार्थप्रतीतेस्तत्पूर्वकत्वादिति योजना।

(४) लौकिकपदानामुक्तरीत्या सिद्धार्थबोधकत्वे त्विहापि तथैवेत्याह अथेति।

(५) लोकेपि भूतार्थप्रत्ययस्योदाहरणं प्रदर्शयितुमुपोद्घातमाह तत्रेति। आखण्डलादीति सुमेरुरित्यन्तमुदाहरणम्। तदर्थः सुगमः।

(६) इत्यादीति। इदं भयनिवृत्तिप्रयोजनं भूतार्थपरस्योदाहरणं, प्रथमन्तु तादृशसुमेरुश्रवणात्तद्दर्शनकौतुकोत्पादप्रयोजनमुदाहरणं बोद्धव्यम्।

रुन्नयनहेतोः संभवात्। (१) तथाह्यविदितार्यजनभाषार्थो द्रविडो नगरगमनोद्यतो राजमार्गाभ्यर्णं देवदत्तमन्दिरमध्यासीनः प्रतिपन्नजनकानन्दनिबन्धनपुत्रजन्मा वार्ताहारेण सह नगरस्थदेवदत्ताभ्याशमागतः पटवासोपायनार्पणपुरःसरं 'दिष्ट्या वर्धसे पुत्रस्ते जात'इति वार्ताहारव्याहारश्रवणसमनन्तरमुपजातरोमाञ्चकञ्चुकं विकसितनयनोत्पलमतिस्मेरमुखमहोत्पलमवलोक्य देवदत्तमुत्पन्नप्रमोदमनुमिमीते, प्रमोदस्य च प्रागभूतस्य तद्व्याहारश्रवणसमनन्तरं भवतस्तद्धेतुताम् । न चायमप्रतिपादयन् हर्षहेतुमर्थं हर्षाय कल्पत इत्यनेन हर्षहेतुरर्थ उक्त इति प्रतिपद्यते । हर्षहेत्वन्तरस्य चाप्रतीतेः पुत्रजन्मनश्च तद्धेतोरवगमात्तदेव वार्ताहारेणाभ्यधायीति निश्चिनोति । एवं भयशोकादयोऽप्युदाहार्याः । (२) तथा च प्रयोजनवत्तया भूतार्थाभिधानस्य प्रेक्षावत्प्रयोगोऽप्युपपन्नः । (३) एवं च ब्रह्मस्वरूपज्ञानस्य परमपुरुषार्थहेतुभावादनुपदिशतामपि पुरुषप्रवृत्तिनिवृत्ती वेदान्तानां पुरुषहितानुशासनाच्छास्त्रत्वं सिद्धं भवति । तत्सिद्धमेतद्—विवादाध्यासितानि वचनानि भूतार्थविषयाणि, भूतार्थविषयप्रमाजनकत्वात्, यद्यद्विषयप्रमाजनकं तत्तद्विषयं, यथा रूपादिविषयं चक्षुरादि, तथा चैतानि, तस्मात्तथेति । तस्मात्सुष्ठूक्तं **"तस्यौपनिषदस्य पुरुषस्यानन्यशेषत्वादि"**ति । उपनिपूर्वात्सदेर्विशरणार्थात्क्विप्युपनिषत्पदं व्युत्पादितमुपनीयाद्वयं ब्रह्म (४) सवासनामविद्यां हिनस्तीति ब्रह्मविद्यामाह, तद्धेतुत्वाद्वेदान्ता अप्युपनिषदः, ततो विदित औपनिषदः पुरुषः । एतदेव विभजते—**"योऽसावुपनिषत्स्व"**ति । अहम्प्रत्ययविषयाद्भिनत्ति—**"असंसारी"ति** (पृ० १७३ पं० १) । अत एव क्रियारहितत्वाच्चतुर्विधद्रव्यविलक्षणः । अतश्च चतुर्विधद्रव्यविलक्षणो यदनन्यशेषः । अन्यशेषं हि भूतं द्रव्यं चिकीर्षितं सदुत्पत्त्याद्याप्यं सम्भवति, यथा यूपं तक्षतीत्यादि । यत्पुनरनन्यशेषं भूतभाव्युपयोगरहितं, यथा 'सुवर्णं भार्यं, सक्तून् जुहोती'त्यादि, न तस्योत्पत्त्याद्याप्यता । कस्मात्पुनरस्यानन्यशेषतेत्यत आह-यतः **"स्वप्रकरणस्थः"** । उपनिषदामनारभ्याधीतानां पौर्वापर्यपर्यालोचनया पुरुषप्रतिपादनपरत्वेन पुरुषस्यैव प्राधान्येनेदं प्रकरणम् । न च जुह्वादिवदव्यभिचरितक्रतुसम्बन्धः पुरुष इत्युपपादितम् । अतः स्वप्रकरणस्थः सोऽयं तथाविध उप

---

(१) पूर्वप्रदर्शितस्य हर्षहेतुकानुमानपूर्वकसिद्धार्थसंगतिग्रहस्योदाहरणमाह तथाहीति । अयमभिप्राय —कश्चिद्द्रविडदेशीय आर्यभाषानभिज्ञोऽपि देवदत्तस्यानन्दकारणं पुत्रजन्म जानानो देशान्तराद्देवदत्तपुत्रवृत्तान्तकथनार्थमागताद्वार्ताहरात् उपायनसमर्पणपूर्वकं 'ते पुत्रो जात' इति वाक्यं श्रुत्वा जातरोमाञ्चादिसात्विकभावं देवदत्तमवलोक्यायं प्रमोदवान् रोमाञ्चादिहर्षलक्षणयुक्तत्वात् इत्यनुमायाऽस्य प्रमोदो वार्ताहरवाक्यहेतुकस्तच्छ्रवणान्ते एव जायमानत्वादित्यनुमानेन वाक्यस्यैव प्रमोदहेतुत्वमवधारयति । वाक्यं च हर्षहेत्वर्थं प्रतिपादयदेव हर्षहेतु सम्भवतीति, कारणान्तरं च नास्तीति पुत्रजन्मनश्च हर्षहेतोः पूर्वं ज्ञातत्वात् तदेव वार्ताहारेण कथितमिति सिद्धे पुत्रजन्मन्येव सङ्गतिग्रह इति भावः ।

(२) अर्थवत्त्वेवमिति श्लोकांशं व्याचष्टे तथाचेति । अनेन सिद्धार्थस्य सप्रयोजनत्वात् प्रतिपित्सितत्वं प्रतिपिपादयिषितत्वं च प्रेक्षावत्प्रवृत्त्यङ्गं दर्शितम् ।

(३) शास्त्रत्वमित्यंशं व्याचष्टे एवं चेति । शास्त्रे प्रवृत्त्याद्याश्रयणं पुरुषार्थमात्रार्थं भवति, स यदि पुरुषार्थो विनाऽऽयासं ज्ञानादेव भवति तदा किमिति वेदान्ता न शास्त्राणीति भावः ।

(४) सवासनामिति हिनस्त्यन्तो सदिधातोरर्थं इत्याह सवासनामिति । उप सामीप्यमर्थं, निर्निश्चयार्थस्तथा चाद्वयं ब्रह्म समीपमानीय सवासनामविद्यामुच्छिनत्तीति उपनिपूर्वक्विबन्तसदिधातोर्निष्पन्नमुपनिषच्छब्दस्यार्थं इत्यर्थः ।

निषद्भ्यः प्रतीयमानो न नास्तीति शक्यो वक्तुमित्यर्थः । (१)स्यादेतत्, मानान्तरागोचरत्वेनागृहीतसगतितयाऽपदार्थस्य ब्रह्मणो वाक्यार्थत्वानुपपत्तेः कथमुपनिषदर्थतेत्यत आह— **"स एष नेति नेत्यात्मेत्यात्मशब्दात्"**। यद्यपि गवादिवन्मानान्तरगोचरत्वमात्मनो नास्ति, (२)तथापि प्रकाशात्मन एव सतस्तत्तदुपाधिपरिहाण्या शक्यं वाक्यार्थत्वेन निरूपणं, हाटकस्येव कटककुण्डलादिपरिहाण्या। नहि प्रकाशः स्वसम्वेदनो न भासते, नापि तदवच्छेदकः कार्यकारणसंघातः । तेन 'स एष नेति नेत्यात्मे'ति तत्तदवच्छेदपरिहाण्या बृहत्त्वादापनाच्च स्वयंप्रकाशः शक्यो वाक्याद्ब्रह्मेति चात्मेति च निरूपयितुमित्यर्थः । अथोपाधिनिरासवदुपहितमप्यात्मरूपं कस्मान्न निरस्यते इत्यत आह—**"आत्मनश्च प्रत्याख्यातुमशक्यत्वात्"**। प्रकाशो हि सर्वस्यात्मा तदधिष्ठानत्वाच्च प्रपञ्चविभ्रमस्य, न चाधिष्ठानाभावे विभ्रमो भवितुमर्हति । नहि जातु रज्ज्वभावे रज्ज्वां भुजङ्ग इति वा धारेति वा विभ्रमो दृष्टपूर्वः । (३)अपि चात्मनः प्रकाशस्य भासो प्रपञ्चस्य प्रथा । तथा च श्रुतिः—'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती'ति । न चात्मनः प्रकाशस्य प्रत्याख्याने प्रपञ्चप्रथा युक्ता । तस्मादात्मनः प्रत्याख्यानायोगाद्वेदान्तेभ्यः प्रमाणान्तरागोचरसर्वोपाधिरहितब्रह्मस्वरूपावगतिसिद्धिरित्यर्थः । उपनिषत्स्वेवावगत इत्यवधारणममृष्यमाण आक्षिपति—**"ननु आत्मे"ति** । सर्वजनीनाहंप्रत्ययविषयो ह्यात्मा कर्ता भोक्ता च संसारी, तत्रैव च लौकिकपरीक्षकाणामात्मपदप्रयोगात् "य एव लौकिकाः शब्दास्त एव वैदिकास्त एव च तेषामर्था" इत्यौपनिषदमप्यात्मपदं तत्रैव प्रवर्तितुमर्हति, नार्थान्तरे (४)तद्विपरीत इत्यर्थः । समाधत्ते—**"न"** (पृ० १८४ पं० १) अहम्प्रत्ययविषय औपनिषदः पुरुषः, कुतः? **"तत्साक्षित्वेन,"** अहम्प्रत्ययविषयो यः कर्ता कार्यकारणसंघातोपहितो जीवात्मा तत्साक्षित्वेन परमात्मनोऽहम्प्रत्ययविषयत्वस्य **"प्रत्युक्तत्वात्"**(५) । एतदुक्तं भवति यद्यप्यनेन जीवेनात्मने'ति जीवपरमात्मनोः पारमार्थिकमैक्यं, तथापि तस्योपहित रूपं जीवः शुद्धं तु रूपं तस्य साक्षि, तच्च मानान्तरानधिगतमुपनिषद्गोचर इति । एतदेव प्रपञ्चयति—**"नह्यहंप्रत्ययविषये"**ति। **"विधिशेषत्वं वा नेतुं न शक्यः"** । कुतः? **"आत्मत्वादेव"**। नह्यात्माऽन्यार्थोऽन्यत्तु सर्वमात्मार्थम्। तथा च श्रुतिः—'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवती'ति । अपि चातः सर्वेषामात्मत्वादेव न हेयो नाप्युपादेयः, सर्वस्य हि प्रपञ्चजातस्य ब्रह्मैव तत्त्वमात्मा । न च स्वभावो हेयो, अशक्यहानत्वात् । न चोपादेयो, उपात्तत्वात् । तस्माद्धेयोपादेयविषयौ विधिनिषेधौ न तद्विपरी-

---

(१) सिद्धार्थे कथितदिशा सङ्गतिग्रहेऽपि प्रकृते ब्रह्मणि तदसम्भवस्तस्याविषयत्वादतो न तत्रोपनिषदा प्रामाण्यमित्याशङ्कापरिहारपरं भाष्यमवतारयति स्यादेतदिति ।

(२) स्वयंप्रकाशत्वेन स्फुरत्यात्मनि समारोपितदृश्यनिषेधेन लक्षणया शास्त्रेणात्मनिरूपणम् शक्यमिति भावः ।

(३) न केवलमधिष्ठानत्वेन प्रपञ्चसत्ताप्रदत्वादात्मनस्सत्यत्वमपितु तत्स्फुरणप्रदत्वादपीत्याह अपिचेति ।

(४) परमात्मनीत्यर्थ ।

(५) प्रत्युक्तत्वादिति । सत्कार्यत्वनिरासे 'साक्षी चेता' इति मन्त्रेणात्मन सर्वसाक्षित्वमुक्तं, तेनाह धीविषयस्य प्रत्युक्तत्वादविरुद्धमौपनिषदत्वमित्यर्थ । एतदेवाह एतदुक्तमित्यादिना ।

तमात्मतत्त्व विषयीकुरुत इति सर्वस्य प्रपञ्चजातस्यात्मैव तत्त्वमिति । एतदुपपादयति—**"सर्वं हि विनश्यद्विकारजातं पुरुषान्तं विनश्यति"**। अयमर्थः-(१)पुरुषो हि श्रुतिस्मृतीतिहासपुराणतदविरुद्धन्यायव्यवस्थापितत्वात् परमार्थसन्, प्रपञ्चस्त्वनाद्यविद्योपदर्शितोऽपरमार्थसन्, यश्च परमार्थसन्नसौ प्रकृती रज्जुतत्त्वमिव सर्पविभ्रमस्य विकारस्य । अत एवास्यानिर्वाच्यत्वेनादृढस्वभावस्य विनाशः, (२)पुरुषस्तु परमार्थसन्, नाऽसौ कारणसहस्रेणाप्यसन् शक्यः कर्तुम् । नहि सहस्रमपि शिल्पिनो घटं पटयितुमीशत इत्युक्तम् । तस्मादात्रैनाशिपुरुषान्तो विकारविनाशः शुक्तिरज्जुतत्त्वान्त इव रजतभुजङ्गविनाशः । पुरुष एव हि सर्वस्य प्रपञ्चविकारजातस्य तत्त्वम् । न च पुरुषस्यास्ति विनाशो यतोऽनन्तो विनाशः स्यादित्यत आह—**"पुरुषो हि विनाशहेत्वभावादि"**ति । नहि कारणानि सहस्रमप्यन्यदन्यथयितुमीशत इत्युक्तम् । अथ मा भूत्स्वरूपेण पुरुषो हेय उपादेयो वा, तदीयस्तु कश्चिद्धर्मो हास्यते कश्चिच्चोपादास्यत इत्यत आह—**"विक्रियाहेत्वभावाच्च कूटस्थनित्यः"** । त्रिविधोऽपि धर्मलक्षणावस्थापरिणामलक्षणो विकारो नास्तीत्युक्तम् । (३)अपि चात्मनः परमार्थसतो धर्मोऽपि परमार्थसन्निति न तस्यात्मवदन्यथात्वं कारणैः शक्यं कर्तुम्, न च धर्मान्यथात्वादन्यो विकारः, तदिदमुक्तम्—विक्रियाहेत्वभावादिति । सुगममन्यत् । यत्पुनरेकदेशिना शास्त्रविद्वचनं साक्षित्वेनानुक्रान्तं तदन्यथोपपादयति—**"यदपि शास्त्रतात्पर्यविदामनुक्रमणमि"**ति ( पृ० १७१ पं० ४ ) । 'दृष्टो हि तस्यार्थः प्रयोजनवदर्थावबोधनमि'ति वक्तव्ये धर्मजिज्ञासायाः प्रकृतत्वाद्धर्मस्य च कर्मत्वात् 'कर्मावबोधनमि'त्युक्तम्, न तु सिद्धरूपब्रह्मावबोधन व्यापारं वेदस्य वारयति । न हि सोमशर्मणि प्रकृते तद्गुणाभिधानं परिसंचष्टे विष्णुशर्मणो गुणवत्ताम् । विधिशास्त्रं विधीयमानकर्मविषयं प्रतिषेधशास्त्रं च (४)प्रतिषिध्यमानकर्मविषयमित्युभयमपि कर्मावबोधनपरम् । (५)अपि च 'आम्नायस्य क्रियार्थत्वादि'ति शास्त्रकृद्वचनम् तत्रार्थग्रहणं यद्यभिधेयवाचि ततो भूतार्थानां द्रव्यगुणकर्मणामानर्थक्यमनभिधेयत्वं प्रसज्येत, नहि ते क्रियार्था इत्यत आह—**"अपि चाम्नायस्ये"**ति । (६)यद्युच्येत नहि क्रियार्थत्वं क्रियाभिधेयत्वमपि तु क्रियाप्रयोजनत्वम् द्रव्यगुणशब्दानां च क्रियार्थत्वेनैव भूतद्रव्यगुणाभिधानं न स्वनिष्ठतया, यथाहुः शास्त्रविदः—'चोदना हि भूतं भवन्तमि'त्यादि । एतदुक्तं भवति (७)कार्यमर्थमवगमयन्ती चोदना

---

(१) ननु घटादिविनाशस्य मृदादौ दर्शनात्कथं पुरुषावधि सर्वस्य लयोऽत आह पुरुषो हीति । कल्पितस्याधिष्ठानत्वायोगादात्मतत्त्वमेव तत्तदवच्छिन्नमनिर्वाच्यविश्वोदयाप्ययकारणमित्यर्थः ।

(२) ननु पुरुषोऽप्यनिर्वाच्योऽस्तु तत्राह पुरुषस्त्विति ।

(३) धर्मान्यथात्वविक्रियाया अभावमुक्त्वा तद्धेत्वभावमप्याह—अपि चेति ।

(४) ननु प्रतिषेधानामनुष्ठेयाबोधकत्वात्कथं कर्मावबोधप्रयोजनताऽत आह प्रतिषिध्यमानेति । शाबरवचनवदाम्नायस्येति ( जै० १ अ० २ पा० १ ) सूत्रे आम्नायशब्दो विधिनिषेधपरः सिध्यतीत्यर्थः ।

(५) 'आम्नायस्य क्रियार्थत्वात्' इति सूत्रोक्तार्थपदद्वयमभिधेयपरं प्रयोजनपरं वेति विकल्प्याद्यं निरस्यन्नाहापि चेति ।

(६) द्वितीयं दूषयन्नाह यद्युच्यतेति ।

(७) ननु चोदना हि भूतं भवन्तं भविष्यन्तमर्थमवगमयितुं समर्थेति शाबरवाक्ये विधिवाक्यं भूतादिबोधकं भवतु नतु द्रव्यादिशब्दानां क्रियाप्रयोजनतेत्यत्राह कार्यमिति ।

तदर्थं भूतादिकमप्यर्थं गमयतीति, तत्राह—"**प्रवृत्तिनिवृत्तिव्यतिरेकेण भूतं चेदि**"ति ( पृ० १७७ पं० १ )। अयमभिसन्धिः—न तावत्कार्यार्थ एव स्वार्थे पदानां सङ्गतिग्रहो नान्यार्थ इत्युपपादितं भूतेऽप्यर्थे व्युत्पत्तिं दर्शयद्भिः। (१)नापि स्वार्थमात्रपरतैव पदानां, तथा सति न वाक्यार्थप्रत्ययः स्यात्। नहि प्रत्येकं स्वप्रधानतया गुणप्रधानभावरहितानामेकवाक्यता दृष्टा। (२)तस्मात्पदानां स्वार्थमभिदधतामेकप्रयोजनवत्पदार्थपरतयैकवाक्यता। तथा च तत्तदर्थान्तरविशिष्टैकवाक्यार्थप्रत्यय उपपन्नो भवति। (३)यथाहुः शास्त्रविदः—

> साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम्।
> वर्णास्तथापि नैतस्मिन्पर्यवस्यन्ति निष्फले॥
> वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम्।
> पाके ज्वालेन काष्ठानां पदार्थप्रतिपादनम्॥ इति।

तथा चार्थान्तरसंसर्गपरतामात्रेण वाक्यार्थप्रत्ययोपपत्तौ न कार्यसंसर्गपरत्वनियमः पदानाम्। (४)एवं च सति कूटस्थनित्यब्रह्मरूपपरत्वेऽप्यदोष इति। **भव्यं**—कार्यम्। ननु यद्भव्यार्थं भूतमुपदिश्यते न तद्भूतं भव्यसंसर्गिणा रूपेण तस्यापि भव्यत्वादित्यत आह—"**नहि भूतमुपदिश्यमानमि**"ति। (५)न तादात्म्यलक्षणः संसर्गः, किन्तु कार्येण सह प्रयोजनप्रयोजनिलक्षणोऽन्वयः, तद्विषयेण तु भावार्थेन भूतार्थानां क्रियाकारकलक्षण इति न भूतार्थानां क्रियार्थत्वमित्यर्थः। शङ्कते—**अक्रियात्वेऽपीति**। एवं चाक्रियार्थकूटस्थनित्यब्रह्मोपदेशानुपपत्तिरिति भावः। परिहरति—"**नैष दोषः, क्रियार्थत्वेऽपी**"ति। न हि क्रियार्थं भूतमुपदिश्यमानमभूतं भवति, अपि तु क्रियानिवर्तनयोग्यं भूतमेव तत्। तथा च भूतेऽर्थेऽवधृतशक्तयः शब्दाः क्वचित्स्वनिष्ठभूतविषया(६) दृश्यमाना मृत्वा शीत्वा वा न कथंचित् क्रियानिष्ठतां गमयितुमुचिताः। (७)नह्युपहितं शतशो दृष्टमप्यनुपहितं क

---

( १ ) प्रथमं वृद्धव्यवहारादिना कार्यान्विते घटादिपदशक्तिग्रहेऽपि पश्चात्तस्य परित्यागं कृत्वाऽन्वित एव पदानां शक्तिरिति यदि तदा लाघवादन्वितपरत्वमपि विहाय स्वार्थमात्रपरत्वं स्वीक्रियतामित्याशंक्याह नापीति।

( २ ) अन्विताभिधानमतेनोपसंहरन्नाह तस्मादिति। इदमत्रतात्पर्यम् एकप्रयोजनसिध्युपयोगित्वं पदार्थानामितरेतरवैशिष्ट्यं विना न सम्भवतीति तत्सिद्धये एकवाक्यत्वाय च लक्षणयाऽन्वितपरत्वं कल्प्यते, तादृक्प्रयोजनाभावे तु स्वार्थमात्राभिधेयत्वं पदानामिति।

( ३ ) अन्विताभिधानस्य युक्तियुक्तत्वे भट्टसम्मतिमाह यथाहुरिति।

( ४ ) यदा लक्षणया योग्येतरान्वितपरत्वं पदानां, पदार्थानां च लक्षणायां द्वारत्वेन तत्परत्वं, तदा वेदान्तानां कार्यानन्वितब्रह्मपरत्वोपपत्तिरित्याह एवं चेति।

( ५ ) भव्यसंसर्गिणा रूपेण भूतमपि भव्यमित्यत्र किं भव्यं कार्यमुत क्रिया, उभाभ्यामपि भूतार्थस्य नैक्यमित्याह न तादात्म्येति।

( ६ ) कार्यानन्वितभूतविषया इत्यर्थः।

( ७ ) ननु कार्यान्विते गृहीतसंगते पदस्य कथं शुद्धसिद्धाभिधेयता, नहि गोत्वे गृहीतशक्ति गोपदमश्वत्वे वक्ति इत्याशक्याह नहीति। कार्यान्वयो हि न शब्दार्थ किन्तूपाधिः, तथाहि प्रवृत्तिनिवृत्त्योः कार्यतातदभावावगमाधीनत्वात्, प्रयोजनस्य प्रवृत्तिनिवृत्तिसाध्यत्वात्, विवक्षाप्रयोगयोस्तदधीनत्वात्, वाक्यार्थप्रतिपत्तिव्युत्पत्त्योः प्रयोगाधीनत्वाच्च, विवक्षादिवत्कार्यान्वयस्यापि शब्दावगत्युपायताऽवगम्यतेऽतो विरहय्यापि कार्यान्वयं प्रयोगभेदे भवति भूतं वस्तु पदवाच्यम्, कथमन्यथा भवता प्रमाणान्तरगृहीतकार्या

चिद्दृष्टमदृष्टं भवति । तथा च वर्तमानापदेशा अस्तिक्रियोपहिता अकार्यार्था अप्यटवीवर्णकादयो(१) लोके बहुलमुपलभ्यन्ते । एवं क्रियाऽनिष्ठा अपि सम्बन्धमात्रपर्यवसायिनो, यथा कस्यैष पुरुष इति प्रश्नोत्तरं राज्ञ इति । तथा प्रातिपदिकार्थमात्रनिष्ठा, यथा कीदृशास्तरव इति प्रश्नोत्तरं फलिन इति । नहि पृच्छता पुरुषस्य वा तरूणां वाऽस्तित्वनास्तित्वे प्रतिपित्सिते, किन्तु पुरुषस्य स्वामिभेदस्तरूणां च प्रकारभेदः । प्रष्टुरपेक्षितं चाचक्षाणः स्वामिभेदमेव च प्रकारभेदरूपमेव च प्रतिवक्ति, न पुनरस्तित्वं, तस्य तेनाप्रतिपित्सितत्वात् । (२)उपपादिता च भूतेऽप्यर्थे व्युत्पत्तिः प्रयोजनवती पदानाम् । चोदयति—"**यदि नामोपदिष्टं भूतं, किं तवोपदेष्टुः श्रोतुर्वा प्रयोजनं स्यात्**" (पृ० ९७८ पं० १)। तस्माद् भूतमपि प्रयोजनवदेवोपदेष्टव्यं नाप्रयोजनम्, अप्रयोजनं च ब्रह्म, तस्योदासीनस्य सर्वक्रियारहितत्वेनानुपकारकत्वादिति भावः । परिहरति—"**अनवगतात्मोपदेशश्च तथैव** प्रयोजनवानेव, **भवितुमर्हति**" (पृ०१७९ पं० १ ) । अप्यर्थश्चकारः । एतदुक्तं भवति । यद्यपि ब्रह्मोदासीनं (३)तथापि तद्विषयं शाब्दज्ञानमवगतिपर्यन्तं विद्या स्वविरोधिनीं संसारमूलनिदानमविद्यामुच्छिन्दत् प्रयोजनवदित्यर्थः । (४)अपि च येऽपि कार्यपरत्वं सर्वेषां पदानामास्थिषत, तैरपि 'ब्राह्मणो न हन्तव्यो, न सुरा पातव्ये'त्यादीनां न कार्यपरता शक्याऽऽस्थातुम् । कृत्युपहितमर्यादं हि कार्यं कृत्या व्याप्तं तन्निवृत्तौ निवर्तते शिंशपात्वमिव वृक्षत्वनिवृत्तौ । कृतिर्हि पुरुषप्रयत्नः, स च विषयाधीननिरूपणः । (५)विषयश्चास्य साध्यस्वभावतया भावार्थ एव पूर्वापरीभूतोऽन्योत्पादानुकूलो भवितुमर्हति, न द्रव्यगुणौ । साक्षात्कृतिव्याप्यो हि कृतेर्विषयो, न च द्रव्यगुणयोः सिद्धयोरस्ति कृतिव्याप्यता । अत एव शास्त्रकृद्वचः—'भावार्थाः (६)कर्मशब्दास्तेभ्यः क्रिया प्रतीयेत'इति । द्रव्यगुणशब्दानां नैमित्तिकावस्थायां कार्यावमर्शेऽपि भावस्य स्वतो द्रव्यगुणशब्दानां तु भावयोगात् कार्यावमर्श इति भावार्थेभ्य एवापूर्वावगतिर्न द्रव्यगुणशब्देभ्य इति । (७)न च 'दध्ना जुहोति' 'सन्ततमाघारयती'त्यादिषु द्रव्यादीनां

---

न्वितगृहीतसङ्गतिकपदवृन्दस्य वेदाऽपूर्वान्विताभिधायित्वमिति । एतदेवाह उपहितमिति । अदृष्ट न भवति किन्तु दृष्टमेव भवतीति योजना ।

(१) अस्ति किल ब्रह्मगिरिनामा गिरिवरो यत्र गोदावरी त्र्यम्बकजटाजूटकलना.य निर्मिता श्वेतपटीव भातीत्यादिवनवर्णनादय इत्यर्थ ।

(२) कार्यान्वयनियमाङ्गीकारपूर्वक परिहृत्येदानीन्तन्निरस्यत्राहोपपादिता चेति ।

(३) अप्यर्थचकारसूचितशङ्कां दर्शयित्वा परिहरति तथापीति ।

(४) निषेधवाक्यवदपि वेदान्तानां सिद्धार्थपरत्वमित्याह अपि चेति ।

(५) विषय इति । उक्तस्य प्रयत्नस्य न घटवत्प्रतिक्षण समाप्त किन्तु पचतीतिवत् पूर्वापरीभूतोऽन्यस्यौदनादेरुत्पादानुकूलो साध्यस्वभावतया भावार्थो व्यापार एव साक्षाद्विषय इति भाव ।

(६) भावार्था इति गुरुमतेनात्र विषये प्रमाण प्रदर्शितम् । भावार्थाः—धात्वर्थोपरक्तभावना येषु भाति तादृशा ये कर्मशब्दाः क्रियावाचका यजत्यादयस्तेभ्य क्रियाऽपूर्वं प्रतीयते न द्रव्यगुणशब्देनेति तदर्थः । इममेवार्थमाह द्रव्येति । यद्यपि द्रव्यादिशब्दा क्रियायोगद्वारा साध्यतया द्रव्यादिबोधकास्तथापि भावशब्दः स्वत एव साध्यरूपक्रियाबोधक इति भावार्थेभ्य एवापूर्वावगतिर्न द्रव्यादिशब्देभ्य इति भाव ।

(७) ननु 'दध्ना जुहोती'त्यत्र द्रव्यगुणौ विधीयेते दधिसान्तत्ये, तत्र तयोरेव कार्यावच्छेदकतेत्याशङ्क्याह नचेति । आधारः क्षारणम् । सान्तत्यमविच्छिन्नत्वम् ।

-कार्यविषयता । तत्रापि हि होमाघारभावार्थविषयमेव कार्यम् । (१)न चैतावता 'सोमेन यजे-ते'तिवद्, दधिसन्ततादिविशिष्टहोमाघारविधाना'दग्निहोत्रं जुहोति' 'आघारमभिघारयती'ति तदनुवादः । यद्यप्यत्रापि भावार्थविषयमेव कार्यम्, तथापि भावार्थानुबन्धतया द्रव्यगुणा-वविषयावपि विधीयेते । (२)भावार्थो हि कारकव्यापारमात्रतयाऽविशिष्टः कारकविशेषेण द्रव्यादिना विशेष्यत इति द्रव्यादिस्तदनुबन्धः । तथा च भावार्थे विधीयमाने स एव सानुबन्धो विधीयत इति द्रव्यगुणावविषयावपि तदनुबन्धतया विहितौ भवतः । (३)एवं च भावार्थप्रणालिकया द्रव्यादिसङ्क्रान्तो विधिर्गौरवाद् बिभ्यत् स्ववि-षयस्य चान्यतः प्राप्ततया तदनुवादेन तदनुबन्धीभूतद्रव्यादिपरो भवतीति सर्वत्र भावा-र्थविषय एव विधिः । (४)एतेन 'यदाग्नेयोऽष्टाकपालो भवती'त्यत्र सम्बन्धविषयो विधिरिति परास्तम् । (५)ननु न भवत्यर्थो विधेयः, सिद्धे भवितरि लब्धरूपस्य भवनं प्रत्यकर्तृत्वात् । न खलु गगनं भवति । नाप्यसिद्धे, असिद्धस्यानियोज्यत्वात् गगनकुसुमवत् । तस्माद् भवनेन प्रयोज्यव्यापारेणाक्षिप्तः प्रयोजकस्य भावयितुर्व्यापारो विधेयः । स च व्यापारो भावना कृतिः प्रयत्न इति । निर्विषयश्चासावशक्यप्रतिपत्तिरतो विषयापेक्षायामाग्नेयशब्दोपस्थापितो द्रव्य देवतासम्बन्ध एवास्य विषयः । (६)ननु व्यापारविषयः पुरुषप्रयत्नः कथमव्यापाररूपं स म्बन्धं गोचरयेत् ? नहि घटं कुर्वित्यत्रापि साक्षान्नामार्थं घटं पुरुषप्रयत्नो गोचरयत्यपि तु

(१) ज्योतिष्टोमे श्रूयते—सोमेन यजेत, ऐन्द्रवायवं गृह्णाती'त्यादि । तत्र संशयः किमैन्द्रवायवादिवा-क्ये विहितानां सोमरसानां यागानां च यथाक्रमं सोमयागादिशब्दावनुवदितारावुत द्रव्ययुक्तस्य कर्मणो विधायकाविति । तत्रैन्द्रवायवादिवाक्येषु द्रव्यदेवतात्मकयागरूपप्रतीतेर्यागानुमानादितरत्र रूपाप्रतीते समुदायानुवाद इति पूर्वपक्षे, द्वितीये सिद्धान्तितं—नानुवादत्वमप्रत्यभिज्ञानात्, नह्यैन्द्रवाक्ये यागरूपमवगम्यते तस्मात्सोमवाक्ये यागविधिरितरत्र रसानामिन्द्रादिदेवताभ्यो ग्रहणान्युपकल्पनानि विधीयन्ते । एवं यथा सोमेनेति वाक्ये विशिष्टविधिरेवं दधिसान्तत्यादिवाक्यानि यदि द्रव्यगुणविशिष्टहोमा-घारविधायीनि तर्हि अग्निहोत्राघारवाक्ये तद्विहितहोमानाघाराणां च समुदायावनुवदेतां, तथाच सति अधि करणान्तरविरोध इति न चैतावतेति ग्रन्थशङ्कार्थः । एवं शङ्कयाऽनुवादत्वे प्राप्ते समाधानम्—विधौ इमौ स्या-तामाघारयतिजुहोतिशब्दाभ्यामनुष्ठेयार्थप्रतीतिस्तत्सन्निधौ श्रुतस्य सान्तत्यस्य दध्यादिवाक्यस्य विशिष्टवि-धित्वे गौरवप्रसङ्गेन तद्विहितभावार्थानुवादेन गुणविधानार्थत्वात्, नैतावता दध्यादिपदवाक्ये भावार्थविषयं कार्यं विरुध्यते इत्युपगमः । तत्र हेतुमाह यद्यपीति । द्रव्यगुणयोः कार्यं प्रति साक्षादविषयत्वेऽपि भावार्थं प्रत्यनु-बन्धतया तौ विधीयेते इत्यर्थः । (२) तत्रापि हेतुमाह भावार्थो हीति ।

(३) तर्हि सन्ततादिवाक्यानि विशिष्टविषयाः स्युः, स्याच्चाग्निहोत्रादिवाक्यमनुवाद इत्यत्राहैव चेति । यद्यप्यत्र विशिष्टविधिरवगम्यते, तथापि भावार्थद्वारा द्रव्यादिकमपि विषयीकरोति, तत्र संक्रान्तो यदि भावार्थमन्यतो विहितं न लभेत तर्हि गौरवमप्यङ्गीकृत्य विशिष्टं विदधीत, अथ लभेत तत उपपदाकृष्टश क्तिर्द्रव्यादिपरो भवत्यनुवदति च भावार्थम् । तदिहाग्निहोत्रादिवाक्यत एव भावार्थलाभाद् द्रव्यादिपरत्वमुन्नेय-मिति तात्पर्यम् ।

(४) सिद्धस्य न विधेयत्वमित्युक्तमतिदिशति एतेनेति ।

(५) सम्बन्धस्य भावनावच्छेदकत्वेन विधेयत्वं शङ्कते नन्वित्यादिना । भवत्यर्थस्य कर्तुः सिद्धस्यासिद्ध-स्य वा विधेयत्वे विधिवैयर्थ्याद्भवनव्यापारो यत्न एव विधेयः, स च निर्विषयो न सम्भवतीति सम्बन्ध एवा-स्य विषय इति मीमांसकैकदेशिशङ्कार्थः ।

(६) सिद्धान्ती दूषयति नन्विति । भवतु लक्षितभावनाया एव विधानं, सम्बन्धस्य साक्षात्कृत्यवि-षयत्वान्न स तस्या विषय इति समाधानार्थः ।

दण्डादि हस्तादिना व्यापारयति । तस्माद् घटार्था कृतिं व्यापारविषयामेव प्रतिपद्यते, न तु रूपतो घटविषयाम्, उद्देश्यतया त्वस्यामस्ति घटो न तु विषयतया, विषयतया तु हस्तादि-व्यापार एव । (१)अत एवाग्नेय इत्यत्रापि द्रव्यदेवतासम्बन्धाक्षिप्तो यजिरेव कार्यविषयो विधेयः । किमुक्तं भवति ? आग्नेयो भवतीति, आग्नेयेन यागेन भावयेदिति । अत एव 'य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजते' इत्यनुवादो भवति 'यदाग्नेय' इत्यादिविहितस्य यागषट्कस्य । (२)अत एव च विहितानूदितस्य तस्यैव 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यधिकारसम्बन्धः । तस्मात् सर्वत्र कृतिप्रणालिकया भावार्थविषय(३) एव विधिरित्येकान्तः । (४)तथा च 'न हन्यान्न पिबेदि'त्यादिषु यदि कार्यमभ्युपेयेत ततस्तद्व्यापिका कृतिरभ्युपेतव्या । तद्व्यापकश्च भावार्थो विषयः । एवं च प्रजापतिव्रतन्यायेन पर्युदासवृत्त्याऽहननापानसङ्कल्पलक्षणया तद्विषयो विधिः स्यात् । तथा च प्रसज्यप्रतिषेधो दत्तजलाञ्जलिः प्रसज्येत(५) । न च सति सम्भवे लक्षणा न्याय्या । (६)'नेक्षेतोद्यन्तमि'त्यादौ तु 'तस्य व्रतमि'त्यधिकारात् प्रसज्यप्रतिषेधासम्भवेन पर्युदासवृत्त्याऽनीक्षणसङ्कल्पलक्षणा युक्ता । (७)तस्माद् 'न हन्याद् न पिबेदि'त्यादिषु प्रसज्यप्रतिषेधेषु भावार्थाभावाद् तद्व्याप्तायाः कृतेरभावस्तदभावे च तद्व्याप्तस्य कार्यस्याभाव इति न कार्यपरत्वनियमः सर्वत्र वाक्ये इत्याह—"**ब्राह्मणो न हन्तव्य इत्येवमाद्ये**"ति (पृ ९८० पं १)। ननु कस्मान्निवृत्तिरेव कार्यं न भवति, तत्साधनं वेत्यत आह—"**न च सा क्रिये**"ति । (८)क्रियाशब्दः कार्यवचनः । एतदेव विभजते—"**अक्रियार्थानामि**"ति । (९)स्यादेतत्, विधिविभक्तिश्रवणात् कार्यं तावदत्र प्रतीयते, तच्च न भावार्थमन्तरेण, न च रागतः प्रवृत्तस्य हननपानादावकस्मा-

---

(१) यदि सम्बन्धो न विधेयस्तर्हि आग्नेयवाक्ये किं विधेयमतआहातएवेति । यत 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इत्यादिवाक्येन यागो विधीयते तस्मात् 'य एव विद्वान् पौर्णमासीं यजेत' इत्यनुवादे यजते इति श्रुत न सम्बन्धस्तस्मात् न कुत्रापि सम्बन्धविधिरिति भाव ।

(२) उत्पत्त्यधिकारयोरविसंवादार्थमप्याग्नेयादिवाक्ये यागविधिरवश्यमभ्युपेय इत्याहातएवेति । अत्राप्यधिकारविधौ यजेत इति दर्शनायागविधिरित्यर्थ ।

(३) भावार्थविषय —धात्वर्थविषय ।

(४) एव नियोगकृतिभावार्थानां व्याप्यव्यापकतामुक्त्वा व्यापकनिवृत्त्या व्याप्यनिवृत्तिं निषेधेष्वाह तथा चेति ।

(५) प्रसज्येतेति । अयं भाव॰ नामधात्वर्थयोगे नञ पर्युदासता, न हन्यादित्यादौ चाख्यातयोगात् प्रतिषेध॰ प्रधानो भाति तत्र वीक्षणवल्लक्ष्य पर्युदासः स्यादित्येक दूषण पर च विधिनिषेधविभागलोप इति ।

(६) निषेधेषु पर्युदासाभावप्रदर्शनाय प्रजापतिव्रतन्यायं स्फुटीकरोति नेक्षेतेति । तत्र च 'तस्य ब्रह्मचारिणो व्रतम्' इति व्रतशब्दोपक्रमात एकत्र वाक्ये उपसंहारस्य प्रक्रमाधीनत्वात् आख्यातसम्बद्धेनापि नञा प्रतीतो निषेधोऽननुष्ठेयत्वादुपेक्ष्यतेऽतोऽवीक्षणसकल्पलक्षणा सगता, न चैवं निषेधेषु सम्भवतीति भाव ।

(७) उपसंहरन् भाष्यमवतारयति तस्मादिति ।

(८) भाष्येऽक्रियार्थानामानर्थक्याभिधानादत्र क्रियाशब्द कार्यवचन इत्यर्थ ।

(९) निषेधस्थले धात्वर्थाभावात् कार्यमित्युक्त तत्र हेत्वसिद्धिं शङ्कते स्यादेतदिति । तथा च न हन्यादित्यादौ लक्षणया हननविरोधी यत्न एव विधेय, रागतःप्राप्तहननौदासीन्यरूपप्रयोजनसत्त्वाल्लक्षणा न दोषायेति क्रियापरमेव सर्वं वाक्यमिति शङ्काग्रन्थार्थ ।

दौदासीन्यमुपपद्यते विना विधारकप्रयत्नम्, तस्मात् स एव प्रवृत्त्युन्मुखानां मनोवाग्देहानां विधारकः प्रयत्नो निषेधविधिगोचरः क्रियेति नाक्रियापरमस्ति वाक्यं किंचिदपीत्याह—"**न च हननक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण नञः शक्यमप्राप्तक्रियार्थत्वं कल्पयितुम्**" (पृ० १८१ पं०)। केन हेतुना न शक्यमित्यत आह—"**स्वभावप्राप्तहन्त्यर्थानुरागेण**" नञः। (१)अयमर्थः। हननपानपरो हि विधिप्रत्ययः प्रतीयमानस्ते एव विधत्त इत्युत्सर्गः। नचैते शक्ये विधातुम्, रागतः प्राप्तत्वात्। न च नञः प्रसज्यप्रतिषेधो विधेयः, तस्याप्यौदासीन्यरूपस्य सिद्धतया प्राप्तत्वात्। न च विधारकः प्रयत्नः, तस्याश्रुतत्वेन लक्ष्यमाणत्वात्, सति सम्भवे च लक्षणाया अन्याय्यत्वात्, विधिविभक्तेश्च रागतः प्राप्तप्रवृत्त्यनुवादकत्वेन विधिविषयत्वायोगात्। तस्माद् यत् पिबेद् हन्याद्वेत्यनूद्य तन्नेति निषिध्यते, तदभावो ज्ञाप्यते, न तु नञर्थो विधीयते। (२)अभावश्च स्वविरोधिभावनिरूपणतया भावच्छायानुपातीति सिद्धे सिद्धवत् साध्ये च साध्यवत् भासत इति साध्यविषयो नञर्थः साध्यवद् भासत इति नञर्थः कार्य इति भ्रमस्तदिदमाह—"**नञश्चैष स्वभाव**" इति (पृ० १८२ पं० १)। ननु बोधयतु सम्बन्धिनोऽभावं नञ्, प्रवृत्त्युन्मुखानां तु मनोवाग्देहानां कुतोऽकस्मान्निवृत्तिरित्यत आह—"**अभावबुद्धिश्चौदासीन्य(३)पालनकारणम्**" (पृ० १८३ पं०)। (४)अयमभिप्रायः—'ज्वरितः पथ्यमश्नीयाद्' 'न सर्पायाङ्गुलिं दद्या'दित्यादिवचनश्रवणसमनन्तरं प्रयोज्यवृद्धस्य पथ्याशने प्रवृत्तिं भुजङ्गाङ्गुलिदानोन्मुखस्य च ततो निवृत्तिमुपलभ्य बालो व्युत्पित्सुः प्रयोज्यवृद्धस्य प्रवृत्तिनिवृत्तिहेतू इच्छाद्वेषावनुमिमीते। तथाहीच्छाद्वेषहेतुके वृद्धस्य प्रवृत्तिनिवृत्ती स्वतन्त्रप्रवृत्तिनिवृत्तित्वात् मदीयस्वतन्त्रप्रवृत्तिनिवृत्तिवत्। (५)कर्तव्यतैकार्थसमवेतेष्टानिष्टसाधनभावावगमपूर्वकौ चास्येच्छाद्वेषौ प्रवृत्तिनिवृत्तिहेतुभूतेच्छाद्वेषत्वात् मत्प्रवृत्तिनिवृत्तिहेतुभूतेच्छाद्वेषवत्। (६)न जातु मम शब्दतद्व्यापारपुरुषाशयत्रैकाल्यानवच्छिन्नभावनापूर्वप्रत्ययपूर्वाविच्छाद्वेषावभूताम्, अपि तु भूयोभूयः स्वगतमालोचयत उक्तकारणपूर्वावेव प्रत्यवभासेते। तस्माद्वृद्धस्य स्वतन्त्रप्रवृत्तिनिवृत्ती इच्छाद्वेषभेदौ च कर्तव्यतैकार्थसमवेतेष्टानिष्टसाधनभावावगमपूर्वावित्यानुपूर्व्या सिद्धः

---

(१) उक्ताशङ्कासमाधानभाष्यार्थमाह अयमर्थ इत्यादिना। रागत प्राप्तत्वाद्धननं, औदासीन्यरूपस्य नञर्थस्य स्वत सिद्धत्वान्नञर्थोऽश्रुतत्वेन लक्ष्यमाणत्वात्प्रयत्नश्च न विधेय इत्यर्थ

(२) ननु नञर्थविध्यभावे हननं नास्ति इत्यादाविव सिद्धतया प्रतीयेतेत्याशङ्क्याह अभावश्चेति। रागप्राप्तहननस्वभावप्रतियोगिनिष्ठं साध्यत्वमारोप्यत इत्यर्थ।

(३) औदासीन्यस्य प्रागभावतया कारणानपेक्षत्वादध्याहरति पालनेति।

(४) विधिनिषेधयोरिष्टानिष्टोपायत्वबोधकत्व व्युत्पत्तिबलेन दर्शयति अयमभिप्राय इत्यादिना प्रवर्तकेषु वाक्येषु इत्यत प्राक्तनग्रन्थेन।

(५) चन्द्रोदयगतहितसाधनताया न प्रवृत्तिहेतुता, तथा प्राक्कृतभुजङ्गाङ्गुलिदाने च नाधुना निवृत्तिहेतुत्वमत साध्यं विशिनष्टि कर्तव्यतैकार्थेति। कर्तव्यतया सहैकस्मिन्नात्मन्यर्थे यौ समवेताविष्टानिष्टसाधनभावौ तज्ज्ञानपूर्वकाविति तदर्थः। फलेच्छाद्वेषयोरनैकान्तिकत्ववारणाय प्रवृत्तिनिवृत्तिहेतुभूतेति हेतुविशेषणम्।

(६) दृष्टान्ते साध्यवैकल्यमाशङ्क्याह न जात्विति। शब्दादीनामपूर्वपर्यन्तानां ये प्रत्ययास्तत्पूर्वौ वा तस्य मे नाभूतामिच्छाद्वेषौ प्रत्यक्षव्यवहारे सर्वेषामभावादित्यर्थ।

कार्यकारणभाव इतीष्टानिष्टसाधनतावगमात्प्रयोज्यवृद्धप्रवृत्तिनिवृत्ती इति सिद्धम् । स चावगमः प्रागभूतः शब्दश्रवणानन्तरमुपजायमानः शब्दश्रवणहेतुक इति प्रवर्तकेषु वाक्येषु 'यजेते'त्यादिषु शब्द एव कर्तव्यमिष्टसाधनं व्यापारमवगमयंस्तस्येष्टसाधनतां कर्तव्यतां चावगमयति, अनन्यलभ्यत्वादुभयोः, अनन्यलभ्यस्य च शब्दार्थत्वात् । यत्र तु कर्तव्यताऽन्यत एव लभ्यते, यथा 'न हन्यान्न पिबेदि'त्यादिषु हननपानप्रवृत्त्यो रागतः प्रतिलम्भात्तत्र तदनुवादेन नञ्समभिव्याहृता लिङादिविभक्तिरन्यतोऽप्राप्तमनयोरनर्थहेतुभावमात्रमवगमयति । प्रत्यक्षं हि तयोरिष्टसाधनभावोऽवगम्यतेऽन्यथा रागविषयत्वायोगात् । तस्माद्रागादिकर्तव्यतानुवादेनानर्थसाधनताप्रज्ञापनपरं 'न हन्यान्न पिबेदि'त्यादिवाक्यं, न तु कर्तव्यतापरमिति सुष्ठूक्तमकार्यनिष्ठत्वं निषेधानाम् । (१)निषेध्यानां चानर्थसाधनताबुद्धिरेव निषेध्याभावबुद्धिस्तया खल्वयं चेतन आपाततो रमणीयतां पश्यन्नप्यायतिमालोच्य प्रवृत्त्यभावं निवृत्तिमवबुध्य निवर्तते, औदासीन्यमात्मनोऽवस्थापयतीति यावत् । (२)स्यादेतत्, अभावबुद्धिश्चेदौदासीन्यस्थापनकारणं यावदौदासीन्यमनुवर्तेत, न चानुवर्तते, नह्युदासीनोऽपि विषयान्तरव्यासक्तचित्तस्तदभावबुद्धिमान्, न चावस्थापककारणाभावे कार्यावस्थानं दृष्टम्, नहि स्तम्भावपाते प्रासादोऽवतिष्ठतेऽत आह—

**"सा च दग्धेन्धनाग्निवत्स्वयमेवोपशाम्यति"** । (३)तावदेव खल्वयं प्रवृत्त्युन्मुखो न यावदस्यानर्थहेतुभावमधिगच्छति । अनर्थहेतुत्वाधिगमोऽस्य समूलोद्धारं प्रवृत्तिमुद्वृह्य दग्धेन्धनाग्निवत्स्वयमेवोपशाम्यति । (४)एतदुक्तं भवति यथा प्रासादावस्थानकारणं स्तम्भो नैवमौदासीन्यावस्थानकारणमभावबुद्धिः, अपि त्वागन्तुकाद्विनाशहेतोस्त्राणेनावस्थानकारणम् । यथा कमठपृष्ठनिष्ठुरः कवचः शस्त्रप्रहारत्राणेन राजन्यजीवावस्थानहेतुः । न च कवचापगमे चासति च शस्त्रप्रहारे राजन्यजीवनाश इति । उपसंहरति—**"तस्मात्प्रसक्तक्रियानिवृत्त्यौदासीन्यमेवे"ति** ( पृ० १८४ पं० १ ) । औदासीन्यमजानतोऽप्यस्तीति प्रसक्तक्रियानिवृत्त्योपलक्ष्य विशिनष्टि । तत्किमक्रियार्थत्वेनानर्थक्यमाशङ्क्य क्रियार्थत्वोपवर्णनं जैमिनीयमसमञ्जसमेवेत्युपसंहारव्याजेन परिहरति—**"तस्मात्पुरुषार्थे"ति** । पुरुषार्थानुपयोग्युपाख्यानादिविषयावक्रियार्थतया क्रियार्थतया च पूर्वोत्तरपक्षौ, न तूपनिषद्विषयौ, उपनिषदां स्वयंपुरुषार्थब्रह्मरूपावगमपर्यवसानादित्यर्थः । (५)यदप्यौपनिषदात्मज्ञा-

---

( १ ) ननु हननादिषु प्रत्यक्षदृष्टेष्टसाधनत्वकर्तव्यत्वयोर्निषेद्धुमशक्यत्वात् कथं 'अभावबुद्धिश्चे'त्यादिभाष्यं सङ्गच्छते इत्यत आह निषेध्यानां चेति । दृश्यमानमपीष्टं बहुवृष्टानिष्टोदयावहत्वादानिष्टमित्यर्थहेतुत्वज्ञापनपरत्वाद्वाक्यस्येति नासङ्गतिरित्यर्थः ।

( २ ) उक्ताभावबुद्धेरौदासीन्यस्थापकत्वेपि क्षणिकत्वात्तद्ध्वंसे पुनर्हननोद्यमप्रवृत्तिः स्यात्ध्वंसे च तदनुवृत्तेर्विषयान्तरज्ञानानुदय इति अभिप्रायेण शङ्कते स्यादेतदिति ।

( ३ ) सा चेत्यादि समाधानभाष्यार्थमाह तावदेवेति । यथाग्निः पुनर्ज्वालाजनननिदानमिन्धनं दहन्नुपशान्तो भवति भाविनीनां ज्वालानामुदयविरोधी, तथाऽभावबुद्धिः क्षणिकतया स्वयं शाम्यत्यपि हननाद्यहितोपायताऽनवबोधं दग्ध्वा तन्निदाना उपरितना प्रवृत्तीः रुणद्धीति समाधानार्थः ।

( ४ ) न ह्यभावबुद्धिरनादिनः औदासीन्यस्य स्थापिका येन तदभावे कारणाभावादिदं न भवेदपि तु अपवादनिरासिकेत्याह एतदुक्तं भवति इत्यादिना ।

( ५ ) स्वयं पुरुषार्थब्रह्मावगमपरत्वमुपनिषदामसिद्धमित्याशङ्क्य भाष्यव्याख्यया परिहरति यदपीत्यादिना ।

नमपुरुषार्थं मन्यमानेनोक्तं 'कर्तव्यविध्यनुप्रवेशमन्तरेणे'ति, अत्र निगूढाभिसन्धिः पूर्वोक्तं परिहारं स्मारयति—**"तत् परिहृत"**मिति ( पृ० १८७ पं ३ )। अत्राक्षेप्ता स्वोक्त मर्थं स्मारयति—**"ननु श्रुतब्रह्मणोऽपी"**ति । निगूढमभिसन्धिं समाधातोद्घाटयति—**"अत्रोच्यते, नावगतब्रह्मात्मभावस्ये"**ति । (१)सत्यं, न ब्रह्मज्ञानमात्रं सांसारिक-धर्मनिवृत्तिकारणमपि तु साक्षात्कारपर्यन्तम् । ब्रह्मसाक्षात्कारश्चान्तःकरणवृत्तिभेदः श्रवणम-ननादिजनितसंस्कारसचिवमनोजन्मा षड्जादिभेदसाक्षात्कार इव गान्धर्वशास्त्रश्रवणाभ्यास-संस्कृतमनोयोनिः । स च निखिलप्रपञ्चमहेन्द्रजालसाक्षात्कारं समूलमुन्मूलयन्नात्मानमपि प्रपञ्चत्वाविशेषादुन्मूलयतीत्युपपादितमधस्तात् । तस्माद्रज्जुस्वरूपकथनतुल्यतैवात्रेति सिद्धम् । (२) अत्र च वेदप्रमाणमूलतया वेदप्रमाणजनितेत्युक्तम् । अत्रैव सुखदुःखानुत्पादभेदेन नि-दर्शनद्वयमाह—**"नहि धनिन"** इति । श्रुतिमत्रोदाहरति—**"तदुक्त"**मिति ( पृ० १८८ पं० १)। चोदयति—**"शरीरे पतित"** इति । परिहरति—**"न सशरीरत्वस्ये"**-ति । (३)यदि वास्तवं सशरीरत्वं भवेन्न जीवतस्तन्निवर्तेत, मिथ्याज्ञाननिमित्तं तु तत् । तच्चोत्पन्नतत्त्वज्ञानेन जीवतापि शक्यं निवर्तयितुम् । (४)यत्पुनरशरीरत्वं तदस्य स्वभाव इति न शक्यं निवर्तयितुं, स्वभावहानेन भावविनाशप्रसङ्गादित्याह—**"नित्यमशरीर-त्व"**मिति ( पृ० १८८ पं० ५ ) । स्यादेतत् , न मिथ्याज्ञाननिमित्तं सशरीरत्वमपि तु धर्माधर्मनिमित्त, तच्च स्वकारणधर्माधर्मनिवृत्तिमन्तरेण न निवर्तते, तन्निवृत्तौ च प्रायणमेवेति न जीवतोऽशरीरत्वमिति शङ्कते—**"तत्कृते"**ति । तदित्यात्मानं परामृशति । निराकरो-ति—**"न, शरीरसम्बन्धस्ये"**ति । न तावदात्मा साक्षाद्धर्माधर्मौ कर्तुमर्हति, वाग्बु-द्धिशरीरारम्भजनितौ हि तौ नासति शरीरसम्बन्धे भवतः, ताभ्यां तु शरीरसम्बन्धे रोच-यमानो व्यक्तं परस्पराश्रयं दोषमावहति, **तदिदमाह—"शरीरसम्बन्धस्ये"ति ।** (५)यद्युच्येत सत्यमस्ति परस्पराश्रयो, न त्वेष दोषोऽनादित्वाद्बीजाङ्कुरवदित्यत आह—**"अन्धपरम्परैषाऽनादित्वकल्पना"** । (६)यस्तु मन्यते—'नेयमन्धपरम्परातुल्या-ऽनादिता, नहि यतो धर्माधर्मभेदादात्मशरीरसम्बन्धभेदस्तत एव स धर्माधर्मभेदः, कि-न्त्वेष पूर्वस्मादात्मशरीरसम्बन्धात्पूर्वधर्माधर्मभेदजन्मनः, एष त्वात्मशरीरसम्बन्धोऽस्माद्ध-र्माधर्मभेदादिति' तं प्रत्याह—**"क्रियासमवायाभावादि"**ति । शङ्कते—**"सान्निधान-**

( १ ) अवगतब्रह्मात्मभावस्येति भाष्येऽवगतिशब्दाभिप्रायमाह सत्यमिति ।

( २ ) श्रवणादिसंस्कृतमनोजन्यश्चेत्साक्षात्कारः कथं तर्हि वेदप्रमाणजनितेति भाष्यमत आह अत्रचेति ।

( ३ ) देहपातोत्तरकालमशरीरत्वमिति शङ्कायां सशरीरत्वस्य निमित्तवर्णनमयुक्तमित्याशंक्याह यदीति ।

( ४ ) यदि सशरीरत्वं मिथ्यात्वाज्जीवित एव ज्ञानेन निवर्त्यं तर्ह्यशरीरत्वमप्यभावत्वात्तथा भवेदित्याश-क्य, न तत्त्वत शरीरसम्बन्धोऽभावोपलक्षितस्य तथात्वादित्याह यत्पुनरिति ।

( ५ ) धर्माधर्मव्यक्त्यो शरीरसम्बन्धव्यक्तेश्चेतरेतरहेतुकत्वे यद्यपीतरेतराश्रयस्तथाप्यनादित्वान्न दोष इत्याभिप्रायेण सत्कार्यवादी शङ्कते यद्युच्येतेति ।

( ६ ) व्यक्तिभेदेनेतरेतराश्रयदोषं परिहरन्नाह सत्कार्यवादी यस्त्विति । किन्त्वेषो-इदानीन्तनशरीरसम्ब-न्धहेतु, पूर्वाभ्यां धर्माधर्मविशेषाभ्यां जन्म यस्य तस्मात्पूर्वस्मादात्मशरीरसम्बन्धात् । एष तु वर्तमानस्तु, प्रत्याह—आत्मन्यध्यासप्रकरणोक्तयुक्तिभिर्यद्येकोपि क्रियासम्बन्धो न सम्भवति तदा कथमनन्तव्यक्तिस-म्भव इति परिहरतीत्यर्थ ।

मात्रेणे"ति ( पृ० १८९ पं० १ ) । परिहरति—"**ने**"ति । उपार्जनं स्वीकरणम् । नत्वियं विधाऽऽत्मनीत्याह—"**न त्वात्मन" इति** । 'ये तु देहादावात्माभिमानो न मिथ्याऽपि तु गौणो माणवकादाविव सिंहाभिमान इति मन्यन्ते' तन्मतमुपन्यस्य दूषयति—"**अत्राहु"रिति** । प्रसिद्धो वस्तुभेदो यस्य पुरुषस्य स तथोक्तः । उपपादितं चैदस्माभिरध्यासभाष्ये इति नेहोपपाद्यते । यथा मन्दान्धकारे स्थाणुरयमित्यगृह्यमाणविशेषे वस्तुनि पुरुषात्, सांशयिकौ पुरुषशब्दप्रत्ययौ स्थाणुविषयौ, तत्र तु पुरुषत्वमनियतमपि समारोपितमेव । एवं संशये समारोपितमनिश्चितमुदाहृत्य विपर्ययज्ञाने निश्चितमुदाहरति—"**यथा वा शुक्तिकाया**"मिति ( पृ० १९० पं० ४ ) । (१)शुक्लभास्वरस्य द्रव्यस्य पुरःस्थितस्य सति शुक्तिकारजतसाधारण्ये यावदत्र रजतविनिश्चयो भवति तावत्कस्माच्छुक्तिविनिश्चय एव न भवति । (२)संशयो वा द्वेधा युक्तः, समानधर्मधर्मिणोर्दर्शनात् उपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषद्वयस्मृतेश्च । संस्कारोन्मेषहेतोः सादृश्यस्य द्विष्ठत्वेनोभयत्र तुल्यमेतदिति अत उक्तम्— "**अकस्मा**"दिति । (३)अनेन दृष्टस्य हेतोः समानत्वेऽप्यदृष्टं हेतुरुक्तः । तच्च कार्यदर्शनोन्नेयत्वेनासाधारणमिति भावः । "**आत्मानात्माविवेकिना**मि"ति । श्रवणमननकुशलतामात्रेण पण्डितानामनुत्पन्नतत्त्वसाक्षात्काराणामिति यावत् । तदुक्तम्—'पश्वादिभिश्चाविशेषादि'ति । शेषमतिरोहितार्थम् । जीवतो विदुषोऽशरीरत्वे च श्रुतिस्मृती उदाहरति—"**तथाचे**"ति ( पृ० १९१ पं० २ ) । सुबोधम् । प्रकृतमुपसंहरति—"**तस्मान्नावगतब्रह्मात्मभावस्ये"ति** । ननूक्तं—यदि जीवस्य ब्रह्मात्मत्वावगतिरेव सांसारिकधर्मनिवृत्तिहेतुः, हन्त मननादिविधानानर्थक्यं, तस्मात्प्रतिपत्तिविधिपरा वेदान्ता—इति, तदनुभाष्य दूषयति—"**यत्पुनरुक्तं श्रवणात्पराचीनयोरि**"ति । मनननिदिध्यासनयोरपि न विधिस्तयोरन्वयव्यतिरेकसिद्धसाक्षात्कारफलयोर्विधिसरूपैर्वचनैरनुवादात् , तदिदमुक्तम्—"**अवगत्यर्थत्वादि"ति** । ब्रह्मसाक्षात्कारोऽवगतिस्तदर्थत्वं मनननिदिध्यासनयोरन्वयव्यतिरेकसिद्धमित्यर्थः । अथ कस्मान्मननादिविधिरेव न भवतीत्यत आह—"**यदि ह्यवगतमि**"ति ( पृ० १९२ पं० १ ) । न तावन्मनननिदिध्यासने प्रधानकर्मणी अपूर्वविषये अमृतत्वफले इत्युक्तमधस्तात्(४), अतो गुणकर्मत्वमनयोरवघातप्रोक्षणादिवत् परिशिष्यते, तदप्ययुक्तम् (५)अन्यत्रोपयुक्तोपयोक्ष्यमाणत्वाभावादात्मनः, विशेषतस्त्वौपनिषदस्य कर्मानुष्ठानविरोधा-

---

( १ ) 'तत्र तु' इत्यादिना संशयस्यापि समारोपत्वं प्रदर्श्य, भ्रान्तेरप्युचितनिमित्तापेक्षणादकस्मादित्ययुक्तं भाष्यमित्याशंक्याह शुक्लभास्वरस्येति ।

( २ ) साधारणधर्मिणि दृष्टे किं तन्मात्रं विपर्ययकारणमुत सादृश्यादिदोषसम्वलितमिति विकल्प्य तत्र धवलभास्वररूपस्य शुक्तिरजतसाधारण्ये सति व्यवहितरजतनिश्चयात्प्रागेव संनिहितशुक्तिनिश्चयप्रसंगादाद्य निरस्य द्वितीयं दूषयन्नाह संशयो वेति । तथा च समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षो विमर्शः संशय इति सूत्रेऽक्षपादवर्णितसंशयसामग्रीसत्त्वात्संशय एव युक्तो न विपर्यय इत्यभिप्रायकमकस्मादितिपदं भाष्ये प्रयुक्तमिति सन्दर्भार्थः ।

( ३ ) कथं तर्हि दृश्यमानविपर्ययनियमस्तत्राहानेनेति । दृष्टं हेतुं प्रतिषिध्य कार्यनियमं प्रतिजानता भाष्यकारेणादृष्टं कर्म हेतुत्वेनार्थादुक्तमिति भावः ।

( ४ ) इत्युक्तमधस्तादिति । गान्धर्वशास्त्राभ्यासवदपूर्वानपेक्षया साक्षात्कारहेतुतोक्तेत्यर्थः ।

( ५ ) गुणकर्म क्वचिदुपयोक्ष्यमाणशेषो यथा हवने उपयोक्ष्यमाणव्रीहीणामवघातः, क्वचिदुपयुक्तशे-

दित्यर्थः । प्रकृतमुपसंहरति–"**तस्मादि**"ति । एवं सिद्धरूपब्रह्मपरत्वमुपनिषदाम् । ब्रह्मणः शास्त्रार्थस्य धर्मादन्यत्वाद्भिन्नविषयत्वेन शास्त्रभेदाद् 'अथातो ब्रह्मजिज्ञासे'त्यस्य शास्त्रारम्भत्वमुपपद्यत इत्याह–"**एवं च सती**"ति । इतरथा तु धर्मजिज्ञासैवेति न शास्त्रान्तरमिति न शास्त्रारम्भत्वं स्यादित्यत आह–"**प्रतिपत्तिविधिपरत्व**" इति ( पृ० १९३ पं० १)। न केवलं सिद्धरूपत्वाद्ब्रह्मात्मैक्यस्य धर्मादन्यत्वमपि तु तद्विरोधादपीत्युपसंहारव्याजेनाह–"**तस्मादहं ब्रह्मास्मीति**' (पृ०१९४ पं०१) । (१)इतिकरणेन ज्ञानं परामृशति । (२)विधयो हि धर्मे प्रमाणं, ते च साध्यसाधनेतिकर्तव्यताभेदाधिष्ठाना धर्मोत्पादिनश्च तदधिष्ठाना न ब्रह्मात्मैक्ये सति प्रभवन्ति, विरोधादित्यर्थः । न केवल धर्मप्रमाणस्य शास्त्रस्येयं गतिरपि तु सर्वेषां प्रमाणानामित्याह–"**सर्वाणि चेतराणि प्रमाणानी**"ति । कुतः ? "**नही**"ति । अद्वैते हि विषयविषयिभावो नास्ति । न च कर्तृत्वं, कार्याभावात् । न च करणत्वम्, अत एव । तदिदमुक्तम्—"**अप्रमातृकाणि चे**"ति चकारेण । अत्रैव ब्रह्मविदां गाथामुदाहरति–"**अपि चाहु**"रिति । पुत्रदारादिष्वात्माभिमानो गौणः । (३)यथा स्वदुःखेन दुःखी यथा स्वसुखेन सुखी तथा पुत्रादिगतेनापीति सोऽयं गुणः । न त्वेकत्वाभिमानो, भेदस्यानुभवसिद्धत्वात् । तस्माद्गौर्वाहीक इतिवद्गौणो, देहेन्द्रियादिषु त्वभेदानुभवान्न गौण आत्माभिमानः, किन्तु शुक्तौ रजतज्ञानवन्मिथ्या । तदेवं द्विविधोऽयमात्माभिमानो लोकयात्रां वहति । तदसत्त्वे तु न लोकयात्रा नापि ब्रह्मात्मैकत्वानुभवस्तदुपायस्य श्रवणमननादेरभावात् । तदिदमाह––"**पुत्रदेहादिबाधनात्**"। (४)गौणात्मनोऽसत्त्वे पुत्रकलत्रादिबाधनं, ममकाराभाव इति यावत् । मिथ्यात्मनोऽसत्त्वे देहेन्द्रियादिबाधनं श्रवणादिबाधनं च । तथा च (५ न केवलं लोकयात्रासमुच्छेदः सद्ब्रह्माहमित्येवंबोधशीलं यत्कार्यमद्वैतसाक्षात्कार इति यावत , तदपि **कथं भवेत्**। कुतस्तदसंभव इत्यत आह––

**अन्वेष्टव्यात्मविज्ञानात्प्राक् प्रमातृत्वमात्मनः ।**

उपलक्षण चैतत् । प्रमाप्रमेयप्रमाणविभाग इत्यपि द्रष्टव्यम् । एतदुक्त भवति एष हि विभागोऽद्वैतसाक्षात्कारकारणम् ततो नियमेन प्राग्भावात् । तेन तदभावे कार्यं नोत्प-

---

यथा प्रयाजोपयुक्ताज्यस्य हविष्षु क्षारणम् 'प्रयाजशेषेण हवींष्यभिघारयेदि'ति विहितम् । एतदुभयमप्यात्मनो न सम्भवति प्रधानत्वेनोपयुक्तोपयोक्ष्यमाणत्वाभावादतो न मनननिदिध्यासने तद्विषये गुणकर्मणीति भाव ।

( १ ) अह ब्रह्मास्मीति वाक्यस्य तदर्थस्य चेतरप्रमाणावसानवत्त्वमयुक्तं नित्यनिवृत्तिप्रसङ्गादित्याशङ्क्य ज्ञानपर इतिशब्द इत्याह इतिकरणेनेति ।

( २ ) विधीनामद्वैतज्ञानविरोध दर्शयति विधय इति । यागभावना हि धर्मं, तद्विषया विधय साध्यादिभेदाधिष्ठानास्तद्विषया । अपि चैतेऽनुष्ठेयं धर्ममुपदिशन्तस्तदुत्पादिन पुरुषेण तमनुष्ठापयन्तीति साध्यधर्माधिष्ठानास्तत्प्रमाणानीति यावदतो नित्यसिद्धाद्वैतब्रह्मावगमे तेषां विरोध इत्याह धर्मोत्पादिन इति ।

( ३ ) पुत्रादावहमित्यभिमानो गौणात्मा चेत्तर्हि मुख्यात्मना किं गुणसाम्यमत आह यथेति । तस्मादिति । वाहीको नाम देशविशेषस्तन्निवासी तच्छन्देनोक्तः ।

( ४ ) पुत्रादेरुपकारकत्वारोपाय आत्माभिमानस्तस्मिन्निवृत्ते ममत्वबाधनेत्याह गौणात्मन इति ।

( ५ ) श्रवणादिप्रमाणबाधमुक्त्वा प्रमित्यभावमाह न केवलमिति ।

यते इति। (१)न च प्रमातुरात्मनोऽन्वेष्टव्य आत्माऽन्य इत्याह--

**अन्विष्टः स्यात्प्रमातैव पाप्मदोषादिवर्जितः॥ ( पृ० १९५ पं० १ )।**

(२)उक्तं ग्रीवास्थग्रैवेयकनिदर्शनम्। स्यादेतत्, अप्रमाणात्कथं पारमार्थिकाद्वैतानुभवोत्पत्तिरित्यत आह--

**देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः।**

**लौकिकं तद्वदेवेदं प्रमाणं तु,** अस्यावधिमाह--**आऽऽत्मनिश्चयात्॥**

आ ब्रह्मस्वरूपसाक्षात्कारादित्यर्थः। एतदुक्तं भवति पारमार्थिकप्रपञ्चवादिभिरपि देहादिष्वात्माभिमानो मिथ्येति वक्तव्य, प्रमाणबाधितत्वात्, तस्य च समस्तप्रमाणकारणत्वं भाविकलोकयात्रावाहित्वं चाभ्युपेयम्। सेयमस्माकमप्यद्वैतसाक्षत्कारे विधा भविष्यति। (३)न चायमद्वैतसाक्षात्कारोप्यन्तःकरणवृत्तिभेद एकान्ततः परमार्थः। यस्तु साक्षात्कारो भाविको, नासौ कार्यस्तस्य ब्रह्मस्वरूपत्वात्। अविद्या तु यद्यविद्यामुच्छिन्द्याज्जनयेद्वा, न तत्र काचिदनुपपत्तिः। तथा च श्रुतिः---

(४)विद्यां चाविद्यां च यस्तद्वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते॥ इति।

तस्मात्सर्वमवदातम्॥ ४॥ इति चतुःसूत्री॥

(५)एवम्

कार्यान्वयं विना सिद्धरूपे ब्रह्मणि मानता।
पुरुषार्थे स्वयं तावद्वेदान्तानां प्रसाधिता॥

ब्रह्मजिज्ञासां प्रतिज्ञाय 'जन्माद्यस्य' यत इत्यादिना 'तत्तु समन्वयादि'त्यन्तेन सूत्रसंदर्भेण सर्वज्ञे सर्वशक्तौ जगदुत्पत्तिस्थितिविनाशकारणे प्रामाण्यं वेदान्तानामुपपादितम्। तच्च ब्रह्मणीति परमार्थतो न त्वद्यापि ब्रह्मण्येवेति व्युत्पादितम्। तदत्र संदिह्यते—तज्जगदुपादान-

---

(१) नियतप्राक्सत्त्व हि कारणत्वं प्रमात्रादिश्च ज्ञानकरणं, तस्मिन्सकृदुदिततत्त्वसाक्षात्कारान्निवृत्ते नोर्ध्वं ज्ञानानुवृत्तिरित्यर्थक प्रथमार्धं व्याख्याय प्रमातृलये फलिनोऽभावात् मोक्षस्य कथ पुमर्थत्वमित्याशङ्क्य परार्धव्याख्यया समाधत्ते न चेति। अन्वेष्टव्य परमात्माऽन्वेष्टु प्रमातृत्वोपलक्षिताच्चिदेकरसान्न भिन्नस्ततोऽध्यस्तप्रमातृत्वबाधेऽप्युपलक्षित आत्मैव पापदोषादिरहितोऽन्विष्टो विहित स्यादतो नोक्तदोष इत्यर्थ।

(२) ननु यद्यन्वेष्टुरात्मभूतं ब्रह्म किमिति सर्वत्र न चकास्ति तत्राह उक्तमिति। प्रमात्रादेस्तत्त्वज्ञानहेतुतां सिद्धवत्कृत्य ज्ञानात्तन्निवृत्तौ हेत्वभावात्फलाभाव उक्त, स न बाध्यस्य प्रमात्रादे प्रमानुत्पादकत्वापातादिति शङ्कोत्तरत्वेन तृतीयश्लोक व्याख्याति स्यादेतदिति।

(३) न चायमिति। तथाच य उत्पद्यतेऽनुभवो न स परमार्थिको, यश्च परमार्थिको न स उत्पद्यतेऽतश्चाप्रमाणात्कथ पारमार्थिकानुभवोत्पत्तिरित्यत्रेष्टापत्तिरेवेति भाव।

(४) विद्यां वृत्तिमविद्यां च कार्यकारणभावेन सहिते यो वेद सोऽविद्योपादानत्वेन तन्मय्या वृत्त्या तदुपादान मृत्युमविद्यां तीर्त्वा स्वरूपभूतविद्योपलक्षितममृतत्वमश्नुते इति श्रुतेरर्थ।

(५) एव चतुःसूत्र्या शास्त्रार्थं संक्षिप्य वक्ष्यमाणाधिकरणार्थानां सङ्गतिं प्रदर्शयन्नाह एवमिति। यदि सर्वज्ञे वेदान्तानां प्रामाण्य सिद्ध किमधिकरणान्तरेणात आह तच्चेति। सर्वज्ञे जगद्धेतौ समन्वयप्रदर्शनेन चेतन तदित्युपक्षिप्तम्, तदाक्षिप्य समर्थ्यत इति अचेतनलक्षणसंगत्याऽग्रिमाधिकरणमुत्थाप्यते। प्रयोजन च स्य पूर्वपक्षे तत्त्वमसीतितच्छब्दवाच्यप्रधानैक्यसपत्ति, सिद्धान्ते तु चेतनस्य ब्रह्मैक्यमिति।

कारणं किं चेतनमुताचेतनमिति । अत्र च विप्रतिपत्तेः प्रतिवादिनां विशेषानुपलम्भे सति संशयः । तत्र च प्रधानमचेतनं जगदुपादानकारणमनुमानसिद्धमनुवदन्त्युपनिषद इति सांख्याः । (१)जीवाणुव्यतिरिक्तचेतनेश्वरनिमित्ताधिष्ठिताश्चतुर्विधाः परमाणवो जगदुपादानकारणमनुमितमनुवदन्तीति काणादाः । आदिग्रहणेनाभावोपादानत्वादि ग्रहीतव्यम् । अनिर्वचनीयानाद्यविद्याशक्तिमचेतनोपादानं जगदागमिकमिति ब्रह्मविदः । एतासां च विप्रतिपत्तीनामनुमानवाक्या(२)नुमानवाक्याभासा बीजम् । तदेवं विप्रतिपत्तेः संशये किं तावत्प्राप्तम् । (३)तत्र

ज्ञानक्रियाशक्त्यभावाद्ब्रह्मणोऽपरिणामिनः ।
न सर्वशक्तिविज्ञाने प्रधाने त्वस्ति संभवः ॥

ज्ञानक्रियाशक्ती खलु ज्ञानक्रियाकार्यदर्शनोन्नेयसद्भावे । न च ज्ञानक्रिये चिदात्मनि स्तः, तस्यापरिणामित्वादेकत्वाच्च(४) । त्रिगुणे च प्रधाने परिणामिनि संभवतः । यद्यपि च साम्यावस्थायां प्रधाने समुदाचरद्वृत्तिनी क्रियाज्ञाने न स्तः, तथाप्यव्यक्तेन शक्त्यात्मना रूपेण संभवत एव । तथा च प्रधानमेव सर्वज्ञं सर्वशक्ति च, न तु ब्रह्म । स्वरूपचैतन्यं त्वस्यानावृत्तिकमनुपयोगि जीवात्मनामिवास्माकम् । न च स्वरूपचैतन्ये कर्तृत्वमकार्यत्वात्तस्य । कार्यत्वे वा न सर्वदा सर्वज्ञता(५) । (६) भोगापवर्गलक्षणपुरुषार्थद्वयप्रयुक्तानादिप्रधानपुरुषसंयोगनिमित्तस्तु महदहंकारादिक्रमेणाचेतनस्यापि चेतनानधिष्ठितस्य प्रधानस्य परिणामः सर्गः । दृष्टं चाचेतनं चेतनानधिष्ठितं पुरुषार्थे प्रवर्तमानम् । यथा वत्सविवृद्ध्यर्थमचेतनं क्षीरं प्रवर्तते । (७)'तदैक्षत बहु स्यां प्रजायेयेती'त्याद्याश्च श्रुतयोऽचेतनेऽपि चेतनवदुपचारात्स्वकार्योन्मुखत्वमादर्शयन्ति यथा कूलं पिपतिषतीति ।

यत्प्राये श्रूयते यच्च तत्तादृगवगम्यते ।
भाक्तप्राये श्रुतमिदमतो भाक्तं प्रतीयते ॥

अपि चाहुर्वृद्धाः(८)—'यथाऽभ्यप्राये लिखितं दृष्ट्वा वदन्ति भवेदयमभ्य' इति, तथे-

---

(१) जीवेति । जीवा एव स्वकर्मद्वारा कर्तार इति मतनिरासार्थं जीवव्यतिरिक्तत्वम् । अणुव्यतिरेकेण चाणुसङ्घातकारणत्वनिरासः । चेतनग्रहणेन प्रधानवादखण्डनं बोध्यम् ।

(२) अनुमानेति । सिद्धान्तेऽनुमानानि वाक्यानि च यथार्थान्यन्यत्र तु तदाभासा बीजं इति ध्येयम् ।

(३) प्रधानकारणवादिमतेन पूर्वपक्षं स्थापयन्नाह तत्रेति । ज्ञानेति । अपरिणामित्वाद्ब्रह्मणः सर्वजननशक्तिसर्वविषयज्ञाने न स्तः ज्ञानक्रियाशक्त्यभावात्, यस्य हि किञ्चिज्जननादिशक्तिर्न सम्भवति तस्य कुतः सर्वविषयजननादिशक्तिसंभवः, प्रधानस्य तु परिणामित्वादस्ति तत्सम्भव इत्यर्थः ।

(४) एकत्वाच्चेति । एकरूपत्वान्निर्गुणत्वादित्यर्थः । एतेनापरिणामिन्यपि ब्रह्मणि ज्ञानगुणः प्रयत्नगुणश्च किं न स्यातामित्याशङ्का परास्ता । अथवा निरवयत्वादपरिणामित्वसाधनमिदं मन्तव्यम् ।

(५) तथा चानावृत्तिकस्य सर्वविषयपरिणामराहित्यस्याकार्यस्य च स्वरूपचैतन्यस्य सर्वज्ञत्वं न सम्भवति, कार्यत्वस्वीकारे च न सर्वज्ञतेति भावः ।

(६) ननु कथमचेतनं प्रधानं चेतनानधिष्ठितं प्रवर्ततेऽत आह भोगेति । पुरुषार्थप्रयुक्तो यो अनादिः प्रधानपुरुषसंयोगः प्रधानस्य पुरुषं प्रति पारार्थ्यलक्षणः सम्बन्धस्तन्निमित्तः सर्ग इत्यर्थः ।

(७) 'गौणश्चेन्नात्मशब्दात्' इत्यादिसूत्रनिरस्याः शङ्काः मौक्यार्थमत्र संगृह्णाति तदैक्षतेत्यादिना ।

(८) शबरस्वामिनः ।

दमपि 'ता आप ऐक्षन्त','तत्तेज ऐक्षते'त्याद्युपचारप्राये श्रुतम्, 'तदैक्षते'त्यौपचारिकमेव वि॰ज्ञेयम् । 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी'ति च प्रधानस्य जीवात्मत्वं जीवार्थकारितयाह । यथा हि भद्रसेनो राजार्थकारी राज्ञा भद्रसेनो ममात्मेत्युपचर्यते, एव 'तत्त्वमसी'त्याद्याः श्रुतयो भाक्ताः संपत्त्यर्था वा द्रष्टव्याः । 'स्वमपीतो भवती'ति च निरुक्तं जीवस्य प्रधाने स्वकीयेऽप्ययं सुषुप्तावस्थायां ब्रूते । (१)प्रधानांशतमःसमुद्रेके हि जीवो निद्राणस्तमसीव मग्नो भवति । यथाहुः—'अभावप्रत्ययालम्बना वृत्तिर्निद्रे'ति । वृत्तीनामन्यासां प्रमाणादीनामभावस्तस्य प्रत्ययः कारणं तमस्तदालम्बना निद्रा जीवस्य वृत्तिरित्यर्थः । तथा सर्वज्ञं प्रस्तुत्य श्वेताश्वतरमन्त्रोऽपि 'स कारणं करणाधिपाधिप' इति प्रधानाभिप्रायः । प्रधानस्यैव सर्वज्ञत्वं प्रतिपादितमधस्तात् । तस्मादचेतनं प्रधानं जगदुपादानमनुवदन्ति श्रुतय इति पूर्वः पक्षः । एवं काणादादिमतेऽपि कथंचिद्योजनीयाः श्रुतयः । अक्षरार्थस्तु **"प्रधानकारणपक्षेऽपी"ति "प्रधानस्यापी"ति** (पृ० १७९ पं ८) अपिकारावेवकारार्थौ । स्यादेतत् सत्त्वसंपत्त्या चेदस्य सर्वज्ञताऽथ तमःसंपत्त्याऽसर्वज्ञतैवास्य कस्मान्न भवतीत्यत आह **"तेन च सत्त्वधर्मेण ज्ञानेने"ति** । सत्त्वं हि प्रकाशशीलं निरतिशयोत्कर्षं सर्वज्ञताबीजम् । यथाहुः (२)'निरतिशयं सर्वज्ञताबीज'मिति । (३)यत् खलु सातिशयं तत् क्वचिन्निरतिशयं दृष्टं, यथा कुवलामलकबिल्वेषु सातिशयं महत्त्वं व्योम्नि परममहति निरतिशयम् । (४)एवं ज्ञानमप्येकद्विबहुविषयतया सातिशयमित्यनेनापि क्वचिन्निरतिशयेन भवितव्यम् । (५)इदमेव चास्य निरतिशयत्वं यद्विदितसमस्तवेदितव्यत्वम् । तदिदं सर्वज्ञत्वं सत्त्वस्य निरतिशयोत्कर्षत्वे सम्भवति । एतदुक्तं भवति यद्यपि रजस्तमसी अपि स्त॰, तथापि पुरुषार्थप्रयुक्तगुणवैषम्यातिशयात् सत्त्वस्य निरतिशयोत्कर्षे सार्वज्ञ्यं कार्यमुत्पद्यत इति प्रधानावस्थायामपि तन्मात्रं विवक्षित्वाऽविवक्षित्वा च तमःकार्यं प्रधानं सर्वज्ञमुपचर्यत इति । अपिभ्यामवधारणस्य व्यवच्छेद्यमाह—**"न केवलस्ये"ति** । न किंचिदेकं कार्यं जनयेदपि तु बहूनि, चिदात्मा चैकः, प्रधानं तु त्रिगुणमिति तत एव कार्यमुत्पत्तुमर्हति, न चिदात्मन इत्यर्थः । तत्रापि च योग्यतामात्रेणैव चिदात्मनः सर्वज्ञताभ्युपगमो न कार्ययोगादित्याह—**"त्वयाऽपी"ति** । न केवलस्याकार्यकारणस्येत्येतत्सिंहावलोकितेन प्रपञ्चयति—**"प्रागुत्पत्ते"रिति । "अपि च प्रधानस्ये"ति** (पृ० १९९ पं० १) । चस्त्वर्थः । एवं प्राप्त उच्यते—

---

(१) ननु नित्यस्य जीवस्य कथं प्रधाने लयोऽत आह प्रधानांशेति । प्रधानस्यांशस्तमोगुणस्तस्योद्रेके जीवो निद्रां कुर्वंस्तत्र मग्न इव भवत्यतश्च विवेकाभावाल्लयोपचार इत्यर्थः ।

(२) पतञ्जलिमहर्षेय । यदा योगैश्वर्यात्सत्त्वं निरतिशयोत्कृष्टं भवति तदा तत्सर्वज्ञत्वे बीजं भवतीति सूत्रार्थः ।

(३) निरतिशयतां सत्त्वस्य तत्कार्यज्ञानस्य निरतिशयसाधनेनोपपादयति यदित्यादिना ।

(४) एवमिति । ज्ञानत्वं निरतिशयक्वचिदाश्रितं सातिशयवृत्तिजातित्वात् परिमाणत्ववदिति अनुमानाकारोऽत्र बोध्यः ।

(५) ननु निरतिशयत्वे कथं सर्वविषयत्वम्, नहि नभःपरिमाणं सर्वविषयमत आह इदमेवेति । ज्ञेयभूम्ना हि ज्ञानभूमा ततो निरतिशयत्वं सर्वविषयत्वमानयतीत्यर्थः ।

## (सू०) ईक्षतेर्नाशब्दम् ॥ ५ ॥

## गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

(१)नामरूपप्रपञ्चलक्षणकार्यदर्शनादेतत्कारणमात्रवदिति सामान्यकल्पनायामस्ति प्रमाण, न तु तदचेतनं चेतनमिति वा विशेषकल्पनायामस्त्यनुमानमित्युपरिष्टात्प्रवेदयिष्यते। तस्मान्नामरूपप्रपञ्चकारणभेदप्रमायामाम्नाय एव भगवानुपासनीयः। तदेवमाम्नायैकसमधिगमनीये जगत्कारणे

> (२)पौर्वापर्यपरामर्शाद् यदाम्नायोऽञ्जसा वदेत्।
> जगद्बीज तदेवेष्टं चेतने च स आञ्जसः ॥

तेषु तेषु खल्वाम्नायप्रदेशेषु 'तदैक्षते'त्येवंजातियकैर्वाक्यैरीक्षितुः कारणाज्जगज्जन्माख्यायत इति। न च प्रधानपरमाण्वादेरचेतनस्येक्षितृत्वमाञ्जसम्। सत्त्वांशेनेक्षितृ प्रधानं तस्य प्रकाशकत्वादिति चेत्। न, तस्य जाड्येन तत्त्वानुपपत्तेः। कस्तर्हि रजस्तमोभ्यां सत्त्वस्य विशेषः ? स्वच्छता। स्वच्छं हि सत्त्वम्। अस्वच्छे च रजस्तमसी। स्वच्छस्य च चैतन्यबिम्बोद्ग्राहितया प्रकाशकत्वव्यपदेशो नेतरयोरस्वच्छतया तद्ग्राहित्वाभावात्। पार्थिवत्वे तुल्य इव मणेर्बिम्बोद्ग्राहिता न लोष्टादीनाम्। ब्रह्मणस्त्वीक्षितृत्वमाञ्जसम्, तस्याम्नायतो नित्यज्ञानस्वभावत्वविनिश्चयात्। (३)नन्वत एवास्य नेक्षितृत्वं, नित्यस्य ज्ञानस्वभावभूतस्येक्षणस्याक्रियात्वेन ब्रह्मणस्तत्प्रति निमित्तभावाभावात्, अक्रियानिमित्तस्य च कारकत्वनिवृत्तौ तद्यास्य तद्विशेषस्य कर्तृत्वस्य निवृत्तेः। (४)सत्यम्, ब्रह्मस्वभावश्चैतन्यं नित्यतया न क्रिया, तस्य त्वनवच्छिन्नस्य तत्तद्विषयोपधानभेदावच्छेदेन कल्पितभेदस्यानित्यत्वं कार्यत्वं चोपपद्यते। तथाचैवंलक्षणे ईक्षणे सर्वविषये ब्रह्मणः॰ स्वातन्त्र्यलक्षणं कर्तृत्वमुपपन्नम्। (५)यद्यपि च कूटस्थनित्यस्यापरिणामिन औदासीन्यमस्य वास्तवम्, तथाप्यनाद्यनिर्वचनीयाविद्यावच्छिन्नस्य व्यापारवत्त्वमवभासत इति कर्तृत्वोपपत्तिः। (६)परैरपि च चिच्छक्तेः कूटस्थनित्याया वृत्तीः प्रति कर्तृत्वमीदृशमेवाभ्युपेयम्, चैतन्यसामानाधिकरण्येन ज्ञातृत्वोपलब्धेः। (७)नहि प्राधानिकान्यन्तर्बहिष्करणानि त्रयोदश सत्त्वप्रधानान्यपि स्वयमेवाचेतनानि तद्वृत्तयश्च स्वं वा परं वा वेदितुमुत्सहन्ते। नो खल्वन्धाः सहस्रमपि पान्थाः पन्थानं विदन्ति। चक्षुष्मता चैकेन चेद् वेद्यते, स एव तर्हि मार्गदर्शी, स्वतन्त्रः कर्ता नेता तेषाम्। एवं बुद्धिसत्त्वस्य स्वयमचेतनस्य चितिबिम्बसङ्क्रान्त्या चेदापन्नं चैतन्यस्य ज्ञातृत्वम्, चितिरेव ज्ञात्री स्वतन्त्रा,

---

(१) नन्वनुमानसिद्धानुवादिषु वेदान्तेषु कथमीक्षातिश्रवणाद् ब्रह्मनिर्णयस्तत्राह नामरूपेति।

(२) पौर्वापर्येति। पौर्वापर्यमुपक्रमोपसंहारौ, परामर्शो मध्ये निर्देश, एभिर्यदाम्नायो मुख्यवृत्त्या वदेत्तदेव जगद्बीज, स चाम्नायश्चेतने मुख्यो न प्रधान इति कारिकार्थ।

(३) ननु भवतु ब्रह्मणीक्षणरूपप्रकृतिर्मुख्या, प्रत्ययस्तु कथ तत्र मुख्य इत्याशङ्कते नन्विति। अतएव नित्यज्ञानत्वादेव। (४) समाधत्ते सत्यमिति।

(५) यद्योक्तमपरिणामित्वान्न ज्ञानं ब्रह्मण इति तत्राह यद्यपि चेति।

(६) पारमार्थिकेक्षितृत्वस्य साङ्ख्यमतेऽप्यसम्भवादौपाधिकमेव ज्ञातृत्वं मुख्य वेदान्तिभिरपि स्वीक्रियत इत्याशयेनाह परैरिति।

(७) ननु चितिशक्तेर्ज्ञातृत्वेन किं, प्रधानविकारा एव ज्ञास्यन्तीत्यत्राह नहीति।

नान्तर्बहिष्करणान्यन्धसहस्रप्रतिमान्यस्वतन्त्राणि । न चास्याश्रितेः कूटस्थनित्याया अस्ति व्यापारयोगः । न च तदयोगेऽप्यज्ञातृत्वं, व्यापारवतामपि जडानामज्ञत्वात् । तस्मादन्तःकरणवर्तिनं व्यापारमारोप्य चितिशक्तौ कर्तृत्वाभिमानोऽन्तःकरणे वा चैतन्यमारोप्य तस्य ज्ञातृत्वाभिमानः । सर्वथा भवन्मतेऽपि नेदं स्वाभाविकं क्वचिदपि ज्ञातृत्वमपि तु सांव्यवहारिकमेवेति परमार्थः । (१)नित्यस्यात्मनो ज्ञानं परिणाम इति च भेदाभेदपक्षमपाकुर्वद्भिरपास्तम् । (२)कूटस्थस्य नित्यस्यात्मनोऽव्यापारवत एव भिन्नं ज्ञानं धर्म इति चोपरिष्टादपाकरिष्यते । तस्माद्वस्तुतोऽनवच्छिन्नं चैतन्यं तत्त्वान्यत्वानिर्वचनीयाव्याकृतव्याचिकीर्षितनामरूपविषयावच्छिन्नं सज्ज्ञानं कार्यं तस्य कर्ता ईश्वरो ज्ञाता सर्वज्ञः सर्वशक्तिरिति सिद्धम् । तथा च श्रुतिः—

(३)तपसा चीयते ब्रह्म ततोऽन्नमभिजायते ।
अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् ॥
यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः ।
तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते ॥ इति ॥

तपसा ज्ञानेन अव्याकृतनामरूपविषयेण, चीयते तद्व्याचिकीर्षावद्भवति, यथा कुविन्दादिरव्याकृतं पटादि बुद्धावालिख्य चिकीर्षति । एकधर्मवान् द्वितीयधर्मोपजननेन उपचित उच्यते । (४) व्याचिकीर्षायां चोपचये सति ततो नामरूपमन्नमदनीयं साधारणं संसारिणां व्याचिकीर्षितमभिजायते । तस्मादव्याकृताद्व्याचिकीर्षिताद् अन्नात्प्राणो हिरण्यगर्भो ब्रह्मणो ज्ञानक्रियाशक्त्यधिष्ठानं जगत्सूत्रात्मा साधारणो जायते, (५)यथाऽव्याकृताद् व्याचिकीर्षितात् पटाद् अवान्तरकार्यं द्वितन्तुकादि । तस्माच्च प्राणाद् मनआख्यं सङ्कल्पविकल्पादिव्याकरणात्मकं(६)जायते । ततो व्याकरणात्मकान् मनसः सत्यशब्दवाच्या(७)न्याकाशादीनि जायन्ते । तेभ्यश्च सत्याख्येभ्योऽनुक्रमेण लोका भूरादयः, तेषु मनुष्यादिप्राणिनो वर्णाश्रमक्रमेण कर्माणि धर्माधर्मरूपाणि जायन्ते । कर्मसु चामृतं फलं स्वर्गनरकादि । तच्च स्वनिमित्तयोर्धर्माधर्मयोः सतोर्न विनश्यतीत्यमृतं, यावद्धर्माधर्मभावीति यावत् । यः सर्वज्ञः सामान्यतः, सर्वविद्विशेषतो, यस्य भगवतो ज्ञानमयं तपो धर्मो नायासमयम् ,(८)त-

(१) भवतु साङ्ख्यमतेऽलीकं ज्ञातृत्वं भाट्टमते तु तात्त्विकं तदनभ्युगच्छतो वेदान्तिनो गौणं स्यादत आह नित्यस्येति ।

(२) तर्हि न्यायमत एवास्तु वास्तवमत आह कूटस्थस्येति । धर्मो—गुणः । उपरिष्टात्—'ज्ञोऽत एव' इति सूत्रव्याख्यानावसरे ।

(३) औपाधिकमीक्षणकर्तृत्वमित्यत्र श्रुतिप्रमाणं दर्शयति तपसेति । दृष्टान्तप्रदर्शनपूर्वकं श्रुत्यर्थमाह तपसेति । ज्ञानेनोपलक्षितं तद्विषयनानारूपव्याचिकीर्षावद्भवति ।

(४) ततोऽन्नमभिजायत इत्येतद्व्याचष्टे व्याचिकीर्षायां चेति । धर्मद्वययोग उपचयः । अन्नशब्दवाच्यनामरूपाभिव्यक्तिर्जायत इत्यर्थः ।

(५) समुदाये सिसृक्षिते प्रथममेकदेशाद्धिरण्यगर्भोत्पत्तौ निदर्शनमाह यथेति ।

(६) संकल्पादिवृत्तिव्यक्तीकरणात्मकं तत्कारणं व्यष्टिमन इत्यर्थः ।

(७) सत्यशब्दार्थमाह आकाशादीनीति । तेषु हि पृथिव्यादित्रिकमपरोक्षत्वात्सद्वाय्वाकाशौ च परोक्षत्वात्त्यशब्दवाच्याविति द्रष्टव्यम् ।

(८) तस्मादेतदिति व्याचष्टे तस्मादिति । अन्नात्प्राण इत्यत्रेव क्रमार्थकपञ्चमीस्वीकारप्रसङ्गो मा भू

स्माद्ब्रह्मणः पूर्वस्मादेतत्परं कार्यं ब्रह्म । किञ्च नामरूपमन्नं च व्रीहियवादि जायत इति । तस्मात्प्रधानस्य साम्यावस्थायामनीक्षितृत्वात् , क्षेत्रज्ञानां च सत्यपि चैतन्ये सर्गादौ विषयानीक्षणात् , मुख्यसम्भवे चोपचारस्यान्याय्यत्वात् , मुमुक्षोश्चायथार्थोपदेशानुपपत्तेः, मुक्तिविरोधित्वा(१)त्तेजःप्रभृतीनां च मुख्यासम्भवेनोपचाराश्रयणस्य युक्तिसिद्धत्वात् , संशये च तत्प्रायपाठस्य निश्चायकत्वात् , इह तु मुख्यस्यौत्सर्गिकत्वेन निश्चये सति संशयाभावात् , अन्यथा किरातशतसंकीर्णदेशनिवासिनो ब्राह्मणायनस्यापि किरातत्वापत्तेः, ब्रह्मैवेक्षित्रनाद्यनिर्वाच्याविद्यासचिवं जगदुपादानं, शुक्तिरिव समारोपितस्य रजतस्य, मरीचय इव जलस्य, एकश्चन्द्रमा इव द्वितीयस्य चन्द्रमसः । न त्वचेतनं प्रधानपरमाण्वादि । अशब्दं हि तत् । (२)न च प्रधानं परमाणवो वा तदतिरिक्तसर्वज्ञेश्वराधिष्ठिता जगदुपादानमिति साम्प्रतम् , तेषां भेदेन कार्यत्वात् । कारणात्कार्याणां भेदाभावात् , कारणज्ञानेन समस्तकार्यपरिज्ञानस्य मृदादिनिदर्शनेनागमेन प्रसाधितत्वात्, भेदे च तदनुपपत्तेः । साक्षाच्च 'एकमेवाद्वितीयं, नेह नानास्ति किञ्चन, मृत्योः स मृत्युमाप्नोती'त्यादिभिर्बहुभिर्वचोभिर्ब्रह्मातिरिक्तस्य प्रपञ्चस्य प्रतिषेधाच्चेतनोपादानमेव जगद् भुजङ्ग इवारोपितो रज्जूपादान इति सिद्धान्तः । सदुपादानत्वे हि सिद्धे जगतस्तदुपादानं चेतनमचेतनं वेति संशय्य मीमांस्येत, अद्यापि तु सदुपादानत्वमसिद्धमित्यत आह—"**तत्रेदं शब्दवाच्यमित्यादि दर्शयती**"त्यन्तेन ( पृ० १९९ पं० ११ )। तथापीक्षिता पारमार्थिकप्रधानक्षेत्रज्ञातिरिक्त ईश्वरो भविष्यति, यथाहुर्हैरण्यगर्भा इत्यतः श्रुतिः पठिता 'एकमेवाद्वितीय'मिति । 'बहु स्या'मिति च चेतनं कारणमात्मन एव बहुभावमाह । (३)नेनापि कारणाच्चेतनादभिन्नं कार्यमवगम्यते । यद्यप्याकाशाद्या भूतसृष्टिस्तथापि तेजोबन्नानामेव (४)त्रिवृत्करणस्य विवक्षितत्वात् तत्र तेजसः प्राथम्यात् तेजः प्रथममुक्तम् । एकमद्वितीयं जगदुपादानमित्यत्र श्रुत्यन्तरमपि पठति—"**तथाऽन्यत्रे**"ति । (५)ब्रह्म चतुष्पादष्टाशफ षोडशकलम् । तद्यथा प्राची प्रतीची दक्षिणोदीचीति चतस्रः कलाः ब्रह्मणः, प्रकाशवान् नाम प्रथमः पादः । तदर्धं शफः । तथा पृथिव्यन्तरिक्षं द्यौः समुद्र

---

दत आह पूर्वस्मादिति । नियतपूर्वकालवृत्तित्वरूपकारणत्वमेव तच्छब्दार्थ इत्यर्थः । नियतपूर्ववर्तिन सर्वज्ञाज्जायमानस्य हिरण्यगर्भब्रह्मणः परकालवर्तित्वेन कार्यत्वमेतच्छब्दार्थ इत्याह एतदिति । नाम—देवदत्तादि । रूप—शुक्लादि ।

( १ ) मुक्तिविरोधित्वात् इति । अयथाभूतप्रधानात्मत्वोपदेशस्य मुक्तिविरोधित्वादित्यर्थ ।

( २ ) सांख्यमतेन प्रधानकारणवादं निरस्य पातञ्जलादिमतेनाप्याह न चेति । तन्मते कार्याणामधिष्ठातुरुपादानाच्च भेदात् श्रुतौ तु तदभावादित्यर्थ ।

( ३ ) चेतनकारणेनात्मन एव बहुभवनकथनेनेत्यर्थ ।

( ४ ) त्रिवृदिति । छान्दोग्ये हि 'तासां त्रिवृतं त्रिवृतमेकैकामकरोदि'ति तिसृणां देवतानां तेजोऽबन्नानामेव त्रिवृत्करणस्य वक्ष्यमाणत्वात्र गगनपवनयोस्तत्र च तेजस प्राथम्यमित्यर्थ । त्रीणि भूतानि द्विधा विदार्य प्रतिभूतमेकैकमर्धं द्विधा प्रस्फोट्येतरभूतद्वये योजनमिति त्रिवृत्करणपदार्थः ।

( ५ ) षोडशकलमिति भाष्यं व्याख्याति ब्रह्मेति ।'स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च' इत्युक्ताः षोडशकला रत्नप्रभादिधृता प्रश्नोपनिषदुक्ता द्रष्टव्याः । वाचस्पतिप्रदर्शितास्तु छान्दोग्ये 'दिगाद्यवयव षोडशकल उपास्यो पुरुष' इत्यादिनोक्ता द्रष्टव्या ।

इत्यपराश्चतस्रः कलाः, द्वितीयः पादोऽनन्तवान्नाम । तथाऽग्निः सूर्यश्चन्द्रमा विद्युदिति चतस्रः कलाः, स ज्योतिष्मान्नाम तृतीयः पादः । प्राणश्चक्षुः श्रोत्रं वागिति चतस्रः कलाः, स चतुर्थ आयतनवान्नाम ब्रह्मणः पादः । तदेवं षोडशकलं षोडशावयवं ब्रह्मोपास्यमिति सिद्धम् । स्यादेतत्, ईक्षतेरिति श्तिपा धातुस्वरूपमुच्यते, न चाविवक्षितार्थस्य धातुस्वरूपस्य चेतनोपादानसाधनत्वसम्भव इत्यत आह—"**ईक्षतेरि**"ति ( पृ० २०० पं० १ ) । धात्वर्थनिर्देशोऽभिमतो, विषयिणा विषयलक्षणात् । (१)प्रसिद्धा चेयं लक्षणेत्याह—"**यजतेरितिवदि**"ति । "**यः सर्वज्ञ**" इति सामान्यतः "**सर्वविदि**"ति विशेषतः । सांख्यीयं स्वमतसमाधानमुपन्यस्य दूषयति—"**यत्तूक्तं सत्त्वधर्मेणे**"ति । पुनः साङ्ख्यमुपस्थापयति—"**ननूक्त**"मिति । दूषयति—"**तदपी**"ति । (२)समुदाचरद्वृत्ति तावन्न भवति सत्त्वं, गुणवैषम्यप्रसङ्गेन साम्यानुपपत्तेः । न चाव्यक्तेन रूपेण ज्ञानमुपयुज्यते, रजस्तमसोस्तत्प्रतिबन्धस्यापि सूक्ष्मेण रूपेण सद्भावादित्यर्थः । अपि च चैतन्यप्रधानवृत्तिवचनो जानातिर्न चाचेतने वृत्तिमात्रे दृष्टचरप्रयोग इत्याह—"**अपि च नासाक्षिके**"ति । कथं तर्हि योगिनां सत्त्वांशोत्कर्षहेतुकं सर्वज्ञत्वमित्यत आह—"**योगिनां त्वि**"ति । सत्त्वांशोत्कर्षो हि योगिनां चैतन्यचक्षुष्मतामुपकरोति, नान्यस्य प्रधानस्येत्यर्थः । यदि तु कापिलमतमपहाय (३)हैरण्यगर्भमास्थीयेत, तत्राप्याह—"**अथ पुनः साक्षिनिमित्तमि**"ति । (४)तेषामपि हि प्रकृष्टसत्त्वोपादानं पुरुषविशेषस्यैव क्लेशकर्मविपाकाशयापरामृष्टस्य सर्वज्ञत्वं, न तु प्रधानस्याचेतनस्य, (५)तदपि चाद्वैतश्रुतिभिरपास्तमिति भावः । पूर्वपक्षबीजमनुभाषते—"**यत्पुनरुक्तं ब्रह्मणोपी**"ति । चैतन्यस्य शुद्धस्य नित्यत्वेऽप्युपहितं सदनित्यं कार्यमाकाशमिव घटावच्छिन्नमित्यभिसन्धाय परिहरति—"**इदं तावद्भवानि**"ति । ( पृ०२०१ पं०१ ) "**प्रततौष्ण्यप्रकाशे सवितरी**"त्येतदपि विषयावच्छिन्नप्रकाशः कार्यमित्येतदभिप्रायम् । वैधर्म्यं चोदयति—"**ननु सवितु**"रिति । (६)किं वास्तवं कर्माभावमभिप्रेत्य वैषम्यमाह भवान्, उत तद्विवक्षाभावम्? तत्र यदि तद्विवक्षाभाव, तदा प्रकाशयतीत्यनेन मा भूत् साम्यं, प्रकाशत इत्यनेन त्वस्ति, नह्यत्र कर्म विवक्षितम्, अथ च प्रकाशस्वभावं प्रत्यस्ति स्वातन्त्र्यं सवितुरिति परिहरति—"**नासत्यपि कर्मणी**"ति । असत्यपीत्यविवक्षितेऽपीत्यर्थः । अथ वास्तवकर्माभावमभिसंधाय वैषम्यमुच्यते, तत्र, असिद्धत्वात् कर्माभावस्य, (७)विवक्षितत्वाच्चात्र

---

(१) प्रसिद्धेति । लक्षणाया एव निरूढत्वार्थं प्रयोगानुगमो न वाचकत्वायेत्यर्थः ।

(२) समुदाचरद्वृत्ति—अभिव्यक्तिव्यापारकम् ।

(३) पातञ्जलमतमित्यर्थः ।

(४) तेषामिति । हैरण्यगर्भाणां मतेऽविद्याऽस्मितारागद्वेषाभिनिवेशाख्यैः पञ्चभिः क्लेशैर्धर्माधर्मकर्मणा विपाकेन तत्फलाशयेन फलभोगवासनयाऽस्पृष्टस्य पुरुषस्यैव प्रकृष्टसत्त्वोपादानं सर्वज्ञत्वं नाचेतनस्येत्यर्थ । अत एव 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष' इति पातञ्जलसूत्रम् ।

(५) न चैतदपि मतं श्रद्धेयं भेदवादग्रस्तत्वादित्याह तदपि चेति ।

(६) सवितृप्रकाशस्य रूपादेर्भावादसत्यपीति भाष्यासङ्गतिमाशङ्क्य विकल्पमुखेनावतारयति किमिति ।

(७) एवमीक्षतेत्यत्र कर्माविवक्षापक्षे प्रकाशत इतिवत्कर्तृत्वनिर्देश उपपादितोऽधुनाऽविवक्षाप्यसिद्धेत्याह विवक्षितत्वाच्चेति । न खल्वस्माकं क्वचिद्वास्तवं दृश्यमस्त्यतोऽध्यस्ततयैव कर्मत्वस्य विवक्षेत्यर्थः ।

कर्मण इति परिहरति—"कर्मापेक्षायां त्वि"ति । यासां सति कर्मण्यविवक्षिते श्रुतीनाम ऽनुपपत्तिस्तासां सति कर्मणि विवक्षिते सुतरामित्यर्थः । "यत्प्रसादा"दिति (पृ० २०२ पं० २)। यस्य भगवत ईश्वरस्य प्रसादात्तस्य नित्यसिद्धस्येश्वरस्य नित्यं ज्ञानं भवतीति किमु वक्तव्यमिति योजना । यथाहुर्योगशास्त्रकाराः—(१)'ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्चे'ति । तद्भाष्यकाराश्च—'भक्तिविशेषादावर्जित ईश्वरस्तमनुगृह्णाति ज्ञानवैराग्यादिने'ति । "सवितृप्रकाशवदि"ति । वस्तुतो नित्यस्य कारणानपेक्षां स्वरूपेणोक्त्वा व्यतिरेकमुखेनाप्याह—"अपि चाविद्यादिमत" इत्यादि । आदिग्रहणेन कामकर्मादयः सगृह्यन्ते । "न ज्ञानप्रतिबन्धकारणरहितस्ये"ति । संसारिणां वस्तुतो नित्यज्ञानत्वेप्यविद्यादयः प्रतिबन्धकारणानि सन्ति, न त्वीश्वरस्याविद्यारहितस्य ज्ञानप्रतिबन्धकारणसम्भव इति भावः । न तस्य कार्य(२)मावरणाद्यपगमो विद्यतेऽनावृतत्वादिति भावः । ज्ञानबलेन क्रिया । (३)प्रधानस्य त्वचेतनस्य ज्ञानबलाभावाज्जगतो न क्रियेत्यर्थः । अपाणिर्ग्रहीताऽपादो जवनो वेगवान् विहरणवान् । अतिरोहितार्थमन्यत् । स्यादेतत्, अनात्मनि व्योम्नि घटाद्युपाधिकृतो भवत्ववच्छेदविभ्रमो, न त्वात्मनि स्वभावसिद्धप्रकाशे स घटत इत्यत आह—"दृश्यते चात्मन एव सत" इति (पृ० २०३ पं० ७)। "अभिनिवेशो" मिथ्याभिमानः । "मिथ्याबुद्धिमात्रेण पूर्वेणेति" । अनेनानादिता दर्शिता । मात्रग्रहणेन विचारासहत्वेन निर्वचनीयता निरस्ता । परिशिष्टं निगदव्याख्यातम् ॥ ५ ॥ ६ ॥

## ( सू० ) तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

इति शङ्कोत्तरत्वेन वा स्वातन्त्र्येण वा प्रधाननिराकरणार्थं सूत्रम् । शङ्का च भाष्ये उक्ता ॥ ७ ॥

स्यादेतत् ब्रह्मैव जीप्सितं, तच्च न प्रथमं सूक्ष्मतया शक्यं श्वेतकेतुं ग्राहयितुमिति तत्संबद्धं प्रधानमेव स्थूलतयाऽऽत्मत्वेन ग्राह्यते श्वेतकेतुररुन्धतीमिवातीव सूक्ष्मां दर्शयितुं तत्संनिहितां स्थूलतारकां दर्शयतीयमसावरुन्धतीति । अस्यां शङ्कायामुत्तरम्—

## ( सू० ) हेयत्वावचनाच्च ॥ ८ ॥

इति सूत्रम् । चकारोऽनुक्त(४)समुच्चयार्थः । तच्चानुक्तं भाष्य उक्तम् ॥ ८ ॥

अपि च जगत्कारणं प्रकृत्य स्वपितीत्यस्य (५)निरुक्तं कुर्वती श्रुतिश्चेतनमेव जगत्कारणं ब्रूते । यदि स्वशब्द आत्मवचनस्तथापि चेतनस्य पुरुषस्याचेतनप्रधानत्वानुपपत्तिः । अथात्मीयवचनस्तथाप्यचेतने पुरुषार्थतयाऽऽत्मीयेपि चेतनस्य प्रलयानुपपत्तिः । नहि मृदात्मा घट

---

(१) तत इति । तत ईश्वरप्रणिधानात् प्रत्यगात्माधिगमोऽन्तरायाणां व्याधिस्त्यानादीनां चाभाव इति पातञ्जलसूत्रार्थः ।

(२) ईश्वरस्य ज्ञानाभिव्यक्त्यै कर्तव्यं नास्तीत्याह आवरणादीति ।

(३) ज्ञानमेव बलं सामर्थ्यमुपाध्यवच्छिन्नफलोत्पत्तौ, तेन बलेन फलभूतानुभवस्य कारणं क्रिया, सा च न प्रधानस्येत्याह प्रधानस्य त्विति ।

(४) अनुक्तप्रतिज्ञाविरोधसमुच्चयार्थश्चकार इत्यर्थः, स च भाष्य एव स्फुट इत्युपेक्षित इति भावः ।

(५) निरुक्तम्—स्वपितीत्यस्य निर्वचनम् ।

आत्मीयेऽपि पाथसि प्रलीयतेऽपि स्वात्मभूतायां मृद्येव। न च रजतमनात्मभूते हस्तिनि प्रलीयते, किं स्वात्मभूतायां शुक्तावेवेत्याह—

**( सू० ) स्वाप्ययात् ॥९॥ गतिसामान्यात् ॥१०॥**

गतिरवगतिः। **"तार्किकसमय इवे"**ति ( पृ० २११ पं० १६ )। यथाहि तार्किकाणां समयभेदेषु परस्परपराहतार्थता, नैव वेदान्तेषु परस्परपराहतिः, अपि तु तेषु सर्वत्र जगत्कारणचैतन्यावगतिः समानेति। **"चक्षुरादीनामिव रूपादिष्वि"**ति। ( पृ० २१२ पं० ८ )। (१)यथा हि सर्वेषां चक्षू रूपमेव ग्राहयति, न पुना रसादिकं कस्यचिद्दर्शयति कस्यचिद्रूपम्। एवं रसनादिष्वपि गतिसामान्यं दर्शनीयम् ॥९॥ १०॥

**( सू० ) श्रुतत्वाच्च ॥ ११ ॥**

'तदैक्षते'त्यत्र ईक्षणमात्रं जगत्कारणस्य श्रुतं न तु सर्वविषयम्। जगत्कारणसम्बन्धितया तु तदर्थात् सर्वविषयमवगतम्, श्वेताश्वतराणां तूपनिषदि सर्वज्ञ ईश्वरो जगत्कारणमिति साक्षादुक्तमिति विशेषः॥ ११ ॥

उत्तरसूत्रसन्दर्भमाक्षिपति—(२)**"जन्माद्यस्य यत इत्यारभ्ये"**ति ( पृ० २१३ पं० ३ )। ब्रह्म जिज्ञासितव्यमिति प्रतिज्ञातं, तच्च शास्त्रैकसमधिगम्यं, शास्त्रं च सर्वज्ञे सर्वशक्तौ जगदुत्पत्तिस्थितिप्रलयकारणे ब्रह्मण्येव प्रमाणं न प्रधानादाविति न्यायतो व्युत्पादितम्। न चास्ति कश्चिद्वेदान्तभागो यस्तद्विपरीतमपि बोधयेदिति च गतिसामान्यादित्युक्तम्। तत्किमपरमवशिष्यते यदर्थमुत्तरसूत्रसन्दर्भस्यावतारः स्यादिति, **"किमुत्थानमिति"** किमाक्षेपे। समाधत्ते—**"उच्यते, द्विरूपं ही"**ति। (३)यद्यपि तत्त्वतो निरस्तसमस्तोपाधिरूपं ब्रह्म, तथापि न तेन रूपेण शक्यमुपदेष्टुमित्युपाहितेन रूपेणोपदेष्टव्यमिति। तत्र च (४)क्वचिदुपाधिर्विवक्षितः। (५)तदुपासनानि **"कानिचिदभ्युदयार्थानि"** मनोमात्रसाधनतयाऽत्र पठितानि। **"कानिचित् क्रममुक्त्यर्थानि कानिचित्कर्मसमृद्ध्यर्थानि"** ( पृ० २१४ पं० ९ )। क्वचित्पुनरुक्तोऽप्युपाधिरविवक्षितो, यथाऽत्रैवान्नमयाद्य आनन्दमयान्ताः पञ्चकोशाः। तदत्र कस्मिन्नुपाधिर्विवक्षितः कस्मिन्नेति नाद्यापि विवेचितम्। तथा गतिसामान्यमपि सिद्धवदुक्तं, न त्वद्यापि साधितमिति तदर्थमुत्तरग्रन्थसन्दर्भारम्भ इत्यर्थः। स्यादेतत् परस्यात्मनस्तत्तदुपाधिभेदविशिष्टस्याप्यभेदात् कथमुपासनाभेदः कथं

---

( १ ) यथाहीति। यथा सर्वेषां चक्षुषामेकरूपावगतिहेतुत्वं श्रवणानां शब्दावगतिहेतुत्वं घ्राणादीनां गन्धादिषु, तथा ब्रह्मणि सर्वेषां वेदान्तानां गतिसामान्यं प्रामाण्यदार्ढ्यहेतुरिति भावः।

( २ ) वृत्तानुवादेनोत्तरसूत्रसन्दर्भमाक्षिपति जन्मादीति। प्रथमसूत्रस्य शास्त्रोपोद्घातत्वाज्जन्मादिसूत्रमारभ्येत्युक्तम्। सर्ववेदान्तानां कार्ये प्रधानाद्यचेतने च समन्वयखण्डनेन ब्रह्मपरत्वं निवेदितमतः प्रथमाध्यायार्थस्य समाप्तत्वादुत्तरग्रन्थारम्भे किं कारणमित्याक्षेपार्थो द्रष्टव्यः।

( ३ ) द्विरूपमिति भाष्यमयुक्तं निरुपाधिन एव ब्रह्मणो जिज्ञास्यत्वादित्याशङ्क्याह यद्यपीति।

( ४ ) यदि सोपाधिकरूपस्य निरुपाधिकी देशशेषता कथं तर्हि उपास्तिरिति तत्राह क्वचिदिति। अवान्तरवाक्यभेदेनोपाधिविवक्षयोपासनविधिरित्यर्थः।

( ५ ) उपास्तीनामपि मोक्षसाधनत्वव्यावृत्तये फलान्तराण्याह तदुपासनानीति। प्रतीकोपासनान्यभ्युदयार्थानि, दहरादीनि क्रममुक्त्यर्थानि, उद्गीथादीनि कर्मसमृद्ध्यर्थानि, एतानि तु विधेयत्वाद्यद्यपि कर्मकाण्डे वक्तव्यानि तथापि मानसत्वेन साम्यादिहाधीतानीत्यर्थः।

च फलभेद इत्यत आह–"एक एव त्वि"ति । रूपाभेदेऽप्युपाधिभेदादुपहितभेदादुपासनाभेदस्तथा च फलभेद इत्यर्थः । "क्रतुः" सकल्पः (पृ० २१५ पं० २) । ननु यद्येक आत्मा कूटस्थनित्यो निरतिशयः सर्वभूतेषु गूढः कथमेतस्मिन् भूताश्रये (१)तारतम्यश्रुतय इत्यत आह–"यद्यप्येक आत्मे"ति । (२)यद्यपि निरतिशयमेकमेव रूपमात्मन ऐश्वर्यं ज्ञानं चानन्दश्च, तथाप्यनाद्यविद्यातमःसमावृत्तं तेषुतेषु प्राणभृद्भेदेषु क्वचिदसदिव क्वचित्सदिव क्वचिदत्यन्तापकृष्टमिव क्वचिदपकृष्टमेव क्वचित्प्रकर्षवत् क्वचिदत्यन्तप्रकर्षवदिव भासते(३), तत्कस्य हेतोः ? अविद्यातमसः प्रकर्षनिकर्षतारतम्यादिति । यथोत्तमप्रकाशः सविता दिङ्मण्डलमेकरूपेणैव प्रकाशेनापूरयन्नपि वर्षासु निकृष्टप्रकाश इव शरदि तु प्रकृष्टप्रकाश इव प्रथते, तथेदमपीति । "अपेक्षितोपाधिसम्बन्धम् उपास्यत्वेन, निरस्तोपाधिसंबन्धं ज्ञेयत्वेने"ति ( पृ० २१६ पं० ५ ) ॥

(सू०) आनन्दमयोऽभ्यासात् ॥ १२ ॥

विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३ ॥

तद्धेतुव्यपदेशाच्च ॥ १४ ॥

तत्र तावत्प्रथममेकदेशिमतेनाधिकरणमारचयति–"तैत्तिरीयकेऽन्नमय"मित्यादि ।

(४)गौणप्रवाहपातेऽपि युज्यते मुख्यमीक्षणम् ।
मुख्यत्वे तूभयोस्तुल्ये प्रायदृष्टिर्विशेषिका ॥

आनन्दमय इति हि विकारे प्राचुर्ये च मयटस्तुल्यं मुख्यार्थत्वमिति विकारार्थान्नमयादिपदप्रायपाठादानन्दमयपदमपि विकारार्थमेवेति युक्तम् । न च प्राणमयादिषु विकारार्थत्वायोगात् स्वार्थिको मयडिति युक्तम् । प्राणाद्युपाध्यवच्छिन्नो ह्यात्मा भवति प्राणादिविकारो घटाकाशमिव घटविकारः । न च सत्यर्थे स्वार्थिकत्वमुचितम् ।

(५)चतुष्कोशान्तरत्वे तु न सर्वान्तरतोच्यते ।
प्रियादिभागी शारीरो जीवो न ब्रह्म युज्यते ॥

नच सर्वान्तरतया ब्रह्मैवानन्दमयं न जीव इति सांप्रतम्, नहीयं श्रुतिरानन्दमयस्य सर्वान्तरतां ब्रूतेऽपित्वन्नमयादिकोशचतुष्टयान्तरतामानन्दमयकोशस्य । न चास्मादन्यस्या-

( १ ) तारतम्येति । औपाधिकानां मध्ये एक उपासकोऽपकृष्टोऽपरमुपास्यमुत्कृष्टमिति तारतम्य सूचयन्त्य उपासनाविधिश्रुतय इत्यर्थः ।

( २ ) वस्तुतः स्वतःसिद्धैश्वर्योऽपि उपासक उपाधिनिकर्षादनभिव्यक्तैश्वर्यस्तत्प्रत्याविर्भूतैश्वर्यं विशुद्धोपाधिमद्ब्रह्मोपास्यमिति परिहाराभिप्रायमाह यद्यपीति ।

( ३ ) टीकानुरोधेनायमेव पाठो युक्त इति ध्येयम् ।

(४) ननु 'ता आप ऐक्षन्ते'त्याद्यब्रह्मसन्निधिमपबाध्य मुख्येक्षितृ ब्रह्म निर्णीत मिह कथमन्नमयाद्यब्रह्मसान्निधिपाठादानन्दमयस्याब्रह्मत्वशङ्काऽत आह गौणेति । अनादिगौणेक्षणप्रवाहपातेपि जगत्कारणे मुख्यमीक्षणमिति युक्तम् मुख्यसम्भवे गौणस्यानवकाशात । अतस्तत्र विषयाद्युदये प्रायपाठोऽकिञ्चित्कर' । अत्र तु मयटो विकारप्राचुर्यार्थयोर्मुख्यत्वे तुल्ये सति विकारार्थग्रहणे प्रायदृष्टिर्विशेषिका प्राचुर्यार्थत्वव्यावर्तिकेत्यर्थः ।

( ५ ) विकारसन्निधेः सर्वान्तरत्वलिङ्गेन बाधमाशङ्क्याह चतुष्कोशेति । अन्नमयादिकोशचतुष्टयान्तरत्वेनानन्दमयस्य सर्वान्तरता न युक्ताऽतः प्रियशिरस्त्वादियुक्तो जीव एवानन्दमयो न ब्रह्मेति कारिकार्थः ।

न्तरस्याश्रवणादयमेव सर्वान्तर इति युक्तम्, यदपेक्षं यस्यान्तरत्वं श्रुतं ततस्मादेवान्तरं भवति। नहि देवदत्तो बलवानित्युक्ते सर्वान् सिंहशार्दूलादीनपि प्रति बलवान् प्रतीयतेऽपितु समानजातीयनरान्तरमपेक्ष्य। एवमानन्दमयोऽप्यन्नमयादिभ्योऽन्तरो न तु सर्वस्मात्।(१)न च निष्कलस्य ब्रह्मणः प्रियाद्यवयवयोगो, नापि शारीरत्वं युज्यत इति संसार्येवानन्दमयः। तस्मादुपहितमेवात्रोपास्यत्वेन विवक्षितं, न तु ब्रह्मरूपं ज्ञेयत्वेनेति पूर्वः पक्षः। अपि च यदि प्राचुर्यार्थोऽपि मयट्, तथापि संसार्येवानन्दयो, न तु ब्रह्म। आनन्दप्राचुर्यं हि तद्विपरीतदुःखलवसंभवे भवति, न तु तदत्यन्तासंभवे। न च परमात्मनो मनागपि दुःखलवसंभवः, आनन्दैकरसत्वादित्याह—"न च सशरीरस्य सत" इति (पृ० २१७ पं० ६)। (२)अशरीरस्य पुनरप्रियसंबन्धो मनागपि नास्तीति प्राचुर्यार्थोऽपि मयड् नोपपद्यत इत्यर्थः।

उच्यते। आनन्दमयावयवस्य तावद् ब्रह्मणः पुच्छस्याङ्गतया न प्राधान्यमपित्वङ्गिन आनन्दमयस्यैव ब्रह्मणः प्राधान्यम्। तथा च तदधिकारे पठितमभ्यस्यमानमानन्दपद तद्बुद्धिमाधत्त इति तस्यैवानन्दमयस्याभ्यास इति युक्तम्। ज्योतिष्टोमाधिकारे 'वसन्ते वसन्ते ज्योतिषे'ति ज्योतिषपदमिव ज्योतिष्टोमाभ्यासः (३)कालविशेषविधिपरः। अपि च साक्षादानन्दमयात्माभ्यासः श्रूयते **'एतमानन्दमयमात्मानमुपसंक्रामती'**ति। पूर्वपक्षबीजमनुभाष्य दूषयति—**"यत्तूक्तमन्नमयादी"**ति। (पृ० ११८ पं० ६) (४)न हि मुख्यारुन्धतीदर्शनं तत्तदमुख्यारुन्धतीदर्शनप्रायपठितमप्यमुख्यारुन्धतीदर्शनं भवति। (५)नादर्थ्यात्पूर्वदर्शनानामन्त्यदर्शनानुगुण्यं न तु तद्विरोधितेति चेत्। इहाप्यानन्दमयादान्तरस्यान्यस्याश्रवणात्। तस्य त्वन्नमयादिसर्वान्तरत्वश्रुतेस्तत्पर्यवसानात्तादर्थ्यं तुल्यम्। प्रियाद्यवयवयोगशारीरत्वे च निगदव्याख्यातेन भाष्येण समाहिते। (६)प्रियाद्यवयवयोगाच्च दुःखलवयोगोऽपि परमात्मन औपाधिक उपपादितः। तथाऽऽनन्दमय इति प्राचुर्यार्थता मयट उपपादितेति ॥ १२ ॥ १३ ॥ १४ ॥

(७)अपि च मन्त्रब्राह्मणयोरुपेयोपायभूतयोः सम्प्रतिपत्तेर्ब्रह्मैवानन्दमयपदार्थो, मन्त्रे हि

---

(१) एवं ब्रह्मत्वे लिङ्गाभासं निरस्य जीवत्वे लिङ्गमाह न चेति।

(२) सशरीरस्य प्रियादि दुर्वारमित्येतावता कथं मयट प्राचुर्यार्थत्वे ब्रह्मत्वानुपपत्तिरुक्ता, तत्राहाशरीरस्येति। एवमुक्ते सत्यशरीरे ब्रह्मणि नाप्रियमित्युक्तं भवति, तथाच दुःखगन्धयोगी प्राचुर्यार्थो मयड् न सम्भवतीत्यर्थः।

(३) कालेति। वसन्तकालगुणसङ्क्रान्ततया कालविशेषविधिपरोऽभ्यासोऽयं न तु कर्मान्तरविधिरित्यर्थः।

(४) देवदत्तादेरपि बलवत्त्वं सिंहादेर्मानान्तरासिद्धम्, आनन्दमयादान्तरे वस्तुनि न मानान्तरं नापि श्रुतिरित्यभिप्रेत्याह नहीति।

(५) दृष्टान्ते वैषम्यं शङ्कते तादर्थ्यादिति। मुख्यारुन्धतीदर्शनाविरोधेनानुगुण्यं चेदत्रापि तुल्यमित्यर्थः।

(६) योऽपि पूर्वपक्षे प्राचुर्यार्थत्वमुपेत्य दुःखलवयोग आपादित सोऽप्युपाधिवशादित्यर्थात्परिहृत इत्याह प्रियादीति।

(७) मान्त्रवर्णिकमिति सूत्रं भाष्यकारैः 'सत्यं ज्ञानमनन्तमि'ति मन्त्रप्रस्तुतं ब्रह्मानन्दमयवाक्ये निर्दिश्यते प्रकृतत्वादसम्बद्धपदव्यवायाभावाच्चेति विवृतं, तत्रेतरेतरत्रार्थप्रत्यभिज्ञानाभावान्मन्त्रब्राह्मणयोर्व्याख्यानव्याख्येयभावस्याविशदत्वात्प्रकारान्तरेण सूत्रं व्याचष्टे अपि चेति। प्रत्यभिज्ञानादिति। कोशचतुष्क-

पुनःपुन'रन्योन्तर आत्मे'ति परब्रह्मण्यान्तरत्वश्रवणात्तस्यैव चा'न्योन्तर आत्माऽऽनन्दमय' इति ब्राह्मणे प्रत्यभिज्ञानात् परब्रह्मैवानन्दमयमित्याह सूत्रकारः--

## ( सू० ) मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥

मान्त्रवर्णिकमेव परं ब्रह्म ब्राह्मणेऽप्यानन्दमय इति गीयत इति ॥ १५ ॥

अपि चानन्दमयं प्रकृत्य शरीराद्युत्पत्तेः प्राक् स्रष्टृत्वश्रवणाद् 'बहु स्यामि'ति च सृज्यमानानां स्रष्टुरानन्दमयादभेदश्रवणादानन्दमयः पर एवेत्याह सूत्रम्--

## ( सू० ) नेतरोऽनुपपत्तेः ॥ १६ ॥

नेतरो जीव आनन्दमयः, तस्यानुपपत्तेरिति ॥ १६ ॥

## ( सू० ) भेदव्यपदेशाच्च ॥ १७ ॥

## कामाच्च नानुमानापेक्षा ॥ १८ ॥

रसः सारो ह्ययमानन्दमय आत्मा 'रसं ह्येवायं लब्ध्वाऽऽनन्दो भवती'ति । सोऽयं जीवात्मनो लब्धृभाव आनन्दमयस्य च लभ्यता नाभेद उपपद्यते । (१)तस्मादानन्दमयस्य जीवात्मनो भेदे परब्रह्मत्वं सिद्धं भवति । चोदयति-**"कथं तर्ही"ति** (पृ० २२१ पं० ४)। यदि लब्धा न लब्धव्यः, कथं तर्हि परमात्मनो वस्तुतोऽभिन्नेन जीवात्मना परमात्मा लभ्यत इत्यर्थः । परिहरति—**"बाढं तथापी"ति** । सत्यम्, परमार्थतोऽभेदेप्यविद्यारोपितं भेदमुपाश्रित्य लब्धृलब्धव्यभाव उपपद्यते । जीवो ह्यविद्यया परब्रह्मणो भिन्नो दर्शितः, (२)न तु जीवादपि । तथा चानन्दमयश्चेद् जीवो न॰ जीवस्याविद्ययापि स्वतो भेदो दर्शित इति न लब्धृलब्धव्यभाव इत्यर्थः । भेदाभेदौ च न जीवपरब्रह्मणोरित्युक्तमधस्तात् । स्यादेतत् यथा परमेश्वराद् भिन्नो जीवात्मा द्रष्टा न भवत्येवं जीवात्मनोपि द्रष्टुर्न भिन्नः परमेश्वर इति जीवस्यानिर्वाच्यत्वे परमेश्वरोऽप्यनिर्वाच्यः स्यात् , तथा च न वस्तु सन्नित्यत आह-**"परमेश्वरस्त्वविद्याकल्पिता"दिति** । रजतं हि समारोपितं न शुक्तितो भिद्यते । न हि तद्भेदेनाभेदेन वा शक्यं निर्वक्तुम् , शुक्तिस्तु परमार्थसती निर्वचनीयाऽनिर्वचनीयाद्रजताद्भिद्यत एव । (३)अत्रैव सरूपमात्रं दृष्टान्तमाह--**"यथा मायाविन" इति** । एतदपरितोषेणा(४)त्यन्तसरूपं दृष्टान्तमाह--**"यथा वा घटाकाशादे"ति** । शेषमतिरोहितार्थम् ॥ १७ ॥ १८॥

---

वाक्यस्य देहादिव्यतिरिक्तानन्दमयब्रह्मप्रतिपत्त्युपायरूपत्वान्मन्त्रत्वम् आनन्दमयवाक्यस्योपेयब्रह्मप्रत्यायकत्वाद्ब्राह्मणत्वम्, तयोश्चेतरेतरत्रार्थप्रत्यभिज्ञानमस्त्येवेति परब्रह्मैवानन्दमित्यर्थः ।

( १ ) ननु जीवादन्यत्वान्नानन्दमयस्य ब्रह्मत्व घटादिष्वदर्शनादत आह तस्मादिति । आनन्दमयो ह्यात्मशब्दाच्चेतनस्तस्य च जीवत्वराहित्ये ब्रह्मत्वं सिद्धमित्यर्थः ।

( २ ) नत्विति । स्वतन्त्रोपाधिभेदे चेतनभेद इति जीवब्रह्मणोरविद्योपाधिभेदाद्भेदो युक्तो न तु स्वस्मादौपाधिको भेदो युक्त इत्यर्थः ।

( ३ ) अत्रैवेति । कल्पितस्याधिष्ठानाभेदेप्यधिष्ठानस्य ततो भेद इत्यत्रेत्यर्थः ।

( ४ ) सूत्रारूढ स्वतोपि मिथ्या, जीवे भेदमात्रं तथा न स्वरूपमित्यपरितोषेणेत्यर्थः ।

## ( सू० ) तद्धेतुव्यपदेशाच्च ॥ १९ ॥

स्वमतपरिग्रहार्थमेकदेशिमतं दूषयति--"इदं त्विह वक्तव्य"मिति । ( पृ० २२३ प० ३ ) एष तावदुत्सर्गो यद्

(१)ब्रह्म पुच्छं प्रतिष्ठेति ब्रह्मशब्दात्प्रतीयिते ।
विशुद्धं ब्रह्म, विकृतं त्वानन्दमयशब्दतः ॥

(२) तत्र किं पुच्छपदसमभिव्याहारादन्नमयादिषु चास्यावयवपरत्वेन प्रयोगादिहाप्यवयवपरत्वात् पुच्छपदस्य तत्समानाधिकरणं ब्रह्मपदमपि स्वार्थत्यागेन कथंचिदवयवपर व्याख्यायताम्, आनन्दमयपद चान्नमयादिविकारवाचिप्रायपठितं विकारवाचि वा कथंचित्प्रचुरानन्दवाचि वा ब्रह्मण्यप्रसिद्धं(३)कयाचिद्वृत्त्या ब्रह्मणि व्याख्यायताम्, आनन्दपदाभ्यासेन च ज्योतिष्पदेनेव ज्योतिष्टोमे आनन्दमयो लक्ष्यताम् उतानन्दमयपदं विकारार्थमस्तु ब्रह्मपदं च ब्रह्मण्येव स्वार्थेऽस्तु आनन्दपदाभ्यासश्च स्वार्थे पुच्छपदमात्रमवयवप्रायलिखितमाधिकरणपरतया व्याक्रियतामिति कृतबुद्धय एव विदाङ्कुर्वन्तु । तत्र--

(४)प्रायपाठपरित्यागो मुख्यत्रितयलङ्घनम् ।
पूर्वस्मिन्नुत्तरे पक्षे प्रायपाठस्य बाधनम् ॥

(५)पुच्छपद हि वालधौ मुख्य सदानन्दमयावयवे गौणमेवेति मुख्यशब्दार्थलङ्घनम् अवयवपरतायामधिकरणपरतायां च तुल्यम् । अवयवप्रायलेखबाधश्च विकारप्रायलेखबाधेन तुल्यः । ब्रह्मपदमानन्दमयपदमानन्दपदमिति त्रितयलङ्घन त्वधिकम् । तस्मान्मुख्यत्रितयलङ्घनादसाधीयान् पूर्वः पक्षः । मुख्यत्रयानुगुण्येन तूत्तर एव पक्षो युक्तः । अपि चानन्दमयपदस्य ब्रह्मार्थत्वे ब्रह्म पुच्छमिति न समञ्जसम् । न हि तदेवावयव्यवयवश्चेति युक्तम् । आधारपरत्वे च पुच्छशब्दस्य प्रतिष्ठेत्येतदप्युपपन्नतरं भवति । आनन्दमयस्य चान्तरत्वमन्नमयादिकोशापेक्षया । ब्रह्मणस्त्वान्तरत्वमानन्दमयादर्था(६)द्गम्यत इति न श्रुत्योक्तम् । एवं चान्नमयादिवदानन्दमयस्य प्रियाद्यवयवयोगो युक्तः । वाङ्मनसागोचरे तु परब्रह्मण्युपाधिमन्तर्भाव्य प्रियाद्यवयवयोगः प्राचुर्यं च क्लेशेन व्याख्यायेयाताम् । (७)तथा च मान्त्रवर्णिकस्य ब्रह्मण एव 'ब्रह्म पुच्छं प्रतिष्ठे'ति स्वप्रधानस्याभिधानात् तस्यैवाधिकारो नानन्दमयस्येति ।

---

( १ ) यदुक्तमानन्दमयस्याङ्गं ब्रह्मेति, तन्न, श्रुतिबाधप्रसङ्गादिति वदन् सिद्धान्तबीजमावपति ब्रह्म पुच्छमिति । ( २ ) बलाबलविवेकार्थं पूर्वोत्तरपक्षयुक्तीर्विभजते तत्र किमिति ।

( ३ ) स्तोकंदु खानुवृत्त्यापत्ते कयाचिद्वृत्त्या अल्पत्वमिति वृत्तिलक्षणयेत्यर्थ ।

( ४ ) उक्तकल्पेषु सिद्धान्तपक्षं स्वीकुर्वन्विवेकं स्फोरयति प्रायेति । मयड्विकारेऽमुख्यो ब्रह्मशब्द परब्रह्मणि मुख्य, अभ्यस्यमानानन्दशब्दश्च प्रकृत्यर्थ एव मुख्यो न मयडर्थे, पूर्वपक्षे एतत्रितयलङ्घनमानन्दमयपदस्यान्नमयादिविकारप्रायपाठपरित्यागश्च स्यात । उत्तरे पक्षे तु पुच्छशब्दस्यावयवप्रायपाठस्यैव बाधनम्, मुख्यत्रितयन्त्वनुगुणमेवेत्यर्थ ।

( ५ ) ननु पूर्वपक्षे यथा मयट्श्रुतिबाध एवमुत्तरपक्षे पुच्छश्रुतिबाधस्तत्राह पुच्छपदं हीति । लाङ्गूले मुख्य पुच्छपदं नाल्पावयवमात्रे आनन्दमयस्य चात्मनो न मुख्यलाङ्गूलसम्भव इति गौणमेवेत्यर्थः ।

( ६ ) अर्थात --प्रतिष्ठासामर्थ्यात् गम्यतेऽत आनन्दमयादाभ्यन्तरं ब्रह्मेति नोक्तमित्यर्थः ।

( ७ ) सिद्धान्तसारमुपसंहरति तथा चेति ।

'सोऽकामयते'त्याद्या अपि श्रुतयो ब्रह्मविषया नानन्दमयविषया इत्यर्थसङ्क्षेपः । सुग. ममन्यत् ॥

**"सूत्राणि त्वेवं व्याख्येयानि"** इति । ( पृ० २२७ प० १६ ) वेदसूत्रयोर्विरोधे (१)'गुणे त्वन्याय्यकल्पने'ति सूत्राण्यन्यथा नेतव्यानि । आनन्दमयशब्देन तद्वाक्यस्थब्रह्मपुच्छं प्रतिष्ठेत्येतद्गतं ब्रह्म तदुपलक्ष्यते । एतदुक्तं भवति आनन्दमय इत्यादिवाक्ये यद् 'ब्रह्म पुच्छ प्रतिष्ठे'ति ब्रह्मपद तत्स्वप्रधानमेवेति । यत्तु ब्रह्माधिकरणमिति वक्तव्ये 'ब्रह्म पुच्छमि'त्याह श्रुतिः, तत्कस्य हेतोः, ? पूर्वमवयवप्रधानप्रयोगात् तत्प्रयोगस्यैव बुद्धौ संनिधानात्, तेनापि चाधिकरणलक्षणोपपत्तेरिति ॥ **'मान्त्रवर्णिकमेव च गीयते'** ॥ (२)य'त्सत्यं ज्ञानमि'त्यादिना मन्त्रवर्णेन ब्रह्मोक्तं तदेव तदुपायभूतेन ब्राह्मणेन स्वप्राधान्येन गीयते–'ब्रह्म पुच्छं प्रतिष्ठे'ति । अवयववचनत्वे त्वस्य मन्त्रे प्राधान्यं ब्राह्मणे त्वप्राधान्यमिति उपायोपेययोर्मन्त्रब्राह्मणयोर्विप्रतिपत्तिः स्यादिति ॥ **'नेतरोऽनुपपत्तेः'** ॥ अत्र 'इतश्चानन्दमय' इति भाष्यस्य स्थाने 'इतश्च ब्रह्म पुच्छ प्रतिष्ठे'ति पठितव्यम् ॥ **'भेदव्यपदेशाच्च'**॥ अत्रापी'तश्चानन्दमय' इत्यस्य च **'आनन्दमयाधिकार'** इत्यस्य च भाष्यस्य स्थाने 'ब्रह्म पुच्छं प्रतिष्ठे'ति 'ब्रह्मपुच्छाधिकार' इति च पठितव्यम् ॥ **'कामाच्च नानुमानापेक्षा'**॥ **'अस्मिन्नस्य च तद्योगं शास्ति'**॥ इत्यनयोरपि सूत्रयोर्भाष्ये आनन्दमयस्थाने 'ब्रह्म पुच्छं प्रतिष्ठे'ति पाठो द्रष्टव्यः ॥ **'तद्धेतुव्यपदेशाच्च'** ॥ विकारस्यानन्दमयस्य ब्रह्म पुच्छमवयवश्चेत् कथं सर्वस्यास्य विकारजातस्य सानन्दमयस्य ब्रह्म पुच्छं कारणमुच्येत 'इदं सर्वमसृजत, यदिदं किं चे'ति श्रुत्या । (३)नह्यानन्दमयविकारावयवो ब्रह्म विकारः सन् सर्वस्य कारणमुपपद्यते । (४)तस्मादानन्दमयविकारावयवो ब्रह्मेति तदवयवयोऽप्यानन्दमयो विकार इह नोपास्यत्वेन विवक्षितः, किं तु स्वप्रधानमिह ब्रह्म पुच्छं ज्ञेयत्वेनेति सिद्धम् ॥ १९ ॥

## ( सू० ) अन्तस्तद्धर्मोपदेशात् ॥२०॥

(५)पूर्वस्मिन्नधिकरणेऽपास्तसमस्तविशेषब्रह्मप्रतिपत्त्यर्थमुपायतामात्रेण पञ्च कोशा उपाधयः स्थिता, न तु विवक्षिताः । ब्रह्मैव तु प्रधानं 'ब्रह्म पुच्छं प्रतिष्ठे'ति ज्ञेयत्वेनोपक्षिप्तमिति निर्णीतम् । सम्प्रति तु ब्रह्म विवक्षितोपाधिभेदमुपास्यत्वेनोपक्षिप्यते, न तु विद्याकर्मातिशय-

(१) गुणे त्विति ( जै० अ० ९ पा० ३ सू० २९ ) सूत्रे नवमे ग्नीषोमीये 'पाशान् प्रमुमोक्त्वेतानिति, पाशं प्रमुमुक्त्वेति मन्त्रौ श्रुतौ, तत्र बहुवचनान्मन्त्र प्रकरणादुत्कृष्टो नवेति संशये बहुवचनस्यासमवेतार्थत्वादुत्कर्षे प्राप्ते, विशेष्यप्रधानभूतपाशवाचिप्रातिपदिकस्याग्नीषोमीये समवेतार्थत्वात्तदनुरोधेन लक्षणया पाशावयवा लक्षयतीति निर्धारितम् । गुणे प्रत्ययार्थे त्वन्याय्यकल्पना न तद्बलान्मन्त्रोत्कर्षः प्रत्ययस्य पदैकदेशत्वात्प्रातिपदिकाधीनात्वेनोत्कर्षकत्वायोगादिति तु सूत्रार्थ । एवमत्रापि प्रधानश्रुतिविरोधे गुणभूतसूत्राण्यध्याहारादिभिर्नेयानीति भाव ।

(२) अपराण्यपीति भाष्यं येषु सूत्रेषु व्याख्यातिदिष्टा तान्यल्पवक्तव्यत्वात्प्रथम योजयति यत्सत्यमिति ।

(३) कारणहेतुमाह नहीति । आनन्दमयस्तावद्विकारस्तदवयवो ब्रह्मापि परिच्छिन्नत्वाद्विकार स्यात्तथाभूतं च कथ विश्वहेतुरित्यर्थः । (४) विचारप्रयोजनमाह तस्मादिति ।

(५) समन्वयस्य सविशेषपरत्वमपोह्यानन्दमयाधिकरण उत्सर्ग स्थापित । इदानीमपवादचिन्तार्थत्वेनाधिकरणमवतारयन् प्रघट्टकसङ्गतिमाह पूर्वस्मिन्निति ।

लब्धोत्कर्षो जीवात्मादित्यपदवेदनीय इति निर्णीयते । तत्र

(१)मर्यादाधाररूपाणि संसारिणि परे न तु ।
तस्मादुपास्यः संसारी कर्मानधिकृतो रविः ॥

हिरण्यश्मश्रुरित्यादिरूपश्रवणाद् , 'य एषोन्तरादित्ये य एषोऽन्तरक्षिणीति' चाधारभेदश्रवणाद् । 'ये (२)चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां चे'त्यैश्वर्यमर्यादाश्रुतेश्च संसार्येव कार्यकारणसङ्घातात्मको रूपादिसम्पन्न इहोपास्यो, न तु परमात्मा 'अशब्दमस्पर्श'मित्यादिश्रुतिभिरपास्तसमस्तरूपश्च 'स्वे महिम्नी'त्यादिश्रुतिभिरपाकृताधारश्च 'एष सर्वेश्वर' इत्यादिश्रुतिभिरधिगतनिर्मर्यादैश्वर्यश्च शक्य उपास्यत्वेनेह प्रतिपत्तुम् । सर्वपाप्मविरहश्चादित्यपुरुषे सम्भवति, शास्त्रस्य मनुष्याधिकारतया देवतायाः पुण्यपापयोरनधिकारात् । रूपादिमत्त्वान्यथानुपपत्त्या च कार्यकारणात्मके जीवे उपास्यत्वेन विवक्षिते यत्तावदृगाद्यात्मकतयाऽस्य सर्वात्मकत्वं श्रूयते तत्कथंचिदादित्यपुरुषस्यैव स्तुतिरित्यादित्यपुरुष एवोपास्यो न परमात्मेत्येवं प्राप्तम् । अनाधारत्वे च नित्यत्वं सर्वगतत्वं च हेतु., अनित्यं हि कार्यं कारणाधारमिति नानाधारम् । (३)नित्यमप्यसर्वगतं यत्तस्मादधरभावेनावस्थितं तदेव तस्योत्तरस्याधार इति नानाधार तस्मादुभयमुक्तम् ।

एव प्राप्तेऽभिधीयते—"अन्तस्तद्धर्मोपदेशात्' ( पृ० २२९ पं० ७ ) ।

(४)सार्वात्म्यसर्वदुरितविरहाभ्यामिहोच्यते ।
ब्रह्मैवाव्यभिचारिभ्यां सर्वहेतुर्विकारवत् ॥

(५)नामनिरुक्तेन हि सर्वपाप्मापादानतयास्योदय उच्यते । न चादित्यस्य देवतायाः कर्मानधिकारेऽपि सर्वपाप्मविरहः प्राग्भवीयधर्माधर्मरूपपाप्मसम्भवे सति । न चैतेषां प्राग्भवीयो धर्म एवास्ति न पाप्मेति साम्प्रतम् । विद्याकर्मातिशयसमुदाचारेऽप्यनादिभवपरम्परोपार्जितानां पाप्मनामपि प्रसुप्तानां(६) सम्भवात् । न च—श्रुतिप्रामाण्यादादित्यशरीराभिमानिनः सर्वपाप्मविरह—इति युक्तम् । ब्रह्मविषयत्वेनाप्यस्याः प्रामाण्योपपत्तेः । न च विनिगमनायां हेत्वभावः, तत्रतत्र सर्वपाप्मविरहस्य भूयोभूयो ब्रह्मण्येव श्रवणात् , तस्यैव चेह

---

( १ ) 'अथ य एषोऽन्तरादित्य' इत्यादिश्रुतौ रूपवत्त्वसर्वपापविरहाभ्यां संसारी ईश्वरो वा उपास्य इति संशये पूर्वत्र सुखत्वत्रितयाख्यबहुप्रमाणानुसारान्निर्विशेषनिश्चयवत् रूपवत्त्वादिप्रमाणवशात्संसारी हिरण्मय पुरुष उपास्य इत्यवान्तरसंगतिमभिप्रेत्य पूर्वपक्षं संकलयति मर्यादेति । सर्वपाप्मविरहस्यान्यथासिद्धिमाह कर्मेति । ( २ ) अमुष्मादादित्यादित्यर्थः ।

( ३ ) तर्हि तत एवानाधारत्वसिद्धौ किं सर्वगतत्वेन हेतुनेत्यत आह नित्यमपीति । नित्यमप्यसर्वगतं तन्न भवत्यनाधारं, यतो यद्वस्तु तस्मान्नित्यादाधारभावेनावस्थितं तदेव तस्य नित्यस्योपरिस्थस्याधारो भवति तस्मात्सर्वगतत्वमपि नित्यत्वविशेषणमनाधारत्वे हेतुर्वाच्य इत्यर्थ. ।

( ४ ) सार्वात्म्येति । ब्रह्मणोऽन्यत्रासम्भवादव्यभिचारिभ्यां सार्वात्म्यसर्वदुरितराहित्याभ्यां ब्रह्मैवात्रोपास्यम्, तच्च ब्रह्म सर्वविकारहेतुर्विकारयुक्तं चातो रूपवत्त्वस्य हेतोर्ब्रह्मणि सम्भवान्न व्यभिचार इति भाव ।

( ५ ) सर्वदुरितविरहमुदाहृतवाक्येनापि प्रमाणयति नामेति । 'सर्वेभ्य पाप्मभ्य उदित' इति छान्दोग्यश्रुतिस्थपाप्मभ्य इति पञ्चमी अपादाने, ततश्च सर्वे पाप्मानोऽपादानं यस्योदयस्य तस्य भावस्तत्ता तद्रूपेणोदय उद्गम उच्यत इत्यर्थः । ( ६ ) अव्यक्तानाम् ।

प्रत्यभिज्ञायमानस्य विनिगमनाहेतोर्विद्यमानत्वात् । अपि च सार्वात्म्यं जगत्कारणस्य ब्रह्मण एवोपपद्यते, कारणादभेदात्कार्यजातस्य, ब्रह्मणश्च जगत्कारणत्वात् । आदित्यशरीराभिमानिनस्तु जीवात्मनो न जगत्कारणत्वम् । न च मुख्यार्थसम्भवे प्राशस्त्यलक्षणया स्तुत्यर्थता युक्ता । रूपवत्त्व चास्य परानुग्रहाय कार्यनिर्माणेन वा, तद्विकारतया वा सर्वस्य कार्यजातस्य, विकारस्य च विकारवतोऽनन्यत्वात्तादृशरूपभेदेनोपदिश्यते, यथा 'सर्वगन्धः सर्वरस' इति । (१)न च ब्रह्मनिर्मितं मायारूपमनुवदच्छास्त्रमशास्त्र भवति, अपि तु ता कुर्वदिति नाशास्त्रत्वप्रसङ्गः । यत्र तु ब्रह्म निरस्तसमस्तोपाधिभेदं ज्ञेयत्वेनोपक्षिप्यते, तत्र शास्त्र'मशब्दमस्पर्शमरूपमव्ययमि'ति प्रवर्तते । तस्माद्रूपवत्त्वमपि परमात्मन्युपपद्यते । एतेनैव मर्यादाधारभेदावपि व्याख्यातौ । अपि चादित्यदेहाभिमानिनः संसारिणोऽन्तर्यामी भेदेनोक्तः स एवान्तरादित्य इत्यन्तःश्रुतिसाम्येन प्रत्यभिज्ञायमानो भवितुमर्हति । **"तस्माते धनसनश्च"** इति ( पृ० २३१ पं० १२ ) । धनवन्तो विभूतिमन्त इति यावत् । कस्मात्पुनर्विभूतिमत्त्वं परमेश्वरपरिग्रहे घटत इत्यत आह—**"यद्यद्विभूतिमदि"**ति ( पृ० २३२ प० १ ) । (२)सर्वात्मकत्वेऽपि विभूतिमत्स्वेव परमेश्वरस्वरूपाभिव्यक्तिः, न त्वविद्यातमःपिहितपरमेश्वरस्वरूपेष्वविभूतिमत्स्वित्यर्थः । **"लोककामेशितृत्वमपी"**ति । अतोऽत्यन्तापारार्थ्यन्यायेन(३)निरङ्कुशमैश्वर्यमित्यर्थः ॥ २० ॥

## सू० भेदव्यपदेशाच्चान्यः ॥ २१ ॥

## आकाशस्तल्लिङ्गात् ॥ २२ ॥

(४)पूर्वस्मिन्नधिकरणे ब्रह्मणोऽसाधारणधर्मदर्शनाद्विवक्षितोपाधिनोऽस्यैवोपासना; न त्वादित्यशरीराभिमानिनो जीवात्मन इति निरूपितम् । इदानीं त्वसाधारणधर्मदर्शनात् तदेवोद्गीथे सम्पाद्योपास्यत्वेनोपदिश्यते, न भूताकाश इति निरूप्यते । (५)तत्र'आकाश इति होवाचे'ति किं मुख्याकाशपदानुरोधेन'अस्य लोकस्य का गति'रिति च 'सर्वाणि ह वा इमानि भूतानी'ति च 'ज्यायानि'ति च 'परायण'मिति च कथंचिद्व्याख्यायतामुतैतदनुरोधेनाकाशशब्दो भक्त्या परात्मनि व्याख्यायतामिति । तत्र—

(६)प्रथमत्वात्प्रधानत्वादाकाशं मुख्यमेव नः ।
तदानुगुण्येनान्यानि व्याख्येयानीति निश्चयः ॥

---

( १ ) नन्वविकारिब्रह्मणो मायामय रूपं वक्तव्यं ततश्च मिथ्यार्थप्रकाशकतया शास्त्राप्रामाण्यमत आह नचेति । अपित्विति । तां–माया मिथ्याबुद्धिं, कुर्वत् अशास्त्र स्यान्नतु ता करोति तस्याः प्रागेव सिद्धत्वादिति नाशास्त्रत्वप्रसङ्ग इत्यर्थः ।

( २ ) विभूतिमत्स्वेवेश्वरावस्थाने सार्वात्म्यविरोधमाशङ्क्याभिव्यक्तिमात्र तत्र, सत्ता तु सर्वत्रेत्याह सर्वेति ।

( ३ ) लोककामेशितृत्वश्रवणादेव मनुष्यैरीश्वराज्ञा विनाऽशितुमपि न शक्यमित्यन्त पारार्थ्यन्याय ।

( ४ ) लिङ्गाद्ब्रह्मनिर्णयस्य तुल्यत्वात्पुनरुक्तिमाशङ्क्याह पूर्वस्मिन्निति । श्रुतिप्रातनमसो लिङ्गेन बाधार्थो न्यायोऽधिक इत्यर्थ । इदमेवाह न भूताकाश इत्यादिना । ( ५ ) संशयं प्रदर्शयति तत्रेति ।

( ६ ) आकाशशब्दवाच्यमत्र भूताकाशं ब्रह्म वेति सशये पूर्वपक्षसंग्रहकारिकामाह प्रथमत्वादिति । प्रथमावगतत्वात्प्रधानत्वाच्चात्र मुख्यमाकाशमेव नोऽस्माकमिष्टम् । अन्यान्यपि वाक्यानि भूताकाशानुरोधेनैव व्याख्येयानीति श्लोकार्थ ।

(१)'अस्य लोकस्य का गतिरि'ति प्रश्नोत्तरे 'आकाश इति होवाचे'त्याकाशस्य गतित्वेन प्रतिपाद्यतया प्राधान्यात्, (२)'सर्वाणि ह वे'त्यादीना तु तद्विशेषणतया गुणत्वाद्, 'गुणे-त्वन्याय्यकल्पने'ति बहून्यप्यप्रधानानि प्रधानानुरोधेन नेतव्यानि। (३)अपि च 'आकाश इति होवाचे'त्युत्तरे प्रथमावगतमाकाशपदमनुजातविरोधित्वेन तदनुरक्तायां बुद्धौ यद्यदेव तदेकवाक्यगतमुपनिपतति तत्तदुपजातविरोधि जघन्यतया तदानुगुण्येनैव व्यवस्थातुमर्हति(४)। (५)न च क्वचिदाकाशशब्दो भक्त्या ब्रह्मणि प्रयुक्त इति सर्वत्र तेन तत्परेण भवितव्यम्, नहि गङ्गायां घोष इत्यत्र गङ्गापदमनुपपत्त्या तीरपरमिति यादांसि गङ्गायामित्यत्राप्यनेन तत्परेण भवितव्यम्। (६)सम्भवश्चोभयत्र तुल्य.। न च ब्रह्मण्यप्याकाशशब्दो मुख्यः, अनेकार्थत्वस्यान्याय्यत्वात्, भक्त्या च ब्रह्मणि प्रयोगोपपत्ते.(७), लोके चास्य नभसि निरूढतरत्वात् तत्पूर्वकत्वाच्च वैदिकार्थप्रतीतेर्वैपरीत्यानुपपत्तेः। तदानुगुण्येन च 'सर्वाणि ह वे'त्यादीनि भाष्यकृता स्वयमेव नीतानि। तस्मादूभूताकाशमेवात्रोपास्यत्वेनोपदिश्यते, न परमात्मेति प्राप्तम्।

एव प्राप्तेऽभिधीयते—आकाशशब्देन ब्रह्मणो ग्रहणम्, कुतः? तल्लिङ्गात्। तथाहि—

(८)सामानाधिकरण्येन प्रश्नतत्प्रतिवाक्ययो.।
पौर्वापर्यपरामर्शात् प्रधानत्वेऽपि गौणता॥

यद्यप्याकाशपदं प्रधानार्थं तथापि यत् पृष्टं तदेव प्रतिवक्तव्यम्, न खल्वनुन्मत्त आम्रान् पृष्टः कोविदारानाचष्टे। (९)तदि'हास्य लोकस्य का गतिरि'ति प्रश्ने दृश्यमानो नामरूपप्रपञ्चमात्रविषय इति तदनुरोधाद्य एव सर्वस्य लोकस्य गतिः स एवाकाशशब्देन प्रतिवक्तव्यः। न च भूताकाशः सर्वस्य लोकस्य गतिः, तस्यापि लोकमध्यपातित्वात्, तदेव तस्य गतिरित्यनुपपत्तेः। न चोत्तरे भूताकाशश्रवणाद्भूताकाशकार्यमेव पृष्टमिति युक्तम्। प्रश्नस्य प्रथमावगतस्यानुपजातविरोधिनो लोकसामान्यविषयस्योपजातविरोधिनोत्तरेण सङ्कोचानुपपत्ते., तदनुरोधेनोत्तरव्याख्यानात्। (१०)न च प्रश्नेन पूर्वपक्षरूपेणावस्थितार्थेनोत्तरं व्यवस्थितार्थं न

---

(१) तत्र प्रधानत्वहेतुं व्याचष्टे अस्येति। (२) तदानुगुण्येनेति विवृणोति सर्वाणीति।

(३) प्रथमत्वे हेतु व्याख्याति अपि चेति।

(४) विरोधि. तेन तदनुरक्तायां बुद्धौ यद्यदेव तदेकवाक्यगतमुपनिपतति तत्तज्जघन्यतया उपसञ्जातविरोधि तदानुगुण्येनैव व्यवस्थानमर्हति इति मु. मु. पु पाठ।

(५) 'यदेष आकाश आनन्द' इत्यादाविव गौण एवाकाशशब्दो ब्रह्मण्यास्ताम् इत्याशंक्याह नचेति। तत्परेण—लक्षणया तीरपरेण।

(६) ननु यादांसीति प्रयोगे गंगापदाभिधेयस्य वाक्यार्थान्वयसम्भवान्मुख्यत्व नत्विह नभसो वाक्यार्थान्वय आनन्त्याद्ययोगादत आह सम्भवश्चेति। मुख्यानुगुण्येन गुणाना नयनस्योक्तत्वादित्यर्थ।

(७) प्रयोगदर्शनोपपत्तेरिति मु. मु. पु पाठ।

(८) प्रश्नोत्तरयोरेकार्थपर्यवसानसामर्थ्यलक्षण लिङ्गसूत्रान्तलिङ्गशब्दार्थमाभिप्रेत्य सिद्धान्तयति सामानाधिकरण्येनेति। प्रश्नोत्तरयोरेकार्थवृत्तित्वेनार्थत शब्दतश्च पूर्वापरत्वेनानुसन्धानादसञ्जातविरोधप्रश्नानुसारेणोत्तर नेयम्। आकाशपदस्य प्रधानार्थत्वेऽपि गौणता, अपिशब्दात्र नभस प्रधानत्वमपि तु पृष्टस्य सर्वकारणस्येत्यर्थः। (९) प्रश्नोत्तरयोरेकविषयत्वं नभस्येवास्त्वित्याशंक्याह तदिहेति।

(१०) ननु निर्णीतार्थ उपक्रम उपसहारमन्यथयेत्र प्रश्नोपक्रम सन्दिग्धार्थत्वादिति तत्राह नचेति। प्रश्न स्वविषये व्यवस्थित एव न चेत् तत्र वक्तव्यं स निर्विषय पृष्टादन्यविषयो वा? नाद्य इत्याह अनालम्बनत्वेति। न द्वितीय इत्याह वैयधिकरण्येति।

शक्यं नियन्तुमिति युक्तम् । तन्निमित्तानामज्ञानसंशयविपर्यासानामनवस्थानेऽपि तस्य स्वविषये व्यवस्थानात्, अन्यथोत्तरस्यानालम्बनत्वापत्तेर्वैयधिकरण्यापत्तेर्वा। (१)अपि चोत्तरेपि बहूसमञ्जसम् । तथाहि—'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त' इति सर्वशब्दः कथञ्चिदल्पविषयो व्याख्येयः । एवमेवकारोऽप्यसमञ्जसः । न खल्वपामाकाश एव कारणम् अपि तु तेजोऽपि । एवमन्नस्यापि नाकाशमेव कारणम् अपि तु पावकपाथसी अपि । मूलकारणविवक्षाया तु ब्रह्मण्येवावधारणं समञ्जसम् । असमञ्जसं तु भूताकाशम् । एवं सर्वेषां भूतानां लयो ब्रह्मण्येव । एवं सर्वेभ्यो ज्यायस्त्वं ब्रह्मण एव । परमयनं ब्रह्मैव । तस्मात्सर्वेषां लोकानामिति प्रश्नेनोपक्रमाद् उत्तरे च तत्तदसाधारणब्रह्मगुणपरामर्शात् पृष्टायाश्च गतेः परमयनमित्यसाधारणब्रह्मगुणोपसंहाराद् भूयसीनां श्रुतीनामनुग्रहाय 'त्यजेदेकं कुलस्यार्थे' इतिवद्वरमाकाशपदमात्रमसमञ्जसमस्तु । एतावता हि बहु समञ्जसं स्यात् । (२)न चाकाशस्य प्राधान्यमुत्तरे, किन्तु पृष्टार्थत्व दुत्तरस्य लोकसामान्यगतेश्च पृष्टत्वात् 'परायणमि'ति च तस्यैवोपसंहाराद्ब्रह्मैव प्रधानम् । (३)तथा च तदर्थं सदाकाशपदं प्रधानार्थं भवति, नान्यथा । तस्माद्ब्रह्मैव प्रधानमाकाशपदेनेहोपास्यत्वेनोपक्षिप्तं, न भूताकाशमिति सिद्धम् । **"अपि च अस्यैवोपक्रमेऽन्तवत्किल ते साम्ने (४)'त्यन्तवत्त्वदोषेण शालावत्यस्ये"**ति ( पृ० २३५ पं० ९ ) । न चाकाशशब्दो गौणोऽपि विलम्बितप्रतिपत्तिः, तत्रतत्र ब्रह्मण्याकाशशब्दस्य तत्पर्यायस्य च प्रयोगप्राचुर्यादत्यन्ताभ्यासेनास्यापि मुख्यवत्प्रतिपत्तेरविलम्बनादिति दर्शनार्थं ब्रह्मणि प्रयोगप्राचुर्यं वैदिकं निदर्शितं भाष्यकृता । (५)तत्रैव च प्रथमावगतानुगुण्येनोत्तरं नीयते, यत्र तदन्यथा कर्तुं शक्यम्, यत्र तु न शक्यं तत्रोत्तरानुगुण्येनैव प्रथमं नीयत इत्याह—**"वाक्योपक्रमेपी"**ति ( पृ० २३६ पं० ८ ) ॥२१॥२२॥

## ( सू० ) अत एव प्राणः ॥ २३ ॥

'उद्गीथे या देवता प्रस्तावमन्वायत्ते'त्युपक्रम्य श्रूयते—'कतमा सा देवतेति प्राण इति होवाचोषस्तिश्चाक्रायण.' । (६)उद्गीथोपासनप्रसङ्गेन प्रस्तावोपासनमप्युद्गीथ इत्युक्त भाष्यकृता । प्रस्ताव इति साम्नो भक्तिविशेपस्तमन्वायत्ता अनुगता प्राणो देवता । अत्र प्राणशब्दस्य

---

(१) एवं तल्लिङ्गादिति सौत्रहेतुवचनस्य प्रश्नप्रतिवचनवाक्यसामर्थ्यरूपमर्थं व्याख्याय वाक्यशेषस्थलिङ्गपरतया व्याख्यान्तरमाहापिचेत्यादिना ।

(२) ननु साम्ये विरोधिना भूयसा न्याय इह तु प्रधानमाकाशशब्दार्थो नाप्रधानैर्भूयोभिरपि बाध्येत, यदाह कश्चित्—'त्यजदेकं कुलस्यार्थे' इति राद्धान्तयन्ति ये । शेषिबाधे न तैर्दृष्टमात्मार्थे पृथिवीमिति ॥ तत्राह न चाकाशस्येति ।

(३) ननु शेष्यर्थत्वादाकाशपदं प्रधानार्थमत आह तथाचेति । उपक्रान्तं प्रधानं ब्रह्म विशिषन्नाकाशशब्दः प्रधानार्थो न तु गगनमभिदधदित्यर्थ ।

(४) इयं शालावत्यप्रतिज्ञातस्यैतल्लोकस्यान्तवत्त्वप्रतिपादिका श्रुतिर्बोध्या ।

(५) प्रतिवचनेपि वाक्यशेषगताऽनन्यथासिद्धब्रह्मलिङ्गादाकाशपदं गौणमिति भाष्यार्थमाह तत्रैव चेति ।

(६) यद्यपि विषयप्रदर्शकभाष्ये उद्गीथ इत्येवोक्तं, तथापि तदुद्गीथप्रकरणे प्रासङ्गिकं प्रस्तावोपासनमिति कथयितुमित्याह उद्गीथेति । पुरस्ताद्धि परोवरीयांसमुद्गीथमुपास्ते इत्युक्तं, परस्ताच्चाथात शौक उद्गीथ इति अत प्रस्ताववाक्यं यद्यपि विषयस्तथापि प्रकरणशुध्यर्थमुद्गीथग्रहण मित्यर्थः ।

ब्रह्मणि वायुविकारे च दर्शनात्संशय.—किमय ब्रह्मवचन उत वायुविकारवचन इति । तत्रात एव ब्रह्मलिङ्गादेव प्राणोऽपि ब्रह्मैव न वायुविकार इति युक्तम् । यद्येवं तेनैव गतार्थमेतदिति कोऽधिकरणान्तरारम्भार्थः ? तत्रोच्यते—

अर्थे श्रुत्यैकगम्ये हि श्रुतिमेवाद्रियामहे ।
मानान्तरावगम्ये तु तद्वशात्तद्व्यवस्थितिः ॥

(१)ब्रह्मणो वा सर्वभूतकारणत्वमाकाशस्य वा वाय्वादिभूतकारणत्वं प्रति नाऽऽगमादृते मानान्तरं प्रभवति । तत्र पौर्वापर्यपर्यालोचनया यत्रार्थे समञ्जस आगमः स एवार्थस्तस्य गृह्यते, त्यज्यते चेतरः । (२)इह तु संवेशनोद्गमने भूतानां प्राणं प्रत्युच्यमाने किं ब्रह्म प्रत्युच्येते, आहो वायुविकारं प्रतीति विशये 'यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति' इत्यादिकायाः श्रुते सर्वभूतसारेन्द्रियसंवेशनोद्गमनप्रतिपादनद्वारा सर्वभूतसंवेशनोद्गमनप्रतिपादिकाया मानान्तरानुग्रहलब्धसामर्थ्याया बलात्संवेशनोद्गमने वायुविकारस्यैव प्राणस्य, न ब्रह्मणः । अपि चात्रोद्गीथप्रतिहारयोः सामभक्त्योर्ब्रह्मणोऽन्ये आदित्यश्चान्नं च देवते अभिहिते कार्यकरणसङ्घातरूपे(३), तत्साहचर्यात् प्राणोऽपि कार्यकारणसङ्घातरूप एव देवता भवितुमर्हति । निरस्तोऽप्ययमर्थ ईक्षत्यधिकरणे पूर्वोक्तपूर्वपक्षहेतूपोद्बलनाय पुनरुपन्यस्त । तस्माद्वायुविकार एवात्र प्राणशब्दार्थ इति प्राप्तम् ।

एवं प्राप्तेऽभिधीयते—

(४)पुंवाक्यस्य बलीयस्त्वं मानान्तरसमागमात् ।
अपौरुषेये वाक्ये तत्सङ्गतिः किं करिष्यति ॥

नो खलु स्वतःसिद्धप्रमाणभावमपौरुषेयं वचः स्वविषयज्ञानोत्पादे वा तद्व्यवहारे वा मानान्तरमपेक्षते, तस्यापौरुषेयस्य निरस्तसमस्तदोषाशङ्कस्य (५)स्वत एव निश्चायकत्वात्, निश्चयपूर्वकत्वाद्व्यवहारप्रवृत्तेः । (६)तस्मादसंवादिनो वा चक्षुष इव रूपे त्वगिन्द्रियसंवादिनो वा तस्यैव द्रव्ये

---

(१) अर्थे इत्यादि पूर्वार्धं व्याचष्टे ब्रह्मण इति । न ह्याकाशाद्यायुदय प्रत्यक्षयोग्योऽतो वाक्यशेषाद्ब्रह्मनिर्णयो व्यक्त इत्यर्थः ।

(२) उत्तरार्धं विवृणोति इह त्वित्यादिना । इह—'सर्वाणि ह वे'ति वाक्ये । सर्वेति । भोगप्रत्यासत्तेरिन्द्रियाणां भूतसारत्वम्, तत प्रधानेन सर्वभूतलक्षणया भूतोत्पत्तिलयौ वायाविति प्रत्यक्षानुगृहीतया श्रुत्योक्तम्, तस्याः संवादलब्धबलाया बलात्सर्वाणीति वाक्य वायुविकारपर व्याख्येयमित्यर्थ ।

(३) शरीरिण्यौ । तत्साहचर्यादिति । तथा चाब्रह्मसहपाठाच्च प्राणो न ब्रह्मेति भाव ।

(४) प्राणशब्दस्य ब्रह्मपरत्वं सिद्धान्तयन् सिद्धान्तसारसङ्ग्रहकारिकामाह पुंवाक्यस्येति । पौरुषेयमेव वाक्य प्रत्यक्षादिना प्राप्तबल भवति, अपौरुषेये तु वाक्ये प्रत्यक्षादिकमकिंचित्करमिति श्लोकतात्पर्यम् । इदमेवाह नो खल्वित्यादिना ।

(५) स्वत इति । स्वत एव निश्चायकत्वात्स्वविषयज्ञानोत्पादे मानान्तर नापेक्षते, तथा निश्चयपूर्वकत्वाद्व्यवहारस्य स्वविषयव्यवहारेऽपि मानान्तर नापेक्षते इति योजना ।

(६) तस्मादिति । असंवादिनो वाक्यस्य स्वविषये नादार्ढ्यं रूप इव चक्षुष, त्वगिन्द्रियसंवादिनो न दार्ढ्यं चक्षुष इव द्रव्ये इति योजनीयम् । तेन—येन प्रमाणानां संवादविसंवादावप्रयोजकौ तेन, 'यदा वै पुरुष' इति वाक्यादिन्द्रियमात्रस्य सुप्तिसमये वायुविकारे संवेशनोद्गमने भवेताम् न त्वेतावता सर्वभूतोत्पत्तिलयौ तदाश्रयौ योजयितु शक्यौ तयोस्तत्र वाक्ये प्रतीत्यभावादित्यर्थः ।

नादार्ढ्यं दार्ढ्यं वा, तेन स्तामिन्द्रियमात्रसंवेशनोद्गमने वायुविकारे प्राणे, सर्वभूतसंवेशनोद्गमने तु न ततो वाक्यात्प्रतीयते । प्रतीतौ वा तत्रापि प्राणो ब्रह्मैव भवेन्न वायुविकारः । 'यदा सुप्तः स्वप्नं न कं चन पश्यत्यथास्मिन्प्राण एवैकधा भवती'त्यत्र वाक्ये यथा प्राणशब्दो ब्रह्मवचनः । न चास्मिन् वायुविकारे सर्वेषां भूतानां संवेशनोद्गमने मानान्तरेण दृश्येते । न च मानान्तरसिद्धसंवादिन्द्रियसंवेशनोद्गमनवाक्यदार्ढ्यात् सर्वभूतसंवेशनोद्गमनवाक्यं कथंचिदिन्द्रियविषयतया व्याख्यानमर्हति, स्वतःसिद्धप्रमाणभावस्य स्वभावदृढस्य मानान्तरानुपयोगात् । न चास्य तेनैकवाक्यता(१), एकवाक्यतायां च तदपि ब्रह्मपरमेव स्यादित्युक्तम् । इन्द्रियसंवेशनोद्गमनं त्ववयुत्यवादेनापि(२) घटिष्यते, 'एकं वृणीते द्वौ वृणीत' इतिवत् , न तु सर्वशब्दार्थः सङ्कोचमर्हति । तस्मात्प्रस्तावभक्तिं प्राणशब्दाभिधेयब्रह्मदृष्ट्योपासीत, न वायुविकारदृष्ट्येति सिद्धम् । तथा चोपासकस्य प्राणप्राप्तिः कर्मसमृद्धिर्वा फलं भवतीति । **"वाक्यशेषबलेने"**ति (पृ० २३९पं० २) । (३)वाक्यात्सन्निधानं दुर्बलमित्यर्थः । उदाहरणान्तरं तु निगदव्याख्यानेन भाष्येण दूषितम् ॥ २३ ॥

## ( सू० ) ज्योतिश्चरणाभिधानात् ॥ २४ ॥

इदमामनन्ति—'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतःपृष्ठेषु सर्वतःपृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योति'रिति । (४)यज्ज्योतिरतो दिवो द्युलोकात्परं दीप्यते प्रकाशते विश्वतःपृष्ठेषु विश्वेषामुपरि । असङ्कुचद्वृत्तिरयं विश्वशब्दोऽनवयवेन संसारमण्डलं ब्रूत इति दर्शयितुमाह—**'सर्वतःपृष्ठेषूत्तमेषु'** ( पृ० २४० पं० १ ) । न चेदमुत्तममात्रमपि तु सर्वोत्तममित्याह—**'अनुत्तमेषु'** । नास्त्येभ्योऽन्य उत्तम इत्यर्थः । 'इदं वाव तद्यदिदमस्मिन्पुरुषेऽन्तर्ज्योति'(५)स्त्वग्ग्राह्येण शारीरेणोष्मणा श्रोत्रग्राह्येण च पिहितकर्णेन पुंसा घोषेण लिङ्गेनानुमीयते । तत्र शारीरस्योष्मणस्त्वचा दर्शनं दृष्टिः, घोषस्य च श्रवणं श्रुतिः, तयोश्च दृष्टिश्रुती ज्योतिष एव, (६)तल्लिङ्गेन तदनुमानादिति। अत्र संशयः—किं ज्योतिःशब्दं तेज उत ब्रह्मेति । किं तावत् प्राप्तं, तेज इति । कुतः ? (७)गौणमुख्यग्रहणविशये मुख्यग्रहणस्य

---

( १ ) 'यदा वै पुरुष' इत्यस्य सम्वर्गविद्यागतत्वात् 'सर्वाणि ह वे'त्यस्य चोद्गीथविद्यागतत्वान्नैकवाक्यतासम्भव इत्यर्थः ।

( २ ) अवयुत्यवादः—विभज्य कथनम् । अवयुत्यानुवादेनापीति पाठान्तरम् ।

( ३ ) इह हि स्ववाक्ये ब्रह्मलिङ्गं दृश्यतेऽन्नादित्यसंनिधानं वाक्यान्तरसापेक्षमतः स्ववाक्यस्थलिङ्गं प्रबलमिति भाष्यार्थमाह वाक्यादिति ।

( ४ ) अथेत्यादि छान्दोग्यस्थविषयश्रुतेरर्थमाह यज्ज्योतिरिति ।

( ५ ) यदिदमित्यनुभूयमानत्वमुक्तं तद्व्याचष्टे त्वग्ग्राह्येणेति ।

( ६ ) नन्वौष्ण्यघोषोपलब्ध्योः कथं तस्येति ज्योतिःसम्बन्धनिर्देशोऽत आह तल्लिङ्गेनेति । औष्ण्यघोषलिङ्गेनेत्यर्थः । गमकसम्बन्धिनोर्गम्यसम्बन्धोपचार इत्यर्थः ।

( ७ ) गौणेत्यादि षष्ठ्यन्तस्य श्लोकेन्वयः । तथाच गौणमुख्योभयग्रहणविषये मुख्यार्थग्रहणस्य प्रायिकत्वाद्वाक्ये च तेजोलिङ्गस्यैवोपलब्धेर्वाक्यान्तरस्थलिङ्गेनानियमात्तदर्थाप्रतिसन्धानाच्च ज्योतिःशब्दोऽत्र तेजोग्राहक इति श्लोकार्थो बोध्य ।

औत्सर्गिकत्वाद्वाक्यस्थतेजोलिङ्गोपलम्भनात् ।
वाक्यान्तरेणानियमात्तदर्थाप्रतिसंधितः ॥

(१)बलवद्बाधकोपनिपातेन खल्वाकाशप्राणशब्दौ मुख्यार्थत्वात् प्रच्याव्यान्यत्र प्रतिष्ठापितौ । तदिह ज्योतिष्पदस्य मुख्यतेजोवचनत्वे बाधकस्तावत्स्ववाक्यशेषो नास्ति । प्रत्युत तेजोलिङ्गमेव 'दीप्यते' इति, कौक्षेयज्योतिःसारूप्यं च चक्षुष्यो रूपवान् श्रुतो विश्रुतो भवतीत्यल्पफलत्वं च स्ववाक्ये श्रूयते । न जातु ज्वलनापरनामा दीप्तिर्विना तेजो ब्रह्मणि सम्भवति । न कौक्षेयज्योतिःसारूप्यमृते बाह्यात्तेजसो ब्रह्मण्यस्ति । न चौष्ण्यघोषलिङ्गदर्शनश्रवणमौदर्यात्तेजसोऽन्यत्र ब्रह्मण्युपपद्यते । न च महाफलं ब्रह्मोपासनमणीयसे फलाय कल्पते । औदर्यं तु तेजस्यध्यस्य बाह्यं तेज उपासनमेतत्फलानुरूपं युज्यते । तदेतत्तेजोलिङ्गम् । एतदुपोद्बलनाय च निरस्तमपि मर्यादाधारवत्त्वमुपन्यस्तम्, (२)इह तन्निरासकारणाभावात् । न च मर्यादावत्त्वं तेजोराशेर्न सम्भवति, तस्य सौर्यादेः सावयवत्वेन तदेकदेशमर्यादासम्भवात्, (३)तस्य चोपास्यत्वेन विधानात्, ब्रह्मणस्त्वनवयवस्यावयवोपासनानुपपत्तेः, अवयवकल्पनायाश्च सत्यां गतावनवकल्पनात् । (४)न च

'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि'

इति ब्रह्मप्रतिपादकं वाक्यान्तरं, 'यदतः परो दिवो ज्योतिरि'ति ज्योतिःशब्दं ब्रह्मणि व्यवस्थापयतीति युक्तम्, नहि सन्निधानमात्राद् वाक्यान्तरेण वाक्यान्तरगता श्रुतिः शक्या मुख्यार्थाच्च्यावयितुम् । (५)न च वाक्यान्तरेऽधिकरणत्वेन द्यौः श्रुता दिव इति मर्यादाश्रुतौ शक्या प्रत्यभिज्ञातुम् । (६)अपि च वाक्यान्तरस्यापि ब्रह्मार्थत्वं प्रसाध्यमेव नाद्यापि सिध्यति तत्कथं तेन नियन्तुं ब्रह्मपरतया 'यदतः पर' इति वाक्यं शक्यम् । तस्मात्तेज एव ज्योतिर्न ब्रह्मेति प्राप्तम् । (७)तेज.कथनप्रस्तावे तमःकथनं प्रतिपक्षोपन्यासेन प्रतिपक्षान्तरे दृढा प्रतीतिर्भवतीत्येतदर्थम् । चक्षुर्वृत्तेर्निरोधकमित्यर्थावरकत्वेन(८)। आक्षेप्ताऽऽह—"ननु कार्यस्यापी"ति । समाधात्रेकदेशी (९)ब्रूते—"अस्तु तर्ही"ति । यत्तेजोवन्नाभ्यामसंपृक्तं

---

(१) वाक्यस्थेति श्लोकोक्तहेतुं व्याचष्टे बलवदिति । तत्र हि वाक्यशेषस्थब्रह्मलिङ्गाग्रीणताऽत्र तु वाक्ये ब्रह्मलिङ्गं नोपलभ्यते प्रत्युत तेजोलिङ्गमेवातः उत्सर्गो आकाशप्राणशब्दवन्नापोदयितुं शक्य इत्यर्थः ।

(२) किमुपोद्बलनाय निरासार्थं वोपन्यस्तमत आह इहेति । निरासकारणं हि प्राप्तिः, न चात्र तद्धर्मोपदेशादिति निरस्तस्यात्र प्राप्तिरित्यर्थः ।

(३) भवत्वेकदेशस्य मर्यादा न समस्तस्येत्याशंक्याह तस्य चेति । न समस्तं तेज उपास्यं किन्त्ववयव इत्यर्थः ।

(४) वाक्यान्तरेणानियमादिति श्लोकोक्तहेतुं व्याचष्टे न च पादोऽस्येति ।

(५) तदर्थाप्रतिसंधित इति हेतुं व्याकुर्वन्नाह न चेति ।

(६) अस्यैव हेतोर्व्याख्यान्तरमाहापि चेति । तेन-वाक्यान्तरेण, यदतः परमिति वाक्यं ब्रह्मपरतया नियन्तुं कथं शक्यमिति योजना ।

(७) तमोज्योतिरिति भाष्ये तमोग्रहणप्रयोजनमाह तेज इति ।

(८) अर्थावरकत्वेनेति । अनुद्भूतस्पर्शवत्त्वेन तमसो नयनरश्मिनिर्गमनप्रतिबन्धकत्वायोगादर्थप्रकाशनप्रतिबन्धकत्वेन निरोधकत्वं तमस इत्यर्थः । आक्षेप्ता—सिद्धान्ती ।

(९) एकदेशी—पूर्वपक्ष्येकदेशी ।

तदत्रिवृत्कृतमुच्यते । आक्षेप्ता दूषयति—"ने"ति । नहि तत् क्वचिदप्युपयुज्यते, सर्वास्वर्थक्रियासु त्रिवृत्कृतस्यैवोपयोगादित्यर्थः । एकदेशिनः शङ्कामाह—"इदमेवे"ति (पृ० २४१ पं० १ ) । आक्षेप्ता निराकरोति—"न, प्रयोजनान्तरे"ति । (१)'एकैकां त्रिवृतं त्रिवृत करवाणी'ति तेजःप्रभृत्युपासनामात्रविषया श्रुतिर्न सङ्कोचयितुं युक्तेत्यर्थः । एवमेकदेशिनि दूषिते परमसमाधाता पूर्वपक्षी ब्रूते—"अस्तु तर्हि त्रिवृत्कृतमेवे"ति । "भागिनी" युक्ता । यद्यप्याधारबहुत्वश्रुतिर्ब्रह्मण्यपि कल्पितोपाधिनिबन्धना कथञ्चिदुपपद्यते, तथापि यथा कार्ये ज्योतिष्यतिशयेनोपपद्यते न तथाऽत्रेत्यत उक्तम् "उपपद्यतेतरामि"ति । "प्राकृत" ( पृ० २४२ पं० १० ) प्रकृतेर्जात, कार्यमिति यावत् ।

एवं प्राप्ते, उच्यते—

(२)सर्वनामप्रसिद्धार्थं प्रसाध्यार्थविघातकृत् ।
प्रसिद्ध्यपेक्षि सत्पूर्ववाक्यस्थमपकर्षति ॥
तद्बलात्तेन नेयानि तेजोलिङ्गान्यपि ध्रुवम् ।
ब्रह्मण्येव, प्रधानं हि ब्रह्म च्छन्दो न तत्र तु ॥

(३)औत्सर्गिकं तावद्यदः प्रसिद्धार्थानुवादकत्वं यद्विधिविभक्तिमप्यपूर्वार्थावबोधनस्वभावात्प्रच्यावयति । यथा 'यस्याहिताग्नेरग्निर्गृहान्दहेत्' 'यस्योभयं हविरार्तिमार्च्छेद्' इति । (४)यत्र पुनस्तत्प्रसिद्धमन्यतो न कथंचिदाप्यते, तत्र वचनानि त्वपूर्वत्वादिति सर्वनाम्नः प्रसिद्धार्थत्वं बलादपनीयते । यथा 'यदाग्नेयोऽष्टाकपालो भवती'ति । (५)तदिह 'यदतः परो दिवो ज्योतिरि'ति यच्छब्दसामर्थ्याद् द्युमर्यादेनापि ज्योतिषा प्रसिद्धेन भवितव्यम् । न च तस्य प्रमाणान्तरतः प्रसिद्धिरस्ति । पूर्ववाक्ये च द्युसम्बन्धि त्रिपाद्ब्रह्म प्रसिद्धमिति प्रसिद्ध्यरक्षाया तदेव सम्बध्यते । (६)न च प्रधानस्य प्रातिपदिकार्थस्य तत्त्वेन प्रत्यभिज्ञाने तद्विशेषणस्य विभक्त्यर्थ-

---

( १ ) त्रिवृत त्रिवृतमिति भाष्यं व्याचष्टे एकैकामिति । तेजआदिभूत प्रति सामान्यत. प्रवृत्ता त्रिवृत्करणश्रुतिरुपास्यमानतेजोविषयत्वेन संकोचयितु न युक्ता, ततोऽन्यत्र नेतुमयुक्तेत्यर्थ । त्रिवृतं—त्रिवलितम् ।

( २ ) न वय वाक्यान्तरस्थलिङ्गात्ते जश्रुति बाधामहेऽपि तु तदुपबृंहितश्रुत्येत्याह सर्वनामेति । यदादिसर्वनामपदं प्रज्ञातार्थबोधकमज्ञात सत् अर्थाबोधकमतो यच्छन्द प्रज्ञातवचन सन्गायत्रीवाक्यनिर्दिष्ट ब्रह्मैव परामृशतीत्यर्थ । तद्बलादिति । यत पूर्ववाक्यस्थमपकर्षत्यतो यच्छब्दश्रुतिबलात्तेजोलिङ्गान्यपि वाक्यानि ब्रह्मण्येव नेयानि सगमनीयानि । तत्र गायत्रीवाक्ये प्रातिपदिकार्थो यो ब्रह्म प्रधानं न तु छन्द इति कारिकार्थ ।

( ३ ) सर्वनामेति व्याचष्टे औत्सर्गिकमिति । यथेति । अत्र दहेदिति च विधिविभक्ति प्रसिद्धार्थयच्छब्दोपहता गृहदाहलक्षणनिमित्तपरा, आर्च्छेदिति च 'स ऐन्द्रं पचशरावमोदन निर्वपेदि'ति विधास्यमाननिर्वापनिमित्तं हविरार्तिमनुवदति । उभयं—दधिपयसी ।

( ४ ) प्रसाध्यार्थेति व्याकुरुते यत्रेति । वचनानि त्विति । ज्योतिष्टोमगतसोमेषु शेषभक्षो विध्यभावान्न विद्यते इति प्राप्ते 'सर्वत परिहारमाश्विनं भक्षयति तस्मात्सर्वा दिशः शृणोति' इत्याद्यर्थवादा अप्राप्तत्वाद्भक्षानुवादायोगाद्विधायकानि वचनानि इत्युक्तम् तृतीये । एव प्राप्त्यभावे प्रसिद्धार्थत्व सर्वनाम्नोऽपनीयत इति तुल्यन्यायत्वादुदाहृतम् ।

( ५ ) प्रसिद्ध्यपेक्षीति व्याचष्टे तदिहेति ।

( ६ ) ननु 'दिवि' 'दिव'इति च रूपभेदान्न पूर्ववाक्यस्थब्रह्मण इह प्रत्यभिज्ञाऽतः सर्वनाम तं न परामृशे-

स्यान्यतामात्रेणान्यता युक्ता । एवं च स्ववाक्यस्थानि तेजोलिङ्गान्यसमञ्जसानीति ब्रह्मण्येव गमयितव्यानि, गमितानि च भाष्यकृता । तत्र ज्योतिर्ब्रह्मविकार इति ज्योतिषा ब्रह्मैवोपलक्ष्यते । अथवा प्रकाशमात्रवचनो ज्योतिःशब्दः, प्रकाशश्च ब्रह्मेति ब्रह्मणि मुख्य इति ज्योतिर्ब्रह्मेति सिद्धम् । "प्रकृतहानाप्रकृतप्रक्रिये" इति ( पृ० २४२ पं० ५ ) प्रसिद्ध्यपेक्षायां(१) प्रकृतं सन्निहितप्रसिद्धं तु कल्प्यं न पूर्ववाक्यगतं प्रकृतम् । अत एवोक्तं कल्पयत इति । संदंशन्यायमाह—"न केवल"मिति । "परस्यापि ब्रह्मणो नामादिप्रतीकत्ववदि"ति ( पृ० २२४ पं० १५ ) । कौक्षेयं हि ज्योतिर्जीवभावेनानुप्रविष्टस्य परमात्मनो विकारो, जीवाभावे देहस्य शैत्यात्, जीवतश्चौष्ण्याज्ज्ञायते । तस्मात्तत्प्रतीकस्योपासनमुपपन्नम् । शेषं निगदव्याख्यातं भाष्यम् ॥ २४ ॥

## ( सू० ) छन्दोभिधानान्नेति चेन्न, तथा चेतोर्पणनिगदात्तथाहि दर्शनम् ॥ २५ ॥

(२)पूर्ववाक्यस्य हि ब्रह्मार्थत्वे सिद्धे स्यादेतदेवं, न तु तद्ब्रह्मार्थमपि तु गायत्र्यर्थम् । 'गायत्री वा इदं सर्वं भूतं यदिदं किं चे'ति गायत्रीं प्रकृत्येदं श्रूयते 'त्रिपादस्यामृतं दिवी'ति । (३)नन्वा'काशस्तल्लिङ्गादि'त्यनेनैव गतार्थमेतत् । तथाहि—'तावानस्य महिमे'त्यस्यामृचि ब्रह्म चतुष्पादुक्तम् । सैव च 'तदेतदृचाभ्यनूक्तमि'त्यनेन सन्नमितार्था ब्रह्मलिङ्गम् । एवं 'गायत्री वा इदं सर्वमि'त्यक्षरसन्निवेशमात्रस्य गायत्र्या न सर्वत्वमुपपद्यते । (४) न च भूतपृथिवीशरीरहृदयवाक्प्राणात्मत्वं गायत्र्याः स्वरूपेण सम्भवति । न च ब्रह्मपुरुषसम्बन्धित्वमस्ति गायत्र्याः । तस्माद्गायत्रीद्वारा ब्रह्मण एवोपासना न गायत्र्या इति पूर्वेणैव गतार्थत्वादनारम्भणीयमेतत् । न च पूर्वन्यायस्मारणे सूत्रसन्दर्भ एतावान् युक्तः । (५)अत्रोच्यते । अस्त्यधिकाशङ्का । तथाहि—गायत्रीद्वारा ब्रह्मोपासनेति कोऽर्थः । गायत्रीविकारोपाधिनो ब्रह्मण उपासनेति । न च तदुपाधिनस्तदवच्छिन्नस्य सर्वात्मत्वम्, उपाधेरवच्छेदात् । नहि घटावच्छिन्नं नभोऽनवच्छिन्नं भवति । तस्मादस्य सर्वात्मत्वादिकं स्तुत्यर्थं, तद्वर गायत्र्या एवास्तु स्तुतिः (६)कयाचित्प्रणाड्या । 'वाग्वै गायत्री वाग्वा इदं सर्वं भूत

---

दित्याशंक्याह न चेति । प्रातिपदिकार्थो यौस्तावदुभयत्र समा, सा हि प्रधानं गुणस्तु विभक्त्यर्थस्तस्माद्गुणे त्वन्याय्यकल्पनेति विभक्तिवैरूप्यं नेयमित्यर्थः ।

( १ ) ननु वाक्यस्थज्योतिर्लाभे प्रकृतहानं न दोषोऽत आह प्रसिद्ध्यपेक्षायामिति । यच्छ्रुतेर्विषयगवेषणाया प्रकरणाप्राप्तमपि प्रसिद्धं ग्राह्यम्, न स्ववाक्यगतमपि प्रस्तोष्यमाणमपूर्वप्रसिद्धेरित्यर्थः ।

( २ ) छन्दोभिधानादितिसूत्रैकदेशशङ्काव्याचष्टे पूर्ववाक्यस्येति ।

( ३ ) तत्र सिद्धान्त्याक्षिपति नन्वित्यादि युक्त इत्यन्तम् ।

( ४ ) न च भूतपृथिवीति । 'गायत्री वाव इदं सर्वं भूतं यदिदं किं च वै इत्यादिश्रुतौ भूतादिषड्विधगायत्र्याः स्वरूपतो भूताद्यात्मकत्वं न सम्भवतीत्यर्थः ।

( ५ ) एकदेशशङ्कावादी समाधत्ते अत्रोच्यते इत्यादिना ।

( ६ ) ननु शब्दात्मिकायाश्छन्दोरूपाया गायत्र्याः कथं स्तुतिरत आह कयाचिदिति । तदधिष्ठात्र्या देवताया सर्वभूतात्मकत्वमभिप्रेत्येत्यर्थः ।

गायति च त्रायति चे'त्यादि श्रुतिभ्यः । (१) तथा च 'गायत्री वा इदं सर्व'मित्युपक्रमे गायत्र्या एव हृदयादिभिर्व्याख्या, व्याख्याय च 'सैषा चतुष्पदा षड्विधा गायत्री'त्युपसंहारो गायत्र्यामेव समञ्जसो भवति । ब्रह्मणि तु सर्वमेतदसमञ्जसमिति । 'यद्वै तद्ब्रह्मे'ति च ब्रह्मशब्दश्छन्दोविषय एव, यथे'ता ब्रह्मोपनिषदमि'त्यत्र वेदोपनिषदुच्यते । तस्माद्गायत्रीछन्दोभिधानान्न ब्रह्मविषयमेतदिति प्राप्तम् ।

एवं प्राप्तेऽभिधीयते—"न, कुतः, ? **तथा चेतोर्पणनिगदात्**" । (पृ० २४६ पं० ८ ) गायत्र्याख्यच्छन्दोद्वारेण गायत्रीरूपविकारानुगते ब्रह्मणि चेतोर्पणं चित्तसमाधानमनेन ब्राह्मणवाक्येन निगद्यते । एतदुक्तं भवति । न गायत्री ब्रह्मणोऽवच्छेदिका, उत्पलस्येव नीलत्वं, येन तदवच्छिन्नत्वमन्यत्र न स्यादवच्छेदविरहात् । किन्तु यदेव तद्ब्रह्म सर्वात्मकं सर्वकारणं तत्स्वरूपेणागक्योपदेशमिति तद्विकारगायत्रीद्वारेणोपलक्ष्यते, गायत्र्याः (२)सर्वच्छन्दोव्याप्त्या च सवनत्रयव्याप्त्या च द्विजातिद्वितीयजन्मजननीतया च श्रुतेर्विकारेषु मध्ये प्राधान्येन द्वारत्वोपपत्तेः । न चात्रोपलक्षणाभावेन नोपलक्ष्यं प्रतीयते, नहि कुण्डलेनोपलक्षितं कण्ठरूपं कुण्डलवियोगेऽपि पश्चात्प्रतीयमानमप्रतीयमानं भवति, तद्रूपप्रत्यायनमात्रोपयोगित्वादुपलक्षणानामनवच्छेदकत्वात् ।

तदेवं गायत्रीशब्दस्य मुख्यार्थत्वे गायत्र्या ब्रह्मोपलक्ष्यत इत्युक्त, संप्रति तु गायत्रीशब्दः संख्यासामान्याद्गौण्या वृत्त्या ब्रह्मण्येव वर्तत इति दर्शयति—"**अपर आहे**"ति (पृ० २४७ पं० १ ) । तथाहि—षडक्षरैः पादैर्यथा गायत्री चतुष्पदा, एवं ब्रह्मापि चतुष्पाद् । सर्वाणि हि भूतानि स्थावरजङ्गमान्यस्यैकः पादः । दिवि—द्योतनवति चैतन्यरूपे, स्वात्मनीति यावत्, त्रयः पादा (३) । (४)अथवा दिव्याकाशे त्रयः पादाः । तथाहि श्रुतिः—'इदं वाव तद्योऽयं बहिर्धा पुरुषादाकाश'स्तद्धि तस्य जागरितस्थानं, जाग्रत् खल्वयं बाह्यान् पदार्थान् वेद । तथा 'ऽयं वाव स योऽयमन्तःपुरुष आकाशः' । शरीरमध्य इत्यर्थः, तद्धि तस्य स्वप्नस्थानम् । तथा'ऽयं वाव स योऽयमन्तर्हृदय आकाशः' । हृदयपुण्डरीक इत्यर्थः, तद्धि तस्य सुषुप्तिस्थानम् । तदेत'त्रिपादस्यामृतं दिवी'त्युक्तम् । तदेवं चतुष्पात्त्वसामान्याद्गायत्रीशब्देन ब्रह्मोच्यते इति । "**अस्मिन्पक्षे ब्रह्मैवाभिहित**"मिति । ब्रह्मपरत्वादभिहितमित्युक्तम् ॥ २५ ॥

---

(१) उपक्रमोपसंहाराभ्यामपि गायत्रीस्तुतिरेव साधीयसीत्याह तथा चेति ।

(२) सर्वच्छन्द इति । एवं हि श्रूयते 'चतुरक्षराणि छन्दांस्यग्रे समभवन्, तेषु जगती सोमाहरणाय गता त्रीण्यक्षराणि हित्वाऽऽगच्छत् । एकं हित्वा त्रिष्टुबागता । गायत्री तु गत्वा तानि गलितानि चत्वार्यक्षराणि सोमं चाहृतवती, तत साऽष्टाक्षराऽभवत्तयैव सवनत्रयमतन्वन्त याज्ञिकाः' । एवं माध्यंदिनादिसवने त्रिष्टुबादिप्रार्थनया गायत्र्युपाह्वाने एकादशाक्षरा द्वादशाक्षरा चाभवदित्युक्त्वोपसंहृतं—तस्मादाहुर्गायत्राणि वै सर्वाणि सवनानि' इति, अतस्सर्वच्छन्दोव्याप्तिः । तथा 'गायत्र्या ब्राह्मणमसृजत् त्रिष्टुभा राजन्यं जगत्या वैश्यम्' इति श्रुतेश्च द्विजातिद्वितीयजन्मजननीत्वं बोध्यम् ।

(३) त्रयः पादा इति । अल्पं प्रपञ्चं पादमपेक्ष्य स्वरूपमपरिच्छिन्नत्वात् त्रयः पादा इति भावः ।

(४) दिवीति वाक्यशेषवशात् त्रिपादिति मन्त्रस्य व्याख्यान्तरमाह अथवेति । पद्यते ज्ञायते एभिस्तुरीयमिति विश्वतैजसप्राज्ञाख्य पादा एते यस्य तत्त्रिपात्तुरीयं स्वपादद्वारा गगनेऽवस्थितमित्यर्थो मन्त्रस्य तन्मते बोध्य ।

**(सू०) भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥**

**"षड्विधे"ति** ( पृ० २४७ प० ५ ) । भूतपृथिवीशरीरहृदयवाक्प्राणा इति षट् प्रकारा गायत्र्याख्यस्य ब्रह्मणः श्रूयन्ते । **"पञ्च ब्रह्मपुरुषा** ( छा० ३।१।३६ ) **इति च हृदयसुषिषु ब्रह्मपुरुषश्रुतिर्ब्रह्मसम्बन्धितायां विवक्षितायां सम्भवति"** ( पृ० २४९ प १ ) । अस्यार्थः—(१)हृदयस्यास्य खलु पञ्च सुषयः, पञ्च छिद्राणि, तानि च देवैः प्राणादिभी रक्ष्यमाणानि स्वर्गप्राप्तिद्वाराणीति देवसुषयः । तथाहि—हृदयस्य यत्प्राङ्मुख छिद्रं तत्स्थो यो वायुः स प्राणस्तेन हि(२) प्रायणकाले सञ्चरते स्वर्गलोकं, स एव चक्षुः स एवादित्य इत्यर्थः, 'आदित्यो ह वै बाह्यः प्राण' इति श्रुतेः । अथ योऽस्य दक्षिणः सुषिस्तत्स्थो वायुविशेषो व्यानः । तत्सम्बद्धं श्रोत्रं तच्चन्द्रमाः, 'श्रोत्रेण सृष्टा दिशश्चन्द्रमाश्चे'ति श्रुतेः । अथ योऽस्य प्रत्यङ्मुखः सुषिस्तत्स्थो वायुविशेषोऽपानस्स च वाक् तत्सम्बन्धाद्, वाक् चाग्निरिति, 'वाग्वा अग्नि'रिति श्रुतेः । अथ योऽस्योदङ्मुखस्सुषिस्तत्स्थो वायुविशेषस्स समानः, तत्सम्बद्धं मनः, तत्पर्जन्यो देवता । अथ योऽस्योर्ध्वस्सुषिस्तत्स्थो वायुविशेषस्स उदानः, पादतलादारभ्योर्ध्वं नयनात्स वायुस्तदाधारश्चाकाशो(३) देवता । ते वा एते पञ्च सुषयः । तत्सम्बद्धाः पञ्च हार्दस्य ब्रह्मणः पुरुषा(४) न गायत्र्यामक्षर सन्निवेशमात्रे सम्भवन्ति, किन्तु ब्रह्मण्येवेति ॥ २६ ॥

**(सू०) उपदेशभेदान्नेति चेत् नोभयस्मिन्नप्यविरोधात् ॥२७॥**

**"यथा लोके"** इति ( पृ० २४८ पं० १० ) । (५)यदाऽऽधारत्वं मुख्यं दिवस्तदा कथंचिन्मर्यादा व्याख्येया । यो हि श्येनो वृक्षाग्रे वस्तुतोऽस्ति स च ततः परतोप्यस्त्येव, अर्वाग्भागातिरिक्तमध्यपरभागस्थस्य तस्यैव वृक्षात्परतोऽवस्थानात् । (६)एवं च बाह्यद्युभागातिरिक्तशरीरहार्दद्युभागस्थस्य ब्रह्मणो बाह्याद् द्युभागात् परतोऽवस्थानमुपपन्नम् ।

(७)यदा तु मर्यादैव मुख्यतया प्राधान्येन विवक्षिता तदा लक्षणयाऽऽधारत्वं व्याख्येयम् । यथा गङ्गायां घोष इत्यत्र सामीप्यादिति । तदिदमुक्तम् **"अपर आह"**ति । (८)अत एव दिवः परमपीत्युक्तम् ॥ २७ ॥

---

(१) गायत्र्याख्यस्य ब्रह्मणो हृदि स्थितस्योपासनाङ्गत्वेन द्वारपालादिगुणविध्यर्थं तस्य हेत्यादिवाक्य तदर्थतोऽनुक्रमति हृदयस्येत्यादिना । प्रागादिदिग्गता हृदयकमलसुषयो द्वाराणि तत्स्था प्राणादिपञ्चवायवो द्वारपालास्ते च चक्षुरादिकरणयुक्ता आदित्यादिदेवैराधिष्ठिता इति समुदायार्थः ।

(२) प्राणशब्द निर्वक्ति प्रायणकाले इति ।

(३) आकाश –परमेश्वर । (४) पुरुषा–प्राणादय ।

(५) पदादावुक्त प्रधानप्रकृत्यर्थप्रत्यभिज्ञानुरोधेन प्रत्ययार्थवैषम्य नेयमिति तदुपदर्शक भाष्य व्याचष्टे यदाधारत्वमिति । यदा मुख्यमाधारत्व वृक्षाग्रस्य विवक्षित तदा वृक्षाग्रात्परत श्येन इति प्रयोगे श्येनशब्दो वृक्षाग्रलग्नश्येनावयवादुपरितनावयवावच्छिन्नावयविलक्षक इत्यर्थ ।

(६) अस्मिन्पक्षे दार्ष्टान्तिके ब्रह्मण श्येनवदवयवाभावाद्दिव इति श्रुति लक्षणया व्याचष्टे एवं चेति । शक्यते च दृष्टान्तेपि वृक्षाग्रादित्यवधिश्रुतिर्लक्षणया नेतुम् अग्रभागादीपदर्वाग्भागपरत्वे तदा दार्ष्टान्तिकेन साम्यमित्यर्थ ।

(७) यदा त्वनौपाधिक ब्रह्माकाशास्पृष्ट विवक्षित्वा पंचम्येव मुख्या तदा सप्तमी सामीप्यसम्बन्ध लक्षयतीत्याह यदा त्विति । (८) अत एवेति । सर्वमर्यादाया मुख्यत्वादेवेत्यर्थ ।

## (सू०) प्राणस्तथानुगमात् ॥ २८ ॥

(१)अनेकलिङ्गसन्दोहे बलवत्कस्य किं भवेत् ।
लिङ्गिनो लिङ्गमित्यत्र चिन्त्यते प्रागचिन्तितम् ॥

मुख्यप्राणजीवदेवताब्रह्मणामनेकेषां लिङ्गानि बहूनि सम्प्लवन्ते, तत्कतमदत्र लिङ्गं, लिङ्गाभासं च कतमदित्यत्र विचार्यते । न चायमर्थोऽ'त एव प्राण' इत्यत्र विचारितः ।

(२)स्यादेतत् हिततमपुरुषार्थसिद्धिश्च निखिलभ्रूणहत्यादिपापापरामर्शश्च प्रज्ञात्मत्वं चानन्दादिश्च न मुख्ये प्राणे सम्भवन्ति । तथै'ष साधु कर्म कारयति, एष लोकाधिपतिरि'त्याद्यपि । जीवे तु प्रज्ञात्मत्व कथंचिद्भवेदितरेषा त्वसम्भवः । वक्तृत्वं च वाक्करणव्यापारवत्त्व यद्यपि परमात्मनि स्वरूपेण न सम्भवति, (३)तथाप्यनन्यथासिद्धबहुब्रह्मलिङ्गविरोधाज्जीवद्वारेण ब्रह्मण्येव कथंचिद्व्याख्येयम् , जीवस्य ब्रह्मणोऽभेदात् । तथा च श्रुतिः-'यद्वाचानभ्युदितं येन वागभ्युद्यते, तदेव ब्रह्म त्वं विद्धी'ति वाग्वदनस्य ब्रह्म कारणमित्याह । शरीरधारणमपि यद्यपि मुख्यप्राणस्यैव, तथापि प्राणव्यापारस्य परमात्मयत्तत्वात्परमात्मन एव । यद्यपि चात्रेन्द्रदेवताया विग्रहवत्या लिङ्गमस्ति, तथाहि इन्द्रधामगतं प्रतर्दनं प्रतीन्द्र उवाच 'मामेव विजानीही'त्युपक्रम्य, 'प्राणोऽस्मि प्रज्ञात्मे'त्यात्मनि प्राणशब्दमुच्चचार, प्रज्ञात्मत्वं चास्योपपद्यते, देवतानामप्रतिहतज्ञानशक्तित्वात् , सामर्थ्यातिशयाच्चेन्द्रस्य हिततमपुरुषार्थहेतुत्वमपि, मनुष्याधिकारत्वाच्छास्त्रस्य देवान्प्रत्यप्रवृत्तेर्भ्रूणहत्यादिपापापरामर्शस्योपपत्तेः, लोकाधिपत्य चेन्द्रस्य लोकपालत्वात् , आनन्दादिरूपत्वं च स्वर्गस्यैवानन्दत्वात् , 'आभूतसम्प्लवं स्थानममृतत्वं हि भाष्यत' इति स्मृतेश्चामृतत्वमिन्द्रस्य,'त्वाष्ट्रमहनामि'त्याद्या च विग्रहवत्त्वेन स्तुतिस्तत्रैवोपपद्यते । तथाऽपि परमपुरुषार्थस्यापवर्गस्य परब्रह्मज्ञानादन्यतोऽनवाप्तेः, परमानन्दरूपस्य मुख्यस्यामृतत्वस्याजरत्वस्य च ब्रह्मरूपाव्यभिचाराद्ध्यात्मसम्बन्धभूम्नश्च पराचीन्द्रेऽनुपपत्तेः, इन्द्रस्य देवताया आत्मनि प्रतिबुद्धस्य चरमदेहस्य वामदेवस्येव प्रारब्धविपाककर्माशयमात्रं भोगेन क्षपयतो ब्रह्मण एव सर्वमेतत्कल्पत इति विग्रहवदिन्द्रजीवप्राणवायुपरित्यागेन ब्रह्मैवात्र प्राणशब्दं प्रतीयत इति पूर्वपक्षाभावादनारभ्यमेतदिति ॥

(४)अत्रोच्यते-'यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः सह ह्येतावस्मिन् शरीरे वसतः

---

( १ ) अनेकेति । अनेकेषा लिङ्गान्यनेकानि च तानि लिङ्गानि वा प्रतिपदार्थमनेकानीति यावत्तेषामेकत्वेन प्रतिभासमानवाक्ये समावेशे किं बलवत् किममूनि सर्वाणि समबलानि उतैकमेव बलवद्यादा चैकमेव तदा कस्य लिंगिनो लिंगं बलवत् किं ब्रह्मण उत प्राणादेरित्येतदत्र चिन्त्यते, एतच्च प्राग् अत एव प्राण इत्यत्र न चिन्तितम् । तत्र हि ब्रह्मलिङ्गात्प्राणश्रुतिर्नीता न तु ब्रह्मलिङ्गानां बलाबलं विचारितम्', इति अधिमाधिकरणसङ्गतिकारिकार्थ' । कारिकार्थमेवाह मुख्येति ।

( २ ) अनन्यथासिद्धब्रह्मलिङ्गानुसारेणेतरेषामन्यथासिद्धिवदन्तस्तद्धर्मोपदेशादित्यनेन पुनरुक्तिं शङ्कते स्यादेतदिति ।

( ३ ) देवतालिङ्गस्यान्यथासिद्धिमाह तथापीति ।

( ४ ) वसत इति द्विवचनश्रुत्या सहोत्क्रमणादिलिङ्गानुगृहीतयोपास्यभेदप्रतीतेर्न वाक्यस्य ब्रह्ममात्रपरत्वनिर्णय इति वदन् पूर्वपक्षसम्भवमाह अत्रोच्यत इति । तस्य प्राणस्य प्रज्ञात्मना जीवेन सहोपास्यत्वमुक्तमित्यर्थः ।

सहोत्क्रामत' इति यस्यैव प्राणस्य प्रज्ञात्मन उपास्यत्वमुक्तं तस्यैव प्राणस्य प्रज्ञात्मना सहोत्क्रमणमुच्यते । न च ब्रह्मण्यभेदे द्विवचनं, न सहभावो, न चोत्क्रमणम् । तस्माद्वायुरेव प्राणः । जीवश्च प्रज्ञात्मा । सह प्रवृत्तिनिवृत्त्या भक्त्यैकत्वमनयोरुपचरितं 'यो वै प्राण'इत्यादिना । आनन्दामराजरापहतपाप्मत्वादयश्च ब्रह्मणि प्राणे(१) भविष्यन्ति । तस्माद्यथायोगं त्रय एवात्रोपास्याः । न चैष वाक्यभेदो दोषमावहति, वाक्यार्थावगमस्य पदार्थावगमपूर्वकत्वात्, (२)पदार्थानां चोक्तेन मार्गेण स्वातन्त्र्यात् । तस्मादुपास्यभेदादुपासात्रैविध्यमिति पूर्वपक्षः ।

सिद्धान्तस्तु(३) सत्यं पदार्थावगमोपायो वाक्यार्थावगमो, न तु पदार्थावगमपराण्येव पदानि, अपि त्वेकवाक्यार्थावगमपराणि । तमेव त्वेकं वाक्यार्थं पदार्थावगममन्तरेण न शक्नुवन्ति कर्तुमित्यन्तरा तदर्थमेव तमप्यवगमयन्ति, तेन पदानि विशिष्टैकार्थावबोधनस्वरसान्येव बलवद्बाधकोपनिपातान्नानार्थबोधपरतां नीयन्ते । यथाहुः—

सम्भवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते ।

इति । तेन यथोपांशुयाजवाक्ये जामितादोषोपक्रमे तत्प्रतिसमाधानोपसंहारे चैकवाक्यत्वाय 'प्रजापतिरुपांशु यष्टव्य' इत्यादयो न पृथग्विषयः किं त्वर्थवादा इति निर्णीतम्, तथेहापि 'मामेव विजानीही'त्युपक्रम्य 'प्राणोऽस्मि प्रज्ञात्मे'त्युक्त्वाऽन्ते 'स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृत' इत्युपसंहाराद्ब्रह्मण्येकवाक्यत्वावगतौ सत्यां जीवमुख्यप्राणलिङ्गे अपि तदनुगुणतया नेतव्ये, अन्यथा वाक्यभेदप्रसङ्गात् । यत्पुनर्भेददर्शनं 'सह ह्येता'विति, तज्ज्ञानक्रियाशक्तिभेदेन (४)बुद्धिप्राणयोः प्रत्यगात्मोपाधिभूतयोर्निर्देशः प्रत्यगात्मानमेवोपलक्षयितुम् । (५)अत एवोपलक्ष्यस्य प्रत्यगात्मस्वरूपस्याभेदमुपलक्षणाभेदेनोपलक्षयति—"प्राण एव प्रज्ञात्मे"ति ।

(६)तस्मादनन्यथासिद्धब्रह्मलिङ्गानुसारतः ।
एकवाक्यबलात्प्राणजीवलिङ्गोपपादनम् ॥

इति सङ्ग्रहः ॥ २८ ॥

## (सू०) न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ २९ ॥

---

(१) ब्रह्मणि प्राण इति । 'स एष प्राण आनन्दोऽजर' इत्यत्र प्राणशब्दो ब्रह्मवाचीत्यर्थः ।

(२) भवतु पदार्थावगमपूर्वको वाक्यार्थावगमस्तथापि गामानयेत्यादाविवैकवाक्यता किं न स्यादत आह पदार्थानां चेति । गुणप्रधानयोग्यपदार्थावगमे भवत्येकवाक्यता, इह तु सहोत्क्रामत इत्यादिभिः स्वातन्त्र्यावगतेर्वाक्यभेद इत्यर्थः ।

(३) पदार्थावबोधो हि वाक्यार्थबोधे हेतुरत एव स गुणः, उद्देश्यस्तु वाक्यार्थप्रत्ययः प्रधानमतो न प्रतीतैकवाक्यताभङ्ग इति सिद्धान्तयति सत्यमित्यादिना ।

(४) ज्ञानशक्तिमती बुद्धिः, क्रियाशक्तिमांश्च प्राणः ।

(५) यदि प्रत्यगात्मोपाधी भेदेन निर्दिष्टौ न तु जीवप्राणौ स्वातन्त्र्येण कथं तर्हि प्राण एव प्रज्ञात्मेत्युपक्रम्योपास्त्येति तयोरुपास्यत्वनिर्देशः, भेदेनोक्तयोर्वा कथमभेदनिर्देशोऽत आह अत एवेति ।

(६) उपसंहारार्थसंग्रहकारिकामाह तस्मादिति ।

## शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३० ॥
## जीवमुख्यप्राणलिङ्गादिति चेन्नोपासात्रैविध्यादा-श्रितत्वादिह तद्योगात् ॥ ३१ ॥

**"न ब्रह्मवाक्यं भवितुमर्हती"ति** (पृ० २५५ पं० ४) नैष सन्दर्भो (१)ब्रह्मवाक्यमेव भवितुमर्हतीति, किन्तु यथायोगं किंचिदत्र जीववाक्यं, किंचिन्मुख्यप्राणवाक्यं किंचिद्ब्रह्मवाक्यमित्यर्थः। **"प्रज्ञासाधनप्राणान्तराश्रयत्वादि"ति**। (२)प्राणान्तराणीन्द्रियाणि, तानि हि मुख्ये प्राणे प्रतिष्ठितानि। **जीवन्मुख्यप्राणयोरन्यतर** इत्युपक्रममात्रम्। **"उभा"विति** पूर्वपक्षतत्त्वम्। ब्रह्म तु ध्रुवम्। **"न ब्रह्मे"ति** (पृ०२५६ पं० १)। न ब्रह्मैवेत्यर्थः। **"दशानां भूतमात्राणामि"ति**। पञ्च शब्दादयः पञ्च पृथिव्यादय इति दश भूतमात्राः। पञ्च बुद्धीन्द्रियाणि पञ्च बुद्धय इति दश प्रज्ञामात्राः।

तदेवं स्वमतेन व्याख्याय प्राचां वृत्तिकृतां मतेन व्याचष्टे—**"अथ वे"ति** (पृ० २५७ पं० १) (३)पूर्वं प्राणस्यैकमुपासनमपरं जीवस्यापरं ब्रह्मण इत्युपासनात्रैविध्येन वाक्यभेदप्रसङ्गो दूषणमुक्तम्, इह तु ब्रह्मण एकस्यैवोपासात्रयविशिष्टस्य विधानान्न वाक्यभेद इत्यभिमानः प्राचां वृत्तिकृताम्। तदेतदालोचनीयं—कथं न वाक्यभेद—इति। (४)युक्तं 'सोमेन यजेते'त्यादौ सोमादिगुणविशिष्टयागविधानं तद्गुणविशिष्टस्यापूर्वस्य कर्मणोऽप्राप्तस्य विधिविषयत्वात्, इह तु सिद्धरूपं ब्रह्म न विधिविषयो भवितुमर्हति, अभावार्थत्वात्, भावार्थस्य विधिविषयत्वनियमाद्, वाक्यान्तरेभ्यश्च ब्रह्मावगतेः प्राप्तत्वात्, तदनूद्याप्राप्तोपासा भावार्थो विधेयस्तस्य च भेदाद्विध्यावृत्तिलक्षणो वाक्यभेदोऽतिस्फुट इति भाष्यकृता नोद्घाटितः, स्वव्याख्यानेनैवोक्तप्रायत्वादिति सर्वमवदातम् ॥ २९ ॥ ३० ॥ ३१ ॥

इति श्रीवाचस्पतिमिश्रविरचिते भाष्यविभागे भामत्यां प्रथमस्याध्यायस्य प्रथम पादः ॥

अथ द्वितीयं पादमारिप्सुः पूर्वोक्तमर्थं स्मारयति वक्ष्यमाणोपयोगितया—**"प्रथमे पाद"** इति (पृ० १५९ प० ९)। उत्तरत्र हि ब्रह्मणो व्यापित्वनित्यत्वादयः सिद्धवद्धेतुतयोपदेक्ष्यन्ते। न चैते साक्षात्पूर्वमुपपादिता इति हेतुभावेन न शक्या उपदेष्टुमिति, अत उक्तम्—**"समस्तजगत्कारणस्ये"ति** (पृ० १६० पं० १) यद्यप्येते न पूर्वं कण्ठत उक्तास्त-

---

(१) ननु जीवप्राणब्रह्मणामुपास्यत्वेन यदि पूर्वपक्षः कथं तर्हि जीवमुख्यप्राणलिङ्गसूत्रावतारकपूर्वपक्षभाष्ये ब्रह्मपरत्वनिषेधोक्त आह ब्रह्मवाक्यमेवेति। ब्रह्मपरत्वनियमो निषिध्यत इत्यर्थः।

(२) एतत्सूत्रपूर्वपक्षभाष्य एव प्राणस्य प्रज्ञात्मत्वमुपपादयितुं प्रज्ञेत्यादि भाष्यम्, तत्र प्राणान्तरशब्दार्थमाह प्राणान्तराणीति।

(३) पूर्वोत्तरव्याख्ययोः सूत्रार्थं विभजते पूर्वमिति। उपासनात्रैविध्यप्रसङ्गादिति पूर्वत्र व्याख्यानमत्र तु एकस्या उपासनायास्त्रिविधत्वान्न वाक्यभेद इति व्याख्यानमित्यर्थः।

(४) अत्र तावत्किमुपासनात्रयविशिष्टब्रह्मविधिरुत ब्रह्मविशिष्टोपासनात्रयविधिरथवा तदनुवादेन तदाश्रितोपासनत्रयविधिरिति विकल्प्य नाद्य इत्याह युक्तमिति। न द्वितीय इत्याह वाक्यान्तरेभ्यश्चेति। विशेषणीभूतब्रह्मण सन्निधौ प्राप्तत्वात् न तद्विशिष्टोपासनविधिरित्यर्थः। ततस्तृतीयकल्पः परिशिष्यत इत्याह तदनूद्येति। त दूषयति तस्य चेति। ब्रह्मानुवादेनोपासनविधावेकविशेष्यावशीकारादुपासनानां च परस्परमसङ्गात्त्र्युपास्तिविध्यावृत्त्यापात इत्यर्थः।

थापि ब्रह्मणो जगज्जन्मादिकारणत्वोपपादनेना(१)धिकरणसिद्धान्तन्यायेनोपक्षिप्ता इत्युपन्यस्तेषामुत्तरत्र हेतुभावेनोपन्यास इत्यर्थः । "अर्थान्तरप्रसिद्धानां च"ति । यत्रार्थान्तरप्रसिद्धा एवाकाशप्राणज्योतिरादयो ब्रह्मणि व्याख्यायन्ते तदव्यभिचारालिङ्गश्रवणात् तत्र कैव कथा मनोमयादीनामर्थान्तरे प्रसिद्धानां पदानां ब्रह्मगोचरत्वनिर्णय प्रतीत्यभिप्रायः । (२)पूर्वपक्षाभिप्रायं त्वग्रे दर्शयिष्यामः ।

## (सू०) सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

**"इदमाम्नायते-सर्वं खल्विदं ब्रह्म, कुतः ? तज्जलानि"ति** । यतस्तस्माद्ब्रह्मणो जायत इति तज्जम् , तस्मिंश्च लीयत इति तल्लम् , तस्मिंश्चानिति स्थितिकाले चेष्टत इति तदनं जगत्तस्मात्सर्वं खल्विदं जगद्ब्रह्म । अतः कः कस्मिन् रज्यते कश्च कं द्वेष्टीति रागद्वेषरहितः शान्तः सन्नुपासीत । **"अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीर"**इत्यादि । (३)तत्र संशयः किमिह मनोमयत्वादिभिर्धर्मैः शारीर आत्मोपास्यत्वेनोपदिश्यते आहोस्विद्ब्रह्मेति । किं तावत्प्राप्तं **"शारीरो"** (पृ० २६१ पं० १) जीव इति । कुतः ? (४)क्रतुमित्यादिवाक्येन विहिता क्रतुभावनामनूद्य सर्वमित्यादिवाक्यं शमगुणे विधिः । (५)तथा च सर्वं खल्विदं ब्रह्मेति वाक्यं प्रथमपठितमप्यर्थालोचनया परमेव, तदर्थोपजीवित्वात् । (६)एवं च सङ्कल्पविधिः प्रथमो निर्विषयः सन्नपर्यवस्यन्विषयापेक्षः स्वयमनिर्वृत्तो न विध्यन्तरेणोपजीवितु शक्योऽनुपपादकत्वात् , तस्माच्छान्ततागुणविधानात्पूर्वमेव 'मनोमयः प्राणशरीर' इत्यादिभिर्विषयोपनायकैः सम्बध्यते। (७)मनोमयत्वादि च कार्यकारणसङ्घातात्मनो जीवात्मन एव निरूढमिति जीवात्मनोपास्येनोपरक्तोपासना न पश्चाद्ब्रह्मणा सम्बन्धुमर्हति, उत्पत्तिशिष्टगुणावरोधात् । (८)न च 'सर्वं खल्विदमि'ति वाक्यं ब्रह्मपरमिति तु शमहेतुत्वन्निगदार्थवादः शान्तता-

---

(१) अधिकरणेति। यत्सिद्धावर्थादन्यासिद्धिः सोऽधिकरणसिद्धान्तः ।

(२) यद्यर्थान्तररूढा अपि शब्दा ब्रह्मलिङ्गाद् ब्रह्मपरतया व्याख्याता तर्हि कैव कथा मनोमयत्वादिलिङ्गेषु, अपि चेह ब्रह्मशब्द एवास्ति 'सर्वं खल्विदं ब्रह्मे ति', अस्ति च वाक्यशेषे सर्वकर्मत्वादि ब्रह्मलिंगं तत्कथं जीवपरत्वशङ्का वाक्यस्यात आह पूर्वपक्षेति । क्रतुमित्यादिवाक्येनेत्यारभ्येत्यर्थः ।

(३) मनोमयत्वादीनां प्रकृतब्रह्मनैरपेक्ष्यसापेक्षत्वाभ्यां संशयमाह तत्रेति ।

(४) स्ववाक्योपात्तधर्मविशिष्टजीवोपासनानुवादेन शमविधिपरत्वान्न सर्वं खल्विति वाक्यमुपास्यसमर्पकमित्याह क्रतुमिति ।

(५) प्रागप्रतीताया क्रमप्रवृत्ते कथमुपासीतेत्यनुवादस्तत्राह तथाचेति ।

(६) ननु सङ्कल्पविधेरुपास्यसापेक्षत्वाद्ब्रह्मण उपास्यत्वमत आहैव चेति । सापेक्षस्य गुणविध्यर्थमाश्रयदानायोगान्मनोमयत्वादिभिरेवापेक्षापूरणमित्यर्थः ।

(७) स्यादेतन्मनोमयत्वादिमद्ब्रह्मैवास्त्वित्यत आह मनोमयत्वादि चेति । उत्पत्तिशिष्टत्वं कर्मस्वरूपप्रतीतिसमयावगतत्वम् ।

(८) चेन्न ब्रह्मपरत्वं किमर्थं तर्हि तदभिधानमित्यत आह नचेति । हेतुवन्निगद्यत इति तथोक्तः । शूर्पेणेति वाक्यान्ते तेन हीति श्रुतम् । तत्र च हिशब्दश्रुते स्तुतौ च लक्षणापत्त्याऽन्नकरणत्वं हेतुरपदिष्टस्तथा च यद्यदन्नकरणं तेन तेन होतव्यमिति पूर्वपक्षे तृतीयाश्रुत्या होमकरणं शूर्पं गम्यते विध्यर्थस्य च न हेत्वपेक्षाऽतः शूर्पस्तुतिवदत्रापि शान्तताविधिपरो ब्रह्मप्रशंसावाद इत्यर्थः ।

विधिपरः, 'शूर्पेण जुहोति, तेन ह्यन्नं क्रियते' इतिवत्। न चान्यपरादपि ब्रह्मापेक्षिततया स्वीक्रियत इति युक्तम्। मनोमयत्वादिभिर्धर्मैर्जीवे सुप्रसिद्धैर्जीवविषयसमर्पणेनानपेक्षितत्वात्। सर्वकर्मत्वादि च जीवस्य पर्यायेण भविष्यति। एवं चाणीयस्त्वमप्युपपन्नम्। परमात्मनस्त्वपरिमेयस्य तदनुपपत्तिः। प्रथमावगतेन चाणीयस्त्वेन ज्यायस्त्वं तदनुगुणतया व्याख्येयम्। व्याख्यातं च भाष्यकृता। एवं कर्मकर्तृव्यपदेशः सप्तमीप्रथमान्तता चाभेदेऽपि जीवात्मनि कथंचिद्भेदोपचारेण राहोः शिर इतिवद् द्रष्टव्या। 'एतद्ब्रह्मे'ति च जीवविषय जीवस्यापि देहादिबृंहणत्वेन ब्रह्मत्वात्। एवं सत्यसङ्कल्पादयोऽपि परमात्मवर्तिनो जीवेऽपि सम्भवन्ति, तदव्यतिरेकात्। तस्माज्जीव एवोपास्यत्वेनाऽत्र विवक्षितो, न परमात्मेति प्राप्तम्।

एवं प्राप्तेऽभिधीयते—

(१)समासः सर्वनामार्थः सन्निकृष्टमपेक्षते।<br>
तद्धितार्थोऽपि सामान्य नापेक्षाया निवर्तकः॥<br>
तस्मादपेक्षितं ब्रह्म ग्राह्यमन्यपरादपि।<br>
तथा च सत्यसङ्कल्पप्रभृतीनां यथार्थता॥

(२)भवेदेतदेवं यदि प्राणशरीर इत्यादीनां साक्षाज्जीववाचकत्वं भवेत्, न त्वेतदस्ति। तथाहि:—प्राणः शरीरमस्येति सर्वनामार्थो बहुव्रीहिः सन्निहितं च सर्वनामार्थं सम्प्राप्य तदभिधान पर्यवस्येत्। (३)तत्र मनोमयपदं पर्यवसिताभिधानं तदभिधानपर्यवसानायालं, तदेव तु मनोविकारो वा मनःप्रचुर वा किमर्थमित्यद्यापि न विज्ञायते। तयैनैष(४)शब्दः समवेतार्थो भवति स समासार्थः। (५)न चैष जीव एव समवेतार्थो न ब्रह्मणीति, तस्य 'अप्राणो ह्यमना' इत्यादिभिस्तद्विरहप्रतिपादनादिति युक्तम्। तस्यापि सर्वविकारकारणतया विकाराणां च स्वकारणादभेदात्तेषां च मनोमयतया ब्रह्मणस्तत्कारणस्य मनोमयत्वोपपत्तेः॥

(६)स्यादेतत्। जीवस्य साक्षान्मनोमयत्वादयो ब्रह्मणस्तु तद्द्वारा, तत्र प्रथम द्वारस्य बुद्धिस्थत्वात्तदेवोपास्यमस्तु, न पुनर्जघन्य ब्रह्म, ब्रह्मलिङ्गानि च जीवस्य ब्रह्मणोऽभेदाज्जीवेप्युपपत्स्यन्ते। (७)तदेतदत्र सम्प्रधार्यम्—किं ब्रह्मलिङ्गैर्जीवानां तदभिन्नानामस्तु तद्वत्ता, तथा च

---

(१) समास इति। 'मनोमयः प्राणशरीर' इत्यत्र प्राण शरीरमस्येति बहुव्रीहिसमासो विग्रहवशादस्येत्यन्तर्गर्भितसर्वनामार्थवान्, सर्वनाम च सन्निकृष्टमपेक्षतेऽत सर्वनामश्रुतिर्ब्रह्मोपास्यत्वे मानमित्यर्थं। ननु मनोमय इति स्ववाक्यस्थमयडर्थेन ब्रह्माकाङ्क्षा न सम्भवेदत आह तद्धितार्थ इति। सोऽपि विकारप्राचुर्यसाधारणतया सामान्यत्वान्न ब्रह्माकाङ्क्षाशमक संदिग्धत्वादिति भाव.। फलितमाह तस्मादिति। अत शमविधिस्तुतिपरादपि वाक्याद्ब्रह्मैव ग्राह्यम्, एव च ब्रह्मोपादाने सत्यसकल्पादीना यथार्थत्वसम्भवेन वाक्यशेषस्थलिङ्गसामञ्जस्यमित्यर्थ। (२) समासइतिकारिकांशं व्याचष्टे भवेदिति। तदभिधानं–समासाभिधानम्।

(३) तद्धितार्थ इत्यंश व्याचष्टे तत्रेति। (४) तयत्रैष इति मु० मु० पु० पाठः।

(५) नचैष इति। एष मनोमयशब्दो जीवे एव निविष्टावयवार्थो न तु ब्रह्माणे तस्य मनआदिविरहप्रतिपादनादित्येतन्न युक्तम्, कुतो न युक्तमत आह तस्यापीति। विकाराणा–तद्विशेषाणां जीवानाम्।

(६) विकारत्व जीवानामभेदापेक्षं यदि जीवद्वारा ब्रह्मणो मनोमयत्व तर्हि जीव एव मनोमयपदं मुख्यमिति तदेव समासाकाङ्क्षाया पूरक स्यादित्यभिप्रायेणाशङ्कते स्यादेतदिति।

(७) उक्ताशंकासमाधानार्थं प्रथम बलाबलविवेकाय पक्षविभागं करोति तदेतादिति। ब्रह्मलिङ्गै—सर्वकर्मत्वादिभि, तद्वत्ता–ब्रह्मलिङ्गवत्ता। अस्मिन्पक्षे फलितमाह तथाचेति।

जीवस्य मनोमयत्वादिभिः प्रथममवगमात्तस्यैवोपास्यत्वम्, (१)उत न जीवस्य ब्रह्मलिङ्गवत्ता तदभिन्नस्यापि, जीवलिङ्गैस्तु ब्रह्म तद्वत्, तथा च ब्रह्मलिङ्गानां दर्शनात् तेषां च जीवेऽनुपपत्तेर्ब्रह्मैवोपास्यमिति । (२)वय तु पश्यामः—

समारोप्यस्य रूपेण विषयो रूपवान् भवेत् ।
विषयस्य तु रूपेण समारोप्यं न रूपवत् ॥

समारोपितस्य हि रूपेण भुजङ्गस्य भीषणत्वादिना रज्जू रूपवती, न तु रज्जुरूपेणाभिगम्यत्वादिना भुजङ्गो रूपवान् । तदा भुजङ्गस्यैवाभावात्किं रूपवत् । भुजङ्गदशायां तु न नास्ति वास्तवी रज्जुः । तदिह समारोपितजीवरूपेण वस्तुसद्ब्रह्म रूपवदुच्यते, न तु ब्रह्मरूपैर्नित्यत्वादिभिर्जीवस्तद्वान् भवितुमर्हति, तस्य तदानीमसम्भवात् । तस्मात् ब्रह्मलिङ्गदर्शनाज्जीवे च तदसम्भवाद्ब्रह्मैवोपास्यं न जीव इति सिद्धम् । (३)एतदुपलक्षणाय च 'सर्वं खल्विदं ब्रह्मे'ति वाक्यमुपन्यस्तमिति ॥ १ ॥

## विवक्षितगुणोपपत्तेश्च ॥ २ ॥

**"यद्यप्यपौरुषेय" इति** । (पृ० २६२ पं० १२) शास्त्रयोनित्वेऽपीश्वरस्य पूर्वपूर्वसृष्टिरचितसन्दर्भापेक्षरचनत्वेनास्वातन्त्र्यादपौरुषेयत्वाभिधानम्, तथा चाऽस्वातन्त्र्येण विवक्षा नास्तीत्युक्तम् । परिग्रहपरित्यागौ चोपादानानुपादाने उक्ते, न तूपादेयत्वमेव, (४)अन्यथोद्देश्यतयाऽनुपादेयस्य ग्रहादेरविवक्षितत्वेन चमसादावपि सम्मार्गप्रसङ्गात् । तस्मादनुपादेयत्वेऽपि ग्रह उद्देश्यतया परिगृहीतो विवक्षितः । (५)तद्गतं त्वेकत्वमवच्छेदकत्वेन वर्जितमविवक्षितम्, इच्छानिच्छे च भक्तितः । तदिदमुक्तं—**"वेदवाक्यतात्पर्याभ्यामवगम्येते"** (पृ० २६३ पं० १) इति । यत्पर वेदवाक्यं तत्तेनोपात्तं विवक्षितम्, अतत्परेण चानुपात्तमविवक्षितमित्यर्थः ॥ २ ॥

स्यादेतत्, यथा सत्यसङ्कल्पादयो ब्रह्मण्युपपद्यन्ते, एव शारीरेऽप्युपपत्स्यन्ते, शारी

---

(१) एवं जीवोपास्यत्वपक्ष प्रदर्श्य ब्रह्मोपास्यपक्षमाह उतेति । तथाच ब्रह्माभिन्नस्यापि जीवस्याव च्छिन्नतया न ब्रह्मधर्मवत्ता, ब्रह्मणस्तु सर्वात्मत्वाज्जीवलिङ्गैस्तद्वत्तेति पक्षे लाभमाह तथाचेति ।

(२) तत्र स्वमतमाह वयन्त्विति । समारोप्यस्येति । ज्ञायमानेन समारोप्यजीवरूपेणाधिष्ठानविषयो ब्रह्मरूपवद्भवेत् तस्याज्ञायमानत्वेन समारोपकालेपि सत्त्वात् । विषयस्य तु रूपेणासाधारणेन ज्ञायमानेन समारोप्य जीवो न रूपवानधिष्ठानासाधारणरूपज्ञाने सति समारोप्याभावादिति कारिकार्थ । कारिकार्थमिममेव दृष्टान्तेन दृढयन्नाह समारोपितस्येति ।

(३) एतदुपलक्षणाय—सर्वकामत्वाद्युपलक्षणाय, उपन्यस्त भाष्यकारेणेति शेष ।

(४) 'उपादानेन फलेन' इति भाष्ये उपदान नाम परिग्रहो न तूपादेयत्वमुद्देश्यप्रतियोगित्वम्, विपक्षे बाधकमाह अन्यथेति । किञ्चित्कार्य विधातु सिद्धवन्निर्देश्यमुद्देश्यत्वमनुष्ठेयत्वेन निर्देश्यत्वमुपादेयत्वम् । उद्देश्याविवक्षायां 'ग्रह सम्मार्ष्टी'त्यत्रोद्देश्यग्रहस्याविवक्षा स्यात्तथाच चमसादेरपि सम्मार्गप्रसङ्ग स चायुक्त इति भाव ।

(५) तद्गतं-ग्रहगतम्, एकप्रसरतयैकपशुविशिष्टयागविधिसम्भवा'त्पशुना यजेते'त्यत्रोपादेयविशेषणत्वादेकत्वविवक्षाया युक्तत्वेऽप्यत्र ग्रहत्वैकत्वोद्देशेन सम्मार्गविधावुद्दिश्यमानयो परस्परमसम्बन्धाद्ग्रह एवोद्देश्येन पर्यवसानाच्च वाक्योपरिसमाप्तिसम्भवेन ग्रह सम्मार्ष्टि त चैकमिति वाक्यभेदापत्तेरैकत्वविवक्षा न युक्तेति भाव. ।

रस्य ब्रह्मणोऽभेदात्, शारीरगुणा इव मनोमयत्वादयो ब्रह्मणीत्यत आह सूत्रकारः—

**(सू०) अनुपपत्तेस्तु न शारीरः ॥ ३ ॥**

**कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥**

**शब्दविशेषात् ॥ ५ ॥**

यत्तदवोचाम 'समारोप्यधर्माः समारोपविषये सम्भवन्ति, न तु विषयधर्मास्समारोप्य' इति, तस्येत उत्थानम् ॥ ३ ॥ ४ ॥ ५ ॥

**( सू० ) स्मृतेश्च ॥ ६ ॥**

**अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न, निचाय्यत्वादेवं व्योमवत् ॥ ७ ॥**

अत्राह चोदकः "**कः पुनरयं शारीरो नामे**"ति ( पृ० २६५ प० ९ )। (१)न तावद्भेदप्रतिषेधाद्भेदव्यपदेशाच्च भेदाभेदावेकत्र तात्त्विकौ भवितुमर्हतो विरोधादित्युक्तम्। तस्मादेकमिह तात्त्विकमतात्त्विक चेतरत्। (२)तत्र पौर्वापर्येणाद्वैतप्रतिपादनपरत्वाद्वेदान्तानां द्वैतग्राहिणश्च मानान्तरस्याभावात्तद्बाधनाच्च, तेनाद्वैतमेव परमार्थः। तथा चानुपपत्तेस्त्वित्याद्यसङ्गतार्थमित्यर्थः। परिहरति "**सत्यमेवमेतत्, पर एवात्मा देहेन्द्रियमनोबुद्ध्युपाधिभिरवच्छिद्यमानो बालैः शारीर इत्युपचर्यते**"। (३)अनाद्यविद्यावच्छेदलब्धजीवभावः पर एवात्मा स्वतो भेदेनावभासते। तादृशां च जीवानामविद्या, न तु निरुपाधिनो ब्रह्मणः। (४)न चाविद्यायां सत्यां जीवात्मविभागः, सति च जीवात्मविभागे तदाश्रयाऽविद्येत्यन्योन्याश्रयमिति साम्प्रतम्। (५)अनादित्वेन जीवाविद्ययोर्बीजाङ्कुरवदनवक्लृप्तेरयोगात्। न च सर्वज्ञस्य सर्वशक्तेश्च स्वतः कुतोऽकस्मात्संसारिता, यो हि परतन्त्रः सोऽन्येन बन्धनागारे प्रवेश्येत न तु स्वतन्त्र इति वाच्यम्। न हि तद्भागस्य जीवस्य सम्प्रतितनी बन्धनागारप्रवेशिता येनानुयुज्येत, किंत्वियमनादिः पूर्वपूर्वकर्माविद्यासंस्कारनिबन्धना नानुयोगमर्हति। न चैतावता ईश्वरस्यानीशता। नह्युपकरणाद्यपेक्षिता कर्तुः स्वातन्त्र्यं विहन्ति। तस्माद्यत्किंचिदेतदपीति ॥ ६ ॥ ७ ॥

**(सू०) सम्भोगप्राप्तिरिति चेन्न, वैशेष्यात् ॥ ८ ॥**

---

( १ ) जीवस्य ब्रह्मणो भेदाभेदाभ्यामुभयश्रुत्युपपत्तेराक्षेपायोगमाशंक्याह न तावदिति।

( २ ) विरोधादन्यतरबाधे स्थितेप्यभेदपक्षे विनिगमकमाह तत्रेति। तद्बाधनात—तर्वेदान्तैर्द्वैतग्राहिणो मानान्तरस्य प्रत्यक्षस्य विधिमात्रव्यापारत्वात्तत्पूर्वकत्वाच्चान्येषामपि बाधनादित्यर्थः।

( ३ ) औपाधिकभेदानुवादित्वेन भेदश्रुतीनां सूत्रस्य चोपपत्तिमाह अनाद्यविद्येति। तादृशाम्—अविद्याविशिष्टानाम्।

( ४ ) शङ्कते नचेति।

( ५ ) समाधत्ते अनादित्वेनेति। जीवाविद्ययोर्बीजाङ्कुरवद्धेतुमत्त्वेऽनित्यत्व स्यादतोऽत्रोत्तरोत्तरजीवाभिव्यक्तीनां पूर्वपूर्वभ्रमनिमित्तकत्वमुक्तम्। अनादिजीवाविद्ययोश्चेतरेतराश्रयत्वमविद्यातत्सम्बन्धयोरिवाविरुद्धमिति भाव।

विशेषादिति वक्तव्ये वैशेष्याभिधानमात्यन्तिक विशेषं प्रतिपादयितुम् । (१)तथाह्यविद्याकल्पितः सुखादिसम्भोगो विद्यात्मन एव जीवस्य युज्यते, न तु निर्मृष्टनिखिलाविद्यातद्वासनस्य शुद्धबुद्धमुक्तस्वभावस्य परमात्मन इत्यर्थः । शेषमतिरोहितार्थम् ॥ ८ ॥

**(सू०) अत्ता चराचरग्रहणात् ॥ ९ ॥**

**प्रकरणाच्च ॥ १० ॥**

"कठवल्लीषु पठ्यते—

(२)यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ इति ।

(३)अत्र चोदनीयोदनोपसेचनसूचितः कश्चिदत्ता प्रतीयते । अत्तृत्वं च भोक्तृता वा संहर्तृता वा स्यात् । न च प्रस्तुतस्य परमात्मनो भोक्तृतास्ति, 'अनश्नन्नन्योऽभिचाकशीति' इतिश्रुत्या भोक्तृताप्रतिषेधात् । जीवात्मनश्च भोक्तृताविधानात् 'तयोरन्यः पिप्पलं स्वाद्वत्ती'ति । तद्यदि भोक्तृत्वमत्तृत्वं ततो मुक्तसंशयं जीवात्मैव प्रतिपत्तव्यः । (४)ब्रह्मक्षत्रादि चास्य कार्यकारणसङ्घातो भोगायतनतया वा साक्षाद्वा सम्भवति भोग्यम् । (५)अथ तु संहर्तृता भोक्तृता, ततस्त्रयाणामग्निजीवपरमात्मनां प्रश्नोपन्यासोपलब्धेः संहर्तृत्वस्याविशेषाद्भवति संशयः-किमत्ताऽग्निराहो जीव उताहो परमात्मेति । (६)अत्रौदनस्य भोग्यत्वेन लोके प्रसिद्धेर्भोक्तृत्वमेव प्रथमं बुद्धौ विपरिवर्तते, चरमं तु संहर्तृत्वमिति भोक्तैवात्ता । तथा च जीव एव(७) । 'न जायते म्रियते' इति च तस्यैव स्तुतिः, (८)संहारकालेऽपि संस्कारमात्रेण तस्यावस्थानात् । दुर्ज्ञानत्वं च तस्य सूक्ष्मत्वात् । तस्माज्जीव एवात्तेहोपास्यत इति प्राप्तम् । (९)यदि तु संहर्तृत्वमत्तृत्वं तथाप्यग्निरत्ता, 'अग्निरन्नाद' इति श्रुतिप्रसिद्धिभ्याम् ।

एवं प्राप्तेऽभिधीयते—अत्तात्र परमात्मा, कुतः, ? चराचरग्रहणात् । 'उभे यस्यौदन' इति 'मृत्युर्यस्योपसेचन'मिति च श्रूयते । तत्र यदि जीवस्य भोगायतनतया तत्साधनतया

---

(१) 'न वैशेष्यादि'ति सूत्रे प्रकृतिप्रयोगादेवेष्टसिद्धौ प्रत्ययप्रयोगोतिशयद्योतनाय, तमेवाह तथाहीति । अतिशयस्य भावः प्रत्ययार्थो न तु विशेषस्वरूपभाव इत्यर्थः ।

(२) यस्येति । यस्य ब्रह्मक्षत्रादिजगदोदनो, मृत्यु सर्वप्राणिमारकोपि यस्योपसेचनमोदनसंस्कारकघृतप्रायः सोऽत्ता यत्र शुद्धे चिन्मात्रेऽभेदकल्पनया वर्तते तच्छुद्धं ब्रह्म इत्था इत्थमीश्वराधिष्ठानभूतं को वेद चित्तशुद्ध्यादिकं बिना कोपि न जानातीति कठवल्ल्यर्थो बोध्यः ।

(३) विषयवाक्येऽत्तुरश्रवणादत्तेति सूत्रासङ्गतिमाशङ्क्याहात्र चेति ।

(४) ननु जीवस्य कथं ब्रह्मक्षत्रादिभोक्तृत्वं पूर्वपक्षिणा साध्यमत आह ब्रह्मक्षत्रादीति ।

(५) एवमत्तृत्वस्य भोक्तृत्वपक्षे संशयेन पूर्वपक्षं प्रदर्श्य संहर्तृत्वपक्षे तं वक्तुं भूमिकामाह अथ त्विति ।

(६) वनितादिषु भोक्तृत्वेपि संहर्तृत्वाभावात् अत्तृत्वस्य भोक्तृत्वात्मप्रसाधनेन पूर्वपक्षमुपपादयति अत्रौदनस्येत्यादिना ।

(७) तथा स जीव एव इति, सर्वथा स जीव एवेति च पाठान्तरम् ।

(८) ननु प्रलये जीवनाशात्कथमजत्वमत आह संहारेति ।

(९) अविक्रियस्य परमात्मन संहर्तृत्वायोगात् अग्निरेव संहर्तेत्याह यदीति । एवं चात्तृत्वस्य भोक्तृत्वपक्षे जीवो, संहर्तृत्वपक्षे चाग्निरेवात्ता न परमात्मेति पूर्वपक्षाभिप्रायः ।

च कार्यकारणसङ्घातः स्थितो, न तद्धौदनः। नह्योदनो भोगायतनं, नापि भोगसाधनमपि तु भोग्यः। (१)न च भोगायतनस्य भोगसाधनस्य वा भोग्यत्वं मुख्यम्। न चात्र मृत्युरुपसेचनतया कल्प्यते। न च जीवस्य कार्यकरणसङ्घातो ब्रह्मक्षत्रादिरूपो भक्ष्यः, कस्यचित् क्रूरसत्त्वस्य व्याघ्रादेः कश्चिद्भवेत्, न तु सर्वः सर्वस्य जीवस्य। तेन ब्रह्मक्षत्रविषयमपि जीवस्यात्तृत्वं न व्याप्नोति किमङ्ग पुनर्मृत्यूपसेचनव्याप्तं चराचरम्। (२)न चौदनपदात् प्रथमावगतभोग्यत्वानुरोधेन यथासम्भवमत्तृत्वं योज्यत इति युक्तम्। नह्योदनपदं श्रुत्या भोग्यत्वमाह, किन्तु लक्षणया। न च लाक्षणिकभोग्यत्वानुरोधेन 'मृत्युर्यस्योपसेचन'मिति च 'ब्रह्म क्षत्रं चे'ति च श्रुती सङ्कोचमर्हतः। न च ब्रह्मक्षत्रे एवात्र विवक्षिते, मृत्यूपसेचनेन प्राणभृन्मात्रोपस्थापनात्, (३)प्राणिषु प्रधानत्वेन च ब्रह्मक्षत्रोपन्यासस्योपपत्तेः, अन्यनिवृत्तेरशाब्दत्वात्, अनर्थत्वाच्च। (४)तथा च चराचरसंहर्तृत्वं परमात्मन एव, नाग्नेर्नापि जीवस्य, तथा च 'न जायते म्रियते वा विपश्चिदि'ति ब्रह्मणः प्रकृतस्य न हान भविष्यति। 'क इत्था वेद यत्र स' इति च दुर्ज्ञानत्वमुपपत्स्यते। जीवस्य तु सर्वलोकप्रसिद्धस्य न दुर्ज्ञानता। तस्मादत्ता परमात्मैवेति सिद्धम्॥ ९॥ १०॥

## ( सू० ) गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्॥ ११॥

संशयमाह—**"तत्रे"ति** ( पृ० २७० पं० १२ ) पूर्वपक्षे प्रयोजनमाह—**"यदि बुद्धिजीवावि"ति**। सिद्धान्ते प्रयोजनमाह—**अथ जीवपरमात्मानावि"ति**। (५)औत्सर्गिकस्य मुख्यताबलात् पूर्वसिद्धान्तपक्षासम्भवेन पक्षान्तरं कल्पयिष्यत इति मन्वानः संशयमाक्षिपति—**"अत्राह आक्षेप्त"ति** ( पृ० २७१ पं० १ ) ऋतं सत्यमवश्यम्भावीति यावत्। समाधत्ते—**"अत्रोच्यत" इति**। (६)आध्यात्मिकाधिकारादन्यौ तावत्पातारावशक्यौ कल्पयितुम्। तदिह बुद्धेरचैतन्येन परमात्मनश्च भोक्तृत्वनिषेधेन जीवात्मैवैकः

---

( १ ) एवमोदनशब्दस्य भोक्तृत्वेनौदनपदार्थमुक्त्वौदनशब्दस्य लाक्षणिकस्य संनिहितमृत्यूपसेचनपदानुसारेणौदनगतविनाशित्वधर्मलक्षणार्थत्वाद् ब्रह्मक्षत्रोपलक्षितजगद्विनाशकर्तेश्वरः प्रतीयते न जीव इत्याह न चेत्यादिना।

( २ ) ओदनपदात्प्रथम भोक्तैव प्रतीयत इति यदुक्तं पूर्वपक्षिणा तत्राह न चौदनपदादित्यादिना। ओदनपदस्य भक्तवाचिनो भोग्यमात्रपरत्वेन तत्रापि जघन्यवृत्त्याश्रयणात्तद्बलाद् ब्रह्मक्षत्रमृत्युश्रुतीना न संकोच इत्यर्थः।

( ३ ) मृत्युपदाद्विनाशिवस्तुमात्रविवक्षायां कथं ब्रह्मक्षत्रग्रहणमत आह प्राणिष्विति। ननु ब्रह्मक्षत्राभ्यामितरव्यावृत्तिः कुतो नात आहान्यनिवृत्तेरिति। यथा 'पञ्च पञ्चनखा भक्ष्या' इत्यत्र मनुष्यादिनिवृत्तिः परिसंख्याफलं, तथा चानर्थनिवृत्तिरेवमिहान्यानिवृत्तिरनर्थिका पुरुषार्थविशेषानवगमादित्यर्थः।

( ४ ) मायोपाधिद्वारा परस्यापि संहर्तृत्वमित्यभिप्रायेणोपसंहरति तथा चेति।

( ५ ) ननु लक्षणया पिबदपिबतोः पिबन्ताविति निर्देशोपपत्तेः पूर्वपक्षसिद्धान्तपक्षाक्षेपे च वाक्यस्य निर्विषयत्वप्रसङ्गादाक्षेपायोगमाशङ्क्याहौत्सर्गिकस्येति। अयं हि आक्षेप्ता पिबन्तावित्यस्य मुख्यमर्थमौत्सर्गिकमबाध्य मन्यते प्राकृतसुपर्णविषयत्वं च वाक्यस्य पक्षान्तरं कल्पयिष्यत इति मन्यतेऽत आक्षेप इत्यर्थः।

( ६ ) लक्षणां वक्तुं 'मुख्यार्थासम्भवमाहाध्यात्मिकेति।

पाता परिशिष्यते इति (१)'सृष्टीरुपदधाती'तिवद्द्विवचनानुरोधादपिबत्ससृष्टतां स्वार्थस्य पिबच्छब्दो लक्षयन् स्वार्थमजहन्नितरेतरयुक्तपिबदपिबत्परो भवतीत्यर्थः । अस्तु वा मुख्य एव, तथापि न दोष इत्याह—"यद्वे"ति । स्वातन्त्र्यलक्षणं हि कर्तृत्वं तच्च पातुरिव पाययितुरप्यस्तीति सोपि कर्ता । अत एव चाहुः—'यः कारयति स करोत्येवे'ति । एवं करणस्यापि स्वातन्त्र्यविवक्षया कथंचित्कर्तृत्वं, यथा काष्ठानि पचन्तीति । तस्मान्मुख्यत्वेऽप्यविरोध इति । तदेवं सशयं समाधाय पूर्वपक्षं गृह्णाति—"बुद्धिक्षेत्रज्ञावि"ति ।

(२)नियताधारता बुद्धिजीवसम्भविनी न हि ।
क्लेशात्कल्पयितु युक्ता सर्वगे परमात्मनि ॥

न च पिबन्तावितिवत्प्रविष्टपदमपि लाक्षणिकं युक्तं, सति मुख्यार्थत्वे लाक्षणिकार्थत्वायोगात्, बुद्धिजीवयोश्च गुहाप्रवेशोपपत्तेः । अपि च 'सुकृतस्य लोक'इति सुकृतलोकव्यवस्थानेन कर्मगोचरानतिक्रम उक्तः । बुद्धिजीवौ च कर्मगोचरमनतिक्रान्तौ । जीवो हि भोक्तृतया बुद्धिश्च भोगसाधनतया धर्मस्य गोचरे स्थितौ, न तु ब्रह्म तस्यातदायत्तत्वात् । किंच छायातपाविति तमःप्रकाशावुक्तौ । न च जीवः परमात्मनोऽभिन्नस्तमः, प्रकाशरूपत्वात् । बुद्धिस्तु जडतया तम इति शक्योपदेष्टुम् । तस्माद्बुद्धिजीवावत्र कथ्येते । तत्रापि प्रेते विचिकित्सापनुत्तये बुद्धेर्भेदेन परलोकी जीवो दर्शनीय इति बुद्धिरुच्यते ।

एवं प्राप्तेऽभिधीयते—

(३)ऋतपानेन जीवात्मा निश्चितोऽस्य द्वितीयता ।
ब्रह्मणैव सरूपेण न तु बुद्ध्या विरूपया ॥
प्रथमं सद्वितीयत्वे ब्रह्मणावगते सति ।
गुहाश्रयत्वं चरमं व्याख्येयमविरोधतः ॥

(४)गौः सद्वितीयेत्युक्ते सजातीयेनैव गवान्तरेणावगम्यते, न तु विजातीयेनाश्वादिना । तदिह चेतनो जीवः सरूपेण चेतनान्तरेणैव ब्रह्मणा सद्वितीयः प्रतीयते, न त्वचेतनया विरू

---

(१) सृष्टीरिति । 'सृष्टीरुपदधाती'ति समाम्नाय 'एकया स्तुवत' इत्यादिना सृष्ट्यसृष्टिमन्त्रा उक्तास्तत्र यथा सृष्टीरुपदधातीति यदि सृष्टिमन्त्रकेष्टकानामाधाने विधान तर्हीष्टकासु सृष्ट्यसृष्टिमन्त्रत्वाविशेषानवगमात्सर्वा एव सृष्टिमन्त्रका इति सृष्टिपदरहितमन्त्राणामानर्थक्यवारणाय सृष्टिशब्दः सृष्ट्यसृष्टिसमुदायं लक्षयित्वा तत्समुदायिनः सर्वान्मन्त्रान् लक्षयति, एवमिहापि पिबच्छब्द स्वार्थस्यापिबत्ससृष्टता पिबदपिबत्समुदायमिति यावत्तं लक्षयन्स्वार्थं पिबन्तमजहदितरेतरयोगलक्षणं समुदायं प्रति समुदायीभूतपिबदपिबत्परो भवति न पिबत्येव वर्तते नापि लक्षयन् गंगाशब्दवत्स्वार्थं त्यजेदित्यर्थ ।

(२) पूर्वत्र यथा ब्रह्मक्षत्रपदस्य संनिहितमृत्युपदानुसारेणानित्यवस्तुपरत्वमेवमिहापि पिबच्छब्दस्य संनिहितगुहाप्रविष्टादिपदानुसारेण बुद्धिक्षेत्रज्ञपरत्वमित्याह नियतेति । कारिकार्थ सुगम ।

(३) सिद्धान्तसंग्रहश्लोकावाह ऋतपानेनेति । ऋतं पिबन्ताविति ऋतपानेन जीवात्मा ऋतपानकर्तेति निर्णीतम्, अस्य जीवस्य या द्वितीयता द्विवचनाधारता सा ब्रह्मणैव तस्य चेतनत्वेन जीवसरूपत्वात् नतु बुद्ध्या तस्या जडत्वेन विसदृशत्वादित्यर्थ । ननु संनिहितगुहाप्रविष्टपदाद् बुद्धिर्द्वितीया किं न स्यादत आह प्रथममिति । उक्तरीत्या पूर्वं ब्रह्मणा सह जीवस्य सद्वितीयत्वे निश्चिते सति गुहाप्रविष्टपदमपि एतदविरोधेनैव पश्चाद्व्याख्येयमित्यर्थ ।

(४) ऋतपानेनेति दृष्टान्तप्रदर्शनपूर्वक व्याचष्टे गौरिति ।

पया बुद्ध्या । (१)तदेव'ऋतं पिबन्तावि'त्यत्र प्रथममवगते ब्रह्मणि तदनुरोधेन चरमं गुहाश्रयत्वं शालग्रामे हरिरितिवद्व्याख्येयम् । बहुलं हि गुहाश्रयत्वं ब्रह्मणः श्रुतय आहुः । तदिदमुक्तं 'तद्दर्शनादि'ति । तस्य ब्रह्मणो गुहाश्रयत्वस्य श्रुतिषु दर्शनादिति । एवं च प्रथमावगतब्रह्मानुरोधेन सुकृतलोकवर्तित्वमपि तस्य लक्षणया छत्रिन्यायेन गमयितव्यम् । छायातपत्वमपि जीवस्याविद्याश्रयतया ब्रह्मणश्च शुद्धप्रकाशस्वभावस्य तदनाश्रयतया मन्तव्यम् ॥ ११ ॥

## ( सू० ) विशेषणाच्च ॥ १२ ॥

इममेव न्यायं 'द्वा सुपर्णे'त्यत्राप्युदाहरणे कृत्वाचिन्तया योजयति **"एष एव न्याय" इति** ( पृ० २७३ प० १० ) । अत्रापि किं बुद्धिजीवौ उत जीवपरमात्मानाविति संशय्य करणरूपाया बुद्धेरेधांसि पचन्तीतिवत् कर्तृत्वोपचाराद् बुद्धिजीवाविह पूर्वपक्षयित्वा सिद्धान्तयितव्यम् । सिद्धान्तश्च भाष्यकृता स्फोरितः । तद्दर्शनादिति च 'समाने वृक्षे पुरुषो निमग्न' इत्यत्र मन्त्रे । न खलु मुख्ये कर्तृत्वे सम्भवति करणे कर्तृत्वोपचारो युक्त इति कृत्वाचिन्तामुद्घाटयति—**"अपर आह"** (पृ० २७४ पं० २) । **"सत्त्वं"** बुद्धेः । शङ्कते—**"सत्त्वशब्द" इति** । सिद्धान्तार्थं ब्राह्मणं व्याचष्टे इत्यर्थः । निराकरोति—**"तन्ने"ति** । **"येन स्वप्नं पश्यती"ति** । येनेति करणमुपदिशति । ततश्च भिन्नं कर्तारं क्षेत्रज्ञम् । **"योऽयं शारीर उपद्रष्टे"ति** । अस्तु तर्ह्यस्याधिकरणस्य पूर्वपक्ष एव ब्राह्मणार्थः, (२)वचनविरोधे न्यायस्याभासत्वादित्यत आह—**"नाप्यस्याधिकरणस्य पूर्वपक्षं भजत" इति** । एवं हि पूर्वपक्षमस्य भजेत, यदि हि क्षेत्रज्ञे संसारिणि पर्यवस्येत् । तस्य तु ब्रह्मरूपतायां पर्यवस्यन्न पूर्वपक्षमपि स्वीकरोतीत्यर्थः । अपि च—**"तावेतौ सत्त्वक्षेत्रज्ञौ न ह वा एवंविदि किंचन रज (३)आध्वंसत" इति** । रजोऽविद्या नाध्वंसनं न संश्लेषमेवंविदि करोति । एतावतैव विद्योपसंहाराज्जीवस्य ब्रह्मात्मतापरतास्य लक्ष्यत इत्याह—**"तावता चे"ति** । चोदयति—**"कथं पुन"रिति** । निराकरोति—**"उच्यते । नेयं श्रुति"रिति** । (४)अनश्नन् जीवो ब्रह्माभिचाकशीतीत्युक्ते शङ्कते—यदि जीवो ब्रह्मात्मा नाश्नाति, कथं तर्ह्यस्मिन् भोक्तृत्वावगमः, चैतन्यसमानाधिकरणं हि भोक्तृत्वमवभासत इति । तन्निरासायाह श्रुतिः **"तयोरन्यः पिप्पलं स्वाद्वत्ती"ति** । एतदुक्तं भवति—नेदं भोक्तृत्वं जीवस्य तत्त्वतोऽपि तु बुद्धिसत्त्वं सुखादिरूपपरिणतं चितिच्छायापत्त्योपपन्नचैतन्यमिव भुङ्क्ते, न तु तत्त्वतो जीवः परमात्मा भुङ्क्ते । तदेतदध्यासभाष्यकृतव्याख्यानम् । तदनेन कृत्वाचिन्तोद्घाटिता ॥ १२ ॥

## ( सू० ) अन्तर उपपत्तेः ॥ १३ ॥

---

( १ ) प्रथममिति श्लोकं सोदाहरणं व्याख्याति तदेवमिति ।

( २ ) वचनविरोध इति । अत्तीत्यस्य मुख्यकर्तृत्वसम्भवे करणे कर्तृत्वोपचारो न युक्त इति न्यायस्य बुद्धिजीवपरत्वेन मन्त्रव्यापकब्राह्मणविरोधे आभासत्वमित्यर्थः ।

( ३ ) आध्वंसते—आगच्छति ।

( ४ ) चेतनस्य क्षेत्रज्ञस्याभोक्तृता ब्रह्मस्वभावं वक्ष्यामीति श्रुतिः प्रवृत्तेति भाष्यमुपपादयन्मन्त्रार्थमाहानश्नन्निति । बुद्धेरन्यो यो जीवः सोऽनश्नन्नभोक्तृ ब्रह्म भवन्नभिपश्यतीत्यर्थः । अस्मिन्नर्थे स्वयमेव श्रुतिराहेत्याह तन्निरासायेति ।

नन्वन्तस्तद्धर्मोपदेशादि'त्यनेनैवैतद्गतार्थम्, सन्ति खल्वत्राप्यमृतत्वाभयत्वादयो ब्रह्मधर्मा प्रतिबिम्बजीवदेतास्वसम्भविनः, तस्माद्ब्रह्मधर्मोपदेशाद्ब्रह्मैवात्र विवक्षितम्, साक्षाच्च ब्रह्मशब्दोपादानात्। उच्यते—

(१)एष दृश्यत इत्येतत् प्रत्यक्षेऽर्थे प्रयुज्यते।
परोक्षं ब्रह्म न तथा प्रतिबिम्बे तु युज्यते॥
उपक्रमवशात्पूर्वमितरेषां हि वर्णनम्।
कृतं न्यायेन येनैव स खल्वत्रानुषज्यते॥

(२)'ऋत पिबन्तावि'त्यत्र हि जीवपरमात्मानौ प्रथमावगताविति तदनुरोधेन गुहाप्रवेशादयः पश्चादवगता व्याख्याताः, तद्वदिहापि 'य एषोऽक्षिणि पुरुषो दृश्यत' इति प्रत्यक्षाभिधानात् प्रथममवगते छायापुरुषे तदनुरोधेनामृतत्वाभयत्वादयः स्तुत्याः कथंचिद्व्याख्येयाः। तत्र चामृतत्वं कतिपयक्षणावस्थानाद्, अभयत्वमचेतनत्वात्, पुरुषत्वं पुरुषाकारत्वात्, आत्मत्वं कनीनिकाया(३) आपनात्, ब्रह्मरूपत्वमुक्तरूपामृतत्वादियोगात्। एवं वामनात्वादयोऽप्यस्य स्तुत्यैव कथंचिन्नेतव्याः। 'कं च खं चे'त्यादि तु वाक्यमग्नीनां नाचार्यवाक्यं नियन्तुमर्हति। '(४)आचार्यस्तु ते गतिं वक्ते'ति च गत्यन्तराभिप्रायं, न तूक्तपरिशिष्टाभिप्रायम्। तस्माच्छायापुरुष एवात्रोपास्य इति पूर्वः पक्षः। सम्भवमात्रेण तु जीवदेवते उपन्यस्ते, (५)बाधकान्तरोपदर्शनाय च। एष दृश्यते इत्यस्यात्राभावात्, (६)अन्तस्तद्धर्मोपदेशादित्यनेन निराकृतत्वात्।

एवं प्राप्त उच्यते—(७)'य' 'एष' इति

अनिष्पन्नाभिधाने द्वे सर्वनामपदे सती।
प्राप्य संनिहितस्यार्थं भवेतामभिधातृणी॥

संनिहिताश्च पुरुषात्मादिशब्दास्ते च न यावत्स्वार्थमभिदधति तावत्सर्वनामभ्यां नार्थतुषोप्य(८)भिधीयत इति कुतस्तदर्थस्यापरोक्षता। पुरुषात्मशब्दौ च सर्वनामनिरपेक्षौ स्व-

---

(१) इयं च सुखविशिष्टब्रह्मप्रकरणं नास्तीति कृत्वाचिन्ताऽतश्च वक्ष्यमाण सर्वनामार्थः, स च मनोमयतद्धितार्थवन्न सदिग्धो दृश्यत इत्यस्य निश्चायकत्वादित्याह एष इति। न तथा—न प्रत्यक्षम्। युज्यते प्रत्यक्षत्वादिति शेषः। उपक्रमवशादित्यनेन सङ्गतिरुक्ता।

(२) द्वितीयश्लोकं व्याचष्टे ऋतमिति।

(३) अक्षिपुत्तलिकाया। कनीनिकायतनत्वादिति मु० मु० पाठ।

(४) भिन्नवक्तृत्वेन वाक्ययोर्न नियम्यनियामकत्वं चेत्कथं तर्ह्यग्निभिर्गति वक्ष्यतीति शेषोद्धारः कृतोऽत आहाचार्यस्त्विति। तथाच पञ्चदशसूत्रे प्रदर्शयिष्यमाणवाक्यैर्न ब्रह्मपरत्वसङ्गति कर्तुमर्हति भाव।

(५) बाधकान्तरेति। अनवस्थितेरसम्भवाच्चेति सूचितबाधकान्तरदर्शनाय चेत्यर्थ।

(६) नन्वक्षिणीत्याधारनिर्देशाज्जीवदेवते किं न स्यातामत आह अन्तस्तद्धर्मेति।

(७) 'य एष' इत्यादेः प्रथमश्रुतस्यापि सापेक्षत्वान्न चाक्षुषत्वसमर्पकत्वमित्याभिप्रायेण सिद्धान्तमाह य एष इति प्रपूर्यानिष्पन्नेति श्लोकेन। य इति एष इति च सर्वनामनी विशेषापेक्षत्वात्स्वतोऽपर्यवसिताभिधाने सन्निहितपुरुषादिपदस्यार्थं विशेष्यं प्राप्य वाचके भवेतामिति श्लोकार्थः।

(८) अर्थलेशः। अपरोक्षता—चाक्षुषत्वं सर्वनामार्थस्य पुरुषस्य कुतः। स्वरसत इत्यनेन छायात्मनि योजनाक्लेशो वारित।

रसतो जीवे वा परमात्मनि वा वर्तेते इति। न च तयोश्चक्षुषि प्रत्यक्षदर्शनमिति निरपेक्षपुरुषपदप्रत्यायित'र्थानुरोधेन य एष इति दृश्यत इति च यथासम्भव व्याख्येयम्। (१)व्याख्यातं च सिद्धवदुपादानं शास्त्राद्यपेक्षं विद्वद्विषयं प्ररोचनार्थम्। विदुषः शास्त्रन उपलब्धिरेव दृढतया प्रत्यक्षवदुपचर्यते प्रशंसार्थमित्यर्थः। अपि च तदेव चरमं प्रथमानुगुणतया नीयते यन्नेतुं शक्यम्, अल्पं च, इह त्वमृतत्वादयो बहवश्चाशक्याश्च नेतुम्, नहि स्वसत्ताक्षणावस्थानमात्रममृतत्वं भवति, तथा सति किं नाम नामृतं स्यादिति व्यर्थममृतपदम्। भयाभये अपि चेतनधर्मौ नाचेतने सम्भवतः। एव वामनीत्वादयोऽप्यन्यत्र ब्रह्मणा नेतुमशक्याः। प्रत्यक्षव्यपदेशश्चोपपादितः। तदिदमुक्त**'मुपपत्ते**रिति। 'एतदमृतमभयमेतद्ब्रह्मे'त्युक्ते स्यादाशङ्का–ननु सर्वगतस्येश्वरस्य कस्माद्विशेषेण चक्षुरेव स्थानमुपदिश्यत—इति, तत्परिहरति श्रुतिः– **"तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छती"**ति (पृ० २७६ पं० १३)। वर्त्मनी—पक्षस्थाने। एतदुक्तं भवति–निर्लेपस्येश्वरस्य निर्लेपं चक्षुरेव स्थानमनुरूपमिति। तदिदमुक्तं **"तथा परमेश्वरानुरूपमि"**ति। **"संयद्वामादिगुणोपदेशश्च तस्मिन् ब्रह्मणि, कल्पते"** घटते, समवेतार्थत्वात्। प्रतिबिम्बादिषु त्वसमवेतार्थः। (२)वननीयानि, सम्भजनीयानि शोभनीयानि पुण्यफलानि वामानि। संयन्ति सङ्गच्छमानानि वामान्यनेनेति संयद्वामः परमात्मा। तत्कारणकत्वात् पुण्यफलोत्पत्तेः, तेन पुण्यफलानि सङ्गच्छन्ते। (३)स एव पुण्यफलानि वामानि नयति लोकमिति वामनीः। एष एव भामनीः। भामानि भानानि, तानि नयति लोकमिति भामनीः। तदुक्तं श्रुत्या–'तमेवं भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति ॥ १३ ॥

## (सू० ) स्थानादिव्यपदेशाच्च ॥ १४ ॥

आशङ्कोत्तरमिदं सूत्रम्। आशङ्कामाह—**कथं पुनरिति** (पृ० २७७ पं० २)। स्थानिनो हि स्थानं महद्दृष्टम्, यथा यादसामब्धिः। तत्कथमत्यल्पं चक्षुरधिष्ठानं परमात्मनः परममहत इति शङ्कार्थः। परिहरति—**"अत्रोच्यत"इति**। स्थानान्यादयो येषां ते स्थानादयो नामरूपप्रकारास्तेषां व्यपदेशात्। सर्वगतस्यैकस्थाननियमो (४)नावकल्पते, न तु नानास्थानत्व, नभस इव नानासूचीपाशादिस्थानत्वम्। विशेषतस्तु ब्रह्मणस्तानि तान्युपासनास्थानानीति तैरस्य युक्तो व्यपदेशः ॥ १४ ॥

---

(१) व्याख्यातं चेति। अधिकरणावसानभाष्य इत्यर्थः। तदुपादत्ते सिद्धवदिति। अस्यार्थमाह विदुष इति। विदुषो विषयस्तेन निष्पाद्या शास्त्राद्योपलब्धिः सा परोक्षापि प्रत्यक्षेति स्तूयते इत्यर्थ। उपचारे निमित्तम् दृढतयेति।

(२) 'एत सयद्वाम इत्याचक्षते, एत हि सर्वाणि वामान्यभिसंयन्ती'ति श्रुतिमीश्वरस्य फलभोक्तृत्वभ्रमव्यावर्तनेन व्याचष्टे वननीयानीति। जीवान्प्रति सङ्गच्छमानानि यानि वामानि तानि येन हेतुना संगच्छन्ते स संयद्वाम। एतं हीत्यस्यैतं निमित्तीकृत्येत्यर्थ।

(३) 'एष उ वामनी'रित्यस्यार्थमाह स एवेति। फलोत्पादकत्वमात्रं सयद्वामत्वम्, तुल्यप्रापकत्व च वामनीत्वमित्यनयोर्भेदो बोध्य।

(४) स्थानान्तराव्यापकत्वम्।

अपि च प्रकृतानुसारादपि ब्रह्मवात्र प्रत्येतव्य, न तु प्रीतिबिम्बजीवदेवतौ इत्याह सूत्रकारः—

## ( सू० ) सुखविशिष्टाभिधानादेव च ॥ १५ ॥

एवं खलूपाख्यायते—'उपकोसलो ह वै कामलायन·(१) सत्यकामे जाबाले ब्रह्मचर्यमुवास, तस्याचार्यस्य द्वादश वर्षाण्यग्नीनुपचार, स चाऽऽचार्योऽन्यान् ब्रह्मचारिणः स्वाध्यायं ग्राहयित्वा समावर्तयामास, तमेवैकमुपकोसल न समावर्तयति स्म, जायया च तत्समावर्तनायार्थितोपि तद्वचनमवधीर्याचार्यः प्रोषितवान् , ततोऽतिदूनमानसम(२)ग्निपरिचरणकुशलमुपकोसलमुपेत्य त्रयोऽग्नयः करुणापराधीनचेतसः श्रद्धानायाऽस्मै दृढभक्तये समेत्य ब्रह्मविद्यामूचिरे 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति । अथोपकोसल उवाच 'विजानाम्यहं प्राणो ब्रह्मेति, स हि सूत्रात्मा विभूतिमत्तया ब्रह्मरूपाविर्भावाद् ब्रह्मेति, किन्तु क च खं च ब्रह्मेत्येतन्न विजानामि, नहि विषयेन्द्रियसम्पर्कजं सुखमनित्यं लोकसिद्धं, ख च भूताकाशमचेतनं ब्रह्म भवितुमर्हति । अथैनमग्नयः प्रत्यूचुः—यद्वाव क तदेव खं यदेव खं तदेव कमिति । एवं सम्भूयोक्त्वा प्रत्येकं च स्वविषयां विद्यामूचुः—(३)'पृथिव्यग्निरन्नमादित्य' इत्यादिना । पुनस्त एनं सम्भूयोचुः—एषा सोम्य तेऽस्मद्विद्या प्रत्येकमुक्ता स्वविषया विद्या, आत्मविद्या चास्माभिः सम्भूय पूर्वमुक्ता—'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मे'ति, आचार्यस्तु ते गतिं वक्ता, ब्रह्मविद्येयमुक्तास्माभिर्गतिमात्र त्ववशिष्ट नोक्तम् , तत्तु विद्याफलप्राप्तये जाबालस्तवाचार्यो वक्ष्यतीत्युक्त्वाऽग्नय उपरेमिरे' । एवं व्यवस्थिते यद्वा व क तदेव ख यदेव खं तदेव कमित्येतद्व्याचष्टे भाष्यकारः—"**तत्र खंशब्द**" इति ( पृ० २७८ पं० ४ ) । "**प्रतीकाभिप्रायेणे**"ति । आश्रयान्तरप्रत्ययस्याश्रयान्तरे क्षेपः प्रतीकः । यथा ब्रह्मशब्दः परमात्मविषयो नामादिषु क्षिप्यते । इदमेव तद्ब्रह्म ज्ञेयं यन्नामेति । तथेदमेव तद्ब्रह्म यद्भूताकाशमिति प्रतीतिः स्यात् । (४)न चैतत्प्रतीकत्वमिष्टम् । लौकिकस्य सुखस्य साधनपारतन्त्र्यं क्षयिष्णुता चामयस्तेन सह वर्तत इति सामयं सुखम् । तदेवं व्यतिरेके दोषमुक्त्वोभयान्वये गुणमाह—"**इतरेतरविशेषितौ त्वि**"ति । (५)तदर्थयोर्विशेषितत्वाच्छब्दावपि विशेषितावुच्येते । सुखशब्दसमानाधिकरणो हि खशब्दो भूताकाशमर्थं परित्यज्य ब्रह्मणि गुणयोगेन वर्तते । तादृशा च खेन सुखं विशिष्यमाण सामयाद्व्यावृत्तं निरामयं भवति ।

---

( १ ) कमलस्य गोत्र कामलस्तस्यापत्य कामलायन इत्यर्थ ।

( २ ) गुरुप्रसादाभावात्परितप्तमानसम् ।

( ३ ) पृथिव्यग्निरिति । उपकोशलं गार्हपत्योऽनुशशास 'पृथिव्यग्निरन्नमादित्य'इति इमाभिश्चतस्त्रस्तनवो य एष आदित्ये पुरुषो दृश्यते सोहमस्मीति । तथाऽन्वाहार्यपचनोऽनुशशास आपो दिशो नक्षत्राणि चन्द्रमा इति मम तनवो य एष चन्द्रमसि पुरुषो दृश्यते सोहमस्मि इति । तथाऽऽहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति मम तनवो य एष विद्युति पुरुषो दृश्यते सोहमस्मीति । इत्येव पृथगुपदेशोऽग्नित्रयस्य बोध्य ।

( ४ ) न चैतत्प्रतीकत्वमिष्टमिति । एषा सोम्य आत्मविद्येत्याग्निभि क ख ब्रह्मेति विद्याया विद्यात्वेन परामर्शादित्यर्थ ।

( ५ ) ननु विशेषणविशेष्यभावोऽर्थयो शब्दयोस्तु सामानाधिकरण्यं तथाचासङ्गतिरितरेतरविशेषितौ क ख शब्दाविति भाष्यस्येत्याशङ्कायामाह तदर्थयोरिति । सुखस्य वाचक शब्दः सुखशब्द ।

तस्मादुपपन्नमुभयोपादानम् । ब्रह्मशब्दाभ्यासस्य प्रयोजनमाह **"तत्र द्वितीय" इति** । ब्रह्मपदं कम्पदस्योपरि प्रयुज्यमानं शिरः, एव खम्पदस्यापि ब्रह्मपदं शिरो, ययोः कखम्पदयोस्ते ब्रह्मशिरसी, तयोर्भावो ब्रह्मशिरस्त्वम् । अस्तु प्रस्तुते किमायातमित्यत आह–**"तदेवं वाक्योपक्रम" इति** । नन्वग्निभिः पूर्वं निर्दिश्यतां ब्रह्म,'य एषोऽक्षिणी'त्याचार्यवाक्येऽपि तदेवानुवर्तनीयमिति तु कुत इत्याह—**"आचार्यस्तु ते गतिं वक्तेति च गतिमात्राभिधान"मिति** ( पृ० २७९ पं० २ ) । यद्यप्येते भिन्नवक्तृणी वाक्ये तथापि पूर्वेण वक्त्रा एकवाक्यतां गमिते, गतिमात्राभिधानात् । किमुक्तं भवति ? तुभ्यं ब्रह्मविद्याऽस्माभिरुपदिष्टा, तद्विदस्तु गतिर्नोक्ता, तां च किंचिदधिकमाध्येय(१) पूरयित्वाऽऽचार्यो वक्ष्यतीति, तदनेन पूर्वासंबद्धार्थान्तरविवक्षा वारितेति । (२)अथैवमग्निभिरुपदिष्टे प्रोषित आचार्यः काले नाजगाम, आगतश्च वीक्ष्योपकोशलमुवाच,-'ब्रह्मविद इव ते सोम्य! मुखं प्रसन्नं भाति, को नु त्वामनुशशासे'ति । उपकोशलस्तु ह्रीणो भीतश्च को नु मामनुशिष्याद् भगवन्! प्रोषिते त्वयीत्यापाततोपह्नाय(३) निर्बध्यमानो यथावदग्नीनामनुशासनमवोचत् । तदुपश्रुत्य चाचार्यः सुचिरं क्लिष्ट उपकोशले समुपजातदयार्द्रहृदयः प्रत्युवाच–सोम्य किल तुभ्यमग्नयो न ब्रह्म साकल्येनावोचन् तदहं तुभ्यं साकल्येन वक्ष्यामि, यदनुभवमाहात्म्याद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत–इति । एवमुक्तवत्याचार्ये आहोपकोशलः—ब्रवीतु मे भगवानिति । तस्मै होवाचाचार्योऽर्चिरादिकां गतिं वक्तुमनाः, यदुक्तमग्निभिः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति तत्पूरणाय 'य एषोऽक्षिणि पुरुषो दृश्यते' इत्यादि । एतदुक्तं भवति(४)आचार्येण–ये यत् सुखं ब्रह्माक्षिस्थानं संयद्वामं वामनीभामनीत्येवंगुणकं प्राणसहितमुपासते ते सर्वेऽपहतपाप्मानोऽन्यत्कर्म कुर्वन्तु मा वा कार्षुः, अर्चिषमर्चिरभिमानिनीं देवतामभिसंभवन्ति प्रतिपद्यन्ते, अर्चिषोऽहरहर्देवताम् , अह्नः आपूर्यमाणपक्षम् शुक्लपक्षदेवताम् , ततः षण्मासान् येषु मासेषूत्तरां दिशमेति सविता, ते षण्मासा उत्तरायणं, तद्देवतां प्रतिपद्यन्ते, तेभ्यो मासेभ्यः संवत्सरदेवताम् , तत आदित्यम् , आदित्याच्चन्द्रमसं, चन्द्रमसो विद्युतं, तत्र स्थितानेतान् पुरुषः कश्चिद्ब्रह्मलोकादवतीर्यमानवोऽमानव्यां सृष्टौ भवो ब्रह्मलोकभव इति यावत् , स तादृशः पुरुष एतान् सत्यलोकस्थं कार्यं ब्रह्म गमयति, स एष देवपथो देवैरर्चिरादिभिर्नेतृभिरुपलक्षित इति देवपथः, स एव ब्रह्मणा गन्तव्येनोपलक्षित इति ब्रह्मपथः, एतेन पथा प्रतिपद्यमानाः सत्यलोकस्थं ब्रह्म इमं मानवं मनोः सर्गं किं भूतमावर्तं जन्मजरामरणपौनःपुन्यमावृत्तिस्तत्कर्ताऽऽवर्तो मानवो लोकस्तं नावर्तन्ते । तथा च स्मृतिः—

> (५)ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
> परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥ १५ ॥

---

( १ ) अक्षिस्थानसंयद्वामादिगुणं च पूरयित्वेत्यर्थः ।

( २ ) अग्न्याचार्योपदेशयोरर्थान्तरत्ववारणाय पूर्वप्रदर्शिताग्न्युपदेशाख्यानपरवर्तिनीमाख्यायिकामाह अथेत्यादिना । ( ३ ) अपह्नाय—अपह्नुत्य ।

( ४ ) अग्रिमसूत्रस्थभाष्योक्तगीतास्मृत्यर्थं छान्दोग्यार्थं चाचार्यगतिवचनेनात्रैव स्फुटयति आचार्येणेति । अतएवाग्रे वक्ष्यति तदनेन सूत्रं व्याख्यातम् । ये सुखमिति मु० मु० पु० पाठः ।

( ५ ) उक्तछान्दोग्यस्थविशिष्टगतिपादकेऽर्थे स्मृतिं प्रमाणयति ब्रह्मणेति ।

तदनेनोपाख्यानव्याख्यानेन

**(सू०) श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥**

इत्यपि सूत्रं व्याख्यातम् ॥ १६ ॥

**(सू०) अनवस्थितेरसंभवाच्च नेतरः ॥ १७ ॥**

'य एषोऽक्षिणी'ति नित्यवत् श्रुतमनित्ये छायापुरुषे नावकल्पते । कल्पनागौरवं चास्मिन् पक्षे प्रसज्यत इत्याह—**"न चोपासनाकाल"** इति (पृ० २८० पं १२)। **"तथा विज्ञानात्मनोपी"**ति। (पृ० २८१ प० ३) विज्ञानात्मनो हि न प्रदेशे उपासना-ऽन्यत्र दृष्टचरी, ब्रह्मणस्तु तत्र श्रुतपूर्वेत्यर्थः। **"भीषा"** भिया। **"अस्मा"**द्ब्रह्मणः। शेष-मतिरोहितार्थम् ॥ १८० ॥

**(सू०) अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥**

**नच स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥**

(१)स्वकर्मोपार्जितं देहं तेनान्यच्च नियच्छति ।
तक्षादिरशरीरस्तु नात्मान्तर्यामितां भजेत् ॥

(२)प्रवृत्तिनियमलक्षणं हि कार्यं चेतनस्य शरीरिणः स्वशरीरेन्द्रियादौ वा शरीरेण वा वास्यादौ दृष्टं नाशरीरस्य ब्रह्मणो भवितुमर्हति । नहि जातु वटाङ्कुरः कुटजबीजाज्जायते । तदनेन 'जन्माद्यस्य यत' इत्येतदप्याक्षिप्तं वेदितव्यम्(३)। तस्मात्परमात्मनः शरीरेन्द्रियादि-रहितस्यान्तर्यामित्वाभावात् प्रधानस्य वा पृथिव्याद्यभिमानवत्या देवताया वाऽणिमाद्यै-श्वर्ययोगिनो योगिनो वा जीवात्मनो वाऽन्तर्यामिता स्यात् । तत्र यद्यपि प्रधानस्यादृष्टत्वा-श्रुतत्वामतत्वाविज्ञातत्वानि सन्ति, तथापि तस्याचेतनस्य द्रष्टृत्वश्रोतृत्वमन्तृत्वविज्ञातृत्वानां श्रुतानामभावाद् अनात्मत्वाच्चैष त आत्मे'ति श्रुतेरनुपपत्तेर्न प्रधानस्यान्तर्यामिता। यद्यपि पृ-थिव्याद्यभिमानिनो देवस्यात्मत्वमस्ति, अदृष्टत्वादयश्च सह द्रष्टृत्वादिभिरुपपद्यन्ते, शरीरे-न्द्रियादियोगश्च, 'पृथिव्येव यस्यायतनमग्निर्लोको मनोज्योतिरि'त्यादिश्रुतेः, तथापि तस्य प्रतिनियतनियमनाद्'यः सर्वान् लोकानन्तरो यमयति यः सर्वाणि भूतान्यन्तरो यमयति' इति श्रुतिविरोधादनुपपत्ते.। योगी तु यद्यपि लोकभूतवशितया सर्वान् लोकान् सर्वाणि च भूतानि नियन्तुमर्हति तत्रतत्रानेकविधदेहेन्द्रियादिनिर्माणेन 'स एकधा भवति त्रिधा भवती'त्यादि-

---

(१) पूर्वपक्षसङ्ग्रहश्लोकमाह स्वकर्मेति। तक्षादि शिल्पी स्वकर्मजशरीरेण तं देहं तद्द्वाराऽन्यच्च वास्यादिकं नियच्छति, अशरीरस्तु परमात्मैवमन्तर्यामी न भवेदिति श्लोकार्थ । अन्तशरीरं परमात्मान्त-र्यामी घटवदिति पूर्वपक्षिमतेनानुमानं बोध्यम्। तत्र च स्वशरीरानियन्तरि शरीरान्तररहिते तक्षणि व्यभि-च.रवारणायोक्तं स्वकर्मेति। तथा च न नियम्यातिरिक्तशरीरराहित्यं हेतु किन्तु शरीरेण भोक्तृत्वासम्ब-न्ध, एवं च तक्षा स्वकर्मजदेहेन भोगवानिव तं देहं तद्द्वारा वास्यादि च नियच्छतीति न व्यभिचार ।

(२) उक्तानुमानेऽचेतनत्वमुपाधिमाशङ्क्य मुक्ते चेतने साध्यवत्यप्युपाध्यभावात्साध्याव्यापकत्वम-भिप्रेत्याह प्रवृत्तीति। नियमनं शरीरिणो न चेतनमात्रस्य मुक्ते तदभावादित्यर्थ । विपक्षे बाधकमाह नहीति ।

(३) अनेन 'जन्मादिसूत्रे उभयकारणत्वोक्तेर्नियन्तृत्वं सिद्धमि'त्याशङ्का परास्ता ।

श्रुतिभ्यः, तथापि 'जगद्व्यापारवर्जं प्रकरणादि'ति वक्ष्यमाणेन न्यायेन विकारविषये विद्यासिद्धानां व्यापाराभावात्सोऽपि नान्तर्यामी। (१)तस्मात्पारिशेष्याज्जीव एव चेतनो देहेन्द्रियादिमान् द्रष्टृत्वादिसंपन्नः स्वयमदृश्यादिः स्वात्मनि वृत्तिविरोधात्, अमृतश्च देहनाशेऽप्यनाशात्। (२)अन्यथाऽऽमुष्मिकफलोपभोगाभावेन कृतविप्रणाशाकृताभ्यागमप्रसङ्गात्। 'य आत्मनि तिष्ठन्नि'ति चाभेदेऽपि कथंचिद्भेदोपचारात् 'स भगवः कस्मिन्प्रतिष्ठितः स्वे महिम्नी'तिवत्। 'यमात्मा न वेदे'ति च स्वात्मनि वृत्तिविरोधाभिप्रायम्। 'यस्यात्मा शरीरमि'त्यादि च सर्वं 'स्वे महिम्नी'तिवद्योजनीयम्। यदि पुनरात्मनोपि नियन्तुरन्यो नियन्ता भवेद् वेदिता वा ततस्तस्याप्यन्य इत्यनवस्था स्यात्। सर्वलोकभूतनियन्तृत्वं च जीवस्यादृष्टद्वारा। तदुपार्जितौ हि धर्माधर्मौ नियच्छत इत्यनया द्वारा जीवो नियच्छति। एकवचनं च जात्यभिप्रायम्। (३)तस्माज्जीवात्मैवान्तर्यामी, न परमात्मेति।

एवं प्राप्ते ऽभिधीयते—

> (४)देहेन्द्रियादिनियमे नास्य देहेन्द्रियान्तरम्।
> तत्कर्मोपार्जितं तच्चेत्तदविद्यार्जितं जगत्॥

श्रुतिस्मृतीतिहासपुराणेषु तावदत्रभवतः सर्वज्ञस्य सर्वशक्तेः परमेश्वरस्य जगद्योनित्वमवगम्यते। न तत्पृथग्जनसाधारण्यानुमानाभासेनागमविरोधिना शक्यमपह्नोतुम्। तथा च सर्वं विकारजातं तदविद्याशक्तिपरिणामस्तस्य शरीरेन्द्रियस्थाने वर्तत इति यथायथं पृथिव्यादिदेवतादिकार्यकरणैस्तानेव पृथिव्यादिदेवतादीन् शक्नोति नियन्तुम्। (५)न चानवस्था, नहि नियन्त्रन्तरं तेन नियम्यते, किन्तु यो जीवो नियन्ता लोकसिद्धः स परमात्मैवोपाध्यवच्छेदकल्पितभेदस्तथा व्याख्यायत इत्यसकृदावेदितं, तत्कुतो नियन्त्रन्तरं, कुतश्चानवस्था। तथा च 'नान्योऽतोऽस्ति द्रष्टे'त्याद्या अपि श्रुतय उपपन्नार्थाः। परमार्थतोऽन्तर्यामिणोऽन्यस्य जीवात्मनो द्रष्टुरभावात्। (६)अविद्याकल्पितजीवपरमात्मभेदाश्रयास्तु—ज्ञातृज्ञेयभेदश्रुतयः प्रत्यक्षादीनि प्रमाणानि संसारानुभवो विधिनिषेधशास्त्राणि च। एवं चाधिदैवादिष्वेकस्यैवान्तर्यामिणः प्रत्यभिज्ञानं समञ्जसं भवति, 'यः सर्वान् लोकान् यः सर्वाणि भूतानी'त्यत्र य इत्येकवचनमुपपद्यते। अमृतत्वं च परमात्मनि समञ्जसं नान्यत्र। 'य आत्मनि तिष्ठन्नि'त्यादौ चाभेदेपि(७)

---

(१) तस्मात्पारिशेष्याज्जीव एवेति। अन्तर्यामीति वक्ष्यमाणेन सम्बन्ध।

(२) अन्यथा देहनाशान्नाशे। (३) पूर्वपक्षमुपसंहरति तस्मादिति।

(४) अशरीरत्वादीश्वरो नान्तर्यामीत्यत्र किमशरीरत्वं यतो नियन्तृत्वाभावः सिध्येत। नियम्यातिरिक्तदेहरहितत्वं वा देहसम्बन्धाभावो वा देहे भोक्तृत्वाभावो वा? नाद्य इत्याह सिद्धान्ती देहेति। अस्य तक्षादेर्जीवस्य वा स्वदेहादिनियमने न देहाद्यन्तरमतोऽनैकान्तिकतेत्यर्थः। द्वितीयं शङ्कते तदिति। परस्यापि देहादिसम्बन्धाभावोऽसिद्ध इत्याह तदविद्येति। तद्विषयत्वादविद्यायास्तदविद्यात्वम्। तृतीये तु सोपाधिकत्वैव, मुक्तस्य परामेदेन पक्षत्वान्नोपाधेः साध्याव्यापकत्वम्। अतीतकालतां चाह श्रुतीति।

(५) जीवस्य नियन्तृणाभ्युपगमेऽनवस्थेति यदुक्तं तत्राह नचेति। औपाधिकस्य ह्यनौपाधिकेश्वरनियम्यत्वमभ्युपेत नानुपहितेश्वरस्य नियन्त्रन्तरापादकमित्यर्थ।

(६) वस्तुतो जीवपरभेदाभावे कथं लौकिकवैदिकव्यवहारोऽत आहाविद्याकल्पितेति। एव चेति। बहुत्वाज्जीवाना नियम्याधिदेवादिषु प्रत्यभिज्ञा न स्यादित्यर्थ।

(७) औपाधिकभेदाभावेऽपि।

भेदोपचारक्लेशो न भविष्यति। तस्मात्परमात्मान्तर्यामी न जीवादिरिति सिद्धम्। (१)पृथिव्यादि स्तनयित्न्वन्तमधिदैवम्। 'यः सर्वेषु लोकेष्वि'त्यधिलोकम्। 'यः सर्वेषु वेदेष्वि'त्यधिवेदम्। 'यः सर्वेषु यज्ञेष्वि'त्यधियज्ञम्। 'यः सर्वेषु भूतेष्वि'त्यधिभूतम्। प्राणाद्यात्मान्तमध्यात्मम्। संज्ञाया अप्रसिद्धत्वादित्युपक्रममात्रम् ॥ १८ ॥ १९ ॥

**( सू० ) शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥**

पूर्वः पक्षः "**दर्शनादिक्रियायाः कर्त्तरि प्रवृत्तिविरोधात्**" ( पृ० २८४ पं० १५ ) (२)कर्तरि आत्मनि प्रवृत्तिविरोधादित्यर्थः ॥ २० ॥

**( सू० ) अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥**

"**अथ परा यया तदक्षरमधिगम्यते**" ( पृ० २८६ पं० १० ) "**यत्तदद्रेश्यं**" बुद्धीन्द्रियाविषयः। "**अग्राह्यं**" कर्मेन्द्रियागोचरः। "**अगोत्र**" कारणरहितम्। "**अवर्णं**" ब्राह्मणत्वादिहीनम्। न केवलमिन्द्रियाणामविषयः, इन्द्रियाण्यप्यस्य न सन्तीत्याह "**अचक्षुरश्रोत्र**"**मिति**, बुद्धीन्द्रियाण्युपलक्षयति। "**अपाणिपाद**"**मि**"ति, कर्मेन्द्रियाणि। "**नित्यं विभुं सर्वगतं सुसूक्ष्मं**" दुर्विज्ञानत्वात्। स्यादेतत् नित्यं सत्किं परिणामि नित्यं, नेत्याह—"**अव्ययम्**" कूटस्थनित्यमित्यर्थः।

(३)परिणामो विवर्तो वा सरूपस्योपलभ्यते।
चिदात्मना तु सारूप्यं जडानां नोपपद्यते ॥
जडं प्रधानमेवातो जगद्योनिः प्रतीयताम्।
योनिशब्दो निमित्तं चेत्, कुतो जीवनिराक्रिया ॥

(४)परिणममानसरूपा एव हि परिणामा दृष्टाः। यथोर्णनाभिलालापरिणामा लूतातन्तवस्तत्सरूपाः, तथा विवर्ता अपि विवर्तमानसरूपा एव, न विरूपाः। यथा रज्जुविवर्ता धारोरगादयो रज्जुसरूपाः। न जातु रज्ज्वां कुञ्जर इति विपर्यस्यन्ति, न च हेमपिण्डपरिणामो भवति लूतातन्तुः। तत्कस्य हेतोः? अत्यन्तवैरूप्यात्। तस्मात्प्रधानमेव जडं जडस्य जगतो योनिरिति युज्यते। (५)स्वविकारानश्नुत इति तदक्षरम्। (६)'यः सर्वज्ञः सर्वविदि'ति चाक्षरात् परात्परस्याख्यानम्, 'अक्षरात्परतः पर' इति श्रुतेः। नहि परस्मादात्मनोऽर्वाग्विकारजातस्य च परस्तात् प्रधानादृतेऽन्यदक्षरं सम्भवति। अतो यः प्रधानात्परः परमात्मा स

---

( १ ) अधिकरणोपक्रमे विषयाविवेचकमधिलोकमित्यादिभाष्यं विभजते पृथिव्यादीति।

( २ ) यथा देवदत्तकर्तृकगमनक्रियाया ग्रामः कर्म न देवदत्तः, तथात्मकर्तृकदर्शनक्रियाया अनात्मा विषयः नत्वात्मा क्रियायाः कर्तृविषयत्वायोगादित्याह कर्तरीति। क्रियायां गुणः कर्ता प्रधानं कर्म तत्रैकस्याः क्रियायामेकस्य गुणत्वप्रधानत्वयोर्विरोधान्न कर्तुः कर्मत्वमित्यर्थः। लौकिके कर्तरि डित्थे कार्यकरणसंघाते दर्शनादिवृत्त्यविरोधादित्याह आत्मनीति।

( ३ ) पूर्वपक्षसंग्रहश्लोकमाह परिणाम इति। श्लोकद्वयार्थः सुगमः।

( ४ ) सार्धप्रथमश्लोकार्थमाह परिणममानेति।

( ५ ) ननु परिणामिनः प्रधानस्य कथमक्षरशब्दवाच्यतेत्यत आह स्वविकारानिति।

( ६ ) अत्र पूर्वपक्षिप्रदर्शिते भूतयोनिर्जडः परिणममानत्वाद्विवर्तमानत्वादित्यनुमानद्वये बाधमाशङ्क्याह य इति। अक्षरात्परादिति सामानाधिकरण्यम्।

सर्ववित्, भूतयोनिस्त्वक्षरं प्रधानमेव तच्च सांख्याभिमतमेवास्तु। अथ तस्याप्रामाणिकत्वान्न तत्र परितुष्यति, अस्तु तर्हि नामरूपबीजशक्तिभूतमव्याकृतं भूतसूक्ष्मं, प्रधीयते हि तेन विकारजातमिति प्रधानं, तत्खलु जडमनिर्वाच्यमनिर्वाच्यस्य जडस्य नामरूपप्रपञ्चस्योपादानं युज्यते, सारूप्यात्। नतु चिदात्मा निर्वाच्यो, विरूपो हि सः। **अचेतनानामिति** भाष्यं (१)सारूप्यप्रतिपादनपरम्। (२)स्यादेतत् स्मार्तप्रधाननिराकरणेनैवैतदपि निराकृतप्रायं तत्कुतोऽस्य शङ्केत्यत आह—"**अपि च पूर्वत्राहष्टत्वादी**"ति (पृ० २८७५०४)। सति बाधके स्यानाश्रयणमिह तु बाधकं नास्तीत्यर्थः। (३)तेन 'तदैक्षत'त्यादावुपचर्यता ब्रह्मणो जगद्योनिता(४)ऽविद्याशक्त्याश्रयत्वेन, इह त्वविद्याशक्तेरेव जगद्योनित्वसम्भवे न द्वारद्वारिभावो युक्त इति प्रधानमेवात्र वाक्ये जगद्योनिरुच्यत इति पूर्वः पक्षः। (५)अथ योनिशब्दो निमित्तकारणपरस्तथापि ब्रह्मैव निमित्तं न तु जीवात्मेति विनिगमनायां न हेतुरस्तीति संशयेन पूर्वः पक्षः।

अत्रोच्यते—

(६)अक्षरस्य जगद्योनिभावमुक्त्वा ह्यनन्तरम्।
यः सर्वज्ञ इति श्रुत्या सर्वज्ञस्य स उच्यते॥
तेन निर्देशसामान्यात्प्रत्यभिधानतः स्फुटम्।
अक्षरं सर्वविद्विश्वयोनिर्नाचेतनं भवेत्॥
अक्षरात्परत इति श्रुतिस्त्वव्याकृते मता।
अश्नुते यत्स्वकार्याणि ततोऽव्याकृतमक्षरम्॥

नेह तिरोहितमिवास्ति किंचित्। यत्तु—सारूप्याभावान्न चिदात्मनः परिणामः प्रपञ्च—इति। अद्धा,

विवर्तस्तु प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः।
अनादिवासनोद्भूतो न सारूप्यमपेक्षते॥

न खलु बाह्यसारूप्यनिबन्धन एव सर्वो विभ्रम इति नियमनिमित्तमस्ति, आन्तरादपि कामक्रोधभयोन्मादस्वप्नादेर्मानसादपराधात्सारूप्यानपेक्षात्तस्य तस्य विभ्रमस्य दर्शनात्।

---

(१) अचेतनानामिति भाष्यं न प्रायदर्शनपरमित्याह सारूप्येति।

(२) ननु 'न च स्मार्त'मिति प्राच्याधिकरणे प्रधानं दूषितं दृष्टत्वाद्यसम्भवन्यायेनाचेतनमव्याकृतमपि दूषितप्रायमिति तच्छङ्का न युक्ता, प्रधानं त्वप्रमाणिकमधिकमिति शङ्कते स्यादेतदिति। बाधकं दृष्टत्वादि।

(३) ईक्षित्यादिचिन्तयाप्यपुनरुक्तिमाह तेनेति।

(४) उपचर्यता ब्रह्मणो जगद्योनित्वमित्युक्तम्, उपचारे निमित्तमाहाविद्येति। अविद्याशक्त्या विषयीकृतत्वेन तदाश्रय इति तथोक्तमित्यर्थः।

(५) द्वितीयश्लोकापरार्धं व्याचष्टे अथेति।

(६) सिद्धान्तसङ्ग्रहश्लोकत्रयमाहाक्षरस्येत्यादिना। 'यद्भूतयोनिम्' इत्यादिनाक्षरस्य जगद्योनिभावमुक्त्वा पश्चात् 'यः सर्वज्ञः सर्ववित्' इति उपक्रम्य तस्मान्नामरूपादीति श्रुतौ सर्वज्ञस्यैवाक्षरस्य जगद्योनित्वं सिद्धान्तितम् १। तत उपादानत्वप्रत्यभिज्ञालिङ्गेनैकवाक्यत्वे सति वाक्यप्रमाणात् सर्वज्ञ एव विश्वयोनिः 'यदक्षरं तत्सर्वविद्विवेदि'ति विधानाद्गम्यत इत्यर्थः २। अक्षरशब्दवाच्यभूतयोनेः सर्वज्ञत्वे कथं सर्वज्ञस्य अक्षरात्परत्वमत आहाक्षरादिति। उक्तश्रुतौ त्वक्षरशब्दवाच्यमव्याकृतमेवोक्तं स्वकार्यव्यापनादित्यर्थः ३॥

(१)अपि च हेतुमति विभ्रमे तदभावादनुयोगो युज्यते, अनाद्यविद्यावासनाप्रवाहपतितस्तु नानुयोगमर्हति । (२)तस्मात्परमात्मविवर्ततया प्रपञ्चस्तद्योनिर्भुजङ्ग इव रज्जुविवर्ततया तद्योनिर्न तु तत्परिणामतया । तस्मात्तद्धर्मसर्वविस्वोक्तेर्लिङ्गाद् 'यत्तदद्रेश्यमि'त्यत्र ब्रह्मैवोपदिश्यते ज्ञेयत्वेन, न तु प्रधानं जीवात्मा वोपास्यत्वेनेति सिद्धम् । न केवलं लिङ्गादपि तु 'परा विद्ये'ति समाख्यानादप्येतदेव प्रतिपत्तव्यमित्याह—**"अपि च द्वे विद्ये"** इति । ( पृ० २८८ पं० १२ ) लिङ्गान्तरमाह—**"कस्मिन्नु भगव"**इति ( पृ० २८९पं० ४ ) । (३)भोगा भोग्यास्तेभ्यो व्यतिरिक्ते भोक्तरि । अवच्छिन्नो हि जीवात्मा भोग्येभ्यो विषयेभ्यो व्यतिरिक्त इति तज्ज्ञानेन न सर्वं ज्ञातं भवति । समाख्यान्तरमाह—**"अपि च स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठा"**मिति । **"प्लवा ह्येतेऽदृढा यज्ञरूपा अष्टादशे"**ति । प्लवन्ते गच्छन्ति अस्थायिन इति प्लवाः, अत एवादृढाः । के ते ? यज्ञरूपाः । रूप्यन्तेऽनेनेति रूपं, यज्ञो रूपमुपाधिर्येषां ते यज्ञरूपाः । ते तु षोडशर्त्विजः । ऋतुयजनेनोपाधिना ऋत्विक्शब्दः प्रवृत्त इति यज्ञोपाधय ऋत्विजः । एवं यजमानोपि यज्ञोपाधिरेव । एवं पत्नी, (४)'पत्युर्नो यज्ञसंयोगे'इति स्मरणात् । त एतेऽष्टादश यज्ञरूपाः, येष्वृत्विगादिषूक्तं कर्म यज्ञः, यदाश्रयो यज्ञ इत्यर्थः । तच्च कर्मावरं, स्वर्गाद्यवरफलत्वात् । अपियन्ति—प्राप्नुवन्ति । **"नहि दृष्टान्तदार्ष्टान्तिकयो"**( पृ० २९० पं० ५ )रित्युक्ताभिप्रायम्(५) ॥ २१ ॥

## ( सू० ) विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥

विशेषणं हेतुं व्याचष्टे—**"विशिनष्टि ही"**ति । शारीरादित्युपलक्षणं, (६)प्रधानादित्यपि द्रष्टव्यम् । भेदव्यपदेशं व्याचष्टे—**"तथा प्रधानादपी"**ति । स्यादेतत् , किमागमिकं सांख्याभिमतं प्रधानम् ? तथा च (७)बहुसमञ्जसं स्यादित्यत आह—**"नात्र प्रधानं नाम किंचि"**दिति ( पृ० २९१ पं० २ ) ॥ २२ ॥

## ( सू० ) रूपोपन्यासाच्च ॥ २३ ॥

तदेतत् परमतेनाक्षेपसमाधानाभ्यां व्याख्याय स्वमतेन व्याचष्टे—**"अन्ये पुनर्मन्यन्त"** इति । पुनःशब्दोपि पूर्वस्माद्विशेषं द्योतयन्नस्येष्टतां सूचयति । जायमानवर्गमध्य-

---

( १ ) विवर्तस्त्वित्ति श्लोकस्य द्वितीयार्धं व्याचष्टेऽपि चेति ।

( २ ) वेदान्तिनां विवर्तवादे विवर्त्ताश्रयो ब्रह्मैवेत्युपसंहरति सिद्धान्ती तस्मादिति ।

( ३ ) भोग्यव्यतिरिक्त इति भाष्यं व्याचष्टे भोगा इति ।

( ४ ) ननु ऋतुषु यजन्तीति कर्तरि क्विपि सम्प्रसारणे व्युत्पन्नत्वादृत्विग्शब्दस्यैव यजते इति व्युत्पत्त्या यजमानशब्दस्य यज्ञरूपत्वमुपपन्नं पत्न्यास्तु कथं तादित्याशङ्क्याह 'पत्युर्नो' इति । तथा च यज्ञसंयोगे गम्यमाने पतिशब्दप्रातिपदिकैकदेशस्य नकारादेशेऽन्त्यस्येकारस्य ततो ङीपि व्युत्पन्नत्वादस्यापि यज्ञरूपत्वमुपपन्नमेवेत्यर्थः ।

( ५ ) उक्ताभिप्रायमिति । विवर्तत्वेन दृष्टान्तदार्ष्टान्तिकयोर्न सारूप्यापेक्षेत्युक्तोऽभिप्राय इत्यर्थः ।

( ६ ) प्रधानादित्यपीति । यद्यपि भाष्यकारेण शारीरप्रधानयोर्निराकरणे क्रमेण हेतुद्वयं व्याख्यातम्, तथापि पुरुषशब्दस्य प्रधानव्यावर्तकत्वादाद्यहेतुरपि प्रधानवारणार्थ इति बोध्यम् ।

( ७ ) बहुसमञ्जसमिति । चेतनस्य जगदुपादानत्वादिकम् । बहु समञ्जसं स्यादिति क्वाचित्क पाठः । तस्य च प्रधानस्यागमिकत्वे स्वप्रकृतिविकारसारूप्यादि बहु समञ्जसं स्यादित्यर्थो बोध्यः ।

पतितस्याभिमूर्धादिरूपवतः सति जायमानत्वसम्भवे नाकस्माज्जनकत्वकल्पनं युक्तम् । प्रक रण खल्वेतद्विश्वयोनेः, सन्निधिश्च जायमानानां, सन्निधेश्च प्रकरणं बलीय इति जायमानपरि· त्यागेन विश्वयोनेरेव प्रकरणिनो रूपाभिधानमिति चेत् । (१)न । प्रकरणिनः शरीरेन्द्रियादि· रहितस्य विग्रहवत्त्वविरोधात् । (२)न चैतावता मूर्धादिश्रुतयः प्रकरणविरोधात्स्वार्थत्यागेन सर्वात्मतामात्रपरा इति युक्तम् । श्रुतेरत्यन्तविप्रकृष्टार्थात्प्रकरणाद्बलीयस्त्वात् । (३)सिद्धे च प्रकरणिनोऽसम्बन्धे जायमानमध्यपातित्वं जायमानग्रहणे कारणमुपन्यस्त भाष्यकृता । तस्मा· द्धिरण्यगर्भ एव भगवान् प्राणात्मना सर्वभूतान्तरः कार्यो निर्दिश्यत इति साम्प्रतम् । तत्कि· मिदानीं सूत्रमनवधेयमेव, नेत्याह-"अस्मिन्पक्ष" इति (पृ०२पं० १३) (४)प्रकरणात् २३

**(सू०) वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥**

**स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥**

**शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदे· शादसम्भवात्पुरुषमपि चैनमधीयते ॥ २६ ॥**

(५)प्राचीनशालसत्ययज्ञेन्द्रद्युम्नजनबुडिलाः समेत्य मीमांसां चक्रुः—"**को न आत्मा किं ब्रह्मे**"ति ( पृ० २९४ प० ५ ) आत्मेत्युक्ते जीवात्मनि प्रत्ययो मा भूत् , अत उक्तं किं ब्रह्मेति । ते च मीमांसमाना निश्चयमनधिगच्छन्तः कैकेयराजं वैश्वानरविद्याविदमुप सेदुः । उपसद्य चोचुः—"**आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि स्मरसि, त· मेव नो ब्रूहीत्युपक्रम्य द्युसूर्यवाय्वाकाशवारिपृथिवीना**"मिति । अयमर्थः । (६)वैश्वानरस्य भगवतो द्यौ"**मूर्धा सुतेजाः**" ( पृ० २९५ पं० १ ) "**चक्षुर्विश्व· रूपः**" सूर्यः, "**प्राणो**" वायुः, "**पृथग्वर्त्मात्मा**" पृथग्वर्त्म यस्य वायोः स पृथग्वर्त्मा, स एवात्मा स्वभावो यस्य स पृथग्वर्त्मात्मा । "**सन्देहो**" देहस्य मध्यभागः, स आकाशो "**बहुलः**" सर्वगतत्वात् । "**बस्तिरेव रयिः**" आपः, यतोऽद्भ्योऽन्नमन्नाच्च रयिर्धनं तस्मा· दापो रयिरुक्तास्तासां च मूत्रीभूतानां बस्तिः स्थानमिति बस्तिरेव रयिरित्युक्तम् । "**पादौ**

---

( १ ) प्रकरणमित्यादिना जायमानसन्निधिलक्षणस्थानस्य प्रकरणेन बाधमाशंक्य विग्रहवत्त्वलिङ्गेन प्रकरणबाधमाह नेति ।

( २ ) लिङ्गं सार्वात्म्यपरं न शरीरादिमत्त्वपरमित्याशंक्य तथासति मूर्धादिबहुश्रुतीनां बाधः स्यात्ता· स्तु प्रकरणाद्बलीयस्य इत्याह न चैतावतेति । प्रकरणमात्रेणेत्यर्थः । एवं च हृदयं विश्वमस्य एष सर्वभूता· न्तरात्मेति चात्रत्ये सर्वनामनी सन्निहिततरं विग्रहवन्तं गृह्णीतो न भूतयोनिमित्यर्थः ।

( ३ ) लिङ्गनिरुद्धे प्रकरणे सन्निधिर्विजयते इत्याह सिद्धे चेति ।

( ४ ) 'पुरुष एवेद'मित्यादिसर्वरूपत्वोपन्यासोऽपि द्युमूर्धादिकस्यैवास्तु तस्य सन्निहिततरत्वादत आह प्रकरणादिति । सन्निधेः प्रकरणस्य बलीयस्त्वात्पूर्ववद्बाधकलिङ्गाभावाच्चेत्यर्थः ।

( ५ ) 'को न आत्मे'त्युदाहरणभाष्यं छान्दोग्याख्यायिकार्थानुसन्धानेन व्याचष्टे प्राचीनेति । उद्दाल कोप्युपलक्षणीयः, जन इत्यपि ऋषिनाम ।

( ६ ) द्युसूर्येत्यादिभाष्यमादाय व्याचष्टे वैश्वानरस्येत्यादिना । सुतेजस्त्वगुणा द्यौर्वैश्वानरस्य मूर्धा विश्वरूपत्वगुणः सूर्यः 'एष शुक्र'इत्यादिश्रुतेः, स च वैश्वानरस्य चक्षुः, पृथग्गतिमत्त्वगुणो वायुः, बहुलगुण आकाशो देहमध्यं रयिर्धनम् । तद्गुणा आपो बस्तिस्थमुदकम् । तत्र पृथिव्यां वैश्वानरस्य प्रतिष्ठानाद् इत्यर्थः ।

पृथिवी" तत्र प्रतिष्ठानात् । तदेवं वैश्वानरावयवेषु द्युसूर्यानिलाकाशजलावनिषु मूर्धचक्षुः-प्राणसन्देहबस्तिपादेष्वैकैकस्मिन् वैश्वानरबुद्ध्या विपरीततयोपासकानां प्राचीनशालादीनां मूर्द्धपाताचक्षुष्ट्वप्राणोत्क्रमणदेहशीर्णताबस्तिभेदपादश्लथीभावदूषणैरुपासनानां निन्दया मूर्धादिसमस्तभावमुपदिश्या(१)म्नायते—'यस्त्वेतमेवं प्रादेशमात्रमभिविमान'मिति । स सर्वेषु लोकेषु द्युप्रभृतिषु सर्वेषु भूतेषु स्थावरजङ्गमेषु सर्वेष्वात्मसु देहेन्द्रियमनोबुद्धिजीवेष्वन्नमत्ति, सर्वसम्बन्धिफलमाप्नोतीत्यर्थः । अथास्य (२)वैश्वानरस्य भोक्तुर्भोजनस्याग्निहोत्रतासम्पिपादयिषयाऽऽह श्रुतिः—"उर एव वेदिः" वेदिसारूप्यात् । "लोमानि बर्हिः"आस्तीर्णबर्हिःसारूप्यात् । "हृदयं गार्हपत्यः" । हृदयानन्तर "मनोऽन्वाहार्यपचनः" । "आस्यमाहवनीयः" । तत्र हि तदन्नं हूयते ॥

(३)ननु 'को न आत्मा किं ब्रह्मे'त्युपक्रमे आत्मब्रह्मशब्दयोः परमात्मनि रूढत्वेन तदुपरक्तायां बुद्धौ वैश्वानराग्न्यादयः शब्दास्तदनुरोधेन परमात्मन्येव कथंचिन्नेतुं युज्यन्ते न तु प्रथमावगतौ ब्रह्मात्मशब्दौ चरमावगतवैश्वानरादिपदानुरोधेनान्यथयितुं युज्येते । यद्यपि च वाजसनेयिनां वैश्वानरविद्योपक्रमे 'वैश्वानरं ह वै भगवान् सम्प्रति वेद तं नो ब्रूही'त्यत्र नात्मब्रह्मशब्दौ स्तः, तथापि तत्समानार्थं छान्दोग्यवाक्यं तदुपक्रममिति तेन निश्चितार्थेन तदविरोधेन वाजसनेयिवाक्यार्थो निश्चीयते । (४)निश्चितार्थेन ह्यनिश्चितार्थं व्यवस्थाप्यते, नानिश्चितार्थेन निश्चितार्थम् ।(५)कर्मवच्च ब्रह्मापि सर्वशाखाप्रत्ययमेकमेव । (६)न च द्युमूर्द्धत्वादिकं जाठरभूताग्निदेवताजीवात्मनामन्यतमस्यापि सम्भवति, न च सर्वलोकाश्रयफलभागिता, न च सर्वपाप्मप्रदाह इति पारिशेष्यात्परमात्मैव वैश्वानर इति निश्चिते कुतः पुनरियमाशङ्का—"शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेदि"ति ( पृ० २९७ पं० १३ )। उच्यते—तदेवोपक्रमानुरोधेनान्यथा नीयते, यन्नेतुं शक्यम् । अशक्यौ च वैश्वानराग्निशब्दावन्यथा नेतुमिति शङ्कितुरभिमानः । अपि चान्तःप्रतिष्ठितत्वं प्रादेशमात्रत्वं च न सर्वव्यापिनोऽपरिमाणस्य च परब्रह्मणः सम्भवतः । न च प्राणाहुत्यधिकरणताऽन्यत्र जठराग्नेर्युज्यते । न च गार्हपत्यादिहृदयादिता ब्रह्मणः सम्भविनी । तस्माद्यथायोगं जाठरभूताग्निदेवताजीवानामन्यतमो वैश्वानरो, न तु ब्रह्म । (७)तथा च ब्रह्मात्मशब्दावुपक्रमगतावप्यन्यथा नेतव्यौ । द्युमूर्द्धत्वादयश्च स्तुतिमात्रम् । अथवा अग्निशरीराया देवताया ऐश्वर्ययोगाद् द्युमूर्द्धत्वादय

(१) उपदिश्येति । 'मूर्धा ते व्यपतिष्यत्' इत्यादिनैकैकनिन्दया 'तस्य ह वा एतस्ये'त्यादिना वैश्वानरस्य द्युलोकादयो मूर्धादय इति कथनेनावयविन समस्तभावमुपदिश्येत्यर्थः ।

(२) उपासक एव वैश्वानरोऽहमिति मन्यत इत्याह वैश्वानरस्येति ।

(३) शब्दादिभ्योऽन्तःप्रतिष्ठानान्न परमेश्वरो वैश्वानर इति पूर्वपक्षमाक्षिपति नन्वित्यादिना ।

(४) निर्णीतार्थेन छान्दोग्यवाक्येन तदेकार्थं वाजसनेयिवाक्यं निश्चीयते न विपर्यय इत्यत्र न्यायमाह निश्चितार्थेन हीति । यथा 'तं चतुर्धा कृत्वा बर्हिषदं करोति' इति पुरोडाशमात्रचतुर्धाकरणवाक्यमेकार्थसम्बन्धिना शाखान्तरीयेणाग्नेयं चतुर्धा करोतीति विशेषविषयत्वेन निश्चितार्थेनाग्नेय एव पुरोडाशो व्यवस्थाप्यते एवमत्रापीत्यर्थः । (५) कर्मवत्—दर्शपूर्णकर्मवत् ।

(६) उपसंहारादपि वैश्वानरादिशब्दानां परमात्मपरत्वमाहाश्लेता नचेति ।

(७) प्रतीकोपदेशमुपाध्यवच्छिन्नस्योपास्त्युपदेशं च प्रपञ्चयति तथाचेति ।

उपपद्यन्त इति शङ्कितुरभिसन्धिः। अत्रोत्तरम् "न"। कुतः ? **"तथा दृष्ट्युपदेशात्"** ( पृ० २९८ पं० १० )। अद्धा चरममनन्यथासिद्धं प्रथमावगतमन्यथयति, न त्वत्र चरमस्यानन्यथासिद्धिः प्रतीकोपदेशेन वा मनो ब्रह्मेतिवत् तदुपाध्युपदेशेन वा मनोमयः प्राणशरीरो भारूप इतिवदुपपत्तेः। व्युत्पत्त्या वा वैश्वानराग्निशब्दयोर्ब्रह्मवचनत्वाज्ञानन्यथासिद्धिः। तथा च ब्रह्माश्रयस्य प्रत्ययस्याश्रयान्तरे जाठरवैश्वानराह्वये क्षेपेण वा जाठरवैश्वानरोपाधिनि वा ब्रह्मण्युपास्ये वैश्वानरधर्माणां ब्राह्मधर्माणां च समावेश उपपद्यते। असम्भवादिति सूत्रावयवं व्याचष्टे-**"यदि चेह परमेश्वरो न विवक्ष्येते"ति**। पुरुषमपि चैनमधीयत इति सूत्रावयवं व्याचष्टे—**"यदि केवल एवे"ति** ( पृ० २९९ पं० ३ )। न ब्रह्मोपाधितया नापि प्रतीकतयेत्यर्थः। न केवलमन्तःप्रतिष्ठं पुरुषमपीत्यपरेर्थः। (१)अत एव 'यत्पुरुष' इति पुरुषमनूद्य न वैश्वानरो विधीयते। तथासति पुरुषे वैश्वानरदृष्टिरुपदिश्येत। एवं च **'परमेश्वरदृष्टिर्हि जाठरे वैश्वानर इहोपादिश्यत'** इति भाष्यं विरुध्येत। श्रुतिविरोधश्च "स यो हैतमेवमग्निं वैश्वानरं पुरुषं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदे"ति वैश्वानरस्य हि पुरुषत्ववेदनमत्रानूद्यते, न तु पुरुषस्य वैश्वानरत्ववेदनम्। (२)तस्मात् 'स एषोऽग्निर्वैश्वानरो यदि'ति यदिति यदः पूर्वेण सम्बन्धः, पुरुष इति तत्र पुरुषदृष्टेरुपदेश इति युक्तम्।२४।२५।२६

## (सू०) अत एव न देवता भूतं च ॥ २७ ॥

अत एवैतेभ्यः श्रुतिस्मृत्यवगतद्युमूर्धत्वादिसम्बन्धसर्वलोकाश्रयफलभागित्वसर्वपाप्मप्रदाहात्मब्रह्मपदोपक्रमेभ्यो हेतुभ्य इत्यर्थः। *"यो भानुना पृथिवीं द्यामुतेमा"मिति* मन्त्रवर्णोपि न केवलौष्ण्यप्रकाशविभवमात्रस्य भूताग्नेरिममीदृशं महिमानमाहापि तु ब्रह्मविकारतया तादूप्येणेति भावः ॥ २७ ॥

## ( सू० ) साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥

यदेतत्प्रकृतं मूर्द्धादिषु चुबुकान्तेषु पुरुषावयवेषु द्युप्रभृतीन् पृथिवीपर्यन्तांस्त्रैलोक्यात्मनो वैश्वानरस्यावयवान् सम्पाद्य पुरुषविधत्वं कल्पितं तदभिप्रायेणेदमुच्यते,-'पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदे'ति। (३)अत्रावयवसम्पत्त्या पुरुषविधत्वं (४)कार्यकारणसमुदायरूपपुरुषावयवमूर्द्धादिचुबुकान्तःप्रतिष्ठानाच्च पुरुषेऽन्तःप्रतिष्ठितत्वम्, समुदायमध्यपतितत्वात्तदवय-

---

( १ ) अत एवेति। यत एवान्तःप्रतिष्ठितत्वेन सह समुच्चयः सूत्रगतापिशब्दार्थोऽत एवान्तःप्रतिष्ठितत्ववत्पुरुषत्वमपि वैश्वानरमुद्दिश्य विधेयं न विपर्यय इत्यर्थः। यदि पुरुषमनूद्य वैश्वानरो विधीयते तदा पुरुषस्य दृष्ट्याश्रयत्वं स्यादित्याह तथा सतीति। सूत्रश्रुतिविरोधश्च स्फुट एव।

( २ ) पुरुषस्य विधेयत्वे यच्छब्दत्यागमाशङ्क्याह तस्मादिति।

( ३ ) मूर्धादिचिबुकान्तावयवेषु सम्पादितस्य कथं पुरुषविधत्वं तेषां पुरुषैकदेशत्वादित्याशङ्क्य वैश्वानरपुरुषस्य पादादिमूर्धान्तावयवानामेषु सम्पादनात्पुरुषसादृश्यमित्याहावयवसम्पत्त्येति।

( ४ ) मूर्धचिबुकान्तरालस्थस्य पुरुषावयवस्थत्वात्कथं पुरुषेन्तःप्रतिष्ठितत्वमित्याशङ्क्याह कार्यकारणेति। कार्यकारणसमुदाय एव पुरुषस्तस्यावयवा मूर्धादिचिबुकान्तास्तेष्वन्तःप्रतिष्ठानात्पुरुषेन्तःप्रतिष्ठितत्वम्, तत्र हेतुः समुदायेति। अवयविन्यवयवस्यान्तर्भावादवयवस्थोऽप्यवयव्याश्रितो भवति गृहस्थ इव ग्रामस्थ इत्यभिप्रायः।

वानां समुदायिनाम् । (१)अत्रैव निदर्शनमाह—"यथा वृक्षे शाखा"मिति (पृ० ३०० पं० १४) । शाखाकाण्डमूलस्कन्धसमुदाये प्रतिष्ठिता शाखा तन्मध्यपतिता भवतीत्यर्थः । समाधानान्तरमाह—"अथवे"ति । अन्तःप्रतिष्ठत्वं माध्यस्थ्यं तेन साक्षित्वं लक्षयति । एतदुक्तं भवति वैश्वानरः परमात्मा चराचरसाक्षीति । पूर्वपक्षिणोऽनुशयमुन्मूलयति—"निश्चिते चे"ति ( पृ० ३०१ पं० २ ) विश्वात्मकत्वाद् वैश्वानरः प्रत्यगात्मा, विश्वेषा वाय नर(२)स्तद्विकारत्वाद्विश्वप्रपञ्चस्य । विश्वे नरा जीवा वाऽऽत्मानोऽस्य तादात्म्येनेति २८

( सू० ) अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥

अनुस्मृतेर्बादरिः ॥ ३० ॥

साकल्येनोपलम्भासम्भवादुपासकानामनुग्रहायानन्तोऽपि परमेश्वरः प्रादेशमात्रमात्मानमभिव्यक्तीत्याह—"अतिमात्रस्यापी"ति । अतिक्रान्तो मात्रां परिमाणमतिमात्रः । "उपासकानां कृते" उपासकार्थमिति यावत् । व्याख्यान्तरमाह—"प्रदेशविशेषेषु वे"ति ॥ २९ ॥ ३० ॥

( सू० ) सम्पत्तेरिति जैमिनिः ॥ ३१ ॥

मूर्द्धान्तमुपक्रम्य चुबुकान्तो हि कायप्रदेशः प्रादेशमात्रः । तत्रैव त्रैलोक्यात्मनो वैश्वानरस्यावयवान् सम्पादयन् प्रादेशमात्रं वैश्वानरं दर्शयति ॥ ३१ ॥

अत्रैव जाबालश्रुतिसंवादमाह सूत्रकारः—

(सू०) आमनन्ति चैनमस्मिन् ॥ ३२ ॥

"अविमुक्ते" ( पृ० ३०३ पं० १० ) अविद्योपाधिकल्पितावच्छेदे जीवात्मनि, स खल्वविमुक्त', तस्मिन् प्रतिष्ठितः परमात्मा तादात्म्यात् । अत एव हि श्रुतिः—'अनेन जीवेनात्मने'ति । अविद्याकल्पितत्वेन भेदमाश्रित्याधाराधेयभावः । "वरणा" (३)भ्रूः । शेषमतिरोहितार्थम् ॥

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकमीमांसाभाष्यविभागे भामत्यां प्रथमस्याध्यायस्य द्वितीयः पादः ॥

---

(सू०) द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

इह ज्ञेयत्वेन ब्रह्मोपक्षिप्यते । तत्र—

(४)पारवत्त्वेन सेतुत्वाद्भेदे षष्ठ्याः प्रयोगतः ।
द्युभ्वाद्यायतनं युक्तं नामृतं ब्रह्म कर्हिचित् ॥

---

( १ ) अत्रैव—अवयवाश्रितस्यावयव्याश्रितत्व, न तु अवयवस्यावयविनिष्ठत्वे, तथाच यथा शाखाना समुदाये प्रतिष्ठिता शाखा समुदायमध्यपातिनी तथा मूर्धादयोऽवयवाः कार्यकारणसमुदायमध्यपातिन इत्येव निदर्शनार्थो भाष्यकारस्येत्याशयः । अवयवस्थस्य वैश्वानरस्यावयविपुरुषान्त स्थत्वमर्थत एव सिद्धमित्यर्थ ।

( २ ) नेता कारणमित्यर्थ । ( ३ ) 'का वै वरणा का च नासी'त्यत्र वरणशब्दार्थमाह भ्रूरिति ।

( ४ ) आयतनत्वसाधारणधर्मात्संशये पूर्वपक्षग्राहकश्लोकमाह पारवत्त्वेनेति । सेतुत्वस्य पारवत्त्वेन व्याप्तेर्ब्रह्मणश्चापारत्वात्, भेदे सति सम्बन्धार्थकषष्ठीप्रयोगात् ब्रह्मणश्चामृतत्वादमृतस्येति षष्ठीप्रयोगस्यायुक्तत्वेनामृतत्वाभावाच्चामृतं यद् ब्रह्म तद्द्युभ्वाद्यायतनं कदाचिदपि न युक्तमित्यर्थ ।

(१)पारावारमध्यपाती हि सेतुः ताभ्यामवच्छिद्यमानो जलविधारको लोके दृष्टः, न तु बन्धहेतुमात्रम्, हडिनिगडादिष्वपि प्रयोगप्रसङ्गात्। न चानवच्छिन्नं ब्रह्म सेतुभावमनुभवति। न चामृतं सद्ब्रह्मामृतस्य सेतुरिति युज्यते। (२)न च ब्रह्मणोऽन्यदमृतमस्ति, यस्य तत्सेतुः स्यात्। न चाभेदे षष्ठ्याः प्रयोगो दृष्टपूर्वः। तदिदमुक्तम्—**"अमृतस्यैष सेतुरिति श्रवणादि"ति** (पृ० ३०५ पं०)। अमृतस्येति श्रवणात्, सेतुरिति श्रवणादिति योजना। तत्रामृतस्येति श्रवणादिति विशदतया न व्याख्यातम्। सेतुरिति श्रवणादिति व्याचष्टे—**'पारवानि"ति**। तथा च पारवत्यमृतव्यतिरिक्ते सेतावनुश्रीयमाणे प्रधानं वा साङ्ख्यपरिकल्पितं भवेत्। तत्खलु स्वकार्योपहितमर्यादतया पुरुष यावदगच्छद्भवति पारवत्, भवति च द्युभ्वाद्यायतनं तत्प्रकृतित्वात्, प्रकृत्यायतनत्वाच्च विकाराणां, भवति चात्माऽऽत्मशब्दस्य स्वभाववचनत्वात्, प्रकाशात्मा प्रदीप इति वत्। भवति चास्य ज्ञानमपवर्गोपयोगि, तदभावे प्रधानाद्विवेकेन पुरुषस्यानवधारणादपवर्गानुपपत्तेः। यदि त्वस्मिन्प्रमाणाभावेन न परितुष्यति, अस्तु तर्हि नामरूपबीजशक्तिभूतमव्याकृतं भूतसूक्ष्मं द्युभ्वाद्यायतनं, तस्मिन्प्रामाणिके सर्वस्योक्तस्योपपत्तेः। एतदपि प्रधानोपन्यासेन सूचितम्। अथ तु साक्षाच्छ्रुत्युक्तं द्युभ्वाद्यायतनमाद्रियसे ततो वायुरेवास्तु, 'वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ती'ति श्रुतेः। यदि त्वात्मशब्दाभिधेयत्वं न विद्यत इति न परितुष्यसि, भवतु तर्हि शारीरस्तस्य भोक्तुर्भोग्यान् द्युप्रभृतीन् प्रत्यायतनत्वात्। यदि पुनरस्य द्युभ्वाद्यायतनस्य सर्वज्ञश्रुतेरत्रापि न परितुष्यसि, भवतु ततो हिरण्यगर्भ एव भगवान् सर्वज्ञः सूत्रात्मा द्युभ्वाद्यायतनम्। तस्य हि कार्यत्वेन(३) पारवत्त्वं चामृतात्परब्रह्मणो भेदश्चेत्यादि सर्वमुपपद्यते। अयमपि 'वायुना वै गौतम सूत्रेणे'ति श्रुतिमुपन्यस्यता सूचितः। तस्मादयं द्युप्रभृतीनामायतनमिति।

एवं प्राप्तेऽभिधीयते। द्युभ्वाद्यायतनं परब्रह्मैव, न प्रधानाव्याकृतवायुशारीरहिरण्यगर्भाः। कुतः? स्वशब्दात्,

(४)धारणाद्वाऽमृतत्वस्य साधनाद्वाऽस्य सेतुता।
पूर्वपक्षेऽपि मुख्यार्थः सेतुशब्दो हि नेष्यते॥

न हि मृद्दारुमयो मूर्तः पारावारमध्यवर्ती पाथसां विधारको लोकसिद्धः सेतुः प्रधानं वाऽव्याकृतं वा वायुर्वा जीवो वा सूत्रात्मा वाऽभ्युपेयते। किन्तु पारवत्तामात्रपरो लाक्षणिकः सेतुशब्दोऽभ्युपेयः। सोऽस्माकं पारवत्तावर्जं(५) विधरणत्वमात्रेण योगमात्राद्रूढिं परित्यज्य

---

(१) पारं कूलम्, अवारमर्वाक्कूलम्। न त्विति। षिञो बन्धनार्थात्सेतुशब्दव्युत्पत्त्या जगन्मर्यादाबन्धरिब्रह्मणि प्रयोगेऽनेन निवारितोऽन्यथा हडिनिगडादिष्वपि सेतुशब्दप्रयोग स्यात्। यत्र दारुणि छिद्रिते निग्राह्याणां पादप्रोतनं तद्धडि, निगड शृङ्खला।

(२) नन्वमृतमपि ब्रह्मामृतान्तरसम्बन्धि, नेत्याह न च ब्रह्मण इति। 'अतोऽन्यदार्तमि'ति श्रुतेरित्यर्थः।

(३) शरीराद्यवच्छिन्नत्वेन।

(४) उत्तरपक्षसङ्ग्राहकश्लोकमाह धारणेति। अस्य द्युभ्वाद्यायतनस्यात्मनो वा तज्ज्ञानस्य यथाक्रममृतत्वस्य धारणात्साधनाद्वा सेतुता ब्रह्मण एवोचितेत्यर्थः। ननु तर्हि रूढिर्लुप्तेत्याशङ्क्याह -पूर्वपक्षेपीति। अस्यार्थं स्फुटीकर्वन्नाह नहीति। लाक्षणिकत्वमुभयमतेऽपि सेतुशब्दस्य तुल्यमिति भावः।

(५) पारवत्तां त्यक्त्वा। योगमात्रादिति। विधारणार्थयोगादित्यर्थः।

प्रवत्स्यतीति । जीवानाममृतत्वपदप्राप्तिसाधनत्वं चात्मज्ञानस्य पारवत एव लक्षयिष्यति । (१)अमृतशब्दश्च भावप्रधानः, यथा 'द्व्येकयोर्द्विवचनैकवचने' इत्यत्र द्वित्वैकत्वे द्व्येकशब्दार्थौ, अन्यथा द्व्येकेष्विति स्यात्, तादिदमुक्तं भाष्यकृता **"अमृतत्वसाधनत्वादि"**ति । तथा चामृतस्येति च सेतुरिति च ब्रह्मणि द्युभ्वाद्यायतने उपपत्स्येते । अत्र च स्वशब्दादिति (२)तन्त्रोच्चरितमात्मशब्दादिति च सदायतना इति सच्छब्दादिति च ब्रह्मशब्दादिति च सूचयति । सर्वे ह्येतेऽस्य स्वशब्दाः । (३)स्यादेतत्, आयतनायतनवद्भावः सर्वं ब्रह्मेति च सामानाधिकरण्यं हिरण्यगर्भेऽप्युपपद्यते, तथा च स एवात्राऽऽत्माऽमृतत्वस्य सेतुरित्याशङ्क्य श्रुतिवाक्येन सावधारणेनोत्तरमाह--**"तत्रायतनायतनवद्भावश्रवणादि"ति** (पृ० ३०६ पं० १३)। विकाररूपेऽनृतेऽनिर्वाच्येऽभिसन्धेऽभिसन्धानं यस्य स तथोक्तः। भेदप्रपञ्च सत्यमभिसन्यमान इति यावत्। तस्यापवादो दोषः श्रूयते **"मृत्यो"**रिति (पृ० ३०७ पं० ५) **"सर्वं ब्रह्मेति त्वि"ति** । यत्सर्वमविद्यारोपितं तत्सर्वं परमार्थतो ब्रह्म, न तु यद्ब्रह्म तत्सर्वमित्यर्थः ।

**"अपर आहे"ति** (पृ० ३०८ पं० १)। नात्र द्युभ्वाद्यायतनस्य सेतुता येन पारवत्ता स्यात्, किन्तु **'जानथे'**ति यज् ज्ञानं कीर्तितं, यश्च **'वाचो विमुञ्चथे'**ति वाग्विमोकः, तस्यामृतत्वसाधनत्वेन सेतुतोच्यते। तच्चोभयमपि पारवदेव। (४)न च प्राधान्यादेष इति सर्वनाम्ना द्युभ्वाद्यायतनमात्मैव परामृश्यते, न तु तज्ज्ञानवाग्विमोचने इति साम्प्रतम्। वाग्विमोचनात्मज्ञानभावनयोरेव विधेयत्वेन प्राधान्यात्, आत्मनस्तु द्रव्यस्याव्यापारतयाऽविधेयत्वात्, विधेयस्य व्यापारस्यैव व्यापारवतोऽमृतत्वसाधनत्वात्। (५)न चेदमैकान्तिकं यत्प्रधानमेव सर्वनाम्ना परामृश्यते, क्वचिदयोग्यतया प्रधानमुत्सृज्य योग्यतया गुणोऽपि परामृश्यते ॥१॥

## (सू०) मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥

द्युभ्वाद्यायतन प्रकृत्याविद्यादिदोषमुक्तैरुपसृप्यं व्यपदिश्यते **'भिद्यते हृदयग्रन्थि'**रित्यादिना (पृ० ३०८ पं० १३)। तेन तद् द्युभ्वाद्यायतनविषयमेव । ब्रह्मणश्च मुक्तोपसृप्यत्वं **'यदा सर्वे प्रमुच्यन्त'** इत्यादौ श्रुत्यन्तरे प्रसिद्धम् । तस्मान्मुक्तोपसृप्यत्वात् द्युभ्वाद्यायतनं ब्रह्मेति निश्चीयते । (६)हृदयग्रन्थिश्चाविद्यारागद्वेषभयमोहाः । मोहश्च विषादः,

---

(१) अमृतस्य ब्रह्मणो हेत्वभावात्साधनत्वं ज्ञानस्यायुक्तमित्याशंक्याविद्यानिवृत्तिरमृतत्वशब्दार्थ इत्याहामृतशब्दश्चेति । अन्यथा--द्वयोरेकस्य च संख्येयानामुपादाने तेषां बहुत्वाद् द्व्येकेष्विति स्यात् इत्यर्थ ।

(२) तन्त्रेति । नानार्थसाधारण्येन सकृदुच्चारणमिह तन्त्रम्, एव चावृत्तिलक्षणवाक्यभेदो व्युदस्त

(३) तत्र त्वायतनवद्भावश्रवणादिति भाष्यं द्युभ्वाद्यायतनस्य ब्रह्मत्वे सिद्धे तस्य सविशेषत्वनिरासार्थम्, तत्प्रधानवादनिरासानुपयोगित्वात्प्रकृतासङ्गतमित्याशंक्य हिरण्यगर्भपूर्वपक्षनिरासार्थत्वेन प्रकृते सङ्गमयति स्यादेतदिति ।

(४) अप्रधानं ज्ञान न सर्वनामपरामर्शार्हमिति कश्चित्तं प्रत्याह नचेति ।

(५) 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षे'त्यादौ शब्दतोऽप्रधानस्यापि पयआदेः सर्वनामनिर्देशादनियत सर्वनाम्न प्रधानपरामर्शित्वमित्याह न चेति ।

(६) अविद्येत्यादि भाष्ये आदिग्रहणेन प्राङ्निर्दिष्टभयमोहावुक्तौ । एतेऽविद्यादय श्रुतौ हृदयशब्दार्थ इत्याह हृदयग्रन्थिश्चेति ।

शोकः। (१)परं हिरण्यगर्भाद्यवरं यस्य तद्ब्रह्म तथोक्तम्। तस्मिन्ब्रह्मणि यद्दृष्टं दर्शनं तस्मिंस्तदर्थमिति यावत्, यथा 'चर्मणि द्वीपिनं हन्ती'ति चर्मार्थमिति गम्यते। (२)नामरूपादित्यप्यविद्याभिप्रायम्। **'कामा येऽस्य हृदि श्रिता'** इति कामा इत्यविद्यामुपलक्षयति ॥२॥

## ( सू० ) नानुमानमतच्छब्दात् ॥ ३ ॥

नानुमानमित्युपलक्षणं, नाव्याकृतमित्यपि(३) द्रष्टव्यम्, हेतोरुभयत्रापि साम्यात् ॥३॥

## ( सू० ) प्राणभृच्च ॥ ४ ॥

## ( सू० ) भेदव्यपदेशात् ॥ ५ ॥

चेनातच्छब्दत्वं हेतुरनुकृष्यते। स्वय च भाष्यकृद्धेतुमाह—**"न चोपाधिपरिच्छिन्नस्ये"ति** (पृ० ३१० पं० ३) **"न सम्यक् सम्भवति"** नाञ्जसमित्यर्थः। भोग्यत्वेन हि आयतनत्वमतिक्लिष्टम्। स्यादेतत्, यथातच्छब्दत्वादित्यत्रापि हेतुरनुकष्टव्यो, हन्त कस्मात्पृथग्योगकरणं, यावता न प्राणभृदनुमाने इत्येक एव योगः कस्मान्न कृत इत्यत आह—**"पृथगि"ति**। 'भेदव्यपदेशादि'त्यादिना हि प्राणभृदेव निषिध्यते, न प्रधानं, तच्चैकयोगकरणे दुर्विज्ञानं स्यादिति ॥ ४ ॥ ५ ॥

## ( सू० ) प्रकरणात् ॥ ६ ॥

न खलु हिरण्यगर्भादिषु ज्ञातेषु सर्वं ज्ञातं भवति किन्तु ब्रह्मण्येवेति ॥ ६ ॥

## ( सू० ) स्थित्यदनाभ्यां च ॥ ७ ॥

यदि जीवो हिरण्यगर्भो वा द्युभ्वाद्यायतनं भवेत्, ततस्तत्प्रकृत्या'ऽनश्नन्नन्यो अभिचाकशीती'ति परमात्माभिधानमाकस्मिकं प्रसज्येत। न च हिरण्यगर्भ उदासीनः, तस्यापि भोक्तृत्वात्। (४)न च जीवात्मैव द्युभ्वाद्यायतनं, तथासति स एवात्र कथ्यते तत्कथनाय च ब्रह्मापि कथ्यते, अन्यथा सिद्धान्तेऽपि जीवात्मकथनमाकस्मिकं स्यादिति वाच्यम्। यतोऽनधिगतार्थाववोधनस्वरसेनाम्नायेन प्राणभृन्मात्रप्रसिद्धजीवात्माधिगमाया(५)त्यन्तानवगतमलौकिकं ब्रह्मावबोध्यत इति सुभाषितम्। **"यदापि पैङ्ग्युपनिषत्कृतेन व्याख्यानेने"ति।** **( पृ० ३११ पं० ९ )** तत्र 'ह्यनश्नन्नन्यो अभिचाकशीती'ति जीव उपाधिरहितेन रूपेण ब्रह्मस्वभाव उदासीनोऽभोक्ता दर्शितः। तदर्थमेवाचेतनस्य बुद्धिसत्त्वस्यापारमार्थिकं भोक्तृत्वमुक्तम्। तथा चेत्थम्भूतं जीवं कथयतानेन मन्त्रवर्णेन द्युभ्वाद्यायतनं ब्रह्मैव कथितं भवति, उपाध्यवच्छिन्नश्च जीवः प्रतिषिद्धो भवतीति न पैङ्गिब्राह्मणविरोध इत्यर्थः। **"प्रपञ्चार्थ"मिति** ( पृ० ३१२ पं० २ )। तन्मध्ये न पठितमिति कृत्वाचिन्तयेदमधिकरणं प्रवृत्तमित्यर्थः ॥ ७ ॥

---

(१) परावरशब्दार्थमाह परमिति। (२) तथेत्यादिमन्त्रस्थनामरूपशब्दार्थमाह नामरूपादिति।

(३) सूत्रेणानिराकृतत्वान्न वाच्यायुक्तपूर्वपक्षसम्भव इत्याशङ्क्याह नाव्याकृतमित्यपीति। साधारणहेतुनिर्देशादव्याकृतवादस्यापि पूर्वपक्षत्वेन सूचितमित्यर्थः।

(४) न चोपाधिपरिच्छिन्नस्येति भाष्ये चकारप्रयोगात्सौत्रचशब्दव्याख्यात्वभ्रममपाकरोति न चेति। जीवात्मैव द्युभ्वाद्यायतनमिति वाच्यमित्यन्वयः।

(५) प्रसिद्ध जीवस्वरूपमनूद्यात्तस्य पारमार्थिकस्वरूपाधिगमायेत्यर्थः।

## ( सू० ) (१)भूमा सम्प्रसादादध्युपदेशात् ॥ ८ ॥

(२)नारदः खलु देवर्षिः कर्मविदनात्मवित्तया शोच्यमात्मानं मन्यमानो भगवन्तमात्मज्ञमाजानसिद्धं महायोगिनं सनत्कुमारमुपससाद । उपसद्य चोवाच 'भगवन्ननात्मज्ञताजनितशोकसागरपारमुत्तारयतु मां भगवानि'ति । तदुपश्रुत्य सनत्कुमारेण 'नाम ब्रह्मेत्युपास्वे'त्युक्ते नारदेन पृष्टं 'किं नाम्नोऽस्ति भूय' इति । तत्र सनत्कुमारस्य प्रतिवचनं 'वाग्वा व नाम्नो भूयसी'ति । तदेवं नारदसनत्कुमारयोर्भूयसि प्रश्नोत्तरे वागिन्द्रियमुपक्रम्य मनःसङ्कल्पचित्तध्यानविज्ञानबलान्नतोयवायुसहिततेजोनभःस्मराशाप्राणेषु पर्यवसिते(३) । (४)कर्तव्याकर्तव्यविवेकः सङ्कल्पः, तस्य कारणं पूर्वापरविषयनिमित्तप्रयोजननिरूपणं चित्तम् । स्मरः, स्मरणम् । (५) प्राणस्य च समस्तक्रियाकारकफलभेदेन पित्राद्यात्मत्वेन च रथारनाभिदृष्टान्तेन सर्वप्रतिष्ठत्वेन च प्राणभूयस्त्वदर्शिनोऽतिवादित्वेन च नामादिप्रपञ्चादाशान्ताद्भूयस्त्वमुक्त्वाऽपृष्ट एव नारदेन सनत्कुमार एकग्रन्थेन 'एष तु वातिवदति यः सत्येनातिवदती'ति सत्यादीन्कृतिपर्यन्तानुक्त्वोपदिदेश–सुखं त्वेव विजिज्ञासितव्य'मिति। तदुपश्रुत्य नारदेन'सुखं त्वेव भगवो विजिज्ञासे' इत्युक्ते सनत्कुमारो 'यो वै भूमा तत्सुखमि'त्युपक्रम्य भूमानं व्युत्पादयांबभूव, 'यत्र नान्यत्पश्यती' त्यादिना । तदीदृशे विषये विचार आरभ्यते । तत्र संशयः–किं प्राणो भूमा स्यादाहो परमात्मेति । (६)भावभवित्रोस्तादात्म्यविवक्षया सामानाधिकरण्यं संशयस्य बीजमुक्तं भाष्यकृता । तत्र

(७)एतस्मिन्ग्रन्थसन्दर्भे यदुक्ताद्भूयसोऽन्यतः ।
उच्यमान तु तद्भूय उच्यते प्रश्नपूर्वकम् ॥

---

(१) द्युभ्वाद्यधिकरणे आत्मशब्दात् द्युभ्वाद्यायतनं ब्रह्मेत्युक्तम्, तत्रात्मशब्दः प्राणेऽनैकान्त, 'तरति शोकमात्मवित्' इत्यत्राब्रह्मणि प्राणे प्रयोगादित्यापेक्षिक्यधिकरणसंगतिरत्र द्रष्टव्या ।

(२) छान्दोग्यस्थाख्यायिकामर्थतोऽनुक्रामन् विषयं विविनक्ति नारद इत्यादिना । आजानसिद्ध—स्वभावसिद्धम् ।

(३) प्राणेषु पर्यवसिते भूयसि बहुतरे प्रश्नोत्तरे इत्यन्वयः ।

(४) सङ्कल्पादिपदार्थान् व्याचष्टे कर्तव्येत्यादिना । पूर्वापरेति । पूर्वे चापरे च विषया निमित्तं यस्य प्रयोजनस्य तन्निरूपणमित्यर्थ । तत्र वर्णनिष्पादिनी वाङ्नाम्नो भूयसी, वाक्प्रेरकत्वाद्वाचो मनो भूय, कुर्यामिति निश्चयस्य मनसः कर्तव्यादिविवेकः सकल्प कारणम्, तस्य चातीतादिविषयसाध्यप्रयोजनज्ञानं चित्तम्, तस्मादपि लौकिकविषयाच्छास्त्रीयदेवतायैकाग्र्यं ध्यानं फलतो भूय, ध्यानस्य विज्ञानं शास्त्रीय कारणं तस्य मनोगतं बलं प्रतिभानसामर्थ्यं कारणम्, तस्याद्यमानमन्न, तस्याप, एवमाकाशपर्यन्तं बोध्यम् । आकाशस्य भोग्यत्वे 'स्मर' स्मरणं, तस्याशा तया हीष्टं तात्पर्येण स्मरति, प्राणो नामाद्याशान्तसर्वहेतुतया भूयानित्युत्तरोत्तरभूयस्त्वं द्रष्टव्यम् ।

(५) ननु 'एष त्विति' विच्छिद्य भूमोपदेशात्कथं भूमत्वमित्याशङ्क्य विषयदर्शनावसर एव संशयोपयोगितया पूर्वपक्षसम्भावनामाह प्राणस्येति । सर्वात्मत्वशब्दात् प्राण एव भूमा, तुशब्दस्तु सत्यप्राणवादिन एव नामाद्यतिवादित्वाद्विशेषार्थ इति सम्भव पूर्वपक्षस्येत्यर्थ । अपृष्ट एवेति । यदि प्राणादन्यो भूमा तर्हि प्राग्वत् प्रश्नेन भाव्यमिति भाव ।

(६) भूमशब्दस्य निष्कृष्टबहुत्ववचनत्वात्किं प्राणो भूमेति भाष्ये सामानाधिकरण्यायोगमाशङ्क्याह भावभवित्रोरिति ।

(७) पूर्वपक्षसंग्रहश्लोकमाह एतस्मिन्निति । उक्तछान्दोग्यग्रन्थसमुदाये यो वै भूमेति यदुक्ताद्भू-

न च प्राणात्किं भूय इति पृष्टम्, नापि भूमा वाऽस्माद् भूयानिति प्रत्युक्तम्। तस्मात्प्राणभूयस्त्वाभिधानानन्तरमपृष्टेन भूमोच्यमानः प्राणस्यैव भवितुमर्हति। अपि च भूमेति भावो न भवितारमन्तरेण शक्यो निरूपयितुमिति भवितारमपेक्षमाणः प्राणस्यानन्तर्येण बुद्धिसन्निधानात्तमेव भवितारं प्राप्य निर्वृणोति। 'यस्योभयं हविरार्तिमार्छेदि'त्यत्रार्तिरिवार्तं हविः। यथाहुः—(१)'मृष्यामहे हविषा विशेषणमि'ति। न चात्मनः प्रकरणादात्मैव बुद्धिस्थ इति तस्यैव भूमा स्यादिति युक्तम्। सनत्कुमारस्य 'नामब्रह्मेत्युपास्वे'ति प्रतीकोपदेशरूपेणोत्तरेण नारदप्रश्नस्यापि तद्विषयत्वेन परमात्मोपदेशप्रकरणस्यानुत्थानात्, (२)अतद्विषयत्वे चोत्तरस्य प्रश्नोत्तरयोर्वैयधिकरण्येन विप्रतिपत्तेरप्रामाण्यप्रसङ्गात्। तस्मादसति प्रकरणे प्राणस्यानन्तर्यात्तस्यैव भूमेति युक्तम्। (३)तदेतत्संशयबीजं दर्शयता भाष्यकारेण सूचितं पूर्वपक्षसाधनमिति न पुनः उक्तम्। न च भूयोभूयः प्रश्नात्परमात्मैव नारदेन जिज्ञासित इति युक्तम्। प्राणोपदेशानन्तरं तस्योपरमात्तदेव प्राण एव भूमेति स्थिते यद्यत्तद्विरोध्यापाततः प्रतिभाति तत्तदनुगुणतया नेयं, नीतं च भाष्यकृता। स्यादेतत्, 'एष तु वातिवदती'ति तुशब्देन प्राणदर्शिनोऽतिवादिनो व्यवच्छिद्य सत्येनातिवादिनं वदन्कथं प्राणस्य भूमानमभिदधीतेत्यत आह—**"प्राणमेव त्वि"ति ( पृ० ३१३ प० ६ )। "प्राणदर्शिनश्चातिवादित्वमि"ति।** नामाद्याशान्तमतीत्य वदनशीलत्वमित्यर्थः। एतदुक्तं भवति—नायं तुशब्दः प्राणातिवादित्वाद्व्यवच्छिनत्ति, अपि तु (४)तदतिवादित्वमपरित्यज्य प्रत्युत तदनुकृष्य तस्यैव प्राणस्य सत्यस्य श्रवणमननश्रद्धानिष्ठाकृतिभिर्विज्ञानाय निश्चयाय सत्येनातिवदतीति प्राणव्रतमेवातिवादित्वमुच्यते। तुशब्दो नामाद्यतिवादित्वाद्व्यवच्छिनत्ति। न नामाद्याशान्तवाद्यतिवादी, अपि तु सत्यप्राणवाद्यतिवादीत्यर्थः। (५)अत्र चागमाचार्योपदेशाभ्यां सत्यस्य श्रवणम्। अथागमाविरोधिन्यायनिवेशनं मननं, (६)मत्वा च गुरुशिष्यसब्रह्मचारिभिरनसूयुभिः सह संवाद्य तत्त्वं श्रद्धत्ते। श्रद्धानन्तरं च विषयान्तरदोषदर्शी विरक्तस्ततो व्यावृत्तः तत्त्वज्ञानाभ्यासं करोति, सेयमस्य कृतिः प्रयत्नः। अथ तत्त्वज्ञानाभ्यासनिष्ठा भवति, यदनन्तरमेव तत्त्वविज्ञा-

---

यसोऽन्यत्रोच्यमान भूयस्त्व प्राणस्यैव प्रश्नपूर्वकमुच्येत इति श्लोकार्थ। अस्यार्थमाह नचेति। अत्र च 'यो वै भूमे'त्युक्तो भूमा न प्राणादन्यस्य 'अस्ति भगव आशाया भूय' इति प्रश्नातिरिक्तप्रश्नाविषयत्वे सति एतद्ग्रन्थस्य भूमरूपत्वात् आशापेक्षप्राणभूमवदित्यनुमानप्रयोगो सूचितः।

( १ ) शबरस्वामिन –आर्तिम'र्तस्योद्देश्यत्वापर्यवसानाद्धविषा विशेषणं सहामहे, पर्यवसितस्य ह्युद्देश्यस्य विशेषणं वाक्यभेदावहं ग्रहस्यैवैकत्वमिति।

( २ ) प्रश्नस्यारोप्यविषयत्वे दूषणमाहातदिति। प्रश्नो यद्यात्मविषयः स्यात्तदोत्तरस्यप्रतीकविषयस्याविषयत्वमपृष्टविषयत्वं स्यात्तदा प्रश्नोत्तरयोर्वैयधिकरण्यमित्यर्थ।

( ३ ) तदेतदिति। तदेतत्प्रकरणानुत्थानं, प्रकरणमेव प्राणसंनिधिसमकक्षत्वेन संशयबीज दर्शयता भाष्यकारेण प्रकरणत्वमस्य न निश्चितं संनिधिमात्रमात्मशब्दस्येति सूचितम्, अत एव पूर्वपक्षावसरे पुनर्नोक्तमित्यर्थः।

( ४ ) अस्य 'नामाद्यतिवादित्वाद्व्यवच्छिनत्ती'ति अग्रेऽन्वय कार्यं।

( ५ ) सत्यादिपरम्परयेति भाष्योक्तं सत्यादि दर्शयति अत्र चेति।

( ६ ) मननमान्वीक्षिकी, गुरुशिष्येति। अनेन 'ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवाद। तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोर्थिभिरनसूयुभिरभ्युपेयात्' इति ४ अ० २ आ० ४६।४७ गौतमीयं सूत्रद्वयमपवर्गप्रयोजनक वाचस्पतिमिश्रैः सूचितम्।

नमनुभवः प्रादुर्भवति । तदेतद्बाह्या अप्याहुः—'भूतार्थभावनाप्रकर्षपर्यन्तजं योगिज्ञानमि'ति । भावनाप्रकर्षपर्यन्तो निष्ठा तस्माज्जायते तत्त्वानुभव इति । तस्मात्प्राण एव भूमा ।

इति प्राप्ते ऽभिधीयते 'एष तु वा ऽतिवदति यः सत्येनातिवदती'त्युक्त्वा भूमोच्यते, तत्र सत्यशब्दः परमार्थे निरूढवृत्तिः श्रुत्या परमार्थमाह । परमार्थश्च परमात्मैव । ततो ह्यन्यद्विकारजातमनृतं कयाचिदपेक्षया कथंचित्सत्यमुच्यते । तथा 'चैष तु वा ऽतिवदति यः सत्येनातिवदती'ति ब्रह्मणोऽतिवादित्वं श्रुत्याऽन्यनिरपेक्षया लिङ्गादिभ्यो बलीयस्याऽवगमितं कथमिव संनिधानमात्रात् श्रुत्याद्यपेक्षादतिदुर्बलात्कथंचित्प्राणविषयत्वेन शक्यं व्याख्यातुम् । एवं च प्राणादूर्ध्वं ब्रह्मणि भूमावगम्यमानो न प्राणविषयो भवितुमर्हति किन्तु सत्यस्य परमात्मन एव । (१)एवं चानात्मविद आत्मानं विविदिषोर्नारदस्य प्रश्ने परमात्मानमेवास्मै व्याख्यास्यामीत्यभिसन्धिमान् सनत्कुमारः सोपानारोहणन्यायेन स्थूलादारभ्य तत्तद्भूमव्युत्पादनक्रमेण भूमानमतिदुर्ज्ञानतया परमसूक्ष्मं व्युत्पादयामास । (२)न च प्रश्नपूर्वताप्रवाहपतितेनोत्तरेण सर्वेण प्रश्नपूर्वेणैव भवितव्यमिति नियमोऽस्तीत्यादि सुगमेन भाष्येण व्युत्पादितम् । विज्ञानादिसाधनपरम्परा मननश्रद्धादिः प्राणान्ते चानुशासने तावन्मात्रेणैव प्रकरणसमाप्तेर्न प्राणस्यान्यायत्ततोच्येत । तदभिधाने हि सापेक्षत्वेन न प्रकरणं समाप्येत । तस्मान्नेदं प्राणस्य प्रकरणमपि तु यदायत्तः प्राणस्तस्य स चात्मेत्यात्मन एव प्रकरणम् । शङ्कते—**"प्रकरणान्त" इति** (पृ० ३१७ पं० १०) । प्रकरणस्य प्रकरणसमाप्ताविरित्यर्थः । निराकरोति **"न स भगव" इति** । (३)सदंशन्यायेन हि भूम्न एतत्प्रकरणं, स चेद्भूमा प्राणः प्राणस्य तत्प्रकरणं भवेत् । तच्चायुक्तमित्युक्तम् ॥ ८ ॥

न केवलं श्रुतेर्भूमात्मता परमात्मनः, लिङ्गादपीत्याह सूत्रकारः—

## (सू०) धर्मोपपत्तेश्च ॥ ९ ॥

यदि पूर्वपक्षिणा कथंचिन्नीतं तदनुभाष्य भाष्यकारो दूषयति **"योऽप्यसौ सुषुप्तावस्थायामि"ति** । सुषुप्तावस्थायामिन्द्रियाद्यसङ्गयात्मैव । न प्राणः **"परमात्मप्रकरणात्"** ( पृ० ३१८ पं० १ ) । **"अन्यदार्त"** विनश्वरमित्यर्थः । अतिरोहितार्थमन्यत् ॥ ९ ॥

## (सू०) अक्षरमम्बरान्तधृतेः ॥ १० ॥

(४)अक्षरशब्दः समुदायप्रसिद्ध्या वर्णेषु रूढः । परमात्मनि चावयवप्रसिद्ध्या यौगिकः । अवयवप्रसिद्धेश्च समुदायप्रसिद्धिर्बलीयसीति वर्णा एवाक्षरम् । न च वर्णेष्वाकाशस्योतत्वप्रोतत्वे नोपपद्येते, सर्वस्यैव (५)रूपधेयस्य नामधेयात्मकत्वात् । सर्वं हि रूपधेयं नामधेयसं-

---

( १ ) प्रतीकविषयोत्तरवशात्प्रश्नोऽपि तद्विषय इति यदुक्तं तत्राह एवं चेति । तत्त्वे बुद्धिनिवेशाय नामाद्युपन्यासः, उपासितस्त्वाश्रित्य विहितेत्यर्थः ।

( २ ) प्राणात्परं प्रश्नाभावे हेतुमाह नचेति ।

( ३ ) ननु भूम्न आप्रकरणसमाप्तेरनुकर्षोऽस्तु स एव प्राण किं न स्यादत आह सदंशेति । पुरस्तादुपरिष्टाच्च निर्देशः सन्दंशः । तच्चायुक्तमिति । प्राणस्यान्यायत्ततोक्त्या सत्यशब्दश्रुत्या च तदयुक्तमित्युक्तमिति भावः ।　　( ४ ) पूर्वपक्षमाहाक्षरशब्द इति ।

( ५ ) रूपेति । रूप्यते निरूप्यते इति रूपमभिधेयं, स्वार्थे धेयप्रत्ययः, अर्थे शब्दात्मकत्वानुभवो न सदम्भत्वकृत धूमगम्यवह्नेस्तादात्म्यानवभासादिति ।

भिन्नमनुभूयते, गौरयं वृक्षोऽयमिति । न चोपायत्वात्तत्सम्भेदसम्भवः । नहि धूमोपाया वह्नि-धीर्धूमसंभिन्नं वह्निमवगाहते, धूमोयं वह्निरिति, किन्तु वैयधिकरण्येन धूमाद्वह्निरिति । भवति तु नामधेयसम्भिन्नो रूपधेयप्रत्ययो डित्थोऽयमिति । (१)अपि च शब्दानुपायेऽपि रूपधेयप्र-त्यये लिङ्गेन्द्रियजन्मनि नामसम्भेदो दृष्टः । तस्मान्नामसम्भिन्नाः पृथिव्यादयोऽम्बरान्ता नाम्ना ग्रथिताश्च विद्धाश्च, नामानि चोङ्कारात्मकानि तद्व्याप्तत्वात् । 'तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णानि एवमोङ्कारेण सर्वा वागि'ति श्रुतेः। अत ॐकारात्मकाः पृथिव्यादयोऽम्बरान्ता इति वर्णा एवाक्षरं न परमात्मेति प्राप्तम् ।

एवं प्राप्ते ऽभिधीयते—अक्षरं परमात्मैव, न तु वर्णाः । कुतः ? **अम्बरान्तधृतेः** । ( पृ० ३१९ पं० ३ ) । न खल्वम्बरान्तानि पृथिव्यादीनि वर्णा धारयितुमर्हन्ति, किन्तु पर-मात्मैव, तेषां परमात्मविकारत्वात् । न च नामधेयात्मकं रूपधेयमिति युक्तम्, स्वरूपभे-दादुपायभेदादर्थक्रियाभेदाच्च । (२)तथाहि-शब्दत्वसामान्यात्मकानि श्रोत्रग्राह्याण्यभिधेयप्र-त्ययार्थक्रियाणि नामधेयान्यनुभूयन्ते, रूपधेयानि तु घटपटादीनि घटत्वपटत्वादिसामान्यात्म-कानि चक्षुरादीन्द्रियग्राह्याणि मधुधारणप्रावरणाद्यर्थक्रियाणि च भेदेनानुभूयन्ते इति कुतो नामसम्भेदः ।(३)न च डित्थोऽयमिति शब्दसामानाधिकरण्यप्रत्ययः। न खलु शब्दात्मकोऽयं पिण्ड इत्यनुभवः, किन्तु यो नानादेशकालसंप्लुतः पिण्डः सोऽयं सन्निहितदेशकाल इत्यर्थः । (४)संज्ञा तु गृहीतसम्बन्धैरत्यन्ताभ्यासात्पिण्डाभिनिवेशिन्येव संस्कारोद्बोधसंपातायाता स्म-र्यते । यथाहुः—

यत्संज्ञास्मरणं तत्र न तदप्यन्यहेतुकम्(५) ।
पिण्ड एव हि दृष्टः सन्सज्ञां स्मारयितुं क्षमः ॥
(६)संज्ञा हि स्मर्यमाणापि प्रत्यक्षत्वं न बाधते ।
संज्ञिनः सा तटस्था हि न रूपाच्छादनक्षमा ॥ इति ।

न च वर्णातिरिक्ते स्फोटात्मनि अलौकिकेऽक्षरपदप्रसिद्धिरस्ति लोके । न चैष प्रामा-णिक इत्युपरिष्टात्प्रवेदयिष्यते । निरूपितं चास्माभिस्तत्त्वबिन्दौ । तस्माच्छ्रोत्रग्राह्याणां व-र्णानामम्बरान्तधृतेरनुपपत्तेः समुदायप्रसिद्धिबाधनाद् अवयवप्रसिद्ध्या परमात्मैवाक्षरमिति सिद्धम् ॥

---

( १ ) शाब्दबोधेऽभिधया मानान्तरगम्यार्थबोधे यः शाब्दबोधस्तत्रोपायत्वप्रयुक्तशङ्कापि नेत्याह अपि चेति । ग्रथिता सम्बद्धा । विद्धास्तादात्म्येन । शङ्कुना 'पर्णनालेन, पर्णानि-पर्णावयवा । संतृण्णानि-विद्धानि । ( २ ) स्वरूपप्रमाणार्थक्रियाभिर्भेदमाह तथाहीति ।

( ३ ) ननु डित्थोऽयमिति नामसम्भेदोऽर्थेऽनुभूयते, तत्राह नचेति ।

( ४ ) ननु यद्यर्थो न शब्दात्मा तर्हि कथमर्थप्रत्यये शब्दभानम्, नहि स तदा स्वेनान्येन वोच्चार्यत इत्याशंक्याह सज्ञा त्विति । गृहीतवाच्यवाचकभावसम्बन्धै पुम्भिरत्यन्ताभ्यासेन संस्कारोद्बोधोत्पादप्राप्ता संज्ञा-ऽर्थासक्तैव स्मर्यते इति तत्र शब्दभानं नातोऽर्थ शब्दात्मेति भाव. ।

( ५ ) अर्थात्मत्वहेतुकम् ।

( ६ ) संज्ञा हीति । स्मर्यमाणापि संज्ञा संज्ञिनोऽर्थस्य प्रत्यक्षत्व न बाधते यत सा तटस्था-अर्थानि-विष्टाऽतो नार्थस्वरूपाच्छादनक्षमेत्यर्थ । एतेन स्मर्यमाणशब्दस्य परोक्षत्वात्तद्विशिष्टोऽर्थ कथं प्रत्यक्ष इत्याशंका परास्ता ।

(१)ये तु प्रधानं पूर्वपक्षयित्वाऽनेन सूत्रेण परमात्मैवाक्षरमिति सिद्धान्तयन्ति, 'तदम्बरान्तधृतेरि'त्यनेन कथं प्रधानं निराक्रियत इति वाच्यम् । अथ नाधिकरणत्वमात्रं धृतिः, अपि तु प्रशासनाधिकरणता, तथा च श्रुतिः—एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत' इति । तथाप्यम्बरान्तधृतेरित्यनर्थकम् । एतावद्वक्तव्यम्—'अक्षरं प्रशासनादि'ति । एतावतैव प्रधाननिराकरणसिद्धेः । तस्माद्वर्णाक्षरतानिराक्रियैवास्यार्थः । न च स्थूलादीनां वर्णेष्वप्राप्तेरस्थूलमित्यादिनिषेधानुपपत्तेर्वर्णेषु शङ्कैव नास्तीति वाच्यम् । नह्यवश्यं प्राप्तिपूर्वका एव प्रतिषेधा भवन्ति, आप्राप्तेष्वपि नित्यानुवादानां दर्शनात् । यथा नान्तरिक्षे न दिवीत्यग्निचयननिषेधानुवादः । तस्माद्यत्किञ्चिदेतत् ॥ १० ॥

## (सू०) (२)सा च प्रशासनात् ॥ ११ ॥

प्रशासनमाज्ञा चेतनधर्मो नाचेतने प्रधाने वाऽव्याकृते वा सम्भवति । (३)न च मुख्यार्थसम्भवे कूलं पिपतिषतीतिवद्भाक्तत्वमुचितमिति भावः ॥ ११ ॥

## (सू०) अन्यभावव्यावृत्तेश्च ॥ १२ ॥

अम्बरान्तविधरणस्याक्षरस्येश्वराद्यदन्यद्वर्णा वा प्रधानं वाऽव्याकृतं वा तेषामन्येषां भावोऽन्यभावस्तमत्यन्तं व्यावर्तयति श्रुतिः—'तद्वा एतदक्षरं गार्गी'त्यादिका । अनेनैव सूत्रेण जीवस्याप्यक्षरता निषिद्धेत्यत आह—"तथे"ति । ( पृ० ३२० प० १० ) 'नान्यदित्या'दिकया हि श्रुत्याऽऽत्मभेदः प्रतिषिध्यते, तथा चोपाधिभेदभिन्ना जीवा निषिद्धा भवन्त्यभेदाभिधानादित्यर्थः । इतोऽपि न शारीरस्याक्षरशब्दतेत्याह—"अचक्षुष्क"मिति । अक्षरस्य चक्षुराद्युपाधिं वारयन्ती श्रुतिरौपाधिकस्य जीवस्याक्षरता निषेधतीत्यर्थः । तस्माद्वर्णप्रधानाव्याकृतजीवानामसम्भवात्सम्भवाच्च परमात्मनः परमात्मैवाक्षरमिति सिद्धम् ॥ १२ ॥

## ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥

(४)कार्यब्रह्मजनप्राप्तिफलत्वादर्थभेदतः ।
दर्शनध्यानयोर्ध्येयमपरं ब्रह्म गम्यते ॥

(५)'ब्रह्म वेद ब्रह्मैव भवती'ति श्रुतेः सर्वगतपरब्रह्मवेदने तद्भावापत्तौ 'स सामभिरुन्नीयते ब्रह्मलोकमि'ति न देशविशेषप्राप्तिरुपपद्यते । तस्मादपरमेव ब्रह्मेह ध्येयत्वेन चोद्यते ।

---

( १ ) 'अस्थूलमि'त्यादेर्वर्णेष्वप्रातनिषेधानुपपत्त्या प्रधानपूर्वपक्षखण्डनार्थमिदमाधिकरणमिति वादिना भास्कराचार्येणा मतमनूद्य निरस्यति ये त्विति । निराक्रियत इति । साधारणत्वादम्बरान्तधृते प्रधानं निराकर्तुमशक्यमित्यर्थ । ( २ ) अम्बरान्तधृति ।

( ३ ) ननु प्रपञ्चाधिष्ठानमात्रस्य ब्रह्मणो प्रशासनायोगात्तदारोपस्य ब्रह्मणि स्वीकार्यत्वात्प्रधान एवारोपित प्रशासितृत्व वाच्यमित्याशङ्क्याह नचेति । एवं च चेतने दृष्टस्य नियन्तृत्वस्य जगदैश्वर्यरूपेण चेतन एव समारोपसम्भवान्नहि गजादिपरिवृते राजामात्ये राजत्वमारोपितमिति कुडयादावारोप्यते, आरोपितमपि नियन्तृत्व ब्रह्मण्येव मुख्य प्रपञ्चास्थित्यर्थक्रियाकारित्वादकारगतहस्त्वादिवत्प्रधाने तु गौणमित्यर्थ ।

( ४ ) पूर्वपक्षसग्रहश्लोकमाह कार्येति । कार्यब्रह्म हिरण्यगर्भ एव जनो जीवो यस्मिन् स ब्रह्मलोकस्तथा तत्प्राप्ति फल यस्य ध्यानस्य तस्य भावस्तत्त्वाद्धेतोस्तथा ध्यानस्य परविषयत्वादीक्षणस्य परात्परो यस्तद्विषयत्वादेकविषयत्वाभिव्याऽर्थभेदतश्च दर्शनध्यानयोर्ध्येयमपरमेव ब्रह्मेति श्लोकार्थ ।

( ५ ) तत्रार्थं हेतुं व्याचष्टे ब्रह्म वेदेति ।

(१)न चेक्षणस्य लोके तत्त्वविषयत्वेन प्रसिद्धेः परस्यैव ब्रह्मणस्तथाभावाद् ध्यायतेश्च तेन समानविषयत्वात्परब्रह्मविषयमेव ध्यानमिति साम्प्रतम्। समानविषयत्वस्यैवासिद्धेः। परो हि पुरुषो ध्यानविषयः, परात्परस्तु दर्शनविषयः। न च तत्त्वविषयमेव सर्वत्र दर्शनम्, अनृतविषयस्यापि तस्य दर्शनात्। (२)न च मननं दर्शनं, तच्च तत्त्वविषयमेवेति साम्प्रतम्। मननाद्भेदेन तत्रतत्र दर्शनस्य निर्देशात्। न च मननमपि तर्कापरनामावश्यं तत्त्वविषयम्। यथाहुः—'तर्कोऽप्रतिष्ठ' इति। तस्मादपरमेव ब्रह्मेह ध्येयम्। तस्य च परत्वं शरीरापेक्षयेति।

एवं प्राप्ते उच्यते—

(३)ईक्षणध्यानयोरेकः कार्यकारणभूतयोः।
अर्थं औत्सर्गिकं तत्त्वविषयत्वं तथेक्षतेः॥

ध्यानस्य हि साक्षात्कारः फलम्। साक्षात्कारश्चोत्सर्गतस्तत्त्वविषयः। क्वचित्तु बाधकोपनिपाते समारोपितगोचरो भवेत्। न चासत्यपवादे शक्य उत्सर्गस्त्यक्तुम्। तथा चास्य तत्त्वविषयत्वात्तत्कारणस्य ध्यानस्यापि तत्त्वविषयत्वम्। (४)अपि च वाक्यशेषेणैकवाक्यत्वसम्भवे न वाक्यभेदो युज्यते। सम्भवति च परपुरुषविषयत्वेनार्थप्रत्यभिज्ञानात् समभिव्याहारा(५)च्चैकवाक्यता। तदनुरोधेन च परात्पर इत्यत्र परादिति जीवघनविषयं द्रष्टव्यम्। तस्मात्तु परः पुरुषो ध्यातव्यश्च द्रष्टव्यश्च भवति। तदिदमुक्तम्—न चात्र जीवघनशब्देन प्रकृतोऽभिध्यातव्यः परः पुरुषः परामृश्यते, किन्तु जीवघनात् परात् परो यो ध्यातव्यो द्रष्टव्यश्च तमेव कथयितुं जीवघनो जीवः खिल्यभावमुपाधिवशादापन्नः स उच्यते। 'स सामभिरुन्नीयते ब्रह्मलोकमि'त्यनन्तरवाक्यनिर्दिष्टो ब्रह्मलोको वा जीवघनः। स हि समस्तकरणात्मनः सूत्रात्मनो हिरण्यगर्भस्य भगवतो निवासभूमितया करणपरिवृतानां जीवानां तत्र सङ्घात इति भवति जीवघनः। तदेवं त्रिमात्रोङ्कारायतनं परमेव ब्रह्मोपास्यम्। अत एव चास्य देशविशेषाधिगतिः फलमुपाधिमत्त्वात्, क्रमेण च सम्यग्दर्शनोत्पत्तौ मुक्तिः। 'ब्रह्म वेद ब्रह्मैव भवती'ति तु निरुपाधिब्रह्मवेदनविषया श्रुतिः। अपरन्तु ब्रह्मैकैकमात्रायतनमुपास्यमिति मन्तव्यम्॥ १३॥

## दहर उत्तरेभ्यः॥ १४॥

"अथ यदिदमस्मिन्ब्रह्मपुरे दहरं-सूक्ष्मं गुहाप्रायं-पुण्डरीकसंनिवेशं वेश्म **दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्"**। (६)आगमाचार्योप-

---

(१) अर्थभेदत इति द्वितीयहेतुं शङ्कोत्तरत्वेन व्याचष्टे नचेति।

(२) ननु युक्त्या पर्यालोचनमिहेक्षणं तच्च तत्त्वविषयमित्याशंक्याह न च मननमिति।

(३) ईक्षणध्यानयोरर्थभेदं निराकुर्वन्सिद्धान्तसमहश्लोकमाह ईक्षणेति। कार्यकारणभूतयोरीक्षणध्यानयोरेकोर्थः। तथेक्षतेरीक्षणस्य तत्त्वविषयत्वमौत्सर्गिकम्, न चेहापवादः कश्चित्तथा ध्यानस्यापि तत्कारणस्य स्यादन्यथाऽन्यद् ध्यायत्यन्यत्पश्यतीति हेतुहेतुमत्त्वासिद्धेरित्यर्थः।

(४) प्रकारान्तरेणार्थभेदं निराकरोति अपि चेति।

(५) 'स ईक्षत' इति प्रकृतापेक्षानिर्देशाच्चेत्यर्थः। तदनुरोधेन-प्रमाणद्वयानुरोधेन।

(६) उक्तछान्दोग्यस्थविषयवाक्यघटकान्विषयशब्दार्थं वक्तुमारभते आगमेति।

देशाभ्यां श्रवणं च, तदविरोधिना तर्केण मननं च, तदन्वेषणं तत्पूर्वकेण चादरनैरन्तर्यदीर्घकालासेवितेन ध्यानाभ्यासपरिपाकेण साक्षात्कारो विज्ञानम् । विशिष्टं हि तज्ज्ञानं पूर्वेभ्यः(१) । तदिच्छा विजिज्ञासनम् । अत्र संशयमाह–"तत्रे"ति । ( पृ० ३२४ पं० ४ ) तत्र प्रथम तावदेष संशयः 'किं दहराकाशादन्यदेव किंचिदन्वेष्टव्यं विजिज्ञासितव्यं च उत दहराकाश' इति । यदापि दहराकाशोऽन्वेष्टव्यस्तदापि किं भूताकाश आहो शारीर आत्मा किं वा परमात्मेति । संशयहेतुं पृच्छति–"**कुत**" इति । तद्धेतुमाह "**आकाशब्रह्मपुरशब्दाभ्यामि**"ति । तत्र प्रथमं तावद्भूताकाश एव दहर इति पूर्वपक्षयति–"**तत्राकाशशब्दस्य भूताकाशे रूढत्वादि**"ति । एष तु बहुतरोत्तर(२)सन्दर्भविरोधात्तुच्छः पूर्वपक्ष इत्यपरितोषेण पक्षान्तरमालम्बते पूर्वपक्षी–"**अथ वा जीवो दहर इति प्राप्तम्**" । ( पृ० ३२५ पं० १ ) युक्तमित्यर्थः । तत्र–

(३)आधेयत्वाद्विशेषाच्च पुरं जीवस्य युज्यते ।
देहो न ब्रह्मणो युक्तो हेतुद्वयवियोगतः ॥

(४)असाधारणेन हि व्यपदेशा भवन्ति, यथा क्षितिजलपवनबीजादिसामग्रीसमवधानजन्माऽप्यङ्कुरः शालिबीजेन व्यपदिश्यते शाल्यङ्कुर इति, न तु क्षित्यादिभिः तेषां कार्यान्तरेष्वपि साधारण्यात् । तदिह शरीरं ब्रह्मविकारोऽपि न ब्रह्मणा व्यपदेष्टव्यम् , ब्रह्मणः सर्वविकारकारणत्वेनातिसाधारण्यात् । जीवभेदधर्माधर्मोपार्जितं तदित्यसाधारणकारणत्वाज्जीवेन व्यपदिश्यत इति युक्तम् । (५)अपि च ब्रह्मपुर इति सप्तम्यधिकरणे स्मर्यते, तेनाधेयेनानेन सम्बन्धव्यम् । न च ब्रह्मणः स्वे महिम्नि व्यवस्थितस्यानाधेयस्याधारसम्बन्धः कल्पते । जीवस्त्वाराग्रमात्र इत्याधेयो भवति । तस्माद् ब्रह्मशब्दो रूढिं परित्यज्य देहादिबृंहणतया जीवे यौगिको वा भाक्तो वा व्याख्येयः । चैतन्यं च भक्तिः । (६)उपधानानुपधाने तु विशेषः । "**वाच्यत्वं**" गम्यत्वम् । स्यादेतत् , जीवस्य पुरं भवतु शरीर, पुण्डरीकदहरगोचरता त्वन्यस्य(७) भविष्यति, वत्सराजस्य पुर इवोज्जयिन्यां मैत्रस्य सद्मेत्यत आह "**तत्र पुरस्वामिन**" इति । अयमर्थः । वेश्म खल्वधिकरणमनिर्दिष्टाधेयमाधेयविशेषापेक्षायां पुरस्वामिनः प्रकृतत्वात्तेनैवाधेयेन सम्बद्धं सदनपेक्षं नाधेयान्तरेण स-

---

( १ ) पूर्वेभ्य –श्रवणमनननिदिध्यासनेभ्य ।

( २ ) 'एष आत्मे'त्यादावात्मशब्दादेर्भूताकाशेऽयुक्तत्वेनेत्यादि ।

( ३ ) आधेयत्वादिति । ब्रह्मपुरशब्दोक्तं देहलक्षणं पुर परिच्छिन्नत्वेनाधेयत्वात्स्वकर्मोपार्जितशरीरेण सम्बन्धविशेषाच्च ब्रह्मण पुरमिति षष्ठीसम्भवाज्जीवस्य सम्भवति, ब्रह्मणस्तूक्तहेतुद्वयाभावान्न युक्तं पुरमित्यर्थः ।

( ४ ) विशेषादिति हेतुं व्याचष्टे असाधारणेनेति । जीवभेदो–जीवविशेष ।

( ५ ) आधेयत्वहेतु व्याचष्टे अपि चेति । तेनाधिकरणेन सह अनेन ब्रह्मशब्दार्थेनाधेयेनान्वेतव्यम् , समासाभिहितसम्बन्धसामान्यस्याधाराधेयभाव एव विश्रान्तत्वादिति भाव ।

( ६ ) यद्युभयत्र भक्तिप्रयोजकं चैतन्य समं तर्हि जीवब्रह्मणो को विशेषस्तत्राहोपधानेति । उपाधितदभावावित्यर्थ. । वाच्यत्वमिति । भक्त्या च ब्रह्मशब्दवाच्यत्वमिति भाष्ये वाच्यत्वं तात्पर्यगम्यत्वं भाक्तत्वे सत्यभिधेयत्वविरोधादित्यर्थ. ।

( ७ ) ब्रह्मण ।

सम्बन्धं कल्पयति । ननु तथापि शरीरमेवास्य भोगायतनमिति को हृदयपुण्डरीकेऽस्य विशेषो यत्तदेवास्य सङ्केत्यत आह—"**मनउपाधिकश्च जीव**" इति । ननु मनोपि चलतया सकलदेहवृत्ति पर्यायेणेत्यत आह—"**मनश्च प्रायेणे**"ति । आकाशशब्दश्चारूपत्वादिना सामान्येन जीवे भाक्तः । अस्तु वा भूताकाश एवायमाकाशशब्दो दहरोऽस्मिन्नन्तराकाश इति, तथाप्यदोष इत्याह—"**न चात्र दहरस्याऽऽकाशस्याऽन्वेष्यत्वामे**"ति ।

एवं प्राप्ते उच्यते । भूताकाशस्य तावन्न दहरत्वं यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाश इत्युपमानविरोधात् । तथाहि—

(१)तेन तस्योपमेयत्वं रामरावणयुद्धवत् ।
अगत्या भेदमारोप्य गतौ सत्यां न युज्यते ॥

अस्ति तु दहराकाशस्य ब्रह्मत्वेन भूताकाशाद्भेदेनोपमानस्य गतिः । (२)न चानवच्छिन्नपरिमाणमवच्छिन्न भवति, तथा सत्यवच्छेदानुपपत्तेः । (३)न भूताकाशमानत्व ब्रह्मणोऽत्र विधीयते, येन 'ज्यायानाकाशादि'ति श्रुतिविरोधः स्याद्, अपि तु भूताकाशोपमानेन पुण्डरीकोपाधिप्राप्तं दहरत्व निवर्त्यते । अपि च सर्वएवोत्तरे हेतवो दहराकाशस्य भूताकाशत्वं व्यासेधन्तीत्याह "**न च कल्पितभेद**" ( पृ० ३२६ प० १४ ) इति । नापि दहराकाशो जीव इत्याह—"**यद्यप्यात्मशब्द**" इति ( पृ० ३२७पं० ३ ) ॥

(४)उपलब्धेरधिष्ठानं ब्रह्मणो देह इष्यते ।
तेनासाधारणत्वेन देहो ब्रह्मपुरं भवेत ॥

देहे हि ब्रह्मोपलभ्यत इत्यसाधारणतया देहो ब्रह्मपुरमिति व्यपदिश्यते, न तु ब्रह्मविकारतया । (५)तथा च ब्रह्मशब्दार्थो मुख्यो भवति । अस्तु वा ब्रह्मपुरं जीवपुरं, तथापि यथा वत्सराजस्य पुरे उज्जयिन्यां मैत्रस्य सद्म भवति, एवं जीवस्य पुरे हृत्पुण्डरीकं ब्रह्मसदनं भविष्यति, उत्तरेभ्यो ब्रह्मलिङ्गेभ्यो ब्रह्मणोऽवधारणात । (६)ब्रह्मणो हि बाधके प्रमाणे बलीयसि जीवस्य च साधके प्रमाणे सति ब्रह्मलिङ्गानि कथंचिदभेदविवक्षया जीवे व्याख्यायन्ते । न चेह ब्रह्मणो बाधक प्रमाणं साधक वाऽस्ति जीवस्य । ब्रह्मपुरव्यपदेशश्चोपपादितो ब्रह्मोपलब्धिस्थानतया(७) । अर्भकौकस्त्वं चोक्तम् । तस्मात्सति सम्भवे ब्रह्मणि तल्लिङ्गाना नाब्रह्मणि व्याख्यानमुचितमिति ब्रह्मैव दहराकाशो न जीवभूताकाशाविति । (८)श्रवणमनन

---

( १ ) उपमानोक्तेरन्यथासिद्धिमाशङ्क्याह तेनेति । ब्रह्मतनायतनत्वादिना 'रामरावणयोर्युद्धं रामरावणयोरिवे'त्यत्रागत्या भेदमारोप्योपमेयत्व युक्तमन्यथा नेत्यर्थः । इदमेवाहास्ति त्वित्यादिना ।

( २ ) उपाध्यपेक्षयाऽऽकाशे भेदारोपेऽपि न बाह्याकाशतुल्यत्व हार्दाकाशस्येत्याह नचेति ।

( ३ ) यद्यूनत्वाद्धार्दनभसो न बाह्येनोपमेयता हन्ताधिकत्वाद्ब्रह्मणोऽपि न स्यादत आह न भूतेति ।

( ४ ) आधेयत्वहेतुं पूर्वपक्ष्युपन्यस्त निरस्यन्नाह उपलब्धेरिति । तेनेत्यादिना विशेषत्वहेतुनिरासो ज्ञेय । श्लोकार्थः सुगम । ( ५ ) श्लोकार्थं व्याचक्षाणो मुख्याध्येयत्वानिराकरणे हेतुमाह तथाचेति ।

( ६ ) ननु लिङ्गानि ब्रह्माभेदपराण्येव कुतो नेत्यत्राह ब्रह्मणो हीति । इह ब्रह्मणि बाधकं जीवे च साधकं प्रमाणं नास्ति ब्रह्मबाधकत्वेन जीवसाधकत्वेन चाभिमतस्य सन्निधेर्लिङ्गैर्बाधादित्यर्थ ।

( ७ ) एवं च पुरस्य ब्रह्मसम्बन्धोपपादनाद्ब्रह्मशब्देन जीवानभिधानाज्जीवसंनिधिरसिद्ध इति भावः ।

( ८ ) 'अथ य इहात्मानमनुविद्य' ( पृ० ३२७ पं० १० ) इति भाष्यस्थश्रुतावनुशब्दार्थमाह श्रवणेति । अनुभूय-साक्षात्कृत्येति विदेरर्थ । कामाः-विषय, चारः-उपलब्धिः ।

मनुविद्य ब्रह्मानुभूय चरणं चारस्तेषां कामेषु चरणं भवतीत्यर्थः । (१)स्यादेतत्, दहराकाशस्यान्वेष्यत्वे सिद्धे तत्र विचारो युज्यते, न तु तदन्वेष्टव्यम्, अपि तु तदाधारमन्यदेव किंचिदित्युक्तमित्यनुभाषते "यद्प्येतदि"ति (पृ० ३२७ प० १) अनुभाषितं दूषयति— "अत्र ब्रूम" इति । यद्याकाशाधारमन्यदन्वेष्टव्यं भवेत्तदेवोपरि व्युत्पादनीयमाकाशव्युत्पादने तु कोपयुज्यत इत्यर्थः । चोदयति "नन्वेतदपी"ति । आकाशकथनमपि तदन्तर्वर्तिवस्तुसद्भावप्रदर्शनायैव । अथाकाशपरमेव कस्मान्न भवतीत्यत आह "तं चेद् ब्रूयु"रिति । आचार्येण हि 'दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमि'त्युपदिष्टेऽन्तेवासिनाऽऽक्षिप्तं, किं तदत्र विद्यते यदन्वेष्टव्यम् । पुण्डरीकमेव तावत्सूक्ष्मतरं तदवरुद्धमाकाशं सूक्ष्मतमम् । तस्मिन्सूक्ष्मतमे किमपरमस्ति नास्त्येवेत्यर्थः । तत्किमन्वेष्टव्यमिति । तदस्मिन्नाक्षेपे परिसमाप्ते समाधानावसर आचार्यस्याकाशोपमानोपक्रमं वचः 'उभे अस्मिन्द्यावापृथिवी समाहिते' इति । तस्मात्पुण्डरीकावरुद्धाकाशाश्रये द्यावापृथिव्यावेवान्वेष्टव्ये उपदिष्टे, नाकाश इत्यर्थः । परिहरति "नैतदेवम्" । "एव ही"ति । (२)स्यादेतत्, एव मेवैतन्नो खल्वभ्युपगमा एव दोषत्वेन चाद्यन्ते इत्यत आह—"तत्र वाक्यशेष" इति । वाक्यशेषो हि दहराकाशात्मवेदनस्य फलवत्त्वं ब्रूते, यच्च फलवत् तत्कर्तव्यतया चोद्यते, यच्च कर्तव्यं तदिच्छतीति, 'तदन्वेष्टव्यं तद्वाव जिज्ञासितव्यमि'ति दहराकाशविषयमवतिष्ठते । स्यादेतत्, द्यावापृथिव्यावेवात्मानौ भविष्यतः, ताभ्यामेवात्मा लक्षयिष्यते, आकाशशब्दवत्, ततश्चाकाशाधारौ तावेव परामृश्येते इत्यत आह—"अस्मिन्कामाः समाहिताः"प्रतिष्ठिताः । "एष आत्माऽपहतपाप्मे"ति । अनेन हि प्रकृतं द्यावापृथिवीसमाधानाधारमाकाशमाकृष्य" द्यावापृथिव्याद्यभिधानव्यवहितमपीति(३) शेषः । ननु सत्यकामज्ञानस्यैतत्फलं, तदनन्तरं निर्देशाद्, न तु दहराकाशवेदनस्येत्यत आह—"समुच्चयार्थेन चशब्देने"ति । अस्मिन्कामा इति च एष इति चैकवचनान्तं न द्वे द्यावापृथिव्यौ परामृष्टुमर्हतीति दहराकाश एव परामृष्टव्य इति समुदायार्थः । (४)तदनेन क्रमेण 'तस्मिन्यदन्तरि'त्यत्र तच्छब्दोऽनन्तरमप्याकाशमतिलङ्घ्य हृत्पुण्डरीके परामृशतीत्युक्तं भवति । तस्मिन् हृत्पुण्डरीके यदन्तराकाशं तदन्वेष्टव्यमित्यर्थः ॥ १४ ॥

## ( सू० ) गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥ १५ ॥

उत्तरेभ्य इत्यस्य प्रपञ्चः । (५)एतमेव दहराकाशं प्रक्रम्य बताहो कष्टमिदं वर्तते जन्तूनां तत्त्वावबोधविकलानां यदेभिः स्वाधीनमपि ब्रह्म न प्राप्यते । तद्यथा चिरन्तननिरूढ-

---

( १ ) आद्यसन्दर्भस्थपूर्वपक्षमनूद्य सिद्धान्तयन्नाह स्यादेतदिति ।

( २ ) द्यावापृथिव्यादन्वेष्टव्यापत्तिरित्यत्र भाष्ये इष्टापत्त्यभिप्रायेणाशङ्कते स्यादेतदिति । 'तर्ह्यथ य इहात्मे'त्यत्रात्मशब्दः कथमत आह ताभ्यामिति । तथा च भूताकाशस्य दहरत्वसिद्धिरित्यर्थः ।

( ३ ) व्यवहितमपीति । 'उभेऽस्मिन् द्यावापृथिवी अन्तरेव समाहिते' इति पूर्ववाक्ये आकाशनिर्देशानन्तरं द्यावापृथिव्यादिनिर्देशाद् व्यवधानमत्राकृष्येति भाष्यार्थो बोध्यस्तथाच 'अस्मिन्कामा' इत्यस्मिन्शब्देन द्यावापृथिव्याधार आकाश एव परामृश्यते समानाधारत्वप्रत्यभिज्ञानान्न द्यावापृथिव्यौ, एवं चैष इत्यात्मेति तदुपरितनशब्दाभ्यामप्याकाश एव निर्दिष्ट इति समाधानार्थतात्पर्यम् ।

( ४ ) यदि दहराकाशस्य ज्ञेयत्वं कथं तर्हि तदाश्रयस्य ज्ञेयत्वोपदेशोऽत आह तदनेनेति ।

( ५ ) अस्य श्रुतिं प्रवृत्त इत्यन्वयः ।

रनिबिडमलपिहितानां कलधौतशकलानां पथि पतितानामुपर्युपरि सञ्चरद्भिरपि पान्थैर्धनायद्भि(१)र्ग्रावखण्डनिवहविभ्रमेणैतानि नोपादीयन्त इत्यभिसन्धिमती सादभुतमिव सखेदमिव श्रुतिः प्रवर्तते 'इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एत ब्रह्मलोकं न विदन्ती'ति । स्वापकाले हि सर्व एवायं विद्वानविद्वांश्च जीवलोको हृत्पुण्डरीकाश्रयं दहराकाशाख्यं ब्रह्मलोकं प्राप्तोप्य नाद्यविद्यातमःपटलपिहितदृष्टितया ब्रह्मभूयमापन्नोऽहमस्मीति न वेद । सोय ब्रह्मलोकशब्द स्तद्गतिश्च प्रत्यहं जीवलोकस्य दहराकाशस्यैव ब्रह्मरूपलोकतामाहतुः । तदेतदाह भाष्यकार **"इतश्च परमेश्वर एव दहरो यस्माद्दहरवाक्यशेष" इति** (पृ० ३२९ पं० ३) तदनेन गतिशब्दौ व्याख्यातौ । 'तथाहि दृष्ट'मिति सूत्रावयवं व्याचष्टे—**"तथा ह्य हरहर्जीवाना"मिति** । वेदे च लोके च **"दृष्टम्"** । यद्यपि सुषुप्तस्य ब्रह्मभावे लौकिकं न प्रमाणान्तरमस्ति, तथापि वैदिकीमिव प्रसिद्धिं स्थापयितुमुच्यते । 'ईदृशी नामेयं वैदिकी प्रसिद्धिर्यल्लोकेऽपि गीयते' इति । यथा श्रुत्यन्तरे यथा च लोके तथेह ब्रह्मलोकशब्दोऽपीति योजना । **लिङ्गं चेति** सूत्रावयवव्याख्यान चोद्यमुखेनावतारयति—**"ननु कमलासनलोकमपी"ति** । परिहरति—**"गमयेद्यदि ब्रह्मणो लोक" इति** । (२)अत्र तावन्निषादस्थपतिन्यायेन षष्ठीसमासात्कर्मधारयो बलीयानिति स्थितमेव, तथापीह षष्ठीसमासनिराकरणेन कर्मधारयस्थापनाय लिङ्गमप्यधिकमस्तीति तदप्युक्तं सूत्रकारेण(३) । तथाहि लोकवेदप्रसिद्धाहरहर्ब्रह्मलोकप्राप्त्यभिधानमेव लिङ्गं कमलासनलोकप्राप्तेर्विपक्षादसम्भवाद्व्यावर्तमानं षष्ठीसमासाशङ्कां व्यावर्तयद्दहराकाशप्राप्तावेवावतिष्ठते, न च दहराकाशो ब्रह्मणो लोकः, किन्तु तद्ब्रह्मेति । ब्रह्म च तल्लोकश्चेति कर्मधारयः सिद्धो भवति । लोक्यत इति लोकः । हृत्पुण्डरीकस्थः खल्वयं लोक्यते । यत्खलु पुण्डरीकस्थमन्तःकरणं तस्मिन्विशुद्धे प्रत्याहृतेतरकरणानां योगिनां सुनिर्मल इवोदके चन्द्रमसो बिम्बमतिस्वच्छं चैतन्यं ज्योतिस्स्वरूपं ब्रह्म विलोक्यत इति॥१५॥

## ( सू० ) धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥१६॥

धात्रो धृतिशब्दो भाववचनः । धृतेश्च परमेश्वर एव दहराकाशः । अस्य धारणलक्षणस्य महिम्नोऽस्मिन्नेवश्वर एव श्रुत्यन्तरेषूपलब्धेः । निगदव्याख्यानमस्य भाष्यम् ॥१६॥

## ( सू० ) प्रसिद्धेश्च ॥ १७ ॥

(४)न चेयमाकाशशब्दस्य ब्रह्मणि लक्ष्यमाणविभुत्वादिगुणयोगाद्वृत्तिः साम्प्रतिकी, यथा

---

(१) धनेच्छावद्भिः ।

(२) कर्मधारयस्य षष्ठीसमासाद्बलीयस्त्वाल्लिङ्गोपन्यासवैयर्थ्यमाशङ्क्याभ्युच्चयार्थत्वेन परिहरति अत्र तावदित्यादिना । 'निषादस्थपतिं याजयेदि'त्यत्र निषादस्थपतिस्त्रैवर्णिकानामन्यतम उतान्य इति संशयेऽग्निविद्यावत्त्वेन समर्थत्वादनिषादेपि निषादानां स्वामीतिशब्दप्रवृत्तिसम्भवादन्यतम इति प्राप्ते, कर्मधारयसमासेन निषाद एव स्थपतिर्ग्राह्यो श्रौतार्थलाभेन शब्दसामर्थ्यात् षष्ठीसमासे लक्षणापत्तेरिति मीमांसायां स्थितेपि लिङ्गाधिक्यसूचनार्थमत्र षष्ठीसमासमनादृत्य कर्मधारयस्थापनमिति भाव ।

(३) चकार प्रयुञ्जानेनेति शेष । सूत्रावयवांशार्थमाह तथाहीति । विपक्षाद्व्यावृत्तौ हेतुरसम्भवादिति ।

(४) प्रसिद्धिशब्दस्य रूढिशब्दत्वभ्रममपनयति न चेति । रथाङ्गमितिनाम्नश्चक्रवाके लक्षणया सम्प्रत्येव प्रयोगः रथाङ्गशब्दपर्यायस्य चक्रप्रातिपदिकस्य चक्रवाकशब्दावयवत्वेन निवेशात्, आकाशशब्दस्य तु तु प्रसण्यनादिकाले बहुकृत्व प्रयोगान्निरूढलक्षणेत्यर्थः ।

रथाङ्गनामा चक्रवाक इति लक्षणा, किन्त्वत्यन्तनिरूढेति सूत्रार्थः। (१)ये त्वाकाशशब्दो ब्रह्मण्यपि मुख्य एव नभोवदित्याचक्षते, तै'रन्यायश्चानेकार्थत्वमि'ति 'चानन्यलभ्यः शब्दार्थ' इति च मीमांसकानां मुद्राभेदः कृतः। लभ्यते ह्याकाशशब्दाद्विभुत्वादिगुणयोगेनापि ब्रह्म। (२)न च ब्रह्मण्येव मुख्यो नभसि तु तेनैव गुणयोगेन वर्त्स्यतीति वाच्यम्। लोकाधीनावधारणत्वेन शब्दार्थसम्बन्धस्य वैदिकपदार्थप्रत्ययस्य तत्पूर्वकत्वात्। (३)ननु 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश' इति व्यतिरेकनिर्देशान्न लक्षणा युक्ता। (४)नहि भवति गङ्गायाः कूले विवक्षिते(५) गङ्गाया गङ्गेति प्रयोगः (६)तत्किमिदानीं 'पौर्णमास्यां पौर्णमास्या यजेतामावास्यायाममावास्यये'त्यसाधुर्वैदिकः प्रयोगः। न च पौर्णमास्यमावास्यशब्दावाग्नेयादिषु मुख्यौ। यच्चोक्तं यत्र शब्दादर्थप्रतीतिस्तत्र लक्षणा, यत्र पुनरन्यतोऽर्थे निश्चिते शब्दप्रयोगस्तत्र वाचकत्वमेवेति। तदयुक्तम्, उभयस्यापि व्यभिचारात्। 'सोमेन यजेते'ति शब्दादर्थः प्रतीयते, न चात्र कस्यचिल्लाक्षणिकत्वमृते वाक्यार्थात्। न च 'य एवं विद्वान्पौर्णमासीं यजते य एवं विद्वानमावास्या'मित्यत्र पौर्णमास्यमावास्याशब्दौ न लाक्षणिकौ। तस्मात्प्रसिद्धेरेतदिति ॥ १७ ॥

## सू० इतरपरामर्शात्स इति चेन्नासम्भवात् ॥ १८ ॥

सम्यक् प्रसीदत्यस्मिन् जीवो विषयेन्द्रियसंयोगजनितं कालुष्यं जहातीति सुषुप्तिः सम्प्रसादो जीवस्यावस्थाभेदो, न ब्रह्मणः। तथा शरीरात्समुत्थानमपि शरीराश्रयस्य जीवस्य न त्वनाश्रयस्य ब्रह्मणः। तस्माद्यथा पूर्वोक्तैर्वाक्यशेषगतैर्लिङ्गैर्ब्रह्मावगम्यते दहराकाश, एवं वाक्यशेषगताभ्यामेव सम्प्रसादसमुत्थानाभ्यां दहराकाशो जीवः कस्मान्नावगम्यते? तस्मान्नास्ति विनिगमनेति शङ्कार्थः। 'नासम्भवात्' सम्प्रसादसमुत्थानाभ्यां हि जीवपरामर्शो न जीवपरः, किन्तु तदीयतात्त्विकरूपब्रह्मभावपरः। तथा चैष परामर्शो ब्रह्मण एवेति न संप्रसादसमुत्थाने जीवलिङ्गमपि तु ब्रह्मण एव तादर्थ्यादित्यग्रे वक्ष्यते। आकाशोपमानादयस्तु ब्रह्माव्यभिचारिणश्च ब्रह्मपराश्चेत्यस्ति विनिगमनेत्यर्थः ॥ १८ ॥

## सू० उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

---

(१) पञ्चपादिकाकारमतं दूषयन्नाह ये त्विति। तैरिति। नभसि ब्रह्मणि च रूढ्यभ्युपगमेऽनेकार्थत्वात्, नाभसगुणयोगाद्ब्रह्मणि वृत्तिसम्भवे च शक्तिकल्पनायां गौरवान्मीमांसकानां नियमद्वयं खण्डितं स्यादिति भावः।

(२) अस्तु तर्ह्यनेकार्थत्वनिरासाय ब्रह्मण्येव मुख्यत्वमाकाशशब्दस्येत्यत आह नचेति। तेनैव— विभुत्वादिगुणयोगेन।

(३) रूढिवादी प्रसिद्धगुणवृत्तिवैषम्यं शङ्कते नन्विति। 'अन्तर्हृदय आकाश' इति ब्रह्मण्याकाशशब्दस्य प्रयोगादेवाकाशगुणयोगस्य लक्ष्यस्य सिद्धौ लभ्यायामपि तद्व्यतिरेकेण 'यावान्वा अयमाकाशस्तावानि'त्याकाशसादृश्यस्य निर्देशाल्लक्षणा न युक्तेत्यर्थः।

(४) कूलमिति विवक्षिते इति मु० मु० पु० पाठ।

(५) लक्षणास्थले लक्ष्यांशस्य पृथगनिर्देशे दृष्टान्तमाह नहीति। गंगापदेन गंगाया कूलमित्यर्थे विवक्षिते गङ्गापदमेव प्रयुज्यते न तु गङ्गाया इति लक्ष्यसम्बन्धं पृथगुक्त्वा गङ्गेति प्रयुज्यत इत्यर्थः।

(६) परिहरति तत्किमिति। आग्नेयादौ पौर्णमास्यादिशब्दप्रयोगादेव लक्ष्यभूतकालसम्बन्धस्य सिद्धावपि पौर्णमास्यामिति पुनस्तन्निर्देशाद्रुक्न्यायो व्यभिचारीति भाव।

दहराकाशमेव प्रकृत्योपाख्यायते । यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् तमात्मानं विविदिषन्तौ सुरासुरराजाविन्द्रविरोचनौ समित्पाणी प्रजापतिं वरिवसितु(१)-माजग्मतुः । आगत्य च द्वात्रिंशतं वर्षाणि तत्परिचरणपरौ ब्रह्मचर्यमूषतुः । अथैतौ प्रजापतिरुवाच—'किं कामाविहस्थौ युवामि'ति । तावूचतुः-'य आत्माऽपहतपाप्मा तमावां विविदिषाव' इति । ततः प्रजापतिरुवाच—'य एषो ऽक्षिणि पुरुषो दृश्यते एप आत्माऽपहतपाप्मत्वादिगुणो, यद्विज्ञानात्सर्वलोककामावाप्तिः । एतदमृतमभयम्' । अथैतच्छ्रुत्वैतावप्रक्षीणकल्मषावरणतया छायापुरुषं जगृहतु॰ । प्रजापतिं च पप्रच्छतुः—'अथ योयं भगवोप्सु दृश्यते यश्चादर्शे यश्च खड्गादौ कतम एतेष्वसावथ वैक एव सर्वेष्वि'ति । तमेतयो॰ श्रुत्वा प्रश्नं प्रजापतिर्बताहो सुदूरमुद्भ्रान्तावेतौ, अस्माभिरक्षिस्थान आत्मोपदिष्टः, एतौ च छायापुरुषं प्रतिपन्नौ, तद्यदि वयं भ्रान्तौ स्थ इति ब्रूमस्ततः स्वात्मनि समारोपितपाण्डित्यबहुमानौ विमानितौ सन्तौ दौर्मनस्येन यथावदुपदेशं न गृह्णीयाताम्, इत्यनयोराशयमनुरुध्य यथार्थं ग्राहयिष्याम इत्यभिसन्धिमान्प्रत्युवाच—'उदशराव आत्मानमवेक्षेथामस्मिन्यत्पश्यथस्तद्ब्रूतमि'ति तौ च दृष्ट्वा सन्तुष्टहृदयौ नाब्रूताम् । अथ प्रजापतिरेतौ विपरीतग्राहिणौ मा भूतामित्याशयवान्पप्रच्छ 'किमत्रापश्यतमि'ति । तौ होचतुः–यथैवावामतिचिरब्रह्मचर्यचरणसमुपजातायतनखलोमादिमन्तावेवमावयोः प्रतिरूपकं नखलोमादिमदुदशरावेऽपश्यावेति । पुनरेतयोश्छायात्मविभ्रममपनिनी(२)षुर्यथैव हि छायापुरुष उपजनापायधर्माभेदेनावगम्यमान आत्मलक्षणविरहान्नात्मैवेवमेवेदं शरीरं नात्मा, किन्तु ततो भिन्नमित्यन्वयव्यतिरेकाभ्यामेतौ जानीयाता॰मित्याशयवान्प्रजापतिरुवाच—'साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वा पुनरुदशरावे पश्यत॰मात्मानम्, यच्चात्र पश्यथस्तद्ब्रूतमि'ति । तौ च साध्वलंकृतौ सुवसनौ छिन्ननखलोमानौ भूत्वा तथैव चक्रतुः । पुनश्च प्रजापतिना पृष्टौ तामेव छायामात्मन ऊचतुः । तदुपश्रुत्य प्रजापतिरहो बताद्यापि न प्रशान्त एनयोर्विभ्रमः, तद्यथाभिमतमेवात्मतत्त्वं कथयामि तावत् । कालेन कल्मषे क्षीणेऽस्मद्वचनसन्दर्भपौर्वापर्यपर्यालोचनयाऽऽत्मतत्त्वं प्रतिपत्स्येते स्वयमेवेति मत्वोवाच—'एष(३) आत्मैतदमृतमभयमेतद्ब्रह्मे'ति । तयोर्विरोचनो देहानुपातित्वाच्छायाया(४) देह एवात्मतत्त्वमिति मत्वा निजसदनमागत्य तथैवासुरानुपदिदेश । (५)देवेन्द्रस्त्वप्राप्तनिजसदनोऽध्वन्येव किंचिद्विरलकल्मषतया छायात्मनि शरीरगुणदोषानुविधायिनि तन्तं दोषं परिभावयन् नाहमत्र छायात्मदर्शने भोग्यं पश्यामीति प्रजापतिसमीपं समित्पाणिः पुनरेवेयाय । आगतश्च प्रजापतिनाऽऽगमनकारणं पृष्टः पथि परिभावितं जगाद । प्रजापतिस्तु 'सुव्याख्यातमप्यात्मतत्त्वमक्षीणकल्मषावरणतया नाग्रहीस्तत्पुनरपि तत्प्रक्षयाय चरापरा॰

---

( १ ) शुश्रूषितुम् ।

( २ ) अपनेतुमिच्छुः, अस्य प्रजापतिरुवाचेत्यत्रान्वयः ।

( ३ ) एषः—देहाद्यागमापायसाक्षी ।

( ४ ) च्छायाया इति । यथा नीलानीलपटयोरादर्शे दृश्यमानयोर्यन्नीलं तन्महार्हमित्युक्ते न छायाया महार्हत्वमेव छायाकारदेहस्यैवात्मत्वमिति विरोचनो मन्यते स्मेत्यर्थ ।

( ५ ) इन्द्रस्त्वल्पपापत्वाच्छुद्धधानतया न प्रतिबिम्बमेवात्मेति मत्वा प्रजापतिसमीपमुपजगामेत्याहदेवेन्द्रस्त्विति ।

णि द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमथ प्रक्षीणकल्मषाय ते अहमेतमेवात्मानं भूयो व्याख्यास्यामी'त्यवोचत् । स च तथा चरितब्रह्मचर्यः सुरेन्द्रः प्रजापतिमुपससाद । उपसन्नाय चास्मै प्रजापतिर्व्याचष्टे 'य आत्माऽपहतपाप्मादिलक्षणोऽक्षिणि दर्शितः सोऽयं य एष स्वप्ने महीयमानो वनितादिभिरनेकधा स्वप्नोपभोगान् भुञ्जानो विहरती'ति । अस्मिन्नपि देवेन्द्रो भयं ददर्श । 'यद्यप्ययं छायापुरुषवन्न शरीरधर्माननुपतति, तथापि शोकभयादिविविधबाधानुभवान्न तत्राप्यस्ति स्वस्तिप्राप्तिरि'त्युक्तवति मघवति 'पुनरपराणि चर द्वात्रिंशतं वर्षाणि स्वच्छं ब्रह्मचर्यमिदानीमप्यक्षीणकल्मषोऽसी'त्यूचे प्रजापतिः । अथास्मिन्नेवकार(१)मुपसन्ने मघवति प्रजापतिरुवाच—'य एष आत्माऽपहतपाप्मादिगुणो दर्शितोऽक्षिणि च स्वप्ने च स एष यो विषयेन्द्रियसंयोगविरहात्प्रसन्नः सुषुप्तावस्थायामि'ति । अत्रापि नेन्द्रो निर्ववार(२) । 'यथा हि जाग्रद्वा स्वप्नगतो वाऽयमहस्मीति इमानि भूतानि चेति विजानाति नैवं सुषुप्तः किंचिदपि वेदयते, तदा खल्वयमचेतयमानोऽभावं प्राप्त इव भवति तदिह का निर्वृतिरिति' एवमुक्तवति मघवति 'बताद्यापि न ते कल्मषक्षयोऽभूत्, तत्पुनरपराणि चर पञ्च वर्षाणि ब्रह्मचर्यमि'त्यवोचत्प्रजापतिः । तदेवमस्य मघोनस्त्रिभिः पर्यायैर्व्यतीयुः षण्णवतिर्वर्षाणि । चतुर्थे च पर्याये पञ्च वर्षाणीत्येकोत्तरं शतं वर्षाणि ब्रह्मचर्यं चरतः सहस्राक्षस्य संपेदिरे । अथास्मै ब्रह्मचर्यसम्पदुन्मृदितकल्मषाय मघवते य एषोऽक्षिणि (३)यश्च स्वप्ने यश्च सुषुप्तावनुस्यूत एष आत्माऽपहतपाप्मादिगुणो दर्शितः, तमेव 'मघवन् मर्त्यं वै शरीरमि'त्यादिना विस्पष्टं व्याचष्टे प्रजापतिः । अयमस्याभिसन्धिः—यावत्किंचित्सुखं दुःखमागमापायि तत्सर्वं शरीरेन्द्रियान्तःकरणसम्बन्धि, न त्वात्मनः । स पुनरेतानेव शरीरादीन् अनाद्यविद्यावासनावशादात्मत्वेनाभिप्रतीतस्तद्गतेन सुखदुःखेन तद्वन्तमात्मानमनुमन्यमानोऽनुतप्यते । यदा त्वयमपहतपाप्मादिलक्षणमुदासीनमात्मानं देहादिभ्यो विविक्तमनुभवति, अथास्य शरीरवतोऽप्यशरीरस्य न देहादिधर्मसुखदुःखप्रसङ्गोऽस्तीति नानुतप्यते, केवलमयं निजे चैतन्यानन्दघने रूपे व्यवस्थितः समस्तलोककामान् प्राप्तो भवति । एतस्यैव हि परमानन्दस्य मात्राः सर्वे कामाः, दुःखं त्वविद्यानिर्माणमिति न विद्वानाप्नोति ।

अशीलितोपनिषदां व्यामोह इह जायते ।
तेषामनुग्रहायेदमुपाख्यानमवर्तयम् ॥

एवं व्यवस्थित उत्तराद्वाक्यसंदर्भात्प्राजापत्यादाक्षिणि च स्वप्ने च सुषुप्ते च चतुर्थे च पर्याये 'एष(४) संप्रसादोऽस्माच्छरीरात्समुत्थाये'ति जीवात्मैवापहतपाप्मादिगुणः श्रुत्योच्यते । नो खलु परस्याक्षिस्थानं संभवति, नापि स्वप्नाद्यवस्थायोगः, नापि शरीरात्समुत्थानम् । तस्माद्यस्यैतत्सर्वं सोऽपहतपाप्मादिगुणः श्रुत्योक्तः । जीवस्य चैतत्सर्वमिति स एवापहतपाप्मादिगुणः श्रुत्योक्त इति नापहतपाप्मादिभिः परं ब्रह्म गम्यते । ननु जीवस्यापहतपाप्मत्वादयो न सम्भवन्तीत्युक्तम् । वचनाद्भविष्यन्ति । किमिव वचनं न कुर्यात्, नास्ति वचनस्यातिभारः । न च मानान्तरविरोधः । नहि जीवः पाप्मादिस्वभावः, किन्तु

---

(१) एवङ्कारम्—एवङ्कृत्वा ।(२) न मुक्तितोऽभूदित्यर्थः ।(३) अस्युपलक्षिते जाग्रतीत्यर्थः ।
(४) चतुर्थपर्यायमेव प्रतीकत उपादत्ते एष इति ।

वाग्बुद्धिशरीरारम्भसम्भवो(१)ऽस्य पाप्मादिः शरीराद्यभावे न भवति धूम इव धूमध्वजाभाव इति शङ्कार्थः-निराकरोति—"**तं प्रति ब्रूयात् आविर्भूतस्वरूपस्तु**" (पृ० ३३३ पं० ११)। अयमभिसन्धिः। पौर्वापर्यपर्यालोचनया तावदुपनिषदां शुद्धबुद्धमुक्तमेकमप्रपञ्चं ब्रह्म,(२) तदतिरिक्तं च सर्वं तद्विवर्तो रज्जोरिव भुजङ्ग इत्यत्र तात्पर्यमवगम्यते। तथा च जीवोऽप्यविद्याकल्पितदेहेन्द्रियाद्युपहितं रूपं ब्रह्मणो न तु स्वभाविकः। एवं च नापहतपाप्मत्वादयस्तस्मिन्नविद्योपाधौ संभविनः। आविर्भूतब्रह्मरूपे तु निरुपाधौ संभवन्तो ब्रह्मण एव न जीवस्य। (३)एवं च ब्रह्मैवापहतपाप्मादिगुणं श्रुत्युक्तमिति तदेव दहराकाशो न जीव इति। स्यादेतत्, स्वरूपाविर्भावे चेद्ब्रह्मैव न जीवः, तर्हि विप्रतिषिद्धमिदमभिधीयते-'जीव आविर्भूतस्वरूप इति' अत आह—"**भूतपूर्वगत्ये**"ति। "**उदशरावब्राह्मणेने**"ति। (पृ० ३३४ प० १)। यथैव हि मघोनः प्रतिबिम्बान्युदशराव उपजनापायधर्मकाण्यात्मलक्षणविरहान्नात्मा, एवं देहेन्द्रियाद्यप्युपजनापायधर्मकं नात्मेत्युदशरावदृष्टान्तेन शरीरात्मताया व्युत्थानं बाध इति।

चोदयति—"**कथं पुनः स्वं च रूप**"मिति (पृ० ३३५ पं १)। द्रव्यान्तरसंसृष्टं हि तेनाभिभूतं तस्माद्विविच्यमानं व्यज्यते हेमतारकादि, कूटस्थनित्यस्य पुनरन्येनासंसृष्टस्य कुतो विवेचनादभिव्यक्तिः। न च संसारावस्थायां जीवोऽनभिव्यक्तो, दृष्ट्यादयो ह्यस्य स्वरूपं ते च संसारावस्थायां भासन्त इति कथं जीवरूपं न भासत इत्यर्थः।

परिहरति—"**प्राग्विवेकज्ञानोत्पत्ते**"रिति। अयमर्थः—यद्यप्यस्य कूटस्थनित्यस्यान्यसंसर्गो न वस्तुतोऽस्ति, यद्यपि च संसारावस्थायामस्य दृष्ट्यादिरूपं चकास्ति, तथाप्यनिर्वाच्यानाद्यविद्यावशादविद्याकल्पितैरेव देहेन्द्रियादिभिरसंसृष्टमपि संसृष्टमिव विविक्तमप्यविविक्तमिव दृष्ट्यादिरूपमस्य प्रथते। तथा च देहेन्द्रियादिगतैस्तापादिभिस्तापादिमदिव भवतीति। उपपादितं चैतद्विस्तरेणाध्यासभाष्य इति नेहोपपाद्यते। (४)यद्यपि स्फटिकादयो जपाकुसुमादिसंनिहिताः, संनिधानं च संयुक्तसंयोगात्मकम्, तथा च संयुक्ताः, तथापि न साक्षाज्जपादिकुसुमसंयोगिन इत्येतावता दृष्टान्तिता इति। "**वेदना**" हर्षभयशोकादयः।

दार्ष्टान्तिके योजयति—"**तथा देहादी**"ति (पृ० ३३६ पं ३) 'सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इत्येतद्विभजते—"**श्रुतिकृतं विवेकविज्ञान**मि"ति। तदनेन श्रवणमननध्यानाभ्यासाद्विवेकज्ञानमुक्त्वा तस्य विवेकवि-

---

(१) वागिति। वाग्बुद्धिशरीराणां कार्यभूतो य आरम्भः क्रिया तत्र सम्भवो यस्य पाप्मादेरपूर्वस्य स तथा।

(२) एतेनेश्वरस्यैव जीवत्वमिति जीववादिनः पक्षो निरस्तः। ईश्वरस्य जीवप्रत्यगात्मत्वमिति तस्यैव पक्षान्तरं निरस्यति तदतिरिक्तं चेति। तथाचेति। रज्ज्वां भुजङ्गवत् जगत्परमात्मनि कल्पितम्, एवं जीवोऽपि द्वितीयचन्द्रवद्भेदेनाध्यस्त इति नायमपि पक्षो युक्त इति भावः।

(३) अभ्युपेत्येश्वरस्य जीवप्रत्यक्त्वमत्र वाक्ये ईश्वरस्य प्रतिपादनं न मन्यत इति जीववादिनस्तृतीयपक्षोऽपि न युक्त इत्याह एवं चेति। श्रुत्युक्तं—श्रुत्या प्रजापतिवाक्ये उक्तमित्यर्थः।

(४) भाष्येऽन्यासंसर्गिण आत्मनोऽभिव्यक्तिसम्भवेऽन्यसंसर्गिस्फटिकदृष्टान्तवर्णनमयुक्तमित्याशंक्य परिहरति यद्यपीति। जपाकुसुमादिना संयुक्तं भूतलं तेन निकटः एव संयोगो येषां स्फटिकादीनां ते संयुक्तसंयोगात्मकरूपस्तं तदात्मत्वम्, तथाच व्यवधानेन संयुक्ता इत्यर्थः।

ज्ञानस्य फलं केवलात्मरूपसाक्षात्कारः, स्वरूपेणाभिनिष्पत्तिः, स च साक्षात्कारो वृत्तिरूपः प्रपञ्चमात्रं प्रविलापयन् स्वयमपि प्रपञ्चरूपत्वात् कतकफलवत् प्रलीयते । तथा च निर्मृष्टनिखिलप्रपञ्चजालमनुपसर्गमपराधीनप्रकाशमात्मज्योतिः सिद्धं भवति(१)। तदिदमुक्तं 'परं ज्योतिरुपसम्पद्ये'ति । (२)अत्र चोपसम्पत्तावुत्तरकालायामपि क्त्वाप्रयोगो मुखं व्यादाय स्वपितीतिवन्मन्तव्यः। (३)यदा च विवेकसाक्षात्कारः शरीरात्समुत्थानं, न तु शरीरापादानकं गमनम्, तदा तत्सशरीरस्यापि सम्भवति प्रारब्धकार्यकर्मक्षयस्य पुरस्तादित्याह—"**तथा विवेकाविवेकमात्रेणे**"ति । न केवलं 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवती'त्यादिश्रुतिभ्यो जीवस्य परमात्मनोऽभेदः, प्राजापत्यवाक्यसन्दर्भपर्यालोचनयाप्येवमेव प्रतिपत्तव्यमित्याह—"**कुतश्चैतदेवं प्रतिपत्तव्यमि**"ति । (४)स्यादेतत्, प्रतिच्छायात्मवज्जीवं परमात्मनो वस्तुतो भिन्नमप्यमृताभयात्मत्वेन ग्राहयित्वा पश्चात्परमात्मानममृताभयादिमन्तं प्रजापतिर्ग्राहयति, न त्वयं जीवस्य परमात्मभावमाचष्टे छायात्मन इवेत्यत आह—"**नापि प्रतिच्छायात्मायमक्षिलक्षित**" इति (पृ० ३३७ पं० )। अक्षिलक्षितोऽप्यात्मैवोपदिश्यते न छायात्मा । तस्मादसिद्धो दृष्टान्त इत्यर्थः । किं च द्वितीयादिष्वपि पर्याये'ष्वेतं त्वेव ते भूयोऽनुव्याख्यास्यामी'त्युपक्रमात्प्रथमपर्यायनिर्दिष्टो न छायापुरुषोऽपि तु ततोऽन्यो द्रष्टात्मेति दर्शयत्यन्यथा प्रजापतेः प्रतारकत्वप्रसङ्गादित्यत आह—"**तथा द्वितीयेऽपी**"ति । अथ छायापुरुष एव जीवः कस्मान्न भवति, तथा च छायापुरुष एवैतमिति परामृश्यत इत्यत आह—"**किं चाहमद्य स्वप्ने हस्तिनमि**"ति । "**किञ्चे**"ति—समुच्चयाभिधानं पूर्वोपपत्तिसाहित्यं ब्रूते. तच्च शङ्कानिराकरणद्वारेण । छायापुरुषोऽस्थायी, स्थायी चायमात्मा चकास्ति, प्रत्यभिज्ञानादित्यर्थः । "**नाहं खल्वयमेवे**"ति । अयं-सुषुप्तः । "**सम्प्रति**" सुषुप्तावस्थायाम् । अहमात्मानमहङ्कारास्पदमात्मानम् । न जानाति । केन प्रकारेण न जानातीत्यत आह—"**अयमहमस्मीमानि भूतानि चे**"ति । "**यथा जाग्रति स्वप्ने चे**"ति । 'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते अविनाशित्वादि'त्यनेना(५)विनाशित्वं सिद्धवद्धेतूकुर्वता सुप्तोत्थितस्यात्मप्रत्यभिज्ञानमुक्तम्—'य एवाहं जागरित्वा सुप्तः स एवैतर्हि जागर्मी'ति ।

आचार्यदेशीयमतमाह(६)-"**के चित्त्वि**"ति। यदि(७) ह्येतमित्यनेनानन्तरोक्तं चक्षुर-

---

(१) अयमेव ज्ञानावृतस्वरूपस्फुरणात्मक उपसम्पत्तिशब्दार्थ इति भावः ।

(२) ननु स्वरूपाभिनिष्पत्तिर्वृत्तिस्तयाऽपसारिते आवरणे पश्चाज्ज्योतिरूपसम्पत्तिस्तत्कथं व्युत्क्रमेण कथनमत आहात्र चेति ।

(३) यदेति । प्रथमं परोक्षज्ञानं शरीरात्समुत्थानमुक्तम्, इदानीं तस्य फलपर्यन्तत्वात्तत्फलं साक्षात्कारोपि शरीरात्समुत्थानत्वेनानूदित इति न पौनरुक्त्यम् ।

(४) प्रतिबिम्बस्याक्षिपुरुषत्वेन निर्देशवारक 'नापि प्रतिच्छायेत्या'दिभाष्यमप्रासंगिकमिवेति पूर्वपक्षितजीवदृष्टान्तनिराकरणपरत्वेन प्रकृते सगमयति स्यादेतदिति ।

(५) अविनाशित्वादिति हेतो साध्याविशेषमाशंक्याह अनेनेति । असिद्धस्यापि हेतोः सिद्धिनिर्देशेन सिद्धिहेतुभूतं प्रमाणं सूचितमित्यर्थं । तदेव प्रमाणं दर्शयति य एवाहमिति ।

(६) आचार्यकल्पमतं न तु वास्तवाचार्यमतमित्यर्थ ।

(७) एकदेशिप्रत्यवस्थानं जीवो दहर इति पूर्वपक्षेऽन्तर्भावयति यदीति । पूर्वपक्षिणा तावच्छाया-

धिष्ठानं पुरुषं परामृश्य तस्यात्मत्वमुच्यते ततो न भवेच्छायापुरुषः । न त्वेतदस्ति, वाक्योपक्रमसूचितस्य परमात्मनः परामर्शाद्, न(१) खलु जीवात्मनोऽपहतपाप्मत्वादिगुणसम्भव इत्यर्थः । तदेतद्दूषयति—"तेषामेतमि"ति । सुबोधम्(२) ।

(३)मतान्तरमाह—"अपरे तु वादिन" इति ( पृ० ३३८ पं० ८ )। यदि न जीवः कर्ता भोक्ता च वस्तुतो भवेत्, ततस्तदाश्रयाः कर्मविधय उपरुध्येरन् । सूत्रकारवचनं च 'नासम्भवादि'ति कुप्येत । तत्खलु ब्रह्मणो गुणानां जीवेऽसम्भवमाह । न चाभेदे ब्रह्मणो जीवानां ब्रह्मगुणानामसम्भवो जीवेष्विति तेषामभिप्रायः । तेषां वादिनां शारीरकैणैवोत्तरं दत्तम् । तथाहि—पौर्वापर्यपर्यालोचनया वेदान्तानामेकमद्वयमात्मतत्त्वं, जीवास्त्वविद्योपधानकल्पिता इत्यत्र तात्पर्यमवगम्यते । (४)न च वस्तुतो ब्रह्मणो गुणाः समारोपितेषु जीवेषु सम्भवन्ति । नो खलु वस्तुसत्या रज्ज्वा धर्माः सेव्यत्वादयः समारोपिते भुजङ्गे सम्भविनः । न च समारोपितो भुजङ्गो रज्ज्वा भिन्नः तस्मान्न सूत्रव्याकोपः । (५)अविद्याकल्पितं च कर्तृत्वभोक्तृत्वं यथा लोकसिद्धमुपाश्रित्य कर्मविधयः प्रवृत्ताः श्येनादिविधय इव निषिद्धेऽपि 'न हिंस्यात्सर्वा भूतानी'ति साध्यांशेऽभिचारेऽतिक्रान्तनिषेधं पुरुषमाश्रित्याविद्यावत्पुरुषाश्रयत्वाच्छास्त्रस्येत्युक्तम् । तदिदमाह—"तेषां सर्वेषा"मिति ॥ १९ ॥

ननु ब्रह्म चेदत्र वक्तव्यं कुत जीवपरामर्शेनेत्युक्तमित्यत आह—

## ( सू० )अन्यार्थश्च परामर्शः ॥ २० ॥

जीवस्योपाधिकल्पितस्य ब्रह्मभाव उपदेष्टव्यो, न चासौ जीवमपरामृश्य शक्य उपदेष्टुमिति तिसृष्ववस्थासु जीवः परामृष्टः, तद्भावप्रविलयनं तस्य पारमार्थिकं ब्रह्मभावं दर्शयितुमित्यर्थः ॥ २० ॥

## ( सू० ) अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥

निगदव्याख्यातेन भाष्येण व्याख्यताम् ॥ २१ ॥

## (सू०) अनुकृतेस्तस्य च ॥ २२ ॥

(६)अभानं तेजसो दृष्टं सति तेजोन्तरे यतः ।

---

वद्वाऽऽरोपेण -स्वत एव वा देहादिवियोगमपेक्ष्यामृताभयत्वादि जीवस्यैवेति एतं त्वेव त - इत्यक्षिस्थपुरुषाकर्षणमङ्गीकृतम्, इदानीन्तु परामर्शस्यान्यविषयत्वेन स एवैकदेशी भूत्वा प्रत्यवतिष्ठत इत्यर्थः ।

( १ ) ननु परमात्मपरामर्शे जीव परामृष्ट एव तदभेदादत आह न खल्विति ।

( २ ) दृष्टे सम्भवत्यदृष्टकल्पनानुपपत्तेर्लोकसिद्धजीवानुवादेन ब्रह्मत्वं बोध्यते नोपास्तिविधि, इन्द्रब्रह्मचर्यावसानानन्तर्यार्था भविष्योक्तिरिति परिहाराभिप्राय ।

( ३ ) एवमौपाधिको जीवोऽवच्छिन्ने च नापहतपाप्मत्वादिसम्भव इति एकदेशिमतं निरस्य पारमार्थिकजीवब्रह्मविभागमतप्रदर्शनायाह मतान्तरमिति ।

( ४ ) ननु यदि जीवब्रह्माभेदः शारीरकार्थस्तर्हि 'नासम्भवात्' १।२।१० इति सूत्रबोधितभेदस्य का गतिरत आह नचेति । औपाधिकभेदेन गुणसङ्कर इत्यर्थः ।

( ५ ) कर्मविध्युपरोधं वारयति अविद्येति । अविद्याकल्पितकर्तृत्वाद्याश्रयेण कर्मविधिप्रवृत्तौ हेतुरविद्यावत्पुरुषाश्रयत्वाच्छास्त्रस्येति उक्तमध्यासभाष्ये ।

( ६ ) न तत्रेत्यादि मुण्डकस्थविषयवाक्ये तत्रेति विषयसप्तमीस्वीकारे तद्भासयतीतिणिजध्याहारप्रस-

तेजो धात्वन्तरं तस्मादनुकाराच्च गम्यते ॥

बलीयसा हि सौर्येण तेजसा मन्दं तेजश्चन्द्रतारकाद्यभिभूयमानं दृष्टं, न तु तेजसोऽन्येन। (१)येऽपि पिधायका प्रदीपस्य गृहघटादयो न ते स्वभासा प्रदीपं भासयितुमीशते। श्रूयते च 'तस्य भासा सर्वमिद विभाती'ति। सर्वशब्दः प्रकृतसूर्याद्यपेक्षः। (२)न चातुल्यरूपेऽनुभानमित्यनुकारः सम्भवति। नहि गावो वराहमनुधावन्तीति कृष्णविहङ्गानुधावनमुपपद्यते गवाम्, अपि तु तादृशसूकरानुधावनम्। तस्माद्यद्यपि 'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतमिति ब्रह्म प्रकृतं, तथाप्यभिभवानुकारसामर्थ्यलक्षणेन लिङ्गेन प्रकरणबाधया तेजो धातुरवगम्यते, न तु ब्रह्म लिङ्गानुपपत्तेः। (३)तत्र तं तस्येति च सर्वनामपदानि प्रदर्शनीयमेवावमक्ष्यन्ति। न च तच्छब्दः पूर्वोक्तपरामर्शीति नियमः समस्ति। नहि 'तेन रक्तं रागात्' 'तस्यापत्यम्' इत्यादौ पूर्वोक्तं किंचिदस्ति। तस्मात्प्रमाणान्तराप्रतीतमपि तेजोन्तरमलौकिकं शब्दादुपास्यत्वेन गम्यत इति प्राप्ते,

उच्यते—

(४)ब्रह्मण्येव हि तल्लिङ्गं न तु तेजस्यलौकिके।
तस्मान्न तदुपास्यत्वं ब्रह्म ज्ञेयं तु गम्यते ॥

'तमेव भान्तमि'त्यत्र किमलौकिकं तेजः कल्पयित्वा सूर्यादीनामनुभानमुपपाद्यताम्, किं वा 'भारूपः सत्यसङ्कल्प' इति श्रुत्यन्तरप्रसिद्धेन ब्रह्मणो भानेन सूर्यादीनां भानमुपपाद्यतामिति विशये, न श्रुतसम्भवेऽश्रुतस्य कल्पना युज्यत इत्यप्रसिद्धं नालौकिकमुपास्यं तेजो युज्यते, अपि तु श्रुतिप्रसिद्धं ब्रह्मैव ज्ञेयमिति, तदेतदाह—"**प्राज्ञ एवात्मा भवितुमर्हति**"। (पृ० ३४१पं ४) विरोध(५)माह—"**समत्वाच्चे**"ति। ननु स्वप्रतिभाने सूर्यादयश्चाक्षुषं तेजोऽपेक्षन्ते, नह्यन्धेनैते दृश्यन्ते। तथा तदेव चाक्षुषं तेजो बाह्यसौर्यादितेजआप्यायितं रूपादि प्रकाशयति नानाप्यायितम्, अन्धकारे ऽपि रूपदर्शनप्रसङ्गादित्यत आह—"**यं भान्तमभा-त्यु**"रिति। (६)नहि तेजोन्तरस्य तेजोन्तरापेक्षां व्यासेधामः, किन्तु तद्भानमनुभानम्। न

---

ङ्गात्सतिसप्तमीमादाय पूर्वपक्षसंग्रहश्लोकमाह भानमिति। यस्मात्सूर्यादितेजोन्तरे वर्तमाने चन्द्रतारकादितेजसोऽभिभवेनाभान दृष्टम् तस्मात्तेजःप्रत्यभिभावकत्वाल्लिङ्गादनुमानलक्षणानुकाराच्च तत्र शब्देन तेजोधातुरूपं पदार्थान्तरं गम्यते इति श्लोकार्थः। तत्र प्रथमार्धं व्याचष्टे बलीयसेति। अत्र विमतं तेजः तदभिभावकत्वात् सूर्यवदित्यनुमानं पूर्वपक्षिमते द्रष्टव्यम्।

(१) उक्तानुमानेऽनैकान्तिकत्वमाशंक्याह येपीति। भासकत्वे सतीति हेतौ विशेषणान्न व्यभिचार इत्यर्थः। (२) अनुकाराच्चेति द्वितीयार्धांशं व्याचष्टे नचेति।

(३) ननु मन्त्रस्थतच्छब्दे प्रकृतं ब्रह्म परामृश्यतेऽत आह तत्रेति। प्रदर्शनीयवक्ष्यमाणमलौकिकं तेजोन्तरं ग्रहीष्यन्तीत्यर्थः।

(४) सिद्धान्तसंग्रहश्लोकमाह ब्रह्मण्येवेति। तत्—उक्तमन्त्रनिष्ठमनुमानं ब्रह्मण्येव लिङ्गं 'तस्य भारूप' इत्यादिश्रुतौ चैतन्यप्रकाशत्वसिद्धेस्तदध्यस्तसूर्यादेस्तदनुमानसम्भवात्, न तेजस्यलौकिकत्वाद्देशानश्रितत्वाच्च। तस्मादिति। तेजःपक्षे उपास्तिकल्पनाददृष्टार्थकं वाक्यं स्याद्ब्रह्मपक्षे तु प्रस्तुतस्य तेजसः समर्पणाद्दृष्टार्थकत्वमित्यतोपि ब्रह्मपक्ष एव युक्त इत्यभिप्रायः।

(५) अनपेक्षाद्वारकं भास्यभासकत्वविरोधमित्यर्थः।

(६) किं भानेऽनपेक्षा तेजस उत भासकत्वे इति विकल्प्य क्रमेण दूषयित्वा समाधत्ते नहीति। भासमानतेजसा न तेजो भातीति नियमाद्विरोध इत्यर्थः।

च लोचनभानमनुभान्ति सूर्यादयः, तदिदमुक्तम्—"नहि प्रदीप" इति । पूर्वपक्षमनुभाष्य व्यभिचारमाह—"यदप्युक्तमि"ति । एतदुक्तं भवति—यदि स्वरूपसाम्याभावमभिप्रेत्यानुकारो निराक्रियते, तदा व्यभिचारः(१) । अथ क्रियासाम्याभावं, सोऽसिद्धः । अस्ति हि वायुरजसोः स्वरूपविसदृशयोरपि नियतदिग्देशवहनक्रियासाम्यम् । वह्न्ययःपिण्डयोस्तु यद्यपि दहनक्रिया न भिद्यते तथापि द्रव्यभेदेन क्रियाभेदं कल्पयित्वा क्रियासादृश्यं व्याख्येयम् । तदेवमनुकृतेरिति विभज्य तस्य चेति सूत्रावयवं विभजते—"तस्य चे"ति । "चतुर्थमि"ति । "(२)ज्योतिषाम् सूर्यादीनाम्, ब्रह्मज्योतिः" प्रकाशकमित्यर्थः । तेजोन्तरेणानिन्द्रियभावमापन्नेन(३) सूर्यादितेजो विभातीत्यप्रसिद्धम् । (४)सर्वशब्दस्य हि स्वरसतो निःशेषाभिधानं वृत्तिः । सा तेजोधातावलौकिके रूपमात्रप्रकाशके सङ्कुचेत्, ब्रह्मणि तु निःशेषजगदवभासके न सर्वशब्दस्य वृत्तिः सङ्कुचतीति । "तत्र शब्दमामाहराम्न"ति ( पृ० ३४३ पं० ७ ) । सर्वत्र खल्वयं तत्रशब्दः पूर्वोक्तपरामर्शी । '(५)तेन रक्तं रागा'दित्यादावपि प्रकृतेः परस्मिन्प्रत्ययेऽर्थभेदेऽन्वाख्यायमाने प्रातिपदिकप्रकृत्यर्थस्य पूर्ववृत्तत्वमस्तीति, तेनेति तत्परामर्शान्न व्यभिचारः । तथा च सर्वनामश्रुतिरेव ब्रह्मोपस्थापयति । तेन भवतु नाम प्रकरणाल्लिङ्गं बलीयः, श्रुतिस्तु लिङ्गाद्बलयिसीति श्रौतमिह ब्रह्मैव गम्यत इति । अपि चापेक्षितानपेक्षिताभिधानं युक्तं, दृष्टार्थत्वादित्याह—"अनन्तरं च हिरण्मये परे कोश" इति । अस्मिन्वाक्ये ज्योतिषां ज्योति'रित्युक्तं, तत्र कथं तज्ज्योतिषां ज्योतिरित्यपेक्षायामिदमुपतिष्ठते—"न तत्र सूर्य" इति। स्वातन्त्र्येण तूच्यमानेऽनपेक्षितं स्याद'दृष्टार्थमि'ति । "ब्रह्मण्यपि चैषां भानप्रतिषेधोऽवकल्पत" इति । अयमभिप्रायः—'न तत्र सूर्यो भाती'ति नेयं सतिसप्तमी, यतः सूर्यादीनां तस्मिन्सत्यभिभवः प्रतीयेत, अपि तु विषयसप्तमी(६), तेन न तत्र ब्रह्मणि प्रकाशयितव्ये सूर्यादयः प्रकाशकतया भान्ति, किन्तु ब्रह्मैव सूर्यादिषु प्रकाशयितव्येषु प्रकाशकत्वेन भाति, तच्च स्वयं प्रकाशम्—"अगृह्यो नहि गृह्यते इत्यादिश्रुतिभ्य" इति ॥ २२ ॥

## (सू०) अपि च स्मर्यते ॥ २३ ॥

"न तद्भासयत" इति ब्रह्मणोऽप्राह्यत्वमुक्तं, "यदादित्यगतमि"त्यनेन तस्यैव प्राहकत्वमुक्तमिति ॥ २३ ॥

## (सू०) शब्दादेव प्रमितः ॥ २४ ॥

---

(१) व्यभिचार—धूलिपवनयोरयोदहनयोर्भिन्नस्वभावयोरपि अनुकृतिदर्शनाद्व्यभिचार ।

(२) ज्योतिषां ज्योतिरिति भाष्योदाहृतश्रुतिं व्याचष्टे ज्योतिषामिति ।

(३) इन्द्रियेण सूर्यादिभानादिन्द्रियत्वमनापन्नेनेति तेजोन्तरस्य विशेषणं देयमित्यर्थ ।

(४) अथवा न सूर्यादीनामिति भाष्यं व्याचष्टे सर्वेति ।

(५) तेन रक्तमिति । उक्तसूत्रेपि प्रकृते परो यः प्रत्ययस्तस्मिन्योर्थविशेषस्तस्मिन्नन्वाख्यायमाने प्रत्ययाधस्तनप्रकृत्यर्थस्यास्ति प्रस्तुतत्वमित्यर्थः ।

(६) विषयसप्तमीति । सतिसप्तमीपक्षे न भातीति श्रुतं वर्तमानत्वं त्यक्त्वा तस्मिन्सति न भास्यन्तीत्यश्रुतभविष्यत्त्वं कल्प्यं प्रत्यक्षविरोधनिरासाय, विषयसप्तमीपक्षे तु न भासयतीत्यश्रुतणिजध्याहारमात्रं कल्प्यम् न श्रुतत्याग इति लाघवमतो ब्रह्मणि विषये सूर्यादेर्भासकत्वनिषेधेन ब्रह्मभास्यत्वमुच्यत इत्यर्थः ।

(१) नाञ्जसा मानभेदोऽस्ति परस्मिन्मानवर्जिते ।
भूतभव्येशिता जीवे नाञ्जसी तेन संशयः ।

किमङ्गुष्ठमात्रश्रुत्यनुग्रहाय जीवोपासनापरमेतद्वाक्यमस्तु, तदनुरोधेन चेशानश्रुतिः कथंचिद्व्याख्यायताम्, आहोस्विदीशानश्रुत्यनुग्रहाय ब्रह्मपरमेतदस्तु, तदनुरोधेनाङ्गुष्ठमात्रश्रुतिः कथंचिन्नीयताम् । (२) तत्रान्यतरस्यान्यतरानुरोधविषये प्रथमानुरोधो न्याय्य इत्यङ्गुष्ठश्रुत्यनुरोधेनेशानश्रुतिर्नेतव्या । (३)अपि च युक्तं हृत्पुण्डरीकदहरस्थानत्वं परमात्मनः, स्थानभेदनिर्देशात् । तद्धि तस्योपलब्धिस्थानं शालग्राम इव कमलनाभस्य भगवतः । न च तथेहाङ्गुष्ठमात्रश्रुत्या स्थानभेदो निर्दिष्टः, परिमाणमात्रनिर्देशात् । न च 'मध्य आत्मनी'त्यत्र स्थानभेदोऽवगम्यते । आत्मशब्दो ह्ययं स्वभाववचनो वा ब्रह्मवचनो वा स्यात् । तत्र स्वभावस्य स्वभवित्रधीननिरूपणतया स्वस्य च भवितुरनिर्देशान्न ज्ञायते कस्य मध्य इति । न च जीवपरयोरस्ति मध्यमञ्जसेति नैष स्थाननिर्देशो विस्पष्टः, स्पष्टस्तु परिमाणनिर्देशः । परिमाणभेदश्च परस्मिन्न संभवतीति जीवात्मैवाङ्गुष्ठमात्रः, स खल्वन्तःकरणाद्युपाधिकल्पितो भागः परमात्मनः, अन्तःकरणं च प्रायेण हृत्कमलकोशस्थानं, हृत्कमलकोशश्च मनुष्याणामङ्गुष्ठमात्र इति तदवच्छिन्नो जीवात्माऽप्यङ्गुष्ठमात्रो नभ इव वंशपर्वावच्छिन्नमरत्निमात्रम्(४) । अपि च जीवात्मनः स्पष्टमङ्गुष्ठमात्रत्वं स्मर्यते—

अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् । इति ।

नहि सर्वेशस्य ब्रह्मणो यमेन बलान्निष्कर्षः कल्पते । यमो हि जगौ—

हरिगुरुवशगोऽस्मि न स्वतन्त्रः
प्रभवति संयमने ममापि विष्णुः । इति ।

तेनाङ्गुष्ठमात्रत्वस्य जीवे निश्चयाद् आपेक्षिकं किंचिद्भूतभव्यं प्रति जीवस्येशानत्वं व्याख्येयम् । 'एतद्वै तदि'ति च प्रत्यक्षजीवरूपं परामृशतीति । तस्माज्जीवात्मैवात्रोपास्य इति, प्राप्तेऽभिधीयते—

(५)प्रश्नोत्तरत्वादीशानश्रवणस्याविशेषतः ।
जीवस्य ब्रह्मरूपत्वप्रत्यायनपरं वचः ॥

(६)इह हि भूतभव्यमात्रं प्रति निरङ्कुशमीशानत्वं प्रतीयते । प्राक् पृष्टं चात्र ब्रह्म

---

(१) जीवपरयो समानधर्मादर्शनेपि श्रुत्योर्विप्रतिपत्तिः संशयबीजमित्याह नाजसेति । परिमाणरहिते परमात्मनि मुख्याङ्गुष्ठमात्ररूप परिमाणविशेषो नास्ति, एवं जीवे भूतभव्येशितृत्वं मुख्यं न सम्भवतीत्येकत्र गौणता वाच्या सा च क्वेत्यज्ञानात्संशय इत्यर्थ ।

(२) पूर्वपक्षमाह तत्रेति । विशये—संशये । नेतव्येति । लक्षणेति शेषः ।

(३) दहरविचारेणास्य न पुनरुक्तिरित्याहापि चेति । शङ्कानिरास समुच्चयार्थः । परमात्मोपलब्ध्यर्थं स्थानविशेषानिर्देशात् हृदयकमलदहरस्थानत्वमौपाधिक तत्रोपदर्शितं नैवमत्रेत्यर्थः ।

(४) समुष्ठि सकनिष्ठिक करोऽरत्नि ।

(५) सिद्धान्तसङ्ग्रहश्लोकमाह प्रश्नेति । अंगुष्ठवाक्यस्य 'अन्यत्र धर्मात्' इति प्रस्तुतपरमात्मप्रश्नोत्तरत्वादीशानश्रवणस्य परमात्मनि अविशेषात् उपाहितपरिमितजीवानुवादेन विरुद्धांशं त्यक्त्वा जीवस्येश्वरैक्यबोधकमुक्तवाक्यमिति श्लोकार्थ । (६) सङ्ग्रहश्लोकार्थमेवाहेहेति ।

'अन्यत्र धर्मादन्यत्राधर्मादि'त्यादिना । तदनन्तरस्य सन्दर्भस्य तत्प्रतिवचनतोचितेति 'एतद्वै तदि'ति ब्रह्माभिधानं युक्तम् । तथा चाङ्गुष्ठमात्रतया यद्यपि जीवोऽवगम्यते तथापि न तत्परमेतद्वाक्यं, किन्त्वङ्गुष्ठमात्रस्य जीवस्य ब्रह्मरूपताप्रतिपादनपरम् । एव निरङ्कुशमीशानत्व न संकोचयितव्यम् । न च ब्रह्मप्रश्नोत्तरता हातव्या, तेन यथा 'तत्त्वमसी'ति विज्ञानात्मनस्त्वंपदार्थस्य तदिति परमात्मनैकत्वं प्रतिपाद्यते, तथेहाप्यङ्गुष्ठपरिमितस्य विज्ञानात्मन ईशानश्रुत्या ब्रह्मभावः प्रतिपाद्यत इति युक्तम् ॥ २४ ॥

## (सू०) हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥

**"सर्वगतस्यापि परब्रह्मणो हृदयेऽवस्थानमपेक्ष्ये"ति** ( पृ० ३४५ प० १ )(२)जीवाभिप्रायम् । न चान्यः परमात्मन इह ग्रहणमर्हतीति (१)न जीवपरमेतद्वाक्यमित्यर्थः । **"मनुष्यानेवे"ति** । त्रैवर्णिकानेवेति(३) । **"अर्थित्वा"दिति** अन्तःसंज्ञानां(४) मोक्षमाणानां च काम्येषु कर्मस्वधिकारं निषेधति । **"शक्तत्वादि"ति** तिर्यग्देवर्षीणामशक्ताना(५)मधिकारं निवर्तयति । **"उपनयनादिशास्त्राच्चे"ति**(६) शूद्राणामनधिकारितां दर्शयति । **"यदप्युक्तं परिमाणोपदेशात्स्मृतेश्चे"ति** । यद्येतत्परमात्मपरं, किमिति तर्हि जीव इहोच्यते । ननु परमात्मैवोच्यताम्, उच्यते च जीवः, तस्माज्जीवपरमेवेति भावः । परिहरति—**"तत्प्रत्युच्यत" इति** । जीवस्य हि तत्त्वं परमात्मभावः, तद्वक्तव्यम् , न च तज्जीवमनभिधाय शक्यं वक्तुमिति जीव उच्यत इत्यर्थः ॥२५॥

## (सू०) तदुपर्यपि बादरायणः संभवात् ॥ २६ ॥

देवर्षीणां ब्रह्मविज्ञानाधिकारचिन्ता समन्वयलक्षणेऽसंगतेत्यस्याः प्रासङ्गिकीं सङ्गतिं दर्शयितुं प्रसङ्ग(७)माह—**"अङ्गुष्ठमात्रश्रुतिरि"ति** ( पृ० ३४६ प० १२ ) । स्यादेतत् , देवादीनां विविधविचित्रानन्दभोगभागिनां वैराग्याभावान्नार्थित्वं ब्रह्मविद्यायामित्यत आह—**"तत्रार्थित्वं तावन्मोक्षविषयमि"ति** (पृ० ३४७ पं० १) । क्षयातिशययोगस्य स्वर्गाद्युपभोगेऽपि भावादस्ति वैराग्यमित्यर्थः । ननु देवादीनां विग्रहाद्यभावेनेन्द्रियार्थसनिकर्षजायाः(८) प्रमाणादिवृत्तेरनुपपत्तेरविद्वत्तया सामर्थ्याभावेन नाधिकार इत्यत आह—**"तथा**

---

( १ ) ननूक्तवाक्यस्यापीषपरिमितजीवे ब्रह्मत्वबोधकत्वाद्ब्रह्मण परिमाणकथनमफलमत आह जी चेति । जीवभावापन्नब्रह्माभिप्रायमित्यर्थ ।

( २ ) न जीवपरमिति जीवनिर्देशवारणमिह न क्रियते तथासत्यनुवादाभावप्रसङ्गादित्यर्थः ।

( ३ ) मनुष्यग्रहणं शूद्रादावधिकारिण्यतिप्रसंजकमिति सङ्कोचयति त्रैवर्णिकानेवेति ।

( ४ ) स्थावराणाम् । चित्तशुद्ध्यर्थं नित्येषु मुमुक्षूणामधिकार इति सूचयितुं काम्येष्विति ।

( ५ ) अत्र तिरश्चां वेदार्थज्ञानादिसामग्र्यभावाद्देवानां स्वदेवत्ये कर्मणि स्वोद्देशेन द्रव्यत्यागायोगादृषीणामार्षेयवरणे ऋष्यन्तराभावाच्चेत्यशक्तौ हेतवो बोध्याः ।

( ६ ) 'शूद्रो यज्ञेऽनवक्लृप्त' इति पर्युदासात् 'उपनयीत, तमध्यापयी'त इति शास्त्राच्च शूद्रस्य वैदिके कर्मण्यनधिकार इत्यर्थः ।

( ७ ) प्रसङ्गमिति । यद्यपीयमधिकारचिन्ता न देवादिप्रवृत्त्यर्था तथापि क्रममुक्तिफलोपास्तिषु भोगद्वारा मुक्तिकाममनुष्यप्रवृत्त्यर्थेति प्रसङ्गसङ्गतिमित्यर्थ ।

( ८ ) अनेन कामादीनामुपलक्षणं बोध्यम् ।

सामर्थ्यमपि तेषामि''ति। यथा च मन्त्रादिभ्यस्तदवगमस्तथोपरिष्टादुपपादयिष्यते। ननु शूद्रवदुपनयनासम्भवेनाध्ययनाभावात्तेषामनधिकार इत्यत आह—''न चोपनयनशास्त्रे-णे''ति। न(१) खलु विधिवद्गुरुमुखाद्गृह्यमाणो वेदः फलवत्कर्मब्रह्मबोधहेतुरपि त्वध्य-यनोत्तरकालं निगमनिरुक्तव्याकरणादिविदितपदतदर्थसंगतेरधिगतशाब्दन्यायतत्त्वस्य पुंसः स्मर्यमाणः(२), स च मनुष्याणामिह जन्मनीव देवादीनां प्राचि भवे विधिवदधीत आम्नाय इह जन्मनि स्मर्यमाणोऽत एव स्वयं प्रतिभातो वेदः संभवतीत्यर्थः। न च कर्मानधिकारे ब्रह्मविद्यानाधिकारो भवतीत्याह—''यदपि कर्मस्वनधिकारकारणमुक्तमि''ति। वस्वादीनां हि न वस्वाद्यन्तरमस्ति, नापि भृग्वादीनां भृग्वाद्यन्तरमस्ति। प्राचां वसुभृगुप्र-भृतीनां क्षीणाधिकारत्वेनेदानीं देवर्षित्वाभावादित्यर्थः॥ २६॥

## (सू०) विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्॥ २७॥

मन्त्रादिपदसमन्वयात्प्रतीयमानोऽर्थः प्रमाणान्तराविरोधे सत्युपेयो, न तु विरोधे। प्रमा-णान्तरविरुद्धं चेदं विग्रहवत्त्वादि देवतायास्तस्मा'द्यजमानः प्रस्तर' इत्यादिवदुपचरितार्थो मन्त्रादिर्व्याख्येयः। तथा च विग्रहाद्यभावाच्छब्दोपहितार्थोऽर्थोपहितो वा शब्दो देवतेत्य-चेतनत्वान्नैवास्याः क्वचिदप्यधिकार इति शङ्कार्थः(३)। निराकरोति—''न'' (पृ० ३४८ पं० ९)। ''कस्मादनेकरूपप्रतिपत्तेः''। सैव कुत इत्यत आह—''दर्शनात्'' श्रुतिषु स्मृतिषु च। तथा ह्येकस्यानेककायनिर्माणमदर्शनाद्वा न युज्यते, बाधदर्शनाद्वा? तत्रादर्शनमसिद्धं, श्रुतिस्मृतिभ्यां दर्शनात्। नहि लौकिकेन प्रमाणेनादृष्टत्वादागमेन दृष्टम-दृष्टं भवति। मा भूद्यागादीनामपि स्वर्गादिसाधनत्वमदृष्टमिति। (४)मनुष्यशरी-रस्य मातापितृसंयोगजत्वनियमादसति पित्रोः संयोगे कुतः संभवः? संभवे वाऽनग्नि-तोऽपि धूमः स्यादिति बाधदर्शनमिति चेत्। (५)हन्त किं शरीरत्वेन हेतुना देवादिशरीरमपि मातापितृसंयोगजं सिषाधयिषसि? तथा चानैकान्तो हेत्वाभासः। स्वेदजोद्भिज्जानां शरीरा-णामतद्धेतुत्वात्। इच्छामात्रनिर्माणत्वं देहादीनामदृष्टचरमिति चेत्, न। भूतोपादानत्वेने-च्छामात्रनिर्माणत्वासिद्धेः। (६)भूतवशिनां हि देवादीनां नानाकायचिकीर्षावशाद्भूतक्रियो-त्पत्तौ भूतानां परस्परसंयोगेन नानाकायसमुत्पादात्। दृष्टा च वशिन इच्छावशाद्वश्ये क्रिया, यथा विषविद्याविद इच्छामात्रेण विषशकलप्रेरणम्। न च विषविद्याविदो दर्शनेनाधिष्ठानद-

(१) ननु देवादीनां वेदार्थस्य स्वयं प्रतिभानेऽपि गुरुमुखात्तद्ग्रहणस्याभावेनापुरुषार्थत्वं ज्ञानस्य स्याद-त आह न खल्विति।

(२) अस्य फलवद्ब्रह्मावबोधहेतुरित्यनेनान्वयः।

(३) मीमांसकमते विग्रहवत्यश्चेतनाया देवताया अस्वीकारात् 'अग्नये स्वाहा' इत्यादौ चतुर्थ्यन्त-शब्दप्रतीतिमात्रं शब्दोहित तादृगर्थनियमितः शब्दो वा देवतेति विग्रहाद्यभावात्कथं देवतानां कर्मण्यधिकार इति शङ्काभिप्रायो मीमांसकानां बोध्य।

(४) अदर्शनपक्षं निरस्य बाधपक्षेणाशङ्कते मनुष्येति। अनेन देवादयो न शरीरिणः मातापितृरहितत्वा-द्घटवदित्यनुमानं देवताशरीरस्वीकारे बाधकमिति सूचितम्। विपक्षे बाधकमाह सम्भवे इति।

(५) उक्तमीमांसकानुमानं यूकादावनैकान्तिकमित्याह हन्तेति।

(६) भूतवशिनामिति। अनेन भूतानामधिष्ठात्रभावादनारम्भकत्वमित्याशङ्का परास्ता।

र्शनाद्व्यवहितविप्रकृष्टभूतादर्शनाद्देवादीनां कथमधिष्ठानमिति वाच्यम् । काचाभ्रपटलपिहितस्य विप्रकृष्टस्य भौमशनैश्चरादेर्दर्शनेन व्यभिचारात् । (१)असक्ताश्च दृष्टयो देवादीनां काचाभ्रपटलादिवन्महीमहीधरादिभिर्न व्यवधीयन्ते । न चास्मदादिवत्तेषां शरीरित्वेन व्यवहितविप्रकृष्टादिदर्शनासंभवोऽनुमीयत इति वाच्यम् । आगमविरोधिनोऽनुमानस्योत्पादायोगात् । अन्तर्धानं चाञ्जनादिना मनुजादीनामिव तेषां प्रभवतामुपपद्यते, तेन संनिहितानामपि न क्रतुदेशे दर्शनं भविष्यति । तस्मात्सूक्त'मनेकप्रतिपत्तेरि'ति । "**तथाहि कति देवा इत्युपक्रम्ये**"ति । वैश्वदेवशस्त्रस्य(२) हि निविदि 'कति देवा' इत्युपक्रम्य निविदैवोत्तरं दत्तं शाकल्याय याज्ञवल्क्येन "**त्रयश्च त्री च शता त्रयश्च त्री च सहस्रे**"ति । निविन्नाम शस्यमानदेवतासंख्यावाचकानि मन्त्रपदानि । एतदुक्तं भवति—वैश्वदेवस्य निविदि कति देवाः शस्यमानाः प्रसंख्याता इति शाकल्येन पृष्टे याज्ञवल्क्यस्योत्तरं—'त्रयश्च त्री च शते'त्यादि । यावत्संख्याका वैश्वदेवनिविदि संख्याता देवास्त एतावन्त(३) इति । पुनश्च शाकल्येन 'कतमे त' इति संख्येयेषु पृष्टेषु याज्ञवल्क्यस्योत्तरं–'**महिमान(४) एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति**' । 'अष्टौ वसव एकादश रुद्रा द्वादशादित्या इन्द्रश्च प्रजापतिश्चे'ति त्रयस्त्रिंशद्देवाः । तत्राग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चेति वसवः । एते हि प्राणिनां कर्मफलाश्रयेण कार्यकारणसंघातरूपेण परिणमन्तो जगदिदं सर्वं वासयन्ति, तस्माद्वसवः । कतमे रुद्रा इति दशेमे पुरुषे प्राणाः । बुद्धिकर्मेन्द्रियाणि दश । एकादशं च मन इति । तदेतानि प्राणाः, (५)तद्वृत्तित्वात् । ते हि प्रायणकाल उत्क्रामन्तः पुरुषं रोदयन्तीति रुद्राः । कतम आदित्या इति द्वादशमासाः संवत्सरस्यावयवाः पुनःपुनः परिवर्तमानाः प्राणभृतामायूंषि च कर्मफलोपभोगं चादापयन्तीत्यादित्याः । (६)अशनिरिन्द्रः सा हि बलं सा ईन्द्रियस्य परमा ईशता तया हि सर्वान् प्राणिनः प्रमापयति तेन स्तनयित्नुरशनिरिन्द्रः । यज्ञः प्रजापतिरिति, यज्ञसाधनं च यज्ञरूपं च पशवः प्रजापतिः । (७)एत एव त्रयस्त्रिंशद्देवाः षण्णामग्निपृथिवीवाय्वन्तरिक्षादित्यदिवां महिमानो न ततो भिद्यन्ते । षडेव तु देवाः । ते तु षडग्निं पृथिवीं चैकीकृत्यान्तरिक्षं वायुं चैकीकृत्य दिवं चादित्यं चैकीकृत्य त्रयो लोकास्त्रय एव देवा भवन्ति । त्रय एव च त्रयोऽन्नप्राणयोरन्तर्भवन्तोऽन्नप्राणौ द्वौ देवौ भवतः । तावप्यध्यर्द्धो देव एकः । कतमोऽध्यर्द्धः ? योऽयं वायुः पवते(८) । कथमय-

---

(१) ननु काचादीनां स्वच्छत्वादस्मदादिदृग्व्यवधायकत्वं युक्तं शैलभूम्यादयस्तु देवादिदृष्टीनां व्यवधायका भविष्यन्ति इत्याशङ्क्याहासक्ताश्चेति । असक्ता –अप्रतिबद्धा ।

(२) श्रुतिगतवैश्वदेवपदस्य व्याख्या शस्त्रस्येति ।

(३) एतावन्त —अधिकत्रिशतानि आधिकसहस्राणि चेति । (४) विस्तारा ।

(५) इन्द्रियेषु प्राणशब्दस्य प्रवृत्तौ निमित्तमाह तद्वृत्तित्वादिति । तस्मात्प्राणाद्वृत्तिर्वर्तनं येषां तेषां भावस्तत्त्वादित्यर्थः ।

(६) श्रुतौ त्रयस्त्रिंशतां पूरणाविन्द्रप्रजापती उक्तौ तौ च स्तनयित्नुयज्ञत्वेन व्याख्यातौ, पुनः कतमः स्तनयित्नु कतमो यज्ञ इति पृष्ट्वा यथाक्रममशनिरिति पशव इति च प्रयुक्तं तदुपपादयति अशनिरिन्द्र इत्यादिना । परमा ईशना परमैश्वर्यम् । रूपं यज्ञं द्रव्यतया रूपयन्तो यज्ञस्य रूपं पशवस्ते प्रजापतिः ।

(७) षडायन्तर्भावेणेति भाष्यं व्याचष्टे एत एवेति । (८) जगत् पुनाति ।

मेक एवाध्यर्द्धः? यदस्मिन्सति सर्वमिदमध्यर्धादृद्धिं प्राप्नोतीति, तेनाध्यर्द्ध इति । कतम एक इति ? (१)स एवाध्यर्द्धः प्राण एको ब्रह्म । सर्वदेवात्मत्वेन बृहत्त्वाद्ब्रह्म तदेव त्यदित्याचक्षते परोक्षाभिधायकेन शब्देन, तस्मादेकस्यैव देवस्य महिमवशाद्युगपदनेकदेवरूपतामाह श्रुतिः । स्मृतिश्च निगदव्याख्याता । अपि च पृथग्जनानामप्युपायानुष्ठानवशात्प्राप्ताणिमाद्यैश्वर्याणां युगपन्नानाकायनिर्माणं श्रूयते, तत्र कैव कथा देवानां स्वभावसिद्धानामित्याह—"प्राप्ताणि माद्यैश्वर्याणां योगिना"मिति ( पृ० ३४९ प० ८ ) 'अणिमा लघिमा महिमा (२)प्राप्तिः प्राकाम्यमीशित्वं वशित्वं यत्रकामावसायित्वे'त्यैश्वर्याणि ।

"अपरा व्याख्ये"ति । अनेकत्र कर्मणि युगपदङ्गभावप्रतिपत्तिरङ्गभावगमनं, तस्य दर्शनात् । तदेव परिस्फुटं दर्शयितुं व्यतिरेकं तावदाह—"क्वचिदेक" इति । न खलु बहुषु श्राद्धेष्वेको ब्राह्मणो युगपदङ्गभावं गन्तुमर्हति । एकस्यानेकत्र युगपदङ्गभावमाह—"क्वचित्त्वेक" इति । ( पृ० ३५० पं० १ ) यथैकं ब्राह्मणमुद्दिश्य युगपन्नमस्कारः क्रियते बहुभिस्तथा स्वस्थानस्थितामेकां देवतामुद्दिश्य बहुभिर्यजमानैर्नानादेशावस्थितैर्युगपद्धविस्त्यज्यते, तस्याश्च तत्रासन्निहिताया अप्यङ्गभावो भवति । अस्ति हि तस्या युगपद्विप्रकृष्टानेकार्थोपलम्भसामर्थ्यमित्युपपादितम् ॥ २७ ॥

**शब्द इति चेत्, नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥२८॥**

(३)गोत्वादिवत्पूर्वावमर्शाभावादुपाधेरप्येकस्याप्रतीतेः पाचकादिवद् आकाशादिशब्दवद् व्यक्तिवचना एव वस्वादिशब्दाः तस्याश्च नित्यत्वात्तया सह सम्बन्धो नित्यो भवेत् । विग्रहादियोगे तु सावयवत्वेन वस्वादीनामनित्यत्वात्ततः पूर्वं वस्वादिशब्दो न स्वार्थेन सम्बद्ध आसीत्स्वार्थस्यैवाभावात् । ततश्चोत्पन्ने वस्वादौ वस्वादिशब्दसम्बन्धः प्रादुर्भवन् देवदत्तादिशब्दसम्बन्धवत्पुरुषबुद्धिप्रभव इति तत्पूर्वको वाक्यार्थप्रत्ययोऽपि पुरुषबुद्ध्यधीनः स्यात् । पुरुषबुद्धिश्च मानान्तराधीनजन्मेति मानान्तरापेक्षया प्रामाण्यं वेदस्य व्याहन्येतेति शङ्कार्थः ।

उत्तरम्(४)। "न" "अतः प्रभवाद्" वसुत्वादिजातिवाचकाच्छब्दात्तज्जातीयां व्यक्तिं चिकीर्षितां बुद्धावालिख्य तस्याः प्रभवनम् । तदिदं तत्प्रभवत्वम् । एतदुक्तं भवति । यद्यपि न शब्द उपादानकारणं वस्वादीनां ब्रह्मोपादानत्वात् , तथापि निमित्तकारणमुक्तेन क्रमेण । न चैतावता शब्दार्थसम्बन्धस्यानित्यत्वं, वसुत्वादिजातेर्वा तदुपाधेर्वा यया कयाचिदाकृत्याऽवच्छिन्नस्य नित्यत्वादिति । इममेवार्थमाक्षेपसमाधानाभ्यां विभजते—"ननु जन्माद्यस्य यत" इति । ते निगदव्याख्याते । तत् किमिदानीं स्वयम्भुवा वाङ् निर्मिता कालिदा-

---

( १ ) स ब्रह्म त्यद् इत्याचक्षते इति वाक्यं व्याचष्टे स एवेति ।

( २ ) प्राप्तिरङ्गुल्यग्रेण चन्द्रस्पर्शः । प्राकाम्यमिच्छानभिघातः । ईशित्वं सृष्टिशक्तिः । वशित्वं नियमनशक्तिः । संकल्पमात्रादिष्टलाभो यत्रकामावसायिता । अन्यत्सुगमम् ।

( ३ ) गोत्वादिवदिति । अयं भावः । प्रत्यभिज्ञा खलु पूर्वावमर्शः, स चादृष्टे वस्वादौ न सम्भवति, अत एव चोपाध्यभावोऽपि, उपाधेरपि नरपतित्वादिवत् किञ्चिद्घटकपदार्थगतजात्यवच्छेदेनानुगतीकर्तव्यत्वाद्घटकपदार्थेष्वप्यलौकिकेषु प्रत्यभिज्ञाभावेनानुगतजात्यसिद्धिरित्यर्थः । अन्यश्च शङ्कार्थः सुगमः ।

( ४ ) मन्त्रादिसिद्धे वस्वादौ असौ वसुरसावपि वसुरिति परामर्शस्य सम्भवः, त्रिदिवत्वादिजात्यवच्छिन्नेऽर्थेषु पाकत्वावच्छिन्नपाकयोगेष्विवौपाधिकत्वेऽपि शक्यः शब्दार्थसंगतिग्रह इत्युत्तरार्थः । अन्यत्सुगमम् ।

सादिभिरिव कुमारसम्भवादि, तथा च तदेव प्रमाणान्तरापेक्षवाक्यत्वादप्रामाण्यमापतितमित्यत आह—"उपसर्गोऽप्ययं वाचः सम्प्रदायप्रवर्तनात्मकः" इति। (पृ० ३५९ प० १७) सम्प्रदायो गुरुशिष्यपरम्परयाऽध्ययनम्। एतदुक्तं भवति। स्वयम्भुवो वेदकर्तृत्वेऽपि न कालिदासादिवत् स्वतन्त्रत्वमपि तु पूर्वसृष्ट्यनुसारेण। एतच्चास्माभिरुपपादितम्, उपपादयिष्यति चाग्रे भाष्यकारः। अपि चाद्यत्वेप्येतद् दृश्यते तद्दर्शनात् प्राचामपि कर्तृणां तथाभावोऽनुमीयत इत्याह—"अपि च चिकीर्षितमि"ति (पृ० ३५३ पं० ४)। आक्षिपति(१)-"किमात्मकं पुन"रिति। (२)अयमभिसन्धिः। वाचकशब्दप्रभवत्वं हि देवानामभ्युपेतव्यम्, अवाचकेन तेषां बुद्धावनालेखनात्। (३)तत्र न तावद्गवादीनां वकारादयो वर्णा वाचकास्तेषां प्रत्युच्चारणमन्यत्वेनाशक्यसङ्गतिग्रहत्वात्, अगृहीतसङ्गतेश्च वाचकत्वेऽतिप्रसङ्गात्। अपि चैते प्रत्येकं वा स्वार्थमभिदधीरन् मिलित्वा वा? न तावत् प्रत्येकम्, एकवर्णोच्चारणानन्तरमर्थप्रत्ययादर्शनात्, वर्णान्तरोच्चारणानर्थक्यप्रसङ्गाच्च। नापि मिलिताः, तेषामेकवक्तृप्रयुज्यमानानां रूपतो व्यक्तितो वा प्रतिक्षणमपवर्गवतां मिथः साहित्यसम्भवाभावात्। न च प्रत्येकसमुदायाभ्यामन्यः प्रकारः सम्भवति। (४)न च स्वरूपसाहित्याभावेऽपि वर्णानामाग्नेयादीनामिव संस्कारद्वारकमस्ति साहित्यमिति साम्प्रतम्, विकल्पासहत्वात्। (५)को नु खल्वयं संस्कारोऽभिमतः किमपूर्वं नामाग्नेयादिजन्यमिव, किं वा भावनापरनामा स्मृतिप्रभवबीजम्। न तावत् प्रथमः कल्पः, नहि शब्दः स्वरूपतोऽज्ञातो बाऽविदितोऽ(६)विदितसङ्गतिरर्थधीहेतुरिन्द्रियवत्। उच्चरितस्य बधिरेणागृहीतस्य गृहीतस्य वाऽगृहीतसङ्गतेरप्रत्यायकत्वात्। तस्माद्विदितो विदितसङ्गतिर्विदितसमस्तज्ञापनाङ्गश्च शब्दो धूमादिवत् प्रत्यायकोऽभ्युपेयः। तथाचापूर्वाभिधानोऽस्य संस्कारः प्रत्यायनाङ्गमित्यर्थप्रत्ययात् प्रागवगन्तव्यः, न च तदास्यावगमोपायोऽस्ति, अर्थप्रत्ययात्तु तदवगमं समर्थयमानो दुरुत्तरमितरेतराश्रयमाविशति—संस्कारावसायादर्थप्रत्ययस्ततश्च तदवसाय इति। (७)भावनाभिधानस्तु संस्कारः स्मृतिप्रभवसामर्थ्यमात्मनो, न च तदेवार्थप्रत्ययप्रभवसामर्थ्यमपि भवितु

---

(१) वैयाकरणैस्तावत् स्फुटयते वर्णैर्व्यज्यत इति व्युत्पत्त्या वर्णव्यङ्ग्योऽर्थस्य व्यञ्जकः स्फोटो गवादिशब्दरूपो नित्योऽङ्गीक्रियते, नैयायिकैश्च पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहितान्त्यवर्णैरेवार्थोपपत्तिरित्यभ्युपेयते तदुभयमते जगद्धेतुत्वं शब्दस्य न सम्भवतीत्यभिप्रायेणाक्षिपतीत्यर्थः।

(२) नन्वनित्यत्वेपि वर्णानां महाभूतवद्देवादिहेतुतेत्याशङ्क्याह अयमिति।

(३) नैयायिकपक्षं निरस्यन्नाह तत्रेति।

(४) नैयायिकमतेनाशङ्कते नचेति। यथाग्नेयादीनां फलकरणत्वान्यथानुपपत्त्याऽपूर्वमवसेयमेवं वर्णानामर्थधीहेतुत्वान्यथानुपपत्त्या संस्कारः साहित्यमवसेयमित्याशङ्कार्थः।

(५) विकल्पप्रदर्शनद्वारा क्रमेण दूषयति को नु खल्विति।

(६) स्वरूपेणाविदितस्यार्थधीहेतुत्वनिषेधो दृष्टान्तार्थः। यथा स्वरूपेण विदितस्यार्थबुध्या हेतुत्वमेवमङ्गतोपीत्यर्थः। अविदितसङ्गतिरिति हेत्वर्थः। शब्दः सहाङ्गेन ज्ञातोऽर्थधीहेतुः सम्बन्धग्रहणसापेक्ष बोधकत्वाद्धूमवदित्यर्थः। इन्द्रियवदिति वैधर्म्यदृष्टान्तः।

(७) भावनेति। भावनाख्यः संस्कार आत्मनो वर्णस्य स्वस्यैव विषयस्य स्मृतिप्रसवसामर्थ्यम्, तथा चास्माद्वर्णविषया स्मृतिस्ततोऽर्थधीः स्यादिति वक्तव्यम्, तत्र किमर्थगमकसामर्थ्यमेवार्थधीजननशक्तिरुत ततोऽर्थधीशक्तिरुदेतीति विकल्पद्वयमप्यसम्भवतीत्याह नचेति।

मर्हति । नापि तस्यैव सामर्थ्यस्य सामर्थ्यान्तरम् । (१)नहि येव वह्नेर्दहनशक्तिः सैव तस्य प्रकाशनशक्तिः, नापि दहनशक्ते प्रकाशनशक्ति । अपि च व्युत्क्रमेणोच्चरितेभ्यो वर्णेभ्यः सैवाहित स्मृतिबीज वासनत्यर्थप्रत्यय· प्रसज्येत, न चास्ति । (२)तस्मान्न कथंचिदपि वर्णा अर्थधीहेतवो, नापि तदतिरिक्तः स्फोटात्मा, तस्यानुभवानारोहात । अर्थधियम्तु कार्यात्तदवगमे परस्पराश्रयप्रसङ्ग इत्युक्तप्रायम् । सत्तामात्रेण तु तस्य नित्यस्यार्थधीहेतुभावे सर्वदाऽर्थप्रत्ययो त्पादप्रसङ्गो निरपेक्षस्य हेतोः सदातनत्वात् । तस्माद्वाचकाच्छब्दाद्वाच्योत्पाद इत्यनुपपन्नमिति।

अत्राचार्यदेशीय (३)आह—"स्फोटमित्याहे"ति । मृष्यामहे न वर्णाः प्रत्यायका इति, न स्फोट इति तु न मृष्याम., तदनुभवानन्तरं विदितसङ्गतेरर्थधीसमुत्पादात् । न च वर्णातिरिक्तस्य तस्यानुभवो नास्ति । गौरित्येकं पदं गामानय शुक्लामित्येक वाक्यमिति (४)नानावर्णपदातिरिक्तैकपदवाक्यावगतेः सर्वजनीनत्वात् । न चायमसति बाधके एक पदवाक्यानुभवः शक्यो मिथ्येति वक्तुम् । नाप्यौपाधिकः । उपाधिः खल्वेकधीग्राह्यता वा स्यात्, एकार्थधीहेतुता वा । न तावदेकधीगोचराणां धवखदिरपलाशानामेकनिर्भासः प्रत्यय. समस्ति, तथा सति धवखदिरपलाशा इति न जातु स्यात् । नाप्येकार्थधीहेतुता, तद्धेतुत्वस्य वर्णेषु व्यासेधात् । तद्धेतुत्वेन तु (५)साहित्यकल्पनेऽन्योन्याश्रयप्रसङ्ग —साहित्यात्तद्धेतुत्वं तद्धेतुत्वाच्च साहित्यमिति । तस्मादयमबाधितोऽनुपाधिश्च पदवाक्यगोचर एकनिर्भासो वर्णातिरिक्तं वाचकमेकमवलम्बते स स्फोट इति । (६)न च ध्वनय प्रत्येकं व्यञ्जयन्तोऽपि न द्रागित्येव विशदयन्ति, येन द्रागर्थधीः स्यात्, अपि तु रत्नतत्त्वज्ञानवत् यथास्वं द्वित्रिचतुष्पञ्चषड्दर्शनजनितसंस्कारपरिपाकसचिवचेतोलब्धजन्मनि चरमे चेतसि चकास्ति विशदं पदवाक्यतत्त्वमिति प्रागनुत्पन्नायास्तदनन्तरमर्थधिय उदय इति नोत्तरेषामानर्थक्यं ध्वनीनाम् । नापि प्राचां, तदभावे तज्जनितसंस्कारतत्परिपाकाभावेनानुग्रहाभावात् । अन्त्यस्य चेतसः केवलस्याजनकत्वात् । (७)न च पदप्रत्ययवत् प्रत्येकमव्यक्तामर्थधियमाधास्यन्ति प्राञ्चो वर्णाश्चरमस्तु तत्सचिवः स्फुटतरामिति युक्तम् । व्यक्ताव्यक्तावभासिनायाः प्रत्यक्षज्ञानानियमात्, स्फोटज्ञानस्य च प्रत्यक्षत्वात । अर्थधियस्त्वप्रत्यक्षाया मानान्तरजन्मनो व्यक्त

---

(१) उक्तविकल्पद्वयासम्भवे क्रमेण निदर्शनमाह नहीति ।

(२) नैयायिकमतनिरासमुपसंहरन् वैयाकरणमतखण्डनमतिदिशति तस्मादित्यादिना । परस्परेति । स्फोटे ज्ञातेऽर्थधीस्ततश्च स्फोटधीरित्यन्योन्याश्रयप्रसङ्गो बोध्य इति भाव । सत्ताया हेतुत्वान्नोक्तदोष इत्याशङ्क्याह सत्तेति ।

(३) वैयाकरण, स्फोटवादमङ्गीकुर्वन्नित्यर्थ. ।

(४) नानेति । नानावर्णातिरिक्तैकपदावगतेर्नानापदातिरिक्तैकवाक्यावगतेश्चेत्यर्थ ।

(५) साहित्यमेकत्वम् ।

(६) ननूक्तः स्फोट किमेकैकवर्णात्स्फुटति किंवा मिलितेभ्य ? नाद्य, एकवर्णादेव स्फोटव्यक्तौ तत एवार्थधीसिद्धेरितरवैयर्थ्यात, नान्त्य, वर्णसाहित्यस्य भवताऽनङ्गीकारादत आह न चेति ।

(७) नन्वेवं स्फोटन्यायेनार्थोऽपि प्रत्येक ध्वनिभिर्व्यज्यतां पूर्वध्वनिव्यक्तिसंस्कारसहितमन्त्यश्चैनोऽर्थस्य तत्त्व व्यनक्तु इत्याशङ्क्य समाधत्ते न चेत्यादिना । व्यक्तेति । अभिहितश्चेदर्थो नाव्यक्त सन्दिग्धस्तु नाभिहित स्यात्, प्रत्यक्षे तु प्रतिसन्निकर्ष विशदाविशदनिश्चयसम्भव इत्यर्थ ।

एवोपजनो न वा स्यान्न पुनरस्फुट इति न समः समाधिः । तस्मान्नित्यः स्फोट एव वाचको न वर्णा इति ।

तदेतदाचार्यदेशीयमतं स्वमतमुपपादयन्नपाकरोति—"**वर्णा एव तु न शब्द**" **इति** । (१)एवं हि वर्णातिरिक्तः स्फोटोऽभ्युपेयेत, यदि वर्णानां वाचकत्वं न सम्भवेत्, स चानुभवपद्धतिमध्यासीत । (२)द्विधा चावाचकत्वं वर्णानां, क्षणिकत्वेनाशक्यसंगतिग्रहत्वाद्वा व्यस्तसमस्तप्रकारद्वयाभावाद्वा । न तावत्प्रथमः कल्पः, वर्णानां क्षणिकत्वे मानाभावात् । ननु वर्णानां प्रत्युच्चारणमन्यत्वं सर्वजनप्रसिद्धम् । न । प्रत्यभिज्ञानानुभवविरोधात् । न चासत्यप्येकत्वे ज्वालादिवत्सादृश्यनिबन्धनमेतत् प्रत्यभिज्ञानमिति साम्प्रतम् । सादृश्यनिबन्धनत्वमस्य बलवद्बाधकोपनिपाताद्वाऽऽस्थीयेत, क्वचिज्ज्वालादौ व्यभिचारदर्शनाद्वा । तत्र क्वचिद्व्यभिचारदर्शनेन तदुत्प्रेक्षायामुच्यते वृद्धैः स्वतःप्रामाण्यवादिभिः—

उत्प्रेक्षेत हि यो मोहादज्ञातमपि बाधनम् ।
स सर्वव्यवहारेषु संशयात्मा क्षयं व्रजेत् ॥ इति ।

प्रपञ्चितं चैतदस्माभिर्न्यायकणिकायाम् । (३)न चेदं प्रत्यभिज्ञानं गत्वादिजातिविषयं, न गादिव्यक्तिविषयं, तासां प्रतिनरं भेदोपलम्भात् । अत एव शब्दभेदोपलम्भाद्वक्तृभेदं उन्नयिते, सोमशर्माऽधीते न विष्णुशर्मेति युक्तम् । यतो बहुषु गकारमुच्चारयत्सु निपुणमनुभवः परीक्ष्यताम् । यथा कालाक्षीं च स्वस्तिमतीं चेक्षमाणस्य व्यक्तिभेदप्रथायां सत्यामेव तदनुगतमेकं सामान्यं प्रथते, तथा किं गकारादिषु भेदेन प्रथमानेष्वेव गत्वमेकं तदनुगतं चकास्ति, किं वा यथा गोत्वमाजानत एकं भिन्नदेशपरिमाणसंस्थानव्यक्त्युपधानभेदाद्भिन्नदेशमिवाल्पमिव महदिव दीर्घमिव वामनमिव, तथा गव्यक्तिराजानत एकाऽपि व्यञ्जकभेदात्तद्धर्मानुपातिनीव प्रथत इति भवन्त एव विदाङ्कुर्वन्तु । (४)तत्र गव्यक्तिभेदमङ्गीकृत्यापि यो गत्वस्यैकस्य परोपधानभेदकल्पनाप्रयासः स वरं गव्यक्तावेवास्तु किमन्तर्गडुना गत्वेनाभ्युपेतेन । यथाहुः—

(५)तेन यत्प्रार्थ्यते जातेस्तद्वर्णादेव लप्स्यते ।
व्यक्तिलभ्यं तु नादेभ्य इति गत्वादिधीर्वृथा ॥

(६)न च स्वस्तिमत्यादिवद् गव्यक्तिभेदप्रत्ययः स्फुटः प्रत्युच्चारणमस्ति, तथा सति

---

(१) स्फोटे प्रमाणसत्तां विकल्प्य तं खण्डयन्नाह एवं हीति ।

(२) वाचकत्वानुपपत्तावपि विकल्पद्वयमाह द्विधेति । व्यस्तानामेकैकवर्णानां समस्तानां वा वाचकत्वमिति प्रकारद्वयाभावादित्यर्थः ।

(३) सामान्यतोदृष्टस्यातिप्रसङ्गादप्रामाण्यमभिधाय वर्णभेदग्राहकं प्रत्यक्षं बाधकमाशङ्क्याह नचेदमिति । युक्तमित्यत्रान्वयः । भेदेनोपलब्धौ युक्तिरत एवेति । अयुक्तत्वे हेतुमाह यत इति । बहुषु गकारमुच्चारयत्सु योऽनुभवो जायते स किं व्यक्तिभेदावमर्शपूर्वकं जातिविषय उतोपाधिकभेदवदेकव्यक्तिविषय इति निपुणं निरूपणे ध्वन्युपाधिकभेदमन्तरेण स्वाभाविकव्यक्तिभेदो न भासत इत्यर्थः ।

(४) व्यक्तिभेदपक्षे च कल्पनागौरवमाह तत्रेति ।

(५) येन वर्णेषु व्यक्तिभेदो न स्फुटस्तेन, यत् प्रत्यभिज्ञानं जातेः प्रार्थ्यते, व्यक्तिलभ्यं भेदज्ञानमिति कारिकार्थः ।

(६) व्यक्त्या जातिबुद्ध्युपपादने गोत्वाद्युच्छेद इत्याशङ्क्याह नचेति । दशवारमुच्चारितवानित्येकस्यैव गकारस्योच्चारणेष्वावृत्तिप्रतीतेः ।

दश गकारानुदचारयच्चैत्र इति प्रत्यय. स्यात्, न स्य.द्दशकृत्व उच्चारयद्गकारमिति । (१)न चैष जात्यभिप्रायोऽभ्यासो यथा—'शतकृत्वस्तित्तिरीनुपायुङ्क्त देवदत्त' इति । अत्र हि सोरस्ताड(२) क्रन्दतोऽपि गकारादिव्यक्तौ लोकस्योच्चारणाभ्यासप्रत्ययस्याविनिवृत्तेः । चोदकः प्रत्यभिज्ञानबाधकमुत्थापयति(३) "कथं ह्येकस्मिन् काले बहूनामुच्चारयतामि"ति ( पृ० ३५६ पं ९ ) । यद्युगपद्विरुद्धधर्मसंसर्गवत् तन्नाना, यथा गवाश्वाद्द्विशफैकशफकेसरगलकम्बलादिमान् । युगपदुदात्तानुदात्तादिविरुद्धधर्मसंसर्गवांश्चायं वर्णस्तस्मान्नाना भवितुमर्हति । न चोदात्तादयो व्यञ्जकधर्मा न वर्णधर्मा इति साम्प्रतम्, व्यञ्जका ह्यस्य वायवः । तेषामश्रावणत्वे कथं तद्धर्माः श्रावणाः स्युः । इद तावदत्र वक्तव्यम्—नहि गुणगोचरमिन्द्रियं गुणिनमपि गोचरयति, मा भूवन् घ्राणरसनश्रोत्राणां गन्धरसशब्दगोचराणां तद्वन्तः पृथिव्युदकाकाशा गोचराः । एवं च मा नाम भूद्वायुगोचरं श्रोत्रम् तद्गुणांस्तूदात्तादीन् गोचरयिष्यति । (४)ते च शब्दासंसर्गाग्रहात् शब्दधर्मत्वेनाध्यवसीयन्ते । न च शब्दस्य प्रत्यभिज्ञानावधृतैकत्वस्य स्वरूपत उदात्तादयो धर्माः परस्परविरोधिनोऽपर्यायेण सम्भवन्ति । तस्माद्यथा मुखस्यैकस्य मणिकृपाणदर्पणाद्युपधानवशान्नानादेशपरिमाणसंस्थानभेदविभ्रमः, एवमेकस्यापि वर्णस्य व्यञ्जकध्वनिनिबन्धनोऽय विरुद्धनानाधर्मसंसर्गविभ्रमो, न तु भाविका नानाधर्मसंसर्ग, इति स्थितेऽभ्युपेत्य परिहारमाह भाष्यकारः—"अथ वा ध्वनिकृत" इति । अथवेति पूर्वपक्षं व्यावर्तयति । भवेता नाम गुणगुणिनावेकेन्द्रियग्राह्यौ, तथाप्यदोषः, ध्वनीनामपि शब्दवच्छ्रावणत्वात् । ध्वनिस्वरूपं प्रश्नपूर्वकं वर्णेभ्यो निष्कर्षयति—"कः पुनरयमि"ति । न चायमनिर्धारितविशेषवर्णत्वसामान्यमात्रप्रत्ययो न तु वर्णातिरिक्तनदभिव्यञ्जकध्वनिप्रत्यय इति साम्प्रतम् । (५)तस्यानुनासिकत्वादिभेदाभिन्नस्य गादिव्यक्तिवत्प्रत्यभिज्ञानाभावादप्रत्यभिज्ञायमानस्य चैकत्वाभावेन सामान्यभावानुपपत्तेः । तस्मादवर्णात्मको वैष शब्दः शब्दातिरिक्तो वा ध्वनिः शब्दव्यञ्जकः श्रावणोऽभ्युपेयः । उभयथापि चाक्षु(६) व्यञ्जनेषु च तत्तद्ध्वनिभेदोपधानेनानुनासिकत्वादयोऽवगम्यमानास्तद्धर्मा एव शब्दे प्रतीयन्ते न तु स्वतः शब्दस्य धर्माः । तथा च येषामनुनासिकत्वादयो धर्माः परस्परविरुद्धा भासन्ते भवतु तेषां ध्वनीनामनित्यता, नहि तेषु प्रत्यभिज्ञानमस्ति, येषु तु वर्णेषु प्रत्यभिज्ञान न तेषामनुनासिकत्वादयो धर्मा इति नानित्याः । (७)"एवं च सति सालम्बना" इति (पृ० २५७ पं २) । यद्येष परस्याग्रहो धर्मिण्यगृह्यमाणे तद्धर्मो न शक्या ग्रहीतुमिति । एवं नामास्तु तथा तुष्यतु परस्तथाप्यदोष इत्यर्थः । तदनेन प्रबन्धेन क्षणिकत्वेन वर्णानामशक्यसङ्गतिग्रहतया यदवाचकत्वमापादित वर्णानां तदपाकृतम् । व्यस्तसमस्तप्रकारसम्भवेन तु

---

( १ ) उक्तैक्यस्यान्यथासिद्धिमाशङ्क्याह न चैष इति ।

( २ ) साविष्कारम् ।

( ३ ) उक्तमपि बाधकं गतिनिरूपणाय पुनरुत्थापयतीत्यर्थ । एतेन वर्णेषु भेदाभेदनिषेधपरं 'कथं तर्हो'ति भाष्यमिति रत्नप्रभाकारादिमतं प्रकृतासंगतेरयुक्तमिति सूचितम् ।

( ४ ) भवन्त्वश्रावणवायुधर्मा श्रावणा, कथं तेषां शब्दधर्मत्वप्रतीतिरत आह ते चेति ।

( ५ ) तस्येति । ध्वनेर्भिन्नत्वान्न प्रत्यभिज्ञानमस्त्यतो ध्वन्युल्लेखिप्रत्ययस्य न जातिविषयत्वमित्यर्थः ।

( ६ ) स्वरेषु । ( ७ ) 'एवं च सती'ति दूषणाङ्गीकरणवाद, दूषणाप्रतिहतत्वादित्यर्थः ।

यदासञ्जितं तन्निराचिकीर्षुराह—"**वर्णेभ्यश्चार्थप्रतीतेरि**"ति। कल्पनामसृष्यमाण एकदेश्याह—"**न कल्पयामी**"ति। निराकरोति—"**न अस्या अपि बुद्धे**"रिति। निरूपयतु तावत् गौरित्येकं पदमिति धियमायुष्मान्। किमियं पूर्वानुभूतान् गकारादीनेव सामस्त्येनावगाहते, किं वा गकाराद्यतिरिक्तं गवयमिव वराहादिभ्यो विलक्षणम्? यदि गकारादिविलक्षणमवभासयेत् गकारादिरूषितः प्रत्ययो न स्यात्, नहि वराहधीर्महिषरूषितं वराहमवगाहते। (१)पदतत्त्वमेकं प्रत्येकमभिव्यञ्जयन्तो ध्वनयः प्रयत्नभेदभिन्नास्तुल्यस्थानकरणनिष्पाद्यतयाऽन्योन्यविसदृशतत्तत्पदव्यञ्जकध्वनिसादृश्येन स्वव्यञ्जनीयस्यैकस्य पदतत्त्वस्य मिथो विसदृशानेकपदसादृश्यान्यापादयन्त· सादृश्योपधानभेदादेकमप्यभागमपि नानेव भागवदिव भासयन्ति मुखमिवैकं नियतवर्णपरिमाणसंस्थानभेदमपि मणिकृपाणदर्पणादयोऽनेकमनेकवर्णपरिमाणसंस्थानभेदम्, एवं च कल्पिता एवास्य भागा वर्णा इति चेत्। (२)तत्किमिदानीं वर्णभेदानसत्यपि बाधके मिथ्येति वक्तुमध्यवसितोऽसि। एकधीरेव नानात्वस्य बाधिकेति चेत्, हन्तास्या नाना वर्णा प्रथन्त इति नानात्वावभास एवैकत्वं कस्मान्न बाधते। (३)अथ वा वनसेनादिबुद्धिवदेकत्वनानात्वे न विरुद्धे, नो खलु सेनावनबुद्धी गजपदातितुरगादीनां चम्पकाशोककिंशुकादीनां च भेदमपन्नाधमाने उदीयेते, अपि तु भिन्नानामेव सतां केनचिदेकेनोपाधिनाऽवच्छिन्नानामेकत्वमापादयतः। न चौपाधिकेनैकत्वेन स्वाभाविकं नानात्वं विरुध्यते, नह्यौपचारिकमग्नित्वं माणवकस्य स्वाभाविकनरत्वविरोधि। तस्मात्प्रत्येकवर्णानुभवजनितभावनानिचयलब्धजन्मनि निखिलवर्णावगाहिनि स्मृतिज्ञान एकस्मिन् भासमानानां वर्णानां तदेकविज्ञानविषयतया वैकार्थधीहेतुतया वैकत्वमौपचारिकमवगन्तव्यम्(४) न चैकार्थधीहेतुत्वेनैकत्वमेकत्वेन चैकार्थधीहेतुभाव इति परस्पराश्रयम्। नह्यर्थप्रत्ययात्पूर्वमेतावन्तो वर्णा एकस्मृतिसमारोहिणो न प्रथन्ते, न च तत्प्रथानन्तरं वृद्धस्यार्थधीर्नोन्नीयते, तदुन्नयनाच्च तेषामेकार्थधियं प्रति कारकत्वमेकमवगम्यैकपदत्वाध्यवसानमिति नान्योन्याश्रयम्। न चैकस्मृतिसमारोहिणां क्रमाक्रमविपरीतक्रमप्रयुक्तानामभेदो वर्णानामिति यथाकथञ्चित्प्रयुक्तेभ्य एतेभ्योऽर्थप्रत्ययप्रसङ्ग इति वाच्यम्। उक्तं हि—

> यावन्तो यादृशा ये च पदार्थप्रतिपादने।
> वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः॥ इति।

---

(१) पदबुद्धौ वर्णोल्लेखस्यान्यथासिद्धिं शङ्कते पदतत्त्वमिति। एकमभागमभिव्यञ्जयन्तो नानेव भागवदिव भासयन्तीत्यन्वयः। विभागारोपे हेतुमाह सादृश्योपधानेति। सादृश्यमेवोपधानमुपाधिः। सादृश्ये भेदमुपपादयति अन्योन्येति। ये हि गकारौकारविसर्जनीया गंगा गौण्यं वृक्ष इति विसदृशपदव्यञ्जकास्तैः सदृशा अपरे गकारादयो ध्वनयो गौरित्येकं पदं व्यञ्जयन्ति। विभागारोपेऽपि कथं वर्णरूषितपदप्रतिभानमत आह कल्पिता एवेति। व्यञ्जकवर्णात्मकत्वं व्यङ्ग्येऽध्यारोप्यत इति भावः।

(२) दूषयति तत्किमिति।

(३) औपाधिकत्वस्वाभाविकत्वाभ्यामेकत्वैकत्वनानात्वे व्यवस्थापयन्नाहाथवेति।

(४) एवं चैकत्वप्रत्ययसमारोहेऽप्येकस्मृतिविषयत्वं वर्णानामुपाधिरित्यर्थः। उपचारे सति निमित्तानुसरणं न तु निमित्तानुसारेणोपचार इति न वनखादेरातिप्रसङ्गः। एतेन समुदितानां वर्णानामर्थज्ञानजनकत्वमित्युपपादितम्।

(१)ननु पङ्क्तिबुद्धावेकस्यामकल्पनायामपि वास्तवी शालादीनामस्ति पङ्क्तिरिति तथैव प्रथा युक्ता, न च तथेह वर्णानां नित्यानां विभूनां चास्ति वास्तवः क्रमः, प्रत्ययोपाधिस्तु भवेत्, सचैक इति कुतस्त्य· क्रम एषामिति चेत् । न । एकस्यामपि स्मृतौ वर्णरूपवत्क्रमवत्पूर्वानुभूतताप्रपरामर्शात् । तथाहि-जरा राजेति पदयोः प्रथयन्त्यो स्मृतिधियोस्तत्त्वेऽपि वर्णानां क्रमभेदात्पदभेदः स्फुटतरं चकास्ति । तथा च नाक्रमविपरीतक्रमप्रयुक्तानामविशेषः स्मृतिबुद्धावेकस्यां वर्णानां क्रमप्रयुक्तानाम् । यथाहु·—

(२)पदावधारणोपायान् बहूनिच्छन्ति सूरयः ।
क्रमन्यूनातिरिक्तत्वस्वरवाक्यश्रुतिस्मृतीः ॥ इति ।

शेषमतिरोहितार्थम्(३) । दिङ्मात्रमत्र सूचितं, विस्तरस्तु तत्त्वबिन्दावगन्तव्य इति । अलं वा नैयायिकैर्विवादेन, सन्त्वनित्या एव वर्णास्तथापि गत्वाद्यवच्छेदेनैव पङ्क्तिग्रहोऽनादिश्च व्यवहारः सेत्स्यतीत्याह—"अथापि नामे"ति ( पृ० ३५९ पं० २ ) ॥ २८ ॥

## ( सू० ) अत एव च नित्यत्वम् ॥ २९ ॥

ननु प्राच्यामेव मीमांसायां वेदस्य नित्यत्वं सिद्धं तत्किं पुनः साध्यत इत्यत आह—"स्वतन्त्रस्य कर्तुरस्मरणादेव हि स्थिते वेदस्य नित्यत्व"इति । नह्यनित्याज्जगदुत्पत्तुमर्हति, तस्याप्युत्पत्तिमत्त्वेन सापेक्षत्वात् । तस्मान्नित्यो वेदो जगदुत्पत्तिहेतुत्वाद् ईश्वरवदिति सिद्धमेव नित्यत्वमनेन दृढीकृतम् । शेषमतिरोहितार्थम् ॥ २९ ॥

## (सू०) (४)समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ ३० ॥

शङ्कापदोत्तरत्वात् सूत्रस्य शङ्कापदानि पठति "अथापि स्यादि"ति । ( पृ० ३६० पं० १ ) अभिधानाभिधेयाविच्छेदे हि सम्बन्धनित्यत्वं भवेत् । एवमध्यापकाध्येतृपरम्पराविच्छेदे वेदस्य(५) नित्यत्वं स्यात् । निरन्वयस्य तु जगतः प्रविलयेऽत्यन्तासतश्चापूर्वस्योत्पादेऽभिधानाभिधेययोरत्यन्तमुच्छिन्नाविति किमाश्रयः सम्बन्धः स्यात् । अध्यापकाध्येतृसन्तानविच्छेदे च किमाश्रयो वेदः स्यात् । न च जीवास्तद्वासनावासिताः सन्तीति वाच्यम् । अन्तःकरणाद्युपाधिकल्पिता हि ते तद्विच्छेदे न स्थातुमर्हन्ति । (६)न च ब्रह्मणस्तद्वासना,

---

(१) भाष्ये पंक्तिबुद्धौ पिपीलिकाक्रमवत् स्मृतौ वर्णक्रमासिद्धिरित्युक्त, तदाक्षिप्य समाधत्ते नन्वित्यादिना ।

( २ ) पदेति । तत्र राजा जरेत्यत्र क्रम उपायः, गौर्गोमानित्यत्र न्यूनातिरिक्तत्वे, स्वरो नासिकादिः पञ्चजना इत्यादौ, वाक्यं पदान्तरसमभिव्याहारः अश्व इतो गच्छतीति, न लुङन्तमश्वपातम् क्रियान्तरोपादानात्, श्रुतिरुद्भिदो यागनामपरत्वं समानाधिकरणश्रुतिगम्यम्, स्मृतिर्युगपत्सर्ववर्णविषया ।

( ३ ) वृद्धव्यवहारे चेत्यादिकल्पना स्यादित्यन्तं भाष्यं स्पष्टार्थमित्यर्थः ।

( ४ ) महाप्रलये जातेरभावाच्छब्दार्थसम्बन्धानित्यत्वमित्याशङ्कापरिहारार्थं सूत्रं समानेत्यादि ।

( ५ ) वाक्यरूपस्येत्यर्थः ।

( ६ ) ननु जीवानामनवस्थितावप्यभिधानादिवासितस्य ब्रह्मणोऽवस्थितिः स्यात्तत्राह न चेति । निर्विषयस्याविद्यासिद्धप्रमाणानाश्रयत्वान्न तज्जवासनाश्रयत्वमित्यर्थः ।

तस्य चिदात्मनः शुद्धस्वभावस्य तदयोगात्। (१)ब्रह्मणश्च सृष्ट्यादावन्तःकरणादयस्तदवच्छिन्नाश्च जीवाः प्रादुर्भवन्तो न पूर्वकर्माविद्यावासनावन्तो भवितुमर्हन्ति, अपूर्वत्वात्। तस्माद्विरुद्धमिदं शब्दार्थसम्बन्धवेदनित्यत्वं सृष्टिप्रलयाभ्युपगमेनेति। अभिधातृग्रहणेनाध्यापकाध्येतारावुक्तौ(२)। शङ्कां निराकर्तुं सूत्रमवतारयति—"**तत्रेदमभिधीयते समाननामरूपत्वादि**"ति। यद्यपि महाप्रलयसमये नान्तःकरणादयः समुदाचरद्वृत्तयः सन्ति, तथापि स्वकारणेऽनिर्वाच्यायामविद्यायां लीनाः सूक्ष्मेण–शक्तिरूपेण कर्मविक्षेपकाविद्यावासनाभिः(३) सहावतिष्ठन्त एव। तथा च स्मृतिः—

(४)आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः॥ इति।

(५)ते चावधिं प्राप्य परमेश्वरेच्छाप्रचोदिताः, यथा कूर्मदेहनिलीनान्यङ्गानि ततो निस्सरन्ति, यथा वा वर्षापाये प्राप्तमृद्भावानि मण्डूकशरीराणि तद्वासनावासिततया घनघनाघनासारावसेकसुहितानि पुनर्मण्डूकदेहभावमनुभवन्ति, तथा पूर्ववासनावशात्पूर्वसमाननामरूपाण्युत्पद्यते। (६)एतदुक्तं भवति—यद्यपीश्वरात्प्रभवः संसारमण्डलस्य, तथापीश्वरः प्राणभृत्कर्माविद्यासहकारी तदनुरूपमेव सृजति। न च सर्गप्रलयप्रवाहस्यानादितामन्तरेणैतदुपपद्यत इति सर्गप्रलयाभ्युपगमेऽपि संसारानादिता न विरुध्यत इति। तदिदमुक्त"**मुपपद्यते(७) चाप्युपलभ्यते चागमत**" इति। स्यादेतत्, भवत्वनादिता संसारस्य, तथापि महाप्रलयान्तरिते कुतः स्मरणं वेदानामित्यत आह—"**अनादौ च संसारे यथा स्वापप्रबोधयोरि**"ति। (८)यद्यपि प्राणमात्रावशेषतानिःशेषते सुषुप्तप्रलयावस्थयोर्विशेषः, तथापि कर्मविक्षेपसंस्कारसहितलयलक्षणाविद्यावशेषतासाम्येन स्वापप्रलयावस्थयोरभेद इति द्रष्टव्यम्। ननु नापर्यायेण सर्वेषां सुषुप्तावस्था, केषांचित्तदा प्रबोधात्, तेभ्यश्च सुप्तोत्थितानां ग्रहणसम्भवात्, प्रायणकालविप्रकर्षयोश्च वासनोच्छेदकारणयोरभावेन सत्यां वासनायां स्मरणोपपत्तेः शब्दार्थसम्बन्धवेदव्यवहारानुच्छेदो युज्यते। महाप्रलयस्तवपर्यायेण प्राण-

---

(१) अथानपेक्ष्य वासना ब्रह्म जगत्सृजेत्तत्राह ब्रह्मणश्चेति।

(२) द्वयोरप्युच्चारयितृत्वादित्यर्थः।

(३) कर्मेति। कर्मविक्षेपकाविद्या भ्रान्तयस्तासां वासनाभिरित्यर्थः। वासनाऽभावे च हिंस्राहिंस्रादिव्यवस्था न स्यादिति बोध्यम्।

(४) आसीदिति। सृष्टेः पूर्वमिदं जगदन्तःकरणादिरूपं प्रत्यक्षतोऽज्ञातमननुमेयं तर्कागोचरो आगमतश्चाविज्ञेयमतः सर्वतः प्रसुप्तमिव तमोरूपमासीदित्यर्थः।

(५) ते चेति। अवधिमुत्तरकालं प्राप्य पूर्वसमाननामरूपाणि भूत्वोत्पद्यन्त इत्यग्रेऽन्वयः। इच्छा—ईक्षणम्। कूर्माङ्गानां दर्शनादर्शनमात्रं नोत्पत्तिरित्युदाहरणान्तरमाह यथा वेति। घनाः—निबिडाः, घनाघना मेघा, तेषामासारेण सन्ततधारावर्षेण बृंहितानि इत्यर्थः।

(६) ननु अविद्यायाः पूर्ववासनाश्रयत्वेन जगद्धेतुत्वे ब्रह्मणो जगत्कारणत्वविरोध इत्याशङ्कायां, उपकरणस्य स्वातन्त्र्याविघातकत्वान्न विरोध इत्याशयेन परिहरति एतदिति।

(७) उक्तन्यायेनानादित्वमित्यर्थः।

(८) भाष्यस्थसुषुप्तिदृष्टान्ते वैषम्यमाशङ्क्य परिहरन्नाह यद्यपीति। लीयतेऽस्यां सर्वं कार्यमिति लयलक्षणाविद्येत्यर्थः।

जन्मात्रवर्ती, प्रायणकालविप्रकर्षौ च तत्र संस्कारमात्रोच्छेदहेतू स्त इति कुतः सुप्तप्रबुद्धवत्पूर्वप्रबोधव्यवहारवदुत्तरप्रबोधव्यवहार इति चोदयति—"स्यादेतत्स्वाप" इति (पृ० ३६१ पं० ३)। परिहरति—"नैष दोषः। सत्यपि व्यवहारोच्छेदिनी"ति । अयमाभसन्धिः—न तावत्प्रायणकालविप्रकर्षौ सर्वसंस्कारोच्छेदकौ, (१)पूर्वाभ्यस्तस्मृत्यनुसन्धानाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः । मनुजजन्मवासनानां चानेकजात्यन्तरसहस्रव्यवहितानां पुनर्मनुष्यजातिसम्वर्तकेन कर्मणाऽभिव्यक्त्यभावप्रसङ्गात् । तस्मान्निकृष्टधियामपि यत्र सत्यपि प्रायणकालविप्रकर्षादौ पूर्ववासनानुवृत्तिस्तत्र कैव कथा परमेश्वरानुग्रहेण धर्मज्ञानवैराग्यैश्वर्यातिशयसम्पन्नानां हिरण्यगर्भप्रभृतीनां महाधियाम्। यथा वा आ च मनुष्येभ्य आ च कृमिभ्यो ज्ञानादीनामनुभूयते निकर्षः । एवमा मनुष्यभ्य एवा च भगवतो हिरण्यगर्भाज्ज्ञानादीनां प्रकर्षोऽपि सम्भाव्यते । तथा च तदभिवदन्तो वेदस्मृतिवादाः प्रामाण्यमप्रत्यूहमश्नुवते । एवं चात्रभवतां हिरण्यगर्भादीनां परमेश्वरानुगृहीतानामुपपद्यते कल्पान्तरसम्बन्धिनिखिलव्यवहारानुसन्धानमिति । सुगममन्यत्(२)। स्यादेतत्, अस्तु कल्पान्तरव्यवहारानुसन्धानं तेषामस्यां तु सृष्टावन्य एव वेदाः, अन्य एव चैषामर्थाः, अन्य एव वर्णाश्रमाः, धर्माच्चानर्थोऽर्थश्चाधर्मात्, अनर्थश्चेप्सितोऽपूर्वत्वात् सर्गस्य, तस्मात्कृतमत्र कल्पान्तरव्यवहारानुसन्धानेनाकिञ्चित्करत्वात्, तथा च पूर्वव्यवहारोच्छेदाच्छब्दार्थसम्बन्धश्च वेदश्चानित्यौ प्रसज्येयातामित्यत आह—"प्राणिनां च सुखप्राप्तय" इति (पृ० ३६२ पं० ७)। यथावस्तुस्वभावसामर्थ्यं हि सर्गः प्रवर्तते, न तु स्वभावसामर्थ्यमन्यथयितुमर्हति । नहि जातु सुखं तत्त्वेन जिहास्यते, दुःखं चोपादित्स्यते । न च जातु धर्माधर्मयोः सामर्थ्यविपर्ययो भवति, नहि मृत्पिण्डात्पटो घटश्च तन्तुभ्यो जायते, तथा सति वस्तुसामर्थ्यानियमाभावात् सर्वं सर्वस्माद्भवेदिति पिपासुरपि दहनमाहृत्य पिपासामुपशमयेत, शीतार्तो वा तोयमाहृत्य शीतार्तिमिति । तेन सृष्ट्यन्तरेऽपि ब्रह्महत्यादिरनर्थहेतुरेवाऽर्थहेतुश्च यागादिरित्यानुपूर्व्यं सिद्धम् ।

एव च य एव वेदा अस्मिन्कल्पे त एव कल्पान्तरे त एव चैषामर्थास्त एव च वर्णाश्रमाः । दृष्टसाधर्म्यसम्भवे तद्वैधर्म्यकल्पनमनुमानागमविरुद्धम् ।

(३)आगमाश्चेह भूयांसो भाष्यकारेण दर्शिताः ।
श्रुतिस्मृतिपुराणाख्यास्तदुक्तोपोऽन्यथा भवेत् ॥

तस्मात्सुष्ठूक्तं "समाननामरूपत्वाच्चावृत्तावप्यविरोध" इति । 'अग्निर्वा अकामयत'ति (पृ० ३६४ पं० ५) । वृत्तिमाश्रित्य यजमान एवाग्निरुच्यते(४), नह्यग्नेर्देवतान्तरमग्निरस्ति ॥ ३० ॥

---

(१) प्रायणकालविप्रकर्षयोस्सर्वसंस्कारानुच्छेदकत्वे हेतुमाह पूर्वाभ्यस्तेति । इद न्यायसूत्रम् । विपक्षे बाधमाह मनुजेति । (२) अन्यदिति । तथा चेत्यादि, विद्याादितीत्यन्तम् ।

(३) आगमा इति । तेषां ये यानीत्यादिस्मृतिरूपा आगमा इत्यर्थ ।

(४) यजमानो भाविन्या वृत्त्या यदाग्निरिदानीमग्नये निर्वपति तदा भविष्यदद्यतनाग्न्योस्तुल्यनामता । ननु किमिति भाविन्या वृत्त्या यजमानोऽग्निरुच्यतेऽग्निर्देवतैवाग्नये निर्वपतु नेत्याह नहीति । सत्त्वे वा स एवाहमग्निरुद्देष्टुं शक्यते यागकाले इति प्राचीनो वृथा स्यादित्यर्थ ।

(सू०) मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३१ ॥

(१)ब्रह्मविद्यास्वधिकारं देवर्षीणां ब्रुवाणः प्रष्टव्यो जायते—किं सर्वासु ब्रह्मविद्यास्वविशेषेण सर्वेषां, किं वा कासुचिदेव केषाञ्चित् । यद्यविशेषेण सर्वासु, ततो मध्वादिविद्यास्वसंभवः। (२)"कथमसौ वाऽऽदित्यो देवमधित्यत्र हि मनुष्या आदित्यं मध्वध्यासेनोपासीरन्" ( पृ० ३६ प० ४ )। उपास्योपासकभावो हि भेदाधिष्ठानो न स्वात्मन्यादित्यस्य देवतायाः सम्भवति, न चादित्यान्तरमस्ति, प्राचामादित्यानामस्मिन् कल्पे क्षीणाधिकारत्वात् । "पुनश्चादित्यव्यपाश्रयाणि पञ्च रोहितादीन्युक्रम्ये"ति । अयमर्थः—'असौ वा आदित्यो देवमध्वि'ति देवानां मोदनान्मध्विव मधु । (३)भ्रामरमधुसारूप्यमाहात्म्य श्रुतिः—'तस्य मधुनो द्यौरेव तिरश्चीनवंशः । अन्तरिक्षं मध्वपूपः' । (४)आदित्यस्य हि मधुनोऽपूपः पटलमन्तरिक्षमाकाशं तत्रावस्थानात् । (५)यानि च सोमाज्यपयःप्रभृतीन्यग्नौ हूयन्ते तान्यादित्यरश्मिभिरग्निसवलितैरुत्पन्नपाकान्यमृतीभावमापन्नान्यादित्यमण्डलमृङ्मन्त्रमधुकरैर्नीयन्ते । (६)यथा हि भ्रमराः पुष्पेभ्य आहृत्य मकरन्दं स्वस्थानमानयन्त्येवमृङ्मन्त्रा भ्रमराः प्रयोगसमवेतार्थस्मरणादिभिर्ऋग्वेदविहितेभ्यः कर्मकुसुमेभ्य आहृत्य तन्निष्पन्नमकरन्दमादित्यमण्डलं लोहिताभिरस्य प्राचीनरश्मिनाडीभिरानयन्ति, तदमृतं वसव उपजीवन्ति । (७)अथास्यादित्यमधुनो दक्षिणाभी रश्मिनाडीभिः शुक्लाभिर्यजुर्वेदविहितकर्मकुसुमेभ्य आहृत्याग्नौ हुतं सोमादि पूर्ववदमृतभावमापन्नं यजुर्वेदमन्त्रभ्रमरा आदित्यमण्डलमानयन्ति, तदेतदमृतं रुद्रा उपजीवन्ति । तथाऽस्यादित्यमधुनः प्रतीचीभी रश्मिनाडीभिः कृष्णाभिः सामवेदविहितकर्मकुसुमेभ्य आहृत्याग्नौ हुतं सोमादि पूर्ववदमृतभावमापन्नं साममन्त्रस्तोत्रभ्रमरा आदित्यमण्डलमानयन्ति, तदमृतमादित्या उपजीवन्ति । अथास्यादित्यमधुन उदीचीभिरतिकृष्णाभी(८) रश्मिनाडीभिरथर्ववेदविहितेभ्यः कर्मकुसुमेभ्य आहृत्याग्नौ हुतं

---

( १ ) देवादीनां स्वमिश्रविद्यास्वनधिकारेऽपि ब्रह्मविद्याधिकारसम्भवादाक्षेपासम्भवमाशङ्क्य विकल्पद्वारा सूत्रमवतारयति ब्रह्मविद्यास्विति ।

( २ ) मधुविद्यावाक्यं भाष्यमुखेनादत्ते कथमिति ।

( ३ ) भ्रमरेति । भ्रमरैर्निर्वृत्तं भ्रामरम् । तस्येति । द्यौः स्वर्गस्तिर्यग्गतवंशो इवादित्यं मधु हि तत्र तत्र लग्नमित्यर्थः ।

( ४ ) अन्तरिक्षं मध्वपूप इति श्रुतिं व्याचष्टे आदित्यस्य हीति । पटल इति अपूपव्याख्यानम् । तत्रेति प्रसिद्धमध्वपूपसाम्योक्तिः ।

( ५ ) श्रुतिनिर्दिष्टपञ्चामृतान्याह यानि चेति । 'तस्यादित्यस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्यः, ऋच एव मधुकृत ऋग्वेद एव पुष्पं ता अमृता आपस्ता वा एता ऋच एतमृग्वेदमभ्यतपंस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य रोहितं रूपम्' इत्यादिश्रुताम्नातानि पञ्चामृतानि बोध्यानि । ताश्चामृतसाधनत्वादमृता इति श्रुत्यर्थः ।

( ६ ) मन्त्र एव मधुकृत इत्येतद्व्याचष्टे यथेति । मन्त्रैः प्रयुक्तं कर्मफलात्मकं रसं लवन्तीत्यृचां मधुपसाम्यं बोध्यम् ।

( ७ ) अथ यस्य दक्षिणा इत्यादिश्रुतिं व्याचष्टे अथास्येत्यादिना ।

( ८ ) परं कृष्णमित्यमृतं श्रुतौ निर्दिष्टं तद्रश्म्युपाधिकमिति इह अतिकृष्णाभिरिति ।

सोमादि पूर्ववदमृतभावमापन्नमथर्वाङ्गिरसमन्त्रभ्रमरा (१), तथाश्वमेधवाचःस्तोमकर्मकुसुमादितिहासपुराणमन्त्रभ्रमरा आदित्यमण्डलमानयन्ति । (२)अश्वमेधे वाचःस्तोमे च पारिप्लवं शंसन्तीति श्रवणादितिहासपुराणमन्त्राणामप्यस्ति प्रयोगः । तदमृतं मरुत उपजीवन्ति । अथास्य या आदित्यमधुन (३)ऊर्ध्वा रश्मिनाड्यो गोप्यास्ताभिरुपासनभ्रमराः प्रणवकुसुमादाहृत्यादित्यमण्डलमानयन्ति, तदमृतमुपजीवन्ति साध्याः । (४)ता एता आदित्यव्यपाश्रयाः पञ्च रोहितादयो रश्मिनाड्य ऋगादिसम्बद्धाः क्रमेणोपदिश्येति योजना । एतदेवामृतं दृष्ट्वोपलभ्य यथास्वं समस्तैः करणैर्यशस्तेजइन्द्रियसाकल्यवीर्यान्नाद्यान्यमृतं तदुपलभ्यादित्ये तृप्यन्ति । तेन खल्वमृतेन देवानां वस्वादीनां मोदनं विदधदादित्यो मधु । एतदुक्तं भवति — न केवलमुपास्योपासकभाव एकस्मिन् विरुध्यतेऽपि तु ज्ञातृज्ञेयभावश्च प्राप्यप्रापकभावश्चेति(५)। "तथाग्निः पादः" इति । आधिदैवतं खल्वाकाशे ब्रह्मदृष्टिविधानार्थमुक्तम् । आकाशस्य हि सर्वगतत्वं रूपादिहीनत्वं च ब्रह्मणा सारूप्यं, तस्य चैतस्याकाशस्य ब्रह्मणश्चत्वारः पादा अग्न्यादयोऽग्निः पाद इत्यादिना दर्शिताः । यथा हि गोः पादा न गवा वियुज्यन्ते, एवमग्न्यादयोऽपि नाकाशेन सर्वगतेनेत्याकाशस्य पादाः । तदेवमाकाशस्य चतुष्पदो ब्रह्मदृष्टिं विधाय स्वरूपेण वायुं संवर्गगुणकमुपास्य विधातुं महीकरोति—"वायुर्वाव संवर्गः" तथा स्वरूपेणैवादित्यं ब्रह्मदृष्ट्योपास्यं विधातुं महीकरोति—"आदित्यो ब्रह्मेत्यादेशः" उपदेशः । अतिरोहितार्थमन्यत् ॥ ३१ ॥

यद्युच्येत (६)नाविशेषेण सर्वेषां देवर्षीणां सर्वासु ब्रह्मविद्यास्वधिकारः किन्तु यथासम्भवमिति । तत्रेदमुपतिष्ठते—

## सू० ज्योतिषि भावाच्च ॥ ३२ ॥

लौकिकौ ह्यादित्यादिशब्दप्रयोगप्रत्ययौ ज्योतिर्मण्डलादिषु दृष्टौ न चैतेषामास्ते चैतन्यं, नह्येतेषु देवदत्तादिवत्तदनुरूपा दृश्यन्ते चेष्टाः । "स्यादेतन्मन्त्रार्थवादेतिहासपुराणलोकेभ्य" इति । तत्र "जगृभ्म(७) ते दक्षिणमिन्द्र हस्तमि"ति च, "कासिरिन्द्र

---

(१) इतिहासपुराणमन्त्रा यत्र प्रयुज्यन्ते तस्य कर्मणः पुष्पत्वेन निर्देशात्तन्मन्त्रा मधुकृत इत्याशयेनाहाथर्वाङ्गिरसेति । कर्मकुसुमेभ्य आहृत्याग्नौ हुतममृतमथर्वमन्त्रा आदित्यमण्डलं नयन्तीत्यन्वयः । इतिहासपुराणमन्त्रप्रयोगयोग्यं कर्माह तथाश्वमेधेति । कर्मकुसुमादाहृत्येत्यनुषङ्गः ।

(२) ननु कथमितिहासादिमन्त्राणां वाचःस्तोमसम्बन्धोऽत आहाश्वमेधेति । पारिप्लवो यदृच्छया बुद्धिस्थमन्त्रशंसनम् । सर्वाण्याख्यानानि पारिप्लवं शंसन्तीति श्रवणादैतिहासिकान्यपि गृह्यन्ते इति भावः ।

(३) अथ येऽस्योर्ध्वा मधुनाड्यो गुह्या एवादेशा मधुकृतो ब्रह्मैव पुष्पमिति पञ्चमपर्यायं व्याचष्टे ऊर्ध्वा इति । (४) व्याख्यातमधुविद्यामुपसंहरति ता एता इति ।

(५) एकस्मिन्नादित्ये उपास्योपासकभावो विरुद्धः, वस्वादौ तु स च प्राप्यप्रापकभावश्चेत्यर्थः ।

(६) देवादीनां सर्वेषां सर्वविद्यास्वधिकार इति कल्पे निरस्तेऽपि यथासम्भवमधिकार इति इत्याशङ्क्ते यद्युच्येतेति ।

(७) तत्र जगृभ्मेति । हे इन्द्र ते दक्षिणं हस्तं जगृभ्म गृहीतवन्तो वयम् । यदीमे रोदसी इन्द्र गृह्णासि तर्हि तव कासिर्मुष्टिः मुष्टौ सम्माति इदं इत्थमित्यर्थः । तुविग्रीव—पृथुग्रीव, वपोदर—सावकाशोदर, सुबाहुरिन्द्रोऽन्धसोऽन्नस्योपयुक्तस्य मदे हर्षे सति वृत्राणि शत्रून् जिघ्नते हतवानिति मन्त्रार्थवादार्थः ।

इन्द्रि"ति च । काशिर्मुष्टिः । तथा 'तुविग्रीवो वपोदरः सुबाहुरन्धसो मदे । इन्द्रो वृत्राणि जिघ्नते' इति विग्रहवत्त्वं देवताया मन्त्रार्थवादा अभिवदन्ति । तथा हविर्भोजनं देवताया दर्शयन्ति—'अद्धीन्द्र पिब च (१)प्रस्थितस्ये'त्यादयः । तथेशनाम्(२)—'इन्द्रो दिव इन्द्र ईशे पृथिव्या इन्द्रो अपामिन्द्र इत्पर्वतानाम् । इन्द्रो वृधाम् इन्द्र इन्मेधिराणामिन्द्रः क्षेमे योगे हव्य इन्द्र' इति, तथा 'ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुष' इति । तथा वरिवसितारं (३)प्रति देवतायाः प्रसादं प्रसन्नायाश्च फलदानं दर्शयति—'आहुतिभिरेव देवान् हुतादः प्रीणाति तस्मै प्रीता इषमूर्जं च यच्छन्ती'ति । 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयती'ति च । धर्मशास्त्रकारा अप्याहुः—

ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः । इति ।

पुराणवचांसि च भूयांसि देवताविग्रहादिपञ्चक(४)प्रपञ्चमाचक्षते । लौकिका अपि देवताविग्रहादिपञ्चकं स्मरन्ति चोपचरन्ति च । तथाहि—यमं दण्डहस्तमालिखन्ति, वरुणं पाशहस्तम्, इन्द्रं वज्रहस्तम् । कथयन्ति च 'देवता हविर्भुङ्क्' इति । तथेशनामिमामाहुः—'देवग्रामो देवक्षत्रमि'ति । तथास्याः प्रसादं च प्रसन्नायाश्च फलदानमाहुः—'प्रसन्नोऽस्य पशुपतिः पुत्रोऽस्य जातः । प्रसन्नोऽस्य धनदो धनमनेन लब्धमि'ति । तदेतत्पूर्वपक्षी दूषयति—**"नेत्युच्यते । नहि तावल्लोको नामे"ति** ( पृ० ३६६ पं० ९ )। न खलु प्रत्यक्षादिव्यतिरिक्तो लोको नाम प्रमाणान्तरमस्ति, किन्तु प्रत्यक्षादिमूला लोकप्रसिद्धिः सत्यतामश्नुते, तदभावे त्वन्धपरम्परावत् मूलाभावाद्विप्लवते । न चात्र विग्रहादौ प्रत्यक्षादीनामन्यतममस्ति प्रमाणम् । न चेतिहासादि मूलं भवितुमर्हति, तस्यापि पौरुषेयत्वेन प्रत्यक्षाद्यपेक्षणात्, प्रत्यक्षादीनां चात्राभावादित्याह—**"इतिहासपुराणमपी"ति** । ननूक्तं मन्त्रार्थवादेभ्यो विग्रहादिपञ्चकप्रसिद्धिरित्यत आह—**"अर्थवादा अपी"ति** । विध्युद्देशेनैकवाक्यतामापद्यमाना अर्थवादा विधिविषयप्राशस्त्यलक्षणापरा न स्वार्थे प्रमाणं भवितुमर्हन्ति । 'यत्परः शब्दः स शब्दार्थ' इति हि शाब्दन्यायविदः । प्रमाणान्तरेण तु यत्र स्वार्थोऽपि यथा वायोः क्षेपिष्ठत्वम् तत्र प्रमाणान्तरवशात्सोऽभ्युपेयते न तु शब्दसामर्थ्यात् । यत्र तु न प्रमाणान्तरमस्ति यथा विग्रहादिपञ्चके, सोऽर्थः शब्दादेवावगन्तव्यः, अतत्परश्च शब्दो न तदवगमयितुमलमिति तदवगमायान्य

---

( १ ) प्रस्थितस्योपकल्पितस्य पक्वस्य हविषो भागमद्धि सोमस्य सुतस्य भागं पिब चेत्यर्थः ।

( २ ) ईशानमैश्वर्यं, देवताया दर्शयतीत्यनुषङ्गः । इन्द्र इति । इन्द्रो दिवः स्वर्गस्य पृथिव्या अपां पर्वतानां वृधां—वीरुधां स्थावराणां, मेधिराणां मेधावतां जङ्गमानां चेशे ईष्टेऽतः प्राप्तस्य रक्षणेऽप्राप्तप्रापणे च हव्यो यष्टव्य इत्यर्थः । ईशानमिति । हे इन्द्र जगतो जङ्गमस्य तस्थुषः स्थावरस्य चेशानं स्वर्दृशं दिव्यज्ञानं त्वां वयं स्तुम इत्यर्थः ।

( ३ ) पूजकम् । आहुतिभिरिति । हुतादो हुतभक्षकान् देवान् आहुतिभिः प्रीणयति यो होता तस्मै प्रीता देवा इषमन्नमूर्जं बलं च प्रयच्छन्तीत्यर्थः ।

( ४ ) विग्रहो हविषां भोग ऐश्वर्यं च प्रसन्नता ।
फलप्रदानमित्येतत्पञ्चकं विग्रहादिकम् ॥
इति देवताविग्रहादिपञ्चकं द्रष्टव्यम् ।

तत्रापि तात्पर्यमभ्युपेतव्यम् । न चैकं वाक्यमुभयपरं भवतीति वाक्यं भिद्येत । न च सम्भवत्येकवाक्यत्वे वाक्यभेदो युज्यते । तस्मात्प्रमाणान्तरानधिगतविग्रहादिमत्ताऽन्यपराच्छब्दादवगन्तव्येति मनोरथमात्रमित्यर्थः । मन्त्राश्च व्रीह्यादिवच्छ्रुत्यादिभिस्तत्रतत्र विनियुज्यमानाः प्रमाणभावाननुप्रवेशिनः कथमुपयुज्यन्तां तेषुतेषु कर्मस्वित्यपेक्षायां(१)दृष्टे प्रकारे सम्भवति नादृष्टकल्पनोचिता । दृष्टश्च प्रकारः प्रयोगसमवेतार्थस्मरणं, स्मृत्वा चानुतिष्ठन्त्यनुष्ठातारः पदार्थान् । (२)औत्सर्गिकी चार्थपरता पदानामित्यपेक्षितप्रयोगसमवेतार्थस्मरणतात्पर्याणां मन्त्राणां नानधिगते विग्रहादावपि तात्पर्यं युज्यत इति न तेभ्योऽपि तत्सिद्धिः । तस्माद्देवताविग्रहवत्तादिभावग्राहकप्रमाणाभावात्प्राप्ता षष्ठप्रमाणगोचरताऽस्येति प्राप्तम् ॥३२॥

एवं प्राप्तेऽभिधीयते—

## भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥

"**तुशब्दः पूर्वपक्षं व्यावर्तयती**"त्यादि (पृ० ३६७ प० ५) "**भुजधातोरादित्यादिष्वचेतनत्वमभ्युपगम्यते**" (पृ०३६८ पं०८) इत्यन्तमतिरोहितार्थम् । "**मन्त्रार्थवादादिव्यवहारादि**"ति । आदिग्रहणेनेतिहासपुराणधर्मशास्त्राणि गृह्यन्ते । मन्त्रादीनां व्यवहारः प्रवृत्तिस्तस्य दर्शनादिति । पूर्वपक्षमनुभाषते—"**यदप्युक्तमि**"ति । एकदेशिमतेन तावत्परिहरति—"**अत्र ब्रूम**" इति । तदेतत्पूर्वपक्षिणमुत्थाप्य दूषयति—"**अत्राह**" पूर्वपक्षी । शाब्दी खल्वियं गतिः—यत्तात्पर्याधीनवृत्तित्व नाम, नह्यन्यपरः शब्दोऽन्यत्र प्रमाण भवितुमर्हति । नहि श्वित्रिनिर्णेजनपरं(३) 'श्वेतो धावती'ति वाक्यमितः सारमेयवेगवद्गमनं गमयितुमर्हति । (४)न च नञ्वति महावाक्येऽवान्तरवाक्यार्थो विधिरूपः शक्योऽवगन्तुम् । न च प्रत्ययमात्रात्सोऽप्यर्थोऽस्य भवति, तत्प्रत्ययस्य भ्रान्तित्वात् । (५)न पुनः प्रत्यक्षादीनामियं गतिः, नह्युदकाहरणार्थिना घटदर्शनायोन्मीलितं चक्षुर्घटपटौ वा पटं वा केवल नोपलभते । तदेवमेकदेशिनि पूर्वपक्षिणा दूषिते परमसिद्धान्तवाद्याह—"**अत्रोच्यते विषम उपन्यास**" इति (पृ, ३६९ पं० ३) । अयमभिसन्धिः—लोके वि-

---

(१) ये सिद्धवादिनो मन्त्रा न ते विधिक्षमा इति तत्स्वरूपमेव श्रुत्यादिभिरेन्द्र्यत्यादिभिस्तत्र तत्र कर्मणि विनियुज्यतेऽतो न प्रमाण चेत्तर्हि किमुच्चारणमात्रोपयोगा अविवक्षितार्था ? नेत्याह दृष्टे प्रकारे इति । नन्वनधिगतमेयाभावे कथं दृष्टार्थतेत्यत आह दृष्टश्चेति । प्रयोगसमवेतो द्रव्यदेवतादि स च विधिभिर्ज्ञात इति स्मार्यं, मन्त्राश्च विधय इव निरपेक्षा देवतायामिदधतीति नाप्रमाणम् । नन्वविहितायाः स्मृते कथ द्वारतेत्यत आह स्मृत्वा चेति । सामर्थ्याद् द्वारतेत्यर्थ ।

(२) ननु देवतास्मरण इव देवताविग्रहादावप्यस्तु मन्त्राणा तात्पर्यं तेषामपि मन्त्रपदैरवबोधादित्याशंक्याहौत्सर्गिकं चेति । उद्दिश्यत्यागस्य हि देवतास्वरूपमात्रं विवक्षितं न विग्रहादि तद्बोधकपदानामुत्सर्गप्राप्तमप्यर्थपरत्वं विध्यनपेक्षत्वादपोद्यत इत्यर्थः ।

(३) श्वित्री कुष्ठी, निर्णेजनं शोधनम् , कुष्ठी वस्त्रं शोधयतीति विवक्षायामित श्वा गच्छतीति वाक्यार्थज्ञान 'श्वेतो धावती'ति वाक्यान्न जायते इत्यर्थ ।

(४) वेदेपि 'न सुरा पिबेत्' इति नञ्युक्ते महावाक्ये तात्पर्यं विना सुरापानरूपोऽवान्तरवाक्यार्थबोधो भवतीत्याह नचेति ।

(५) यदि तात्पर्याच्छाब्दबोधस्तर्हि प्रत्यक्षादिष्वपि तथा स्यादत आह न पुनरिति ।

शिष्टार्थप्रत्यायनाय पदानि प्रयुक्तानि तदन्तरेण न स्वार्थमात्रस्मरणे पर्यवस्यन्ति । नहि स्वार्थस्मरणमात्राय लोके पदानां प्रयोगो दृष्टपूर्वः, वाक्यार्थे तु दृश्यते, न चैतान्यस्मारितस्वार्थानि साक्षाद्वाक्यार्थं प्रत्याययितुमीशते इति स्वार्थस्मारणं वाक्यार्थमितयेऽवान्तरव्यापारः कल्पितः पदानाम् । न च यदर्थं यत् तत् तेन बिना पर्यवस्यतीति न स्वार्थमात्राभिधानेन पर्यवसानं पदानाम् । (१)न च नञ्वति वाक्ये विधानपर्यवसानम्, तथा सति नञ्पदमनर्थकं स्यात् । यथाहुः—

(२)साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम् ।
वर्णास्तथापि नैतस्मिन् पर्यवस्यन्ति निष्फले ॥
वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम् ।
पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ॥ इति ।

सेयमेकस्मिन्वाक्ये गतिः । (३)यत्र तु वाक्यस्यैकस्य वाक्यान्तरेण सम्बन्धस्तत्र लोकानुसारतो भूतार्थव्युत्पत्तौ च सिद्धायामेकस्य वाक्यस्य तत्तद्विशिष्टार्थप्रत्यायनेन पर्यवसितवृत्तिनः पश्चात्कुतश्चिद्धेतोः प्रयोजनान्तरापेक्षायामन्वयः कल्पते । यथा 'वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति वायव्यं श्वेतमालभेत' इत्यत्र । (४)इह हि यदि न स्वाध्यायाध्ययनविधिः स्वाध्यायशब्दवाच्यं वेदराशिं पुरुषार्थतामनेष्यत्ततो भूतार्थमात्रपर्यवसितार्थवादा विध्युद्देशेन नैकवाक्यतामगमिष्यन् । तत्स्वाध्यायविधिवशात् कैमर्थ्याकाङ्क्षायां वृत्तान्तादिगोचराः सन्तस्तत्प्रत्यायनद्वारेण विधेयप्राशस्त्यं लक्षयन्ति, न पुनरविवक्षितस्वार्था एव तल्लक्षणे प्रभवन्ति, तथा सति लक्षणैव न भवेत्, अभिधेयाविनाभावस्य तद्बीजस्याभावात् । (५)अत एव 'गङ्गायां घोष'इत्यत्र गङ्गाशब्दः स्वार्थसम्बद्धमेव तीरं लक्षयति न तु समुद्रतीरं, तत्कस्य हेतोः ? स्वार्थप्रत्यासत्त्यभावात्, न चैतत्सर्वं स्वार्थाविवक्षायां कल्पते । अत एव यत्र प्रमाणान्तरविरुद्धार्था अर्थवादा दृश्यन्ते, यथा'ऽऽदित्यो वै यूपो यजमानः प्रस्तर'इत्येवमादयः । तत्र यथा प्रमाणान्तराविरोधो यथा च स्तुत्यर्थता तदुभयसिद्ध्यर्थं 'गुणवादस्त्वि'ति च 'तत्सिद्धिरि'ति चासूत्रयज्जैमिनिः । (६)तस्मा-

---

( १ ) मा भूत्स्वार्थमात्राभिधाने पर्यवसानं किमस्तत्राह न च नञ्वतीति ।

( २ ) साक्षादिति । यथा काष्ठानि ज्वालाकरणेऽपि पाकार्थान्येव तथा वर्णा पदार्थप्रतिपादनेऽपि वाक्यार्थान्येवेति श्लोकद्वयार्थ ।

( ३ ) एवं सोदाहरणां पदैकवाक्यतां दर्शयित्वा विध्यर्थवादेषु वाक्यैकवाक्यतामाह यत्र त्विति । लोकानुसारत इति । यथा 'क्रय्या गौर्देवदत्तस्य यतो बहुक्षीरे'त्यादौ बहुक्षीरत्वादेरासवाक्यावगतेर्विध्यर्थवादयोरस्ति वाक्यैकवाक्यतेत्यर्थ ।

( ४ ) कुतश्चिद्धेतोरिति वाक्यस्य वाक्यान्तरैकवाक्यत्वे सूचितं हेतुं विवृणोति इह हीति । अनेन भिन्नवाक्यार्थपर्यवसायिनां पदानां काऽपेक्षेति शङ्का वार्यते ।

( ५ ) ननु यदि लक्षणायामभिधेयविवक्षा तत्कथं विरुद्धार्थार्थवादेषु सा स्यात्तत्राभिधेयस्य विरुद्धत्वादेव विवक्षासम्भवादत आहात एवेति ।

( ६ ) ननु विरुद्धार्थार्थवादेषु कथमभिधेयाविनाभाविनी मित्ता प्राशस्त्यलक्षणा विरोधेनाभिधेयाभावादत आह तस्मादिति । यजमानादिशब्दैस्तत्तित्यादि लक्ष्यते, ततश्च प्राशस्त्यं लक्षितलक्षणयाऽभिधेयाविनाभूतत्वादिति भाव ।

यत्र सोऽर्थोऽर्थवादानां प्रमाणान्तरविरुद्धस्तत्र गुणवादेन प्राशस्त्यलक्षणेति लक्षितलक्षणा । (१)यत्र तु प्रमाणान्तरसंवादस्तत्र प्रमाणान्तरादिवार्थवादादपि सोऽर्थः प्रसिध्यति, द्वयोः परस्परानपेक्षयोः प्रत्यक्षानुमानयोरिवैकत्रार्थे प्रवृत्तेः । प्रमात्रपेक्षया त्वनुवादकत्वं, प्रमाता ह्यव्युत्पन्नः प्रथमं यथा प्रत्यक्षादिभ्यो ऽर्थमवगच्छति न तथाऽऽम्नायतस्तत्र व्युत्पत्त्याद्यपेक्षत्वात्, न तु प्रमाणापेक्षया, द्वयोः स्वार्थेऽनपेक्षत्वादित्युक्तम् । (२)नन्वेवं मानान्तरविरोधेऽपि कस्माद्गुणवादो भवति ? यावता शब्दविरोधे मानान्तरमेव कस्मान्न बाध्यते, वेदान्तैरिवाद्वैतविषयैः प्रत्यक्षादयः प्रपञ्चगोचराः, कस्माद्वार्थवादवद्वेदान्ता अपि गुणवादेन न नीयन्ते । (३)अत्रोच्यते । लोकानुसारतो द्विविधो हि विषयः शब्दानाम्, द्वारतश्च तात्पर्यतश्च । यथैकस्मिन् वाक्ये पदानां पदार्था द्वारतो वाक्यार्थश्च तात्पर्यतो विषयः, एवं वाक्यद्वयैकवाक्यतायामपि, यथेयं देवदत्तीया गौः क्रेतव्येत्येकं वाक्यमेषा बहुक्षीरेत्यपरं, तदस्य बहुक्षीरत्वप्रतिपादनं द्वारम्, तात्पर्यं तु क्रेतव्येति वाक्यान्तरार्थे । तत्र यद्द्वारतस्तत्प्रमाणान्तरविरोधेऽन्यथा नीयते, यथा 'विषं भक्षये'ति वाक्यं 'मा ऽस्य गृहे भुङ्क्ष्वे'ति वाक्यान्तरार्थपरं सत् । यत्र तु तात्पर्यं तत्र मानान्तरविरोधे पौरुषेयमप्रमाणमेव भवति । वेदान्तास्तु पौर्वापर्यपर्यालोचनया निरस्तसमस्तभेदप्रपञ्चब्रह्मप्रतिपादनपरा अपौरुषेयतया स्वतःसिद्धतात्त्विकप्रमाणभावाः सन्तस्तात्त्विकप्रमाणभावात् प्रत्यक्षादीनि प्रच्याव्य सांव्यवहारिके तस्मिन् व्यवस्थापयन्ति । न चा'ऽऽदित्यो वै यूप' इति वाक्यमादित्यस्य यूपत्वप्रतिपादनपरमपि तु यूपस्तुतिपरम् । तस्मात्प्रमाणान्तरविरोधे द्वारीभूतो विषयो गुणवादेन नीयते, यत्र तु प्रमाणान्तरं विरोधकं नास्ति यथा देवताविग्रहादौ तत्र द्वारतोऽपि विषयः प्रतीयमानो न शक्यस्त्यक्तुम् । न च गुणवादेन नेतुं, को हि मुख्ये सम्भवति गौणमाश्रयेदतिप्रसङ्गात् । तथा सत्यनधिगतविग्रहादि प्रतिपादयद् वाक्यं भिद्येतेति चेत् । अद्धा । (४)भिन्नमेवैतद्वाक्यम् । (५)तथा सति तात्पर्यभेदोऽपीति चेत् । न । द्वारतोऽपि तदवगतौ तात्पर्यान्तरकल्पनाया अयोगात् । न च यत्र यस्य न तात्पर्यं तस्य तत्राप्रामाण्यम्, तथा सति विशिष्टपरं वाक्यं विशेषणेष्वप्रमाणमिति विशिष्टपरमपि न स्यात्, विशेषणाविषयत्वात् । विशिष्टविषयत्वेन तु तदाक्षेपे परस्पराश्रयत्वम्—आक्षेपाद्विशेषणप्रतिपत्तौ सत्यां विशिष्टविषयत्वं विशिष्टविषयत्वाच्च तदाक्षेपः । तस्माद्विशिष्टप्रत्ययपरेभ्योऽपि पदेभ्यो विशेषणानि प्रतीयमानानि तस्यैव वाक्यस्य विषयत्वेनानिच्छताप्यभ्युपेयानि यथा, तथान्यपरेभ्योऽप्यर्थवादवाक्येभ्यो देवताविग्रहादयः प्रतीयमाना असति प्रमाणान्तरविरोधे न युक्तास्त्यक्तुम्, नहि

---

(१) नन्वनुवादकार्थवादानामप्रामाणिकत्वात् कथं विध्येकवाक्यतेत्यत आह यत्र त्विति ।

(२) ननु मानान्तरसिद्धार्थत्वेऽपि स्मृतिवदर्थवादानां यदि न सापेक्षत्वं तदा विरुद्धार्थानामपि तदस्तु, गौणार्थत्वं कुत इत्याशयेनाशङ्कते नन्विति ।

(३) वेदान्तानां निष्प्रपञ्चब्रह्मपरतया निरवकाशत्वाद्विरोधिप्रत्यक्षादिबोधकत्वम् न त्वर्थवादानामतत्परत्वेन सावकाशत्वादिति विशेषेण प्रतिबन्दीं परिहरन्नाहात्रोच्यत इत्यादिना ।

(४) भिन्नमिति । विध्यन्वितस्यार्थवादवाक्यस्य महावाक्यरूपेण प्राशस्त्यबोधकत्वात्स्वरूपेणावान्तरवाक्यतया विग्रहादिबोधकत्वाच्च भिन्नमेवैतद्वाक्यमित्यर्थः ।

(५) तथेति । अपौरुषेये वेदे पौरुषेयवाक्यावृत्त्यसम्भवेन कथं तात्पर्यभेदोऽङ्गीक्रियत इत्यर्थः ।

मुख्यार्थसम्भवे गुणवादो युज्यते। न च भूतार्थमप्यपौरुषेयं वचो मानान्तरापेक्षं स्वार्थे येन मानान्तरासम्भवे भवेदप्रमाणमित्युक्तम्(१)। स्यादेतत्(२), तात्पर्यैक्ये ऽपि यदि वाक्यभेदः कथं तर्ह्यर्थैकत्वादेकं वाक्यम्? न(३), तत्रतत्र यथास्वं तत्तत्पदार्थविशिष्टैकपदार्थप्रतीतिपर्यवसानसम्भवात्। स तु पदार्थान्तरविशिष्टः पदार्थ एकः क्वचिद्द्वारभूतः क्वचिद्द्वारीत्येतावान् विशेषः। नन्वेवं(४)'सत्योदनं भुक्त्वा ग्रामं गच्छती'त्यत्रापि वाक्यभेदप्रसङ्गः, अन्यो हि संसर्ग ओदनं भुक्त्वेति, अन्यस्तु ग्रामं गच्छतीति। न(५), एकत्र प्रतीतेरपर्यवसानात्। 'भुक्त्वे'ति हि समानकर्तृकता पूर्वकालता च प्रतीयते। न चेयं प्रतीतिरपरकालक्रियान्तरप्रत्ययमन्तरेण पर्यवस्यति। तस्माद्यावति पदसमूहे पदाहिताः पदार्थस्मृतयः पर्यवस्यन्ति, तावदेकं वाक्यम्। अर्थवादवाक्ये चैताः (६) पर्यवस्यन्ति, विनैव विधिवाक्यं विशिष्टार्थप्रतीतेः। (७)न च द्वाभ्यां द्वाभ्यां पदाभ्यां विशिष्टार्थप्रत्ययपर्यवसानात् पञ्चषपदवति वाक्ये एकस्मिन्नानात्वप्रसङ्गः, नानात्वेऽपि विशेषणानां विशेष्यस्यैकत्वात्, तस्य च सकृच्छ्रुतस्य प्रधानभूतस्य गुणभूतविशेषणानुरोधेनावर्तनायोगात्। प्रधानभेदे तु वाक्यभेद एव। तस्माद्विधिवाक्यादर्थवादवाक्यमन्यदिति वाक्ययोरेव स्वस्ववाक्यार्थप्रत्ययावसितव्यापारयोः पश्चात् कुतश्चिदपेक्षायां परस्परान्वय इति सिद्धम्। "अपि च विधिभिरेवेन्द्रादिदैवत्यानी"ति (पृ० ३७० पं० २)। देवतामुद्दिश्य हविरवमृश्य च तद्विषयस्वत्वत्यागः इति यागशरीरम्। न च चेतस्यनालिखिता देवतोद्देष्टुं शक्या, न च स्वरूपरहितो चेतसि शक्यते आलेखितुमिति यागविधिनैव तद्रूपापेक्षिणा यादृशमन्यपरेभ्योऽपि मन्त्रार्थवादेभ्यस्तद्रूपमवगतं तदभ्युपेयते, (८)रूपान्तरकल्पनायां मानाभावात्, मन्त्रार्थवादयोरत्यन्तपरोक्षवृत्तिप्रसङ्गाच्च। यथा हि 'व्रात्यो व्रात्यस्तोमेन यजेते'ति व्रात्यस्वरूपापेक्षायां 'यस्य पिता पितामहो वा सोमं न पिबेत् स व्रात्य'इति सिद्धवद् व्रात्यस्वरूपमवगतं व्रात्यस्तोमविध्यपेक्षितं सद्विधिप्रमाणकं भवति, यथा वा स्वर्गस्य रूपमलौकिकं 'स्वर्गकामो यजेते'ति विधिनाऽपेक्षितं सदर्थवादतोऽवगम्यमानं विधिप्रमाणकम्, तथा देवता-

(१) इत्युक्तमिति। वाक्यस्य सत सापेक्षत्वे पौरुषेयत्वमुपाधिरिति समन्वयसूत्रे उक्तमित्यर्थः।

(२) यदि विधेः प्राशस्त्यपरा अप्यर्थवादा भिन्नं वाक्यं तर्हि 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादि'त्यधिकरणविरोध इत्याशयेनाक्षिपति स्यादेतदिति।

(३) परिहरति नेति। यथा सत्यपि वाक्यैक्ये प्रयाजादिवाक्यानामवान्तरभेदः एवमर्थवादानामप्यस्त्वित्यर्थः। तर्हि प्रयाजादिवाक्यानामर्थवादवाक्यानां च को भेद इत्यत आह स त्विति। स्तुतिप्रतिपत्तिद्वारं विग्रहादि प्रयाजादि तु नान्यप्रतिपत्तौ द्वारं किन्तु द्वारि इति भावः।

(४) एवं सति—विध्येकवाक्यत्वेऽप्यर्थवादेषु पृथक्पदार्थसंसर्गप्रतीत्या वाक्यभेदे सति।

(५) प्रतीतिपर्यवसानतदभावाभ्यामुभयत्र वैषम्यमाह नेति।

[६] वाक्येऽस्वैताः—इति पाठान्तरम्।

(७) यद्यर्थवादेषु द्वारभूतार्थभेदात् वाक्यभेदस्तदाऽन्यत्रापि प्रसङ्ग इत्याशङ्क्य परिहरति नचेति। पञ्चषट्पदवति 'अरुणयैकहायन्ये'त्यादिवाक्ये नावान्तरवाक्यभेदप्रसङ्गो विशेषणानां भेदेऽपि विशेष्यक्रयादेरेकत्वात्तस्य गुणानुरोधेनावृत्तेरभावाद्गुणा एव तत्र समुच्चेया इत्येकवाक्यतेत्यर्थः। इदमेव व्यतिरेकद्वारोपपादयति प्रधानभेदे त्विति। 'आयुर्यज्ञेन कल्पतामि'त्यादौ प्रधानभेदाद्वाक्यभेद इति भावः।

(८) रूपान्तरेति। आरोपितदेवतारूपोल्लेख इत्यर्थः।

रूपमपि। (१)ननूद्देशो रूपज्ञानमपेक्षते न पुना रूपसत्तामपि, देवतायाः समारोपेणापि च रूपज्ञानमुपपद्यते इति समारोपितमेव रूपं देवतायाः मन्त्रार्थवादैरुच्यते। (२)सत्यम्, रूपज्ञानमपेक्षते, तच्चान्यतोऽसम्भवान्मन्त्रार्थवादेभ्य एव, तस्य तु रूपस्यासति बाधकेऽनुभवरूढ तथाभावं परित्यज्यान्यथात्वमननुभूयमानमसाम्प्रतं कल्पयितुम्। तस्याद्विध्यपेक्षितं मन्त्रार्थवादैरन्यपरैरपि देवतारूपं बुद्धावुपनिधीयमानं विधिप्रमाणकमेवेति युक्तम्। स्यादेतत्, विध्यपेक्षायामन्यपरादपि वाक्यादवगतोऽर्थः स्वीक्रियते, तदपेक्षैव तु नास्ति, शब्दरूपस्य देवताभावात्, तस्य च मानान्तरवेद्यत्वादित्यत आह—"न च शब्दमात्र"मिति। न केवल मन्त्रार्थवादतो विग्रहादेसिद्धिरपि त्वितिहासपुराणलोकस्मरणेभ्यो मन्त्रार्थवादमूलेभ्यो वा प्रत्यक्षादिमूलेभ्यो वेत्याह—"इतिहासे"ति। श्लिष्यते—युज्यते। निगदव्याख्यातमन्यत्। (३)तदेवं मन्त्रार्थवादादिसिद्धे देवताविग्रहादौ गुर्वादिपूजावद्देवतापूजात्मको यागो देवताप्रसादादिद्वारेण सफलोऽवकल्पते (४)अचेतनस्य तु पूजामप्रतिपद्यमानस्य तदनुपपत्तिः। (५)न चैवं यज्ञकर्मणो देवतां प्रति गुणभावाद्देवतातः फलोत्पादे यागभावनायाः श्रुतं फलवत्त्वं यागस्य च तां प्रति तत्फलांशं वा प्रति श्रुतं करणत्वं हातव्यम्। यागभावनाया एव हि फलवत्या यागलक्षणस्वकरणावान्तरव्यापारत्वाद्देवताभोजनप्रसादादीनां कृषिकर्मण इव तत्तदवान्तरव्यापारस्य सस्याधिगमसाधनत्वम्, आग्नेयादीनामिवोत्पत्तिपरमापूर्वावान्तरव्यापाराणां भवन्मते स्वर्गसाधनत्वम्। तस्मात्कर्मणोऽपूर्वावान्तरव्यापारस्य वा देवताप्रसादावान्तरव्यापारस्य वा फलवत्त्वात् प्रधानत्वमुभयस्मिन्नपि पक्षे समानम्, न तु देवताया विग्रहादिमत्याः प्राधान्यमिति न धर्ममीमांसायाः सूत्रम् 'अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं गुणत्वे देवताश्रुतिः' इति विरुध्यते(६)। तस्मात्सिद्धो देवतानां प्रायेण ब्रह्मविद्यास्वधिकारः॥ ३३॥

## शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि॥ ३४॥

(७)अवान्तरसङ्गतिं कुर्वन्नधिकरणतात्पर्यमाह—"यथा मनुष्याधिकारे"ति (पृ. ३७२ पं. २)। शङ्काबीजमाह—"तत्रे"ति। (८)निर्मृष्टनिखिलदुःखानुषङ्गे शाश्वतिक आनन्दे कस्य नाम चेतनस्यार्थिता नास्ति, येनार्थिताया अभावाच्छूद्रो नाधिक्रियेत। ना-

(१) मन्त्रार्थवादयोरारोपितरूपोल्लेख एवेत्यभिप्रायेणाक्षिपति नन्विति।

(२) परिहरति सत्यमिति।

(३) दृष्टानुसाराच्च चेतना देवतेत्याह तदेवमिति। (४) शब्दमात्रस्येत्यर्थः।

(५) देवतात फलोत्पत्तौ श्रुतहानिमाशङ्क्याह नचैवमिति। हानाभावे हेतुमाह यागेति।

(६) विरुध्यत इति। तथाचातिथिवत् देवता धर्मप्रयोजिकेति पूर्वपक्षे अपि चेति सिद्धान्तसूत्रे मीमांसकैर्यज्ञकर्मणो प्रधानमङ्गग्राहि न देवता 'यजेत स्वर्गकाम' इतियागगतफलसाधनतायाः शब्दपूर्वत्वात् देवता तूद्देश्या भूतत्वाद्द्रव्यस्य यागस्य गुण इति गुणत्वे देवताशब्दो वर्तत इति सिद्धान्तित तदस्मन्मतेऽपि देवताया गुणत्वस्वीकारान्न विरुध्यत इति भावः।

(७) अवान्तरेति। देवताधिकरणान्तेऽपशूद्राधिकरणवर्णनेऽवान्तरसङ्गतिमित्यर्थः। यथाऽत्रवर्णिकानां विद्यास्वधिकारस्तथा शूद्राणामपि तथात्वात् स स्यादित्यवान्तरसङ्गतिरिति भावः।

(८) पूर्वपक्षमाह निर्मृष्टेति।

प्यस्य ब्रह्मज्ञाने सामर्थ्याभावः। द्विविधं हि सामर्थ्यं निजं चागन्तुकं (१)च। तत्र द्विजातीनामिव शूद्राणां श्रवणादिसामर्थ्यं निजमप्रतिहतम्। अध्ययनाधानाभावादागन्तुकसामर्थ्याभावे सत्यनधिकार इति चेद्। हन्ताऽऽधानाभावे सत्यग्न्यभावादग्निसाध्ये कर्मणि मा भूदधिकारः, न च ब्रह्मविद्यायामग्निः साधनमिति किमित्यनाहिताग्नयो नाधिक्रियन्ते। (२)न चाध्ययनाभावात्तत्साधनायामनधिकारो ब्रह्मविद्यायामिति साम्प्रतम्। (३)यतो युक्तं 'यदाहवनीये जुहोती'त्याहवनीयस्य होमाधिकरणतया विधानात्तद्रूपस्यालौकिकतयानारभ्याधीतवाक्यविहितादाधानादन्यतोऽनधिगमादाधानस्य च द्विजातिसम्बन्धितया विधानात् तत्साध्योऽग्निरलौकिको न शूद्रस्यास्तीति नाहवनीयादिसाध्ये कर्मणि शूद्रस्याधिकार इति, न च तथा ब्रह्मविद्यायामलौकिकमस्ति साधनं यच्छूद्रस्य न स्यात्। (४)अध्ययनियम इति चेत्। न। विकल्पासहत्वात्। तदध्ययनं पुरुषार्थे वा नियम्येत, यथा धनार्जने प्रतिग्रहादि, क्रत्वर्थे वा, यथा 'व्रीहीनवहन्ती'त्यवघातः। न तावत् क्रत्वर्थे, नहि स्वाध्यायोऽध्येतव्य इति कंचित् क्रतुं प्रकृत्य पठ्यते, यथा दर्शपूर्णमास प्रकृत्य 'व्रीहीनवहन्ती'ति। (५)न चानारभ्याधीतमप्यव्यभिचरितक्रतुसम्बन्धितया क्रतुमुपस्थापयति, येन वाक्येनैव क्रतुना सम्बध्येताध्ययनम्, नहि यथा जुह्वाद्यव्यभिचरितक्रतुसम्बद्धमेवं स्वाध्याय इति। तस्मान्नैष क्रत्वर्थे नियमो नापि पुरुषार्थे। पुरुषेच्छाधीनप्रवृत्तिर्हि पुरुषार्थो भवति, यथा फलं तदुपायो वा। तदुपायेऽपि हि विधितः प्राक् सामान्यरूपा प्रवृत्तिः पुरुषेच्छानिबन्धनैव। इतिकर्तव्यतासु तु सामान्यतो विशेषतश्च प्रवृत्तिर्विधिपराधीनैव(६)। नह्यनधिगतकरणभेद इतिकर्तव्यतासु घटते। तस्माद्विध्यधीनप्रवृत्तितयाऽङ्गानां क्रत्वर्थता। (७)क्रतुरिति हि विधिविषयेण विधिं परामृशति विषयिणम्, तेनार्थ्यते विषयीक्रियत इति क्रत्वर्थः। न चाध्ययनं वा स्वाध्यायो वा तदर्थज्ञानं वा प्राग् विधेः पुरुषेच्छाधीनप्रवृत्तिर्येन पुरुषार्थः स्यात्। (८)यदि चाध्ययनेनैवार्थावबोधरूपं नियम्यते ततो मानान्तरविरोधः, तद्रूपस्य विनाप्यध्ययनं पुस्तकादिपाठेनाप्य-

---

(१) शास्त्रीयमित्यर्थः। (२) ननु कर्मण्यग्निवद्विद्यायामध्ययनं हेतुरित्याशङ्क्य नचेति।

(३) समाधत्ते यत इति। कर्मण्यग्नेर्नियतत्वादध्ययनस्य च विद्यायामनियतत्वाद्विषमो दृष्टान्त इति समाधानतात्पर्यम्।

(४) अध्ययनक्रियाया लौकिकत्वेपि तन्नियम एव वैधत्वादलौकिकं साधनं ब्रह्मविद्यायां स्यादित्यभिप्रायेणाशङ्कतेऽध्ययननियम इति।

(५) प्रकारणादध्ययननियमस्य क्रत्वर्थत्वं निरस्य वाक्यादपि तन्निराकरोति नचेति। व्याप्तया जुह्वा व्यापके क्रतौ बुद्धिस्थीकृते वाक्यं पर्णता क्रतुना सम्बन्धयेति, स्वाध्यायस्तु स्वशाखात्मकोऽव्ययी न कर्मविशेषेण व्याप्त इत्यनुपस्थापिते कर्मणि कथं वाक्यमध्ययनस्य कर्मसम्बन्धं वदेदित्यर्थः।

(६) विधिपराधीनैवेति। येन पुंसा विधित करणविशेषो नाधिगतः स इतिकर्तव्यतासु न चेष्टते, नहि करणसामान्यमितिकर्तव्यतोपकार्यं किन्तु विहित कथं भावाकाङ्क्ष करणविशेषः, तत्र च यदङ्गं सामान्यतो विशेषतश्च तत्र सर्वत्र विध्यधीनैव प्रवृत्तिरिति भावः।

(७) ननु क्रतुविध्योर्भेदात्कथं विध्यधीनप्रवृत्तिकता क्रत्वर्थतेत्यत आह क्रतुरितीति। क्रतुरितिशब्दो विषयेण क्रतुना तदभिधायक विषयिणं विधिशब्द लक्षणया परामृशतीत्यर्थः।

(८) अध्ययनादीनां पुमर्थता तदाश्रितादृष्टनियमश्च मा भूत अर्थज्ञानरूपदृष्टप्रयोजनार्थमेवाध्ययनं कुतो न नियम्यत इत्याशंक्याह यदि चेति।

धिगमात् । (१)तस्मात् 'सुवर्णं धार्यमि'तिवदध्ययनादेव फलं कल्पनीयम् । तथा चाध्ययनविधेरनियामकत्वाच्छूद्रस्याध्ययनेन वा पुस्तकादिपाठेन वा सामर्थ्यमस्तीति सोऽपि ब्रह्मविद्यायामधिकृतः । मा भूद्वाऽध्ययनाभावात्सर्वत्र ब्रह्मविद्यायामधिकारः संवर्गविद्यायां तु भविष्यति, 'अहहारे त्वा शूद्र' इति शूद्रं सम्बोध्य तस्याः प्रवृत्तेः । न चैष शूद्रशब्दः कदाचिदवयवव्युत्पत्त्याऽशूद्रे वर्णनीयः, अवयवप्रसिद्धितः समुदायप्रसिद्धेरनपेक्षतया बलीयस्त्वात् । तस्माद्यथाऽनधीयानस्येष्टौ निषादस्थपतेरधिकारो वचनसामर्थ्यादेवं संवर्गविद्यायां शूद्रस्याधिकारो भविष्यतीति प्राप्तम् ।

एवं प्राप्ते ब्रूमः । न शूद्रस्याधिकारो वेदाध्ययनाभावादिति । अयमभिसंन्धिः—यद्यपि 'स्वाध्यायोऽध्येतव्य' इत्यध्ययनविधिर्न किञ्चित्फलवत्कर्माभ्याम्नातो, नाप्यव्यभिचरितक्रतुसम्बन्धपदार्थगतः, नहि जुह्वादिवत्स्वाध्यायोऽव्यभिचरितक्रतुसम्बन्ध(२)स्तथापि स्वाध्यायस्याध्ययनसंस्कारविधिरध्ययनस्यापेक्षितोपायतामवगमयन् किं पिण्डपितृयज्ञवत्स्वर्गं वा सुवर्णं धार्यमिति वदार्थवादिकं वा फलं कल्पयित्वा (३)विनियोगभङ्गेन स्वाध्यायेनाधीयीतेत्येवमर्थः कल्पतां, किं वा (४)परम्परयाऽप्यन्यतोऽपेक्षितमधिगम्य निर्वृणोत्विति विशये, न दृष्टद्वारेण परम्परयाऽप्यन्यतोऽपेक्षितप्रतिलम्भे च यथाश्रुतिविनियोगोपपत्तौ च सम्भवन्त्यां श्रुतविनियोगभङ्गेनाध्ययनादेवाश्रुतादृष्टफलकल्पनोचिता । (५)दृष्टश्च स्वाध्यायस्याध्ययनसंस्कारस्तेन हि पुरुषेण सम्प्राप्यते, प्राप्तश्च फलवत्कर्मब्रह्मावबोधमभ्युदयनिःश्रेयसप्रयोजनमुपजनयति, न तु सुवर्णधारणादौ दृष्टद्वारेण परम्परयाप्यस्त्यपेक्षितं पुरुषस्य, तस्माद्विपरिवृत्त्य(६) साक्षाद्धारणादेव विनियोगभङ्गेन फलं कल्प्यं । (७)यदा चाध्ययनसंस्कृतेन स्वाध्यायेन फलवत्कर्मब्रह्मावबोधो भाव्यमानोऽभ्युदयनिःश्रेयसप्रयोजन इति स्थापितं, तदा यस्याध्ययनं तस्यैव कर्मब्रह्मावबोधोऽभ्युदयनिःश्रेयसप्रयोजनो नान्यस्य, यस्य चोपनयनसंस्कारस्तस्यैवाध्ययनं, स च द्विजातीनामेवेत्युपनयनाभावेनाध्ययनसंस्काराभावात् पुस्तकादिपठितस्वाध्यायजन्योऽर्थावबोधः शूद्राणां न फलाय कल्पत इति शास्त्रीयसामर्थ्याभावान्न शूद्रो ब्रह्मविद्यायामधिकृत इति सिद्धम् । "यज्ञेऽनवक्लृप्त" इति ( पृ ३७२ प. ६ ) यज्ञग्रहणमुपलक्षणार्थम्, विद्यायामनवक्लृप्त इत्यपि द्रष्टव्यम्, सिद्धवदभिधानस्य न्यायपूर्वकत्वान्न्यायस्य चोभयत्र (८)साम्यात् । द्वितीयं पूर्वपक्षमनुभाषते—"यत्पुनः संवर्गवि-

---

( १ ) परिशेषादध्ययनमपूर्वविधिरित्याह तस्मादिति ।

( २ ) वाक्यप्रकरणयोरभावेऽपि कल्पनालाघवेन सामर्थ्यरूपलिङ्गेन चानुगृहीतस्तव्यप्रत्ययः कर्मताधाख्यमवगमयन्नध्ययनस्य संस्कारकर्मत्वमापादयतीत्याह तथापीति ।

( ३ ) विनियोग पदान्वय ।

( ४ ) परम्परयेति । अक्षरप्रातिपदार्थव्युत्पत्तिविचारपरम्परयेत्यर्थ । अन्यतः—अनुष्ठानत, अपेक्षितमर्थबोधमित्यर्थः

( ५ ) अर्थबोधेऽध्ययनस्य सामर्थ्यं प्रदर्शयन्नाह दृष्टश्चेति । संस्कारोऽवाप्ति, सैव प्रदर्श्यते तेन हीति ।

( ६ ) श्रुतविनियोगाद्व्यावृत्त्य ।

( ७ ) लिखितपठितवेदादर्थबोध इति पूर्वपक्ष्युक्तं दूषयन्नाह यदा चेति ।

( ८ ) 'तस्माच्छूद्र' इति एतच्छब्दपरामृष्टन्यायस्य यज्ञविद्ययोस्तुल्यत्वादित्यर्थः ।

च्छाया''मिति । दूषयति—"न तल्लिङ्गम्" । कुतः ? "न्यायाभावात्" । न तावच्छूद्रः संवर्गविद्यायां साक्षाच्चोद्यते यथैतया निषादस्थपतिं याजयेदिति निषादस्थपतिः, किं त्वर्थवादगतोऽयं शूद्रशब्दः स चान्यतः सिद्धमर्थमनुद्योतयति न तु प्रापयतीत्यध्वरमीमांसकाः । (१)अस्माकं त्वन्यपरादपि वाक्यादसति बाधके प्रमाणान्तरेणार्थोऽनवगम्यमानो विधिना चापेक्षितः स्वीक्रियत एव । न्यायश्चास्मिन्नर्थे उक्तो बाधकः । न च विध्यपेक्षाऽस्ति, द्विजात्यधिकारप्रतिलम्भेन विधेः पर्यवसानात् । विध्युद्देशगतत्वे त्वयं न्यायोऽपोद्यते वचनबलान्निषादस्थपतिवन्न त्वेष विध्युद्देशगत इत्युक्तम् । तस्मान्नार्थवादमात्राच्छूद्राधिकारसिद्धिरिति भावः । अपि च किमर्थवादबलाद्विद्यामात्रेऽधिकारः शूद्रस्य कल्प्यतां संवर्गविद्यायां वा ? न तावद्विद्यामात्र इत्याह—"काम चायमि"ति । नहि संवर्गविद्यायामर्थवादः श्रुतो विद्यामात्रेऽधिकारिणमुपनयत्यतिप्रसङ्गात् । अस्तु तर्हि संवर्गविद्यायामेव शूद्रस्याधिकार इत्यत आह—"अर्थवादस्थत्वादि"ति(२) । तत्किमेतच्छूद्रपदं प्रमत्तगीतं ? न चैतद्युक्तं, तुल्यं हि साम्प्रदायिकमित्यत आह—"शक्यते चायं शूद्रशब्द"इति । (३)एवं किलात्रोपाख्यायते—"जानश्रुतिः पौत्रायणो (४)बहुदायी श्रद्धादेयो बहुपाक्यः प्रियातिथिर्बभूव । स च तेषुतेषु ग्रामनगरशृङ्गाटकेषु(५) विविधानामन्नपानानां पूर्णानतिथिभ्य आवसथान्कारयामास—'सर्वत एत्यैतेष्वावसथेषु ममान्नपानमर्थिन उपयोक्ष्यन्त' इति । अथास्य राज्ञो दानशौण्डस्य(६) गुणगरिमसन्तोषिताः सन्तो देवर्षयो हंसरूपमास्थाय तदनुग्रहाय तस्य निदाघसमये दोषा(७) हर्म्यतलस्थस्योपरि मालामाबध्याजग्मुस्तेषामग्रेसर हंसं सम्बोध्य पृष्ठतो व्रजन्नेकतमो हंसः सादभुतमभ्युवाच—"भल्लाक्ष भल्लाक्ष(८) ! जानश्रुतेरस्य पौत्रायणस्य द्युनिशं द्युलोक आयतं ज्योतिस्तन्मा (९)प्रसाङ्क्षीस्तत्त्वा धाक्षीदि"ति । तमेवमुक्तवन्तमग्रगामी हंसः प्रत्युवाच—"कं वरमेनमेतत्सन्तं सयुग्वानमिव रैक्वमात्थ" । अयमर्थः—वर इति सोपहासमवरमाह । अथ वा वरो वराकोऽयं जानश्रुतिः । कमित्याक्षेपे, यस्मादयं वराकस्तस्मात्कमेनं किंभूतमेत(१०)त्सन्त प्राणिमात्रं रैक्वमिव सयुग्वानमात्थ । (११)युग्वा गन्त्री शकटी, तया सह वर्तत इति सयुग्वा रैक्वस्तमिव कमेनं प्राणिमात्रं जानश्रुतिमात्थ । रैक्वस्य हि ज्योतिरसह्यं न त्वेतस्य प्राणिमात्रस्य । तस्य हि भगवतः पुण्यज्ञानसम्पन्नस्य

(१) अतत्पर शब्दो नाज्ञातार्थबोधीतिमते मा भूल्लिङ्गादधिकारसिद्धिः शूद्रस्य, सिद्धान्तमते तु किं न स्यादत आहास्माकं त्विति ।

(२) विधिवाक्यस्थत्वान्निषादशब्दस्याधिकारिसमर्पकत्वेऽपि शूद्रशब्दस्य विद्याविधिपरार्थवादस्थत्वान्नाधिकारिबोधकत्वमसामर्थ्यन्यायविरोधेनान्यपरशब्दस्य स्वार्थबोधकत्वासम्भवादिति उत्तरभाष्यभावः ।

(३) शूद्रशब्दस्यावयववृत्तिप्रदर्शनार्थमाख्यायिका श्रौतीमनुक्रामति एव किलेति ।

(४) पुत्रसंज्ञस्यापत्यं पौत्र तस्यापत्यं पौत्रायण इत्यर्थः । श्रद्धया देयं यस्य स तथा । पाक्यमन्नं बहुविधं यस्य गृहे स तथा ।

(५) चतुष्पथेषु । (६) शूरस्य । (७) रात्रौ, अव्ययपदमिदम् ।

(८) विरुद्धलक्षणयाऽन्धेत्युपालम्भार्थं सम्बोधनम् ।

(९) स्वर्गगमने प्रसक्तिं माकुर्वित्यर्थः । (१०) एतद्वचनमात्थेति सम्बन्धः ।

(११) युग्वेति । युजिधातोः कर्तरि 'अन्येभ्योऽपि दृश्यन्त' इति सूत्रेण क्वनिपि कृते युग्वेति सिध्यति, स्वारूढं पुरुषं देशान्तरेण युनक्तीत्यर्थः ।

रैक्वस्य ब्रह्मविदो धर्मे त्रैलोक्योदरवर्तिप्राणभृन्मात्रधर्मोऽन्तर्भवति न पुना रैक्वधर्मकक्षां कस्य-चिद्धर्मोऽवगाहत इति । अथैष हंसवचनादात्मनोऽत्यन्तनिकर्षमुत्कर्षकाष्ठां च रैक्वस्योपश्रुत्य विषण्णमानसो जानश्रुतिः कितव इवाक्षपराजितः पौन पुन्येन निःश्वसन्नुद्वेलं(१) कथमपि नि-शीथमतिवाहयांबभूव । ततो निशान्तपिशुनमनिभृतवन्दारुवृन्दप्रारब्धस्तुतिसहस्रसंवलितं(२) मङ्गलतूर्यनिर्घोषमाकर्ण्य तल्पतलस्थ एव राजैकपदे(३) यन्तारमाहूयादिदेश—"रैक्वाह्वयं ब्रह्म विदमेकरतिं सयुग्वानमतिविविक्तेषु तेषुतेषु विपिननगनिकुञ्जनदीपुलिनादिप्रदेशेष्वन्विष्य प्र यत्नतोऽस्मभ्यमाचक्ष्वे"ति । स च तत्रान्विष्यन् क्वचिदतिविविक्ते देशे शकटस्याधस्ताद् पामानं कण्डूयमानं ब्राह्मणायन(४)मद्राक्षीत् । दृष्ट्वा च रैक्वोयं भवितेति प्रतिभावानुपविश्य सविनयमप्राक्षीत्—"त्वमसि हे भगवन् ! सयुग्वा रैक्व"इति । तस्य च रैक्वभावानुमतिं च तैस्तैरिङ्गितैर्गार्हस्थ्येच्छां धनार्था(५) चोन्नीय यन्ता राज्ञे निवेदयामास । राजा तु तं निश-म्य गवां षट्शतानि निष्कं च हारं चाश्वतरीरथं चादाय सत्वरं रैक्वं प्रतिचक्रमे । गत्वा चाभ्युवाद "हे रैक्व ! गवां षट्शतानीमानि निष्कश्च हारश्चायमश्वतरीरथ(६) एतदादत्स्व, अ-नुशाधि मां भगवन्नि"ति । अथैवमुक्तवन्तं प्रति साटोपं च सस्पृहं चोवाच रैक्व—"अह हारेत्वा शूद्र तवैव सह गोभिरस्त्वि"ति । अहेति निपातः साटोपमामन्त्रणे । हारेण युक्ता इत्वा गन्त्री रथो हारेत्वा गोभिः सह तवैवास्तु किमेतन्मात्रेण मम धनेनाकल्पवर्तिनो गार्ह-स्थ्यस्य निर्वाहानुपयोगिनेति भावः । 'अहरत्वे'ति तु पाठो ऽनर्थकतया च गोभिः सहेत्यत्र प्रतिसम्बन्ध्यनुपादनेन चाचार्यैर्दूषितः । तदस्यामाख्यायिकायां शक्यः शूद्रशब्देन जानश्रुती राजन्योऽप्यवयवव्युत्पत्त्या वक्तुं, स हि रैक्वः परोक्षज्ञतां चिख्यापयिषुरात्मनो जानश्रुतेः शूद्रे ति शुचं सूचयामास । **"कथं पुनः शूद्रशब्देन शुगुत्पन्ना सूच्यत इति ? उच्यते, "तदाद्रवणात्"** । तद्व्याचष्टे—**"शुचमभिदुद्राव"** जानश्रुतिः । शुचं प्राप्तवानित्यर्थः । **'शुचा वा'**जानश्रुतिः **"द्रुद्रुवे'**शुचा प्राप्त इत्यर्थः । अथवा **शुचा रैक्वं** जानश्रुतिर्दुद्राव, गतवान्, तस्मात्तदाद्रवणादिति तच्छब्देन शुग्वा जानश्रुतिर्वा रैक्वो वा परामृश्यत इत्युक्तम् ॥ ३४ ॥

## सू० (७)क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

**"इतश्च न जातिशूद्रो जानश्रुतिः । यत्कारणं"** ( पृ० ३७४ पं० ८ ) प्रक-रणनिरूपणे क्रियमाणे क्षत्रियत्वमस्य जानश्रुतेरवगम्यते । चैत्ररथेन लिङ्गादिति व्याचक्षाणः प्रकरणं निरूपयति—**"उत्तरत्र संवर्गविद्या वाक्यशेषे"** चैत्ररथेनाभिप्रतारिणा निश्चित क्षत्रियत्वेन समानायां संवर्गविद्यायां समभिव्याहारात्लिङ्गात् संदिग्धक्षत्रियभावो जानश्रुतिः क्षत्रियो निश्चीयते । **"अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं सू-**

---

(१) चिन्ताविष्टत्वादपारम् । (२) स्तावकसमूहकृतस्तुतिस्तुतमित्यर्थ ।
(३) झटिति । (४) विप्रवेषधारिणम् ।
(५) धनेच्छाम् । (६) अश्वतरीयुक्तो रथः ।
(७) एवन्तावन्न्यायबलेन शूद्रशब्दालिङ्गमन्यथोपपादितम्, अधुना शूद्राधिकारवारकबहुलिङ्गविरो-धादपि तथेत्याह क्षत्रियत्वगतेश्चेत्यारभ्याधिकरणसमाप्तिपर्यन्तम् ।

-देन परिविष्यमाणौ ब्रह्मचारी बिभिक्ष इति" अभिप्रतारिणो याजकत्वेन कापेयेनाभिप्रतारिणो योगः प्रतीयते । ब्रह्मचारिभिक्षया चास्याशूद्रत्वमवगम्यते । नहि जातु ब्रह्मचारी शूद्रान्नं भिक्षते । याजकेन च कापेयेन योगाद्याज्योऽभिप्रतारी, क्षत्रियत्वं चास्य चैत्ररथित्वात्, 'तस्माच्चैत्ररथिनामेकः क्षत्रपतिरजायते'ति वचनात् । (१)चैत्ररथित्वं चास्य कापेयेन याजकेन योगात् । "एतेन वै चित्ररथं कापेया अयाजयन्निति" छन्दोगाना द्विरात्रे श्रूयते । तेन चित्ररथस्य याजकाः कापेयाः । (२)एष चाभिप्रतारी चित्ररथादन्यः सन्नैव कापेयानां याज्यो भवति यदि चैत्ररथिः स्यात्, समानान्वयानां हि प्रायेण समानान्वया याजका भवन्ति । तस्माच्चैत्ररथित्वादभिप्रतारी काक्षसेनिः क्षत्रियः । तत्समभिव्याहाराच्च जानश्रुतिः क्षत्रियः सम्भाव्यते । (३)इतश्च क्षत्रियो जानश्रुतिरित्याह "क्षत्तृप्रेषणाद्यैश्वर्ययोगाच्च" । ( पृ० ३३५ पं० ७ ) क्षत्तृप्रेषणे चार्थसम्भवे(४)च तादृशरयान्यवदान्यप्रष्ठस्यैश्वर्यं प्रायेण क्षत्रियस्य दृष्टं युधिष्ठिरादिवदिति ॥ ३५ ॥

## सू० संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥

(५)न केवलमुपनीताध्ययनविधिपरामर्शेन न शूद्रस्याधिकारः, किन्तु तेषु तेषु विद्योपदेशप्रदेशेषूपनयनसंस्कारपरामर्शात् शूद्रस्य तदभावाभिधानाद्ब्रह्मविद्यायामनधिकार इति । नन्वनुपनीतस्यापि ब्रह्मोपदेशः श्रूयते 'तान्हानुपनीयैवे'ति, तथा शूद्रस्यानुपनीतस्यैवाधिकारो भविष्यतीत्यत आह—"तान् हानुपनीयैवेत्यपि प्रदर्शितैवोपनयनप्राप्तिः" । ( पृ० ३७६ पं० १ ) प्राप्तिपूर्वकत्वात्प्रतिषेधस्य येषामुपनयनं प्राप्तं(६) तेषामेव तन्निषिध्यते । तच्च द्विजातीनामिति द्विजातय एव निषिद्धोपनयना अधिक्रियन्ते न शूद्र इति ॥३६॥

## सू० तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

"सत्यकामो ह वै जाबालः प्रमीतपितृकः स्वां मातरं जबालामपृच्छत्—'अहमाचार्यकुले ब्रह्मचर्यं चरिष्यामि, तद्ब्रवीतु भवती किंगोत्रोऽहमि"ति । साऽब्रवीत्—'स्वजनकपरिचरणपरतया नाहमज्ञासिषं यद्गोत्रं तवे'ति । स त्वाचार्यं गौतममुपससाद । उपसद्योवाच 'हे भगवन् ! ब्रह्मचर्यमुपेयां त्वयी'ति । स होवाच—'नाविज्ञातगोत्र उपनीयत इति किंगोत्रोऽसी'ति । अथोवाच सत्यकामो—नाहं वेद स्वं गोत्रं, स्वां मातरं जबालामपृच्छं, सापि न वेदे'ति । तदुपश्रुत्याभ्यधाद्गौतमः—'नाद्विजन्मन आर्जवयुक्तमीदृशं वचस्तेना-

---

( १ ) नन्वस्य चैत्ररथित्वं न श्रुतमित्यत आह चैत्ररथित्वं चेति ।

( २ ) ननु कापेययाज्योऽभिप्रतारी चित्ररथ एव किं न स्यादत आह एष चेति । नाममेदादन्यत्वे सति तद्वंश्यत्वात्तद्याजके न याज्यत्वमित्यर्थः ।

( ३ ) एवं वाक्यारम्भे सन्देहं स्वीकृत्य वाक्यशेषान्निर्णयं विधायेदानीं तु सन्देह एवायुक्तः शूद्रशब्दपरामर्शात्प्रागेव 'सह चत्तारमुवाचे'त्यमात्यप्रैषादिना क्षत्रियत्वनिश्चयादित्याह इतश्चेति ।

( ४ ) बहुदायी बहुपाक्य इति अर्थसम्भवोपि क्षत्रियस्यैव दृष्ट इति भावः ।

( ५ ) आद्यसूत्र एवाध्ययननियमस्य सूचितत्वात् पुनरुक्तिमाशङ्क्याह न केवलमिति ।

( ६ ) प्राप्तमिति । 'ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे' ( छा० ५।११।७ ) इति पूर्ववाक्ये ब्रह्मज्ञा उपनयनार्थमागता इति प्राप्तमुपनयनं निषिध्यत इत्यर्थः ।

स्मिन्न शूद्रत्वसम्भावनास्तीति त्वां द्विजातिजन्मानमुपनेष्य' इत्युपनेतुमनुशासितुं च जाबालं गौतमः प्रवृत्तः । तेनापि शूद्रस्य नाधिकार इति विज्ञायते । **"न सत्यादगा"** इति । न सत्यमतिक्रान्तवानसीति ॥ ३७ ॥

## सू० (१)श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥ ३८ ॥

निगदव्याख्यातेन भाष्येण व्याख्यातम् । अतिरोहितार्थमन्यत् ॥ ३८ ॥

## सू० कम्पनात् ॥ ३९ ॥

(२)प्राणवज्रश्रुतिबलाद्वाक्यं प्रकरणं भङ्क्त्वा वायुः पञ्चवृत्तिराध्यात्मिको बाह्यश्चात्र प्रतिपाद्यः । तथाहि—प्राणशब्दो मुख्यो वायावाध्यात्मिके, वज्रशब्दश्चाशनौ । अशनिश्च वायुपरिणाम वायुरेव हि बाह्यो धूमज्योतिःसलिलसम्वलितः पर्जन्यभावेन परिणतो विद्युत्स्तनयित्नुवृष्ट्यशनिभावेन विवर्तते । यद्यपि च सर्वं जगदिति सवायुकं प्रतीयते, तथापि सर्वशब्द आपेक्षिकोऽपि न स्वाभिधेयं जहाति किन्तु सङ्कोचनवृत्तिर्भवति । प्राणवज्रशब्दौ तु ब्रह्मविषयत्वे स्वार्थमेव त्यजतः । तस्मात्स्वार्थत्यागाद्वरं वृत्तिसङ्कोचः स्वार्थलेशावस्थानात् । अमृतशब्दोऽपि मरणाभाववचनो न सार्वकालिकम् तदभावं ब्रूते, ज्योतिर्जीवितयापि तदुपपत्तेः, यथा अमृता देवा इति । तस्मात्प्राणवज्रश्रुत्यनुरोधाद्वायुरेवात्र विवक्षितो न ब्रह्मेति प्राप्तम् ।

एव प्राप्ते उच्यते—**'कम्पनात्'** सवायुकस्य जगतः कम्पनात्, परमात्मैव शब्दात् प्रमित इति (३)मण्डुकप्लुत्याऽनुषज्यते । ब्रह्मणो हि बिभ्यदेतज्जगत् कृत्स्नं स्वव्यापारे नियमेन प्रवर्तते न तु मर्यादामतिवर्तते । (४)एतदुक्तं भवति—न श्रुतिसङ्कोचमात्रं श्रुत्यर्थपरित्यागे हेतुरपि तु पूर्वापरवाक्यैकवाक्यताप्रकरणाभ्यां सम्वलितः श्रुतिसंकोचः । तदिदमुक्तं **"पूर्वापरयोर्ग्रन्थभागयोर्ब्रह्मैव निर्दिश्यमानमुपलभामहे, इहैव कथमन्तराले वायुं निर्दिश्यमानं प्रतिपद्येमही"**ति ( पृ० ३७८ प० १२ ) । तदनेन वाक्यैकवाक्यता दर्शिता । प्रकरणादपीति भाष्येण प्रकरणमुक्तम् । (५)यत् खलु पृष्टं तदेव

---

( १ ) स्मृत्या श्रवणादिनिषेधाच्च नाधिकार इत्याह श्रवणेति । प्रतिषेधात्—वेदं शृण्वत पठतो वा शूद्रस्य सीसलाक्षाभ्यां तताभ्यां श्रोत्रद्वयपूरणात्मकेन प्रायश्चित्तेन तस्याध्ययननिषेधस्मरणात् इति सूत्रार्थः ।

( २ ) ननु तदेव शुक्रं तद्ब्रह्मेति च, भयादग्निस्तपतीति च प्राचीनपराचीनवचनसन्दष्टतयाऽस्य तदेकवाक्यत्वादन्यत्र धर्मादिति ब्रह्मप्रकरणाच्च ब्रह्मपरत्वागते कथं पूर्वपक्षोत्थापनमत आह प्राणवज्रेति । वायुपरिमहे वज्रशब्द श्रुतिवृत्तः स्यादिति श्रुतिः । प्राणश्रुतिबलाद्वायुराध्यात्मिको शारीरः, वज्रश्रुतिबलाद् बाह्यश्च वायुरत्र प्रतिपाद्य, नहि प्राणमात्रस्य वज्रोद्यमनहेतुता, उभयोश्च चिन्तनमेकं संवर्गविद्यावदिति न वाक्यभेद इति भाव ।

( ३ ) मण्डूकेति । यथा मण्डूको बहून् विहाय स्वपङ्क्तिगतमण्डूकं प्रति प्लवते एवं शब्दादिति व्यवहितापि प्रतिज्ञा हेतुनाऽनुषज्यत इत्यर्थ ।

( ४ ) ननु प्राणवज्रश्रुत्यो स्वार्थत्यागभयात्सर्वशब्दसङ्कोच उक्त तत्कथं सवायुकजगत्प्रतीतिरत आह एतदुक्तमिति ।

( ५ ) अङ्गाकाङ्क्षस्य प्रधानस्य वचनं प्रकरणमिति प्रकरणलक्षणं प्रस्तुते वर्तयन्नाह यत्खल्विति । पृष्टं जिज्ञास्यत्वात्प्रधानं तस्य नियन्तृत्वादीनि प्रतिपत्त्यावङ्गानि प्रतिवचनेन निरूप्यन्त इति प्रकरणसिद्धिरित्यर्थः ।

प्रधानं प्रतिवक्तव्यमिति तस्य प्रकरणम् । पृष्टादन्यस्मिंस्तूच्यमाने शास्त्रमप्रमाणं भवेदसम्बद्धप्रलापित्वात् । यत्तु वायुविज्ञानात् क्वचिदमृतत्वमभिहितमापेक्षिकं तदिति । 'अपपुनर्मृत्युं जयती'ति श्रुत्या ह्यपमृत्योर्विजय उक्तो न तु परममृत्युविजय इत्यापेक्षिकत्वं तच्च तत्रैव प्रकरणान्तरकरणेन हेतुना । न केवलमपश्रुत्या तदापेक्षिकमपि तु परमात्मानमभिधायातोऽन्यदार्तमिति वाय्वादेरार्तत्वाभिधानात् । न ह्यार्ताभ्यासादनार्तो भवतीति भावः ॥ ३९ ॥

## सू० ज्योतिर्दर्शनात् ॥ ४० ॥

(१) अत्र हि ज्योतिःशब्दस्य तेजसि मुख्यत्वाद्ब्रह्मणि जघन्यत्वात् प्रकरणाच्च श्रुतेर्बलीयस्त्वात् पूर्ववच्छ्रुतिसंकोचस्य चात्राभावात्, प्रत्युत ब्रह्मज्योतिःपक्षे क्त्वाश्रुतेः पूर्वकालार्थायाः पीडनप्रसङ्गात्, समुत्थानश्रुतेश्च तेज एव ज्योतिः, (२)तथाहि—समुत्थानमुद्गमनमुच्यते, न तु विवेकविज्ञानम् । उद्गमनं च तेजःपक्षेऽर्चिरादिमार्गेणोपपद्यते । आदित्यश्चार्चिराद्यपेक्षया परं ज्योतिर्भवतीति । 'तदुपसम्पद्य' तस्य समीपे भूत्वा स्वेन रूपेणाभिनिष्पद्यते, कार्यब्रह्मलोकप्राप्तो क्रमेण मुच्यते । ब्रह्मज्योतिःपक्षे तु ब्रह्म भूत्वा का परा स्वरूपनिष्पत्तिः । (३)न च देहादिविविक्तब्रह्मस्वरूपसाक्षात्कारो वृत्तिरूपोऽभिनिष्पत्तिः, सा हि ब्रह्म भूयात् प्राचीना न तु पराचीना सेयमुपसम्पद्येति क्त्वाश्रुतेः पीडा । तस्मात्तिसृभिः श्रुतिभिः प्रकरणबाधनात्तेज एवात्र ज्योतिरिति प्राप्तम् ।

एवं प्राप्ते ऽभिधीयते—**परमेव ब्रह्म ज्योतिःशब्दम्** । कस्मात् ? **दर्शनात्** । **"तस्य हीह प्रकरणेऽनुवृत्तिर्दृश्यते"** ( पृ० ३८१ पं० २ ) । यत् खलु प्रतिज्ञायते यच्च मध्ये परामृश्यते यच्चोपसंह्रियते स एव प्रधानं प्रकरणार्थः । तदन्तःपातिनस्तु सर्वे तदनुगुणतया नेतव्याः, न तु श्रुत्यनुरोधमात्रेण प्रकरणादपकृष्टव्या इति हि लोकस्थितिः । अन्यथोपांशुयाजवाक्ये जामितादोषोपक्रमे तत्प्रतिसमाधानोपसंहारे च तदन्तःपातिनो 'विष्णुरुपांशु यष्टव्य' इत्यादयो विधिश्रुत्यनुरोधेन पृथग् विधयः प्रसज्येरन् । (४)तत्किमिदानीं तिस्रः साह्नस्योपसदः (कार्या) द्वादशाहीनस्येति (५)प्रकरणानुरोधात् समुदायप्रसिद्धिवललब्धमहर्गणाभिधानं परित्यज्याहीनशब्दः कथमप्यवयवव्युत्पत्त्या स ह्नं ज्योतिष्टोममभिधाय तत्रैव द्वादशोपसत्तां विधत्ताम् । स हि कृत्स्नविधानान्न कुतश्चिदपि हीयते क्रतोरित्यहीनः

---

( १ ) ननु ज्योतिषां ज्योतिरिति ब्रह्मापि ज्योतिःशब्दवाच्यमिति कथमादित्य इति पूर्वपक्षस्तत्राह अत्र हीति ।

( २ ) ननु समुत्थानं विवेक इति दहराधिकरणे व्याख्यातमत आह तथाहीति । अप्रसिद्धेर्न विवेकविज्ञानमित्यर्थः ।

( ३ ) नन्वभिनिष्पत्तिर्ब्रह्मसाक्षात्कार स्यादित्यत आह नचेति । साक्षात्काररूपाभिनिष्पत्तिर्ज्योतिरुपसम्पत्ते भाति पूर्वा सती परत्वेन वक्तुमशक्येत्यर्थः ।

( ४ ) प्रकरणमनुरुध्य श्रुतिभङ्गेऽधिकरणविरोधं शङ्कते तदिति ।

( ५ ) प्रस्तुतेऽतिप्रसङ्गप्रदर्शनायाप्रस्तुतं पूर्वपक्षमाह प्रकरणेति । अत्रोपसद इष्टयस्तास्त्रित्वं ज्योतिष्टोमस्यैव, द्वादशत्वं तु साह्नस्योताहीनस्येति विचार । साह्न एकाहत्वाज्ज्योतिष्टोमोऽहीनोऽहर्गणमात्रत्वाद्द्वादशाहादि । अहीनश्रुतिरहर्गणे रूढा, पाणिनिस्तु स्वरार्थं प्रत्ययमनुशशास, अत सा ज्योतिःश्रुतिरेव ब्रह्मप्रकरणरुद्धा साह्नमभिदध्यात् तत्रैव च द्वादशोपसत्तां विदध्यात् तत्किम् विधत्ताम्, अयुक्तं हि विधातुमुत्कर्षस्य सिद्धान्तितत्वात् इत्यर्थ ।

शक्यो वक्तुम् । मैवम् । (१)अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसीति श्रुत्या प्रकरणबाधनाच्च द्वादशोपसत्तामहीनगुणयुक्ते ज्योतिष्टोमे शक्नोति विधातुम् । नाप्यतोपकृष्टः सन्नहर्गणस्य विधत्ते, परप्रकरणेऽन्यधर्मविधेरन्याय्यत्वात् । असंबद्धपदव्यवायविच्छिन्नस्य प्रकरणस्य पुनरनुसन्धानक्लेशात् । तेनानपकृष्टेनैव द्वादशाहीनस्येति वाक्येन साह्नस्य तिस्र उपसदः कार्या इति विधिं स्तोतुं द्वादशाहविहिता द्वादशोपसत्ता तत्प्रकृतित्वेन च सर्वाहीनेषु प्राप्ता निवीतादिवदनूद्यते(२) । तस्मादहीनश्रुत्या प्रकरणबाधेऽपि न द्वादशाहीनस्येति वाक्यस्य प्रकरणापकर्षो ज्योतिष्टोमप्रकरणाम्नातस्य । (३)पूषाद्यनुमन्त्रणमन्त्रस्य यल्लिङ्गबलात्प्रकरणबाधेनापकर्षस्तदगत्या, पौष्णादौ च कर्मणि तस्यार्थवत्त्वादिह त्वपकृष्टस्यार्चिरादिमार्गोपदेशे फलस्योपायमार्गप्रतिपादकेऽतिविशदे 'एष सम्प्रसाद'(४) इति वाक्यस्याविशदैकदेशमात्रप्रतिपादकस्य निष्प्रयोजनत्वात् । न च द्वादशाहीनस्येतिवद्यथोक्तदहरध्यानसाधनानुष्ठानं स्तोतु'मेष सम्प्रसाद'इति वचनमर्चिरादिमार्गमनुवदतीति युक्तम् । स्तुतिलक्षणायां स्वाभिधेयसंसर्गतात्पर्यपरित्यागप्रसङ्गात्, द्वादशाहीनस्येति तु वाक्ये स्वार्थसंसर्गतात्पर्ये प्रकरणविच्छेदस्य प्राप्तानुवादमात्रस्य चाप्रयोजनत्वामिति स्तुत्यर्थो लक्ष्यते । न चैतद्दोषभयात्समुदायप्रसिद्धिमुल्लङ्घ्यावयवप्रसिद्धिमुपाश्रित्य साह्नस्यैव द्वादशोपसत्ता विधातुमर्हति, त्रित्वाद्वादशत्वयोर्विकल्पप्रसङ्गात् । न च सत्यां गतौ विकल्पो न्याय्यः, साह्नाहीनपदयोश्च प्रकृतज्योतिष्टोमाभिधायिनोरानर्थक्यप्रसङ्गात्, प्रकरणादेव तदवगतेः, (५)इह तु स्वार्थसंसर्गतात्पर्ये नोक्तदोषप्रसङ्ग इति पौर्वापर्यपर्यालोचनया प्रकरणानुरोधाद्रूढिमपि पूर्वकालतामपि परित्यज्य प्रकरणानुगुण्येन ज्योतिः परं ब्रह्म प्रतीयते । (६) यत्तूक्तं मुमुक्षोरादित्यप्राप्तिरभिहितेति । नासावात्यन्तिको मोक्षः, किन्तु कार्यब्रह्मलोकप्राप्तिः । (७)न च क्रममुक्त्यभिप्रायं स्वेन रूपेणाभिनिष्पद्यत इति वचनम्, नह्येतत्प्रकरणोक्तं ब्रह्मतत्त्वं विदुषो गत्युत्क्रान्ती स्तः । तथा च श्रुतिः—'न तस्मात्प्राणा उत्क्रामन्ति अत्रैव समवनीयन्त' इति । (८)न च तद्द्वारेण क्रममुक्तिः । अर्चिरादि-

---

(१) परमसिद्धान्तेन परिजिहीर्षुरेकदेशमनुजानाति अवयवेति ।

(२) निवीतादिवदिति । 'निवीतं मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवाना'मि'ति दर्शपूर्णमासप्रकरणे आम्नातम् । तत्रोपवीतं विधीयते इतरयोस्तु विधिरर्थवादो वेति संशये द्वयोरुपवीतवद्विधि इति पूर्वपक्षे, मनुष्याणां क्रियासु सौकर्येण निवीतस्य पितृयज्ञे वचनान्तरेण प्राचीनावीतस्य च प्राप्तत्वाच्चार्थवाद एवोपवीतं स्तोतुं यथा तद्वदित्यर्थः ।

(३) पूषादिमन्त्राणां दर्शपूर्णमासप्रकरणोक्तानामगत्याऽपकर्षस्वीकार इत्याह पूषादीति ।

(४) एष सम्प्रसाद इति का० मु० पु० पाठः ।

(५) अस्तु तर्हि ज्योतिर्वाक्येष्वपि श्रुतिवशादादित्यवादिनो निर्गुणानुपयोगादर्चिरादिमार्गे उपयोगश्चोत्कर्षस्तत्राह इह त्विति ।

(६) ननु 'स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छती'तिप्रस्तावात् आदित्यस्येत्यप्यस्ति प्रकरणमित्युक्तमनुवदति यत्त्विति । परिहरति नेति । दहरविद्याफलं ब्रह्मलोकावाप्तिरादित्यद्वारोक्ता, इदं तु 'य आत्माऽपहतपाप्मे'त्यादिकं निर्गुणप्रकरणमित्यर्थः ।

(७) नन्वात्यन्तिकमोक्षोऽपि ब्रह्मलोकद्वारा प्राप्य इति तत्र वक्तव्यम्—किं मोक्षस्य गतिपूर्वकत्वाप्यत्वं स्वीकृत्यैतद्वाक्यं क्रममुक्तिपरमुत नियमेन गतिपूर्वप्राप्यत्वमभिमतमिति । तत्राद्यं निरस्यति नचेति । समवनीयन्ते—लीयन्ते । (८) द्वितीयं निराकुर्वन्नाह न च तद्द्वारेणेति । तच्छब्दो ब्रह्मलोकवाचकः ।

मार्गस्य हि कार्यब्रह्मलोकप्रापकत्वं न तु ब्रह्मभूयहेतुभावो, जीवस्य तु निरुपाधिनित्यशुद्धबुद्धब्रह्मभावसाक्षात्कारहेतुके मोक्षे कृतमर्चिरादिमार्गेण कार्यब्रह्मलोकप्राप्त्या, अत्रापि ब्रह्मविदस्तदुपपत्तेः। (१)तस्मान्न ज्योतिरादित्यमुपसम्पद्य सम्प्रसादस्य जीवस्य स्वेन रूपेण पारमार्थिकेन ब्रह्मणाऽभिनिष्पत्तिराञ्जसीति श्रुतेरत्रापि क्लेशः। (२)अपि च परं ज्योतिः स उत्तमपुरुष इतीहैवोपरिष्टाद्विशेषणात्तेजसो व्यावर्त्यपुरुषविषयत्वेनावस्थापनाज्ज्योतिष्पदस्य परमेव ब्रह्म ज्योतिर्न तु तेज इति सिद्धम् ॥ ४० ॥

## सू० आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

यद्यपि 'आकाशस्तल्लिङ्गादि'त्यत्र ब्रह्मलिङ्गदर्शनादाकाशः परमात्मेति व्युत्पादित, तथापि तद्वदत्र परमात्मलिङ्गदर्शनाभावान्नामरूपनिर्वहणस्य भूताकाशेप्यवकाशदानेनोपपत्तेरकस्माच्च(३) रूढिपरित्यागस्यायोगात्, 'नामरूपे अन्तरा ब्रह्मे'ति च नाकाशस्य नामरूपयोर्निर्वहितुरन्तरालत्वमाहापि तु ब्रह्मणस्तेन भूताकाशो नामरूपयोर्निर्वहिता। ब्रह्म चैतयोरन्तरालं मध्यं सारमिति यावत्। (४)न तु निर्वोढैव ब्रह्म अन्तरालं वा निर्वोढृ। तस्मात्प्रसिद्धेर्भूताकाशमेवाकाशो न तु ब्रह्मेति(५) प्राप्तम्।

एवं प्राप्त उच्यते—परमेवाकाशं ब्रह्म, "कस्मात्? अर्थान्तरत्वादिव्यपदेशात्' (पृ० ३८२ प० ८)। नामरूपमात्रनिर्वाहकमिहाकाशमुच्यते। भूताकाशं च विकारत्वेन' नामरूपान्तःपाति सत्कथमात्मानमुद्वहेत्। नहि सुशिक्षितोऽपि विज्ञानी स्वेन स्कन्धेनात्मानं वोढुमुत्सहते। न च नामरूपश्रुतिरविशेषतः प्रवृत्ता भूताकाशवर्जं नामरूपान्तरे सङ्कोचयितुं सति सम्भवे युज्यते, न च निर्वाहकत्वं निरङ्कुशमवगतं ब्रह्मलिङ्गं कथंचित्क्लेशेन परतन्त्रे नेतुमुचितम्(६)। 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी'ति च तत्स्रष्टृत्वमतिस्पष्टं ब्रह्मलिङ्गमत्र प्रतीयते। ब्रह्मरूपतया च जीवस्य व्याकर्तृत्वे ब्रह्मण एव व्याकर्तृत्वमुक्तम्। एवं च निर्वहितुरेवान्तरालतोपपत्तेरन्यो निर्वहिताऽन्यश्चान्तरालमित्यर्थभेदकल्पनापि न युक्ता। तथा च ते नामरूपे यदाकाशमन्तरेत्ययमर्थान्तरव्यपदेश उपपन्नो भवत्याकाशस्य। तस्मादर्थान्तरव्यपदेशात्तथा 'तद्ब्रह्म तदमृतमि'ति व्यपदेशाद्ब्रह्मैवाकाशमिति सिद्धम् ॥ ४१ ॥

## सू० सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥

(७)आदिमध्यावसानेषु संसारिप्रतिपादनात्।

---

(१) तस्मादिति। आदित्यमुपसम्पद्येति व्याचक्षाणानां मध्ये ब्रह्मलोकप्राप्तिव्यवायाङ्गीकारेण कृत्वाश्रुत्यनाञ्जस्यमुभयमतेऽपि समानमिति नास्मन्मत एव तदनुपपत्तिरुद्भाव्येति भाव।

(२ प्रकरणादिव श्रुतिवशादपि श्रुतिभङ्गमाहापि चेति।

(३) अनन्तराधिकरणेनागतार्थत्वसङ्गती वक्ति अकस्माच्चेति। पूर्वत्र प्रकरणादानर्थक्यहतश्रुतिर्नीता इह तु न ब्रह्मप्रकरणं नाप्याकाशश्रुतेरानर्थक्यं नामरूपाधिष्ठानब्रह्मप्रतिपत्त्यर्थत्वादाकाशस्येति भावः।

(४) व्यतिरेकमुखेनैतदेव विशदयति नत्विति। निर्वोढा य आकाशस्स नैव ब्रह्म, अन्तरालभूतं यद्ब्रह्म तदपि निर्वोढ्रित्यर्थ। (५) भूताकाशो नतु ब्रह्मेति मु० मु० पु० पाठ।

(६) सत्यप्यवकाशदातृत्वेऽभिधानाभिधेयनामरूपनिर्वाहकस्वरूपनियन्तृत्वमाकाशे न घटत इति भाव।

(७) पूर्वपक्षसङ्ग्राहकश्लोकमाहादीति। आदावन्ते च विज्ञानमयशब्द मध्ये [illegible] संसारि

तत्परे ग्रन्थसन्दर्भे सर्वं तत्रैव योज्यते ॥

संसार्येव तावदात्माऽहंकारास्पदं प्राणादिपरीतः सर्वजनसिद्धः। तमेव च 'योऽयं विज्ञानमयः प्राणेष्वि'त्यादिश्रुतिसन्दर्भ आदिमध्यावसानेष्वामृशतीति तदनुवादपरो भवितुमर्हति। एवं च संसार्यात्मैव कञ्चिदपेक्ष्य महान्, संसारस्य चानादित्वेनानादित्वादज उच्यते, न तु तदतिरिक्तः कश्चिदत्र नित्यशुद्धबुद्धमुक्तस्वभावः प्रतिपाद्यः। यत्तु सुषुप्त्युत्क्रान्त्योः प्राज्ञेनात्मना (स)परिष्वक्त इति भेदं मन्यसे, नासौ भेदः, किन्त्वयमात्मशब्दः स्वभाववचनस्तेन सुषुप्त्युत्क्रान्त्यवस्थायां विशेषविषयाभावात्सापिण्डितप्रज्ञेन(१) प्राज्ञेनात्मना स्वभावेन परिष्वक्तो न किंचिद्वेदेत्यभेदेऽपि भेदवदुपचारेण योजनीयम्। यथाहुः 'प्राज्ञः संपिण्डितप्रज्ञ' इति। पत्यादयश्च शब्दाः संसारिण्येव कार्यकरणसंघातात्मकस्य जगतो जीवकर्मार्जिततया तद्भोग्यतया च योजनीयाः। तस्मात्संसार्येवानूद्यते न तु परमात्मा प्रतिपाद्यत इति प्राप्तम्।

एवं प्राप्त उच्यते(२)—'सुषुप्त्युत्क्रान्त्योर्भेदेन' व्यपदेशात् (पृ० ३८४ पं० ८२) इत्यनुवर्तते। (३)अयमभिसंधिः। किं संसारिणोऽन्यः परमात्मा नास्ति, तस्मात्संसार्यात्मपरं योऽयं विज्ञानमयः प्राणेष्विति वाक्यम्, आहोस्विदिह संसारिव्यतिरेकेण परमात्मनोऽसंकीर्तनात्संसारिणश्चादिमध्यावसानेष्ववमर्शात्संसार्यात्मपरम्? न तावत्संसार्यतिरिक्तस्य तस्याभावः। तत्प्रतिपादका हि शतश आगमा 'ईक्षतेर्नाशब्दं, गतिसामान्यादि'त्यादिभिः सूत्रसन्दर्भैरुपपादिताः। (४)न चात्रापि संसार्यतिरिक्तपरमात्मसंकीर्तनाभावः, सुषुप्त्युत्क्रान्त्योस्तत्संकीर्तनात्। न च प्राज्ञस्य परमात्मनो जीवाद्भेदेन संकीर्तनं सति सम्भवे राहोः शिर इतिवदौपचारिकं युक्तम्। न च प्राज्ञशब्दः प्रज्ञाप्रकर्षशालिनि निरूढवृत्तिः कथंचिदज्ञविषयो व्याख्यातुमुचितः। न च प्रज्ञाप्रकर्षोऽसङ्कुचद्वृत्ति(५)र्विदितसमस्तवेदितव्यात्सर्वविदोऽन्यत्र सम्भवति। नचेत्थम्भूतो जीवात्मा, तस्मात्सुषुप्त्युत्क्रान्त्योर्भेदेन जीवात्प्राज्ञस्य परमात्मनो व्यपदेशात् 'योऽयं विज्ञानमय' इत्यादिना जीवात्मानं लोकसिद्धमनूद्य(६) तस्य परमात्मभावोऽनधिगतः प्रतिपाद्यते। न च जीवात्मानुवादमात्रपराण्येतानि वचांसि, अनधिगतार्थावबोधपरं हि शास्त्रं प्रमाणम्, न त्वनुवादमात्रनिष्ठं भवितुमर्हति। (७)अत एव च संसारिणः परमात्मभावविधानायादिमध्यावसानेष्वनुवाद्यतयाऽवमर्श उपपद्यते। एवं च महत्त्वं चाजत्वं च सर्वगतस्य नित्यस्यात्मनः सम्भवान्नापेक्षिकं कल्पयिष्यते। यत्तु मध्ये बुद्धान्ताद्यवस्थोपन्यासादिति, नानेनावस्थावत्त्वं विवक्ष्यते, अपि त्ववस्थानामुपजनापायधर्मकत्वेन तदतिरिक्तमवस्थारहितं परमात्मानं विवक्षति "उपरितनवाक्यसन्दर्भालोचनादि"ति ॥ ४२ ॥

---

प्रतिपादके ग्रन्थे सम्भवति 'महानज' इत्यादिकं संसारिण्येव सङ्गच्छत इति श्लोकार्थः। श्लोकार्थमेवाह संसार्येवेत्यादिना। (१) सम्पिण्डितप्रज्ञेन—विषयसम्बन्धकृतविक्षेपाभावादनभिभूतप्रज्ञेन।

(२) अभिधीयते इति मु० मु० पु० पाठः।

(३) नन्वसिद्धे ईश्वरधर्मिणि भेदव्यवहारोऽसिद्ध इत्याशङ्क्याह अयमिति।

(४) द्वितीयकल्पं निरस्यन्नाह न चात्रापीति।

(५) अनेन जीवस्यापि शास्त्रादिविषयप्रज्ञाप्रकर्षोऽस्तीति निरस्तम्।

(६) एतेन वाक्यभेदापत्तिर्निरासः।

(७) नन्वभ्यासाज्जीवपरत्वं वाक्यस्य स्यादित्याशङ्क्याहात एवेति।

## सू० पत्यादिशब्देभ्यः ॥४३॥

"सर्वस्य वशी" ( पृ० ३८५० पं० ८ ) वशः सामर्थ्यं, सर्वस्य जगतः प्रभवत्ययम्, (१)व्यूहावस्थानसमर्थ इति । अत एव सर्वस्येशानः, सामर्थ्येन ह्ययमुक्तेन सर्वस्येष्टे तदिच्छानुविधानाज्जगतः । अत एव सर्वस्याधिपतिः सर्वस्य नियन्ताऽन्तर्यामीति यावत् । किञ्च 'स एवम्भूतो ह्ययन्तज्योतिः पुरुषो विज्ञानमयो न साधुना कर्मणा भूयानुत्कृष्टो भवती'त्येवमाद्याः श्रुतयोऽसंसारिणं परमात्मानमेव प्रतिपादयन्ति । तस्माज्जीवात्मानं मानान्तरसिद्धमनूद्य तस्य ब्रह्मभावप्रतिपादनपरो 'योऽयं विज्ञानमय' इत्यादिर्वाक्यसन्दर्भ इति सिद्धम् ॥ ४३ ॥

इति श्रीमद्वाचस्पतिमिश्रविरचितशारीरकभगवत्पादभाष्यविभागे भामत्या प्रथमस्याध्यायस्य तृतीयः पादः ॥

## सू० आनुमानिकमप्येकेषामिति चेन्न, शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥

स्यादेतत् , ब्रह्मजिज्ञासां प्रतिज्ञाय ब्रह्मणो लक्षणमुक्तम् 'जन्माद्यस्य यत' इति, तच्चेदं लक्षणं न प्रधानादौ गतं येन व्यभिचारादलक्षणं स्यात् , किन्तु ब्रह्मण्येवेति 'ईक्षतेर्नाशब्दमि'ति प्रतिपादितम् , गतिसामान्यं च वेदान्तवाक्यानां ब्रह्मकारणवादं प्रति विद्यते, न प्रधानकारणवादं प्रतीति प्रपञ्चितमधस्तेनेन सूत्रसन्दर्भेण, तत्किमवशिष्यते यदर्थमुत्तरः सन्दर्भ आरभ्यते, न च 'महतः परमव्यक्तमि'त्यादीनां प्रधाने समन्वयेऽपि व्यभिचारः, नह्येते प्रधानकारणत्वं जगत आहुः, अपि तु प्रधानसद्भावमात्रम् , न च तत्सद्भावमात्रेण 'जन्माद्यस्य यत' इति ब्रह्मलक्षणस्य किंचिद्धीयते, तस्मादनर्थक उत्तरः सन्दर्भ इत्यत आह—"ब्रह्मजिज्ञासां प्रतिज्ञाये"ति ( पृ० ३८६ पं० ९ )। न प्रधानसद्भावमात्रं प्रतिपादयन्ति 'महतः परमव्यक्तमि'त्यादय (२) किन्तु जगत्कारणं प्रधानमिति, 'महतः परमि'त्यत्र हि परशब्दोऽविप्रकृष्टपूर्वकालत्वमाह, तथा च(३) कारणत्वम् , 'अजामेकामि'त्यादीनां तु कारणत्वाभिधानमतिस्फुटम् , (४)एवं च लक्षणव्यभिचारात् तदव्यभिचाराय युक्त उत्तरसूत्रसन्दर्भारम्भ इति । पूर्वपक्षयति—"तत्र य एवे"ति ( पृ० ३८७ पं० ३ )। सांख्यप्रवादरूढिमाह—"तत्राव्यक्तमि"ति । सांख्यस्मृतिप्रसिद्धेर्न केवलं रूढिरवयवप्रसिद्ध्याप्ययमेवार्थोऽवगम्यत इत्याह—"न व्यक्तमि"ति । शान्तघोरमूढशब्दादिहीनत्वाच्चेति(५) । श्रुतिरुक्ता । स्मृतिश्च सांख्यीया । न्यायश्च—

---

( १ ) विभागेन जगत्साध्ये समर्थ ।

( २ ) म् अजामेकामि'त्यादय इति मु० मु० पु० पाठ ।

( ३ ) तथाचेति । अन्यथासिद्धिशून्यत्वे सति कार्यनियतप्रावभूत्त्वरूपकारणत्वसिद्धि रित्यर्थः ।

( ४ ) एवं चेति । जगत प्रधानकारणत्वे प्रोक्तरीत्या सिद्धे जन्मादिरूपलक्षणस्य ब्रह्मातिरिक्तप्रधानगतत्वेन व्यभिचारप्रसङ्गात् तत्राव्यभिचारं दर्शयितुमुत्तरसन्दर्भारम्भ इत्यर्थ ।

( ५ ) एतेन 'शब्दादिहीनत्वाच्चे'ति भाष्यस्य प्रधानकालेऽपि सूक्ष्मशब्दादिभावात् गुणवैषम्योत्तरकालभाविशब्दादिहीनत्वात् इत्यर्थो ग्राह्य इति सूचितम् ।

(१)'भेदानां परिमाणात्समन्वयाच्छक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥
कारणमस्त्यव्यक्तम्' इति ।

न च 'महतः परमव्यक्तमि'ति प्रकरणपरिशेषाभ्यामव्यक्तपदं शरीरगोचरम्, शरीरस्य शान्तघोरमूढरूपशब्दाद्यात्मकत्वेनाव्यक्तत्वानुपपत्तेः । तस्मात्प्रधानमेवाव्यक्तमुच्यत इति प्राप्ते,

उच्यते—**"नैतदेवं नह्येतत्काठकं वाक्यमि"**ति । (२)लौकिकी हि प्रसिद्धिः,(३) रूढिर्वेदार्थनिर्णये निमित्तं तदुपायत्वात् । यथाहुः—'य एव लौकिकाः शब्दास्त एव वैदिकास्त एव चैषामर्था' इति, न तु परीक्षकाणां परिभाषिकी, पौरुषेयी हि सा न वेदार्थनिर्णयनिबन्धनं सिद्धौषधादिप्रसिद्धिवत्(४) । तस्माद्रूढितस्तावन्न प्रधानं प्रतीयते, (५)योगस्त्वन्यत्रापि तुल्यः । तदेवमव्यक्तश्रुतावन्यथासिद्धायां (६)प्रकरणपरिशेषाभ्यां शरीरगोचरोऽयमव्यक्तशब्दः । यथा चास्य तद्गोचरत्वमुपपद्यते तथाग्रे दर्शयिष्यते । (७)तेषु शरीरादिषु मध्ये विषयांस्तद्गोचरान् विद्धि । यथाऽश्वोऽध्वानमालम्ब्य चलत्येवमिन्द्रियहयाः स्वगोचरमालम्ब्येति । (८)आत्मा भोक्तेत्याहुर्मनीषिणः । कथमिन्द्रियमनोयुक्तं योगो यथा भवति । इन्द्रियार्थमनःसन्निकर्षेण हि आत्मा गन्धादीनां भोक्ता । प्रधानस्याकाङ्क्षावतो वचनं प्रकरणमिति गन्तव्य(९) विष्णोः परमं पदं प्रधानमिति तदाकाङ्क्षामवतारयति—**"तैश्चेन्द्रियादिभिरसंयतै"**रिति ( पृ० ३८८ पं० ९ ) । असंयमाभिधानं व्यतिरेकमुखेन संयमावदातीकरणम् । परशब्दः श्रेष्ठवचनः । नन्वान्तरत्वेन यदि श्रेष्ठत्वं तदेन्द्रियाणामेव बाह्येभ्यो गन्धादिभ्यः श्रेष्ठत्वं स्यादित्यत आह **"अर्था ये शब्दादयः"** इति । नान्तरत्वेन श्रेष्ठत्वमपि तु प्रधानतया, तच्च विवक्षाधीनं, ग्रहेभ्यश्चेन्द्रियेभ्योऽतिग्रहतयाऽर्थानां प्राधान्यं श्रुत्वा(१०-

---

(१) भेदानामिति । परिमाणादव्यापित्वात्, समन्वयात्तदनुरागविज्ञानवेद्यत्वात्, कारणगतशक्तितः कार्यस्य प्रवृत्ते, वैश्वरूप्यस्य जगतः सृष्टिकाले इदमस्य कारणमिदमस्य कार्यमिति विभागात् प्रलये च तयोर्विभागाभावाच्च हेतोर्महदादिकार्यविशेषाणामव्यक्त कारणमस्तीति साङ्ख्यकारिकार्थ ।

(२) अव्यक्तपदेन किं रूढ्या प्रसिध्या प्रधान गृह्यते, योगाद्वा स्मार्तक्रमानुगृहीतयोगाद्वेति विकल्प्याद्य निराकरोति लौकिकी हीति । यथाहुरिति । शाबरभाष्यकारा इत्यर्थः । पारिभाषिकी रूढिरित्यनुषज्यते । अ हेतुमाह पौरुषेयीति । अत्र पुरुषसङ्केतो नाऽनादिवेदार्थज्ञानहेतु पुमतेर्विचित्रत्वादित्यनुमानाकारो बोध्य ।

(३) प्रसिद्धा रूढिरिति मु० मु० पु० पाठ ।

(४) अत्र प्रा० का० मु० पुस्तके मु० मु० पुस्तके च 'वेदार्थनिर्णयनिबन्धनसिद्धौषधादिप्रसिद्धिवदि' त्येव पाठो वर्तते, अनन्तकृष्णशास्त्रिभिश्च 'वेदार्थनिर्णयनिबन्धनसिद्धौ निमित्त औषधादिप्रसिद्धिवत्' इति संस्करण कृतमस्मत्कृतसंस्करण च विद्वत्सन्तोषकं भवेदिति आशास्महे ।

(५) द्वितीयविकल्पं निरस्यन्नाह योगस्त्विति । अन्यत्र—अन्यस्मिन्सूक्ष्मेऽस्त्व दुर्लक्ष्ये च ।

(६) प्रकरणेति । प्रकरणनिरूपणेन परिशेषाच्चाव्यक्तशब्दो शरीरवाचक सिध्यतीत्यर्थः । ('तृतीय निराकरोति प्रकरणे'ति इत्यादि प्रतीकदर्शनात् इयं भामती स्मार्तक्रमानुगृहीतयोगाद्वेति तृतीयकल्पनिराकरणपरेति कल्पतरुकारैर्व्याख्यातम्, किन्तु भामतीस्यैतद्ग्रन्थस्यैतद्विकल्पानिरासकत्वापरत्वात्तत् न युक्तम् इति सुधीभिर्ध्येयम् । 'न तु परीक्षकाणा'मित्यादिभामतीग्रन्थ एव तृतीयविकल्पनिराकरण पर इति वयं ब्रूम ।

(७) विषयांस्तेषु गोचरानिति श्रुति व्याचष्टे तेष्विति ।

(८) आत्मेन्द्रियमनोयुक्तमिति व्याचष्टे आत्मेति । (९) शरीररूपरथादिभिरित्यादि ।

(१०) 'इन्द्रियाणां ग्रहत्वं विषयाणामतिग्रहत्वम्' इति ३।२ बृहदारण्यकश्रुत्येत्यर्थः ।

विवक्षितमितीन्द्रियेभ्योऽर्थानां प्राधान्यात् परत्वं भवति । घ्राणजिह्वावाक्चक्षुःश्रोत्रमनोहस्तत्वचो हीन्द्रियाणि श्रुत्याष्टौ ग्रहा उक्ताः, गृह्णन्ति वशीकुर्वन्ति खल्वेतानि पुरुषपशुमिति । न चैतानि स्वरूपतो वशीकर्तुमीशते यावदस्मै पुरुषपशवे गन्धरसनामरूपशब्दकामकर्मस्पर्शानोपहरन्ति । अत एव गन्धादयोऽष्टावतिग्रहास्तदुपहारेण ग्रहाणां ग्रहत्वोपपत्तेः । तदिदमुक्तम् **"इन्द्रियाणां ग्रहत्वं विषयाणामतिग्रहत्वमिति श्रुतिप्रसिद्धेरि"**ति ( पृ० ८९९ पं० ५ )। (१)ग्रहत्वेनेन्द्रियैः साम्येऽपि मनसः स्वगतेन विशेषणार्थेभ्यः परत्वमाह **"विषयेभ्यश्च मनसः परत्व"**मिति । कस्मात्पुना रथित्वेनोपक्षिप्तो गृह्यत इत्यत आह—**"आत्मशब्दादि"**ति । तत्प्रत्यभिज्ञानादित्यर्थः । श्रेष्ठत्वे हेतुमाह—**"भोक्तुश्चे"**ति । तदनेन जीवात्मा स्वामितया महानुक्तः । अथ वा श्रुतिस्मृतिभ्यां हैरण्यगर्भी बुद्धिरात्मशब्देनोच्यत इत्यत आह—**"अथ वे"**ति । **"पूरि"**ति । भोग्यजातस्य बुद्धिरधिकरणमिति बुद्धिः पूस्तदेव सर्वासां बुद्धीनां प्रथमजहिरण्यगर्भबुद्ध्येकनीडतया हिरण्यगर्भबुद्धेर्महत्त्वं चापनादात्मत्वं च । अत एव बुद्धिमात्रात्पृथक्करणमुपपन्नम् । नन्वेतस्मिन् पक्षे हिरण्यगर्भबुद्धेरात्मत्वान्न रथिन आत्मनो भोक्तुरत्रोपादानमिति न रथमात्रं परिशिष्यतेऽपि तु रथवानपीत्यत आह—**"एतस्मिंस्तु पक्ष" इति** ( पृ० ३९० पं० २ )। (२)यथा हि समारोपितं प्रतिबिम्बं बिम्बान्न वस्तुतो भिद्यते तथा न परमात्मनो विज्ञानात्मा वस्तुतो भिद्यत इति परमात्मैव रथवानिहोपात्तस्तेन रथमात्रं परिशिष्टमिति । अथ रथादिरूपककल्पनायाः शरीरादिषु किं प्रयोजनमित्यत आह—**"शरीरेन्द्रियमनोबुद्धिविषयवेदनासंयुक्तस्य ही"**ति । वेदना—सुखाद्यनुभवः । प्रत्यर्थमवतीति(३) प्रत्यगात्मेह जीवोऽभिमतस्तस्य ब्रह्मावगतिः । न चजीवस्य ब्रह्मत्वं मानान्तरासिद्धं, येनात्र नागमोऽपेक्ष्येतेत्याह—**"तथा चे"**ति । (४)वागिति च्छान्दसो द्वितीयालोपः । शेषमतिरोहितार्थम् ॥ १ ॥

पूर्वपक्षिणोऽनुशयबीजनिराकरणपरं सूत्रम्(५) ।

## सू० सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

प्रकृतेर्विकाराणामनन्यत्वात् प्रकृतेरव्यक्तत्वं विकार उपचर्यते । यथा 'गोभिः श्रीणीते'ति गोशब्दस्तद्विकारे पयसि । अव्यक्तात् कारणाद् विकाराणामनन्यत्वेनाव्यक्तशब्दार्हत्वे प्रमाणमाह— **"तथा च श्रुतिरि"**ति ( पृ० ३९१ पं० १ ) अव्याकृतमव्यक्तमित्यनर्थान्तरम् ॥ २ ॥

नन्वेवं सति(६) प्रधानमेवाभ्युपेतं भवति, सुखदुःखमोहात्मकं हि जगदेवम्भूतादेव कारणाद्भवितुमर्हति कारणात्मकत्वात्कार्यस्य, यच्च तस्य सुखात्मकत्वं तत्सत्त्वम्, यच्च तस्य दुःखात्मकत्वं तद्रजः, यच्च तस्य मोहात्मकत्वं तत्तमः, तथा चाव्यक्तं प्रधानमेवाभ्युपेतमिति

---

( १ ) ननु मनस इन्द्रियत्वेनार्थेभ्योऽपरत्वात्कथं 'अर्थेभ्यश्च परं मन' इति सङ्गच्छत इत्यत आह ग्रहत्वेनेति । ( २ ) ननु रथिन संसारिण कथमसंसार्यात्मत्वेन निर्देशोऽभत आह यथाहीति ।

( ३ ) अवगच्छति । ( ४ ) वागिति । यच्छेद्वाङ्मनसीत्यत्रेत्यर्थः ।

( ५ ) सूत्रमिति । पूर्वपक्ष्यसन्तोषनिराकरणाय शरीरमेव रूपकेण रथेन विन्यस्तमित्यर्थः ।

( ६ ) कार्यकारणभेदे सति ।

शङ्कानिराकरणार्थं सूत्रम्—

## सू० तदधीनत्वादर्थवत् ॥ ३ ॥

प्रधानं हि सांख्यानां (१)सेश्वराणामनीश्वराणां वेश्वरात् क्षेत्रज्ञेभ्यो वा वस्तुतो भिन्नं शक्यं निर्वक्तुम् । ब्रह्मणस्त्वियमविद्या शक्तिर्मायादिशब्दवाच्या न शक्या, तत्त्वेनान्यत्वेन वा निर्वक्तुम् । इदमेवास्या अव्यक्तत्व यदनिर्वाच्यत्वं नाम । सोऽयमव्याकृतवादस्य प्रधानवादाद्भेदः । अविद्याशक्तेश्चेश्वराधीनत्वं तदाश्रयत्वात् । न च द्रव्यमात्रमशक्तं कार्यायालमिति शक्तेरर्थवत्त्वं, तदिदमुक्त**मर्थवदिति** । (२)स्यादेतत्, यदि ब्रह्मणोऽविद्याशक्त्या संसारः प्रतीयते हन्त मुक्तानामपि पुनरुत्पादप्रसङ्गः, तस्याः प्रधानवत्तादवस्थ्यात्, तद्विनाशे वा समस्तसंसारोच्छेदस्तन्मूलाविद्याशक्तेः समुच्छेदादित्यत आह—"**मुक्तानां च पुनर्बन्धस्यानुत्पत्तिः**, कुतः ? **विद्यया तस्या बीजशक्तेर्दाहात्**" ( पृ० ३७२ पं० २ ) । अयमभिसन्धिः । न वयं प्रधानवदविद्यां सर्वजीवेष्वेकामाचक्ष्महे येनैवमुपालभेमहि, किं त्वियं प्रतिजीवं भिद्यते । तेन यस्यैव जीवस्य विद्योत्पन्ना तस्यैवाविद्याऽपनीयते न जीवान्तरस्य, भिन्नाधिकरणयोर्विद्याविद्ययोरविरोधात्, तत्कुतः समस्तसंसारोच्छेदप्रसङ्गः ? प्रधानवादिनां त्वेष दोषः, प्रधानस्यैकत्वेन तदुच्छेदे सर्वोच्छेदोऽनुच्छेदे वा न कस्यचिदित्यनिर्मोक्षप्रसङ्गः । प्रधानभेदेऽपि चेत्तदविवेकख्यातिलक्षणाविद्यासदसत्त्वनिबन्धनौ बन्धमोक्षौ तर्हि कृत प्रधानेनाविद्यासदसद्भावाभ्यामेव तदुपपत्तेः । न चाविद्योपाधिभेदाधीनो जीवभेदो जीवभेदाधीनश्चाविद्योपाधिभेद इति परस्पराश्रयादुभयासिद्धिरिति साम्प्रतम् । अनादित्वाद्बीजाङ्कुरवदुभयसिद्धेः । (३)अविद्यात्वमात्रेण चैकत्वोपचारोऽव्यक्तमिति चाव्याकृतमिति चेति । नन्वेवमविद्यैव जगद्बीजमिति कृतमीश्वरेणेत्यत आह "**परमेश्वराश्रये**"ति । नह्यचेतनं चेतनानधिष्ठितं कार्याय पर्याप्तमिति स्वकार्यं कर्तुं परमेश्वरं निमित्ततयो(४)पादानतया चाश्रयते, प्रपञ्चविभ्रमस्य हीश्वराधिष्ठानत्वमहिविभ्रमस्येव रज्ज्वधिष्ठानत्वम्, तेन यथाऽहिविभ्रमो रज्जूपादान एवं प्रपञ्चविभ्रम ईश्वरोपादानस्तस्माज्जीवाधिकरणाप्यविद्या निमित्ततया विषयतया चेश्वरमाश्रयत इतीश्वराश्रयेत्युच्यते, न त्वाधारतया, विद्यास्वभावे(५) ब्रह्मणि तदनुपपत्तेरिति । अत एवाह "**यस्यां स्वरूपप्रतिबोधरहिताः शेरते संसारिणो जीवा**" इति । यस्यामविद्यायां (६)सत्यां शेरते जीवा, जीवानां स्वरूपं वास्तवं ब्रह्म तद्बोधरहिताः शेरत इति लय उक्तः, संसारिण इति विक्षेप उक्तः । "**अव्यक्ताधीनत्वाज्जीवभावस्ये**"ति । यद्यपि जीवाव्यक्तयोरनादित्वेनानियतं पौर्वापर्यं

---

( १ ) विज्ञानभिक्षवादीनाम् मते ईश्वरात्, अनीश्वराणां प्राच्यसांख्यानां क्षेत्रज्ञेभ्य इति सम्बन्ध ।

( २ ) एकैवाविद्येति मन्वानस्याशङ्का स्यादेतदित्यादिना ।

( ३ ) यद्यविद्या नाना तर्हि कथ श्रुतावव्यक्तमित्येकवचनमत आहाविद्यात्वेति ।

( ४ ) निमित्ततया—प्रेरकतयाऽविद्याविषयत्वेन चाविद्याप्रेरकत्वमीश्वरस्य गन्धस्येव प्राणं प्रतीति भावः । उपादानतया जगद्भ्रमाधिष्ठानतयेत्यर्थ ।

( ५ ) निरवद्यमिति श्रुत्युक्तनिर्दोषज्ञानात्मत्वं विद्यास्वभावत्वम् ।

( ६ ) उपाधिभूताऽविद्यैवाप्रबोधेऽपि कारणमित्याह सत्यामिति ।

तथाप्यव्यक्तस्य पूर्वत्वं विवक्षित्वैतदुक्तं **"सत्यपि शरीरवदिन्द्रियादीना"**मिति । (१)गोबलीवर्दपदवदेतद्द्रष्टव्यम् ।

आचार्यदेशीयमतमाह **"अन्ये त्वि"**ति (पृ० ३९३ पं० १) एतद्दूषयति **"तैस्त्वि"**ति । प्रकरणपारिशेष्ययोरुभयत्र तुल्यत्वान्नैकग्रहणनियमहेतुरस्ति । शङ्कते— **"आम्नातस्यार्थ"**मिति । अव्यक्तपदमेव स्थूलशरीरव्यावृत्तिहेतुर्व्यक्तत्वात्तस्येति शङ्कार्थः । निराकरोति—**"नैकवाक्यताधीनत्वादि"**ति । प्रकृतहान्यप्रकृतप्रक्रियाऽप्रसङ्गेनैकवाक्यत्वे सम्भवति न वाक्यभेदो युज्यते । न चाकाङ्क्षां विनैकवाक्यत्वमुभयं च प्रकृतमित्युभयं ग्राह्यत्वेनेहाकाङ्क्षितमित्येकाभिधायकमपि पदं शरीरद्वयपरम् । (२)न च मुख्यया वृत्त्याऽतत्परमित्यौपचारिकं न भवति । यथोपहन्तृमात्रनिराकरणाकाङ्क्षायां काकपदं प्रयुज्यमानं श्वादिसर्वहन्तृपरं (३)विज्ञायते । यथाहुः—

काकेभ्यो रक्ष्यतामन्नमिति बालोऽपि नोदितः ।
उपघातप्रधानत्वान्न श्वादिभ्यो न रक्षति ॥ इति ।

ननु न शरीरद्वयस्यात्राकाङ्क्षा, किन्तु दुःशोधत्वात्सूक्ष्मस्यैव शरीरस्य, न तु षाट्कौशिकस्य स्थूलस्य, तद्धि दृष्टबीभत्सतया सुकरं वैराग्यविषयत्वेन शोधयितुमित्यत आह—**"न चैवं मन्तव्य"मिति** ( पृ० ३९४ पं० १ ) । विष्णोः परमं पदमवगमयितुं परं परमत्र प्रतिपाद्यत्वेन प्रस्तुतं न तु वैराग्याय शोधनमित्यर्थः । अलं वा विवादेन भवतु सूक्ष्मशरीरं परिशोध्यं तथापि न सांख्याभिमतमत्र प्रधानं परमित्यभ्युपेत्याह—**"सर्वथापि त्वि"**ति ॥ ३ ॥

## ज्ञेयत्वावचनाच्च ॥ ४ ॥

इतोऽपि नायमव्यक्तशब्दः सांख्याभिमतप्रधानपरः । सांख्यैः खलु प्रधानाद्विवेकेन पुरुषं निःश्रेयसाय ज्ञातुं वा विभूत्यै वा प्रधानं ज्ञेयत्वेनोपक्षिप्यते, न चेह जानीयादिति चोपासीतेति वा विधिविभक्तिश्रुतिरस्ति, अपि त्वव्यक्तपदमात्रं, न चैतावता सांख्यस्मृतिप्रत्यभिज्ञानं भवतीति भावः ॥ ४ ॥

ज्ञेयत्वावचनस्यासिद्धिमाशङ्क्य तत्सिद्धिप्रदर्शनार्थं सूत्रम्—

## ( सू० ) वदतीति चेन्न, प्राज्ञो हि प्रकरणात् ॥ ५ ॥

निगदव्याख्यातमस्य भाष्यम् ॥ ५ ॥

## ( सू० ) त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

वरप्रदानोपक्रमा हि मृत्युनचिकेतःसम्वादवाक्यप्रवृत्तिरासमाप्तेः कठवल्लीनां लक्ष्यते ।

---

( १ ) गोबलीवर्दपदवदिति । यथा बलीवर्दमानयेत्युक्ते गामानयेति प्रयोगे गोपदमितरगोविषयमेव जीवत्वनियामकेऽव्यक्ते पूर्वत्वमुपचरितमित्यर्थः ।

( २ ) ननु अव्यक्तपदस्य स्थूलदेहे मुख्यत्वाभावादौपचारिकत्वमिति न युक्तं, सकृच्छ्रुतस्य सूक्ष्मस्थूलदेहविषयतया मुख्यगौणत्वे वैरूप्यापातादित्याशङ्क्याह न चेति ।

( ३ ) विज्ञायत इति । तथा पुरुषपरत्वप्रतिपत्त्यर्थं तुल्यवदाकाङ्क्षितप्रस्तुतशरीरद्वयं छत्रिन्यायेन लक्षयदव्यक्तपदं न सूक्ष्ममेवाभिधत्त इति पूरणीयम् ।

मृत्युर्नचिकेतसे कुपितेन पित्रा प्रहिताय तुष्टस्त्रीन् वरान् प्रददौ, नचिकेतास्तु प्रथमेन वरेण पितुः सौमनस्यं वव्रे, द्वितीयेनाग्निविद्यां तृतीयेनात्मविद्याम्—'वराणामेष वरस्तृतीय' इति वचनात् । न तु तत्र वरप्रदाने प्रधानगोचरे स्तः प्रश्नप्रतिवचने । तस्मात्कठवल्लीष्वग्निजीव परमात्मपरैव वाक्यप्रवृत्तिर्न त्वप्रकान्तप्रधानपरा भवितुमर्हतीत्याह—"इतश्च न प्रधानस्याव्यक्तशब्दवाच्यत्व"मिति ( पृ० ३९५ पं० २१ ) । 'हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनमि'त्यनेन(१) व्यवहितं जीवविषयं 'यथा तु मरणं प्राप्यात्मा भवति गौतमे'त्यादिप्रतिवचनमिति योजना । अत्राह चोदकः—किं जीवपरमात्मनोरेक एव प्रश्नः, किं वान्यो जीवस्य 'येयं प्रेते'मनुष्य इति प्रश्नोऽन्यश्च परमात्मनो'ऽन्यत्र धर्मादि'त्यादिः । एकत्वे (२)सूत्रविरोध"स्त्रयाणामि"ति । भेदे तु सौमनस्यावाप्त्यग्न्यात्मज्ञानविषयवरत्रयप्रदानानन्तर्भावो'ऽन्यत्र धर्मादि'त्यादेः प्रश्नस्य । (३)तुरीयवरान्तरकल्पनायां वा तृतीय इति श्रुतिबाधप्रसङ्गः । (४)वरप्रदानानन्तर्भावे प्रश्नस्य तद्वत् प्रधानाख्यानमप्यनन्तर्भूतं वरप्रदानेऽस्तु महतः परमव्यक्तमित्याक्षेपः ।

परिहरति "अत्रोच्यते नैवं वयमिहे"ति । ( पृ० ३९७ पं० ११ ) । वस्तुतो जीवपरमात्मनोरभेदात्प्रष्टव्याभेदेनैक एव प्रश्नः, (५)अत एव प्रतिवचनमप्येकं, सूत्रं त्ववास्तवभेदाभिप्रायम् । वास्तवश्च जीवपरमात्मनोरभेदस्तत्रतत्र श्रुत्युपन्यासेन भगवता भाष्यकारेण दर्शितः । तथा जीवविषयस्यास्तित्वनास्तित्वप्रश्नस्येत्यादि । 'येयं प्रेत' इति हि नचिकेतसः प्रश्नमुपश्रुत्य तत्तत्कामविषयमलोभं चास्य प्रतीत्य मृत्यु 'र्विद्याभीप्सिनं नचिकेतसं मन्य' इत्यादिना नचिकेतस प्रशस्य प्रश्नमपि तदीयं प्रशंसन्नस्मिन्प्रश्ने ब्रह्मैवोत्तरमुवाच—"तं दुर्दर्शमि"ति ( पृ० ३९९ पं० ७ )। यदि पुनर्जीवात्प्राज्ञो भिद्येत जीवगोचरः प्रश्नः प्राज्ञगोचरं चोत्तरमिति किं केन सङ्गच्छेत । (६)अपि च यद्विषयं प्रश्नमुपश्रुत्य मृत्युनैष प्रशंसितो नचिकेता यदि तमेव भूयः पृच्छेत्तदुत्तरे चावदध्यात् ततः प्रशंसा दृष्टार्था स्यात्, प्रश्नान्तरे त्वसावस्थाने प्रसारिता सत्यदृष्टार्था स्यादित्याह—"यत्प्रश्ने"ति । यस्मि(७)न्प्रश्नो यत्प्रश्नः । शेषमतिरोहितार्थम् ॥ ६ ॥

## ( सू० ) महद्वच्च ॥ ७ ॥

अनेन सांख्यप्रसिद्धेर्वैदिकप्रसिद्ध्या विरोधान्न सांख्यप्रसिद्धिर्वेद आदर्तव्येत्युक्तम् । सांख्यानां महत्तत्त्वं सत्तामात्रं पुरुषार्थक्रियाक्षमं सत्तस्य भावः सत्ता तन्मात्रं महत्तत्त्वमिति ।

---

( १ ) 'व्यवहितं जीवविषयम्' ( पृ० ३९६ पं० १८ ) इति भाष्यस्थव्यवहितपदार्थमाह इत्यनेनेति । 'हन्ते'त्यादि 'सनातन'मित्यन्तं परमात्मप्रतिवचनप्रतिज्ञावाक्यं, तेन व्यवहितं यथेत्यादि जीवप्रश्नस्य प्रतिवचनमित्यर्थः । ( २ ) अग्न्यात्मविषययोर्द्वित्वादित्यादिः।

( ३ ) यदि प्रश्नान्यथानुपपत्त्या वरान्तरं कल्प्यते तत्राह तुरीयेति ।

( ४ ) वरत्रयमेवास्तु परमात्मप्रश्नश्च तदनन्तर्गत एव यथाऽवृतरत्नमालादानमित्याक्षेपे आह वरप्रदानानन्तर्भाव इति । ( ५ ) अतएव—जीवपरयोरभेदादेव ।

( ६ ) एवं प्रतिवचनेन जीवपराभेदं साधयित्वा शब्दप्रवृत्त्यापि साधयति अपि चेति । तदुत्तरे-तस्य प्रश्नस्योत्तरे, तमेव विषयं यथावदध्याज्जानीयादित्यर्थः ।

( ७ ) विषये न तु प्रश्ने, विषयगौरवेण प्रश्नप्रशंसासम्भवात् इति यत्प्रश्नेत्यादि भाष्यार्थो बोध्यः ।

या या (१)पुरुषार्थक्रिया शब्दाद्युपभोगलक्षणा च सत्त्वपुरुषान्यताख्यातिलक्षणा च सा सर्वा महति बुद्धौ समाप्यत इति महत्तत्त्वं सत्तामात्रमुच्यत इति ॥ ७ ॥

## सू० चमसवदविशेषात् ॥ ८ ॥

अजाशब्दो यद्यपि छागायां रूढस्तथाप्यध्यात्मविद्याधिकारान्न तत्र वर्तितुमर्हति । तस्माद्रूढेरसम्भवाद्योगेन वर्तयितव्यः । तत्र किं स्वतन्त्रं प्रधानमनेन मन्त्रवर्णेना(२)नानूद्यतामुत पारमेश्वरी मायाशक्तिस्तेजोबन्नव्याक्रियाकारणमुच्यताम् ? किं तावत्प्राप्तं, प्रधानमेवेति, तथाहि—यादृशं प्रधानं सांख्यैः स्मर्यते तादृशमेवास्मिन्नन्यूनानतिरिक्तं प्रतीयते, सा हि प्रधानलक्षणा प्रकृतिर्न जायत इत्यजा च एका च(३) लोहितशुक्लकृष्णा च । यद्यपि लोहितत्वादयो वर्णा न रजःप्रभृतिषु सन्ति, तथापि लोहितं कुसुम्भादि रञ्जयति रजोऽपि रञ्जयतीति लोहितम् । एवं प्रसन्नं पाथः शुक्लं सत्त्वमपि प्रसन्नमिति शुक्लम् । एवमावरकं मेघादि कृष्णं तमोप्यावरकमिति कृष्णम् । (४)परेणापि नाव्याकृतस्य स्वरूपेण लोहितत्वादियोग आस्थेयः, किन्तु तत्कार्यस्य तेजोबन्नस्य रोहितत्वादि कारण उपचरणीयम् । कार्यसारूप्येण वा कारणे कल्पनीयं तदस्माकमपि तुल्यम् । 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य'इति स्वात्मभेदश्रवणात् सांख्यस्मृतेरेवात्र मन्त्रवर्णे प्रत्यभिज्ञानं न त्वव्याकृतप्रक्रियायाः, तस्यामैकात्म्याभ्युपगमेनात्मभेदाभावात् । तस्मात्स्वतन्त्रं प्रधानं नाशब्दमिति प्राप्तम् । **तेषां साम्यावस्था अवयवधर्मैरिति** । अवयवाः प्रधानस्यैकस्य सत्त्वरजस्तमांसि तेषां धर्मा लोहितत्वादयस्तैरिति ।**"प्रजास्त्रैगुण्यान्विता"** ( पृ० ४०२ प० १ ) इति । सुखदुःखमोहात्मिकाः । तथाहि—मैत्रदारेषु नर्मदायां मैत्रस्य सुखं, तत्कस्य हेतोः ? तं प्रति सत्त्वसमुद्भवात्, तथा च तत्सपत्नीनां दुःखं, तत्कस्य हेतोः ? ताः प्रति रजःसमुद्भवात्, तथा चैत्रस्य तामविन्दतो मोहो विषादः, स कस्य हेतोः ? तं प्रति तमःसमुद्भवात् । नर्मदया च सर्वे भावा व्याख्याताः । तदिदं त्रैगुण्यान्वितत्वं प्रजानाम् । अनुशेत इति व्याचष्टे **"तामेवाविद्यये"ति** ।(५)विषया हि शब्दादयः प्रकृतिविकारास्त्रैगुण्येन सुखदुःखमोहात्मान इन्द्रियमनोहंकारप्रणालिकया बुद्धिसत्त्वमुपसंक्रामन्ति । तेन तद्बुद्धिसत्त्वं प्रधानविकारः सुखदुःखमोहात्मकशब्दादिरूपेण परिणमते । चितिशक्तिस्त्वपरिणामिन्य(६)प्रतिसंक्रमापि बुद्धिसत्त्वादात्मनो विवेकमबुध्यमाना बुद्धिवृत्त्यैव विपर्यासेनाविद्यया बुद्धिस्थान् सुखादीन् आत्म-

---

(१) ननु सांख्यैर्बुद्धेर्महत्त्वेनाङ्गीकारात् 'सांख्यैः सत्तामात्रे महच्छब्दः प्रयुक्त' इति भाष्यं कथं सङ्गच्छत इत्याशङ्क्याह पुरुषार्थेति । अर्थक्रियाकारिणि तैः सच्छब्दः प्रयुक्तः पुरुषापेक्षितप्रयोजनकारितया महत्तत्त्ववाचको न तु सामान्यवाचीत्यर्थः ।

(२) अनेन मन्त्रवर्णेन—अजामेकामित्यादिमन्त्राक्षरेण ।

(३) एका चेत्यनेन विशेषणेन मायाया प्रतिजीवं भेदादेकत्वानुपपत्तिर्मायाशक्तिपक्षे सूचिता ।

(४) न च गौणत्वं दोषः समत्वादित्याह परेणापीति । वेदान्तिनापीत्यर्थः ।

(५) 'तामेवाविद्यये'तिभाष्ये तच्छब्दार्थो विषयज्ञानाधारः प्रधानकार्यमन्तःकरणमित्याह विषया हीति ।

(६) अपरिणामिनीति । कूटस्थनित्यत्वात्स्वयं सुखादिरूपेणापरिणामिनी, परिणामिन्यां बुद्धौ वस्तुतोऽप्रविष्टत्वादप्रतिसंक्रमापीत्यर्थः । आत्मत्वेनोपगम्येत्येतद्भाष्यं विवृणोति बुद्धिस्थानिति । विपर्यासेति बुद्धयैक्येन बुद्धिधर्मानात्मन्यभिमन्यमाना सुखादिमतीव चितिशक्तिरात्मा बभूवेति सम्बन्धः ।

न्यभिमन्यमाना सुखादिमतीव बभूव । तादिदमुक्तं—"**सुखी दुःखी मूढोऽहमित्यविवेकतया संसरति,** एकः । सत्वपुरुषान्यताख्यातिसमुन्मूलितनिखिलवासनाविद्यानुबन्धस्त्वन्यो जहात्येनां प्रकृतिं–तदिदमुक्त"**मन्यः पुन**"रिति । भुक्तभोगामिति व्याचष्टे—'**कृतभोगापवर्गाम्**" । शब्दाद्युपलब्धिर्भोगः, (१)गुणपुरुषान्यताख्यातिरपवर्गः, अपवृज्यते हि तया पुरुष इति ।

एवं प्राप्तेऽभिधीयते–न 'तावदजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य' इत्येतदात्मभेदप्रतिपादनपरमपि तु सिद्धमात्मभेदमनूद्य बन्धमोक्षौ प्रतिपादयतीति, (२)न चानूदितो भेद

'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा'

इत्यादिश्रुतिभिरात्मैकत्वप्रतिपादनपराभिर्विरोधात्कालत्रिकोऽवतिष्ठते । तथा च न सांख्यप्रक्रियायाः प्रत्यभिज्ञानमित्यजावाक्यं चमसवाक्यवत्परिप्लवमानं न स्वतन्त्रप्रधाननिश्चयाय पर्याप्तं, तदिदमुक्तं सूत्रकृता–'चमसवदविशेषादि'ति ॥ ८ ॥

उत्तरसूत्रमवतारयितुं शङ्कते—**तत्र त्विदं तच्छिर इति ।** सूत्रमवतारयति—**अत्र ब्रूमः ।**

## सू० ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॥ ९ ॥

(३)सर्वशाखाप्रत्ययमेकं ब्रह्मेति स्थितौ शाखान्तरोक्तरोहितादिगुणयोगिनी तेजोबन्नलक्षणा जरायुजाण्डजस्वेदजोद्भिज्जचतुर्विधभूतग्रामप्रकृतिभूतेयमजा प्रतिपत्तव्या । 'रोहितशुक्लकृष्णामि'ति रोहितादिरूपतया तस्या एव प्रत्यभिज्ञानान्न तु सांख्यपरिकल्पिता प्रकृतिः, तस्या अप्रामाणिकतया श्रुतहान्यश्रुतकल्पनाप्रसङ्गाद्रञ्जनादिना च रोहिताद्युपचारस्य सति मुख्यार्थसम्भवेऽयोगात्, तदिदमुक्तं "**रोहितादीनां शब्दानामि**"ति (पृ० ५०३ पं० ४)। अजापदस्य च समुदायप्रसिद्धिपरित्यागेन न जायत इत्यवयवप्रसिद्ध्याश्रयणे दोषप्रसङ्गात् । (४)अत्र तु रूपककल्पनया(५) समुदायप्रसिद्धेरेवानपेक्षायाः स्वीकारात् । (६)अपि चायमपि श्रुतिकलापोऽस्मद्दर्शनानुगुणो न सांख्यस्मृत्यनुगुण इत्याह—"**तथेहापी**"ति । "**किंकारणं ब्रह्मेत्युपक्रम्ये**"ति । ब्रह्मस्वरूपं तावज्जगत्कारणं न भवति विशुद्धत्वात्तस्य, यथाहुः—

पुरुषस्य च शुद्धस्य नाशुद्धा विकृतिर्भवेत्

इत्याशयवतीय श्रुतिः पृच्छति "**किंकारणं**" ? यस्य ब्रह्मणो जगदुत्पत्तिस्तत्किंकारणं ब्रह्मेत्यर्थः । 'ते ब्रह्मविदो ध्यानयोगेनात्मानं गताः प्राप्ता, अपश्यन्नि'ति योजना । "यो

---

(१) कृतत्वोपपत्त्यर्थमपवर्गशब्दस्तदुपायपर इत्याह गुणेति ।

(२) न चानुवादसामर्थ्यात्प्रमाणं कल्प्यं विरोधादित्याह न चेति ।

(३) विप्रकृष्टतया शाखान्तरेण ब्रह्मनिर्णयासम्भवमाशङ्क्याह सर्वेति ।

(४) कल्पनायामिति मु० मु० पु० पाठः ।

(५) ननु 'अजावदजे'तिगुणवृत्त्यङ्गीकारे रूढि परित्यक्ता स्यादित्यत आहात्र त्विति । रूढेरपहृते योगे रूढार्थगुणसम्बन्धात् सिद्धा वृत्तिराश्रितेति रूढिरपि स्वीकृताऽन्यथा गुणयोगस्यैवासिद्धेरित्यर्थ ।

(६) न केवलं शाखान्तरादेव किन्तु प्रकरणादपि अव्याकृतरूप एव युक्त इत्याहापिचेति ।

योनिं योनिमि''ति । अविद्या शक्तिर्योनिः सा च प्रतिजीवं नानेत्युक्त(१)मतो वीप्सोपपन्ना । शेषमतिरोहितार्थम् ॥ ९ ॥

सूत्रान्तरमवतारयितुं शङ्कते "कथं पुनरि''ति (पृ० ४९४ पं० १)। अजाकृतिर्जातिस्तेजोवन्नेषु नास्ति । न च तेजोबन्नानां जन्मश्रवणादजन्मनिमित्तोप्यजाशब्दः सम्भवतीत्याह—"न च तेजोबन्नानामि''ति । सूत्रमवतारयति–"अत उत्तरं पठति" ॥

**सू० कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥**

ननु किं छागा लोहितशुक्लकृष्णैवान्यादृशीनामपि छागानामुपलम्भादित्यत आह–"यदृच्छये''ति । बहुबर्करा—बहुशावा । शेषं निगदव्याख्यातम् ॥ १० ॥

**सू० न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥**

(२)अथान्तरसङ्गतिमाह–"एवं परिहृतेपीति ( पृ० ४०५ पं० ८ )। (३)पञ्चजना इति हि समासार्थः पञ्चसंख्यया सम्बध्यते । न च 'दिक्संख्ये संज्ञायामि'ति समासविधानान्मनुजेषु निरूढोऽयं पञ्चजनशब्द इति वाच्यम् । तथाहि सति पञ्च मनुजा इति स्यात् । एवं चात्मनि पञ्चमनुजानामाकाशस्य च प्रतिष्ठानमिति निस्तात्पर्यं सर्वस्यैव प्रतिष्ठानात् । तस्माद्रूढेरसम्भवात्तत्यागेनात्र योग आस्थेयः । जनशब्दश्च कथञ्चित्तत्त्वेषु व्याख्येयः । (४)तत्रापि किं पञ्च प्राणादयो वाक्यशेषगता विवक्ष्यन्ते उत तदतिरिक्ता अन्यएव वा केचित् । तत्र पौर्वापर्यपर्यालोचनया काण्वमाध्यन्दिनवाक्ययोर्विरोधात्, एकत्र हि ज्योतिषा पञ्चत्वमन्ने नेतरत्र । न च षोडशिग्रहणाग्रहणवद्विकल्पसम्भवोऽनुष्ठानं हि विकल्प्यते न वस्तु, वस्तुतत्त्वकथा चेयं नानुष्ठानकथा, विध्यभावात् , तस्मात्कानि चिदेव तत्त्वानीह पञ्च प्रत्येकं पञ्चसंख्यायोगीनि पञ्चविंशतितत्त्वानि भवन्ति । सांख्यैश्च प्रकृत्यादीनि पञ्चविंशति तत्त्वानि स्मर्यन्ते इति तान्येवानेन मन्त्रेणोच्यन्ते इति नाशब्द प्रधानादि । न चाधारत्वेनात्मनो व्यवस्थानात्स्वात्मनि चाधाराधेयभावस्य विरोधाद् आकाशस्य च व्यतिरेचनात् त्रयोविंशतिर्जना इति स्यान्न पञ्च पञ्चजना इति वाच्यम् । (५)सत्यप्याकाशात्मनोर्व्यतिरेचने मूलप्रकृतिभागैः सत्त्वरजस्तमोभिः पञ्चविंशतिसंख्योपपत्तेः । तथा च सत्याकाशात्मभ्यां सप्तविंशतिसंख्यायां पञ्चविंशति तत्त्वानीति स्वसिद्धान्तव्याकोप इति चेत् । न । मूलप्रकृतित्वमात्रे-

---

( १ ) उक्तमिति । आनुमानिकाधिकरण इति शेषः ।

( २ ) अथान्तरेति । पूर्वत्राध्यात्मप्रकरणे रूढच्छागाया असम्बन्धादजातेजआदिकेत्युक्तमिहापि रूढेर्मनुष्यग्रहे वाक्यस्य निस्तात्पर्यकत्वप्रसङ्गादवयववृत्त्या सांख्यस्मृततत्त्वपरतेत्यवान्तरसङ्गतिमधिकरणसङ्गतिमाहेत्यर्थ ।

( ३ ) ननूपसर्जनस्य संख्याया संख्यान्तरेण विशेषणायोगात्कथं पञ्चविंशतिलाभोऽत आह पञ्चनाज इति ।

( ४ ) ननु रूढ्यत्यागेन मनुष्यसम्बन्धिन प्राणादयो लक्ष्यन्ते तथाच निस्तात्पर्यमत आह तत्रापीति । रूढ्यर्थग्रहेऽपीत्यर्थः ।

( ५ ) आत्मकाशाभिन्नानां त्रयोविंशतितत्त्वानामपि प्रधानस्य त्रिधाकरणात्पञ्चविंशतित्वं श्रुतौ, स्मृतौ तु तत्त्वेष्वात्माकाशावन्तर्भाव्य प्रधानं चाभित्त्वा पञ्चविंशतितत्त्वगणनेत्यविरोध इत्याशयेनोत्तरयति सत्यपीति ।

णैकीकृत्य सत्त्वरजस्तमांसि पञ्चविंशतितत्त्वोपपत्तेः । (१)द्विरुभावेन तु तेषां सप्तविंशति-त्वविरोधस्तस्मान्नाशाब्दी सांख्यस्मृतिरिति प्राप्ते (२)मूलप्रकृतिः प्रधानम्, नासावन्यस्य विकृतिरपि तु प्रकृतिरेव तदिदमुक्तं "मूले"ति ( पृ० ४०५ पं० १५ ) । महदहङ्कारः पञ्चतन्मात्राणि प्रकृतिश्च विकृतिश्च, तथाहि—महत्तत्वमहङ्कारस्य तत्वान्तरस्य प्रकृतिर्मूल-प्रकृतेस्तु विकृतिः, एवमहङ्कारतत्वं महतो विकृतिः, प्रकृतिश्च तदेव तामसं सत् पञ्चतन्मा-त्राणाम् , तदेव सात्त्विकं सत् प्रकृतिरेकादशेन्द्रियाणाम् , पञ्चतन्मात्राणि चाहङ्कारस्य विकृ-तिराकाशादीनां पञ्चानां प्रकृतिस्तदिदमुक्तं "**महदाद्याः प्रकृतिविकृतयः सप्त । षो-डशकश्च विकारः**" षोडशसंख्यावच्छिन्नो गणो विकार एव । पञ्चभूतान्यतन्मा(३)त्रा-ण्येकादशेन्द्रियाणीति षोडशको गणः । यद्यपि पृथिव्यादयो गोघटादीनां प्रकृतिस्तथापि (४)न ते पृथिव्यादिभ्यस्तत्वान्तरामिति न प्रकृतिः । तत्वान्तरोपादानत्वं चेह प्रकृतित्वम-भिमतं नोपादानमात्रत्वमित्यविरोधः । पुरुषस्तु कूटस्थनित्योऽपरिणामी न कस्यचित्प्रकृ-तिर्नापि विकृतिरिति ।

एवं प्राप्ते ऽभिधीयते—"**न संख्योपसङ्ग्रहादपि प्रधानादीनां श्रुतिमत्त्वाशङ्का कर्तव्या । कस्मात् ? नानाभावात् । नाना ह्येतानि पञ्चविंशतितत्त्वानि नैषां पञ्चशः पञ्चशः साधारणधर्मो ऽस्ति**" (पृ० ४०६ प० ३ ) । न खलु सत्त्वरजस्त-मोमहदहङ्काराणामेकः क्रिया वा गुणो वा द्रव्यं वा जातिर्वा धर्मः पञ्चतन्मात्रादिभ्यो व्या-वृत्तः सत्त्वादिषु चानुगतः कश्चिदस्ति(५) । नापि पृथिव्यप्तेजोवायुघ्राणानां, नापि रसनच-क्षुस्त्वक्श्रोत्रवाचां, (६)नापि पाणिपादपायूपस्थमनसां, येनैकेनासाधारणेनोपगृहीताः पञ्च पञ्चका भवितुमर्हन्ति । पूर्वपक्षैकदेशिन(७)मुत्थापयति—"**अथोच्येत पञ्चविंशतिसंख्यै-वेयमि**"ति । यद्यपि परस्यां संख्यायामवान्तरसंख्या द्वित्वादिका नास्ति,(८) तथापि त-त्पूर्वं तस्याः सम्भवात्पौर्वापर्यलक्षणया प्रत्यासत्त्या परसंख्योपलक्षणार्थं पूर्वसंख्योपन्यस्यत इति । दूषयति "**अयमेवास्मिन्पक्षे दोष**" इति । न च पञ्चशब्दो जनशब्देन सम-स्तोऽसमस्तः शक्यो वक्तुमित्याह—"**परश्चात्र पञ्चशब्द**" इति (पृ० ४०७ पं० १)

---

( १ ) पृथग्भावेन ।

( २ ) भाष्योक्तां मायामाह मूलेति । अत्र 'प्राप्ते मूलेती'ति मु० मु० पु० पाठः । अध्यवसायो महदाख्या बुद्धिः, अभिमानोऽहङ्कारः, पञ्चतन्मात्राणि सूक्ष्माणि इत्यादिसांख्यतत्त्वकौमुद्यां विस्तरेण विवृतम् ।

( ३ ) स्थूलरूपाणि ।

( ४ ) पृथिव्यादीनां घटादिप्रकृतिकत्वात्कथं षोडशको विकार एवेत्यत्राह नत इति । उभयेषां स्थूल-तेन्द्रियग्राह्यता च समेति न तत्त्वान्तरत्वमित्यर्थः ।

( ५ ) अस्तीति । तथाचाकाशात्मानौ विहाय या पञ्चविंशतिसंख्योक्ता तस्यां नावान्तरत्वेन पञ्च-सङ्ख्यानिवेश इति भावः ।

( ६ ) नापीति। एवं च साधारणोपाध्यभावात् उद्रिक्ताकाशाना पृथिव्यादीनां ज्ञानेन्द्रियेभ्यो घ्राणमादाय, तथा तदतिरिक्तानां ज्ञानेन्द्रियाणां कर्मेन्द्रियेभ्यो वाचमाहृत्य, एवमुद्रेचितवाचां कर्मेन्द्रियाणां च न मनसा पञ्चत्वलाभ इति भावः ।　　( ७ ) पञ्चजनशब्दे समासमनङ्गीकुर्वन्तामित्यर्थः ।

( ८ ) नास्तीति । अपेक्षाबुद्धिनाशे द्वित्वादिनाशादिति शेषः । तथापीति । साहचर्याभावेऽपि हेतुहेतुम-द्भावरूपलक्षणाबीजसम्बन्धसत्त्वान्महासङ्ख्याया अवान्तरसङ्ख्यासम्बन्धः सम्भवतीत्यर्थः ।

ननु भवतु समासस्तथापि किमित्यत आह—"**समस्तत्वाच्चे**"ति। अपि च वीप्सायां पञ्चकद्वयग्रहणे दशैव तत्त्वानीति न सांख्यस्मृतिप्रत्यभिज्ञानामित्यसमासमभ्युपेत्याह—"**न पञ्चकद्वयग्रहणं पञ्चपञ्चे**"ति । (१)न चैका पञ्चसंख्या पञ्चसंख्यान्तरेण शक्या विशेष्टुम्, पञ्चशब्दस्य संख्योपसर्जनद्रव्यवचनत्वेन संख्याया उपसर्जनतया विशेषणेनासंसंयोगादित्याह—"**एकस्याः पञ्चसंख्याया**" इति। तदेवं पूर्वपक्षैकदेशिनि दूषिते परमपूर्वपक्षिणमुत्थापयति—"**नन्वापन्नपञ्चसंख्याका जना एवे**"ति ( पृ० ४०८ पं० १)। अत्र तावद्रूढौ सत्यां(२) न योगः सम्भवतीति वक्ष्यते, तथापि यौगिकं पञ्चजनशब्दमभ्युपेत्य दूषयति—"**युक्तं यत पञ्चपूलीशब्दस्ये**"ति । (३)पञ्चपूलीत्यत्र यद्यपि पृथक्त्वैकार्थसमवायिनी पञ्चसंख्यावच्छेदिकाऽस्ति तथापीयं समुदायिनोऽवच्छिनत्ति न समुदायं समासपदगम्यमतस्तस्मिन् कति ते समुदाया इत्यपेक्षायां पदान्तराभिहिता पञ्चसंख्या सम्बध्यते पञ्चेति, पञ्चजना इत्यत्र तु पञ्चसंख्ययोत्पत्तिशिष्टया जनानामवच्छिन्नत्वात्समुदायस्य च पञ्चपूलीवदत्राप्रतीतेर्न पदान्तराभिहिता संख्या सम्बध्यते। स्यादेतत्, संख्येयानां जनानां मा भूच्छब्दान्तरवाच्यसंख्यावच्छेदः पञ्चसंख्यायास्तु तयावच्छेदो भविष्यति, (४)नहि साप्यवच्छिन्नेत्यत आह–"**भवदपीदं विशेषणमि**"ति(५)उक्तोऽत्र दोषः, नह्युपसर्जनं विशेषणेन युज्यते पञ्चशब्द एव तावत्संख्येयोपसर्जनसंख्यामाह विशेषस्तु पञ्चजना इत्यत्र समासे, (६)विशेषणापेक्षायां तु न समासः स्यादसामर्थ्यान्नहि भवति ऋद्धस्य राजपुरुष इति समासोऽपि तु वृत्तिरेव ऋद्धस्य राज्ञः पुरुष इति, सापेक्षत्वेनासामर्थ्यादित्यर्थः । "**अतिरेकाच्चे**"ति अभ्युच्चयमात्रम्। यदि सत्त्वरजस्तमांसि प्रधानेनैकीकृत्यात्माकाशौ तत्त्वेभ्यो व्यतिरिच्येते तदा सिद्धान्तव्याकोपः। अथ तु सत्त्वरजस्तमांसि मिथो भेदेन विवक्ष्यन्ते, तथापि वस्तुतत्त्वव्यवस्थापने आधारत्वेना(७)त्मा निष्कृष्यतामाधेयान्तरेभ्यस्त्वाकाशस्याधेयस्य व्यतिरेचनमनर्थकमिति गमयितव्यम्। "**कथं च संख्यामात्रश्रवणे सती**"ति ( पृ० ४०९ पं० ५ )। (८)'दिक्संख्ये संज्ञायामि'ति संज्ञाया

---

( १ ) असमासपक्ष एव वीप्सां विहाय विशेषणपक्षमाशङ्क्याह नचैकेति।

( २ ) सत्यामिति। तद्द्वारा प्राणादिषु लक्षणायां च सत्यामित्यर्थः ।

( ३ ) अनाकाङ्क्षां दर्शयति पञ्चपूलीत्यत्रेति। तथाचेबन्ताद्द्विगुसमासो समाहाराभिधानात् पदान्तरोपात्तसङ्ख्यया समाहारस्योत्पत्तिशिष्टया समानपदस्थया समाहारिणा पूलानां चावच्छेद्यत्वात्पञ्चपूलीत्यत्रास्त्याकाङ्क्षा, पञ्चजना इत्यत्र स्त्रीबन्तत्वाभावेन समाहाराप्रतीत्या जनानां च स्वपदगतसङ्ख्ययाऽवच्छिन्नत्वान्न सङ्ख्यान्तराकाङ्क्षेति भाव ।

( ४ ) नहि सापीति। आत्माश्रयप्रसङ्गान्न सङ्ख्या तयाऽवच्छिद्यतेऽतः सङ्ख्यान्तराकाङ्क्षेत्यर्थः ।

( ५ ) तत्र चोक्तो दोष इति परिहारभाष्यार्थमाह उक्त इति।

( ६ ) ननूपसर्जनस्यापि विशेषणान्वयः किं न स्यादत आह विशेषणापेक्षायां त्विति। सापेक्षस्यासमासे उदाहरणमाह नहि भवतीति। इत्यर्थ—उदाहृतभाष्यस्यायमर्थः ।

( ७ ) आधारत्वेन—भोक्तुरात्मनो भोग्यप्रतिष्ठाहेतुत्वेन।

( ८ ) ननु पञ्चसङ्ख्याद्वयात्पञ्चविंशतिसिद्धौ 'कथञ्चे'तिभाष्यं कथं सङ्गच्छते इत्याशङ्क्याह दिक्सङ्ख्ये इति। दिक्सङ्ख्यावाचिशब्दौ संज्ञायां गम्यमानायां उत्तरपदेन समस्येते यथा दक्षिणाग्निः सप्तर्षय इति सूत्रार्थः। एवं चैकैव पञ्चसङ्ख्या द्वितीयपञ्चशब्दस्य संज्ञा समासगतस्य न सङ्ख्यार्थतेति ग्रन्थतात्पर्यम्।

समासस्मरणात् पञ्चजनशब्दस्तावदयं क्वचिन्निरूढः । न च रूढो सत्यामवयवप्रसिद्धेर्ग्रहणं सापेक्षत्वात्, निरपेक्षत्वाच्च रूढे । तद्यदि रूढौ मुख्योऽर्थः प्राप्यते ततः स एव ग्रहीतव्योऽथ त्वसौ न वाक्ये सम्बन्धार्हः पूर्वापरवाक्यविरोधी वा ततो रूढ्यपरित्यागेनैव वृत्त्यन्तरेणार्थान्तरं कल्पयित्वा वाक्यमुपपादनीयम्, यथा 'श्येनेनाभिचरन् यजेते'ति श्येनशब्दः शकुनिविशेषे निरूढवृत्तिस्तदपरित्यागेनैव निपत्यादानसादृश्येनार्थवादिकेन(१) क्रतुविशेषे वर्तते(२), यथा सप्तर्षिशब्दो वसिष्ठ एकस्मिन् सप्तसु च वर्तते । न चैष तत्त्वेषु रूढः पञ्चविंशतिसंख्यानुरोधेन तत्त्वेषु वर्तयितव्य', रूढौ सत्यां पञ्चविंशतेरेव संख्याया अभावात् कथं तत्त्वेषु वर्तते । ॥ ११ ॥

## (सू०) प्राणादयो वाक्यशेषात् ॥ १२ ॥

## ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

(३)एवं च के ते पञ्चजना इत्यपेक्षायां किं वाक्यशेषगताः प्राणादयो गृह्यन्तामुत पञ्चविंशतिस्तत्त्वानीति विशये, तत्त्वानामप्रामाणिकत्वात्प्राणादीनां च वाक्यशेषे श्रवणात्तत्परित्यागे श्रुतहान्यश्रुतकल्पनाप्रसङ्गात्प्राणादय एव पञ्चजनाः । (४)न च काण्वमाध्यन्दिनयोर्विरोधान्न प्राणादीनां वाक्यशेषगतानामपि ग्रहणमिति साम्प्रतम्, विरोधेऽपि तुल्यबलतया षोडशिग्रहणाग्रहणवद्विकल्पोपपत्तेः । (५)न चेयं वस्तुस्वरूपकथाऽपितूपासनानुष्ठानविधिर्मनसैवानुद्रष्टव्यमि'ति विधिश्रवणात । **'कथं पुनः प्राणादिषु जनशब्दप्रयोग'** **इति** । जनवाचक' शब्दो जनशब्दः, पञ्चजनशब्द इति यावत्, तस्य कथं प्राणादिष्वजनेषु प्रयोग इति व्याख्येयम् । अन्यथा(६)तु प्रत्यस्तमितावयवार्थे समुदायशब्दार्थे जनशब्दार्थो नास्तीत्यपर्यनुयोग एव । रूढ्यपरित्यागेनैव वृत्त्यन्तरं दर्शयति—**''जनसम्बन्धाच्चे''ति** **( पृ० ४१०–पं० २ )** जनशब्दभाजः—पञ्चजनशब्दभाजः । ननु सत्यामवयवप्रसिद्धौ समुदायशक्तिकल्पनमनुपपन्नं, सम्भवति च पञ्चविंशत्यां तत्त्वेष्ववयवप्रसिद्धिरित्यत आह—**''समासबलाच्चे''ति** । (७)स्यादेतत्, समासबलाच्चेद्रूढिरास्थीयते हन्त न दृष्टस्तर्हि तस्य प्रयोगोऽश्वकर्णादिवद्वृक्षादिषु, तथा च लोकप्रसिद्ध्यभावान्न रूढिरित्याक्षिपति—**कथं पुनरसीति** । (८)जनेषु तावत्पञ्चजनशब्दस्य प्रथमः प्रयोगो लोकेषु दृष्ट इत्यसति प्रथम

---

(१) 'यथा वै श्येनो निपत्यादत्त एवमयं द्विषन्त भ्रातृव्य निपत्यादत्ते यमभिचरति श्येनेन' इत्यर्थवादोक्तेन रूढ्यर्थापरित्यागेनैव क्रतुविशेषबोधक श्येनशब्द इति भाव ।

(२) वर्तत इति । 'स्युः पुमांस पञ्चजनाः पुरुषा' पूरुषा नरा' इत्यमरसिंहोक्तेरवयवार्थपञ्चसंख्यासम्बन्धानपेक्ष एकस्मिन्नपि पुरुषे वर्तत इति भाव ।

(३) ननु रूढ्यभावेऽपि पञ्चजनशब्दस्तत्त्वेषु लाक्षणिकः स्यादित्याशङ्क्याह एवं चेति ।

(४) वाक्यशेषयोर्विरोधान्न प्राणादय पञ्चजना इत्युक्तं निरस्यन्नाह नचेति ।

(५) यच्चोक्तं वस्तुनि न विकल्प इति, तत्राह नचेति ।

(६) अन्यथा—जनवाचकत्वेन पञ्चजनशब्दव्याख्यनाभावे, सिद्धान्त्यभिमतेऽवयवार्थशून्ये समुदायशब्दार्थे प्राणादौ चोद्यानुपपत्तिरनुक्तोपालम्भत्वात् स्यादिति भाव ।

(७) व्याकरणस्य प्रयोगानुरोधित्वेन तदभावात्कथं रूढिरित्यभिप्रायेणाशङ्काभाष्यमवतारयति स्यादेतदित्यादिना ।

(८) मनुष्येषु पञ्चजनशब्दस्य लोक एव प्रयोगदर्शनात्तत्सम्बन्धात्प्राणादिषु स्फुटा वृत्त्युपपत्तिं 'ज-

प्रयोग इत्यसिद्धमिति स्थवीयस्तयानभिधायाभ्युपेत्य प्रथम प्रयोगाभावं समाधत्ते—"शक्यो-ऽद्भिदादिवदि"ति । आचार्यदेशीयानां मतभेदेष्वपि न पञ्चविंशतिस्तत्त्वानि सिद्ध्यन्ति परमार्थतस्तु पञ्चजना वाक्यशेषगता एवेत्याशयवानाह—"कैश्चित्वि"ति । शेषमति-रोहितार्थम् ॥ १२ ॥ १३ ॥

## सू० कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥

अथ समन्वयलक्षणे केयमकाण्डे(१) विरोधाविरोधचिन्ता, भविता हि तस्याः स्थानम-विरोधलक्षण(२)मित्यत आह—"प्रतिपादितं ब्रह्मण" इति (पृ०१२पं०१०)। अय-मर्थः—नानैकशाखागततत्तद्वाक्यालोचनया वाक्यार्थावगमे पर्यवसिते सति(३) प्रमाणान्तरा-विरोधेन वाक्यार्थावगतेरप्रामाण्यमाशङ्क्याविरोधव्युत्पादनेन प्रामाण्यव्यवस्थापनमाविरोधलक्ष-णार्थः, (४)प्रासङ्गिकं तु तत्र सृष्टिविषयाणां वाक्यानां परस्परमविरोधप्रतिपादनं न तु लक्ष-णार्थः, तत्प्रयोजनं च तत्रैव प्रतिपादयिष्यते, इह तु वाक्यानां सृष्टिप्रतिपादकानां परस्पर-विरोधे ब्रह्मणि जगद्योनौ न समन्वयः सेद्धुमर्हति, तथा च न जगत्कारणत्वं ब्रह्मणो लक्षणं, न च तत्र गतिसामान्यं, न च तत्सिद्धये प्रधानस्याशब्दत्वप्रतिपादनम् , तस्माद्वाक्यानां वि-रोधाविरोधाभ्यामुक्तार्थाक्षेपसमाधानाभ्यां समन्वय एवोपपाद्यत इति समन्वयलक्षणे सङ्गत-मिदमधिकरणम् ।

(५)वाक्यानां कारणे कार्ये परस्परविरोधतः ।
समन्वयो जगद्योनौ न सिध्यति परात्मनि ॥

'सदेव सोम्येदमग्र आसीदि'त्यादीनां कारणविषयाणाम् 'असद्वा इदमग्र आसीदि'त्यादि-भिर्वाक्यैः कारणविषयैर्विरोधः, कार्यविषयाणामपि विभिन्नक्रमाक्रमोत्पत्तिप्रतिपादकानां विरोधः। तथा हि कानिचिदन्यकर्तृकां जगदुत्पत्तिमाचक्षते वाक्यानि, कानिचित्स्वयकर्तृकाम्(६)। सृष्ट्या च तत्कार्येण तत्कारणतया ब्रह्म लक्षितम् । सृष्टिविप्रतिपत्तौ तत्कारणतायां ब्रह्मलक्षणे विप्रतिपत्तौ सत्यां भवति तल्लक्ष्ये ब्रह्मण्यपि विप्रतिपत्तिः । तस्माद्ब्रह्मणि समन्व-

---

नसम्बन्धाच्च' इति भाष्येण सूचिता पृथङ्नाह भाष्यकारः, किन्तु प्रौढ्या रूढि समर्थयत इत्याह जनेष्विति स्थवीयस्तया-स्फुटतया । (१) अनवसरे ।

(२) अविरोधलक्षणम्—मानान्तरविरोधपरिहारार्थो द्वितीयाध्याय ।

(३) पर्यवसिते सति अविरोधव्युत्पादेन इतरेतरविरोधपरिहारेण प्रामाण्यव्यवस्थापनमिति योजना।

(४) यदि मानान्तराविरोधो द्वितीयाध्यायार्थं वियत्पादादौ कथं श्रुतीनामन्योन्याविरोधचिन्तोक्तेत्याश ङ्क्याह प्रसङ्गिकन्त्विति । तत्रैवेति । निषेधात् परपक्षाणामनपेक्ष्यत्वे उक्ते स्वपक्षस्यापि तत्प्रसङ्गे तन्निवृत्तिरू-पप्रयोजनं तत्रैव प्रतिपादयिष्यत इत्यर्थः ।

(५) पूर्वपक्षसंग्राहकश्लोकमाह वाक्यानामिति । कारणताबोधकानां कार्यविषयाणां च वाक्यानां पर स्परविरोधात्कार्यद्वारगम्ये जगद्योनौ परमात्मनि न समन्वयसिद्धिरिति तदर्थः। श्लोकार्थं विवृणोति सदे वेति । विभिन्नेति । विभिन्ना अक्रमा च युगपद्भाविनी योत्पत्तिस्तत्प्रतिपादकानामित्यर्थ । तथाच 'आत्मन आकाशस्तत्तेजोऽसृजते'ति भिन्नक्रमेण 'स इमाँल्लोकानसृजते'त्यक्रमेण कारणविषयाणामन्योन्यविरोधो बोध्य. ।

(६) स्वयंकर्तृकामिति । 'तन्नामरूपाभ्यां व्याक्रियते'त्यादीनि स्वयंकर्तृकामुत्पत्तिं वदन्तीति कार्यवि-षयविरोधो दर्शित । विरोधमुपपाद्य समन्वयमाक्षिपति सृष्ट्या चेति ।

याभावान्न समन्वयगम्यं ब्रह्म । वेदान्तास्तु कर्त्रादिप्रतिपादनेन कर्मविधिपरतयोपचरितार्था अविवक्षितार्था वा जपोपयोगिन इति प्राप्तम् । क्रमादीत्यादिग्रहणेनाक्रमो गृह्यते । एवं प्राप्त उच्यते—

(१)सर्गक्रमविवादेऽपि न स स्रष्टरि विद्यते ।
सतस्त्वसद्वचो भक्त्या निराकार्यतया क्वचित् ॥

न तावदस्ति सृष्टिक्रमे विगानं, श्रुतीनामविरोधात्, तथाहि—(२)अनेकशिल्पपर्यवदातो देवदत्तः प्रथमं चक्रदण्डादि करोत्यथ तदुपकरणः कुम्भं, कुम्भोपकरणस्त्वाहरत्युदकम्, उदकोपकरणश्च संयवनेन गोधूमकणिकानां करोति पिण्डं, पिण्डोपकरणस्तु पचति घृतपूर्णं, तदस्य देवदत्तस्य सर्वत्रैतस्मिन्कर्तृत्वाच्छक्यं वक्तुं देवदत्ताच्चक्रादि सम्भूतं तस्माच्चक्रादेः कुम्भादीति, शक्यं च देवदत्तात्कुम्भः समुद्भूतस्तस्मादुदकोहरणादीत्यादि । नह्यस्त्यसम्भवः, सर्वत्रास्मिन् कार्यजाते क्रमवत्यपि देवदत्तस्य साक्षात्कर्तुरनुस्यूतत्वात्, तथेहापि यद्यप्याकाशादिक्रमेणैव सृष्टिस्तथाप्याकाशानलानिलादौ तत्रतत्र साक्षात् परमेश्वरस्य कर्तृत्वाच्छक्यं वक्तुं परमेश्वरादाकाशः सम्भूत इति, शक्यं च वक्तुं परमेश्वरादनलः सम्भूत इत्यादि । यदि 'स्वाकाशाद्वायुर्वायोस्तेज'इत्युक्त्वा 'तेजसो वायुर्वायोराकाश' इति ब्रूयाद्भवेद्विरोधो न चैतदस्ति(३) तस्मादमृषामविवादः श्रुतीनाम् । एवं 'स इमान् लोकानसृजते'त्यक्रमाभिधायिन्यपि श्रुतिरविरुद्धा, एषा हि स्वव्यापारमभिधानक्रमेण कुर्वती नाभिधेयानां क्रमं निरुणद्धि, ते तु यथा क्रमावस्थिता एवाक्रमेणोच्यन्ते, यथाक्रमवन्ति ज्ञानानि जातानीति, तदेवमविगानम् । (४)अभ्युपेत्य तु विगानमुच्यते सृष्टौ खल्वेतद्विगानम् । स्रष्टा तु सर्ववेदान्तवाक्येष्वनुस्यूतः परमेश्वरः प्रतीयते, नात्र श्रुतिविगानं मात्रयाप्यस्ति । (५)न च सृष्टिविगानं स्रष्टरि तदधीननिरूपणे विगानमावहतीति वाच्यम् । नह्येष सृष्टृत्वमात्रेणोच्यतेऽपि तु 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिना रूपेणोच्यते स्रष्टा । तच्चास्य रूपं सर्ववेदान्तवाक्यानुगतम् । (६)तज्ज्ञानं च फलवत्, 'ब्रह्मविदाप्नोति परं तरति शोकमात्मविदि'ति श्रुतेः, सृष्टिज्ञानस्य तु न फलं श्रूयते, 'फलवत्संनिधावफलं तदङ्गमि'ति सृष्टिविज्ञानं स्रष्टृब्रह्मविज्ञानाङ्गं तदनुगुणं सद्ब्रह्मज्ञानावतारोपायतया व्याख्येयम्, तथा च श्रुतिः–'अन्नेन सोम्य शुङ्गेनापो मूलमन्विच्छे'त्यादिका । शुङ्गेनाग्रेण, कार्येणेति यावत् । तस्मान्न सृष्टिविप्रतिपत्तिः स्रष्टरि विप्रतिपत्तिमावहति, अपि तु

(१) सिद्धान्तसग्रहश्लोकमाह सर्गेति । स्वयंकर्तृत्वान्यकर्तृकत्वाभ्यां सर्गे क्रमाक्रमव्युत्क्रमैस्तत्क्रमे च विवादे सत्यपि स्रष्टरि विवादो नास्ति, तथा सत कारणस्य 'असद्वे'त्यादि असदुक्तिरौपचारिकी निराकरणीयत्वेनानुवादो असद्वच इति श्लोकार्थ । श्लोकार्थमेवाह नतावदिति ।

(२) विभिन्नक्रमत्वं परिहरति अनेकेति । पर्यवदातः—कुशल । संयवनं–मिश्रणम् । घृतपूर्ण–पक्वान्नविशेष ।

(३) अस्तीति । ईदृग्वाक्य नास्ति श्रुतौ कुत्रापीत्यर्थः । तथा चाकाशवायुतेजसां क्रमेणोत्पत्तिमभिधाय व्युत्क्रमाभिधाने विरोध स्यान्न तु तेजसः साक्षाद्ब्रह्मण सृष्टिमात्राभिधाने, न ह्यनेन क्रमो बाध्यत इति भाव । (४) न स स्रष्टरीति श्लोकद्वितीयपाद व्याचष्टे अभ्युपेत्येति ।

(५) कार्यविगानेनोक्तं समन्वयाक्षेपं प्रदर्श्य परिहरति नचेति । सत्यादिलक्षणं ब्रह्मावगमय्य तदानन्त्योपपादनविषया जगतस्तत्रारोप श्रुत्या सृष्टिरुक्ता, न तु तत्र तात्पर्यमतो मिथ्याभूतायां सृष्टौ विगान न वेदान्तिनो दूषणमपि त्वलङ्कार इत्यर्थ । (६) ननु सृष्टि किमित्यात्मज्ञानार्थेत्याशंक्याह तज्ज्ञानं चेति ।

-'गुणे त्वन्याय्यकल्पने'ति तदनुगुणतया व्याख्येया। (१)यच्च कारणे विगानम्-'असद्वा इदमग्र आसी दि'ति, तदपि 'तदप्येष श्लोको भवती'ति पूर्वप्रकृतं सद्ब्रह्माकृष्य 'असदवेदमग्र आ-सीदि'त्युच्यमानं त्वसतोऽभिधानेऽसम्बद्धं स्यात्(२)। श्रुत्यन्तरेण च मानान्तरेण च विरोधः। तस्मादौपचारिकं व्याख्येयम्। (३)'तद्धैक आहुरसदेवेदमग्र आसीदि'ति तु निराकार्यतयोपन्य स्तमिति न कारणे विवाद इति। सूत्रे चशब्दस्त्वर्थः पूर्वपक्षं निवर्तयति। आकाशादिषु सृज्य मानेषु क्रमविगानेपि न स्रष्टरि विगानम्। कुतः? यथैकस्यां श्रुतौ व्यपदिष्टः परमेश्वरः सर्वस्य कर्ता तथैव श्रुत्यन्तरेषूक्तेः, केन रूपेण? कारणत्वेन, अपरः (४)कल्पो यथा व्यपदिष्टः क्रम आकाशादिषु, 'आत्मन आकाशः सम्भूत आकाशाद्वायुर्वायोरग्निरग्नेरपोऽद्भ्यः पृथिवी'ति तथै-च क्रमस्यानपबाधनेन 'तत्तेजोऽसृजते'त्यादिकाया अपि सृष्टेरुक्तेर्न स्रष्टावपि विगानम्॥१४॥

## सू० समाकर्षात्॥ १५॥

नन्वेकत्रात्मन आकाशकारणत्वेनोक्तिरन्यत्र च तेजःकारणत्वेन तत्कथमविगानमत आह-"**कारणत्वेने**"ति (पृ० ४१६ पं० ७) हेतौ तृतीया, सर्वत्राकाशानलानिलादौ साक्षा त्कारणत्वेनात्मनः। प्रपञ्चितं चैतदधस्तात्(५)। 'व्याक्रियत' इति च कर्मकर्तरि कर्मणि वा-रूपम्, न चेतनमतिरिक्तं कर्तारं प्रतिक्षिपति किन्तूपस्थापयति, न हि 'लूयते केदारः स्वय-मेवेति वा, लूयते केदार इति' वा लवितारं देवदत्तादिं प्रतिक्षिपति, अपि तूपस्थापयत्येव। तस्मात्सर्वमवदातम्॥ १५॥

## सू० जगद्वाचित्वात्॥ १६॥

## सू० जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम्॥ १७॥

(६)ननु 'ब्रह्म ते ब्रवाणी'ति ब्रह्माभिधानप्रकरणादुपसंहारे च 'सर्वान्पाप्मनोऽपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यं पर्येति य एवं वेदे'ति निरतिशयफलश्रवणाद्ब्रह्मवेदनादन्यस्य त-दसम्भवात्, (७)आदित्यचन्द्रादिगतपुरुषकर्तृत्वस्य च 'यस्य वैतत्कर्मे'ति चास्यासत्यव-च्छेदे सर्वनाम्ना प्रत्यक्षसिद्धस्य जगतः परामर्शेन जगत्कर्तृत्वस्य च ब्रह्मणोऽन्यत्रासम्भवा-त्कथं जीवमुख्यप्राणाशङ्का। (८)उच्यते-'ब्रह्म ते ब्रवाणी'ति बालाकिना गार्ग्येण ब्रह्माभि धानं प्रतिज्ञाय तत्तदादित्यादिगताब्रह्मपुरुषाभिधानेन न तावद्ब्रह्मोक्तम्। (९)यस्य चाजातश-त्रो 'र्यो वै बालाके एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्मे'ति वाक्य न तेन ब्रह्माभिधानं प्रति-

---

(१) 'सतस्त्वसद्वचो भक्त्ये'ति श्लोकांशं व्याकुर्वन्नाह यच्चेति।

(२) 'अस्ति ब्रह्मेति चेद्वेदे'ति प्रस्तुतं ब्रह्म तच्छब्दसमानार्थकतच्छब्देन परामृश्य श्लोकेनासदभि-धाने श्लोकवाक्यमसम्बद्धं स्यादित्यर्थः।

(३) निराकार्यतया क्वचिदिति श्लोकभागं विभजते तद्धैक इति।

(४) एवं कारणविगाननिषेधपरत्वेन सूत्रं व्याख्यायाधुना कार्यविगाननिषेधपरतया योजयति अपर इति। कल्प -प्रकारः। (५) घृतपूर्णटीकायाम्। (६) सिद्धान्त्याशङ्कत नन्विति।

(७) उपक्रमोपसंहाराभ्यां जीवप्राणलिङ्गयोर्ब्रह्मपरत्वं प्रदर्श्य मध्येऽपि ब्रह्मपरामर्शमाहाऽऽदित्येति पुरुषकर्तृत्वस्य ब्रह्मणोऽन्यत्रासम्भवादित्यत्रान्वय। अवच्छेदके-प्रकरणादौ।

(८) अथ 'ब्रह्म ते ब्रवाणी'ति बालाकिवाक्याद्ब्रह्म मन्यते सिद्धान्ती राजवाक्याद्वा, नाद्य इत्याह पूर्व-पक्षी उच्यत इत्यादिना। (९) न द्वितीय इत्याह यस्येति।

ज्ञातम् । (१)न चान्यदीयेनोपक्रमेणान्यस्य वाक्यं शक्यं नियन्तुम् । (२)तस्मादजातशत्रोर्वाक्यसन्दर्भपौर्वापर्यालोचनया योऽस्यार्थः प्रतिभाति स एव ग्राह्यः । अत्र च कर्मशब्दस्तावद्व्यापारे निरूढवृत्तिः, कार्येषु क्रियत इति व्युत्पत्त्या वर्तेत । न च रूढौ सत्यां व्युत्पत्तिर्युक्ताश्रयितुम् । न च ब्रह्मण उदासीनस्यापरिणामिनो व्यापारवत्ता । वाक्यशेषे चा'ऽथास्मिन्प्राण एवैकधा भवती'ति श्रवणात्परिस्पन्दलक्षणस्य च कर्मणो यत्रोपपत्तिः स एव वेदितव्यतयोपदिश्यते । आदित्यादिगतपुरुषकर्तृत्वं च प्राणस्योपपद्यते हिरण्यगर्भरूपप्राणावस्थाविशेषत्वादादित्यादिदेवतानां 'कतम एको देवः प्राण' इति श्रुतेः । उपक्रमानुरोधेन चोपसंहारे सर्वशब्दः सर्वान्पाप्मन इति च सर्वेषां भूतानामिति चापेक्षिकवृत्ति(३)र्बहून्पाप्मनो बहूनां भूतानामित्येवम्परो द्रष्टव्यः । एकस्मिन्वाक्ये उपक्रमानुरोधादुपसंहारो वर्णनीयः । (४)यदि तु दृप्तबालाकिमब्रह्मणि ब्रह्माभिधायिनमपोद्याजातशत्रोर्वचनं ब्रह्मविषयमेवान्यथा तु तदुक्ताद्विशेषं विवक्षोरब्रह्माभिधानमसम्बद्धं स्यादिति मन्यते, तथापि नैतद्ब्रह्माभिधानं भवितुमर्हति, अपि तु जीवाभिधानमेव, (५)यत्कारणं वेदितव्यतयोपन्यस्तस्य पुरुषाणां कर्तुर्वेदनायोपेतं बालाकिं प्रति बुबोधयिषुरजातशत्रुः सुप्तं पुरुषमामन्त्र्यामन्त्रणशब्दाश्रवणात्प्राणादीनामभोक्तृत्वमस्वामित्वं प्रतिबोध्य यष्टिघातोत्थानात्प्राणादिव्यतिरिक्तं जीवं भोक्तारं स्वामिनं प्रतिबोधयति, परस्तादपि(६)—तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्ति एवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते एवमेते आत्मान एनमात्मानं भुञ्जन्ती'ति श्रवणात्, यथा श्रेष्ठी प्रधानः पुरुषः स्वैर्भृत्यैः करणभूतैर्विषयान्भुङ्क्ते यथा वा स्वा भृत्याः श्रेष्ठिनं भुञ्जन्ति, ते हि श्रेष्ठिनमशनाच्छादनादिग्रहणेन भुञ्जन्ति, एवमेवैष प्रज्ञात्मा जीव एतैरादित्यादिगतैरात्मभिर्विषयान्भुङ्क्ते, ते ह्यादित्यादय आलोकवृष्ट्यादिना साचिव्यमाचरन्तो जीवात्मानं भोजयन्ति, जीवात्मानमपि यजमानं तदुत्सृष्टहविरादानादादित्यादयो भुञ्जन्ति, तस्माज्जीवात्मैव ब्रह्मणोऽभेदाद्ब्रह्मेह वेदितव्यतयोपदिश्यते । (७)यस्य वैतत्कर्मेति ( पृ० ४९८ प० ३ ) जीवप्रयुक्तानां देहेन्द्रियादीनां कर्म जीवस्य भवति । कर्मजन्यत्वाद्वा धर्माधर्मयोः कर्मशब्दवाच्यत्वं रूढ्यनुसारात्, तौ च धर्माधर्मौ जीवस्य, धर्माधर्माक्षिप्तत्वाच्चादित्यादीनां भोगोपकरणानां तेषु जीवस्य कर्तृत्वमुपपन्नम् । उपपन्नं च प्राणभृत्त्वाज्जीवस्य प्राणशब्द-

---

(१) ननु बालाकिवाक्यस्थब्रह्मप्रतिज्ञयैव राजवाक्यं तत्परं भवतु अग्निवाक्यादिवाचार्यवाक्यमित्याशङ्क्याह नचेति । तत्र वक्तृभेदेऽप्येकवाक्यताऽग्निभिर्दर्शिताऽऽचार्यस्तु ते गतिं वक्तेति, इह तु तदभावाद्वाक्यभेद इत्यर्थः ।

(२) तर्हि बालाकिवाक्ये ब्रह्मशब्दस्य का गतिरित्यत्राह तस्मादिति । राजवाक्यमेव ग्राह्यं बालाकिवचनन्त्वसद्वादत्वत्पूर्वपक्षतया न ग्राह्यमिति भावः । राजवाक्ये च ब्रह्मपरत्वमसम्भवीत्याह अत्र चेत्यादिना ।

(३) सङ्कुचितवृत्तिः, सर्वशब्द इत्यर्थः, सङ्कोचमेवाह बहूनिति ।

(४) विप्रनृपवाक्ययोरेकत्वेऽपि पूर्वपक्षसङ्गमनाभिप्रायेणाह यदि त्विति ।

(५) जीवाभिधाने हेतुमाह यत्कारणमिति । उपेतं—अन्तेवासित्वेनागतम् ।

(६) वक्ष्यमाणोपसंहारादपि जीवपरत्वमित्याह परस्तादपीति ।

(७) ननु विभुनो निरवयवस्य च जीवस्यापि स्पन्दाद्यसम्भवात्कथं तत्परत्वे 'यस्य वै तत्कर्मे'ति वाक्यस्य निर्देशोऽत आह यस्येति । तथाचोपचारेण लक्षणया वा कर्मशब्दस्य धर्माधर्मवाचकत्वं स्वीकृत्य जीवपरमुक्तवाक्यं व्याख्येयमिति भावः ।

त्वम् । ये च प्रश्नप्रतिवचने 'क्वैष एतद्बालाके पुरुषोऽशयिष्ट, यदा सुप्तः स्वप्नं न कंचन पश्यती'ति, अनयोरपि न स्पष्टं ब्रह्माभिधानमुपलभ्यते । जीवव्यतिरेकश्च प्राणात्मनो हिरण्यगर्भस्याप्युपपद्यते, तस्माज्जीवप्राणयोरन्यतर इह ग्राह्यो न परमेश्वर इति प्राप्तम् ।

एवं प्राप्ते उच्यते—

(१)मृषावादिनमापोद्य बालाकिं ब्रह्मवादिनम् ।
राजा कथमसम्बद्धं मिथ्या वा वक्तुमर्हति ॥

(२)यथा हि केनचिन्मणिलक्षणज्ञमानिना काचे मणिरेष वेदितव्य इत्युक्ते परस्य काचोऽयं मणिर्न तल्लक्षणायोगादित्यभिधाय आत्मनो विशेषं जिज्ञापयिषोस्तत्त्वाभिधानमसम्बद्धम्, अमणौ मण्यभिधानं न पूर्ववादिनो विशेषमापादयति, स्वयमपि मृषाभिधानात्, तस्मादनेनोत्तरवादिना पूर्ववादिनो विशेषमापादयता मणितत्त्वमेव वक्तव्यम्, एवमजातशत्रुणा दृप्तबालाकेरब्रह्मवादिनो विशेषमात्मनो दर्शयता जीवप्राणाभिधाने असम्बद्धमुक्तं स्यात्, तत्तयोर्वाऽब्रह्मणोर्ब्रह्माभिधाने मिथ्याभिहितं स्यात्, तथा च न कश्चिद्विशेषो बालाकेर्गार्ग्यादजातशत्रोर्भवेत् । तस्मादनेन ब्रह्मतत्त्वमभिधातव्यं, तथासत्यस्य न मिथ्यावद्यम् । (३)तस्माद्' ब्रह्म ते ब्रवाणी'ति ब्रह्मणोपक्रमा'त्सर्वान्पाप्मनोपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यं पर्येति य एवं वेदे'ति च सति सम्भवे सर्वश्रुतेरसंकोचान्निरतिशयेन फलेनोपसंहाराद्(४)ब्रह्मवेदनादन्यतश्च तदनुपपत्तेरादित्यादिपुरुषकर्तृत्वस्य च स्वातन्त्र्यलक्षणस्य मुख्यस्य ब्रह्मण्येव सम्भवादन्येषां हिरण्यगर्भादीनां तत्पारतन्त्र्यात् (५)'क्वैष एतद्बालाके' इत्यादेर्जीवाधिकरणभवनापादानप्रश्नस्य 'यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति' इत्यादेरुत्तरस्य च ब्रह्मण्येवोपपत्तेर्ब्रह्मविषयत्वं निश्चीयते । अथ कस्मान्न भवतो हिरण्यगर्भगोचर एव प्रश्नोत्तरे, तथा च नैताभ्यां ब्रह्मविषयत्वसिद्धिरित्येतन्निराचिकीर्षुः पठति— "एतस्मादात्मनः प्राणा यथा यथायतनं प्रतिष्ठन्त" इति । एतदुक्तं भवति । आत्मैव जीवप्राणादीनामधिकरणं नान्यदिति (६) । यद्यपि च जीवो नात्मनो भिद्यते; तथाप्युपाध्यवच्छिन्नस्य परमात्मनो जीवत्वेनोपाधिभेदाद्भेदमारोप्याधाराधेयभावो द्रष्टव्यः । एवं च जी

---

(१) सिद्धान्तसङ्ग्राहकश्लोकमाह मृषेति । आदित्यादीन् ब्रह्मनिश्चान् ब्रह्मेतिमिथ्यावादिनं बालाकिं 'मृषा मा संवदिष्ठा' इति निरस्य राजा सत्यं ब्रह्माभिधित्सन् जीवं प्राणं वा यदि ब्रूयात्तदाऽसबद्धप्रलापितया मिथ्यावादी स्यात्तन्नार्हमिति श्लोकार्थः ।

(२) दृष्टान्तप्रदर्शनपूर्वकं श्लोकार्थं विवृण्वन्नाह यथेति ।

(३) मिथ्याभिधानम् । एवं च भिन्नवक्तृकवाक्यद्वयस्यापि भ्रमप्रसक्तिनिरासपरतयैकवाक्यत्वाद्ब्रह्मोपक्रमे सिद्धेऽस्योपसंहारेण सङ्गानत्वात्सर्वस्य सन्दर्भस्य ब्रह्मपरत्वमित्युपसंहरति तस्मादिति ।

(४) अथ श्रुत्यसङ्कोचे हेतु ।

(५) हिरण्यगर्भे व्यतिरेकनिर्देश इति पूर्वपक्षिणोक्तं दूषयन्नाह क्वैष इति । अत्र 'हे बालाके एष पुरुष क्वैतदशयिष्ट' इति प्रश्ने, एतदित्थमिति जीवाश्रयः, क्व वा एतदभूदिति भवनसम्बन्धी, कुत एतदागादिति अपादानविषयः प्रश्नस्तथा प्राण एवैकधा भवति इति भवनप्रश्नस्य, तदेनं वाक्सर्वैर्नामभिस्सहाप्येति इति शयनप्रश्नस्य उत्तरमेवमन्ये प्रश्ना उत्तराणि च हिरण्यगर्भे न सम्भवन्ति जीवस्य जीवान्तरात्मत्वायोगादिति भाव ।

(६) न केवलमनुपपत्त्या प्रश्नोत्तरयोर्ब्रह्मार्थत्वं किन्त्वात्मशब्दादपि तथात्वमिति भावः ।

चभवनाधारत्वमपादानत्व च परमात्मन उपपन्नम्। तदेवं बालाक्यजातशत्रुसंवादवाक्यस-न्दर्भस्य ब्रह्मपरत्वे स्थिते 'यस्य वैतत्कर्मे'ति व्यापाराभिधाने न संगच्छत इति कर्मशब्दः कार्याभिधायी भवति, एतदिति सर्वनामपरामृष्टं च तत्कार्यं, सर्वनाम चेदं सन्निहितपराम-र्शि, न च किञ्चिदिह शब्दोक्तमस्ति सन्निहितम्। न चादित्यादिपुरुषाः सन्निहिता अपि पराम-र्शार्हाः बहुत्वात्पुल्लिङ्गत्वाच्च। एतदिति चैकस्य नपुंसकस्यभिधानात् 'एतेषां पुरुषाणां कर्ते'त्य-नेनैव गतार्थत्वाच्च। तस्मादशब्दोक्तमपि प्रत्यक्षसिद्धं सम्बन्धार्हं जगदेव परामृष्टव्यम्। (१)एतदुक्तं भवति—अत्यल्पमिदमुच्यते एतेषामादित्यादिगतानां जगदेकदेशभूतानां कर्तेति, किंतु कृत्स्नमेव जगद्यस्य कार्यमिति वाशब्देन सूच्यते। जीवप्राणशब्दौ च ब्रह्मपरौ(२)जीव-शब्दस्य ब्रह्मोपलक्षणपरत्वाद्, न पुनर्ब्रह्मशब्दो जीवोपलक्षणपरस्तथा सति हि बहसमञ्जसं स्यादित्युक्तम्। न चानधिगतार्थावबोधनस्वरसस्य शब्दस्याधिगतबोधनं युक्तम्। नाप्यनधि-गतेनाधिगतोपलक्षणमुपपन्नम्। (३) न च सम्भवत्येकवाक्यत्वे वाक्यभेदो न्याय्यः। वा-क्यशेषानुरोधेन च जीवप्राणपरमात्मोपासनात्रयविधाने वाक्यत्रयं भवेत्पौर्वापर्यपर्यालोचनया तु ब्रह्मोपासनपरत्वे एकवाक्यतैव। तस्मान्न जीवप्राणपरत्वमपि तु ब्रह्मपरत्वमेवेति सिद्धम्। स्यादेतत्, निर्दिश्यन्तां पुरुषाः कार्यास्तद्विषया तु कृतिरनिर्दिष्टा तत्फलं वा कार्यस्योत्पत्तिस्ते यस्येदं कर्मेति निर्दिश्येते, ततः कुतः पौनरुक्त्यमित्यत आह—"नापि पुरुषविषयस्ये"ति (पृ०४२०-पं०२)। (४)(एतदुक्तं भवति) कर्तृशब्देनैव कर्तारमभिदधता तयोरुपात्तत्वादाक्षि-प्तत्वान्नहि कृतिं विना कर्ता भवतिनापि कृतिर्भावनापराभिधाना भूतिमुत्पत्तिं विनेत्यर्थः। ननु यदीदमा जगत्परामृष्टं ततस्तत्रान्तर्भूताः पुरुषा अपीति य एतेषां पुरुषाणामिति पुनरुक्तमत आह—"एतदुक्तं भवति। य एतेषां पुरुषाणा"मिति ॥ १६ ॥ १७ ॥

## सू० अन्यार्थन्तु जैमिनिः प्रश्नव्याख्याना-भ्यामपि चैवमेके ॥ १८ ॥

ननु 'प्राण एवैकधा भवती'त्यादिकादपि वाक्याज्जीवातिरिक्तः कुतः प्रतीयत(५)इत्यतो वाक्यान्तर पठति—"एतस्मादात्मनः प्राणा" इति (पृ० ४२२ पं० ४)। अपि च सर्ववेदान्तसिद्धमेतादित्याह—"सुषुप्तिकाले च"ति। वेदान्तप्रक्रियायामेवोपपत्तिमुपसंहार-व्याजेनाह—"तस्माद्यत्राऽस्य"आत्मनो यतो निःसम्बोधोऽतः स्वच्छतारूपमिव रूपमस्येति स्वच्छतारूपो न तु स्वच्छतैव लयविक्षेपसंस्कारयोस्तत्र भावात्, समुदाचरद्वृत्तिविक्षेपाभा-

---

(१) ननु सिद्धान्तिमतेऽपि ब्रह्मणः सर्वकर्तृत्वादादित्यादिकर्तृत्वाभिधान पुनरुक्तं स्यादत आह एतदुक्त-मिति। बालाकिभ्रमापनोदार्थं पुनरेकदेशोक्त्या न पुनरुक्तिरित्यर्थ।

(२) ब्रह्मपराविति। प्राणयतीति योगात्प्राणशब्द जीवसुप्तिस्थानभूतब्रह्मलक्षणार्थं, पुरुषशब्दश्च जीव-वाच्यपि ब्रह्मपर इत्यर्थ। असमञ्जसं—विश्वकर्तृत्वादिरूपम्।

(३) ननु किं जीवस्य ब्रह्मोपलक्षकत्वेन, प्रसिद्धावपि जीवप्राणावनूद्य नामादिवदुपास्तिर्विधियतामि-त्याशङ्क्य निराकुर्वन् जीवमुख्येति (अ० १ पा० १० सूत्र ३१) व्याचष्टे नचेति।

(४)( ) एतच्चिह्नान्तर्गत पाठ का० मु० प्रा० पुस्तके नास्ति।

(५) प्राणशब्दो हिरण्यगर्भमाह तत कुतो ब्रह्मप्रतीतिरित्याशङ्कार्थ। आत्मशब्दाद्गम्यत इति परि-हारार्थ।

वमात्रेणोपमानम्(१)। एतदेव विभजते—"**उपाधिभि**"रन्तःकरणादिभि"**र्जनितं**" यद्विशेषविज्ञानं घटपटादिविज्ञानं तद्रहितं स्वरूपमात्मनो, (२)यदि विज्ञानमित्येवोच्येत तत-स्तदविशिष्टमनवच्छिन्नं सद्ब्रह्मैव स्यात्तच्च नित्यमिति नोपाधिजनितं नापि तद्रहित स्वरूपं ब्रह्मस्वभावस्याप्रहाणात्, अत उक्तं विशेषेति। यदा तु लयलक्षणाविद्योपबृंहितो विक्षेपसं-स्कारः समुदाचरति तदा विशेषविज्ञानोत्पादात्स्वप्नजागरावस्थातः परमात्मनो रूपाद्भ्रंशरू-पमागमनमिति। न केवलं कौषीतकिब्राह्मणे वाजसनेयेऽप्येवमेव प्रश्नोत्तरयोर्जीवव्यतिरिक्तमा-मनन्ति परमात्मानमित्याह—"**अपि चैवमेक**" इति। नन्वत्राकाशं शयनस्थानं तत्कुतः परमात्मप्रत्यय इत्यत आह—"**आकाशशब्दश्चे**"ति। न तावन्मुख्यस्याकाशस्यात्मा धारत्वसम्भवः। यदपि च द्वासप्ततिसहस्रहिताभिधाननाडीसञ्चारेण सुषुप्त्यवस्थायां पुरीत-दवस्थानमुक्तं तदप्यन्तःकरणस्य। तस्माद्दहरोऽस्मिन्नन्तराकाश इतिवदाकाशशब्दः परमा-त्मनि मन्तव्य इति। प्रथमं भाष्यकृता जीवनिराकरणाय सूत्रमिदमवतारितं तत्र मन्दधियां नेदं प्राणनिराकरणायेति बुद्धिर्मा भूदित्याशयवानाह—"**प्राणनिराकरणस्यापी**"ति (पृ० ४२३ पं० ३)। 'तौ ह(३) बालाक्यजातशत्रू सुप्तं पुरुषमाजग्मतुस्तमजातशत्रु-र्नामभिरामन्त्रयांचक्रे 'बृहत्पाण्डुरवासः सोमराजन्नि'ति, स आमन्त्र्यमाणो नोत्तस्थौ, तं पा-णिनापेषं बोधयांचकार, स होत्तस्थौ स होवाचाजातशत्रु'र्यत्रैष एतत्सुप्तोऽभूदि'त्यादि, सोऽयं सुप्तपुरुषोत्थापनेन प्राणादिव्यतिरिक्तोपदेश इति॥ १८॥

## सू० वाक्यान्वयात्॥ १९॥

(४)ननु मैत्रेयीब्राह्मणोपक्रमे याज्ञवल्क्येन गार्हस्थ्याश्रमादुत्तमाश्रमं यियासता मैत्रेय्या भार्यायाः कात्यायन्या सहार्थसंविभागकरण उक्ते मैत्रेयी याज्ञवल्क्यं पतिममृतत्वार्थिनी पप्र-च्छ—'यन्नु म इयं भगो.(५)सर्वा पृथ्वी वित्तेन पूर्णा स्यात्किमहं तेनामृता स्यामुत ने'ति। तन्नेति होवाच याज्ञवल्क्यः। यथैवोपकरणवतां जीवितं तथैव ते जीवितं स्यादमृतत्वस्य तु नाशास्ति वित्तेन। एवं वित्तेनामृतत्वाशा भवेद्यदि वित्तसाध्यानि कर्माण्यमृतत्वाय युज्ये-रन्, तदेव तु नास्ति, ज्ञानसाध्यत्वादमृतत्वस्य, कर्मणां च ज्ञानविरोधिनां तत्सहभावित्वा-नुपपत्तेरिति भावः। सा होवाच मैत्रेयी—'येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भग-वान्वेद तदेव मे ब्रूहि'। अमृतत्वसाधनमिति शेषः। तत्रामृतत्वसाधनज्ञानोपन्यासाय वैरा-ग्यपूर्वकत्वात्तस्य रागविषयेषु तेषुतेषु पतिजायादिषु वैराग्यमुत्पादयितुं याज्ञवल्क्यो 'न वा अरे पत्युः कामाये'त्यादिवाक्यसन्दर्भमुवाच। (६)आत्मौपाधिकं हि प्रियत्वमेषां न तु साक्षा-त्प्रियाण्येतानि, तस्मादेतेभ्यः पतिजायादिभ्यो विरम्य यत्र साक्षात्प्रेम स एवात्मा वा अरे

---

(१) उपमानमिति। भ्रमसंस्कारे सत्यपि प्रोद्भूतभ्रमाभावान्मुक्त्योपमानं सुषुप्ते रूपशब्देन भाष्ये कृतमित्यर्थः।

(२) उपाधिजनितविशेषविज्ञानेति भाष्ये विशेषपदव्यावृत्तिमाह यदीति। राहित्याभावे हेतु ब्रह्मस्व-भावस्याप्रहाणादिति।

(३) भाष्योक्तप्राणादिव्यतिरिक्तोपदेशं दर्शयति तौ हेति।

(४) मैत्रेयीब्राह्मणार्थमनुक्रामन् प्रातर्दननयेन गतार्थतामाशङ्कते नन्विति।

(५) भगवन्!। (६) भाष्योक्तवाक्यसन्दर्भं व्याचष्टे आत्मेति।

द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः । वाशब्दोऽवधारणे । आत्मैव द्रष्टव्यः साक्षात्कर्तव्यः । एतत्साधनानि च श्रवणादीनि विहितानि 'श्रोतव्य' इत्यादिना । "कस्मात्" ? आत्मनो वाऽरे दर्शनेन श्रवणादिसाधनेनेदं जगत्सर्वं विदितं भवतीति वाक्यशेषः । यतो नामरूपात्मकस्य जगतस्तत्त्वं पारमार्थिकं रूपमात्मैव भुजङ्गस्येव समारोपितस्य तत्त्व रज्जुस्तस्मादात्मनि विदिते सर्वमिदं जगत्तत्त्व विदितं भवति रज्ज्वामिव विदितायां समारोपितभुजङ्गस्य तत्त्वं विदित भवति यतस्तस्मादात्मैव द्रष्टव्यो न तु तदतिरिक्तं जगत्स्वरूपेण द्रष्टव्यम् । (१)कुतः ? यतो ब्रह्म त परादाद्ब्राह्मणजातिर्ब्राह्मणोऽहमित्यभिमान इति यावत् । परादात्—पराकुर्यात्, अमृतत्वपदात्, कं ? योऽन्यत्रात्मनो ब्रह्म ब्राह्मणजातिं वेद । एव क्षत्त्रादिष्वपि द्रष्टव्यम् । आत्मैव जगतस्तत्त्व न तु तदतिरिक्त तदित्यत्रैव भगवती श्रुतिरुपपत्तिं दृष्टान्तप्रबन्धेनाह । (२)यत् खलु यद्ग्रहं विना न शक्यते ग्रहीतुं तत्ततो न व्यतिरिच्यते, यथा रजत शुक्तिकाया भुजङ्गो वा रज्जोः, दुन्दुभ्यादिशब्दसामान्याद्वा तत्तच्छब्दभेदाः, न गृह्यन्ते च चिद्रूपग्रहणं विना स्थितिकाले नामरूपाणि तस्मान्न चिदात्मनो भिद्यन्ते, तदिदमुक्तं—"स यथा दुन्दुभेर्हन्यमानस्ये"ति । दुन्दुभिग्रहणेन तद्गत शब्दसामान्यमुपलक्षयति । न केवलं स्थितिकाले नामरूपप्रपञ्चश्चिदात्मातिरेकेणाग्रहणाच्चिदात्मनो न व्यतिरिच्यतेऽपि तु नामरूपोत्पत्तेः प्रागपि चिद्रूपावस्थानात् तदुपादानत्वाच्च नामरूपप्रपञ्चस्य तदनतिरेकः, रज्जूपादानस्येव भुजङ्गस्य रज्जोरनतिरेक इत्येतद् दृष्टान्तेन साधयति भगवती श्रुतिः–स यथा(३)र्द्रैधोग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतदृग्वेद' इत्यादिना चतुर्विधो मन्त्र उक्तः, इतिहास इत्यादिनाऽष्टविधं (४)ब्राह्मणमुक्तम् । एतदुक्तं भवति–यथाग्निमात्रं प्रथममवगम्यते क्षुद्राणां विस्फुलिङ्गानामुपादानम्, अथ ततो विस्फुलिङ्गा व्युच्चरन्ति न चैतेग्नेस्तत्त्वान्यत्वाभ्यां शक्यन्ते निर्वक्तुम्, एवमृग्वेदादयोऽप्यल्पप्रयत्नाद्ब्रह्मणो व्युच्चरन्तो न ततस्तत्त्वान्यत्वाभ्यां निरुच्यन्ते ऋगादिभिर्नामोपलक्ष्यते, यदा च नामधेयस्येयं गतिस्तदा तत्पूर्वकस्य रूपधेयस्य कैव कथेति भावः । न केवलं तदुपादानत्वात्ततो न व्यतिरिच्यते नामरूपप्रपञ्चः,

---

(१) आत्मदर्शनफलमुक्त्वाऽनात्मदृष्टौ दोषदर्शकं वाक्यमवतारयति कुत इति । ब्राह्मण्याद्यभिमानं विनियोज्यत्वाविर्भावनेनात्मतत्त्वाद्भ्रंशयेदित्यर्थ ।

(२) 'स यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दाञ्शक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीत' इत्यादि ( बृ० ४।५।८ ) श्रुतिसूचितानुमानं विशदयति यदिति । स दृष्टान्तो यथा लोके दुन्दुभेर्हन्यमानस्य लक्षणया हन्यमानदुन्दुभ्यभिव्यक्तशब्दत्वसामान्यस्य विशेषभूतान् सामान्याद्बाह्यत्वेन गृहीतुं शक्नुयादिति व्यतिरेक, एवमन्वयोऽपि दुन्दुभिशब्दस्य ग्रहणेन तद्विशेषशब्दो आघातसंज्ञको गृहीत आघातस्य वा ग्रहणेन तदवान्तरविशेषशब्दो गृहीत इति श्रुत्यर्थ ।

(३) आर्द्रैरेधोभिरिद्ध आर्द्रैधा, अभ्याहित–उपचित ।

(४) 'उर्वशी हाप्सरा पुरूरवस चकमे' इत्यादिरितिहास (१), 'सदेव सोम्येदमग्र आसीदि'त्यादिसर्गकथनात्मकं पुराणम् (२), देवयजनविद्याया विद्या (३), 'प्रियमित्येतदुपासीत' इत्यादिरहस्योपासनात्मिका उपनिषद्'(४), 'तदेते श्लोका' इत्यादिनिर्दिष्टा ब्राह्मणप्रभवा मन्त्रश्लोकाः(५), 'आत्मेत्येवोपासीत' इत्यादिवस्तुसङ्ग्रहवाक्यानि सूत्राणि(६), सङ्ग्रहविवरणरूपाण्यनुव्याख्यानानि (७), मन्त्रव्याख्यात्मकानि व्याख्यानि(८) इत्येवमष्टविध ब्राह्मण बोध्यम् ।

प्रलयसमये च तदनुप्रवेशात्ततो न व्यतिरिच्यते, (१)यथा सामुद्रमेवाम्भः पृथिवीतेजःसम्प-र्कात्काठिन्यमुपगतं सैन्धवं खिल्यः स हि स्वाकरे समुद्रे क्षिप्तोऽम्भ एव भवत्येव चिदम्भोधौ लीनं जगच्चिदेव भवति न तु ततोऽतिरिच्यत इति । एतद्दृष्टान्तप्रबन्धेनाह—**"स यथा सर्वासामपामि"त्यादि**(२) । दृष्टान्तप्रबन्धमुक्त्वा दार्ष्टान्तिके योजयति **"एवं वा अरे इदं महदि"ति** । बृहत्त्वेन ब्रह्मोक्तम् । इदं ब्रह्मेत्यर्थः । भूतं सत्यम्, अनन्तम् नि-त्यम्, अपारं सर्वगतं, विज्ञानघनो विज्ञानैकरस इति यावत् । एतेभ्यः कार्यकारणभावेन व्यवस्थितेभ्यो भूतेभ्यः समुत्थाय साम्येनोत्थाय कार्यकारणसंघातस्य ह्यवच्छेदा(३)द्दुः-खित्वशोकित्वादयस्तदवच्छिन्ने चिदात्मनि तद्विपरीतेऽपि प्रतीयन्ते यथोदकप्रतिबिम्बिते चन्द्र-मसि तोयगताः कम्पादयस्तदिदं साम्येनोत्थानं, यदा त्वागमाचार्योपदेशपूर्वकमनननिदिध्या-सनप्रकर्षपर्यन्तजोऽस्य ब्रह्मस्वरूपसाक्षात्कार उपावर्तते तदा निर्मृष्टनिखिलसवासनाविद्या-मलस्य कार्यकरणसङ्घातभूतस्य विनाशे तान्येव भूतानि नश्यन्त्यनु तदुपाधिश्चिदात्मनः खि-ल्यभावो विनश्यति । ततो न प्रेत्य कार्यकरणभूतनिवृत्तौ रूपगन्धादिसंज्ञाऽस्तीति, न प्रेत्य सं-ज्ञास्तीति संज्ञामात्रनिषेधादात्मा नास्तीति मन्यमाना सा मैत्रेयी होवाच—'अत्रैव मा भगवा-नमूमुहन्मोहितवान् न प्रेत्य संज्ञास्तीति' ।(४)स होवाच याज्ञवल्क्यः स्वाभिप्रायं द्वैते हि रूपा-दिविशेषसंज्ञानिबन्धनो दुःखित्वाद्यभिमानः । (५)आनन्दज्ञानैकरसब्रह्माद्वयानुभवे तु तत्केन कं पश्येत् (६) ब्रह्म वा केन विजानीयात् नहि तदास्य कर्मभावोऽस्ति स्वप्रकाशत्वात् । एत-दुक्तं भवति—न संज्ञामात्रं मया व्यासेधि किन्तु विशेषसंज्ञेति । तदेवममृतत्वफलेनोपक्र-मान्मध्ये चात्मविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तदुपपादनाद् उपसंहारे च 'महद्भूतमनन्तमि-'त्यादिना च ब्रह्मरूपाभिधानाद्द्वैतनिन्दया चाद्वैतगुणकीर्तनाद्ब्रह्मैव मैत्रेयीब्राह्मणे प्रतिपाद्यं न जीवात्मेति नास्ति पूर्वपक्ष इत्यनारभ्यमेवेदमधिकरणम् ।

(७)अत्रोच्यते । भोक्तृत्वज्ञातृताजीवरूपोत्थानसमाधये मैत्रेयीब्राह्मणे पूर्वपक्षेणोपक्रमः कृतः । पतिजायादिभोग्यसम्बन्धो नाभोक्तुर्ब्रह्मणो युज्यते, नापि ज्ञानकर्तृत्वमकर्तुः साक्षाच्च

---

(१) 'स यथा सैन्धवखिल्य' इति वाक्येन ज्ञाननिमित्तक आत्यन्तिक प्रलय प्रपञ्चस्योक्तस्तमाह यथेति । खिल्यो—घनः ।

(२) इदमप्युपनिषत्प्रतीकम् । अनेनात्यन्तिकप्रलये प्राकृतलयो दृष्टान्तत्वेनोक्त इत्यर्थः ।

(३) अल्पत्वात् ।

(४) 'यत्र हि द्वैतमिव भवती'त्यादिवाक्यं विभजते स होवाचेति ।

(५) 'यत्र त्वस्य सर्वमात्मैवे'त्यादिवाक्यं विवृणुते आनन्देति ।

(६) विषयाभावेऽपि आत्मभूतं ब्रह्म जानीयादिति शङ्कानिवृत्त्यर्थं 'विज्ञातारमरे केन विजानीयादि'ति वाक्यं व्याचष्टे ब्रह्म वेति ।

(७) यद्यप्यत्र जीवब्रह्मलिङ्गसंशये सर्वात्मकब्रह्मण्यन्तर्भवन्तो जीवधर्मा न ब्रह्मपरतया योज्यन्त प्रात-र्दनाधिकरण एव तत्सिद्धेर्नापि प्रसिद्धजीवानुवादेनाप्रसिद्धब्रह्मात्मबोधनपरत्वमवधार्यते सुषुप्त्युत्क्रान्त्यधिक-रणेनैव तत्सिद्धेस्तथापि जीवमनूद्य ब्रह्मत्वबोधनादनुवाद्यविधेययोर्भेदाभेदाविति मतनिरासेनैकान्तिकमद्वैतं प्रतिपाद्यत इत्याह अत्रोच्यत इत्यादिना सिद्धान्ती । मैत्रेयीब्राह्मणविषये तु भेदपरत्वेन शङ्क्यमानानां भोक्तृ-त्वज्ञातृत्वादीनां समाधये जीवमात्रपरत्वेन पूर्वपक्ष उपन्यस्त इत्याह भोक्तृत्वेति । तदेव क्रमशो विभजते पतीति ।

महतो भूतस्य विज्ञानात्मभावेन समुत्थानाभिधानं विज्ञानात्मन एव द्रष्टव्यत्वमाह, अन्यथा ब्रह्मणो द्रष्टव्यत्वपरेऽस्मिन् ब्राह्मणे तस्य विज्ञानात्मत्वेन समुत्थानाभिधानमनुपयुक्तं स्यात्तस्य तु द्रष्टव्यत्वमुपयुज्यते इत्युपक्रममात्रं पूर्वपक्षः कृतः। भोक्त्रर्थत्वाच्च भोग्यजातस्येति तदुपोद्बलनमात्रम्। सिद्धान्तस्तु निगदव्याख्यातेन भाष्येणोक्तः ॥ १९ ॥

तदेवं पौर्वापर्यालोचनया मैत्रेयीब्राह्मणस्य ब्रह्मदर्शनपरत्वे स्थिते भोक्त्रा जीवात्मनोपक्रममाचार्यदेशीयमतेन तावत्समाधत्ते सूत्रकारः--

## सू० प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥

यथा हि वह्नेर्विकारा व्युच्चरन्तो विस्फुलिङ्गा न वह्नेरत्यन्तं भिद्यन्ते तद्रूपनिरूपणत्वा(१)न्नापि ततोऽत्यन्तमभिन्ना वह्नेरिव परस्परव्यावृत्त्यभावप्रसङ्गात्, तथा जीवात्मानोपि ब्रह्मविकारा न ब्रह्मणोऽत्यन्तं भिद्यन्ते चिद्रूपत्वाभावप्रसङ्गान्नाप्यत्यन्तं न भिद्यन्ते परस्परं व्यावृत्त्यभावप्रसङ्गात्, सर्वज्ञं प्रत्युपदेशवैयर्थ्याच्च। तस्मात्कथंचिद्भेदो जीवात्मनामभेदश्च। तत्र तद्विज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धये विज्ञानात्मपरमात्मनोरभेदमुपादाय परमात्मनि दर्शयितव्ये विज्ञानात्मनोपक्रम इत्याश्मरथ्य आचार्यो मेने ॥ २० ॥

आचार्यदेशीयान्तरमतेन समाधत्ते—

## सू० उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥२१॥

जीवो हि परमात्मनोऽत्यन्तं भिन्न एव सन् देहेन्द्रियमनोबुद्ध्युपधानसम्पर्कात्सर्वदा कलुषस्तस्य च ज्ञानध्यानादिसाधनानुष्ठानात्सम्प्रसन्नस्य देहेन्द्रियादिसंघातादुत्क्रमिष्यतः परमात्मनैक्योपपत्तेरिदमभेदेनोपक्रमणम्। एतदुक्तं भवति—भविष्यन्तमभेदमुपादाय भेदकालेऽप्यभेद उक्तः। यथाहुः पाञ्चरात्रिकाः--

आमुक्तेर्भेद एव स्याज्जीवस्य च परस्य च।
मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः ॥ इति।

अत्रैव श्रुतिमुपन्यस्यति-"श्रुतिश्चैव"मिति ( पृ० ४२५-२२ )। पूर्वं देहेन्द्रियाद्युपाधिकृतं कलुषत्वमात्मन उक्तं, सम्प्रति स्वाभाविकमेव जीवस्य नामरूपप्रपञ्चाश्रयत्वलक्षण कालुष्यं पार्थिवानामणूनामिव(२) श्यामत्व केवलं पाकेनेव ज्ञानध्यानादिना तदपनीय जीवः परात्परतर पुरुषमुपैतीत्याह—"क्वचिच्च जीवाश्रयमपी"ति ( पृ० ४२६ पं० २ )। नदी निदर्शनं यथा 'सोम्येमा नद्य' इति ॥ २१ ॥

तदेवमाचार्यदेशीयमतद्वयमुक्त्वात्रापरितुष्यन्नाचार्यमतमाह सूत्रकारः--

## सू० अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

एतद्व्याचष्टे-"अस्यैव परमात्मन" इति। न जीव आत्मनोऽन्यो नापि तद्वि-

---

( १ ) वह्निरूपनिरूपणत्वात्। तत इति। अत्यन्तमभेदे हि ब्रह्मवत्परस्परमव्यावृत्तिप्रसङ्गात् ब्रह्मव्यतिरिक्तजीवाभावे च तस्यैवोपदेशः स्यात्तस्य चायुक्तत्वादिति दार्ष्टान्तिकान्तार्थो बोध्य।

( २ ) 'अणुश्यामतावदेतत्स्यात्' इति गौतमसूत्रेषु धृतस्य प्राचीननैयायिकमतस्य दृष्ट्येदमुक्त, तथाच यथाऽनादिरप्यणुश्यामता पाकेन विनश्यति तथा जीवस्य स्वाभाविकमपि काालुष्यं ज्ञानादिना नश्यतीति भावः।

कारः किं स्वात्मैवाविद्योपाधानकल्पितावच्छेदः, आकाश इव घटमणिकादिकल्पितावच्छेदो घटाकाशो मणिकाकाशो न तु परमाकाशादन्यस्तद्विकारो वा । ततश्च जीवात्मनोपक्रमः परमात्मनैवोपक्रमस्तस्य ततोऽभेदात् । स्थूलदर्शिलोकप्रतीतिसौकर्यायौपाधिकेनात्मरूपेणोपक्रमः कृतः । अत्रैव श्रुतिं प्रमाणयति—"**तथा चे**"ति । अथ विकारः परमात्मनो जीवः कस्मान्न भवत्याकाशादेवदित्याह—"**न च तेजःप्रभृतीनामि**"ति । नहि यथा तेजःप्रभृतीनामात्मविकारत्वं श्रूयते एवं जीवस्येति । आचार्यत्रयमतं विभजते—"**काशकृत्स्नस्याचार्यस्ये**"ति । आत्यन्तिके सत्यभेदे कार्यकारणभावाभावात् अनात्यन्तिकोऽभेद आस्थेयस्तथा च कथंचिद्भेदोऽपीति तमास्थाय कार्यकारणभाव इति(१) । मतत्रयमुक्त्वा काशकृत्स्नीयमतं साधुत्वेन निर्द्धारयति—"**तत्र**—तेषु मध्ये, **काशकृत्स्नीयं मत**"मिति ( पृ० ४२७० पं० ३ ) । आत्यन्तिके हि जीवपरमात्मनोरभेदे तात्त्विकेऽनाद्यविद्योपाधिकल्पितो भेदस्तत्त्वमसीति जीवात्मनो ब्रह्मभावतत्त्वोपदेशश्रवणमनननिदिध्यासनप्रकर्षपर्यन्तजन्मना साक्षात्कारेण विद्यया शक्यः समूलकाषं कषितुं रज्ज्वामहिविभ्रम इव रज्जुतत्त्वसाक्षात्कारेण राजपुत्रस्येव च म्लेच्छकुले वर्द्धमानस्यात्मनि समारोपितो म्लेच्छभावो राजपुत्रोऽसीति आप्तोपदेशेन । न तु मृद्विकारः शरावादिः शतशोऽपि मृन्मृदिति चिन्त्यमानस्तज्जन्मना मृद्भावसाक्षात्कारेण शक्यो निवर्तयितुं, तत्कस्य हेतोस्तस्यापि मृदो भिन्नाभिन्नस्य तात्त्विकत्वाद्, वस्तुनस्तु ज्ञानेनोच्छेत्तुमशक्यत्वात् सोऽयं(१) प्रतिविपादयिषितार्थानुसारः । अपि च जीवस्यात्मविकारत्वे तस्य ज्ञानध्यानादिसाधनानुष्ठानात् स्वप्रकृतावप्यये सति नामृतत्वस्याशास्तीत्यपुरुषार्थत्वममृतत्वप्राप्तिश्रुतिविरोधश्च, काशकृत्स्नमते त्वेतदुभयं नास्तीत्याह—"**एवं च सती**"ति । ननु यदि जीवो न विकारः किन्तु ब्रह्मैव कथं तर्हि तस्मिन्नामरूपाश्रयत्वश्रुतिः कथं च यथाग्नेः क्षुद्रा विस्फुलिङ्गा इति ब्रह्मविकारश्रुतिरित्याशङ्कामुपसंहारव्याजेन निराकरोति—"**अतश्च स्वाश्रयस्ये**"ति । यतः प्रतिपिपादयिषितार्थानुसारश्चामृतत्वप्राप्तिश्च विकारपक्षे न सम्भवतः, अतश्चेति योजना ।

द्वितीयपूर्वपक्षबीज(३)मनयैव त्रिसूत्र्यापाकरोति—"**यदप्युक्त**"मिति । शेषमतिरोहितार्थं व्याख्यातार्थं च । (४)तृतीयपूर्वपक्षबीजनिरासे काशकृत्स्नीयेनैवेत्यवधारणं तन्मताश्रयणेनैव तस्य शक्यनिरासत्वात् । (५)ऐकान्तिके ह्यद्वैते आत्मनोऽन्यकर्मकरणे 'केन कं पश्येदि'ति आत्मनश्च कर्मत्वं 'विज्ञातारमरे केन विजानीयादि'ति शक्यं निषेद्धुम् । भेदाभेदपक्षे वैकान्तिके वा भेदे सर्वमेतदद्वैताश्रयमशक्यमित्यवधारणस्यार्थः । न केवलं काशकृ-

---

( १ ) कार्यकारणभाव इति । आश्मरथ्यमते आत्यन्तिकेऽभेदे आस्थिते सति कार्यकारणभावाभावप्रसङ्गात् ईषद्भेदोऽप्यायातीति भाव । ( २ ) सोयं—परापरयोरत्यन्ताभेद ।

( ३ ) परस्यैव समुत्थानश्रुत्या जीवाभेदाभिधानरूपं द्वितीयपूर्वपक्षबीजमित्यर्थः ।

( ४ ) विज्ञातृशब्देन कर्तृनिर्देशलिङ्गरूपतृतीयं पूर्वपक्षबीजन्तु काशकृत्स्नमतेनैव परिहरणीयमित्याह तृतीयेति ।

( ५ ) शक्यनिराकरणत्वमेवाह ऐकान्तिके हीति। 'केन कं पश्येदि'त्यनेनान्यकर्मकरणे निषिद्धे सति 'केन कं विजानीयादि'त्यनेन ज्ञानकर्मत्व निषेद्धु शक्य काशकृत्स्नमते, भेदपक्षे भेदाभेदपक्षे च प्रमाण दे सत्यप्य शक्यमिति भाव. ।

त्स्नीयदर्शनाश्रयणेन भूतपूर्वगत्या विज्ञातृत्वमपि तु श्रुतिपौर्वापर्यपर्यालोचनयाप्येवमेवेत्याह—
**"अपि च यत्र ही"ति** ( ४२८-१८ ) । कस्मात्पुनः काशकृत्स्नस्य मतमास्थीयते
नेतरेषामाचार्याणामित्यत आह—(१)**दर्शितं तु पुरस्तादि"ति** ( पृ० ४२९ पं०
७ ) । काशकृत्स्नीयस्य मतस्य श्रुतिप्रबन्धोपन्यासेन पुनः श्रुतिमत्त्वं स्मृतिमत्त्वं चोपसं-
हारोपक्रममाह—**"अतश्चे"ति** । क्वचित्पाठ आतश्चेति । तस्यावश्यं चेत्यर्थः । (२)ज-
ननजरामरणभीतयो विक्रियास्तासां सर्वासां 'महानज' इत्यादिना प्रतिषेध', परिणामपक्षे
ऽन्यस्य चान्यभावपक्षे ऐकान्तिकाद्वैतप्रतिपादनपरा एकमेवाद्वितीयमित्यादयो द्वैतदर्शननि-
न्दापराश्चान्योसावन्योहमस्मीत्यादयो जन्मजरादिविक्रियाप्रतिषेधपराश्चैष महानज इत्यादयः
श्रुतय उपरुध्येरन् । (३)अपि च यदि जीवपरमात्मनोर्भेदाभेदावास्थीयेयातां ततस्तयोर्मिथो
विरोधात्समुच्चयाभावादेकस्य बलीयस्त्वे नात्मनि निरपवादं विज्ञानं जायेत बलीयसैकेन
दुर्बलपक्षावलम्बिनो ज्ञानस्य बाधनात् । (४)अथ त्वगृह्यमाणविशेषतया न बलाबलावधारणं,
ततः संशये सति न सुनिश्चितार्थमात्मनि ज्ञानं भवेत्सुनिश्चितार्थं च ज्ञानं मोक्षोपायः श्रूयते
'वेदान्तविज्ञानसुनिश्चितार्था' इति । तदेतदाह—**"अन्यथा मुमुक्षूणामि"ति** । एकत्व-
मनुपश्यत इति श्रुतिर्न पुनरेकत्वानेकत्वे अनुपश्यत इति । ननु यदि क्षेत्रज्ञपरमात्मनोर-
भेदो भाविकः, कथं तर्हि व्यपदेशबुद्धिभेदौ क्षेत्रज्ञः परमात्मेति, कथं च नित्यशुद्धबुद्धमुक्त
स्वभावस्य भगवतः संसारिता ? अविद्याकृतनामरूपोपाधिवशादिति चेत्, कस्येयमविद्या, ?
न तावज्जीवस्य, तस्य परमात्मनो व्यतिरेकाभावात्, नापि परमात्मनस्तस्य विद्यैकरसस्या
विद्याश्रयत्वानुपपत्तेः । तदत्र संसारित्वासंसारित्वविद्याविद्यावत्त्वरूपविरुद्धधर्मसंसर्गाद्बुद्धि-
व्यपदेशभेदाच्चास्ति जीवेश्वरयोर्भेदोपि भाविक इत्यत आह—**"स्थिते च परमात्मक्षे-
त्रज्ञात्मैकत्व" इति** ( पृ० ४३० पं० १ ) । (५)न तावद्भेदाभेदावेकत्र भाविकौ भवि-
तुमर्हत इति विपश्चितं प्रथमे पादे । (६)द्वैतदर्शननिन्दया चैकान्तिकाद्वैतप्रतिपादनपराः पौर्वा
पर्यालोचनया सर्वे वेदान्ताः प्रतीयन्ते । तत्र यथा बिम्बादवदातात्तात्त्विके प्रतिबिम्बानाम-
भेदेऽपि नीलमणिकृपाणकाचाद्युपधानभेदात्काल्पनिको जीवानां भेदो बुद्धिव्यपदेशभेदौ वर्त-
यति 'इदं बिम्बमवदातमिमानि च प्रतिबिम्बानि नीलोत्पलपलाशश्यामलानि वृत्तदीर्घादि-
भेदभाञ्जि बहूनी'ति, एवं परमात्मनः शुद्धस्वभावाज्जीवानामभेद ऐकान्तिकेप्यनिर्वचनीयाना-
द्यविद्योपधानभेदात्काल्पनिको जीवानां भेदो बुद्धिव्यपदेशभेदा'वय च परमात्मा शुद्धविज्ञानानन्द-
स्वभाव इमे च जीवा अविद्याशोकदुःखाद्युपद्रवभाज' इति वर्तयति । अविद्योपधानं च यद्यपि
विद्यास्वभावे परमात्मनि न साक्षादस्ति तथापि तत्प्रतिबिम्बकल्पजीवद्वारेण परस्मि(७)न्नु-

---

( १ ) पुष्कलेरेण श्रुत्यनुमानाद्वर प्रत्यक्षश्रुतिदृष्टं मतं गृहीतमिति परिहारभाष्यार्थोऽत्र बोध्य ।

( २ ) 'सर्वविक्रियाप्रतिषेधादि'ति ( पृ० ४२९-२० ) भाष्यं विवृण्वन्नाह जननेति ।

( ३ ) 'अन्यथा निरपवादानुपपत्तेरि'ति भाष्यं व्याचष्टे अपि चेति ।

( ४ ) 'सुनिश्चितार्थत्वानुपपत्तेश्चे'ति भाष्यस्याभिप्रायमाहाथत्विति । समबलबोधितविपर्यये विषये सत्प्र-
तिपक्षानुमानवत्संशय एव स्यादित्यर्थः ।

( ५ ) ननु भेदाभेदसम्भवाच्छ्रौताभेदासिद्धौ मृषाभेद' इति भाष्योक्तिरयुक्तेत्याशङ्क्याह न तावदिति ।

( ६ ) तर्हि भेद एवास्तु तात्त्विक इत्याक्षेपे आह द्वैतेति ।

( ७ ) ब्रह्मणि, उच्यते प्राचीनाचार्यैरिति शेष ।

च्यते । न चैवमन्योन्याश्रयो जीवविभागाश्रया विद्या अविद्याश्रयश्च जीवविभाग इति, बीजाङ्कुरवदनादित्वात् । अत एव 'कानुद्दिश्यैष ईश्वरो मायामारचयत्यनर्थिकामुद्देश्यानां सर्गादौ जीवानामभावात्, कथं चात्मानं संसारिणं विविधवेदनाभाजं कुर्यादि'त्याद्यनुयोगो निरवकाशः । (१)न खल्वादिमान् संसारो नाप्यादिमानविद्याजीवविभागो येनानुयुज्येतेति । अत्र च नामग्रहणेनाविद्यामुपलक्षयति । स्यादेतत्, यदि न जीवाद्ब्रह्म भिद्यते हन्त जीवः स्फुट इति ब्रह्मापि तथा स्यात्तथा च 'निहितं गुहाया'मिति नोपपद्यत इत्यत आह—"नहि सत्यमि"ति । यथा हि बिम्बस्य मणिकृपाणादयो गुहा एवं ब्रह्मणोपि प्रतिजीवं भिन्ना अविद्या गुहा इति(२) । यथा प्रतिबिम्बेषु भासमानेषु बिम्बं तदभिन्नमपि गुह्यमेवं जीवेषु भासमानेषु तदभिन्नमपि ब्रह्म गुह्यम् । अस्तु तर्हि ब्रह्मणोऽन्यद्गुह्यमित्यत आह—"न च ब्रह्मणोऽन्य" इति । ये त्वाश्मरथ्यप्रभृतयो "निर्बन्धं कुर्वन्ति ते वेदान्तार्थमि"ति । (३)ब्रह्मणः सर्वात्मना भागशो वा परिणामाभ्युपगमे तस्य कार्यत्वादनित्यत्वाच्च तदाश्रितो मोक्षोपि तथा स्यात् । यदि त्वेवमपि मोक्षं नित्यमकृतकं ब्रूयुस्तत्राह—"न्यायेने"ति । (४)एवं ये नदीसमुद्रनिदर्शनेनामुक्तेर्भेदं मुक्तस्य चाभेदं जीवस्यास्थिषत तेषामपि न्यायेनासंगतिः, नो जातु घटः पटो भवति । ननूक्तं यथा नदी समुद्रो भवतीति । का पुनर्नद्यभिमताऽऽयुष्मतः ? किं पाथःपरमाणव उतैषां संस्थानभेद आहोस्वित्तदारब्धोवयवी ? तत्र संस्थानभेदस्य वाऽवयविनो वा समुद्रनिवेशे विनाशात् कस्य समुद्रेणैकता, नदीपाथःपरमाणूनां तु समुद्रपाथःपरमाणुभ्यः पूर्वावस्थितेभ्यो भेद एव नाभेदः, एवं समुद्रादपि तेषां भेद एव । ये (५)तु काशकृत्स्नीयमेव मतमास्थाय जीवं परमात्मनोंऽशमाचख्युस्तेषां कथं 'निष्कलं निष्क्रियं शान्त'-मिति न श्रुतिविरोधः।(६)निष्कलमिति सावयवत्वं न्यासेधि न तु सांशत्वम्, अंशश्च जीवः परमात्मनो नभस इव कर्णनेमिमण्डलावच्छिन्नं नभः शब्दश्रवणयोग्यं वायोरिव च शरीरावच्छिन्नं पञ्चवृत्तिः प्राण इति चेत् । न (७)तावन्नभो नभसोंशस्तस्य तत्त्वात् । कर्णनेमिमण्डलावच्छिन्नमंश इति चेद्, (८)हन्त तर्हि प्राप्ताप्राप्तविवेकेन कर्णनेमिमण्डलं वा तत्संयोगो वेत्युक्तं भवति । न च कर्णनेमिमण्डलं तस्यांशस्तस्य ततो भेदात् । तत्संयोगो नभोधर्मत्वात्तस्यांश इति चेत् । न । अनुपपत्तेः, नभोधर्मत्वे हि तदनवयवं सर्वत्राभिन्नमिति तत्संयोगः

---

(१) अतएवेत्यादिकमेव विवृणोति न खल्विति । अयं भाव—अविद्याधीनस्य जीवविभागस्यानादित्वादुद्देश्याभावोऽसिद्ध, अनादित्वाच्च मायाया आरचनाभावः, संसारस्यानादित्वात्संसारिणं कथं कुर्यादित्यचोद्यम्, मायाकृतसंसारे गन्धर्वनगरादिभ्रमवन्न प्रयोजनानुयोग इति ।

(२) यथा दर्पणादयो मुखादाववदातत्वादेर्भानाभानप्रयोजिका तथाऽविद्याप्येकस्मिन्स्वयंप्रभे निरंशेऽपि भानाभाने प्रवर्त्तयति असम्भावनीयावभासचतुरत्वादित्यर्थ ।

(३) आश्मरथ्यमतं वेदान्तार्थबोधकत्वान्न युक्तमित्यत्र ब्रह्मण इति ।

(४) औडुलोमिमितेऽसंगतिं प्रदर्शयन्नाह एवं ये इति । भिन्नयोरैक्यासम्भवादेकत्वशास्त्र तन्मतेऽसंगतं स्यादित्यर्थ । (५) भास्करमतमनूद्य दूषयति ये त्विति ।

(६) भास्करमतेनाशङ्कते निष्कलमितीति । (७) समाधत्ते न तावदिति ।

(८) कर्णनेमिमण्डलावच्छिन्नं नभोंऽश स्यादित्याशङ्कायामाह हन्तेति । नेम्याकारकर्णवलयतत्संयोगयो प्राप्तयोरेवाकाशांशनिर्देशसम्भवादन्यथाऽनिर्देशाच्च कल्पितनभोवच्छेदानभ्युपगमादपि कर्णस्तत्संयोगो वा आकाशांश इत्युक्तं स्यादित्यर्थः ।

सर्वत्र प्रथेत। (१)नह्यस्ति सम्भवोऽनवयवमव्याप्य वर्तत इति। तस्मात्तत्रास्ति चेद्व्याप्यैव। न चेद्व्याप्नोति तत्र नास्त्येव। व्याप्यैवास्ति केवलं प्रतिसम्बन्ध्यधीननिरूपणतया न सर्वत्र निरूप्यत इति चेत्। न नाम निरूप्यताम्, तत्संयुक्तं तु नभः श्रवणयोग्यं सर्वत्रास्तीति सर्वत्र श्रवणप्रसङ्गः। (२)न च भेदाभेदयोरन्यतरेणांशः शक्यो निर्वक्तुम्, न चोभाभ्यां, विरुद्धयोरेकत्रासमवायादित्युक्तम्। तस्मादनिर्वचनीयानाद्यविद्यापरिकल्पित एवांशो नभसो न भाविक इति युक्तम्। (३)न च काल्पनिको ज्ञानमात्रायत्तजीवितः, कथमविज्ञायमानोऽस्ति, असंश्चांशः कथं शब्दश्रवणलक्षणाय कार्याय कल्पते, न जातु रज्ज्वामज्ञायमान उरगो भयकम्पादिकार्याय पर्याप्त इति वाच्यम्। अज्ञातत्वासिद्धेः, कार्यव्यंग्यत्वादस्य। (४)कार्योत्पादात् पूर्वमज्ञातं कथं कार्योत्पादाङ्गमिति चेत्। (५)न, पूर्वपूर्वकार्योत्पादव्यङ्ग्यत्वादसत्यपि ज्ञाने तत्संस्कारानुवृत्तेरनादित्वाच्च कल्पना तत्संस्कारप्रवाहस्य। अस्तु वाऽनुपपत्तिरेव कार्यकारणयोर्मायात्मकत्वात्। अनुपपत्तिर्हि मायामुपोद्बलयति। अनुपपद्यमानार्थत्वान्मायायाः। अपि च भाविकांशवादिनां मते भाविकांशस्य ज्ञानेनोच्छेत्तुमशक्यत्वान्न ज्ञानध्यानसाधनो मोक्षः स्यात् तदेवमाकाशांश इव श्रोत्रमनिर्वचनीयम्। एवं जीवो ब्रह्मणोंऽश इति काशकृत्स्नीयं मतमिति सिद्धम्॥ २२॥

## सू० प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्॥ २३॥

(६)स्यादेतत्, वेदान्तानां ब्रह्मणि समन्वये दर्शिते समाप्तं समन्वयलक्षणमिति किमपरमवशिष्यते यदर्थमिदमारभ्यत इति शङ्कां निराकर्तुं सङ्गतिं दर्शयन् अवशेषमाह "यथाऽभ्युदये"ति। अत्र च लक्षणस्य सङ्गतिमुक्त्वा लक्षणेनास्याधिकरणस्य सङ्गतिरुक्ता। एतदुक्तं भवति—सत्य जगत्कारणे ब्रह्मणि वेदान्तानामुक्तः समन्वयस्तत्र कारणभावस्योभयथा दर्शनाज्जगत्कारणत्वं ब्रह्मणः किं निमित्तत्वेनैव, उतोपादानत्वेनापि। तत्र यदि प्रथमः पक्षस्तत उपादानकारणानुसरणे सांख्यस्मृतिसिद्धं प्रधानमभ्युपेयम्। तथा च जन्माद्यस्य यत इति ब्रह्मलक्षणमसाधु, अतिव्याप्तेः प्रधानेऽपि गतत्वात। असम्भवाद्वा। यदि तूत्तरः पक्ष

---

(१) कर्णनेमिमण्डलपक्षं निरस्य संयोगपक्षे किं संयोगो व्यापी न वा? आद्यमनुपलम्भान्निरस्य द्वितीयं निराकरोति नहीति।

(२) अधुनांशमात्रे साधारणदूषणमाह नचेति। वस्तुतो भिन्नयोर्महिषाश्ववन्नांशांशित्वम्, नाप्यभिन्नस्यैकैकवत्, नापि भिन्नाभिन्नयोस्तद्विरोधस्य समन्वयसूत्रे उक्तत्वादित्यर्थः।

(३) अविद्याकल्पितोऽपि नभोंशो न सम्भवतीत्याह नचेति। यत्काल्पनिकं न तदज्ञातदशायामस्ति रज्जुभुजङ्गवच्छ्रोत्रलक्षणांशो यदि कल्पितकत्वेन ज्ञानमात्रप्राप्तजीविकः प्रतीतसत्ताकस्तर्हि कथमज्ञायमानोऽस्ति। इष्टप्रसङ्गतामाशंक्याह असंश्चेति। अज्ञातत्वेन हि श्रोत्रं शब्दधीहेतुस्तदज्ञातदशायां यद्यसत्स्यात्तत शब्दज्ञानं स्यादित्यर्थः।

(४) शङ्कते कार्योत्पादादिति॥ शब्दोपलब्धिकार्यलिङ्गकानुमानाद्या श्रोत्रस्याभिव्यक्तिः सा कार्योत्पत्तेरर्वाचीति प्राक्कार्यादसच्छ्रोत्रं स्यात्तद्बलात्तत्सत्त्वे तु चक्रकापत्तिस्तथाच नियतप्राक्सत्त्वरूपकारणत्वं न स्यादिति भावः।

(५) समाधत्ते नेति। (६) मध्येपादं वृत्तकीर्तनस्य प्रयोजनमाह स्यादेतदिति।

स्ततो नातिव्याप्तिर्नाप्यव्याप्तिरिति साधुलक्षणम् । सोऽयमवशेषः । तत्र—

(१)ईक्षापूर्वककर्तृत्वं प्रभुत्वमसरूपता ।
निमित्तकारणेष्वेव नोपादानेषु कर्हिचित् ॥

तदिदमाह—"**तत्र निमित्तकारणमेव तावदि**"ति ( पृ. ४३१. पं. ३ ) । आगमस्य कारणमात्रे पर्यवसानादनुमानस्य तद्विशेषनियममागमो न प्रतिक्षिपत्यपि त्वनुमन्यत एवेत्याह—"**पारिशेष्याद्ब्रह्मणोन्यदि**"ति । ब्रह्मोपादानत्वस्य प्रसक्तस्य प्रतिषेधेऽन्यत्राप्रसङ्गात्सांख्यस्मृतिप्रसिद्धमानुमानिकं प्रधानं शिष्यत इति । (२)एकविज्ञानेन च सर्वविज्ञानप्रतिज्ञान'मुत तमादेशमि'त्यादिना, यथा सोम्यैकेन मृत्पिण्डेनेति च दृष्टान्तः, परमात्मनः प्राधान्यं सूचयतः । यथा सोमशर्मणैकेन ज्ञातेन सर्वे कठा ज्ञातो भवति ।

एवं प्राप्त उच्यते—**प्रकृतिश्च** । न केवलं ब्रह्म निमित्तकारणं, कुतः ? प्रतिज्ञादृष्टान्तयोरनुपरोधात् । निमित्तकारणत्वमात्रे तु तावुपरुध्येयाताम् , तथाहि—

(३)न मुख्ये सम्भवत्यर्थे जघन्या वृत्तिरिष्यते ।
न चानुमानिकं युक्तमागमेनापबाधितम् ॥
सर्वे हि तावद्वेदान्ताः पौर्वापर्येण वीक्षिताः ।
ऐकान्तिकाद्वैतपरा द्वैतमात्रनिषेधतः ॥

तदिहापि प्रतिज्ञादृष्टान्तौ मुख्यार्थावेव युक्तौ न तु 'यजमानः प्रस्तर' इतिवद्गुणकल्पनया नेतव्यौ तस्यार्थवादस्यातत्परत्वात् । प्रतिज्ञादृष्टान्तवाक्ययोस्त्वद्वैतपरत्वादुपादानकारणात्मकत्वाच्चोपादेयस्य कार्यजातस्योपादानज्ञानेन तज्ज्ञानोपपत्तेः । निमित्तकारणं तु कार्यादत्यन्तभिन्नमिति न तज्ज्ञाने कार्यज्ञानं भवति । अतो ब्रह्मोपादानकारणं जगतः । (४)न च ब्रह्मणोऽन्यन्निमित्तकारणं जगत इत्यपि युक्तम् । प्रतिज्ञादृष्टान्तोपरोधादेव । न हि तदानीं ब्रह्मणि ज्ञाते सर्वं विज्ञातं भवति । जगन्निमित्तकारणस्य ब्रह्मणोऽन्यस्य सर्वमध्यपातिनस्तज्ज्ञानेनाविज्ञानात् । (५)'यत' इति च पञ्चमी न कारणमात्रे स्मर्यतेऽपि तु प्रकृतौ जनिकर्तुः प्रकृतिरिति । ततोऽपि प्रकृतित्वमवगच्छामः । दुन्दुभिग्रहणं दुन्दुभ्याघातग्रहणं च तद्गतशब्दत्वसामान्योपलक्षणार्थम् ॥ २३ ॥

---

( १ ) ईक्षितृत्वश्रुतेरेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानाच्च ब्रह्म निमित्तकारणमुतोपादानकारणमपीति सन्देहे पूर्वं मुख्यत प्रतिज्ञाश्रयणेन वाक्यस्य जीवपरत्वं निरस्तम् , अधुना निमित्तोपादानभेदाश्रैणी सेति सङ्गतिमभिसन्धाय पूर्वपक्षमाह ईक्षेति । अनेन ब्रह्म द्रव्यप्रकृति ईक्षितृत्वात्कर्तृत्वात्स्वामित्वाच्च प्रभुवत् , न पृथिव्यादिप्रकृति असरूपत्वात् गन्धादिशून्यत्वादित्याद्यनुमानं पूर्वपक्षिमतेन सूचितम् । श्लोकार्थः स्पष्ट ।

( २ ) ननु निमित्तोपादानभेदे कथं प्रतिज्ञादृष्टान्तयोर्योजना तत्राह एकेति ।

( ३ ) ननु प्रतिज्ञादृष्टान्तौ प्राधान्यपरौ भविष्यत इत्याशंक्याह न मुख्य इति । नन्वनुमानबाधा गौणताऽस्त आह नचेति । आगमोऽपि निमित्तत्वपर एवास्तु तत्राह सर्वे हीति । वेदान्तिमते कार्यमात्रस्य विवर्तत्वेनाधिष्ठानव्यतिरेकेण सर्वेषामभावाङ्गीकारात् सर्ववेदान्तवाक्यानामैकान्तिकाद्वैतपरत्वमित्यर्थ ।

( ४ ) यदि कारणज्ञानात्सर्वकार्यज्ञानार्थं ब्रह्मण उपादानत्वं तर्हि ततोऽन्यन्निमित्तं स्यादित्यत्राह नचेति ।

( ५ ) प्रतिज्ञालिङ्गैरिव श्रुत्यापि पूर्वपक्ष्यनुमानबाधं इत्याह यत इति । जनिकर्तुरिति । जायमानस्य कार्यस्य प्रकृतिरपादानसंज्ञिका भवतीति पाणिनिसूत्रार्थः

## सू० अभिध्योपदेशाच्च ॥ २४ ॥

(१)अनागतेच्छा सङ्कल्पोऽभिध्या । एतया खलु स्वातन्त्र्यलक्षणेन कर्तृत्वेन निमित्तत्वं दर्शितम् । 'बहु स्यामि'ति च स्वविषयतयोपादानत्वमुक्तम् ॥ २४ ॥

## सू० साक्षाच्चोभयाम्नानात् ॥ २५ ॥

आकाशादेव ब्रह्मण एवेत्यर्थः । साक्षादिति चेति सूत्रावयवमनूद्य तस्यार्थं व्याचष्टे- "आकाशादेवे"ति । (पृ. ४३३ पं. ८) श्रुतिर्ब्रह्मणो जगदुपादानत्वमवधारयन्ती उपादानान्तराभावं साक्षादेव दर्शयतीति साक्षादिति सूत्रावयवेन दर्शितमिति योजना ॥२५॥

## सू० आत्मकृतेः परिणामात् ॥ २६ ॥

प्रकृतिग्रहणमुपलक्षणं निमित्तमित्यपि द्रष्टव्यं, (२)कर्मत्वेनोपादानत्वात्कर्तृत्वेन च तत्प्रति निमित्तत्वात् । "कथं पुनरि"ति 'सिद्धसाध्ययोरेकत्रासमवायो विरोधादिति । "परिणामादिति । ब्रूम" इति । पूर्वसिद्धस्याप्यनिर्वचनीयविकारात्मना परिणामोऽनिर्वचनीयत्वाद्भेदेनाभिन्न एवेति सिद्धस्यापि साध्यत्वमित्यर्थः । एकवाक्यत्वेन व्याख्याय परिणामादित्यवाच्छिद्य(३) व्याचष्टे--"परिणामादिति वे"ति । सच्चत्यच्चेति द्वे ब्रह्मणो रूपे । सच्च सामान्यविशेषेणापरोक्षतया निर्वाच्यं पृथिव्यप्तेजोलक्षणम् । त्यच्च परोक्षमत एवानिर्वाच्यमिदन्तया वाय्वाकाशलक्षणम् । कथं च तद्ब्रह्मणो रूपं ? यदि तस्य ब्रह्मोपादान, तस्मात्परिणामाद्ब्रह्म भूतानां प्रकृतिरिति ॥ २६ ॥

## सू० योनिश्च हि गीयते ॥ २७ ॥

(४)पूर्वपक्षिणोऽनुमानमनुभाष्यागमविरोधेन दूषयति "यत्पुनरि"ति (पृ. ४३५ पं. ६) । एतदुक्तं भवति—ईश्वरो जगतो निमित्तकारणमेवेक्षापूर्वकजगत्कर्तृत्वात् कुम्भकर्तृकुलालवत् । (५)अत्रेश्वरस्यासिद्धेराश्रयासिद्धो हेतुः पक्षश्चाप्रसिद्धविशेष्यः । (६)यथाहु'र्नानुपलब्धे न्यायः प्रवर्तते' इति । आगमात्तत्सिद्धिरिति चेद् , हन्त तर्हि यादृशमीश्वरमागमो गमयति तादृशोऽभ्युपगन्तव्य. । स च निमित्तकारणं चोपादानकारणं चेश्वरमवगमयतीति । (७)विशेष्याश्रयग्राह्यागमविरोधान्नानुमानमुदेतुमर्हतीति, कुतस्तेन निमित्तत्वावधारणेत्यर्थः । (८)इयं चोपादानपरिणामादिभाषा न विकाराभिप्रायेणापि तु यथा सर्पस्योपादानं रज्जुरेवं ब्रह्म जगदुपादानं द्रष्टव्यम् । न खलु नित्यस्य निष्कलस्य ब्रह्मणः सर्वात्मनैकदेशेन वा परिणाम. सम्भवति नित्यत्वादनेकदेशत्वादित्युक्तम् । (९)न च मृदः शरावादयो भिद्यन्ते न

---

(१) सूत्रस्थाभिध्याशब्दार्थमाहानागतेति । अनागतवस्तुनीच्छा-सङ्कल्पो वाऽभिध्या, तया स्वातन्त्र्यं दर्शितं तेन च निमित्तत्वमपि 'सोऽकामयते'त्यादिश्रुतौ दर्शितमित्यर्थ ।

(२) निमित्तोपादानत्वे हेतुपरं यत्कारणमित्यादिभाष्यं व्याचष्टे कर्मत्वेनेति ।

(३) पृथक्कृत्वा । (४) नैयायिकस्य । (५) पूर्वोक्तनैयायिकानुमाने । (६) न्यायभाष्यकारा ।

(७) विशेष्येति । साध्यं प्रति विशेष्यस्य हेतुं प्रति चाश्रयस्य ग्राहकतयोपजीव्यागमविरोधादित्यर्थः ।

(८) ननु आत्मकृते परिणामादित्यनेन सूत्रेण परिणामवादो वेदान्तदर्शनकारस्याप्यभिमतो भातीत्याशङ्क्याह इयं चेति ।

(९) एवं च सौत्रपरिणामशब्दस्य विवर्तपरत्वं वेदान्तिमतेनोक्त्वा यथाश्रुताभिप्रायेण परिणामत्वेन लोकसिद्धस्य मुख्यसहत्वेन विवर्ततामाह न च मृद इति ।

चाभिन्ना न वा भिन्नाभिन्नाः किं त्वनिर्वचनीया एव । यथाह श्रुति "र्मृत्तिकेत्येव सत्यमि" ति । तस्मादद्वैतोपक्रमादुपसंहाराच्च सर्व एव वेदान्ता ऐकान्तिकाद्वैतपराः सन्तः साक्षादेव क्वचिद-द्वैतमाहुः, क्वचिद्द्वैतनिषेधेन, क्वचिद्ब्रह्मोपादानत्वेन जगतः । एतावतापि तावद्भेदो निषिद्धो भवति, न तूपादानत्वाभिधानमात्रेण विकारग्रह आस्थेयः । (१)नहि वाक्यैकदेशस्यार्थो-ऽस्तीति ॥ २७ ॥

स्यादेतत् , मा भूत्प्रधानं जगदुपादानं तथापि न ब्रह्मोपादानत्वं सिध्यति, परमाण्वा-दीनामपि तदुपादानानामुपप्लवमानत्वा(२)त्तेषामपि हि किंचिदुपोद्बलकमस्ति वैदिकं लिङ्ग-मित्याशङ्कामपनेतुमाह सूत्रकारः—

## सू० एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥

निगदव्याख्यातेन भाष्येण व्याख्यातं सूत्रम् ।

(३)प्रतिज्ञालक्षणं लक्ष्यमाणे पदसमन्वयः ।

वैदिकः स च तत्रैव नान्यत्रेत्यत्र साधितम् ॥ २८ ॥

इति श्रीमद्वाचस्पतिमिश्रविरचिते श्रीमच्छारीरकभाष्यविभागे भामत्यां

प्रथमाध्यायस्य चतुर्थः पादः ॥

सम्पूर्णश्च प्रथमोऽध्यायः ॥

## सू० स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनव-काशदोषप्रसङ्गात् ॥ १ ॥

वृत्तवर्तिष्यमाणयोः समन्वयविरोधपरिहारलक्षणयोः सङ्गतिप्रदर्शनाय सुखग्रहणाय(४) चैतयोः सङ्क्षेपतस्तात्पर्यार्थमाह—**"प्रथमेऽध्याय" इति** ( पृ० ४३७ पं० ५ ) । अन-पेक्षवेदान्तवाक्यस्वरससिद्धसमन्वयलक्षणस्य विरोधतत्परिहाराभ्यामाक्षेपसमाधानकरणादनेन लक्षणेनास्ति विषयविषयिभावः सम्बन्धः । पूर्वलक्षणार्थो हि विषयस्तद्गोचरत्वादाक्षेपसमा-धानयोरेष च विषयीति । तदेवमध्यायमवतार्य तदवयवमधिकरणमवतारयति—**"तत्र प्रथमं ताव"दिति** (पृ० ४२८ पं० १) । तन्त्र्यते व्युत्पाद्यते मोक्षसाधनमनेनेति तन्त्रं, तदेवाख्या यस्याः सा स्मृतिः तन्त्राख्या परमर्षिणा कपिलेनादिविदुषा प्रणीता । अन्याश्चा-सुरिपञ्चशिखादिप्रणीताः स्मृतयस्तदनुसारिण्यः । न खल्वमूषां स्मृतीनां मन्वादिस्मृतिवद-न्योऽवकाशः शक्यो वदितुमृते मोक्षसाधनप्रकाशनात् । तदपि चेन्नाभिदध्युरनवकाशाः सत्यो-ऽप्रमाणं प्रसज्येरन् । तस्मात्तदविरोधेन कथंचिद्वेदान्ता व्याख्यातव्याः । पूर्वपक्षमाक्षिपति—

---

( १ ) ननु मध्ये सृष्टिश्रुत्यैव समपञ्चता स्याद्ब्रह्मण इत्याशङ्क्याह नहीति । उपक्रमाद्यवगततात्पर्यमहा-वाक्यमध्यस्थाऽवान्तरवाक्यस्य प्रधानानुरोधेन मायामयसृष्टिविषयत्वमित्यर्थः ।

( २ ) बुद्धौ प्रतिभासमानत्वात् ।

( ३ ) अध्यायार्थसङ्ग्राहकश्लोकमाह प्रतिज्ञेति । प्रथमे सूत्रे विचारप्रतिज्ञा, द्वितीये लक्षणम् , चतुर्थे लक्ष्यमाणे वेदान्तवाक्यसमन्वयः, स च ब्रह्मण्येव नान्यत्रेति शिष्टायां त्रिपाद्यां साधितमित्यर्थः ।

( ४ ) वृत्तेति । वृत्तस्य समन्वयाध्यायस्य वर्तिष्यमाणस्य विरोधाध्यायस्य च सङ्गतिप्रदर्शनाय अनाया-सेन ज्ञानाय च ।

"कथं पुनरीश्वरयादृश्य" इति (पृ० ४३९ पं० ४)। प्रसाधितं खलु धर्ममीमांसायां(१) 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमान'मित्यत्र यथा श्रुतिविरुद्धानां स्मृतीनां दुर्बलतयाऽनपेक्षणीयत्वम्, तस्मान्न दुर्बलानुरोधेन बलीयसीनां श्रुतीनां युक्तमुपवर्णनमपि तु स्वतःसिद्धप्रमाणभावाः श्रुतयो दुर्बलाः स्मृतीर्बाधन्त एवेति युक्तम्। पूर्वपक्षी समाधत्ते—"भवेदय"मिति। प्रसाधितोऽप्यर्थः श्रद्धाजडान् प्रति पुनः प्रसाध्यत इत्यर्थः। आपाततः समाधानमुक्त्वा परमसमाधानमाह पूर्वपक्षी—"कपिलप्रभृतीनां चार्ष"मिति। अयमस्याभिसन्धिः—ब्रह्म हि शास्त्रस्य कारणमुक्तं 'शास्त्रयोनित्वा'दिति, तेनैष वेदराशिर्ब्रह्मप्रभवः सन्ना(२)जानसिद्धानावरणभूतार्थमात्रगोचरतद्बुद्धिपूर्वको यथा तथा कपिलादीनामपि श्रुतिस्मृतिप्रथिताजानसिद्धभावानां स्मृतयोऽनावरणसर्वविषयतद्बुद्धिप्रभवा इति न श्रुतिभ्योऽमूषामस्ति कश्चिद्विशेषः। न चैताः स्फुटतरं प्रधानादिप्रतिपादनपराः शक्यन्तेऽन्यथयितुम्। तस्मात्तदनुरोधेन कथंचिच्छ्रुतय एव नेतव्याः। अपि च तर्कोऽपि कपिलादिस्मृतीरनुमन्यते, तस्मादप्येतदेव प्राप्तम्।

एवं प्राप्त आह—"तस्य समाधि"रिति। (३)यथा हि श्रुतीनामविगानं ब्रह्मणि गतिसामान्यात्, नैवं स्मृतीनामविगानमस्ति प्रधाने, तासां भूयसीनां ब्रह्मोपादानत्वप्रतिपादनपराणां तत्रतत्र दर्शनात्, तस्मादविगानाच्छ्रौत एवार्थ आस्थेयो नतु स्मार्तो विगानादिति। तत्किमिदानीं परस्परविगानात् सर्वा एव स्मृतयोऽवहेया इत्यत आह—"विप्रतिपत्तौ च स्मृतीना"मिति (पृ० ४४० पं० १४)। "न चातीन्द्रियार्थानि"ति (पृ० ४४१ पं० १) अर्वाग्दृगभिप्रायम्। शङ्कते—"शक्यं कपिलादीना"मिति निराकरोति—"न सिद्धेरपी"ति। न तावत्कपिलादय ईश्वरवदाजानसिद्धाः, किन्तु विनिश्चितवेदप्रामाण्यानां तेषां तदनुष्ठानवतां प्राचि भवेऽस्मिन् जन्मनि सिद्धिरत एवाजानसिद्धा उच्यन्ते। यदस्मिन् जन्मनि न तैः सिद्ध्युपायोऽनुष्ठितः प्राग्भवीयवेदार्थानुष्ठानलब्धजन्मत्वात्तत्सिद्धीनां, तथा चावधृतवेदप्रामाण्यानां तद्विरुद्धार्थाभिधानं तदपबाधितमप्रमाणमेव। अप्रमाणेन च न वेदार्थोऽतिशङ्कितुं युक्तः प्रमाणसिद्धत्वात्तस्य। तदेवं वेदाविरोधे सिद्धवचनमप्रमाणमुक्त्वा सिद्धानामपि परस्परविरोधे तद्वचनादनाश्वास इति पूर्वोक्तं(४) स्मारयति—"सिद्धव्यपाश्रयकल्पनायामपी"ति। श्रद्धाजडान् बोधयति—"परत-

---

(१) 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति प्रत्यक्षश्रुतिविरुद्धा 'सर्वावेष्टेत' इति स्मृतिर्मानं नवेति संशये, स्मृतिभिर्मूलश्रुत्यनुमानात्प्रत्यक्षानुमितश्रुत्योश्च स्वपराधीनश्रुतिवत्समबलतयोऽदितानुदितवद्विकल्पासम्भवान्मानमिति पूर्वपक्षे, सिद्धान्ततयेदमुपातिष्ठते 'विरोधे त्वि'ति मीमांसायाम्, असति विरोधे यतो मूलश्रुत्यनुमानं स्वपराधीनश्रुत्योस्तुल्यवत्प्रमितत्वात्समबलताऽत श्रुतिविरुद्धस्मृतीनां प्रामाण्यमनपेक्षमपेक्षावर्जितं हेयमित्यर्थः। प्रत्यक्षश्रुतिविरुद्धेर्थे तु न श्रुत्यनुमानमर्थापहारेण मानस्याप्यपहारात् अतो मूलाभावादप्रमाणमिति।

(२) आजानेति। आजानसिद्धा—स्वभावसिद्धा च सा अनावरणभूतार्थमात्रगोचरा या तद्बुद्धिर्ब्रह्मज्ञानं तत्पूर्वको वेदराशिः इत्यर्थः। सत्यानृतविषयवारणार्थं मात्रपदम्।

(३) अन्यस्मृत्यनवकाशवद्दोषान्तरमपि सिद्धान्तसाधकं प्रदर्शयन्नाह यथाहीत्यादिना। अविगानं विरुद्धार्थानभिधानम्।

(४) 'विप्रतिपत्तौ च'त्यादिभाष्येण पूर्वमुक्तम्।

न्त्रप्रज्ञस्यापी''ति । ननु श्रुतिश्चेत्कपिलादीनामनावरणभूतार्थगोचरज्ञानातिशयं बोधयति, कथं तेषां वचनमप्रमाणं, तदप्रामाण्ये श्रुतेरप्यप्रामाण्यप्रसङ्गादित्यत आह--**"या तु श्रुति"**रिति । न तावत्सिद्धानां परस्परविरुद्धानि वचांसि प्रमाणं भवितुमर्हन्ति । न च विकल्पो वस्तुनि, सिद्धे तदनुपपत्तेः । अनुष्ठानमनागतोत्पाद्यं विकल्प्यते, न सिद्धम्, तस्य व्यवस्थानात् । तस्मात् श्रुतिसामान्यमात्रेण(१)भ्रमः सांख्यप्रणेता कपिलः श्रौत इति । स्यादेतत्, कपिल एव श्रौतो नान्ये मन्वादयः, ततश्च तेषां स्मृतिः कपिलस्मृतिविरुद्धा ऽवहेयेत्यत आह--**"भवति चान्या मनो"**रिति ( पृ० ४४२ पं० १ ) । तस्याश्चागमान्तरसम्वादमाह--**"महाभारते ऽपि चे"**ति । न केवलं मनोः स्मृतिः स्मृत्यन्तरसंवादिनी श्रुतिसम्वादिन्यपीत्याह--**"श्रुतिश्चे"**ति । उपसंहरति--**"अत"** इति ( पृ० ४४३ पं० ३ ) स्यादेतत्, भवतु वेदविरुद्धं कापिलं वचस्तथापि द्वयोरपि पुरुषबुद्धिप्रभवतया को विनिगमनायां हेतुर्यतो वेदविरोधि कापिलं वचो नादरणीयमित्यत आह-**"वेदस्य हि निरपेक्ष"**मिति । अयमभिसन्धिः-सत्यं शास्त्रयोनिरीश्वरस्तथाप्यस्य न शास्त्रक्रियायामस्ति स्वातन्त्र्यं कपिलादीनामिव, स हि भगवान् यादृशं पूर्वस्मिन् सर्गे चकार शास्त्रं तदनुसारेणास्मिन्नपि सर्गे प्रणीतवान्, एवं पूर्वतरानुसारेण पूर्वस्मिन्, पूर्वतमानुसारेण च पूर्वतर इत्यनादिरयं शास्त्रेश्वरयोः कार्यकारणभावः(२) । तेनेश्वरस्य न शास्त्रार्थज्ञानपूर्वा शास्त्रक्रिया येनास्य कपिलादिवत्स्वातन्त्र्यं भवेत् । शास्त्रार्थज्ञानं चास्य स्वयमाविर्भवदपि न शास्त्रकारणतामुपैति, द्वयोरप्यपर्यायेणाविर्भावात् । (३)शास्त्रं च स्वतो बोधकतया पुरुषस्वातन्त्र्याभावेन निरस्तसमस्तदोषाशङ्कं सदनपेक्षं साक्षादेव स्वार्थे प्रमाणम् । (४)कपिलादिवचांसि तु स्वतन्त्रकपिलादिप्रणेतृकाणि तदर्थस्मृतिपूर्वकाणि, तदर्थस्मृतयश्च तदर्थानुभवपूर्वाः, तस्मात्तासामर्थप्रत्ययाङ्गप्रामाण्यविनिश्चयाय यावत् स्मृत्यनुभवौ कल्प्येते तावत् स्वतःसिद्धप्रमाणभावयाऽनपेक्षयैव श्रुत्या स्वार्थो विनिश्चायित इति शीघ्रतरप्रवृत्तया श्रुत्या स्मृत्यर्थो बाध्यत इति युक्तम् ॥ १ ॥

## सू० इतरेषां चानुपलब्धेः ॥ २ ॥

प्रधानस्य तावत् क्वचिद्वेदप्रदेशे वाक्याभासानि दृश्यन्ते, तद्विकाराणां तु महदादीनां तान्यपि न सन्ति । न च भूतेन्द्रियादिवन्महदादयो लोकसिद्धाः । तस्मादात्यन्तिकात् प्रमाणान्तरासम्वादात् प्रमाणमूलत्वाच्च स्मृतेर्मूलाभावादभावो वन्ध्याया इव दौहित्र्यस्मृतेः(५) ।

---

( १ ) सगरपुत्रप्रतप्तुः सांख्यप्रणेतुश्च कपिल इति शब्दसाम्यमात्रेण ।

( २ ) कार्यकारणभाव इति । एवं च कार्यकारणभावस्यानादित्वेन न प्रागभूतस्य शास्त्रस्य तदर्थभानपूर्विका नूतना क्रिया किन्तु नियतक्रमस्य तस्य संस्काररूपेणानुवर्तमानस्य स्मरणेनाभिव्यक्तिरित्यर्थः ।

( ३ ) ननु गुणवद्वक्तृज्ञानजन्यत्वाभावे कथं शास्त्रस्य प्रामाण्यमिति चेत्, स्वत इत्याह शास्त्रं चेति ।

( ४ ) नन्वेवं तर्हि वेदान्तिमते प्रमाणानां प्रामाण्यस्य स्वतस्त्वात्कापिलादिवचनस्तथा किं न स्यादित्यत आह कपिलादीति । यथाऽनपेक्षत्वेन शीघ्रतरप्रवृत्तश्रुत्या तद्विरुद्धलिङ्गस्य श्रुतिकल्पनापेक्षत्वेन विलम्बितप्रवृत्तेः परिच्छेदकत्वाभावस्तथाऽनपेक्षश्रुत्या तद्विरुद्धकापिलवाक्यस्य सापेक्षत्वेन विलम्बिन प्रामाण्याभाव इति भावः ।

( ५ ) दौहित्र्यस्मृतेरिति । यथा वन्ध्या चेत्स्मरति दृष्टं मे दौहित्रेण कृतमिति, सा स्मृतिर्मूलस्य दुहितुरभावादप्रमाणमेवं वेदवाक्यापि मूलभूतानुभवाभावात्स्मरणाभाव इति भावः ।

न चार्षज्ञानमत्र मूलमुपपद्यत इति युक्तम् । तस्मान्न कापिलस्मृतेः प्रधानोपादानत्वं जगत इति सिद्धम् ॥ २ ॥

## एतेन योगः प्रत्युक्तः ॥ ३ ॥

नानेन योगशास्त्रस्य हैरण्यगर्भपातञ्जलादेः सर्वथा प्रामाण्यं निराक्रियते, किन्तु जगदुपादानस्वतन्त्रप्रधानतद्विकारमहदहङ्कारपञ्चतन्मात्रगोचरं प्रामाण्यं नास्तीत्युच्यते । न चैतावतैषामप्रामाण्यं भवितुमर्हति । यत्पराणि हि तानि तत्राप्रामाण्येऽप्रामाण्यमश्नुवीरन् । न चैतानि प्रधानादिसद्भावपराणि, किन्तु (१)योगस्वरूपतत्साधनतदवान्तरफलविभूतिततपरमफलकैवल्यव्युत्पादनपराणि । तच्च किञ्चिन्निमित्तीकृत्य व्युत्पाद्यमिति प्रधानं सविकारं निमित्तीकृतं पुराणेष्विव (२)सर्गप्रतिसर्गवंशमन्वन्तरवंशानुचरितं तत्प्रतिपादनपरेषु, न तु तद्विवक्षितम् । अन्यपरादपि चान्यनिमित्तं तत्प्रतीयमानमभ्युपेयेत, यदि न मानान्तरेण विरुध्येत । अस्ति तु वेदान्तश्रुतिभिरस्य विरोध इत्युक्तम् । तस्मात् प्रमाणभूतादपि योगशास्त्रान्न प्रधानादिसिद्धिः । अत एव योगशास्त्रं व्युत्पादयिताऽऽह स्म भगवान् वार्षगण्यः—

(३)गुणानां परमं रूपं न दृष्टिपथमृच्छति ।
यत्तु दृष्टिपथप्राप्तं तन्मायैव सुतुच्छकम् ॥ इति ।

योगं व्युत्पिपादयिषता निमित्तमात्रेणेह गुणा उक्ता, न तु भावतस्तेषामनात्विकत्वादित्यर्थः । अलोकसिद्धानामपि प्रधानादीनामनादिपूर्वपक्षन्यायाभासोत्प्रेक्षितानामनुवाद्यत्वमुपपन्नम् । तदनेनाभिसन्धिनाह—"**एतेन सांख्यस्मृतिप्रत्याख्यानेन योगस्मृतिरपि, प्रधानादिविषयतया, प्रत्याख्याता द्रष्टव्ये**"ति ( पृ० ४४४ पं० ) । अधिकरणान्तरारम्भमाक्षिपति—"**नन्वेवं सति समानन्यायत्वा**"दिति । समाधत्ते—"**अस्त्यत्राभ्यधिका शंका**" । मा नाम सांख्यशास्त्रात् प्रधानसत्ता विज्ञायि, योगशास्त्रात्तु प्रधानादिसत्ता विज्ञापयिष्यते । बहुलं हि योगशास्त्राणां वेदेन सह संवादो दृश्यते । उपनिषदुपायस्य च तत्त्वज्ञानस्य योगापेक्षाऽस्ति । न जातु योगशास्त्रविहित यमनियमादिबहिरङ्गमुपायमसहायान्तरङ्गं च धारणादिकमन्तरेणौपनिषदात्मतत्त्वसाक्षात्कार उदेतुमर्हति । तस्मादौपनिषदेन तत्त्वज्ञानेनापेक्षणात् संवादबाहुल्याच्च वेदेनाष्टकादिस्मृति(४)वद्योगस्मृतिः प्रमाणम् । ततश्च प्रमाणात् प्रधानादिप्रतीतेर्नाशब्दत्वम् । न च तदप्रमाणं प्रधानादौ, प्रमाणं च यमादाविति युक्तम् । तत्राप्रामाण्येऽन्यत्राप्यनाश्वासात् । यथाहुः—

---

(१) योगेति । योगस्वरूपं चित्तवृत्तिनिरोधः, तत्साधनं यमनियमादि, तदवान्तरफलमणिमादिविभूतिः, मुख्यफलं कैवल्यं चैतेषां व्युत्पादकानीत्यर्थः ।

(२) सर्गः सृष्टिः, प्रतिसर्गः प्रलयः, वंशानुचरितं तत्कर्म ।

(३) गुणानामिति । यतः प्रधानादेरविवक्षा योगशास्त्रेऽतो गुणानां सत्त्वादीनां परमं रूपमधिष्ठानमात्मा दृष्टिपथं न गच्छति, यत्तु दृष्टिपथप्राप्तं दृश्यं प्रधानादि तन्मायैव सुतुच्छकं मिथ्येत्यर्थः ।

(४) 'अष्टकाः कर्तव्याः, तडाकं खनितव्यम्' इत्यादिस्मृतयो प्रमाणं नवेति सन्देहे धर्मस्य वेदैकप्रमाणत्वात् तासां श्रेयःसाधनत्वे वेदानुपलम्भात्स्मृतेर्भ्रमेणापि निर्माणसम्भवाच्च न प्रमाणमिति पूर्वपक्षे, वेदार्थानुष्ठातृणामेव सनिबन्धनासु स्मृतिषु कर्तृत्वान्मूलभूतवेदमनुमापयन्त्यस्ताः स्मृतयः प्रमाणमिति पूर्वमीमांसायां यथाऽष्टकादिस्मृतीनां प्रामाण्यमित्यर्थः ।

(१)'प्रसरं न लभन्ते हि यावत् क्वचन मर्कटाः ।
नाभिद्रवन्ति ते तावत् पिशाचा वा स्वगोचरे ॥ इति ।

सेयं लब्धप्रसरा प्रधानादौ योगाप्रमाणतापिशाची सर्वत्रैव दुर्वारा भवेदित्यस्याः प्रसरं निषेधता प्रधानाद्यभ्युपेयमिति नाशब्दं प्रधानमिति शङ्कार्थः । से"यमभ्यधिकाशङ्कातिदेशेन निवर्त्यते" । निवृत्तिहेतुमाह—"अर्थैकदेशसम्प्रतिपत्तावपी"ति ( पृ० ४४५ पं० १ ) । यदि प्रधानादिसत्तापरं योगशास्त्रं भवेत् भवेत् प्रत्यक्षवेदान्तश्रुतिविरोधेनाप्रमाणम्, तथा च तद्विहितेषु यमादिष्वप्यनाश्वासः स्यात्, तस्मान्न प्रधानादिपरं तत्, किन्तु तन्निमित्तीकृत्य योगव्युत्पादनपरमित्युक्तम् । न चाविषयेऽप्रामाण्यं विषयेऽपि प्रामाण्यमुपहन्ति, नहि चक्षू रसादावप्रमाणं रूपेऽप्यप्रमाणं भवितुमर्हति । तस्माद्वेदान्तश्रुतिविरोधात् प्रधानादिरस्याविषयो न त्वप्रमाण्यमिति परमार्थः । स्यादेतत्, अध्यात्मविषयाः सन्ति सहस्रं स्मृतयो बौद्धार्हतकापालिकादीनां, ता अपि कस्मान्न निराक्रियन्त इत्यत आह—"सतीष्वपी"ति । तासु खलु बहुलं वेदार्थविसंवादिनीषु शिष्टानादृतासु कैश्चिदेव तु पुरुषापसदैः पशुप्रायैर्म्लेच्छादिभिः परिगृहीतासु वेदमूलत्वाशङ्कैव नास्तीति न निराकृताः, तद्विपरीतास्तु सांख्ययोगस्मृतय इति ताः प्रधानादिपरतया व्युदस्यन्त इत्यर्थः । "न सांख्यज्ञानेन वेदनिरपेक्षेणे"ति । प्रधानादिविषयेणेत्यर्थः । "द्वैतिनो हि ते सांख्या योगाश्च" । ये प्रधानादिपरतया तच्छास्त्रं व्याचक्षत इत्यर्थः । संख्या सम्यग्बुद्धिर्वैदिकी तया वर्तन्ते इति सांख्याः, एवं योगो ध्यानम्, (२)उपयोपेययोरभेदविवक्षया, चित्तवृत्तिनिरोधो हि योगः, तस्योपायो ध्यानं प्रत्ययैकतानता । एतच्चोपलक्षणम्, अन्येऽपि यमनियमादयो बाह्या आन्तराश्च धारणादयो योगोपाया द्रष्टव्याः । एतेनाभ्युपगतवेदप्रामाण्यानां कणभक्षाक्षचरणादीनां सर्वाणि तर्कस्मरणानीति योजना । सुगममन्यत् ॥ ३ ॥

## सू० न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥

(३)अवान्तरसङ्गतिमाह—"ब्रह्मास्य जगतो निमित्तकारणं प्रकृतिश्चेत्यस्य पक्षस्ये"ति ( पृ० ४४६ प० ६ ) । चोदयति—"कुतः पुनः"रिति । समानविषयत्वे हि विरोधो भवेत्, न चेहास्ति समानविषयता, धर्मवद्ब्रह्मणोऽपि मानान्तराविषयतयाऽतत्त्वेनानपेक्षाम्नायैकगोचरत्वादित्यर्थः । समाधत्ते—"भवेदय"मिति ।

(४)मानान्तरस्याविषयः सिद्धवस्त्ववगाहिनः ।
धर्मोऽस्तु कार्यरूपत्वाद्ब्रह्म सिद्धं तु गोचरः ॥

---

( १ ) प्रसरमिति । यथा मर्कटानां पिशाचानां चैकत्रप्रसरसम्भव एव सर्वत्र प्रदेशेषु प्रसरो भवति तथैव योगशास्त्रस्यापि प्रधानादौ विषयैकदेशे प्रामाण्यसम्भव एव यमादिसर्वयोगविषयेषु प्रामाण्यं सम्भवतीति श्लोकार्थः ।

( २ ) ननु कथं चित्तवृत्तिनिरोधवाचकयोगशब्दस्य चिन्तारूपध्यानवाचकत्वन्तत्राह उपायेति ।

( ३ ) अवान्तरसङ्गतिमिति । स्मृतीनामप्रामाण्यात्ताभिः समन्वयस्य न विरोध इति सिद्धान्तवैलक्षण्याद्दृष्टान्तानुवादनास्याधिकरणस्य तात्पर्यमिति सङ्गतिमित्यर्थः ।

( ४ ) 'भवेदयम्' इत्यादिसमाधानार्थमाध्यसङ्ग्राहकश्लोकमाह मानान्तरस्येति । सिद्धपदार्थावगाहिप्रमाणान्तरस्य कार्यतया धर्मो विषयो न भवेद्ब्रह्म तु सिद्धत्वात्तद्विषयं भवत्येवेत्यर्थः ।

तस्मात्समानविषयत्वादस्त्यत्र तर्कस्यावकाशः । नन्वस्तु विरोधः, तथापि तर्कादरे को हेतुरित्यत आह--"**यथा च श्रुतीना**"मिति ( पृ० ४४६ प० १२ ) । (१)सावकाशा बह्व्योऽपि श्रुतयोऽनवकाशैकश्रुतिविरोधे तदनुगुणतया यथा नीयन्ते एवमनवकाशैकतर्कविरोधे तदनुगुणतया बह्व्योऽपि श्रुतयो गुणकल्पनादिभिर्व्याख्यानमर्हन्तीत्यर्थः । अपि च ब्रह्मसाक्षात्कारो विरोधितयाऽनादिमविद्यां निवर्तयन् दृष्टेनैव रूपेण मोक्षसाधनमिष्यते, तत्र ब्रह्मसाक्षात्कारस्य मोक्षसाधनतया प्रधानस्यानुमानं दृष्टसाधर्म्येणादृष्टविषयं विषयतोऽन्तरङ्गं, बहिरङ्गं त्वत्यन्तपरोक्षगोचरं शाब्दं ज्ञानं, तेन प्रधानप्रत्यासत्याप्यनुमानमेव बलीय इत्याह--"**दृष्टसाधर्म्येण चे**"ति। अपि च श्रुत्याऽपि ब्रह्मणि तर्क आदृत इत्याह--"**श्रुतिरपी**"ति । सोऽयं ब्रह्मणो जगदुपादानत्वाक्षेपः पुनस्तर्केण प्रस्तूयते ।

(२)प्रकृत्या सह सारूप्यं विकाराणामवस्थितम् ।
जगद्ब्रह्मसरूपं च नेति नो तस्य विक्रिया ॥
विशुद्धं चेतनं ब्रह्म जगज्जडमशुद्धिभाक् ।
तेन प्रधानसारूप्यात् प्रधानस्यैव विक्रिया ॥

(३)तथाहि--एक एव स्त्रीकायः सुखदुःखमोहात्मकतया पत्युश्च सपत्नीनां च चैत्रस्य च स्त्रैणस्य तामविन्दतोऽपर्यायं सुखदुःखविषादानाधत्ते । स्त्रिया च सर्वे भावा व्याख्याताः । तस्मात्सुखदुःखमोहात्मतया च स्वर्गनरकोच्चावचप्रपञ्चतया च जगदशुद्धमचेतनं च, ब्रह्म तु चेतनं विशुद्धं च निरतिशयत्वात् । तस्मात् प्रधानस्याशुद्धस्याचेतनस्य विकारो जगन्न तु ब्रह्मण इति युक्तम् ।

ये तु चेतनब्रह्मविकारतया जगच्चैतन्यमाहुस्तान् प्रत्याह--"**अचेतनं चेदं जगदि**"ति ( पृ० ४४७ पं० १३ ) । व्यभिचारं चोदयति--"**ननु चेतनमपी**"ति । परिहरति--"**न स्वामिभृत्ययोरपी**"ति । ननु मा नाम साक्षाच्चेतनश्चेतनान्तरस्योपकार्षीत्, तत्कार्यकरणबुद्ध्यादिनियोगद्वारेण तूपकरिष्यतीत्यत आह--"**निरतिशया ह्यकर्तारश्चेतना**" इति ( पृ० ४४८ पं० २ ) । उपजनापायवद्धर्मयोगोऽतिशयः, तदभावो निरतिशयत्वम्(४), अत एव निर्व्यापारत्वादकर्तारस्तस्मात्तेषां बुद्ध्यादिप्रयोक्तृत्वमपि नास्तीत्यर्थः । चोदकोऽनुशयबीजमुद्घाटयति--"**योऽपी**"ति । अभ्युपेत्यापाततः समाधानमाह--"**तेनापि कथंचिदि**"ति । परमसाधनं तु सूत्रावयवेन वक्तुं तमेवावतारयति "**न चैतदपि विलक्षणत्वमि**"ति । सूत्रावयवाभिसन्धि(५)माह--"**अनवगम्यमानमेव**

---

( १ ) एकश्रुत्यनुसारेणेतरश्रुतिनयनदृष्टान्तमात्रात्तर्कवशेन श्रुतिसङ्कोचो न युज्यते वैपरीत्यस्यापि वक्तुं शक्यत्वादित्याशङ्क्याह सावकाशा इति । श्रुतीनां निमित्तकारणत्वे सावकाशत्वं तर्कस्यानौपाधिकत्वेनानवकाशत्वमित्यर्थः ।

( २ ) सर्वत्र प्रकृतिसमानरूपत्वं विकारेष्वनुगतं दृश्यते, जगद्रूपविकारस्य विशुद्धचेतनात्मकब्रह्मसमानरूपत्वाभावान्न तस्य जगदुपादानत्वं किन्तु सुखदुःखात्मकत्वात्तदात्मकप्रधानतुल्यरूपत्वं सम्भवतीति कारिकाद्वयेन तर्काकारः प्रदर्शितः ।

( ३ ) जगतः सुखाद्यात्मकत्वं विवृण्वानः प्रधानकारणवादं दृढयति तथाहीत्यादिना ।

( ४ ) आगमापायिधर्मशून्यत्वम् ।

( ५ ) 'शब्दात्' इति सूत्रैकदेशाभिप्रायम् ।

हीदमि"ति। (१)शब्दार्थात् खलु चेतनप्रकृतित्वाच्चैतन्यं पृथिव्यादीनामवगम्यमानमुपोद्बलितं मानान्तरेण साक्षाच्छ्रूयमाणमप्यचैतन्यमन्यथयेत्, मानान्तराभावे त्वार्थोऽर्थः श्रुत्यर्थेनापबाधनीयो, न तु तद्बलेन श्रुत्यर्थोऽन्यथयितव्य इत्यर्थः ॥ ४ ॥

सूत्रान्तरमवतारयितुं चोदयति—"ननु चेतनत्वमपि क्वचिदि"ति ( पृ० ४४९ पं० ४ )। न पृथिव्यादीनां चैतन्यमार्थमेव, किन्तु भूयसीनां श्रुतीनां साक्षादेवार्थ इत्यर्थः ॥

सूत्रमवतारयति—"अत उत्तरं पठति"-

## सू० अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

विभजते—"तुशब्द" इति। नैताः श्रुतयः साक्षान्मृदादीनां वागादीनां च चैतन्यमाहुरपि तु तदधिष्ठात्रीणां देवतानां चिदात्मनां, तेनैतच्छ्रुतिबलेन न मृदादीनां वागादीनां च चैतन्यमाशङ्कनीयमिति। कस्मात् पुनरेतदेवमित्यत आह—"विशेषानुगतिभ्याम्"। तत्र विशेषं व्याचष्टे—"विशेषो ही"ति। भोक्तॄणामुपकार्यत्वाद् भूतेन्द्रियाणां चोपकारकत्वात् साम्ये च तदनुपपत्तेः सर्वजनप्रसिद्धेश्च 'विज्ञानं चाभव'दिति श्रुतेश्च विशेषश्चेतनाचेतनलक्षणः प्रागुक्तः स नोपपद्यते। देवताशब्दकृतो वाऽत्र विशेषो विशेषशब्देनोच्यत इत्याह—"अपि च कौषीतकिनः प्राणसंवाद"इति। अनुगतिं व्याचष्टे—"अनुगताश्चे"ति ( पृ० ४५० पं० १ )। सर्वत्र भूतेन्द्रियादिष्वनुगता देवता अभिमानिनीरुपदिशन्ति मन्त्रादयः। अपि च भूयस्यः श्रुतयोऽग्निर्वाग् भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्'--( ऐ० आ० २।४।२।४ ) इत्यादय इन्द्रियविशेषगता देवता दर्शयन्ति। देवताश्च क्षेत्रज्ञभेदाश्चेतनाः। तस्मान्नेन्द्रियादीनां चैतन्यं रूपत इति। अपि च प्राणसंवादवाक्यशेषे प्राणानामस्मदादिशरीराणामिव क्षेत्रज्ञाधिष्ठितानां व्यवहारं दर्शयन् प्राणानां क्षेत्रज्ञाधिष्ठानेन चैतन्यं द्रढयतीत्याह "प्राणसंवादवाक्यशेषे चे"ति। "तत्तेज ऐक्षतेत्यपी"ति। यद्यपि प्रथमेऽध्याये(२) भाक्तत्वेन वर्णितं तथापि मुख्यतयापि कथंचिन्नेतुं शक्यमिति द्रष्टव्यम्। पूर्वपक्षमुपसंहरति—"तस्मादि"ति ॥ ५ ॥

सिद्धान्तसूत्रम्—

## सू० दृश्यते तु ॥ ६ ॥

प्रकृतिविकारभावे हेतुं सारूप्यं विकल्प्य दूषयति "अत्यन्तसारूप्ये चे"ति ( पृ० ४५१ पं०२ )। प्रकृतिविकारभावाभावहेतुं वैलक्षण्यं विकल्प्य दूषयति—"विलक्षणत्वेन

---

( १ ) जगतोऽचेतनत्वश्रवणमपि चैतन्यानभिव्यक्तिपरमिति प्रधानकारणवादिनः शङ्कानिरासार्थकभाष्यस्थाऽनवगम्यमानपदं व्याचक्षाण आह शब्दार्थादिति। लोकतोऽनवगम्यमानस्य चेतनप्रकृतिकत्वस्य केवलश्रुतार्थापत्त्या कल्पनायामचेतनत्वप्रतिपादकशब्दविरोधस्य दूषणतयोद्भावनसामर्थ्याल्लोकानुभवसद्भावे श्रुतार्थापत्तेस्तद्विरोधो न दूषणं किन्तु प्रत्यक्षश्रुतिरेव चैतन्यानभिव्यक्तिपरतया व्याख्येया भवेदिति तात्पर्यम्।

( २ ) तत्रस्थेक्षित्यधिकरण इत्यर्थः। ऐक्षतेत्यस्य मुख्यत्वं तेज आदिशब्दा लाक्षणिका एव तदिदमुक्तं कथंचिदिति।

च कारणने"ति । सर्वस्वभावाननुवर्तन प्रकृतिविकारभावाविरोधि–तदनुवर्तने तादात्म्येन प्रकृतिविकारभावाभावात्, मध्यमस्त्वसिद्धः, तृतीयस्तु निदर्शनाभावादसाधारण(१) इत्यर्थः । अथ जगद्योनितयाऽऽगमाद्ब्रह्मणोऽवगमादागमबाधितविषयत्वमनुमानस्य कस्मान्नोद्भाव्यत इत्यत आह—"आगमविरोधस्त्वि"ति । न चास्मिन्नागमैकसमधिगमनीये ब्रह्मणि प्रमाणान्तरस्यावकाशोऽस्ति, येन तदुपादायागम आक्षिप्येतेत्याशयवानाह— "यत्तूक्तं परिनिष्पन्नत्वाद्ब्रह्मणी"ति । यथा हि कार्यत्वाविशेषेऽ'प्यारोग्यकामः पथ्यमश्नीयात्स्वरकामः सिकतां भक्षयेदि'त्यादीनां मानान्तरापेक्षता, न तु 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यादीनाम्, तत्कस्य हेतोः ? अस्य कार्यभेदस्य प्रमाणान्तरागोचरत्वात् । एवं भूतत्वाविशेषेऽपि पृथिव्यादीनां मानान्तरगोचरत्वं न तु भूतस्यापि ब्रह्मणस्तस्याम्नायैकगोचरस्यातिपतितसमस्तमानान्तरसीमतया स्मृत्यागमसिद्धत्वादित्यर्थः । यदि स्मृत्यागमसिद्धं ब्रह्मणस्तर्काविषयत्वं कथं तर्हि श्रवणातिरिक्तमननविधानमित्यत आह—"यदपि श्रवणव्यतिरेकेणे"ति । तर्को हि प्रमाणविषयविवेचकतया तादितिकर्तव्यताभूतस्तदाश्रयोऽसति प्रमाणेऽनुग्राह्यस्याश्रयस्याभावात् शुष्कतया नाद्रियते, यस्त्वागमप्रमाणाश्रयस्तद्विषयविवेचकस्तदविरोधी स 'मन्तव्य' इति विधीयते । "श्रुत्यनुगृहीत" इति । श्रुत्या श्रवणस्य पश्चादितिकर्तव्यतात्वेन गृहीतो"ऽनुभवाङ्गत्वेने"ति । (२)मतो हि भाव्यमानो भावनाया विषयतयाऽनुभूतो भवतीति मननमनुभवाङ्गम् । "आत्मनोऽनन्वागतत्व"मिति । स्वप्नाद्यवस्थाभिरसंपृक्तत्वमुदासीनत्वमित्यर्थः । अपि च चेतनकारणवादिभिः कारणसालक्षण्येऽपि कार्यस्य कथंचिच्चैतन्याविर्भावानाविर्भावाभ्यां विज्ञानं चाविज्ञानं चाभवदिति जगत्कारणे योजयितुं शक्यम्, अचेतनप्रधानकारणवादिनां तु दुर्योजमेतत्, (३)नह्यचेतनस्य जगत्कारणस्य विज्ञानरूपता सम्भविनी, चेतनस्य जगत्कारणस्य सुषुप्ताद्यव्यवस्थास्विव सतोऽपि चैतन्यस्यानाविर्भावितया शक्यमेव कथंचिदविज्ञानात्मत्वं योजयितुमित्याह—"योऽपि चेतनकारणश्रवणबलेने"ति ( पृ० ४५३ पं० )। परस्यैव त्वचेतनप्रधानकारणवादिनः सांख्यस्य न युज्येत । "प्रत्युक्तत्वात्तु वैलक्षण्यस्ये"ति । वैलक्षण्ये कार्यकारणभावो नास्तीत्यभ्युपेत्येदमुक्तम्, परमार्थतस्तु नास्माभिरेतदभ्युपयते इत्यर्थः ॥ ६ ॥

## सू० असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

(४)न कारणात्कार्यमभिन्नमभेदे कार्यत्वानुपपत्तेः, कारणवत्स्वात्मनि वृत्तिविरोधात् शुद्ध्यशुद्ध्यादिविरुद्धधर्मसंसर्गाच्च । अथ चिदात्मनः कारणस्य जगतः कार्याद्भेदः, तथा

(१) सपक्षविपक्षव्यावृत्तो पक्षमात्रवृत्तिरसाधारणो, यथा सर्वं क्षणिकं सत्त्वादिति, एवं चैतन्यानन्वितत्वमपि असाधारण इत्यर्थस्तथाचास्यान्वयव्यतिरेकदृष्टान्ताभावादसाधारणत्वं भाष्ये स्फुटीकृतम् ।

(२) श्रवणपाश्चात्यासम्भावनानिरासकवाचारम्भणत्वादितर्काभिप्रायं मननस्य साक्षात्काराङ्गत्वं व्यवधानेन न तु साक्षादित्याह मतो हीति ।

(३) नहीति । अचेतनस्य जगत्कारणस्य सर्गोत्तरकालं विज्ञानात्मकजीवस्वरूपता न सम्भवतीत्यर्थः ।

(४) उत्पत्तेः पूर्वं कारणस्य सत्त्वात्तदभिन्नं कार्यं कथमसत्स्यादत आह न कारणादिति ।

चेदं जगत्कार्यं सत्त्वेऽपि चिदात्मनः कारणस्य प्रागुत्पत्तेर्नास्ति, नास्ति चेदसदुत्पद्यत इति स॰त्कार्यवादव्याकोप इत्याह—"यदि चेतनं शुद्धमि"ति । परिहरति—"नैष दोष" इति कुतः ? "प्रतिषेधमात्रत्वात्" । विभजते—"प्रतिषेधमात्रं हीदामिति" । प्रतिपाद॰यिष्यति(१) हि 'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्यत्र । यथा कार्यं स्वरूपेण सदसत्त्वाभ्यां न निर्वचनीयम् अपि तु कारणरूपेण शक्यं सत्त्वेन निर्वक्तुमिति । एवं च कारणसत्तैव कार्यस्य सत्ता न ततोऽन्येति कथं तदुत्पत्तेः प्राक् सति कारणे भवत्यसत् । (२)स्वरूपेण तूत्पत्तेः प्रागुत्पन्नस्य ध्वस्तस्य वा सदसत्त्वाभ्यामनिर्वाच्यस्य न सतोऽसतो वोत्पत्तिरिति निर्विषयः सत्कार्यवादप्रतिषेध इत्यर्थः ॥ ७ ॥

## सू० अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

असामञ्जस्य विभजते—"अत्राह" चोदको, "यदि स्थौल्ये"ति ( पृ० ४५४पं० ३ ) । यथा हि (३)यूषादिषु हिङ्गुसैन्धवादीनामविभागलक्षणो लयः स्वगतरसादिभिर्यूषं रूषयत्येवं ब्रह्मणि विशुद्ध्यादिधर्मणि जगल्लीयमानमविभागं गच्छद् ब्रह्म स्वधर्मेण (४)रूषयेन्न चान्यथा लयो लोकसिद्ध इति भावः । कल्पान्तरेणासामञ्जस्यमाह—"अपि च समस्त॰रूपे"ति । नहि समुद्रस्य फेनोर्मिबुद्बुदादिपरिणामे वा रज्ज्वां सर्पधारादिविभ्रमे वा निय॰मो दृष्टः, समुद्रो हि कदाचित्फेनोर्मिरूपेण परिणमते कदाचिद्बुद्बुदादिना, रज्ज्वां हि कश्चित्सर्प इति विपर्यस्यति कश्चिद्धारेति । न च क्रमनियमः । सोऽयमत्र भोग्यादिविभागनि॰यमः क्रमनियमश्चासमञ्जस इति । कल्पान्तरेणासामञ्जस्यमाह—"अपि च भोक्तृणा"मिति । कल्पान्तरं शङ्कापूर्वमाह—"अथेद"मिति । ॥ ८ ॥

सिद्धान्तसूत्रम्—

## सू० न तु दृष्टान्तभावात् ॥ ९ ॥

नाविभागमात्रं लयोऽपि तु कारणे कार्यस्याविभागस्तत्र च तद्धर्मारूषणे सन्ति सहस्रं दृष्टान्ताः, तत्र(५) तु कारणे कार्यस्य लये कार्यधर्मरूषणे न दृष्टान्तलवोप्यस्तीत्यर्थः । स्यादे॰तत्, यदि कार्यस्याविभागः कारणे, कथं कार्यधर्मारूषण कारणस्येत्यत आह—"अनन्यत्वे॰पी"ति ( पृ० ४५५ पं० ७ ) । यथा रजतस्यारोपितस्य पारमार्थिकं रूपं शुक्तिर्न च शुक्ते रजतमेवमिदमपीत्यर्थः । अपि च स्थित्युत्पत्तिप्रलयकालेषु त्रिष्वपि कार्यस्य कारणादभेदमभि॰

---

( १ ) पृथुबुध्नोदराद्याकारेण कार्यं कारणान्न भिन्नं, नाप्यभिन्नम् , न सत्र चासदतस्तद्रूपेण सत्ता दुःसाध्येति वक्ष्यतीत्यर्थ ।

( २ ) न केवलमुत्पत्तेः प्रागेव स्वरूपेण कार्यस्यासत्त्वमस्माभिर्नैयायिकवदङ्गीक्रियते किन्तु सर्वदैवेत्याह स्वरूपेणेति ।

( ३ ) यूष—शाकरस , जूस इति भाषायां प्रसिद्धः ।

( ४ ) मिश्रयेत । तथाच जगतो ब्रह्मकारणकत्वे कारणस्यापि कार्यवदशुद्ध्यादिप्रसङ्ग इति सत्कार्यवा॰दिनः शङ्काभिप्राय । ननु घटलये मृदो यथा न तद्रूपमिश्रणमेवमिहापि भवेदत आह नचेति । निरवयवना॰शानभ्युपगमादोषत्तुदवर्तमान एव लयो लोकप्रसिद्ध इति भाव॰

( ५ ) सत्कार्यवादिनस्पक्षस्य ।

दधती श्रुतिरनतिशङ्कनीया, सर्वैरेव वेदवादिभिस्तत्र स्थित्युत्पत्त्योर्यः परिहारः स प्रलयेऽपि समानः कार्यस्याविद्यासमारोपितत्वं नाम, तस्मान्नापातिमात्रमनुयोज्यमित्याह-"अत्यल्पं चेदमुच्यतइति। अस्ति चायमपरो दृष्टान्तो यथा च स्वप्नदृगेक" इति पृ० ४५६ पं १)। लौकिकः पुरुषः। "एवमवस्थात्रयसाक्ष्येक" इति। अवस्थात्रय (१)मुत्पत्तिस्थितिप्रलयाः। कल्पान्तरेणासामञ्जस्ये(२) कल्पान्तरेण दृष्टान्तभावं परिहारमाह-"यत्पुनरेतदुक्तमि"ति। अविद्याशक्तेर्नियतत्वादुत्पत्तिनियम इत्यर्थः। "एतेने"ति। मिथ्याज्ञानविभागशक्तिप्रतिनियमेन मुक्तानां पुनरुत्पत्तिप्रसङ्गः(३) प्रत्युक्तः, कारणाभावे कार्याभावस्य प्रतिनियमात्, तत्त्वज्ञानेन च सशक्तिनो मिथ्याज्ञानस्य समूलघात निहतत्वादिति ॥ ९ ॥

## सू० स्वपक्षदोषाच्च ॥ १० ॥

कार्यकारणयोर्वैलक्षण्यं तावत्समानमेवोभयोः पक्षयोः, प्रागुत्पत्तेरसत्कार्यवादप्रसङ्गोऽगीतौ तद्वत्प्रसङ्गश्च प्रधानोपादानपक्ष एव नास्मत्पक्ष इति यद्यप्युपरिष्टात्प्रतिपादयिष्याम(४)स्तथापि गुडजिह्विकया समानत्वापादनमिदानीमिति मन्तव्यमिदमस्य पुरुषस्य सुखदुःखोपादानं क्लेशकर्माशयादीदमस्येति। सुगममन्यत् ॥ १० ॥

## सू० तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः ॥ ११ ॥

केवलागमगम्येऽर्थे स्वतन्त्रतर्काविषयेन सांख्यादिवत् साधर्म्यवैधर्म्यमात्रेण तर्कः प्रवर्तनीयो येन प्रधानादिसिद्धिर्भवेत्, शुष्कतर्को हि स भवत्यप्रतिष्ठानात्, तदुक्तम्-

यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते(५) ॥ इति।

न च महापुरुषपरिगृहीतत्वेन कस्यचित्तर्कस्य प्रतिष्ठा, महापुरुषाणामेव तार्किकाणां मिथो विप्रतिपत्तेरिति। सूत्रेण शङ्कते-"अन्यथानुमेयमिति चेत्"। तद्विभजते-"अन्यथा वयमनुमास्यामह" इति। (६)नानुमानाभासव्यभिचारेणानुमानव्यभिचारःशङ्कनीयः प्रत्यक्षादिष्वपि तदाभासव्यभिचारेण तत्प्रसङ्गात्। तस्मात्स्वाभाविकप्रतिबन्धवल्लिङ्गानुसरणे निपुणेनानुमात्रा भवितव्यम्, ततश्चाप्रत्यूहं प्रधानं सेत्स्यतीति भावः। अपि च येन तर्केण तर्काणामप्रतिष्ठामाह स एव तर्कः प्रतिष्ठितोऽभ्युपेयस्तदप्रतिष्ठायामितराप्रतिष्ठानाभावादित्याह-"नहि

---

(१) जगत्कारणस्य ब्रह्मणा सुषुप्त्याद्यभावादाद्योत्पत्तीति।
(२) अपिच समस्तस्येत्यादिनोक्ते द्वितीयेऽसामञ्जस्ये।
(३) अपिच भोक्तॄणामितिग्रन्थे तृतीयकल्पान्तरणोक्तः प्रसङ्ग इत्यर्थ।
(४) शिष्टापरिग्रहाधिकरणपूर्वपक्षेऽग्निमे।
(५) ऊहापोहनिपुणैरनुमितोप्यनुमानप्रगल्भ्याऽन्यैर्निपुणतरैरस्य खण्डनं क्रियतेऽतो नानुमानमात्रेण कस्यचिदर्थस्य सद्भाव स्थापयितु शक्य इति श्लोकार्थः।
(६) सर्वस्तर्कोऽप्रतिष्ठित उत कश्चित्? नाद्य इत्याह नानुमानाभासेति। स्वाभाविकप्रतिबन्धो-व्याप्तिः। नाद्य इत्याद्यपि चेति।

प्रतिष्ठितस्तर्क एवे"ति। अपि च तर्काप्रतिष्ठायां सकललोकयात्रोच्छेदप्रसङ्गः, न च श्रुत्यर्थाभासनिराकरणेन तदर्थतत्त्वविनिश्चय इत्याह–"**सर्वतर्काप्रतिष्ठायां चे**"ति। अपि च विचारात्मकस्तर्कस्तर्कितपूर्वपक्षपरित्यागेन तर्कितं राद्धान्तमनुजानाति, सति चैष पूर्वपक्षविषये तर्के प्रतिष्ठारहिते प्रवर्तते, तदभावे विचाराप्रवृत्तेः। तदिदमाह–"**अयमेव च तर्कस्यालंकार**" इति (पृ० ४५६ पं० ८)। तामिमामाशङ्कां सूत्रेण परिहरति–"**एवमप्यविमोक्षप्रसंगः**"। न वयमन्यत्र तर्कमप्रमाणायामः, किन्तु जगत्कारणसत्त्वे स्वभाविकप्रतिबन्धवन्न लिङ्गमस्ति। यत्तु साधर्म्यवैधर्म्यमात्रं, तदप्रतिष्ठादोषान्न मुच्यत इति। कल्पान्तरेणानिर्मोक्षपदार्थमाह–"**अपि च सम्यग्ज्ञानान्मोक्ष इति**"। भूतार्थगोचरस्य हि सम्यग्ज्ञानस्य व्यवस्थितवस्तुगोचरतया व्यवस्थानं लोके दृष्टं, यथा प्रत्यक्षस्य, वैदिकं चेदं चेतनजगदुपादानविषयं विज्ञानं वेदोत्थतर्कोतिकर्तव्यताकं वेदजनितं व्यवस्थितम्, वेदानपेक्षेण तु तर्केण जगत्कारणभेदमवस्थापयतां तार्किकाणामन्योन्यं विप्रतिपत्तेस्तत्त्वनिर्द्धारणकारणाभावाच्च न ततस्तत्त्वव्यवस्थेति न ततः सम्यग्ज्ञानम्, असम्यग्ज्ञानाच्च न संसाराद्विमोक्ष इत्यर्थः ॥११॥

## सू० एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥ भ०

(१)न कार्यं कारणादभिन्नमभेदे कारणरूपवत् कार्यत्वानुपपत्तेः, करोत्यर्थानुपपत्तेश्च। अभूतप्रादुर्भावनं हि तदर्थः। न चास्य(२) कारणात्मत्वे किंचिदभूतमस्ति यदर्थमयं पुरुषो यतेत। अभिव्यक्त्यर्थमिति चेत्, न,तस्या अपि कारणात्मत्वेन सत्त्वादसत्त्वे वा ऽभिव्यंग्यस्यापि तद्वत्प्रसङ्गेन कारणात्मत्वव्याघातात्। नहि तदेव तदानीमेवास्ति नास्ति चेति युज्यते। (३)किञ्चेदं मणिमन्त्रौषधमिन्द्रजालं कार्येण शिक्षितं यदिदमजातानिरुद्धातिशयमव्यवधानमविदूरस्थानं च तस्यैव तदवस्थेन्द्रियस्य पुंसः कदाचित्प्रत्यक्षं परोक्षं च (४)येनास्य कदाचित्प्रत्यक्षमुपलम्भन कदाचिदनुमानं कदाचिदागमः। कार्यान्तरव्यवधिरस्य पारोक्ष्यहेतुरिति चेत्, न, कार्यजातस्य सदातनत्वात्। अथापि स्यात्कार्यान्तराणि पिण्डकपालशर्कराचूर्णकणप्रभृतीनि कुम्भं व्यवदधते, ततः कुम्भस्य पारोक्ष्यं कदाचिदिति। तन्न। तस्य कार्यजातस्य कारणात्मनः सदातनत्वेन सर्वदा व्यवधानेन कुम्भस्यात्यन्तानुपलब्धिप्रसङ्गात्। कादाचित्कत्वे वा कार्यजातस्य न कारणात्मत्वं, नित्यत्वानित्यत्वलक्षणविरुद्धधर्मसंसर्गस्य भेदकत्वात्। भेदाभेदयोश्च परस्परविरोधेनैकत्र सहासम्भव इत्युक्तम्। तस्मात्कारणात्कार्यमेकान्तत एव भिन्नम्। न च भेदे गवाश्ववत्कार्यकारणभावानुपपत्तिरिति साम्प्रतम्। अभेदेऽपि कारणरूपवत्तदनुपपत्तेरुक्तत्वात्। (५)अत्यन्तभेदे च कुम्भकुम्भकारयोर्निमित्तनैमित्तिकभावस्य द-

(१) पूर्वं दूषितमपि सत्कार्यवादं नैयायिकमतेन दूषयितुमुपक्रमते आरम्भवादस्थापनपूर्वकं तन्मतखण्डनाय न कार्यमिति। (२) कार्यस्य।

(३) कुलालादिव्यापारात्प्राक् मृद् घटशून्या तदानीं योग्यत्वे सति अनुपलभ्यमानघटत्वात्, ततश्च सत्त्वविरोधात् कार्यकारणयोरभेद इत्याह किञ्चेति। (४) अर्थगतप्रत्यक्षत्वपरोक्षत्वेन।

(५) घटो यदि मृदो भिन्नस्तर्हि तत्कार्यं न स्यादश्ववदिति तर्कस्य स ततो यद्यभिन्नस्तर्हि तत्कार्यं न स्यान्मृद्वदिति प्रतिरोधमुक्त्वा मूलशैथिल्यमाहात्यन्तेति।

र्शनात् । (१)तस्मादनन्यत्वाविशेषेऽपि समवायभेद एवोपादानोपादेयभावनियमहेतुः । यस्या-भूत्वा भवतः समवायस्तदुपादेयं, यत्र च समवायस्तदुपादानम् । उपादानत्वं च कारणस्य कार्यादल्पपरिमाणस्य दृष्टं यथा तन्त्वादीनां पटाद्युपादानानां पटादिभ्यो न्यूनपरिमाणत्वम् । चिदात्मनस्तु परममहत उपादानान्नात्यन्तालपपरिमाणमुपादेयं भवितुमर्हति । तस्माद्यत्रेदम-ल्पतारतम्यं विश्राम्यति यतो न क्षोदीयः सम्भवति तज्जगतो मूलकारणं परमाणुः । (२)क्षो-दीयोन्तरानन्त्ये तु मेरुराजसर्षपयोस्तुल्यपरिमाणत्वप्रसङ्गोऽनन्ताऽवयवत्वादुभयोः । तस्मात्प-रममहतो ब्रह्मण उपादानादभिन्नमुपादेयं जगत्कार्यमभिदधती श्रुतिः प्रतिष्ठितप्रामा-ण्यतर्कविरोधात् (३)सहस्रसंवत्सरश्रुतिवत्कथंचिज्जघन्यवृत्त्या व्याख्येयेत्याधिकं शङ्कमानं प्रति सांख्यदूषणमतिदिशति "एतेने"ति सूत्रेण ( पृ० ४६० पं० १६ )। अस्यार्थः—कारणात्कार्यस्य भेदं 'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्यत्र निषेत्स्यामः । (४)अविद्यासमा-रोपणेन च कार्यस्य न्यूनाधिकभावमप्यप्रयोजकत्वादुपेक्षिष्यामहे । तेन वैशेषिकाद्यभिमतस्य तर्कस्य शुष्कत्वेनाव्यवस्थितेः सूत्रमिदं सांख्यदूषणमतिदिशति । यत्र कथंचिद्वेदानुसारिणो मन्वादिभिः शिष्टैः परिगृहीतस्य सांख्यतर्कस्यैषा गतिस्तत्र परमाण्वादिवादस्यात्यन्तवेदबा-ह्यस्य मन्वाद्युपेक्षितस्य च कैव कथेति । "केनचिदंशेने"ति ( पृ० ४६१ पं० २ ) । सृष्ट्यादयो हि व्युत्पाद्यास्ते च किंचित्सदसद्वा पूर्वपक्षन्यायोत्प्रेक्षितमप्युदाहृत्य व्युत्पाद्यन्त इति केनचिदंशेनेत्युक्तम् । सुगममन्यत् ॥ १२ ॥

## सू० भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १३ ॥

स्यादेतत्, अतिगम्भीरजगत्कारणविषयत्वं तर्कस्य नास्ति, केवलागमगम्यमेतदित्युक्तं, तत्कथं पुनस्तर्कनिमित्त आक्षेप इत्यत आह—"यद्यपि श्रुतिः प्रमाण"मिति । प्रवृ-त्ता हि श्रुतिरनपेक्षतया स्वतः प्रमाणत्वेन न प्रमाणान्तरमपेक्षते, (५)प्रवर्तमाना पुनः स्फुट-तरप्रतिष्ठितप्रामाण्यतर्कविरोधेन मुख्यार्थात् प्रच्याव्य जघन्यवृत्तितां नीयते, यथा मन्त्रार्थ-वादावित्यर्थः । अतिरोहितार्थं भाष्यम् । "यथा त्वद्यत्व" इति (पृ० ४६२ पं० १०) । यद्यतीतानागतयोः सर्गयोरेष विभागो न भवेत् ततस्तदेवाद्यतनस्य विभागस्य बाधक

---

( १ ) ननु यदि कुम्भकारमृदोरत्यन्तभेदस्तर्हि कथमुपादाननिमित्तव्यवस्थाऽत आह तस्मादिति ।

( २ ) ननु परमाणुरन्यक्षुद्रतरावयवारभ्यो मूर्तत्वाद्घटवदिति अनुमानेन नाल्पावयवविश्रान्तिरत आह क्षोदीयान्तरानन्त्ये त्विति ।

( ३ ) सहस्रेति । 'पञ्चपञ्चाशतस्त्रिवृतः सम्वत्सरा' इत्यादिवाक्ये सम्वत्सरशब्दस्य ह्युत्पत्तिवाक्ये मु-ख्यार्थलाभात्तावदायुष्कररसादिसिद्धमनुष्याधिकारिता स्यादिति पूर्वपक्षे, 'द्वादशाहे त्रयस्त्रिवृतो भवन्ति' इत्यादिना त्रिवृदादिशब्दानां त्रिवृदादिस्तोत्रविशिष्टाह परत्वात्पञ्चपञ्चाशतस्त्रिवृतः सम्वत्सरा इत्याद्युत्पत्ति-वाक्येष्वह परत्रिवृदादिशब्दैः सामानाधिकरण्यादह परतैवेति सिद्धान्तितं, तत्र यथा सहस्रसम्वत्सरशब्दस्य तावद्दिनसाध्यकर्मपरत्व यथा लक्षणया तथाऽत्र लक्षणयैवोत्पत्तिश्रुतेर्ब्रह्मपरत्वं सम्भवतीत्यर्थ ।

( ४ ) आरम्भे हि न्यूनपरिमाणान्महदुदयनियमो न निवर्तते, उन्नततरागिरिशिखरवर्तिमहातरुषु भूमि-ष्ठस्य दूर्वाकारनिर्भासप्रतिभासोपलम्भादित्याहाविद्यासमारोपणेति ।

( ५ ) स्वविषयप्रतिष्ठविरोधितर्केण सहोन्मज्जन्ती निमज्जन्ती च बलाबलविवेकमपेक्षमाणेत्यर्थ. । प्र-तिष्ठितोऽनुपचरितः ।

स्यात्, स्वप्नदर्शनस्येव जाग्रद्दर्शनं, न त्वेतदस्ति अबाधितायतनदर्शनेन तयोरपि तथात्वानुमानादित्यर्थः । इमां शङ्कामापाततोऽविचारितलोकसिद्धदृष्टान्तोपदर्शनमात्रेण निराकरोति सूत्रकारः "**स्याल्लोकवत्**" ॥ १३ ॥

परिहाररहस्यमाह—

## सू० तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

(१)पूर्वस्मादविरोधादस्य विशेषाभिधानोपक्रमस्य विभागमाह—"**अभ्युपगम्य चेममि**"ति ( पृ० ४६३ पं० १५ ) । स्यादेतत्, यदि कारणात्परमार्थभूतादनन्यत्वमाकाशादेः प्रपञ्चस्य कार्यस्य कुतस्तर्हि न वैशेषिकाद्युक्तदोषप्रपञ्चावतार इत्यत आह "**व्यतिरेकेणाभावः कार्यस्यावगम्यत**" इति ( पृ० ४६४ प० २ ) । न खल्वनन्यत्वमित्यभेदं ब्रूमः, किन्तु भेदं व्यासेधामस्ततश्च नाभेदाश्रयदोषप्रसङ्गः, किन्त्वभेदं व्यासेधद्भिर्वैशेषिकादिभिरस्मासु साहायकमेवाचरितं भवति । भेदनिषेधहेतुं व्याचष्टे "**आरम्भणशब्दस्ताव**"दिति । एवं हि ब्रह्मविज्ञानेन सर्वं जगत्तत्त्वतो ज्ञायेत यदि ब्रह्मैव तत्त्वं जगतो भवेत्, यथा रज्ज्वां ज्ञातायां भुजङ्गतत्त्वं ज्ञातं भवति, सा हि तस्य तत्त्वम् । (२)तत्त्वज्ञानं च ज्ञानमतोऽन्यन्मिथ्याज्ञानमज्ञानमेव । अत्रैव वैदिको दृष्टान्तो "**यथा सौम्यैकेन मृत्पिण्डेने**"ति । स्यादेतत्, मृदि ज्ञातायां कथं मृन्मयं घटादि ज्ञातं भवति, न हि तन्मृदात्मकमित्युपपादितमधस्तात्(३), तस्मात्तत्त्वतो भिन्नं न चान्यस्मिन् विज्ञातेऽन्यद्विज्ञातं भवतीत्यत आह श्रुतिः "वाचारम्भणं विकारो नामधेयम्" वाचया केवलमारभ्यते विकारजातं, न तु तत्त्वतोऽस्ति, यतो नामधेयमात्रमेतद्, यथा 'पुरुषस्य चैतन्यमिति, राहोः शिर इति' विकल्पमात्रम् । यथाहुर्विकल्पविदः—"**शब्दज्ञानानुपाती वस्तुशून्यो विकल्प**"इति । ( यो० सू० १।९ ) तथा चावस्तुतयाऽनृतं विकारजातं मृत्तिकेत्येव सत्यम् । तस्माद्घटशरावोदञ्चनादीनां तत्त्वं मृदेव, तेन मृदि ज्ञातायां तेषां सर्वेषामेव तत्त्वं ज्ञातं भवति । तदिदमुक्तं "**न चान्यथैकविज्ञानेन सर्वविज्ञानं सम्पद्यत**"इति । निदर्शनान्तरद्वयं दर्शयन्नुपसंहरति—"**तस्माद्यथा घटकरकाद्याकाशानामि**"ति ( पृ० ४६५ पं० १ ) (४)ये हि दृष्टनष्टस्वरूपा न ते वस्तुसन्तो यथा मृगतृष्णिकोदकादयः, तथा च सर्वं विकारजातं, तस्मादवस्तुसत् । तथाहि यदस्ति तदस्त्येव, यथा चिदात्मा, नह्यसौ कदाचित् क्वचित् कथंचिद्वास्ति, किन्तु सर्वदा सर्वत्र सर्वथास्त्येव, न नास्ति, न चैवं विकारजातं, तस्य

---

(१) पूर्वाधिकरणेऽपि भेदग्राहिमानाविरोधोक्त्या पुनरुक्तिमाशंक्याह पूर्वस्मादिति । भेदग्राहिमानस्य प्रामाण्यमङ्गीकृत्य भेदाभेदयो रूपभेदेन विरोधः पूर्वं परिहृतः, इदानीमनङ्गीकृत्य तत्त्वावेदकत्वात्प्रच्याव्य व्यावहारिके व्यवस्थाप्यते इति भावः ।

(२) ननु परिमाणपक्षेऽप्यभेदांशेन सर्वज्ञानं स्यादत आह तत्त्वज्ञानं चेति । भेदालीकताया उक्तत्वादित्यर्थः ॥

(३) अधस्तादिति । शिष्टापरिग्रहाधिकरणपूर्वपक्षे ( ब्र० अ० २ पा० २ सू० २४-२३ ) इत्यर्थः ।

(४) दृष्टान्तमात्रात्नार्थसिद्धिरित्याशयकं दृष्टनष्टस्वरूपत्वादिति भाष्योक्तं हेतुं व्याचक्षाण आह ये हीति । क्वचिद्दृष्टं पुनर्नष्टमदृष्टमित्यर्थः । प्रतीतिसमयेऽपि सत्त्वव्यावृत्त्यर्थं दृष्टपदम् ।

कदाचित् कथंचित् कुत्रचिदवस्थानात् । तथाहि (१)सत्स्वभावं चेद्विकारजातं, कथं कदाचिदसत्, (२)असत्स्वभाव चेत्कथं कदाचित्सत्, सदसतोरेकत्वविरोधात्, न हि रूपं कदाचित् क्वचित् कथंचिद्वा गन्धो भवति । अथ तस्य सदसत्त्वे धर्मौ ते च स्वकारणाधीनजन्मतया कदाचिदेव भवतः, तर्हि विकारजातं दण्डायमानं सदातनमिति न विकारः कस्यचित् । अथासत्त्वसमये तन्नास्ति, कस्य तर्हि धर्मोऽसत्त्वम्, न हि धर्मिण्यप्रत्युत्पन्ने तद्धर्मोऽसत्त्वं प्रत्युत्पन्नमुपपद्यते । अथास्य न धर्मः किन्त्वर्थान्तरमसत्त्वं, किमायातं भावस्य, न हि घटे जाते पटस्य किंचिद्भवति । (३)असत्त्वं भावविरोधीति चेद्, न(४), आकिञ्चित्करस्य तत्त्वानुपपत्तेः, किंचित्करत्वे वा तत्राप्यसत्त्वेन तदनुयोगसम्भवात् । अथास्यासत्त्वं नाम किंचिन्न जायते किन्तु स एव न भवति, यथाहुः—

न तस्य किंचिद्भवति न भवत्येव केवलम् । इति ।

अथैष प्रसज्यप्रतिषेधो, निरुच्यतां किं तत्स्वभावो भाव उत भावस्वभावः स इति । तत्र पूर्वस्मिन् कल्पे भावानां तत्स्वभावतया तुच्छतया जगच्छून्यं प्रसज्येत तथा च भावानुभवाभावः । उत्तरस्मिंस्तु सर्वभावनित्यतया नाभावव्यवहारः स्यात् । कल्पनामात्रनिमित्तत्वेऽपि निषेधस्य भावनित्यतापत्तिस्तदवस्थैव । तस्माद्भिन्नमस्ति कारणाद्विकारजातं न वस्तु सत्, अतो विकारजातमनिर्वचनीयमनृतम् । तदनेन प्रमाणेन सिद्धमनृतत्वं विकारजातस्य कारणस्य निर्वाच्यतया सत्त्व, 'मृत्तिकेत्येव सत्यमि'त्यादिना प्रबन्धेन दृष्टान्ततयाऽनुवदति श्रुतिः । (५)'यत्र लौकिकपरीक्षकाणां बुद्धिसाम्यं स दृष्टान्त' इति चाक्षपादसूत्रं प्रमाणसिद्धो दृष्टान्त इत्येतत्परं, न पुनर्लोकसिद्धत्वमत्र विवक्षितम्, अन्यथा तेषां परमाण्वादिर्न दृष्टान्तः स्यात्, नहि परमाण्वादेर्नैसर्गिकवैनयिकबुद्ध्यतिशयरहितानां लौकिकानां सिद्ध इति ।

(६)सम्प्रत्यनेकान्तवादिनमुत्थापयति—**"नन्वनेकात्मक"मिति** । अनेकाभिः शक्तिभियाः प्रवृत्तयो नानाकार्यसृष्टयस्तद्युक्तं ब्रह्मैकं नाना चेति । किमतो यद्येवमित्यत आह **"तत्रैकत्वांशेने"ति**। यदि पुनरेकत्वमेव वस्तुसद्भवेत् ततो नानात्वाभावाद्वैदिकः कर्मकाण्डाश्रयो लौकिकश्च व्यवहारः समस्त एवोच्छिद्येत । ब्रह्मगोचराश्च श्रवणमननादयः सर्वे दत्त-

---

(१) विमतं मिथ्या सावधिकत्वाद्व्यतिरेके चिदात्मवदित्यनुमानस्य विपक्षे बाधकतामाह सत्स्वभावं चेदिति ।

(२) सत्त्वासत्त्वे विकारस्य स्वरूपमुत धर्मौ, अथार्थान्तरमलीकं वेति विकल्प्य क्रमेण निराकुर्वन्ननुमानस्यानुकूलतर्कमाह असत्स्वभावं चेति ।

(३) अर्थान्तरत्वेऽपि विरोधित्वं शङ्कते असत्त्वमिति ।

(४) विरोधिरूपमसत्त्वं भावस्य किमकिञ्चित्करमुतासत्त्वकरं स्वरूपं वेति विकल्प्य क्रमेण दूषयति नेत्यादिना । किञ्चित्करत्वे यत्किञ्चिदसत्त्वं क्रियते तदपि स्वरूपं धर्मो वेत्यादि विकल्प्य तद्दूषणानां सम्भवादित्यर्थः ।

(५) ननु लोकसिद्धस्यैव 'यत्रे'त्यादिना गोतमसूत्रेण दृष्टान्तत्वसम्भवात्कार्यमिथ्यात्वं कारणसत्यत्वं चानुमानसिद्धं श्रुत्या दृष्टान्तीकर्तुमयुक्तमित्यत आह यत्रेति ।

(६) एवं शुद्धाद्वैतमतं प्रदर्श्य विशिष्टाद्वैत(भेदाभेद)मतमुत्थापयितुमवतारयति सम्प्रतीति । अनेकाभिः शक्तिभिः तदधीनप्रवृत्तिभिः परिणामैर्युक्तं ब्रह्मैकं नाना चेत्यर्थः । भेदाभेदमते सर्वव्यवस्थासिद्धेरस्यन्तभेद इतमानबाध इत्यस्य मतस्याभिमानः ।

जलाञ्जलयः प्रसज्येरन्। एवं चानेकात्मकत्वे ब्रह्मणो मृदादिदृष्टान्ता अनुरूपा भविष्यन्तीति। तमिममनेकान्तवादं दूषयति—**"नैवं स्यादि"ति**। (१)इदं तावदत्र वक्तव्यं—मृदात्मनैकत्वं घटशरावाद्यात्मना नानात्वमिति वदतः कार्यकारणयोः परस्परं किमभेदोऽभिमत, आहो भेद, उत भेदाभेदाविति। तत्राभेदे ऐकान्तिके मृदात्मनेति च घटशरावाद्यात्मनेति चोल्लेखद्वयं नियमश्च नोपपद्यते(२)। भेदे चोल्लेखद्वयनियमावुपपन्नौ, आत्मनेति त्वसमञ्जसम्, नह्यन्यस्यान्य आत्मा भवति। (३)न चानेकान्तवादः। भेदाभेदाकल्पे तूल्लेखद्वयं भवेदपि। नियमस्त्वयुक्तो नहि धर्मिणोः कार्यकारणयोः सङ्करे तद्धर्मावेकत्वनानात्वे न सङ्कीर्यते इति सम्भवति। ततश्च मृदात्मनैकत्वं यावद्भवति तावद्घटशरावाद्यात्मनापि स्यात्, एवं घटशरावाद्यात्मना नानात्वं यावद्भवति तावन्मृदात्मना नानात्वं भवेत्। सोऽयं नियमः कार्यकारणयोरैकान्तिकं भेदमुपकल्पयति, अनिर्वचनीयतां वा कार्यस्य। पराक्रान्तं चास्माभिः प्रथमाध्याये तदास्तां तावत्। तदेतद्युक्तिनिराकृतमनुवदन्तीं श्रुतिमुदाहरति—**"मृत्तिकेत्येव सत्यमि"ति**। स्यादेतत्, न ब्रह्मणो जीवभावः काल्पनिकः किन्तु भाविकः, अंशो हि स, तस्य कर्मसहितेन ज्ञानेन ब्रह्मभाव आधीयत इत्यत आह—**"स्वयं प्रसिद्ध ही"ति**। 'स्वाभाविकस्यानादेरि'ति यदुक्तं नानात्वांशेन तु कर्मकाण्डाश्रयो लौकिकश्च व्यवहारः सेत्स्यतीति तत्राह—**"बाधिते चे"ति**। यावदबाधं हि सर्वोऽयं व्यवहारः स्वप्नदशायामिव तदुपदर्शितपदार्थजातव्यवहारः। स च यथा जाग्रदवस्थायां बाधकान्निवर्तते एवं तत्त्वमस्यादिवाक्यपरिभावनाभ्यासपरिपाकभुवा शारीरस्य ब्रह्मात्मभावसाक्षात्कारेण बाधकेन निवर्तते। स्यादेतत्, 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्ये'दित्यादिना मिथ्याज्ञानाधीनो व्यवहारः क्रियाकारकादिलक्षणः सम्यग्ज्ञानेनापनीयत इति न ब्रूमः, किन्त्ववस्थाभेदाश्रयो व्यवहारोऽवस्थान्तरप्राप्तौ निवर्तते, यथा बालकस्य कामचारवादभक्षतोपनयनप्राप्तौ निवर्तते न च तावतासौ मिथ्याज्ञाननिबन्धनो भवत्येवमत्रापीत्यत आह—**"न चायं व्यवहाराभाव" इति** ( पृ० ४६६-पं०४ )। कुतः? **"तत्त्वमसीति ब्रह्मात्मभावस्य"ति**। न खल्वेतद्वाक्यमवस्थाविशेषविनियतं ब्रह्मात्मभावमाह जीवस्य, अपि तु न भुजङ्गो रज्जुरियमितिवत् सदातनं तमभिवदति(४), अपि च सत्यानृताभिधानेनाप्येतदेव युक्तमित्याह—**"तस्करदृष्टान्तेन(५) चे"ति**। **"न चास्मिन् दर्शन"इति**। नहि जातु कठस्य दण्डकमण्डलुकुण्डलशीलिनः कुण्डलिज्ञानं दण्डवत्तां कमण्डलुमत्तां बाधते, तत्कस्य हेतोः? तेषां कुण्डलादीनां तस्मिन् भाविकत्वात्, तद्वदिहापि भाविकगोचरेणैकात्म्यज्ञानेन न नानात्वं भाविकम-

---

(१) मृदेका शरावादय परस्परं भिन्ना इत्यभ्युपगमेऽत्यन्तभेद एव भवेत्। अथ मृदात्मना शरावादीनामेकत्वं मृदश्च शरावाद्यात्मना नानात्वमित्याशयस्तं विकल्प्य दूषयति इदं तावदित्यादिना।

(२) नोपपद्यत इति। अत्यन्ताभेदे त्वपुनरुक्तशब्दद्वयप्रयोगो भेदाभेदयोः कार्यकारणात्मना व्यवस्था च न स्यादित्यर्थः।

(३) न चेति। भेदपक्षेऽनेकान्तवादश्च न भवतीत्यर्थः। भवेदपीति। अनेकान्तत्वाग्न भवेदपीत्यपेरर्थः।

(४) अभिवदतीति। संसरत्सत्यत्वे तदवस्थायां जीवस्य ब्रह्मत्वं न स्यात्, भेदाभेदयोरेकदैकत्र विरोधात्, अतोऽसंसारिब्रह्माभेदस्य सदातनत्वावगमात् संसारोऽपि मिथ्यैवेत्याभिप्राय।

(५) सत्यवादिनस्तस्करत्वेनारोपितस्य मोक्षवत्सत्यब्रह्मात्मत्ववेदिनो मोक्ष इति तस्करदृष्टान्त।

पवदनीयम्, नहि ज्ञानेन वस्त्वपनीयतेऽपि तु मिथ्याज्ञानेनारोपितमित्यर्थः । चोदयति(१) "नन्वेकत्वैकान्ताभ्युपगम" इति । अबाधितानधिगतासंदिग्धविज्ञानसाधनं प्रमाणमिति प्रमाणसामान्यलक्षणोपपत्त्या प्रत्यक्षादीनि प्रमाणतामश्नुवते, एकत्वैकान्ताभ्युपगमे तु तेषां सर्वेषां भेदविषयाणां बाधितत्वादप्रामाण्यं प्रसज्येत(२) । तथा विधिप्रतिषेधशास्त्रमपि भाव्यभावकरणेतिकर्तव्यताभेदापेक्षत्वाद्व्याहन्येत । तथा च नास्तिक्यमेकदेशाक्षेपेण च सर्ववेदाक्षेपाद्वेदान्तानामप्यप्रामाण्यमित्यभेदैकान्ताभ्युपगमहानिः । न केवलं विधिनिषेधाक्षेपेणास्य मोक्षशास्त्रस्याक्षेपः स्वरूपेणास्यापि भेदापेक्षत्वादित्याह "मोक्षशास्त्रस्यापी"ति ( पृ० ५६७ प० २) । अपि चास्मिन् दर्शने वर्णपदवाक्यप्रकरणादीनामलीकत्वात्तत्प्रभवमद्वैतज्ञानमसमीचीनं भवेत, न खल्वलीकाद्धूमाद्धूमकेतनज्ञानं समीचीनमित्याह—"मोक्षशास्त्रस्यापी"ति । परिहरति "अत्रोच्यत"इति । यद्यपि प्रत्यक्षादीनां तात्त्विकमबोधित्वं नास्ति, युक्त्यागमाभ्यां बाधनात्, तथापि व्यवहारे बाधनाभावात्सांव्यवहारिकमबाधनम् । नहि प्रत्यक्षादिभिरर्थं परिच्छिद्य प्रवर्तमानो व्यवहारे विसंवाद्यते सांसारिकः कश्चित् । तस्मादबाधनान्न प्रमाणलक्षणमतिपतन्ति प्रत्यक्षादय इति । "सत्यत्वोपपत्ते"रिति । सत्यत्वाभिमानोपपत्तेरिति । प्रहणकवाक्यमेतद्विभजते—"यावद्धि न सत्यात्मैकत्वप्रतिपत्ति"रिति । विकारानेव तु (३)शरीरादीनहमित्यात्मभावेन पुत्रपश्वादीन्ममेत्यात्मथिभावेनेति योजना । "वैदिकश्चे"ति कर्मकाण्डमोक्षशास्त्रव्यवहारसमर्थना । "स्वप्नव्यवहारस्येवे"ति विभजते(४)—"यथा सुप्तस्य प्राकृतस्ये"ति । 'कथं चानृतेन मोक्षशास्त्रेणे'ति यदुक्तं तदनुभाष्य दूषयति(५)—"कथंत्वसत्येने"ति । शक्यमत्र वक्तुं श्रवणाद्युपाय आत्मसाक्षात्कारपर्यन्तो वेदान्तसमुत्थोऽपि ज्ञाननिचयोऽसत्यः साऽपि हि वृत्तिरूपः कार्यतया निरोधधर्मा, यस्तु ब्रह्मस्वभावसाक्षात्कारोऽसौ न कार्यस्तत्स्वभावत्वात्तस्मादचोद्यमेतत् 'कथमसत्यात्सत्योत्पाद' इति । यत्खलु सत्यं न तदुत्पद्यत इति कुतस्तस्यासत्यादुत्पादो यच्चोत्पद्यते तत्सर्वमसत्यमेव । सांव्यवहारिकं तु(६) सत्यत्वं वृत्तिरूपस्य ब्रह्मसाक्षात्कारस्येव श्रवणादीनामप्यभिन्नम्, तस्मादभ्युपेत्य वृत्तिरूपस्य ब्रह्मसाक्षात्कारस्य परमार्थसत्यता व्यभिचारोद्भावनमिति मन्तव्यम् । यद्यपि सांव्यवहारिकसत्यादेव भयात्सत्य मरणमुत्पद्यते, तथापि भयहेतुरहिस्तज्ज्ञानं वाऽसत्यं ततो भयं सत्यं चायत इत्यसत्यात्सत्यस्योत्पत्तिरुक्ता । यद्यपि चाहिज्ञानमपि स्वरूपेण सत्तथापि न तज्ज्ञानत्वेन भ-

---

(१) प्रत्यक्षादिप्रामाण्यान्यथानुपपत्त्या नानात्वस्य सत्यत्वमिति पूर्वपक्षबीजोद्घाटनार्थमित्यर्थः ।

(२) प्रसज्येतेति । तथा चोपजीव्यप्रत्यक्षादिप्रामाण्याय वेदान्तानां भेदाभेदपरत्वमुचितमिति भाव ।

(३) अह ममाभिमानयोरेकत्र व्याघात स्यादिति प्रविभज्य योजयति शरीरादीनिति ।

(४) वस्तुतो मिथ्यात्वेऽपि विकारेषु तान्निश्चयाभावेन प्रत्यक्षादिव्यवहारोपपत्तावयुक्तं दृष्टान्तं विवृणोतीत्यर्थः ।

(५) द्वैतप्रमाणानां व्यवहारकाले बाधशून्यार्थबोधकत्व व्यावहारिकं प्रामाण्यमुपपाद्याद्वैतप्रमाणानां वेदान्तानां सर्वकालेषु बाधशून्यब्रह्मबोधकत्व तात्त्विकं प्रामाण्यमुपपादयितुमुक्तशङ्कामनूद्य दूषयतीत्यर्थः ।

(६) ननु मिथ्यात्वे श्रवणादीनामविद्यानिवृत्तिसमर्थसाक्षात्कारहेतुत्व न स्यादत आह सांव्यवहारिकं त्विति

यद्धेतुरपि स्वानिर्वाच्याहिरूषितत्वेन । अन्यथा रज्जुज्ञानादपि भयप्रसङ्गाज्ज्ञानत्वेनाविशेषात् । तस्मादनिर्वाच्याहिरूषितं ज्ञानमनिर्वाच्यमिति सिद्धमसत्यादपि सत्यस्योपजन इति । (१)न च ब्रूमः सर्वस्मादसत्यात्सत्यस्योपजनो यतः समारोपितधूमभावाया धूममहिष्या वह्निज्ञानं सत्यं स्यात् । नहि चक्षुषो रूपज्ञानं सत्यमुपजायत इति रसादिज्ञानेनापि ततः सत्येन भवितव्यम् । यतो नियमो हि स तादृशः सत्यानां यतः कुतश्चित्किञ्चिदेव जायत इत्येवमसत्यानामपि नियमो यतःकुतश्चिदसत्यात्सत्यं कुतश्चिदसत्यं यथा दीर्घत्वादेर्वर्णेषु समारोपितत्वाविशेषेऽप्यजीनमित्यतोज्यानिविरहमवगच्छन्ति सत्यमजिनमित्यतस्तु समारोपितदीर्घभावाज्ज्यानीविरहमवगच्छन्तो भवन्ति भ्रान्ताः(२)। न चोभयत्र दीर्घसमारोपं प्रति कश्चिदस्ति भेदस्तस्मादुपपन्नमसत्यादपि सत्यस्योदय इति । निदर्शनान्तरमाह—"**स्वप्नदर्शनावस्थस्ये**"ति । यथा सांसारिको जाग्रद्भुजङ्गं दृष्ट्वा पलायते ततश्च न दंशवेदनामाप्नोति, पिपासुः सलिलमालोक्य गातुं प्रवर्तते ततस्तदासाद्य पायंपाय(३)माप्यायितः सुखमनुभवति; एवं स्वप्नान्तिकेऽपि तदवस्थं सर्वमित्यसत्यात्कार्यसिद्धिः । शङ्कते—"**तत्कार्यमप्यनृतमेवे**"ति ( पृ० ४६८ पं० १ ) एवमपि नासत्यात्सत्यस्य सिद्धिरुक्तेत्यर्थः । परिहरति—"**तत्र ब्रूमो, यद्यपि स्वप्नदर्शनावस्थस्ये**"ति । लौकिको हि सुप्तोत्थितोऽवगम्यं बाधितं मन्यते न तदवगतिं,(४) तेन यद्यपि परीक्षका अनिर्वाच्यरूषितामवगतिमनिर्वाच्यां निश्चिन्वन्ति तथापि लौकिकाभिप्रायेणैतदुक्तम् । अत्रान्तरे लौकायतिकानां मतमपाकरोति—"**एतेन स्वप्नदृशोऽवगत्यबाधनेने**"ति । यदा खल्वयं चैत्रस्तारक्षवीं(५) व्यात्तविकटदंष्ट्राकरालवदनामुत्तब्धवम्भ्रमन्मस्तकावचुम्बिलाङ्गूलामतिरोषारुणस्तब्ध(६)विशालवृत्तलोचनां रोमाञ्चसञ्चयोत्फुल्लभीषणां स्फटिकाचलभित्तिप्रतिबिम्बितामभ्यमित्रीणां(७)तनुमास्थाय स्वप्ने प्रतिबुद्धो मानुषीमात्मनस्तनुं पश्यति तदोभयदेहानुगतमात्मानं प्रतिसन्दधानो देहातिरिक्तमात्मानं निश्चिनोति, न तु देहमात्रम् , तन्मात्रत्वे देहवत्प्रतिसन्धानाभावप्रसङ्गात् । कथं चैतदुपप

(१) यद्यसत्यात्सत्यबुद्धिः स्यात्तर्हि धूमाभासादपि सत्यवह्निज्ञानं स्यादित्याशङ्कितशङ्कायामाह नचेति । असत्यादपि सत्यमुत्पद्यत इत्युच्यते न पुनरसत्यात्सत्योत्पादनियम इत्यर्थः । धूममहिषी धूमी, बाष्पमिति यावत् ।

(२) अजीनमिति । 'ज्या वयोहानौ' इत्यस्य धातोर्निष्ठायां सम्प्रसारणे नञ्समासे चाजीनमिति रूपम्, अस्माद्ध्यस्तदीर्घभावादपि ज्यानेर्वयोहानेरभावं सत्यमवगच्छति, वक्त्रा तु ह्रस्वत्वेनाजिनमिति उच्चरिते भ्रमादजिनमिति गृहीतादस्माच्छब्दाद्या वयोहानिप्रतीतिः सा भ्रान्तिराजिनशब्दस्य चर्मवाचकत्वात् । एव चात्र यथारोपितत्वाविशेषेऽपि किञ्चिद्दैर्घ्यं सत्यबोधकं किञ्चिदसत्यबोधकमेवं वेदान्तिमतेऽपीत्यर्थः ।

(३) पीत्वा पीत्वा ।

(४) अवगतिर्वृत्तिः घटादिवत्सत्यापि प्रातिभासिकस्वप्नदृष्टवस्तुनः फलं, चैतन्यं वा वृत्त्यभिव्यक्तमवगतिशब्दार्थः ।

(५) व्याघ्रमयीं, अस्य तनुमास्थायेत्यन्वयः । उत्तब्धमुन्नमय्य धृतं वम्भ्रमदत्यन्तं भ्रमन्मस्तकावचुम्बि लाङ्गूलं यस्यास्तां तनुमित्यर्थः ।

(६) ध्वस्तेतिपाठे इतस्ततो विक्षिप्तनयनामित्यर्थो बोध्यः ।

(७) अभिरूममभि प्रतियोद्धुं गतां स्फटिकशैलप्रतिबिम्बितां स्वामिप्रामिति भ्रमादाक्रमितुं धावन्तीं पुनर्याघ्रतनुमास्थितां पश्यतीति, यदि स्वप्नदृशोऽवगतिरबाधिता स्यात्तर्ह्येवोपपद्यते इति भावः ।

च्येत यदि स्वप्नदशोऽवगतिरबाधिता स्यात्तद्बाधे तु प्रतिसन्धानाभाव इति । असत्याच्च सत्यप्रतीतिः श्रुतिसिद्धाऽन्वयव्यतिरेकासिद्धा चेत्याह—"**तथा च श्रुतिरि**"ति । "**तथाऽकारादी**"ति । यद्यपि रेखास्वरूपं सत्यं तथापि तद्यथासङ्केतमसत्यं, नहि सङ्केतयितारः संकेतयन्तीदृशेन रेखाभेदेनायं वर्णः प्रत्येतव्योऽपि त्वीदृशो रेखाभेदोऽकार ईदृशश्च ककार इति, तथा चासमीचीनात्संकेतात्समीचीनवर्णावगतिरिति सिद्धम् । (१)यच्चोक्तं—"एकत्वांशेन ज्ञानमोक्षव्यवहारः सेत्स्यति नानात्वांशेन तु कर्मकाण्डाश्रयो लौकिकश्च व्यवहारः सेत्स्यती"ति तत्राह—"**अपि चान्त्यमिदं प्रमाण**"मिति(पृ०४६९पं० १)।(२)यदि खल्वेकत्वानेकत्वनिबन्धनौ व्यवहारावेकस्य पुंसोऽपर्यायेण सम्भवतस्ततस्तदर्थमुभयसद्भावः कल्प्येत, न त्वेतदस्ति, नह्येकत्वावगतिनिबन्धनः कश्चिदस्ति व्यवहारस्तदवगतेः सर्वोत्तरत्वात्, तथाहि—'तत्त्वमसी'त्यैकात्म्यावगतिः समस्तप्रमाणतत्फलतद्व्यवहारानपबाधमानैवोदीयेत, नैतस्याः परस्तात्किञ्चिदनुकूलं प्रतिकूलं चास्ति यदपेक्षेत येन चेयं प्रतिक्षिप्येत, तत्रानुकूलप्रतिकूलनिवारणान्नातः परं किञ्चिदाकाङ्क्ष्यमिति । न चेयमवगतिर्डुलि(३)क्षीरप्रायेत्याह—"**न चेयमि**"ति । स्यादेतत्, अन्त्या चेदियमवगतिर्निष्प्रयोजना तर्हि, तथा च न प्रेक्षावद्भिरुपादीयेत, प्रयोजनवत्त्वे वा नान्त्या स्यादित्यत आह—"**न चेयमवगतिरनर्थिका**" कुतः ? "**अविद्यानिवृत्तिफलदर्शनात्**" । नहीयमुत्पन्ना सती पश्चादविद्यां निवर्तयति येन नान्त्या स्यात्, किन्त्वविद्याविरोधि(४)स्वभावतया तन्निवृत्त्यात्मैवोदयते । (५)अविद्यानिवृत्तिश्च न तत्कार्यतया फलमपि त्विष्टतयेष्टलक्षणत्वात्फलस्येति । प्रतिकूलं पराचीनं निराकर्तुमाह—"**भ्रान्तिर्वे**"ति । कुतो ? "**बाधके**"ति । (६)स्यादेतत्, मा भूदेकत्वनिबन्धनो व्यवहारोऽनेकत्वनिबन्धनस्त्वस्ति तदेव हि सकलामुद्वहति लोकयात्रामतस्तत्सिद्ध्यर्थमनेकत्वस्य कल्पनीयं तात्त्विकत्वमित्यत आह—"**प्राक्चे**"ति । व्यवहारो हि बुद्धिपूर्वकारिणां बुद्ध्योपपद्यते, न त्वस्यास्तात्त्विकत्वेन, भ्रान्त्यापि तदुपपत्तेरित्यावेदितम् । सत्यं च तदविसंवादादनृतं च विचारासहतयाऽनिर्वाच्यत्वात् । अन्त्यस्यैकात्म्यज्ञानस्यानपेक्षतया बाधकत्वमनेकत्वज्ञानस्य च प्रतियोगिग्रहापेक्षया दुर्बलत्वेन बाध्यत्वं वदन् प्रकृतमुपसंहरति—"**तस्मादन्त्येन प्रमाणेने**"ति । स्यादेतत्, न वयमनेकत्वव्यवहारसिद्ध्यर्थमनेकत्वस्य तात्त्विकत्वं कल्पयामः, किन्तु श्रौतमेवास्य तात्त्विकत्वमिति चोदयति—"**ननु मृदादी**"ति । परिहरति(७)—

(१) भेदाभेदव्यवहारयोर्भेदाभेदोपपादकत्वं मन्यमानो विशिष्टाद्वैतवादी किं ब्रह्मज्ञानात्प्राचीनयोस्तथात्वमङ्गीकरोति पराचीनयोर्वेति विकल्पयोराद्ये नानात्वांशेनेति उत्तरितम्, अन्त्यमधुनाशङ्कते यच्चोक्तमिति । तत्त्वज्ञानात्प्रागभेदव्यवहारस्याप्रसक्तत्वान्न तदुपन्यासः ।

(२) एकत्वज्ञानोत्तरकालमेकत्वव्यवहारोऽपि नास्ति, नतरामनेकत्वव्यवहार इत्याशयेन परिहरति यदीति ।

(३) डुलि कच्छपी, क्षीराभावेऽपि सा तत्स्मृत्याऽपत्यानि पोषयति ।

(४) यथा घटध्वंसो घटविरोधिकार्योदयो नाभावास्तस्य तुच्छत्वेन कार्यत्वासम्भवादेवमविद्यानिवृत्तिरपि विरोधिविद्याभिव्यक्तिरित्याह विद्याविरोधीति ।

(५) यद्यविद्यानिवृत्तिर्विद्यायाः स्वरूपं कथं तर्हि विद्याफलमत आहाविद्यानिवृत्तिश्चेति ।

(६) न वयं ज्ञानात्पराचीनव्यवहाराय द्वैतसत्यत्वं कल्पयाम किन्तु प्राचीनसिद्ध्यर्थमेवेत्याभिप्रायेणाशङ्कते स्यादेतदिति । व्यवहार-द्वैतसत्यत्वाक्षेपक इति यावत् ।

(७) कार्यकारणयोरन्यत्वांशेऽयं दृष्टान्तः न परिणामित्वे प्रमाण, कूटस्थत्वश्रुतिविरोधादित्याशयेन परिहरतीत्यर्थः ।

**"नेत्युच्यत"** इति ( पृ० ४७० पं० १ )। मृदादिदृष्टान्तेन हि कथंचित्परिणाम उन्नेयो, न च शक्य उन्नेतुमपि, 'मृत्तिकेत्येव सत्यमि'ति कारणमात्रसत्यत्वावधारणेन कार्यस्यानृतत्वप्रतिपादनात् साक्षात्कूटस्थनित्यत्वप्रतिपादिकास्तु सन्ति सहस्रशः श्रुतय इति न परिणामधर्मता ब्रह्मणः। अथ कूटस्थस्यापि परिणामः कस्मान्न भवतीत्यत आह–**"नह्येकस्ये"**ति। (१)शङ्कते—**"स्थितिगतिवदि"**ति। यथैकबाणाश्रये गतिनिवृत्ती एवमेकस्मिन् ब्रह्मणि परिणामश्च तदभावश्च कौटस्थ्यं भविष्यत इति। निराकरोति(२)-**"न, कूटस्थस्येति विशेषणा"**दिति। कूटस्थनित्यता हि सदातनी स्वभावादप्रच्युतिः, सा कथं प्रच्युत्या न विरुध्यते। न च धर्मिणो व्यतिरिच्यते धर्मो येन तदुपजनापायेऽपि धर्मी कूटस्थः स्यात्। भेद ऐकान्तिके गवाश्ववद्धर्मधर्मिभावाभावात्। बाणादयस्तु परिणामिनः स्थित्या गत्या च परिणमन्त इति। अपि च स्वाध्यायाध्ययनविध्यापादितार्थवत्त्वस्य वेदराशेरेकेनापि वर्णेनानर्थकेन न भवितव्यं किं पुनरियता जगतो ब्रह्मयोनित्वप्रतिपादकेन वाक्यसन्दर्भेण, तत्र फलवद्ब्रह्मदर्शनसमाम्नानसन्निधावफलं जगद्योनित्वे समाम्नायमानं तदर्थं सत्तदुपायतयाऽवतिष्ठते नार्थान्तरार्थमित्याह—**"न च यथा ब्रह्मण"** इति। अतो न परिणामपरत्वमस्येत्यर्थः। 'तदनन्यत्वमि'त्यस्य सूत्रस्य प्रतिज्ञाविरोधं श्रुतिविरोधं च चोदयति(३)-**"कूटस्थब्रह्मवादिन"** इति। परिहरति–**"नाविद्यात्मके"**ति। नाम च रूपं च ते एव बीजं तस्य व्याकरणं कार्यप्रपञ्चस्तदपेक्षत्वादैश्वर्यस्य। एतदुक्तं भवति—न तात्त्विकमैश्वर्यं सर्वज्ञत्वं च ब्रह्मणः किन्त्वविद्योपाधिकमिति तदाश्रयं प्रतिज्ञासूत्रं, तत्त्वाश्रयं तु तदनन्यत्वसूत्रं, तेनाविरोधः। सुगममन्यत्॥ १४॥

## सू० भावे चोपलब्धेः॥ १५॥

कारणस्य भावः सत्ता चोपलम्भश्च तस्मिन् कार्यस्योपलब्धेर्भावाच्च। (४)एतदुक्तं भवति—विषयपदं विषयविषयिपरं, विषयिपदमपि विषयिविषयपरं, तेन कारणोपलम्भभावयोरुपादेयोपलम्भभावादिति सूत्रार्थः सम्पद्यते। (५)तथा च प्रभारूपानुविद्धबुद्धिबोध्येन वा

---

( १ ) सृष्टौ परिणामित्वं, प्रलये तद्राहित्यं च क्रमेण विरुद्धमिति दृष्टान्तेनाशङ्कत इत्यर्थः।

( २ ) कूटस्थस्य कदाचिदपि विक्रिया न युक्ता कूटस्थत्वस्यैव व्याघातादित्यभिप्रायेण निराकरोतीत्यर्थः।

( ३ ) पूर्वं 'जन्माद्यस्य यत' इतीश्वरकारणप्रतिज्ञा कृताऽधुना 'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्यत्यन्ताभेदप्रतिपादने ईशित्रीशितव्यभेदाभावात्प्रतिज्ञाविरोधं, 'तस्माद्वा एतस्मा'दित्यादिश्रुतिविरोधञ्च चोदयतीत्यर्थ।

( ४ ) ननु कारणस्य भाव एव कार्यस्योपलब्धिरेव च सूत्रपदाभ्यां प्रतीयते तत्कथमुभयत्रेतरेतरविशिष्टयोर्हेतुत्वमत आहैतदिति।

( ५ ) सविशेषणहेतौ फलमाह तथाचेति। अयं भावः—उपलब्धावुपलब्धेरिति हेतुकरणे प्रभासाक्षात्कारे साक्षात्कृतेन चाक्षुषेण व्यभिचारः स्यान्नहि घटादेः प्रभायाश्चाभेदस्तन्निवृत्त्यर्थं भावे भावादिति विशेषणम्। नहि प्रभाया भाव एव घटो भवतीति न दोषः। यदि च तद्भावानुरक्तधीबोध्यत्वं हेत्वर्थस्तदापि भाति घट इति प्रभानुरक्तधीगम्येऽनैकान्तस्तदिदमुक्तं प्रभारूपानुविद्धेति। यदि च भावे भावादिति हेतुस्तदा वह्निभावे भवति विशिष्टधूमेऽनैकान्तः स्यात् अत उपलब्धावुपलब्धेरिति। धूमस्य वह्न्युपलम्भाविनोपलब्धेर्न दोष इति।

सुखेन न व्यभिचारो, नापि वह्निभावाभावानुविधायिमात्राभावेन धूमभेदेनेति सिद्धं भवति । तत्र यथोक्तहेतोरेकदेशाभिधानेनोपक्रमते भाष्यकारः—"**इतश्च कारणादनन्यत्वं—भेदाभावः कार्यस्य, यत्कारणं—यस्मात्कारणाद्भाव एव कारणस्ये**"ति ( पृ० ४७३ पं० १ ) अस्य व्यतिरेकमुखेन गमकत्वमाह—"**न च नियमेने**"ति । काकतालीयन्याये नान्यभावेऽन्यदुपलभ्यते, न तु नियमेनेत्यर्थः । हेतुविशेषणाय व्यभिचारं चोदयति—"**ननन्वन्यभावेऽपी**"ति । एकदेशिमतेन परिहरति—"**नत्युच्यते**"इति । शङ्कैकदेशिपरिहारं दूषयित्वा परमार्थपरिहारमाह—"**अथे**"ति । तदनेन हेतुविशेषणमुक्तम्(१) । पाठान्तरेणेदमेव सूत्रं व्याचष्टे—"**न केवलं शब्दादेवे**"ति । पट इति हि प्रत्यक्षबुद्ध्या तन्तव एवातानवितानावस्था आलम्ब्यन्ते, न तु तदतिरिक्तः पटः प्रत्यक्षमुपलभ्यते । एकत्वं तु तन्तूनामेकप्रावरणलक्षणार्थक्रियावच्छेदाद्बहूनामपि । यथैकदेशकालावच्छिन्ना धवखदिरपलाशादयो बहवोऽपि वनमिति । अर्थक्रियायां च प्रत्येकमसमर्था अप्यनारभ्यैवार्थान्तरं किंचिन्मिलिताः कुर्वन्तो दृश्यन्ते, यथा ग्रावाण उखाधारणमेकम्, एवमनारभ्यैवार्थान्तरं तन्तवो मिलिताः प्रावरणमेकं करिष्यन्ति । (२)न च समवायाद्भिन्नयोरपि भेदानवसाय इति साम्प्रतम् । अन्योन्याश्रयत्वात्, भेदे हि सिद्धे समवायः समवायाच्च भेदः । (३)न च भेदे साधनान्तरमस्ति, अर्थक्रियाव्यपदेशभेदयोरभेदेऽप्युपपत्तेरित्युपपादितम् । तस्माद्यत्किंचिदेतत् । अनया च दिशा मूलकारणं ब्रह्मैव परमार्थसदवान्तरकारणानि च तन्त्वादयः सर्वेऽनिर्वाच्या एवेत्याह—"**तथा च तन्तुष्वि**"ति ( पृ० ४७४ पं० ४ ) ॥ १५ ॥

## सू० सत्त्वाच्चावरस्य ॥ १६ ॥

विभजते—"**इतश्चे**"ति । न केवलं श्रुतिः, उपपत्तिश्चात्र भवति—"**यच्च यदात्मने**"ति । (४)नहि तैलं सिकतात्मना सिकतायामस्ति, यथा घटोऽस्ति मृदि मृदात्मना । (५)प्रत्युत्पन्नो हि घटो मृदात्मनोपलभ्यते, नैवं प्रत्युत्पन्नं तैलं सिकतात्मना । तेन यथा सिकतायां तैलं न जायत एवमात्मनोऽपि जगन्न जायेत जायते च, तस्मादात्मात्मनाऽऽसीदिति गम्यते । उपपत्त्यन्तरमाह—"**यथा च कारणं ब्रह्मे**"ति । (६)यथा हि घटः सर्वदा

( १ ) हेतुविशेषणमुक्तम्—उक्तरीत्या विशिष्टस्य हेतुत्वमुक्तम् न तु हेत्वन्तरपरत्वेन व्याख्यातमित्यर्थः ।

( २ ) पटस्य तन्तुव्यतिरेकेणानुपलम्भः समवायस्य भेदतिरोधायकत्वादन्यथासिद्ध इत्याशङ्क्याह न चेति । अन्योन्याश्रयत्वात्—सम्बन्धस्य भिन्नाश्रितत्वाद्भेदसिद्धौ समवायः समवायाच्च व्यतिरेकानुपलब्धौ समाहितायां भेदसिद्धिरित्यन्योन्याश्रयत्वात् इत्यर्थः ।

( ३ ) ननु पटस्तन्तुभ्यो भिद्यते तदुपलम्भेपि कुविन्दव्यापारात्प्रागनुपलब्धत्वात् कुम्भवदित्यनुमानाद्भेदसिद्धेर्नान्योन्याश्रय इत्याशङ्क्याह न च भेद इति । अभेदवादिनस्तन्तूपलम्भे तदभिन्नपटोपलम्भाद्धेत्वसिद्धिरित्यर्थः ।

( ४ ) उपपत्तिमेव दर्शयन्नाह नहीति । यथा मृदि घटो मृदात्मनाऽस्ति तथा सिकताया तदात्मना तैलं नास्ति, तदुपादानोपादेयत्वाभावकृतमित्यर्थः ।

( ५ ) ननु मृदेव घटोत्पत्तेः प्रागस्ति कथं तदात्मना घटस्य सत्ता अत आह प्रत्युत्पन्नो हीति । उत्पन्नस्य घटस्य मृदात्मत्वदर्शनान्मृदि सत्या घटसत्त्वं युक्तमित्यर्थः ।

( ६ ) ननु कार्यस्य कालत्रये सत्यत्वं भाष्योक्तमसङ्गतम्, तथा सति कार्यत्वव्याघातादित्याशङ्क्यानिर्वाच्यरूपस्य कादाचित्कत्वेपि कार्यस्य तत्त्वमधिष्ठानं तच्च नित्यमिति युक्त्या साधयति यथा हीति । कार्यस्य

सर्वत्र घट एव न जात्वसौ क्वचित्पटो भवत्येवं सदपि सर्वत्र सर्वदा सदेव न तु क्वचित्कदाचिदसद्भवितुमर्हतीत्युपपादितमधस्तात्। तस्मात्कार्यं त्रिष्वपि कालेषु सदेव। सत्त्वं चेत् किमतो यद्येवमित्यत आह—"**एकं च पुन**"रिति (पृ० ४७५ पं० २)। सत्त्वं चैकं कार्यकारणयोः, नहि प्रतिव्यक्ति सत्त्वं भिद्यते, ततश्चाभिन्नसत्तानन्यत्वादेते अपि मिथो न भिद्येते इति। (१)न च ताभ्यामनन्यत्वात्सत्त्वस्यैव भेद इति युक्तम्। तथा सति हि सत्त्वस्य समारोपितत्वप्रसङ्गः। तत्र भेदाभेदयोरन्यतरसमारोपकल्पनायां किं तात्त्विकाभेदोपादाना भेदकल्पनास्त्वाहो तात्त्विकभेदोपादानाऽभेदकल्पनेति। वयं तु पश्यामो भेदग्रहस्य प्रतियोगिग्रहापेक्षत्वाद्भेदग्रहमन्तरेण च प्रतियोगिग्रहासम्भवादन्योन्यसंश्रयापत्तेरभेदग्रहस्य च निरपेक्षतया तदनुपपत्तेः,एकैकाश्रयत्वाच्च भेदस्यैकाभावे तदनुपपत्तेः,अभेदग्रहोपादानैव भेदकल्पनेति सर्वमवदातम्॥ १६॥

**सू० असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात्॥१७॥**

(२)व्याकृतत्वाव्याकृतत्वे च धर्मावनिर्वचनीयौ। सूत्रमेतन्निगदव्याख्यातेन भाष्येण व्याख्यातम्॥ १७॥

**सू० युक्तेः शब्दान्तराच्च॥ १८॥**

"**अतिशयवत्त्वात्प्रागवस्थाया**" इति (पृ० ४७६ पं० ८)। अतिशयो हि धर्मो नासत्यतिशयवति कार्ये भवितुमर्हतीति। ननु न कार्यस्यातिशयो नियमहेतुरपि तु कारणस्य शक्तिभेदः स चासत्यपि कार्ये कारणस्य सत्त्वात्सन्नेवेत्यत आह—"**शक्तिश्चे**"ति। नान्या कार्यकारणाभ्यां, (३)नाप्यसती कार्यात्मिनेति योजना। "**अपि च कार्यकारणयो**"रिति। यद्यपि 'भावाच्चोपलब्धेरि'त्यत्रायमर्थ उक्तस्तथापि समवायदूषणाय पुनरवतारितः। (४)अनभ्युपगम्यमाने च—समवायस्य समवायिभ्यां संबन्धे,विच्छेदप्रसङ्गोऽवयवा-

---

सत्त्व स्वरूप धर्मो वा? आद्ये तस्य कदाचिदसत्त्वं न स्यात्, धर्मत्वे च सत्त्वासत्त्वयोर्धर्मयोः कार्यस्य धर्मिणोऽन्वयात् कादाचित्कत्वव्याहतिरिति 'दृष्टनष्टस्वरूपत्वात्' इति भाष्यव्याख्यानावसरे उपपादितमिति भाव.।

(१) यदि कार्यकारणयोरेकसत्त्वादभेदादभिन्नत्वं तर्हि तस्यापि द्वाभ्यामभेदाद्भेदापत्तिरित्याशंक्याह नचेति। नहि वयं सत्त्वेन कार्यकारणयोः साक्षादभेदं ब्रूम किन्तु तत्र तयोरारोपितत्वेन तद्व्यतिरेकेणाभावम्। यदि च सत्त्वमेव कार्यकारणयोरारोपितं मन्येत तत्राह तथासतीति। तत्र दोषमाह तत्रे ति। भेद—कार्यकारणरूप, सत्त्वमभेद, अस्मादयं भिन्न इत्यत्र पञ्चम्युल्लिखितावधेर्ग्रहो धर्मिण सकाशादगृहीतभेदस्य न सम्भवति, भेदग्रहश्च नागृहीते प्रतियोगिन्युपपद्यते धर्मिणोपि स्वापेक्षया तत्प्रसङ्गाच्चतश्चान्योन्याश्रयग्रस्तभेद एवारोपितो नाभेद इत्याह वयं त्विति।

(२) व्याकृतनामरूपत्वादिति भाष्येण व्यक्ताव्यक्तस्वीकारे सांख्यमतापातमाशंक्याह व्याकृतत्वेति।

(३) अत्र कार्यरूपेण शक्ते सत्त्वमापाद्यते, तथासति हि कार्यस्यासत्त्वप्रतिक्षेपः सिध्यतीति मन्वान आह नाप्यसतीति।

(४) कार्यकारणयोरन्यत्वेऽपि समवायवशात् भिन्नौ सन्ताविति बुद्धिर्नोदेतीत्याशङ्कायां समवायदूषणमारब्धम्, तत्र च समवायः समवायिभि सम्बद्धो न वा? आद्ये सम्बन्धः किं समवाय उत स्वरूपम्? आद्ये समवायानवस्था, द्वितीये मृद्घटयोरपि स्वरूपसम्बन्धादेवोपपत्ते समवायासिद्धि। असम्बद्धपक्षे दोषमाह अनभ्युपगम्यमान इति। असम्बद्धस्य विशिष्टबुद्धिनियामकत्वाभावाद्द्रव्यगुणादीनां विशिष्टधीविरहप्रसङ्ग इत्यर्थ।

व्ययविद्रव्यगुणादीनां मिथः, नह्यसंबद्धः समवायिभ्यां समवायः समवायिनौ संबन्धयेदिति। शङ्कते—"अथ समवायः स्वयमि"ति ( पृ० ४७७ पं० ३ ) यथा हि सद्योगाद्द्रव्यगुणकर्माणि सन्ति सत्त्वं तु स्वभावत एव सदिति न सत्त्वान्तरयोगमपेक्षते, तथा समवायः समवायिभ्यां संबन्धुं न संबन्धान्तरमपेक्षते स्वयं संबन्धरूपत्वादिति, तदेतत्सिद्धान्तान्तरविरोधापादनेन निराकरोति—"संयोगोपि तर्ही"ति। न च संयोगस्य कार्यत्वात् कार्यस्य च समवायिकारणाधीनजन्मत्वाद् असमवाये च तदनुपपत्तेः समवायकल्पना संयोग इति वाच्यम्। (१)अजसंयोगे तदभावप्रसङ्गात्। अपि च संबन्ध्यधीननिरूपणः समवायो यथा संबन्धिद्वयभेदे न भिद्यते तन्नाशे च न नश्यत्यपि तु नित्य एक एवं संयोगोऽपि भवेत् ततः को दोषः। अथैतत्प्रसङ्गभिया संयोगवत्समवायोऽपि प्रतिसंबन्धिमिथुनं भिद्यते चानित्यश्चेत्यभ्युपेयते,(२)तथा सति स यथैकस्मान्निमित्तकारणादेव जायत एवं संयोगोऽपि निमित्तकारणादेव जनिष्यत इति समानम्। "तादात्म्यप्रतीतेश्चे"ति। संबन्धावगमो हि संबन्धकल्पनाबीजं न तादात्म्यावगमस्तस्य नानात्वैकाश्रयसम्बन्धाविरोधादिति।। वृत्तिविकल्पेनावयवातिरिक्तमवयविनं दूषयति(३)—"कथं च कार्यमि"ति। "समस्ते"ति। मध्यपरभागयोरर्वाग्भागव्यवहितत्वात्। अथ समस्तावयवव्यासङ्गेऽप्यपि कतिपयावयवस्थानो ग्रहीष्यत इत्यत्र आह—"नहि बहुत्वमि"ति। "अथावयवश इति" ( पृ० ४७८ पं० १ ) बहुत्वसंख्या हि स्वरूपेणैव व्यासज्य संख्येयेषु वर्तते इत्येकतमसंख्येयाग्रहणेपि न गृह्यते, समस्तव्यासङ्गित्वात्तद्रूपस्य। अवयवी तु न स्वरूपेणावयवान् व्याप्नोति, अपि त्ववयवशः, तेन यथा सूत्रमवयवैः कुसुमानि व्याप्नुवन्न समस्तकुसुमग्रहणमपेक्षते कतिपयकुसुमस्थानस्यापि तस्योपलब्धेः, एवमवयव्यपीति भावः। निराकरोति—"तदापी"ति। शङ्कते—"गोत्वादिवदि"ति। निराकरोति—"ने"ति। यद्यपि गोत्वस्य सामान्यस्य विशेषा अनिर्वाच्या न परमार्थसन्तस्तथा च नास्य प्रत्येकपरिसमाप्तिरिति, तथाप्यभ्युपेत्येदमुदितमिति मन्तव्यम्। (४)अकर्तृका यतोऽतो निरात्मिका स्यात्, कारणाभावे हि कार्यमनुत्पन्नं किं नाम भवेत्, अतो निरात्मकत्वमित्यर्थः। (५)यद्युच्येत घटशब्दस्तदवयवेषु व्यापाराविष्टतया पूर्वापरीभावमापन्नेषु घटोपजनाभिमुखेषु तादर्थ्यनिमित्तादुपचारात्प्रयुज्यते, तेषां च सिद्धत्वेन कर्तृत्वमस्तीत्यु-

---

( १ ) ननु समवाय स्वपरनिर्वाहकत्वात्सम्बन्धान्तरानपेक्षश्चेत्संयोगोपि नापेक्षेतेति वेदान्तिनां प्रतिवन्दीरवरूप, तच संयोगस्य कार्यत्वरूपविशेषात्र युक्तमित्याशङ्क्य नित्ये आकाशात्मसंयोगे तस्यासिद्धिमाह अजेति।

( २ ) अस्तु तावत्संयोगनित्यत्वाभावार्थं समवायोऽप्यनित्यस्तथापि नानवस्था समवायस्य समवायिकारणानभ्युपगमेन निमित्तकारणमात्रात्तदुत्पत्त्या समवायान्तरप्रसङ्गाभावादित्याशंक्याह तथा सतीति। तत संयोगस्य समवायिकारणमिच्छता समवायस्यापि तदेष्टव्यमित्यनवस्था तदवस्थैवेत्यर्थः।

( ३ ) एवं प्रतीत्यनुसारेण कार्यस्य कारणात्मना सत्त्वं स्वरूपेण तु मिथ्यात्वमित्यत्र प्रासङ्गिकं समवायखण्डनं कृत्वा वृत्त्यनिरूपणाच्च तस्य मिथ्यात्वमावेदयितुं वृत्तिविकल्पेनावयवातिरिक्तमवयविनं दूषयतीत्यर्थः।

( ४ ) एवं वृत्त्यनिरूपणात्कार्यस्यानिर्वाच्यत्वं प्रदर्श्यासत्कार्यवादे दोषान्तरदानपरं 'प्रागुत्पत्तेश्चे'त्यादिभाष्यं व्याचक्षाण आहाकर्तृकेति।

( ५ ) उत्पत्तिकर्तृ कार्यस्य प्रागुत्पत्तेर्नास्त्वामित्युक्ते तत्रोत्पत्तेर्न कार्यं कर्तृ किन्तु कारणमिति शङ्कते

पपद्यते घटो भवतीति प्रयोग इत्यत आह–"घटस्य चोत्पत्तिरुच्यमाने"ति। (१)उत्पादना हि सिद्धानां कपालकुलालादीनां व्यापारो नोत्पत्तिः। न चोत्पादनैवोत्पत्तिः, प्रयोज्यप्रयोजकव्यापारयोर्भेदादभेदे वा घटमुत्पादयतीतिवद्घटमुत्पद्यत इत्यपि प्रसङ्गात्। तस्मात्करोतिकार्यत्योरिव घटगोचरयोर्भृत्यस्वामिसमवेतयोरुत्पत्त्युत्पादनयोरधिष्ठानभेदोऽभ्युपेतव्यः, तत्र कपालकुलालादीनां सिद्धानामुत्पादनाधिष्ठानानां नोत्पत्त्यधिष्ठानत्वमस्तीति पारिशेष्याद् घट एव साध्य उत्पत्तेरधिष्ठानमेषितव्यः। न चासावसन्नधिष्ठानं भवितुमर्हतीति सत्त्वमस्याभ्युपेयम्। (२) एवं च घटो भवतीति घटव्यापारस्य धातूपात्तत्वात् तत्रास्य कर्तृत्वमुपपद्यते तण्डुलानामिव सतां विक्लित्तौ विक्लिद्यन्ति तण्डुला इति। शङ्कते–"अथ स्वकारणसत्तासम्बन्ध एवोत्पत्तिरि"ति (पृ० ४७९ पं० ३)। एतदुक्तं भवति–नोत्पत्तिर्नाम कश्चिद्व्यापारो येनासिद्धस्य कथमत्र कर्तृत्वमित्यनुयुज्येत, किन्तु स्वकारणसमवायः स्वसत्तासमवायो वा, स चासतोऽप्यविरुद्ध इति। सोऽप्यसतोऽनुपपन्न इत्याह–"कथमलब्धात्मकमि"ति। अपि च प्रागुत्पत्तेरसत्त्वे कार्यस्येति कार्याभावस्य भावेन मर्यादाकरणमनुपपन्नमित्याह–"अभावस्य चे"ति। स्यादेतत्, अत्यन्ताभावस्य वन्ध्यासुतस्य मा भून्मर्यादाऽनुपाख्यो हि सः, घटप्रागभावस्य तु भविष्यता घटेनोपाख्येयस्यास्ति मर्यादेत्यत आह–"यदि वन्ध्यापुत्रः कारकव्यापारादि"ति। उक्तमेतदधस्ताद्यथा न जातु घटः पटो भवत्येवमसदपि सन्न भवतीति। तस्मान्मृत्पिण्डे घटस्यासत्त्वेऽत्यन्तासत्त्वमेवेति। अत्रासत्कार्यवादी चोदयति–"नन्वेवं सती"ति। प्राक् प्रसिद्धमपि कार्यं कदाचित्कारणेन योजयितुं व्यापारोऽर्थवान्भवेदित्यत आह–"तदनन्यत्वाच्चे"ति। परिहरति–"नैष दोष" इति (पृ० ४८० पं० २)। उक्तमेतद्यथा भुजङ्गतत्त्वं न रज्जोर्भिद्यते, रज्जुरेव हि तत्, काल्पनिकस्तु भेद, एवं वस्तुतः कार्यतत्त्वं न कारणाद्भिद्यते, कारणस्वरूपमेव हि तत्,अनिर्वाच्यं तु कार्यरूपं भिन्नमिवाभिन्नमिव चावभासत(३)इति, तदिदमुक्त "वस्त्वन्यत्वमि"ति। वस्तुतः परमार्थतोऽन्यत्वं न विशेषदर्शनमात्राद्भवति, सांव्यवहारिके तु कथंचित्तत्त्वान्यत्वे भवत एवेत्यर्थः। अनयैव हि दिशैष संदर्भो योज्यः। असत्कार्यवादिनं प्रति दूषणान्तरमाह–"यस्य पुनरि"ति (पृ० ४८१ पं० ४)। कार्यस्य कारणादभेदे सविषयत्वं कारकव्यापारस्य स्यान्नान्यथेत्यर्थः। "मूलकारणं" ब्रह्म–शब्दान्तराच्चेति सूत्रावयवमवतार्य व्याचष्टे–"एवं युक्तेः कार्यस्ये"ति। अतिरोहितार्थम् ॥ १८ ॥

**सू० (४) पटवच्च ॥ १९ ॥**

---

यद्युच्येतेति। यद्यप्युत्पद्यते घट इति कार्यस्य कर्तृत्वभानम्, तथापि गौण्या वृत्त्या कारकस्य, तत्र च सिद्धेषु कपालेषु 'जायते' इति पूर्वापरकालव्यासक्तप्रयोगानुपपत्तिः कार्योत्पादनाया व्यासक्तत्वादित्यर्थ।

(१) कपालकर्तृका घटविषयोत्पादना नोत्पत्तिः, सा तु घटकर्तृकेति परिहरति उत्पादनेत्यादिना। यद्युत्पत्तिरुत्पादनैव तर्हि उत्पादनायामिवोत्पत्तावपि सकर्मकत्वात् घटस्य कर्मत्व व्यपदिश्येत न चैवमस्तीत्यर्थ। (२) धातूपात्तव्यापार कर्तेति कर्तृलक्षणयोगाच्च घट एवोत्पत्तिकर्तेत्याह एवं चेति।

(३) सामानाधिकरण्येन हि भिन्नमिवाभिन्नमिव चकास्तीत्यर्थ।

(४) कार्यमुपादानकारणाद्भिन्न तदुपलब्धावपि अनुपलभ्यमानत्वात्, ततोऽधिकपरिमाणत्वाच्च महाकादिव शश इत्यनुमानयोर्व्यभिचारार्थं पटवच्चेति सूत्रम्।

## सू० (१)यथा च प्राणादि ॥ २० ॥

इति च सूत्रे निगदव्याख्यातेन भाष्येण व्याख्याते ॥ १९–२० ॥

## सू० इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥

(२)यद्यपि शारीरात्परमात्मनो भेदमाहुः श्रुतयस्तथाप्यभेदमपि दर्शयन्ति श्रुतयो ब्रह्मयः । न च भेदाभेदावेकत्र समवेतौ, विरोधात् । (३)न च भेदस्तात्त्विक इत्युक्तम् । तस्मात्परमात्मनः सर्वज्ञान्न शारीरस्तत्त्वतो भिद्यते । स एव त्वविद्योपधानभेदाद्घटकरकाद्याकाशवद्भेदेन प्रथते । उपहितं चास्य रूपं शारीरस्तेन मा नाम जीवाः परमात्मतामात्मनोऽनुभूवन्, परमात्मा तु तानात्मनोऽभिन्नाननुभवत्यननुभवे सार्वज्ञ्यव्याघातः । तथा चायं जीवान् बध्नन्नात्मानमेव बध्नीयात् । तत्रेदमुक्तं "न हि कश्चिदपरतन्त्रो बन्धनागारमात्मनः कृत्वाऽनुप्रविशती"त्यादि ( पृ० ४८३ पं १५ ) । तस्मान्न चेतनकारणं जगदिति पूर्वः पक्षः ॥ २१ ॥

## सू० अधिकं तु भेदनिर्देशात् ॥ २२ ॥

सत्यमयं परमात्मा सर्वज्ञत्वाद्यथा जीवान् वस्तुत आत्मनोऽभिन्नान् पश्यति पश्यत्येव न भावत(४)एषां सुखदुःखादिवेदनासङ्गोऽस्ति, अविद्यावशात्त्वेषां तद्वदभिमान इति । तथा च तेषां सुखदुःखादिवेदनायामप्यहमुदासीन इति न तेषां बन्धनागारनिवेशेऽप्यस्ति क्षतिः काचिन्ममेति न हिताकरणादिदोषापत्तिरिति राद्धान्तस्तदिदमुक्तम्—"अपि च यदा तत्त्वमसी"ति ( पृ० ४८४ पं० १५ ) 'अपि चे'ति चः पूर्वोपपत्तिसाहित्यं द्योतयति, नोपपत्त्यन्तरताम् ॥ २२ ॥

स्यादेतत्, यदि ब्रह्मविवर्ता जगत्, हन्त सर्वस्यैव जीववच्चैतन्यप्रसङ्ग इत्यत आह—

## सू० अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

अतिरोहितार्थेन भाष्येण व्याख्यातम् ॥ २३ ॥

## सू० उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

ब्रह्म खल्वेकमद्वितीयतया परानपेक्षं क्रमेणोत्पद्यमानस्य जगतो विविधविचित्ररूपस्योपादानमुपेयते, तदनुपपन्नम्, नह्येकरूपात्कारणात्कार्यभेदो भवितुमर्हति तस्याकस्मिकत्वप्रसङ्गात्, कारणभेदो हि कार्यभेदहेतुः, क्षीरबीजादिभेदाद्दध्यङ्कुरादिकार्यभेददर्शनात् । (५)न

---

( १ ) उक्तप्रतिज्ञायामेव विलक्षणकार्यकारित्वरूपहेतौ व्यभिचारार्थमाह सूत्रकारः यथाच प्राणादीति ।

( २ ) ननु 'सोऽन्वेष्टव्य' इत्यादिभेदनिर्देशात् कथं जीवाभिन्ने समन्वयासिद्धिरूपपूर्वपक्षस्तत्राह यद्यपीति ।

( ३ ) यदि भेदाभेदावेकत्र विरुद्धौ तर्ह्यभेद एव भेदेन बाध्यतामत आह नचेति । उक्तमनन्यत्वाधिकरण इत्यर्थः ।

( ४ ) भावत –तत्त्वतः, तद्वदभिमान इति पश्यतीत्यत्रान्वयः । यद्यपि दर्शनक्रिया परमात्मनि नास्ति तथापि स्वप्रकाश एव पुरुषस्तत्तद्विशेषेणोपरक्तस्तं तं यथावस्थितं भासयतीति पश्यतीति निर्देशः ।

( ५ ) कारणैक्ये कार्यवैजात्यायोगरूपं दोषमुक्त्वा एकजातीयकार्याणां क्रमायोगरूपं तमाह न चाक्रमादिति ।

चाक्रमात् कारणात्कार्यक्रमो युज्यते समर्थस्य क्षेपायोगाद(१)द्वितीयतया च क्रमवत्सहकारिसमवधानानुपपत्तेः । तदिदमुक्त"मिह हि लोक"इति (पृ० ४८६ पं० १)। एकैवं मृदादि कारकं, तेषां तु सामग्र्यं साधनम्, ततो हि कार्यं भवत्येव,(२) तस्मान्नाद्वितीयं ब्रह्म जगदुपादानमिति प्राप्ते,

उच्यते-क्षीरवद्धि । इदं तावद्भवान्पृष्टो व्याचष्टां, किं तात्त्विकमस्य रूपमपेक्ष्येदमुच्यते उतानादिनामरूपबीजसहितं काल्पनिकं सार्वज्ञ्यं सर्वशक्तित्वम् ? तत्र पूर्वस्मिन् कल्पे किं नाम ततोऽद्वितीयादसहायादुपजायते, न हि तस्य शुद्धबुद्धमुक्तस्वभावस्य वस्तु सत्कार्यमस्ति, तथा च श्रुतिः "न तस्य कार्यं करणं च विद्यते" इति (पृ० ४८७ पं० १)। उत्तरस्मिंस्तु कल्पे यदि कुलालादिवदत्यन्तव्यतिरिक्तसहकारिकारणाभावादनुपादानत्वं साध्यते, ततः क्षीरादिभिर्व्यभिचारः, तेऽपि हि बाह्यातञ्चनादिकारणानपेक्षा(३) एव कालपरिवासवशेन स्वत एव परिणामान्तरमासादयन्ति, अथान्तरकारणानपेक्षत्वं हेतुः क्रियते, तदसिद्धमनिर्वाच्यनामरूपबीजसहायत्वात् ,तथा च श्रुतिः—'मायां तु प्रकृतिं विद्धि मायिनं तु महेश्वरम्, इति । (४)कार्यक्रमेण तत्परिपाकोऽपि क्रमवानुन्नेयः । (५)एकस्मादपि च विचित्रशक्तेः कारणादनेककार्योत्पादो दृश्यते, यथैकस्माद्वह्नेर्दाहपाकावेकस्माद्वा कर्मणः संयोगविभागसंस्काराः ॥ २४ ॥

(६)यदि तु चेतनत्वे सतीति विशेषणान्न क्षीरादिभिर्व्यभिचारो, दृष्टा हि कुलालादयो बाह्यमृदाद्यपेक्षाश्चेतनं च ब्रह्मेति, तत्रेदमुपतिष्ठते—

## सू० देवादिवदपि लोके ॥ २५ ॥

लोक्यतेऽनेनेति लोकः शब्द एव तस्मिन् ॥ २५ ॥

## सू० कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

## सू० श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

ननु न ब्रह्मणस्तत्त्वतः परिणामो येन कार्त्स्न्यभागविकल्पेनाक्षिप्येत, अविद्याकल्पितेन तु नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मना तत्त्वान्यत्वाभ्यामनिर्वचनीयेन परिणामादिव्यवहारास्पदत्वं ब्रह्म प्रतिपद्यते, न च कल्पितं रूपं वस्तु स्पृशति, न हि चन्द्रमसि तैमिरि-

---

(१) समर्थमपि सहकार्यपेक्षं सत् क्रमेण कुर्यादित्याशङ्कामपनयन्नाद्वितीयत्वप्रयुक्तामनुपपत्तिमाहाद्वितीयतया चेति ।

(२) अत्र कल्पतरुकारमतेन 'साधयत्येवे'त्येव पाठः, 'साधयत्येवेति साधनमित्यर्थ इति टीकनात्, किन्तु प्राचीनपुस्तकेष्वस्यैवोपलब्धेरयमेव मुद्रितः ।

(३) आध्ययनादिबाह्यकारणानपेक्षा इत्यर्थः ।

(४) ननु मायाया अप्यक्रमत्वात्कथमक्रमात्कारणात्कार्यक्रमस्तत्राह कार्यक्रमेणेति । तस्या मायायाः परिपाकस्तत्तत्कार्यसर्गं प्रति पौष्कल्यम् , तस्य क्रमोऽपि कार्यक्रमान्यथानुपपत्त्या कल्प्य इत्यर्थः ।

(५) पूर्वमविद्यासाचिव्यादसहायत्वमसिद्धमित्युक्तमधुनाङ्गीकृत्यापि तदनैकान्तिकत्वमाह एकस्मादपीति । शरे उत्पन्नं कर्म पूर्वाकाशप्रदेशविभागमुत्तरप्रदेशसंयोगं शरे च वेगाख्यसंस्कारं जनयतीत्यनैकान्तम् ।

(६) असहायस्योपादानत्वं क्षीरवदुपपाद्यासहायस्याधिष्ठातृत्वसमर्थकं सूत्रमवतारयति यदि त्विति ।

कस्य द्वित्वकल्पना चन्द्रमसो द्वित्वमावहति, तदनुपपत्त्या वा चन्द्रमसोऽनुपपत्तिः, तस्माद्वास्तवी परिणामकल्पनानुपपद्यमानापि न परमार्थसतो ब्रह्मणोऽनुपपत्तिमावहति, तस्मात्पूर्वपक्षाभावादनारभ्यमिदमधिकरणमित्यत आह—"चेतनमेकमि"ति (पृ० ४८८ पं० १२)। यद्यपि श्रुतिशतादैकान्तिकाद्वैतप्रतिपादनपरात् परिणामो वस्तुतो निषिद्धस्तथापि (१)क्षीरादिदेवतादृष्टान्तेन पुनस्तद्वास्तवत्वप्रसङ्गं पूर्वपक्षोपपत्त्या सर्वथाऽयं पक्षो न घटयितुं शक्यत इत्यपबाध्य 'श्रुतेस्तु शब्दमूलत्वात् ,आत्मनि चैवं विचित्राश्च ही'ति सूत्राभ्यां विवर्तदृढीकरणेनैकान्तिकाद्वयलक्षणः श्रुत्यर्थः परिशोध्यत इत्यर्थः । (२)तस्मादस्त्यविकृतं ब्रह्म" ( पृ० ४९० पं० ७ ) तत्त्वतः । "ननु शब्देनापी"ति चोद्यमविद्याकल्पितत्वोद्घाटनाय, न हि निरवयवत्वसावयवत्वाभ्यां विधान्तरमस्त्येकनिषेधस्येतरविधाननान्तरीयकत्वात् , तेन प्रकारान्तराभावान्निरवयवत्वसावयवत्वयोश्च प्रकारयोरनुपपत्तेर्विप्लवनाद्यर्थवदप्रमाणं शब्दः स्यादिति चोद्यार्थः । परिहारः सुगमः ॥ २६ ॥ २७ ॥

## सू० आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

अनेन स्फुटितो मायावादः । स्वप्नदृगात्मा हि मनसैव स्वरूपानुपमर्देन रथादीन्सृजति॥२८॥

## सू० स्वपक्षदोषाच्च ॥ २९ ॥

चोदयति—'ननु नैवे'ति ( पृ० ४९२ पं० १५ ) । परिहरति—"नैवञ्जातीयकनैवे' ति । (३)यद्यपि समुदायः सावयवस्तथापि प्रत्येकं सत्त्वादयो निरवयवाः, नह्यस्ति सम्भवः सत्त्वमात्रं परिणमते न रजस्तमसी इति, सर्वेषां सम्भूयपरिणामाभ्युपगमात । प्रत्येकं चानवयवानां कृत्स्नपरिणामे मूलोच्छेदप्रसङ्गः, एकदेशपरिणामे वा सावयवत्वमनिष्टं प्रसज्येत । "तथाऽणुत्वादिनापी"ति ( पृ० ४९३ पं० ५ ) । वैशेषिकाणामणुभ्यां संयुज्य द्व्यणुकमेकमारभ्यते, तैस्त्रिभिर्द्व्यणुकैस्त्र्यणुकमेकमारभ्यत इति प्रक्रिया । तत्र द्वयोरण्वोरनवयवयोः संयोगस्तावणू व्याप्नुयादव्याप्नुवन्न तत्र न वर्तेत , नह्यस्ति सम्भवः स एव तदानीं तत्र वर्तते न वर्तते चेति । तथा चोपर्यधः पार्श्वस्थाः षडपि परमाणवः समानदेशा इति प्रथिमानुपपत्तेरणुमात्रः पिण्डः प्रसज्येत । अव्याप्ने वा षडवयवः परमाणु स्यादित्यनवयवत्वव्याकोपः । अशक्यं च सावयवत्वमुपेतुम्, तथा सत्यनन्तावयवत्वेन सुमेरुराजसर्षपयोः समानपरिणामत्वप्रसङ्गः तस्मात्समानो दोषः । आपातमात्रेण साम्यमुक्तं परमार्थतस्तु भाविकं परिणामं वा कार्यकारणभावं(४) वेच्छतामेष दुर्वारो दोषो न पुनरस्माकं मायावादिनामित्याह—"परिहृतास्त्वि"ति ॥ २९ ॥

---

( १ ) सावयवस्यैव नानाकार्योपादानतेति न्यायेन समन्वयस्य विरोधसन्देहे पूर्वाधिकरणीयक्षीरदृष्टान्तेन परिणामित्वभ्रमे तन्निरासात्सङ्गतिमाह क्षीरादीति ।

( २ ) 'तस्मादविकृतं ब्रह्मेति' भाष्य तदस्तीति तत्त्वत च इति च पदाध्याहारेण व्याचष्टे तस्मादिति ।

( ३ ) अवस्तुत्वात्समुदायस्य न परिणाम, समुदायिष्वपि यदि सत्त्वमात्रस्य परिणाम न रजस्तमसोस्ततो मूलोच्छेदो न स्यान्न चैतदस्तीत्याह यद्यपि इति ।

( ४ ) आरम्भम् ।

विचित्रशक्तित्वमुक्तं ब्रह्मणस्तत्र श्रुत्युपन्यासपरं सूत्रम्--

**सू० सर्वोपेता च तद्दर्शनात् ॥ ३० ॥**

एतदाक्षेपसमाधानपरं सूत्रम्--

**सू० विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥**

(१) कुलालादिभ्यस्तावद्बाह्यकरणापेक्षेभ्यो देवादीनां बाह्यानपेक्षाणामान्तरकरणापेक्षसृष्टीनां प्रमाणेन दृष्टो यथा विशेषो नापन्होतुं शक्यः। (२)यथा तु जाग्रत्सृष्टेर्बाह्यकरणापेक्षायास्तदनपेक्षान्तरकरणमात्रसाध्या दृष्टा स्वप्ने रथादिसृष्टेरशक्यापह्नोतुमेव सर्वशक्तेः परस्या देवताया आन्तरकरणानपेक्षाया जगत्सर्जनं श्रूयमाणं न सामान्यतो दृष्टमात्रेणापह्नवमर्हतीति ॥ ३० ॥ ३१ ॥

**सू० न प्रयोजनवत्त्वात् ॥ ३२ ॥**

(३)न तावदुन्मत्तवदस्य मतिविभ्रमाज्जगत्प्रक्रिया, भ्रान्तस्य सर्वज्ञत्वानुपपत्तेः। तस्मात्प्रेक्षावताऽनेन जगत्कर्तव्यम्। प्रेक्षावतश्च प्रवृत्तिः स्वपरहिताहितप्राप्तिपरिहारप्रयोजना सती नाप्रयोजनाल्पायासापि सम्भवति, किं पुनरपरिमेयानेकविधोच्चावचप्रपञ्चजगद्बिम्बविरचना महाप्रयासा। अत एव लीलापि परास्ता। अल्पायाससाध्या हि सा, न चेयमप्यप्रयोजना, तस्या अपि सुखप्रयोजनवत्त्वात्तादर्थ्येन(४) वा प्रवृत्तौ तदभावे कृतार्थत्वानुपपत्तेः, परेषां चोपकार्याणामभावेन तदुपकारार्थाया अपि प्रवृत्तेरयोगात्। तस्मात्प्रेक्षावत्प्रवृत्तिः प्रयोजनवत्तया व्याप्ता तदभावेऽनुपपन्ना ब्रह्मोपादानतां जगतः प्रतिक्षिपतीति प्राप्तम् ॥ ३२ ॥

एवं प्राप्तेऽभिधीयते--

**सू० लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥**

भवेदेतदेवं यदि प्रेक्षावत्प्रवृत्तिः प्रयोजनवत्तया व्याप्ता भवेत्ततस्तन्निवृत्तौ निवर्तेत शिंशपात्वमिव वृक्षतानिवृत्तौ, न त्वेतदस्ति प्रेक्षावतामननुसंहितप्रयोजनानामपि यादृच्छिकीषु क्रियासु प्रवृत्तिदर्शनात्, अन्यथा 'न कुर्वीत वृथा चेष्टामि'ति धर्मसूत्रकृतां प्रतिषेधो निर्विषयः प्रसज्येत, न चोन्मत्तान्प्रत्येतत्सूत्रमर्थवत्तेषां तदर्थबोधतदनुष्ठानानुपपत्तेः। अपि चादृष्टहेतुकयौत्पत्तिकी(५) श्वासप्रश्वासलक्षणा प्रेक्षावतां क्रिया प्रयोजनानुसन्धानमन्तरेण दृष्टा। (६)न चास्या चेतनस्यापि चैतन्यमनुपयोगि सम्प्रसादेऽपि भावादिति युक्तं,प्राज्ञस्यापि

---

(१) सूत्रस्थ 'तदुक्तम्' इत्यस्य 'देवादिवदपी'ति सूत्रोक्तिपरत्वेन व्याचष्टे कुलालादिभ्य इति।

(२) 'आत्मनि चैवम्'इति सूत्रोक्तिपरत्वेनापि व्याचष्टे यथा त्विति।

(३) यद्येवं सर्वशक्ति ब्रह्म तथापि प्रयोजनाभिसन्ध्यभावादकर्तृत्वमिति पूर्वपक्षमाह न तावदिति।

(४) सुखार्थत्वेन, प्रवृत्तौ प्रवृत्तेः प्राकू सुखाभावे सति कृतार्थत्वानुपपत्तेरित्यर्थः।

(५) न दृष्टः प्रयोजनोद्देशलक्षणो हेतुरस्या इत्यदृष्टहेतुकी, औत्पत्तिकी पुरुषस्योत्पत्तिमारभ्य प्रवृत्ता। प्रयोजनमन्तरेणेत्येतदस्यैव विवरणम्।

(६) स्वापादौ प्रयोजनानभिसन्धिरूपे श्वासे साध्याभाववद्धेतोरपि चेतनकर्तृकत्वस्याभावान्न व्यभिचार इत्याशंक्याह न चास्यामिति। जाग्रदादौ चेतनस्य जानतोऽपि चैतन्यमस्यां श्वासादिप्रवृत्तावनुपयोगि सुषुप्तेऽपि तस्याभावादिति च न युक्तम्, कुतः? प्राज्ञस्य सुषुप्तस्यापि स्वरूपचैतन्याप्रच्युतेरित्यर्थः।

चैतन्याप्रच्युतेरन्यथा मृतशरीरेऽपि श्वासप्रश्वासप्रवृत्तिप्रसङ्गात्। यथा च स्वार्थपरार्थसम्पदासादितसमस्तकामानां कृतकृत्यतयाऽनाकुलमनसामकामानामेव लीलामात्रात्सत्यप्यनुनिष्पादिनि प्रयोजने नैव तदुद्देशेन प्रवृत्तिरेवं ब्रह्मणोऽपि जगत्सर्जने प्रवृत्तिर्नानुपपन्ना। (१)दृष्टं च यदल्पबलवीर्यबुद्धीनामशक्यमतिदुष्करं वा तदन्येषामनल्पबलवीर्यबुद्धीनां सुशकमीषत्करं वा, नहि वानरैर्मारुतिप्रभृतिभिर्नगैर्न बद्धो नीरनिधिरगाधो महासत्त्वानाम्, न चैष पार्थेन शिलीमुखैर्न बद्धो, न चायं न पीतः संक्षिप्य चुलुकेन हेलयैव कलशयोनिना महामुनिना, न चाद्यापि न दृश्यन्ते लीलामात्रविनिर्मितानि महाप्रासादप्रमदवनानि श्रीमन्नृगनरेन्द्राणामन्येषां मनसापि दुष्कराणि नरेश्वराणाम्। तस्मादुपपन्नं यदृच्छया वा स्वभावाद्वा(२) लीलया वा जगत्सर्जनं भगवतो महेश्वरस्येति। (३)अपि च नेयं पारमार्थिकी सृष्टिर्येनानुयुज्येत प्रयोजनमपि त्वनाद्यविद्यानिबन्धना, अविद्या च स्वभावत एव कार्योन्मुखी न प्रयोजनमपेक्षते, नहि द्विचन्द्रालातचक्रगन्धर्वनगरादिविभ्रमाः समुद्दिष्टप्रयोजना भवन्ति। (४)न च तत्कार्या विस्मयभयकम्पादयः स्वोत्पत्तौ प्रयोजनमपेक्षन्ते। (५)सा च चैतन्यच्छुरिता जगदुत्पादहेतुरिति चेतनो जगद्योनिराख्यायत इत्याह—"न चेयं परमार्थविषये"ति। (पृ० ४९६ पं० ११)। अपि च न ब्रह्म जगत्कारणमपि तत्तया विवक्षन्त्यागमा अपि तु जगति ब्रह्मात्मभावं, तथा च सृष्टेरविवक्षायां तदाश्रयो दोषो निर्विषय एवेत्याशयेनाह—"ब्रह्मात्मभावे"ति॥ ३३॥

**सू० वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति॥ ३४॥**

(६)अतिरोहितोऽत्र पूर्वः पक्ष, उत्तरस्तूच्यते—उच्चावचमध्यमसुखदुःखभेदवत्प्राणभृत्प्रपञ्चं च सुखदुःखकारणं सुधाविषादि चानेकविधं विरचयतः प्राणभृद्भिरोपात्तपापपुण्यकर्मातिशयसहायस्यात्रभवतः परमेश्वरस्य न वैषम्यनैर्घृण्ये प्रसज्येते। (७)नहि सभ्यः सभायां नियुक्तो युक्तवादिनं युक्तवाद्यसीति चायुक्तवादिनमयुक्तवाद्यसीति ब्रुवाणः सभापतिर्वा युक्तवादिनमनुगृह्णन्नयुक्तवादिनं च निगृह्णन्नरक्तो द्विष्टो वा भवत्यपि तु मध्यस्थ

---

(१) ननु यदृच्छायाससाध्यं तत्प्रयोजनाभिसन्धिपूर्वकमिति व्याप्तिरभिमता, तथाच न लीलादौ व्यभिचारस्तत्राह दृष्ट चेति। यद्यप्यस्मदाद्यपेक्षया जगदृच्छायाससाध्यं भाति, तथापि न ब्रह्मापेक्षयेति न प्रयोजनाभिसन्ध्यापात इत्यर्थः।

(२) नियतनिमित्तमनपेक्ष्य यदा कदाचित्प्रवृत्त्युदयो यदृच्छा। स्वभावतस्तु स एव यावद्वस्तुभावी यथा श्वासादाविति विशेष।

(३) यदुक्तं न तावदुन्मत्तस्येव मतिभ्रमाज्जगत्प्रक्रियेति, तत्र माभूदुन्मत्तं ब्रह्म भवति तु जीवाविद्याविषयीकृतं जगद्विवर्ताधिष्ठानन्तथाच न सृष्टौ प्रयोजनपर्यनुयोगो युक्त इत्याह अपि चेति।

(४) विभ्रमाणां प्रयोजनानपेक्षायामपि तत्कार्यस्य तदपेक्षा स्यादित्याकाशादेर्भ्रमकार्यस्य तदपेक्षामाशंक्याह न चेति।

(५) नन्वविद्याया हेतुत्वे कथं ब्रह्म कारणमत आह सा चेति। छुरिता—मिश्रिता।

(६) यो विषमसृष्टिकर्ता स सावद्यो, ब्रह्म च विषमं सृजतीत्यनुमानेन समन्वयस्य विरोधसन्देहे पूर्वं लीलया स्रष्टुत्वं यदुक्तं तदेव कर्मादिसापेक्षस्य न युक्तमनीश्वरत्वप्रसक्तेर्निरपेक्षत्वे रागादिमत्त्वापत्तेरिति जैनानां पूर्वपक्ष स्पष्ट इति भाव।

(७) उक्तार्हतानुमाने व्यभिचारमाह नहीति।

इति वीतरागद्वेष इति चाख्यायते, तद्वदीश्वरः पुण्यकर्माणमनुगृह्णन्नपुण्यकर्माणं च निगृह्णन्मध्यस्थ एव नामध्यस्थः । एवं ह्यमध्यस्थः स्याद्यद्यकल्याणकारिणमनुगृह्णीयात्कल्याणकारिणं च निगृह्णीयान्न त्वेतदस्ति । तस्मान्न वैषम्यदोषोऽत एव न नैर्घृण्यमपि संहरतः समस्तान्प्राणभृतः । स हि प्राणभृत्कर्माशयानां वृत्तिनिरोधसमयस्तमतिलङ्घयन्नयमयुक्तकारी स्यात् । न च कर्मापेक्षायामीश्वरस्यैश्वर्यव्याघातः । (१)न हि सेवादिकर्मभेदापेक्षः फलभेदप्रदः प्रभुरप्रभुर्भवति । (२)न च 'एष ह्येव साधु कर्म कारयति यमेभ्यो लोकेभ्य उन्निनीषते, एष एवासाधु कर्म कारयति तं यमधो निनीषते' इति श्रुतेरीश्वर एष द्वेषपक्षपाताभ्यां साध्वसाधुनी कर्मणी कारयित्वा स्वर्गं नरकं वा लोकं नयति, तस्माद्वैषम्यदोषप्रसङ्गान्नेश्वरः कारणमिति वाच्यम् । विरोधात्, यस्मात् 'कर्म कारयित्वेश्वरः प्राणिनः सुखदुःखिनः सृजती'ति श्रुतेरवगम्यते, तस्मान्न सृजतीति विरुद्धमभिधीयते । (३)न च वैषम्यमात्रमत्र ब्रूमो न त्वीश्वरकारणत्वं व्यासेधाम इति वक्तव्यम्, किमतो ? यद्येवं तस्मादीश्वरस्य सवासनक्लेशापरामर्शमभिवदन्तीनां भूयसीनां श्रुतीनामनुग्रहायोन्निनीषतेऽधो निनीषत इत्येतदपि तज्जातीयपूर्वकर्माभ्यासवशात्प्राणिन इत्येवं नेयम्, यथाहुः—

> जन्म जन्म यदभ्यस्तं दानमध्ययनं तपः ।
> तेनैवाभ्यासयोगेन तच्चैवाभ्यसते नरः ॥ इति ।

(४)अभ्युपेत्य च सृष्टेस्तात्त्विकत्वमिदमुक्तमनिर्वाच्या तु सृष्टिरिति न प्रस्मर्तव्यमत्रापि, तथा च मायाकारस्येवाञ्जसा साकल्यवैकल्यभेदेन विचित्रान्प्राणिनो दर्शयतो न वैषम्यदोषः सहसा संहरतो वा न नैर्घृण्यमेवमस्यापि भगवतो विविधविचित्रप्रपञ्चमनिर्वाच्यं विश्वं दर्शयतः संहरतश्च स्वभावाद्वा लीलया वा न कश्चिद्दोषः ॥ ३४ ॥

इति स्थिते शङ्कापरिहारपरं सूत्रम्—

**सू० न कर्माविभागादिति चेन्नानादित्वात् ॥ ३५ ॥**

शङ्कोत्तरे अतिरोहितार्थेन भाष्यग्रन्थेन व्याख्याते ॥ ३५ ॥

अनादित्वादिति सिद्धवदुक्तं तत्साधनार्थं सूत्रम्—

**सू० उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥**

---

(१) सापेक्षत्वेऽनीश्वरत्वमाशंक्य व्यभिचारमाह न हि सेवेति ।

(२) कर्मापेक्षत्वेन वैषम्ये परिहृतेऽपि विषमकर्मप्रेरकत्वेन वैषम्यं स्यादिति शङ्कयोत्तरयति न चैष इति ।

(३) किमत्र ईश्वरस्य विषमसर्जनेऽनीश्वरत्वापत्त्या नायं विषमसृष्टिकर्तेत्यनुमीयते वादिनोत ईश्वरो रागादिमान् विषमस्रष्टृत्वादिति वैषम्यमुद्भाव्यते ? तत्र नाद्यः, विरोधादित्युक्तम्, सूत्रागमविरोध एव 'यस्मात्कर्मे'त्यादिश्रुत्या प्रदर्शित । द्वितीयं निषेधति न चेति । यद्येवं वैषम्यमनुमितं किमतो निरवद्यत्वस्यापि श्रुतिसिद्धत्वेनातीतकालतापादनस्य'दित्यर्थ । तदेवाह तस्मादित्यादिना । ईश्वरः पर्जन्यवत्सृष्टिमात्रे कारणम् वैषम्ये तु बीजवत्तत्प्राणिकर्मवासने इति नेश्वरस्य सावद्यतेति भाव. ।

(४) अपि च वेदान्तिमते सृष्टेर्मायामयत्वात्तादृशसृष्टिकर्तृत्वेन रागादिमत्त्वानुमाने व्यभिचारापत्त्याऽभ्युपेत्य चेति ।

(१)अकृते कर्मणि पुण्ये पापे वा तत्फलं भोक्तारमभ्यागच्छेत्, तथा च विधिनिषेधशास्त्रमनर्थकं भवेत् प्रवृत्तिनिवृत्त्यभावादिति मोक्षशास्त्रस्य चोक्तमानर्थक्यम्। **न चाविद्या केवलेति** (पृ० ४९९ पं० ६) (२)लयाभिप्रायम्। (३)विक्षेपलक्षणाविद्यासंस्कारस्तु कार्यत्वात्स्वोत्पत्तौ पूर्वं विक्षेपमपेक्षते, विक्षेपश्च मिथ्याप्रत्ययो मोहापरनामा पुण्यापुण्यप्रवृत्तिहेतुभूतरागद्वेषनिदानं, स च रागादिभिः सहितः स्वकार्यैर्न शरीरं सुखदुःखभोगायतनमन्तरेण सम्भवति। न च कर्मान्तरेण शरीरम्, न च रागद्वेषावन्तरेण कर्म, न च भोगसहितं मोहमन्तरेण रागद्वेषौ, न च पूर्वशरीरमन्तरेण मोहादिरिति पूर्वपूर्वशरीरापेक्षो मोहादिरेवं पूर्वपूर्वमोहाद्यपेक्षं पूर्वपूर्वशरीरमित्यनादितैवात्र भगवती चित्तमनाकुलयति। तदेतदाह—**"रागादिक्लेशवासनाक्षिप्तकर्मापेक्षा त्वविद्या वैषम्यकरी स्यादि"ति**। रागद्वेषमोहा रागादयस्त एव हि पुरुषं संसारदुःखमनुभाव्य क्लेशयन्तीति क्लेशास्तेषां वासनाः कर्मप्रवृत्त्यनुगुणास्ताभिराक्षिप्तानि प्रवर्तितानि कर्माणि तदपेक्षा लयलक्षणाऽविद्या। स्यादेतत्, भविष्यताऽपि व्यपदेशो (४)दृष्टो यथा 'पुरोडाशकपालेन तुषानुपवपती'त्यत आह—**"न च धारयिष्यतीत्यत"**इति। तदेवमनादित्वे सिद्धे 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि'ति प्राक् सृष्टेरविभागावधारणं समुदाचरद्रूपरागादिनिषेधपरं न पुनरेतान्प्रसुप्तानप्यपाकरोतीति सर्वमवदातम्॥ ३६॥

## सू० सर्वधर्मोपपत्तेश्च ॥ ३७॥

(५)अत्र सर्वज्ञमिति दृश्यते। सर्वस्य चेतनाधिष्ठितस्यैव लोके प्रवृत्तिरिति लोकानुसारो दर्शितः। **"सर्वशक्ती"ति** (पृ० ५०० पं० ११)। सर्वस्य जगत उपादानकारणं निमित्तकारणं चेत्युपपादितम्। **"महामायमि"ति** सर्वानुपपत्तिशङ्का परास्ता। तस्माज्जगत्कारणं ब्रह्मेति सिद्धम्॥ ३७॥

इति श्रीवाचस्पतिमिश्रविरचिते भगवत्पादशारीरकभाष्यविभागे भामत्यां द्वितीयस्याध्यायस्य प्रथमः पादः॥

---

(१) अकृताभ्यागमप्रसङ्गं व्याकरोति अकृते इति। तदङ्गीकारे प्राप्तौ दोषावाह तथाचेति।

(२) भ्रान्तिरूपाविद्याया विचित्रतया वैषम्यहेतुत्वसम्भवात्कथं भाष्ये तस्या वैषम्यकरत्वनिषेध इत्याशङ्क्याह लयेति।

(३) ननु तथापि भ्रमसंस्कारस्य वैषम्यहेतुत्वं स्यात्तत्राह विक्षेपेति। तथा च भ्रमसंस्कारस्य भ्रमसापेक्षत्वात्तस्य च रागाद्युत्पादनद्वारा तत्साहित्येनैव वैषम्यहेतुत्वं स च शरीरात् तत्कर्मणः, कर्म च रागद्वेषाभ्यां तौ च मोहाख्याद्भ्रमात्स च शरीरादिति चक्रकभ्रमणमनादितां समादधातीति भाव।

(४) अवघातनिष्पन्नांस्तुषान् पुरोडाशकपालेनोपवपति विगमयतीत्यत्रावघातसमये कपालेषु पुरोडाशश्रपणाभावाद्भाविष्यच्छ्रपणमपेक्ष्य कपालानां पुरोडाशसम्बन्धकीर्तनमिति।

(५) भाष्यकृता सौत्री सर्वधर्मोपपत्तिं व्याचक्षाणेन सर्वज्ञत्वादयः कारणधर्मा ब्रह्मण्युपपद्यन्त इत्युक्तम्, तदयुक्तमिव प्रतिभाति लोके कस्यचिदपि कारणस्योक्तधर्मदर्शनाभावादत आह अत्रेति। जडप्रेरकत्वं कुलालादौ दृष्टम् ब्रह्मण्यपि नियन्तरि तेनावश्यं भाव्यन्तस्य सर्वप्रेरकत्वस्य श्रुतिसिद्धतयाऽर्थात्सर्वज्ञत्वसिद्धिरेवं सर्वशक्तित्वादावपि योज्यम्।

## सू० रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥

स्यादेतत्, इह हि पादे स्वतन्त्रा–वेदानपेक्षाः प्रधानादिसिद्धिविषयाः सांख्यादियुक्तयो निराकरिष्यन्ते, तदयुक्तमशास्त्राङ्गत्वात्, नहीदं शास्त्रमुच्छृङ्खलतर्कशास्त्रवत् प्रवृत्तमपि तु वेदान्तवाक्यानि ब्रह्मपराणीति पूर्वपक्षोत्तरपक्षाभ्यां विनिश्चेतुम्, तत्र कः प्रसङ्गः शुष्कतर्कव-त्स्वतन्त्रयुक्तिनिराकरणस्येत्यत आह–**"यद्यपीदं वेदान्तवाक्यानामि"ति** ( पृ० ५०१ पं० ७ )। नहि वेदान्तवाक्यानि निर्णेतव्यानीति निर्णीयन्ते, किन्तु मोक्षमाणानां तत्त्वज्ञानोत्पादनाय। (१)यथा च वेदान्तवाक्येभ्यो जगदुपादानं ब्रह्मावगम्यते, एवं सांख्या-द्यनुमानेभ्यः प्रधानाद्यचेतनं जगदुपादानमवगम्यते। (२)न चैतदेव चेतनोपादानमचेतनो-पादान चेति समुच्चेतुं शक्यम्, विरोधात्। न च व्यवस्थिते वस्तुनि विकल्पो युज्यते। न चागमबाधितविषयतयानुमानमेव नोदीयत इति साम्प्रतम्। सर्वज्ञप्रणीततया सांख्याद्याग-मस्य वेदागमतुल्यत्वात् तद्भाषितस्यानुमानस्य प्रतिकृतिसिंहतुल्यतयाऽबाध्यत्वात्। तस्मा-त्तद्विरोधान्न ब्रह्मणि समन्वयो वेदान्तानां सिद्ध्यतीति न ततस्तत्त्वज्ञानं सेद्धुमर्हति, न च तत्त्वज्ञानादृते मोक्ष इति स्वतन्त्राणामप्यनुमानानामाभासीकरणमिह शास्त्रे संगतमेवेति। यद्येवं ततः परकीयानुमाननिरास एव कस्मात्प्रथमं न कृत इत्यत आह—**"वेदान्तार्थ-निर्णयस्य चे"ति**। ननु वीतरागकथायां तत्त्वनिर्णयमात्रमुपयुज्यते न पुनः परपक्षाधि-क्षेपः स हि सरागतामावहतीति चोदयति–**"ननु मुमुक्षुणा"मिति**। परिहरति–**"बाढमेवं तथापी"ति**। तत्त्वनिर्णयावसाना वीतरागकथा, न च परपक्षदूषणमन्तरेण तत्त्वनिर्णयः शक्यः कर्तुमिति तत्त्वनिर्णयाय वीतरागेणापि परपक्षो दूष्यते न तु परपक्षत-येति न वीतरागकथात्वव्याहृतिरित्यर्थः। पुनरुक्ततां परिचोद्य समाधत्ते—**"नन्वीक्षते"-रिति** ( पृ० ५०२ पं० ४ )। **"तत्र सांख्या" इति**। (३)यानि हि येन रूपेणास्थौ-ल्यादा च सौक्ष्म्यात्समन्वीयन्ते तानि तत्कारणानि, यथा घटादयो रुचकादयश्चास्थौल्यादा च सौक्ष्म्यात्मृत्सुवर्णान्विताःस्तत्कारणास्तथा चेदं बाह्यमाध्यात्मिकं च भावजातं सुखदुःखमोहा-त्मनान्वितमुपलभ्यते, तस्मात्तदपि सुखदुःखमोहात्मसामान्यकारणकं भवितुमर्हति। (४)तत्र जगत्कारणस्य येय सुखात्मता तत्सत्त्वं, या च दुःखात्मता तद्रजो, या च मोहात्मता तत्तम इति त्रैगुण्यकारणसिद्धिस्तथा हि प्रत्येकं भावास्त्रैगुण्यवन्तोऽनुभूयन्ते। यथा मैत्रदारेषु पद्मा-वत्यां मैत्रस्य सुखं, तत्कस्य हेतोः? तं प्रति सत्त्वगुणसमुद्भवात्, तत्सपत्नीनां च दुःखं, तत्कस्य हेतोः? ताः प्रत्यस्या रजोगुणसमुद्भवात्, चैत्रस्य तु स्त्रैणस्य तामविन्दतो मोहो विषादः, तत्क-स्य हेतोः? तं प्रत्यस्यास्तमोगुणसमुद्भवात्, पद्मावत्या च सर्वे भावा व्याख्याताः। तस्मात्सर्वं

---

( १ ) वेदान्तैरेव ज्ञानजननात्किं परपक्षाक्षेपेण तत्राह यथाचेति।

( २ ) ननु प्रमाणावगतान्युपादानानि जगति समुच्चीयन्ताम् तन्तव इव पटेऽत आह न चैतदेवेति।

( ३ ) चेतनप्रकृतिकं जगदिति प्रतिपादकस्य वेदस्य प्रतिरोधकमनुमानमाह यानि हीति। संयोगादौ व्यभिचारवारणार्थमास्थौल्यादित्युक्तम्, संयोगादयो हि न स्थूलपिण्डादारभ्य कणपर्यन्तमनुयन्ति। कुम्भो-पादानत्वं सत्त्वादिगुणाश्रितं मृत्त्वात्सत्त्वादिति च वक्रीत्यानुमानमत्र बोध्यम्।

( ४ ) ननु सुखाद्यारब्धत्वेऽपि जगत कथं सत्त्वाद्यात्मकप्रधानारब्धत्वमत आह तत्रेति। येयं जगद्धेतोः कार्यवशोन्नीता सुखाद्यात्मता सा सत्त्वमित्यर्थ। विधेयापेक्षया नपुंसकत्वम्।

सुखदुःखमोहान्वितं जगत्तत्कारणं गम्यते । (१)तच्च त्रिगुणं प्रधानं प्रधीयते क्रियतेऽनेन जगदिति प्रधीयते निधीयतेऽस्मिन्प्रलयसमये जगदिति वा प्रधानं, तच्च मृत्सुवर्णवदचेतन चेतनस्य पुरुषस्य भोगापवर्गलक्षणमर्थं साधयितुं स्वभावत एव प्रवर्तते, (२)न तु केनचित्प्रवर्त्यते । तथा ह्याहुः—'पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणमि'ति । परिमाणादिभिरित्यादिग्रहणेन 'शक्तितः प्रवृत्तेः कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य' ( सां० का० १५ ) इत्यव्यक्तासिद्धिहेतवो गृह्यन्ते । एतांश्चोपरिष्टाद्व्याख्याय निराकरिष्यत इति । तदेतत्प्रधानानुमानं दूषयति—"तत्र वदाम" इति ( पृ० ५०३ पं० ४ ) । यदि तावदचेतनं प्रधानमनधिष्ठितं प्रवर्तते स्वभावत एवेति साध्यते, तदयुक्तम् समन्वयादेर्हेतोश्चेतनाधिष्ठित त्वविरुद्धचेतनाधिष्ठितत्वेन मृत्सुवर्णादौ दृष्टान्तधर्मिणि व्याप्तेरुपलब्धेर्विरुद्धत्वात्नहि मृत्सुवर्ण दार्वादयः कुलालहेमकाररथकारादिभिरनधिष्ठिताः कुम्भरुचकरथाद्युपाददते, तस्मात्कृतकत्वमिव नित्यत्वसाधनाय प्रयुक्तं साध्यविरुद्धेन व्याप्तं विरुद्धम्(३) । एवं समन्वयादि चेतनानधिष्ठितत्वे साध्य इति रचनानुपपत्तेरिति दर्शितम् । (४)यद्युच्येत—दृष्टान्तधर्मिण्यचेतन तावदुपादानं दृष्टं तत्र यद्यपि तच्चेतनप्रयुक्तमपि दृश्यते तथापि तत्प्रयुक्तत्वं हेतोरप्रयोजकं बहिरङ्गत्वादन्तरङ्गं त्वचैतन्यमात्रमुपादानानुगतं हेतोः प्रयोजकम् । यथाहुः—

'व्याप्तेश्च दृश्यमानायाः कश्चिद्धर्मः प्रयोजकः'-इति । तत्राह-"न च मृदादी"ति ( पृ० ५०४ पं० ७ ) । (५)स्वभावप्रतिबद्धं हि व्याप्य व्यापकमवगमयति । स च स्वभावप्रतिबन्धः शङ्कितसमारोपितोपाधिनिरासे सति निश्चीयते । तन्निश्चयश्चान्वयव्यतिरेकयोरायत्तः । तौ चान्वयव्यतिरेकौ न तथोपादानाचैतन्ये यथा चेतनप्रयुक्तत्वेऽपि परिस्फुटौ तदलमत्रान्तरङ्गत्वेनेति भावः । एवमपि चेतनप्रयुक्तत्व नाभ्युपेयेत यदि प्रमाणान्तरविरोधो भवेत् प्रत्युत श्रुतिरनुगुणतरात्रेत्याह-"न चैवं सती"ति। चकारेण सुखदुःखादिसमन्वयलक्षणस्य हेतोरासिद्धत्व समुच्चिनोतीत्याह—"अन्वयाद्यनुपपत्तेश्चे"ति । आन्तराः खल्वमी सुखदुःखमोहविषादा बाह्येभ्यश्चन्दनादिभ्योऽतिविच्छिन्नप्रत्ययप्रवेदनीयेभ्यो व्यतिरिक्ता अध्यक्ष-

---

( १ ) ननु चेतनोपकारकत्वेन तम्प्रति गुणीभूतगुणत्रयात्मकस्य कथ प्रधानत्वमत आह तच्चेति ।

( २ ) चेतन प्रति गुणीभूतस्यापि गुणत्रयस्य सिद्धान्तसिद्धमायाया वैलक्षण्यमाह न तु इति । करणानामिन्द्रियाणां प्रवृत्तौ यथा भोगापवर्गरूप पुरुषार्थ प्रवर्तक न तु तच्चेतनेन प्रेर्यते तथा गुणत्रयात्मक प्रधानमपीत्यर्थः ।

( ३ ) गुणत्रयं चेतनानधिष्ठितमेव जगत उपादान समन्वयादिति साङ्ख्यानुमानीयहेतोर्नित्यत्वाभावव्याप्तकृतकत्वस्येव मृत्सुवर्णादौ कुलालादिचेतनाधिष्ठितत्वव्याप्ताचेतनसमन्वयोपलब्धेर्विरुद्धो हेतुरिति भाव ।

( ४ ) मृदन्वितकुम्भवज्जगच्चेतनाधिष्ठितप्रकृतिक सत्त्वाद्यन्वितत्वादिति वेदान्त्यनुमाने उपाधिमाशङ्कते यद्युच्येत इति । यत्रैकस्मिन्साध्ये साधनद्वयसन्निपाते एकतरसाधनप्रयुक्ता व्याप्तिरितरत्रारोप्यते इति सोपाधिकत्वं, यथा निषिद्धत्वप्रयुक्ताव्याप्तिरधर्मत्वस्य हिंसात्वे समारोप्यते, एवमेकस्मिन्साधने समन्वयादौ प्रकृतिगताचेतनत्वचेतनाधिष्ठितत्वरूपसाध्यद्वयवत्यन्तरङ्गा चेतनत्वप्रयुक्ता हेतुसाध्ययोर्व्याप्तिर्बहिरङ्गचेतनाधिष्ठितत्वे समारोप्यत इति भवति सोपाधिकत्वमित्यर्थ ।

( ५ ) नान्तरङ्गत्वबहिरङ्गत्वकृते व्यापकत्वे किन्त्वव्यभिचारकृतेऽन्तरङ्गस्यापि महानसादिस्वरूपस्य व्यभिचाराद्धूमवत्त्वं प्रत्यव्यापकत्वाद्बहिरङ्गस्यापि वह्निसंयोगस्याव्यभिचारेण व्यापकत्वादित्याशयेन परिहरति स्वभावेति । स्वभावप्रतिबद्धमनौपाधिकत्वेन सम्बद्धम् ।

मीक्ष्यन्ते । यदि पुनरेत एव सुखदुःखादिस्वभावा भवेयुस्ततः स्वरूपत्वाद्धेमन्तेऽपि चन्दनः सुखः स्यात् । न हि चन्दनः कदाचिदचन्दनस्तथा निदाघेष्वपि कुङ्कुमपङ्कः सुखो भवेत्, नह्यसौकदा चिदकुङ्कुमपङ्क इति । एवं कण्टकः (१)क्रमेलकस्य सुख इति मनुष्यादीनामपि प्राणभृतां सुखः स्यात् । नह्यसौ कांश्चित्प्रत्येव कण्टक इति । तस्मादसुखादिस्वभावा अपि चन्दनकुङ्कुमादयो जातिकालावस्थाद्यपेक्षया सुखदुःखादिहेतवो न तु स्वयं सुखादिस्वभावा इति रमणीयम् । तस्मात्सुखादिरूपसमन्वयो भावानामसिद्ध इति नानेन तद्रूपं कारणमव्यक्तमुन्नीयत इति । तदिदमुक्तं (२)**शब्दाद्याविशेषेऽपि च भावनाविशेषादि"**ति (पृ० ५०५ पं० २ ) भावना वासनासंस्कारस्तद्विशेषात्क्रमजन्मसंवर्तकं हि कर्म करभोचितामेव भावनामभिव्यनक्ति, यथास्मै कण्टका एव रोचन्ते । एवमन्यत्रापि द्रष्टव्यम् । परिमाणादिति सांख्यीयं हेतुमुपन्यस्यति—**"तथा परिमितानां भेदानामि"**ति । संसर्गपूर्वकत्वे हि संसर्गस्यैकस्मिन्नद्वयेऽसम्भवान्नानात्वैकार्थसमवेतस्य नानाकारणानि संसृष्टानि कल्पनीयानि, तानि च सत्त्वरजस्तमांस्येवेति भावः । तदेतत्परिमितत्वं सांख्यीयराद्धान्तालोचनेनानैकान्तिकमिति दूषयति—**"सत्त्वरजस्तमसा"**मिति । यदि तावत्परिमितत्वमियत्ता, सा नभसोऽपि नास्तीत्यव्यापको हेतुः परिमाणादिति । (३)अथ न योजनादिमितत्वं परिमाणमियत्ता नभसो ब्रूमः, किन्त्वव्यापितामव्यापि, च नभस्तन्मात्रादेर्नहि कार्यं कारणव्यापि, किन्तु कारणं कार्यव्यापीति परिमितं नभस्तन्मात्राद्यव्यापित्वात् । (४)हन्त सत्त्वरजस्तमांस्यपि न परस्परं व्याप्नुवन्ति, न च तत्त्वान्तरपूर्वकत्वमेतेषामिति व्यभिचारः । न हि यथा तैः कार्यजातमाविष्टमेवं तानि परस्परं विशन्ति, मिथः कार्यकारणभावाभावात् । (५)परस्परसंसर्गस्त्वावेशश्चितिशक्तौ नास्ति, न हि चितिशक्तिः कूटस्थनित्या तैः संसृज्यते, ततश्च तदव्यापका गुणा इति परिमिताः । एवं चितिशक्तिरपि गुणैरसंसृष्टेति सापि परिमितेत्यनैकान्तिकत्वं परिमितत्वस्य हेतोरिति । तथा कार्यकारणविभागोऽपि समन्वयवद्विरुद्ध इत्याह—**"कार्यकारणभावस्त्वि"**ति ॥ १ ॥

## सू० प्रवृत्तेश्च ॥ २ ॥

न केवलं रचनाभेदा न चेतनाधिष्ठानमन्तरेण भवन्त्यपि तु साम्यावस्थायाः प्रच्युतिर्वैषम्यं, तथा च यदुद्भूतं बलीयस्तदङ्ग्यभिभूतं च तदनुगुणतया स्थितमङ्गमेवं हि गुणप्रधानभावे सत्यस्य महदादौ कार्ये या प्रवृत्तिः सापि चेतनाधिष्ठानमेव गमयति, नहि चेतनाधिष्ठानमन्तरेण मृत्पिण्डे प्रधानेऽङ्गभावेन चक्रदण्डसलिलसूत्रादयोऽवतिष्ठन्ते, तस्मात्प्रवृत्तेरपि चेतनाधि-

---

(१) उष्ट्रस्य ।

(२) किञ्च यदि घटे मृद्वत् सुखादिकं शब्दादावन्वितं स्यात्तर्हि सर्वैरविशेषेण सुखादिकमुपलभ्येत घटे मृद्वत्र तथोपलब्धिरस्तीति योग्यानुपलब्ध्या हेत्वभाव निश्चय इत्याह शब्दादीति । विषयस्यैकत्वेऽपि पुरुषवासनावैचित्र्यात कस्यचित्सुखबुद्धिं कस्यचिन्मोहबुद्धिर्दृश्यतेऽतो विषयाः सुखाद्यात्मका न भवन्तीत्यर्थः ।

(३) सांख्यः शङ्कते अथेति । (४) परिहरति हन्तेति ।

(५) एवं योजनादिमितत्वरूपे अव्यापितारूपे च परिमितत्वे दोष प्रदर्श्य स्वासंसृष्टवस्तुमत्त्वरूपे तत्र दोषमाह परस्परेति । सत्त्वादीनां चितिशक्त्या आत्मनो परस्परं च संसर्गो नास्तीत्यर्थः ।

ष्ठनासिद्धिरिति शङ्कितः प्रवृत्तेश्चेत्ययमपि हेतुः सांख्यीयो विरुद्ध एवेत्युक्तं वक्रोक्त्या(१)। अत्र सांख्यश्चोदयति—"**ननु चेतनस्यापि प्रवृत्तिरि**"ति ( पृ० ५०६ पं० ६ )। अयमभिप्रायः–त्वया किलौपनिषदेनास्मद्धेतून् दूषयित्वा केवलस्य चेतनस्यैवान्यनिरपेक्षस्य जगदुपादानत्वं निमित्तत्वं च समर्थनीयम्। तदयुक्तम्—केवलस्य चेतनस्य प्रवृत्तेर्दृष्टान्तधर्मिण्यनुपलब्धेरिति। औपनिषदस्तु चेतनहेतुकां तावदेष सांख्यः प्रवृत्तिमभ्युपगच्छतु पश्चात्स्वपक्षमत एव समाधास्यामीत्यभिसन्धिमानाह—"**सत्यमेतत्**"। न केवलस्य चेतनस्य प्रवृत्तिर्दृष्टेति। सांख्य आह(२)—"**न त्वचेतनसंयुक्तस्ये**"ति। तुशब्द औपनिषदपक्षं व्यावर्तयति। अचेतनाश्रयैव सर्वा प्रवृत्तिर्दृश्यते न तु चेतनाश्रया काचिदपि। तस्मान्न चेतनस्य जगत्सर्जने प्रवृत्तिरित्यर्थः। अत्रौपनिषदो गूढाभिसन्धिः प्रश्नपूर्वकं विमृशति—"**किं पुनरत्रे**"ति। अत्रान्तरे सांख्यो ब्रूते—"**ननु यस्मिन्नि**"ति। न तावच्चेतनः प्रवृत्त्याश्रयतया तत्प्रयोजकतया वा प्रत्यक्षमीक्ष्यते, केवलं प्रवृत्तिस्तदाश्रयश्चाचेतनो देहरथादिः प्रत्यक्षेण प्रतीयते, तत्राचेतनस्य प्रवृत्तिस्तन्निमित्तैव न तु चेतननिमित्ता। सद्भावमात्रं तु तत्र चेतनस्य गम्यते रथादिवैलक्षण्याज्जीवद्देहस्य। न च सद्भावमात्रेण कारणत्वसिद्धिः। मा भूदाकाश उत्पत्तिमतां घटादीनां निमित्तकारणमस्ति हि सर्वत्रेति, तदनेन देहातिरिक्ते सत्यपि चेतने तस्य न प्रवृत्तिं प्रति निमित्तभावोस्तीत्युक्तम्। (३)यतश्चास्य न प्रवृत्तिहेतुभावोऽस्ति, अत एव प्रत्यक्षे देहे सति प्रवृत्तिदर्शनादसति चादर्शनाद्देहस्यैव चैतन्यं लौकायतिकाः प्रतिपन्नास्तथा च न चिदात्मनिमित्ता प्रवृत्तिरिति सिद्धम्। तस्मान्न रचनायाः प्रवृत्तेर्वा चिदात्मकारणत्वसिद्धिर्जगत इति औपनिषदः परिहरति—"**तदभिधीयते न ब्रूम" इति** ( पृ० ५०७ पं० ४ )। न तावत्प्रत्यक्षानुमानागमासिद्धः शारीरो वा परमात्मा वाऽस्माभिरिदानीं साधनीयः केवलमस्य प्रवृत्तिं प्रति कारणत्वं वक्तव्यम्। तत्र मृतशरीरे वा रथादौ वाऽनधिष्ठिते चेतनेन प्रवृत्तेरदर्शनात् तद्विपर्यये च प्रवृत्तिदर्शनादन्वयव्यतिरेकाभ्यां चेतनहेतुकत्वं प्रवृत्तेर्निश्चीयते, न तु चेतनसद्भावमात्रेण, येनातिप्रसङ्गो(४) भवेत्। (५)भूतचैतनिकानामपि चेतनाधिष्ठानादचेतनानां प्रवृत्तिरित्यत्राविवाद इत्याह–"**लौकायतिकानामपी**"ति। (६)स्यादेतत् देहः स्वयं चेतनः करचरणादिमान् स्वव्यापारेण प्रव-

(१) चेतनानधिष्ठितप्रधानसाधकत्वेन परोक्तस्य प्रवृत्तेरिति हेतोरेव चेतनाधिष्ठिताचेतनसिद्धौ हेतुत्वेनाभिधानात्साध्यविरुद्धोक्तिर्वक्रोक्तिः।

(२) इत्थं केवलस्य चेतनस्य प्रवृत्त्यभावमभ्युपगम्याचेतनस्य प्रवृत्तिश्चेतनाधीनेति समर्थिते सांख्य आहेत्यर्थः।

(३) न चेतनस्य प्रवृत्त्याश्रयत्वमित्यत्र लौकायतिकभ्रमोऽपि लिङ्गमित्याह यतश्चेति। प्रवृत्तेर्वा हेतोरिति शेषः।

(४) अतिप्रसङ्ग इति। आकाशस्य प्रवृत्त्यन्वयमात्रम् चैतन्यस्य तु व्यतिरेकोऽप्यस्तीति वैषम्यमत सद्भावमात्रेणाकाशेऽपि प्रवृत्तिहेतुत्वापत्तिरूपोऽतिप्रसङ्ग इत्यर्थः।

(५) लौकायतिकोऽपि चेतनाधीनामचेतनप्रवृत्तिं मन्यते सांख्यस्तु ततोऽप्यविवेकीत्याह भूतेति।

(६) रथादिवन्मूलकारणस्याप्यचेतनस्य चेतनाधीनप्रवृत्तिकत्वमिति वेदान्तिमते दृष्टान्तासिद्धिमाशङ्कते कश्चित्स्यादेतदित्यादिना। रथादिप्रवर्तको देह एव स तु चेतन इत्यविवेकिनां प्रसिद्धिरनूदिता सांख्यश्चेतन सोऽसङ्गत्वादप्रवर्तक इत्यर्थः।

-र्तयतीति युक्तं, न तु तदतिरिक्तः कूटस्थनित्यश्चेतनो व्यापाररहितो ज्ञानैकस्वभावः प्रवृत्त्य-भावात्प्रवर्तको युक्त इति चोदयति—"**ननु तवे**"ति। परिहरति—"**नायस्कान्तव-द्रूपादिवच्चे**"ति। "**यथा च वा रूपादय**" इति। सांख्यानां हि स्वदेशस्था रू-पादय इन्द्रियं विकुर्वते, तेन तदिन्द्रियमर्थं प्राप्तमर्थाकारेण(१) परिणमत इति स्थितिः। सम्प्रति चोदकः स्वाभिप्रायमाविष्करोति—"**एकत्वादि**"ति। येषामचेतनं चेतनं चास्ति तेषामेतद्युज्यते 'वक्तुम्–चेतनाधिष्ठितमचेतन प्रवर्तत' इति। यथा योगानामीश्वरवादिनाम्। येषां तु चेतनातिरिक्तं नास्त्यद्वैतवादिनां, तेषां प्रवर्त्याभावे कं प्रति प्रवर्तकत्वं चेतनस्येत्यर्थः। परिहरति—"**नाविद्ये**"ति (पृ० ५०८ पं० १)। कारणभूतया लयलक्षणयाऽविद्यया प्राक्सर्गोपाचितेन च विक्षेपसंस्कारेण यत्प्रत्युपस्थापितं नाम रूपं तदेव माया तदावेशेनास्य चोद्यस्यासकृत्प्रत्युक्तत्वात्। एतदुक्तं भवति—नेयं सृष्टिर्वस्तुसती येनाद्वैतिनो वस्तुसतो द्वि-तीयस्याभावादनुयुज्येत। काल्पनिक्यां तु सृष्टावस्ति काल्पनिकं द्वितीयं सहायं मायाम-यम्। यथाहुः—

सहायास्तादृशा एव यादृशी भवितव्यता।

न चैवं ब्रह्मोपादानत्वव्याघातो ब्रह्मण एव मायावेशेनोपादानत्वात्तदधिष्ठानत्वाज्जगद्वि-भ्रमस्य रजतविभ्रमस्येव शुक्तिकाधिष्ठानस्य शुक्तिकोपादानत्वमिति निरवद्यम्॥ २॥

## सू० पयोम्बुवच्चेत्तत्रापि॥ ३॥

यथा पयोम्बुनोश्चेतनानधिष्ठितयोः स्वत एव प्रवृत्तिरेवं प्रधानस्यापीति शङ्कार्थः। तत्रापि चेतनाधिष्ठितत्वं साध्यं, न च साध्येनैव व्यभिचारस्तथासत्यनुमानमात्रोच्छेदप्रसङ्गात्स-र्वत्रास्य सुलभत्वात्। न चासाध्यम् अत्रापि चेतनाधिष्ठानस्यागमसिद्धत्वात्। न च सपक्षेण व्यभिचार इति शङ्कानिराकरणस्यार्थः। (२)साध्यपक्षेत्युपलक्षणम् सपक्षनिक्षिप्तत्वादित्यपि द्रष्टव्यम्। ननूपसंहारदर्शनादित्यत्रानपेक्षस्य प्रवृत्तिर्दर्शिता, इह तु सर्वस्य चेतनापेक्षाप्रवृत्तिः प्रतिपाद्यत इति कुतो न विरोध इत्यत आह—"**उपसंहारदर्शनादि**"ति (पृ०५०८पं०१६)। स्थूलदर्शिलोकाभिप्रायानुरोधेन तदुक्तं न तु परमार्थत इत्यर्थः॥ ३॥

## सू० व्यतिरेकानवस्थितेश्चानपेक्षत्वात्॥ ४॥

(३)यद्यपि सांख्यानामपि विचित्रकर्मवासनावासितं प्रधान साम्यावस्थायामपि तथापि न कर्मवासनाः सर्गस्येशते, किन्तु प्रधानमेव स्वकार्ये प्रवर्तमानमधर्मप्रतिबद्धं सन्न सुखमयीं सृष्टिं कर्तुमुत्सहत इति धर्मेणाधर्मप्रतिबन्धोऽपनीयते। एवमधर्मेण धर्मप्रतिबन्धोऽपनीयते दुःखमय्यां सृष्टौ। स्वयमेव च प्रधानमनपेक्ष्य सृष्टौ प्रवर्तते। (४)यथाहु'र्निमित्तमप्रयोजकं प्रकृतीनां वर-

---

(१) अर्थविषयज्ञानाकारेण।

(२) यदि पयोम्बुनो सपक्षत्वमपि कथन्तर्हि साध्यपक्षनिक्षिप्तत्वादिति भाष्यमत आह साध्यपक्षेत्यु-पलक्षणमिति।

(३) प्रधानस्य सहकार्यभावासिद्धेः सूत्रमव्यायोगपाशक्याह यद्यपीति। सर्गस्य निर्माणे कर्मवासना न प्रभवतीति चेत्तर्हि तासामुपयोगस्तत्राह प्रधानमेवेति।

(४) निमित्तं धर्मादि, प्रकृतीनां मूलप्रकृतेर्महदादिप्रकृतिविकृतानां चाप्रयोजक स्वकार्ये सर्गे, किन्तु व-

णभेदस्तु ततः क्षेत्रिकवदि'ति(पा.४सू.३)। (१)ततश्च प्रतिबन्धकापनयसाधने धर्माधर्मवासने अपि सन्निहिते इत्यागन्तोरपेक्षणीयस्याभावात्सदैव साम्येन परिणमेत वैषम्येण वा, न त्वय कादाचित्कः परिणामभेद उपपद्यते। ईश्वरस्य तु महामायस्य चेतनस्य लीलया वा यदृच्छया (२)वा स्वभाववैचित्र्याद्वा कर्मपरिपाकापेक्षस्य प्रवृत्तिनिवृत्ती उपपद्येते एवेति ॥ ४ ॥

## सू० अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

धेनूपयुक्तं हि तृणपल्लवादि यथा स्वभावत एव चेतनानपेक्षं क्षीरभावेन परिणमते न तु तत्र धेनुचैतन्यमपेक्ष्येत, उपयोगमात्रे तदपेक्षत्वात्। एवं प्रधानमपि स्वभावत एव परिणंस्यते कृतमत्र चेतनेनेति शङ्कार्थः। धेनूपयुक्तस्य तृणादेः क्षीरभावे किं निमित्तान्तरमात्रं निषिध्यते, उत चेतनं, न तावन्निमित्तान्तरम्। धेनुदेहस्थस्यौदर्यस्य वह्न्यादिभेदस्य निमित्तान्तरस्य सम्भवाद्बुद्धिपूर्वकारी तु तत्रापि ईश्वर एव सर्वज्ञः सम्भवतीति शङ्कानिराकरणस्यार्थः। तदिदमुक्तं "किंचिद्दैवसम्पाद्य"मिति ( पृ० ५१० पं० १ ) ॥ ५ ॥

## सू० अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥

पुरुषार्थापेक्षाऽभावप्रसङ्गात्। तदिदमुक्तम्--"**एवं प्रयोजनमपि किंचिन्नापेक्षिष्यत**"**इति**। अथ वा पुरुषार्थाभावादिति योज्यम्। तदिदमुक्तं "**तथापि प्रधानप्रवृत्तेः प्रयोजनं विवेक्तव्य**"मिति। (३)न केवलं तात्त्विको भोगोऽनाधेयातिशयस्य कूटस्थनित्यस्य पुरुषस्य न सम्भवति, अनिर्मोक्षप्रसङ्गश्च--येन हि प्रयोजनेन प्रधानं प्रवर्तितं तदनेन कर्तव्यं, भोगेन चैतत्प्रवर्तितमिति तमेव कुर्यान्न मोक्षं तेनाप्रवर्तितत्वादित्यर्थः। "**अपवर्गश्चेत्प्रागपी**"ति। चितेः सदा विशुद्धत्वान्नैतस्यां जातु कर्मानुभववासनाः सन्ति, प्रधानं तु तासामनादीनामाधारस्तथा च प्रधानप्रवृत्तेः प्राक् चितिर्मुक्तैवेति नापवर्गार्थमपि तत्प्रवृत्तिरिति। **शब्दाद्यनुपलब्धिप्रसङ्गश्च**। तदर्थमप्रवृत्तत्वात्प्रधानस्य, "**उभयार्थताभ्युपगमेऽपी**"ति। (४)न तावदपवर्गः साध्यस्तस्य प्रधानाप्रवृत्तिमात्रेण सिद्धत्वात् भोगार्थं तु प्रवर्तेत, भोगस्य च सकृच्छब्दाद्युपलब्धिमात्रादेव समाप्तत्वान्न तदर्थं पुनः प्रधानं प्रवर्तेतेत्ययत्नसाध्यो मोक्षः स्यात्। निःशेषशब्दाद्युपभोगस्य चानन्त्येन समाप्तेरनुपपत्तेरनिर्मोक्षप्रसङ्गः। कृतभोगमपि प्रधानमासत्त्वपुरुषान्यताख्यातेः क्रियासमभिहारेण भोजयतीति

---

णस्य प्रतिबन्धकस्य भेदो भङ्गस्ततो निमित्ताद्भवति क्षेत्रिकवत्--यथा क्षेत्रकारी केदारादपां पूर्णात्केदारान्तरं समं निम्नं वा पिप्लावयिषुरपो न पाणिनाऽपकर्षति किन्तु वरणन्तासां भिनत्ति भिन्ने तस्मिन्स्वयमेवापः केदारान्तरं प्लावयन्ति तद्वदिति पातञ्जलसूत्रार्थः।

(१) तर्ह्यपनीते प्रतिबन्धे प्रधानं सृजतु इत्यत आह ततश्चेति। सदातनापनायकात्सदापनीतः प्रतिबन्ध इति सदैव सर्गः स्यादित्यर्थः।

(२) यदृच्छयेति। यथास्मदादेस्तृणच्छेदादौ नियतनिमित्तानपेक्षा प्रवृत्तिरेवमित्यर्थः।

(३) कीदृशोऽनाधेयातिशयस्य भोग इत्यादिभाष्यं व्याचष्टे न केवलमिति। सिद्धान्तेप्यतात्त्विकभोगाभ्युपगमादवास्तवस्य न निषेध इत्यर्थः।

(४) नन्वपवर्गार्थमपि प्रधानप्रवृत्तौ सत्यां क्रमेण भोगमोक्षोपपत्तेः योगैश्वर्याच्चानन्तविकाराणां युगपदुपभोगसम्भवादुभयार्थतेत्यादिभाष्यमयुक्तमित्याशङ्क्याह न तावदिति।

चेद्, अथ पुरुषार्थाय प्रवृत्तं किमर्थं सत्त्वपुरुषान्यथाख्यातिं करोति। अपवर्गार्थमिति चेद्, (१)हन्तायं सकृच्छब्दाद्युपभोगेन कृतप्रयोजनस्य प्रधानस्य निवृत्तिमात्रादेव प्रिमुच्यतीति, कृतं सत्त्वान्यताख्यातिप्रतीक्षणेन। (२)न चास्याः स्वरूपतः पुरुषार्थत्वम्। तस्मादुभयार्थमपि न प्रधानस्य प्रवृत्तिरुपपद्यत इति सिद्धोऽर्थाभावः। सुगममितरत्। शङ्कते-"दृक्शक्ती"ति (पृ० ५०१ पं० ३)। पुरुषो हि दृक्शक्तिः सा च दृश्यमन्तरेणानर्थिका स्यात्। न च स्वात्मन्यर्थवती, स्वात्मनि वृत्तिविरोधात्। प्रधानं च सर्गशक्तिः सा च सर्जनीयमन्तरेणानर्थिका स्यादिति यत्प्रधानेन शब्दादि सृज्यते तदेव दृक्छक्तेर्दृश्यं भवतीति तदुभयार्थवत्त्वाय सर्जनमिति शङ्कार्थः। निराकरोति—"सर्गशक्त्यनुच्छेदवदि"ति। (३)यथा हि प्रधानस्य सर्गशक्तिरेकं पुरुषं प्रति चरितार्थापि पुरुषान्तरं प्रति प्रवर्ततेऽनुच्छेदात्, एवं दृक्शक्तिरपि तं पुरुषं प्रत्यर्थवत्त्वायानुच्छेदात्सर्वदा प्रवर्तेतेत्यनिर्मोक्षप्रसङ्गः। सकृद्दृश्यदर्शनेन वा चरितार्थत्वे न भूयः प्रवर्तेतेति सर्वेषामेकपदे निर्मोक्षः प्रसज्येतेति सहसा संसारः समुच्छिद्येतेति ॥ ६ ॥

## सू० पुरुषाश्मवदिति चेत्तथापि ॥ ७ ॥

नैव दोषात्प्रच्युतिरिति शेषः। (४)मा भूत्पुरुषार्थस्य शक्त्यर्थवत्त्वस्य वा प्रवर्तकत्वं पुरुष एव दृक्शक्तिसम्पन्नः पङ्गुरिव प्रवृत्तिशक्तिसम्पन्नं प्रधानमन्धमिव प्रवर्तयिष्यतीति शङ्का। दोषादनिर्मोक्षमाह-"अभ्युपेतहानं ताव"दिति। न केवलमभ्युपेतहानम्, अयुक्तं चैतद्भवद्दर्शनालोचनेनेत्याह-"कथं चोदासीन" इति। निष्क्रियत्वे साधनं—"निर्गुणत्वा"दिति। शेषमतिरोहितार्थम् ॥ ७ ॥

## सू० अङ्गित्वानुपपत्तेश्च ॥ ८ ॥

यदि (५)प्रधानावस्था कूटस्थनित्या, ततो न तस्याः प्रच्युतिरनित्यत्वप्रसङ्गात्, यथाहुः— 'नित्यं तमाहुर्विद्वांसो यः स्वभावो न नश्यती'ति।

तदिदमुक्तं "स्वरूपप्रणाशभया"दिति (पृ० ५१२ पं० ९) अथ परिणामिनित्या, यथाहु.—'यस्मिन् विक्रियमाणेऽपि यत्तत्त्वं न विहन्यते, तदपि नित्य'मिति, तत्राह—"बाह्यस्य चे"ति। यत्साम्यावस्थया सुचिरं पर्यणमत्कथं तदेवासति विलक्षणप्रत्ययोपनिपाते वैषम्यमुपैति। अनपेक्षस्य स्वतो वाऽपि वैषम्येण कदाचित्साम्यं भवेदित्यर्थः ॥ ८ ॥

## सू० अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥

"एवमपि प्रधानस्ये"ति (पृ० ५१३ पं० ३)। अङ्गित्वानुपपत्तिलक्षणो दोषस्ता-

---

(१) शब्दाद्यनुपलब्धिर्बुद्धिजीवभेदख्यातिर्वाऽपवर्गः साङ्ख्यैरभ्युपेयते ? आद्ये दोषमाह हन्तेति।

(२) अन्त्ये आह न चास्या इति। उभयार्थं—भोगमोक्षार्थम्।

(३) दृक्शक्तेः सर्वप्रधानकार्यविषयत्वे दोषमाह यथा हीति। एकदेशविषयत्वे आह सकृद्दृश्येति।

(४) अर्थाभावसूत्रोक्तं दूषणमभ्युपगच्छति इति चेदित्यन्तसूत्रभागेण माभूदिति। शक्त्यर्थवत्त्वस्य—दृक्शक्तिसर्गशक्त्यर्थवत्त्वस्य।

(५) अवस्थानाशेऽपि अवस्थावतां गुणानामनाशात् 'स्वरूपप्रणाशभयात्' इति भाष्यासङ्गतिमाशङ्क्य विकल्पद्वारा व्याचष्टे प्रधानावस्थेति।

त्वन्न भवद्भिः शक्यः परिहर्तुमिति वक्ष्यामः । अभ्युपगम्याप्यस्यादोषत्वमुच्यत इत्यर्थः । सम्प्रत्यङ्गित्वानुपपत्तिमुपपादयति—**"वैषम्योपगमयोग्या अपी"**ति ॥ ९ ॥

## सू० विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥

**"क्वचित्सप्तेन्द्रियाणी"**ति । (१)त्वङ्मात्रमेव हि बुद्धीन्द्रियमनेकरूपादिग्रहणसमर्थमेकम्, कर्मेन्द्रियाणि पञ्च, सप्तमं च मन इति सप्तेन्द्रियाणि । **"क्वचित् त्रीण्यन्तःकरणानि"** बुद्धिरहङ्कारो मन इति । **"क्वचिदेकं,"** बुद्धिरिति । शेषमतिरोहितार्थम् ।

अत्राह सांख्यः—**"नन्वौपनिषदानामपी"**ति । तप्यतापकभावस्तावदेकस्मिन्नोपपद्यते, (२)नहि तपिरस्तिरिव कर्तृस्थभावकः, किन्तु पचिरिव कर्मस्थभावकः । परसमवेतक्रियाफलशालि च कर्म, तथा च तप्येन कर्मणा तापकसमवेतक्रियाफलशालिना तापकादन्येन भवितव्यम् । (३)अनन्यत्वे चैत्रस्येव गन्तुः स्वसमवेतगमनक्रियाफलनगरप्राप्तिशालिनोऽप्यकर्मत्वप्रसङ्गात्, अन्यत्वे तु तप्यस्य तापकाच्चैत्रसमवेतगमनक्रियाफलभाजो गम्यस्येव नगरस्य तप्यत्वोपपत्तिः। तस्मादभेदे तप्यतापकभावो नोपपद्यत इति । दूषणान्तरमाह—**"यदि चे"**ति ( पृ० ५१४ पं० १ )। नहि स्वभावाद्भावो वियोजितुं शक्य इति भावः । (४)जलधेश्च वीचितरङ्गफेनादयः स्वभावाः सन्त आविर्भावतिरोभावधर्माणो न तु तैर्जलधिः कदाचिदपि मुच्यते । न केवलं कर्मभावात्तप्यस्य तापकादन्यत्वमपि त्वनुभवसिद्धमेवेत्याह—**"प्रसिद्धश्चायमि"**ति । तथाहि—अर्थोऽप्युपार्जनरक्षणक्षयरागवृद्धिहिंसादोषदर्शनादनर्थः सन्नर्थिनं दुनोति, तदर्थी तप्यस्तापकश्चार्थः, तौ चेमौ लोके प्रतीतभेदौ, अभेदे च दूषणान्युक्तानि, तत्कथमेकस्मिन्नद्वये भवितुमर्हत इत्यर्थः । तदेवमौपनिषदं मतमसमञ्जसमुक्त्वा सांख्यः स्वपक्षे तप्यतापकयोर्भेदे मोक्षमुपपादयति—**"जात्यन्तरभावे त्वि"**ति ( पृ० ५१५ पं० १ )। दृग्दर्शनशक्त्योः किल संयोगस्तापनिदानं, तस्य हेतुरविवेकदर्शनसंस्कारोऽविद्या(५), सा च विवेकख्यात्या विद्यया विरोधित्वाद्विनिवर्त्यते, तन्निवृत्तौ तद्धेतुकः संयोगो निवर्तते, तन्निवृत्तौ च तत्कार्यस्तापो निवर्तते । तदुक्तं पञ्चशिखाचार्येण—'तत्संयोगहेतुविवर्जनात्स्यादयमात्यन्तिको दुःखप्रतीकार' इति । अत्र च न साक्षात्पुरुषस्यापरिणामिनो बन्धमोक्षौ, किन्तु बुद्धिसत्त्वस्यैव चितिच्छायापत्त्या लब्धचैतन्यस्य । तथाहीष्टानिष्टगुणस्वरूपावधारणमविभागा(६)पन्नमस्य भोगः, भोक्तृस्वरूपावधारणमपवर्गस्तेन हि

---

( १ ) एकादशेन्द्रियाणां कथं सप्तत्वमित्याशङ्क्य बुद्धीन्द्रियाणां त्वगिन्द्रियेऽन्तर्भावमाह त्वङ्मात्रमेवेति । एतदभिप्रायकमेव 'त्वगव्यतिरेकात्' इति गौतमीयं पूर्वपक्ष ( ३।१।५२ ) सूत्रम् ।

( २ ) ननु तप्य एवमास्तामास्तिरिव, तथाच तप्यतापकभाव कथमद्वैतघातकस्तत्राह नहीति । कर्तृस्थभावक —कर्तृनिष्ठफल ।

( ३ ) ननु क्रियाफलशालित्वमात्रं कर्मत्वमस्तु किं परेतिविशेषणेन, तथाच तत्तैव तप्य स्यात्तत्राहानन्यत्व इति । तथाच चैत्रसमवेता गमनक्रिया तस्या फलं नगरप्राप्तिस्तच्छालिनश्चैत्रस्य परत्वाभावादकर्मकत्ववत्तप्यस्याप्यभेदाङ्गीकारेऽकर्मकत्वप्रसङ्गादित्यर्थ ।

( ४ ) ननु यथा समुद्रः स्वभावभूतैरपि वीच्यादिभिर्वियुज्यत एवमात्मापि तप्यतापकभावाभ्यामित्यत्राह जलधेश्चेति । ( ५ ) अत एव पातञ्जलसूत्रद्वयम्—"दृग्दर्शनशक्त्योः संयोगो हेयहेतुः, तस्य हेतुरविद्ये"ति च ।

( ६ ) अविभागेति । बुद्धिसत्त्वस्य पुरुषादविवेकोऽविभागः तेन जडाया अपि बुद्धेर्गुणस्वरूपावधार

बुद्धिसत्त्वमेवापवृज्यते, तथापि यथा जयः पराजयो वा योधेषु वर्तमानः प्राधान्यात्स्वामिन्यपदिश्यते एवं बन्धमोक्षौ बुद्धिसत्त्वे वर्तमानौ कथंचित्पुरुषेऽपदिश्येते, स ह्यविभागापत्त्या(१) तत्फलस्य भोक्तेति । तदेतदभिसन्धायाह—"**स्यादपि कदाचिन्मोक्षोपपत्तिरि**"ति ।

(२)अत्रोच्यते "**नैकत्वादेव तप्यतापकभावानुपपत्तेः**" । यत एकत्वे तप्यतापकभावो नोपपद्यते एकत्वादेव, (३)तस्मात्सांव्यवहारिकभेदाश्रयस्तप्यतापकभावोऽस्माभिरभ्युपेयस्तापो हि सांव्यहारिक एव न पारमार्थिक इत्यसकृदावेदितम् । भवेदेष दोषो यद्येकान्ततायां तप्यतापकावन्योन्यस्य विषयविषयिभावं प्रतिपद्येयातामित्यस्मदभ्युपगम इति शेषः । सांख्योऽपि हि भेदाश्रय तप्यतापकभावं ब्रुवाणो न पुरुषस्य तपिकर्मतामाख्यातुमर्हति, तस्यापरिणामितया तपिक्रियाजनितफलशालित्वानुपपत्तेः । केवलमनेन सत्त्वं तप्यमभ्युपेयं तापकं च रजः । दर्शितविषयत्वात्तु बुद्धिसत्त्वे तप्ये तदविभागापत्त्या पुरुषोऽप्यनुतप्यत इव न तु तप्यतेऽपरिणामित्वादित्युक्तं, (४)तदविभागापत्तिश्चाविद्या, तथा चाविद्याकृतस्तप्यतापकभावस्त्वयाऽभ्युपेयः, सोऽयमस्माभिरुच्यमानः किमिति भवतः पुरुष इवाभाति । अपि च नित्यत्वाभ्युपगमाच्च तापकस्यानिर्मोक्षप्रसङ्गः । शङ्कते—"**तप्यतापकशक्त्योर्नित्यत्वेऽपी**"ति ( पृ० ५१६ प० ६ ) । सहादर्शनेन निमित्तेन वर्तत इति सनिमित्तः संयोगस्तदपेक्षत्वादिति । निराकरोति—"**नादर्शनस्य तमस**" इति (५)न तावत्पुरुषस्य तप्तिरित्युक्तम् । केवलमियं बुद्धिसत्त्वस्य तापकरजोजनिता, तस्य च बुद्धिसत्त्वस्य तामसविपर्यासादात्मनः पुरुषाद्भेदमपश्यतः पुरुषस्तप्यत इत्याभिमानो, न तु पुरुषो विपर्यासतुषेणापि युज्यते, तस्य तु बुद्धिसत्त्वस्य सात्त्विक्या विवेकख्यात्या तामसीयमविवेकख्यातिर्निवर्तनीया । न च सति तमसि मूले शक्याऽत्यन्तमुच्छेत्तुम् । तथा विच्छिन्नापि छिन्नबदरीव पुनस्तमसोद्भूतेन सत्त्वमभिभूय विवेकख्यातिमपोह्य शतशिखराऽविद्याविर्भाव्येतेति बतेयमपवर्गकथा तपस्विनी दत्तजलाञ्जलिः प्रसज्येत । अस्मत्पक्षे त्वदोष इत्याह—"**औपनिषदस्य त्वि**"ति ।(६)यथा हि मुखमवदातमपि मलिनादर्शतलोपाधिकल्पितप्रतिबिम्बभेदं मलिनतामुपैति, न च तद्वस्तुतो मलिनं, न च बिम्बात्प्रतिबिम्बं वस्तुतो भिद्यते, अथ तस्मिन् प्रतिबिम्बे मलिनादर्शोपधानान्मलिनता पदं लभते, तथा चात्मनो मलिनं मुखं पश्यन् देवदत्तस्तप्यते । यदा तूपाध्यपनयाद्बिम्बमेव कल्पनावशात्प्रतिबिम्बं तच्चावदातमिति तत्त्वमवगच्छति तदास्य तापः प्रशाम्यति न च मलिनं मे मुखमिति । एवमविद्योपधानकल्पितावच्छेदो जीवः

---

णमापन्नम्, अनुकूलशब्दादिज्ञानस्य विविक्तपुरुषज्ञानस्य च बुद्धिपरिणामत्वाद् बुद्धेरेव बन्धमोक्षावित्यर्थः ।

(१) अविवेकप्राप्त्या । (२) वेदान्तिमतेनेत्यर्थः ।

(३) वास्तविके तप्यतापकविभागानुपपत्तिपक्षे इष्टापत्तिमुक्त्वा व्यावहारिके तदनुपपत्त्यभावमाह—तस्मादिति ।

(४) अविभागापत्तिस्तर्हि क्षीरवत्सत्येति तन्निमित्ता तप्तिः पुंसः सत्या स्यादत आह तदविभागापत्तिश्चेति । (५) तमसस्तप्तिहेतुत्वमुपपादयति न तावदिति ।

(६) तप्तस्य तमसो नित्यत्वयोगात्परस्य तन्निमित्ततप्तेरनाश उक्तः, सिद्धान्ते त्वविद्याया अवस्तुत्वात्तद्धेतोर्विद्यया निवृत्तेर्मोक्षोपपत्तिमाह यथाहीति ।

परमात्मप्रतिबिम्बकल्पः कल्पितैरेव शब्दादिभिः संपर्कात्तप्यते न तु तत्त्वतः परमात्मनोऽस्ति तापः । यदा तु 'तत्त्वमसी'ति वाक्यश्रवणमननध्यानाभ्यासपरिपाकप्रकर्षपर्यन्तजोऽस्य साक्षात्कार उपजायते तदा जीवः शुद्धबुद्धतत्त्वस्वभावमात्मनोऽनुभवन् निर्मृष्टनिखिलभववासनक्लेशजालः केवलः स्वस्थो भवति न चास्य पुनः संसारभयमस्ति तद्धेतोरवास्तवत्वेन समूलकाषं कषितत्वात् । सांख्यस्य तु सतस्तमसोऽशक्यसमुच्छेदत्वादिति । तदिदमुक्तम्—"**विकारभेदस्य च वाचारम्भणमात्रत्वश्रवणादि**"ति ॥ १० ॥

**"प्रधानकारणवाद" इति** ( पृ० ५१७ पं० ४ ) । (१)यथैव प्रधानकारणवादो ब्रह्मकारणवादविरोध्येवं परमाणुकारणवादोऽप्यतः सोऽपि निराकर्तव्यः। एतेन '**शिष्टापरिग्रहा अपि व्याख्याता**' इत्यस्य प्रपञ्च आरभ्यते । तत्र वैशेषिका ब्रह्मकारणत्वं दूषयांबभूवुः । चेतनं चेदाकाशादीनामुपादानं तदारब्धमाकाशादि चेतनं स्यात् । कारणगुणक्रमेण हि कार्ये गुणारम्भो दृष्टो, यथा शुक्लैस्तन्तुभिरारब्धः पटः शुक्लो, न जात्वसौ कृष्णो भवति । एवं चेतनेनारब्धमाकाशादि चेतनं भवेन्न त्वचेतनम् । तस्मादचेतनोपादानमेव (२)जगत्तच्चाचेतनं परमाणवः, सूक्ष्मात् खलु स्थूलस्योत्पत्तिर्दृश्यते, यथा तन्तुभिः पटस्यैवमंशुभ्यस्तन्तूनामेवमपकर्षपर्यन्तं कारणद्रव्यमतिसूक्ष्ममनवयवमवतिष्ठते, तच्च परमाणुस्तस्य तु सावयवत्वेऽभ्युपगम्यमानेऽनन्तावयवत्वेन सुमेरुराजसर्षपयोः समानपरिमाणत्वप्रसङ्ग इत्युक्तम्(३) । तत्र च प्रथमं तावद(४)दृष्टवत्क्षेत्रज्ञसंयोगात्परमाणौ कर्म, ततोऽसौ परमाण्वन्तरेण संयुज्य द्व्यणुकमारभते (५)बहवस्तु परमाणवः संयुक्ता न सहसा स्थूलमारभन्ते, परमाणुत्वे सति बहुत्वात्, घटोपगृहीतपरमाणुवत् । (६)यदि हि घटोपगृहीताः परमाणवो घटमारभेरन् न घटे प्रविभज्यमाने कपालशर्कराद्युपलभ्येत, तेषामनारब्धत्वात् , घटस्यैव तु तैरारब्धत्वात् । (७)तथा सति मुद्गरप्रहाराद् घटविनाशे न किंचिदुपलभ्येत, तेषामनारब्धत्वात् । तदवयवानां परमाणूनामतीन्द्रियत्वात् । तस्मान्न बहूनां परमाणूनां द्रव्यं प्रति समवायिकारणत्वमपि तु द्वावेव परमाणू द्व्यणुकमारभेते । तस्य चाणुत्वं परिमाणं परमाणुपरिमाणात् पारिमाण्डल्यादन्यदीश्वरबुद्धिमपेक्ष्योत्पन्ना द्वित्वसंख्याऽऽरभते । न च द्व्यणुकाभ्यां द्रव्यस्यारम्भो, वैयर्थ्यप्रसङ्गात् । तदपि हि द्व्यणुकमेव भवेन्न तु महत् (८) । कारणबहुत्वमहत्त्वप्रचयविशेषेभ्यो हि महत्त्वस्योत्पत्तिः । न च द्व्यणुकयोर्महत्त्वमस्ति, यतस्ताभ्यामारब्धं महद्भवेत् । नापि तयोर्बहुत्वं, द्वित्वादेव ।

---

(१) तत्त्वज्ञानप्रधानस्यास्य शास्त्रस्य परमतनिरासपरत्वाभावा'न्निराकृतो निराकर्तव्य' इति च भाष्यनिर्देशायोगमाशङ्क्याह यथैवेति । श्रौतब्रह्मज्ञानार्थं तन्निरास इत्यर्थः ।

(२) अत्र विमतमचेतनोपादानकं कार्यद्रव्यत्वात्संमतवदित्यनुमानाकारो द्रष्टव्यः ।

(३) 'एतेन शिष्टापरिग्रहा' इत्यत्र पूर्वपक्षे इत्यर्थः ।

(४) महाप्रलये प्रयत्नाभिघाताद्यभावात्कथं परमाणौ कर्म तत्राह अदृष्टवदिति

(५) मध्ये द्व्यणुकाङ्गीकारे युक्तिमाह बहवस्त्विति ।

(६) उक्तानुमाने साध्यवैकल्यं दृष्टान्ते परिहरति यदि हीति ।

(७) परमाणुभिरनारब्धत्वे घटारम्भपक्षे भिद्यमाने घटे संस्थानानुपलम्भः प्रसज्य नाशादूर्ध्वमपि तमःवत् तथा सतीति । (८) परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमादित्यर्थः ।

न च प्रचयभेदस्तूलपिण्डानामिव, तदवयवानामनवयवत्वेन प्रशिथिलावयवसंयोगभेदविरहात् । तस्मात्तेनापि तत्कारणद्व्यणुकवदणुनैव भवितव्यं, तथा च पुरुषोपभोगातिशयाभावाददृष्टानिमित्तत्वाच्च विश्वनिर्माणस्य भोगार्थत्वात्तत्कारणेन च द्व्यणुकेन तन्निष्पत्तेः कृतं द्व्यणुकाश्रयेण द्व्यणुकान्तरेणेत्यारम्भवैयर्थ्यादारम्भार्थवत्त्वाय बहुभिरेव द्व्यणुकैस्त्र्यणुकं चतुरणुकं पञ्चाणुकं वा द्रव्यं महद्दीर्घमारब्धव्यम् । अस्ति हि तत्रतत्र भोगभेदोऽस्ति च बहुत्वसंख्येश्वरबुद्धिसपेक्षयोत्पन्ना महत्त्वपरिमाणयोनिः । (१) त्र्यणुकादिभिरारब्धं तु कार्यद्रव्यं कारणबहुत्वाद्वा कारणमहत्त्वाद्वा कारणप्रचयभेदाद्वा महद्भवतीति प्रक्रिया । तदेतयैव प्रक्रियया कारणसमवायिनो गुणाः कार्यद्रव्यं समानजातीयमेव गुणान्तरमारभन्त इति दूषणमदूषणीक्रियते, व्यभिचारादित्याह—

## (सू०) महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥११॥

(२)यथा महद्द्रव्यं त्र्यणुकादि ह्रस्वाद् द्व्यणुकाज्जायते, न तु महत्त्वगुणोपजनने द्व्यणुकगतं महत्त्वमपेक्षते, तस्य ह्रस्वत्वात् । यथा वा तदेव त्र्यणुकादि दीर्घं ह्रस्वाद् द्व्यणुकाज्जायते, न तु तद्गतं दीर्घत्वमपेक्षते, तदभावात् । वाशब्दश्चार्थे ऽ(३)नुक्तसमुच्चयार्थः । यथा द्व्यणुकमणुह्रस्वपरिमाण परिमण्डलात्परमाणोरपरिमण्डलं जायत एव चेतनाद्ब्रह्मणोऽचेतनं जगन्निष्पद्यते इति सूत्रयोजना । भाष्ये "**परमाणुगुणविशेषस्त्व**"ति ( पृ० ५१८ पं० ३ ) । पारिमाण्डल्यग्रहणमुपलक्षणम्–न द्व्यणुकेऽणुत्वमपि परमाणुवर्ति पारिमाण्डल्यमारभते, तस्य हि द्वित्वसंख्यायोनित्वादित्यपि द्रष्टव्यम् । ह्रस्वपरिमण्डलाभ्यामिति सूत्रं गुणिपरं (४)न गुणपरम् । यदापि "द्वे द्वे द्व्यणुके" इति पठितव्ये प्रमाददेकं द्वे पदं न पठितम् । एवं चतुरणुकमित्याद्युपपद्यते । इतरथा हि द्व्यणुकमेव तदपि स्यात्, न तु महदित्युक्तम् । अथ वा द्वे इति द्वित्वे, यथा 'द्व्येकयोर्द्विवचनैकवचने' इति । अत्र हि द्वित्वैकत्वयोरित्यर्थः । अन्यथा द्व्येकेष्विति स्यात्संख्येयानां बहुत्त्वात् । तदेवं योजनीयम्—द्व्यणुकाधिकरणे ये द्वित्वे ते यदा चतुरणुकमारभेते (५)संख्येयानां चतुर्णां द्व्यणुकानामारम्भकत्वात्तद्गते द्वित्वसंख्ये अपि आरम्भिके इत्यर्थः । एवं व्यवस्थितायां वैशेषिकप्रक्रियायां तद्दूषणस्य व्यभिचार उक्तः । अथाव्यवस्थिता तथापि तदवस्थो व्यभिचार इत्याह—"**यदापि बहवः परमाणवः**' इति । नाणु जायते नो ह्रस्वं जायते इति योजना । चोदयति—"**अथ मन्यसे विरोधिना परिमाणान्तरेण**" ( पृ० ५१९ पं० १ ) स्व-

---

( १ ) यदि द्व्यणुकगता संख्यैव त्र्यणुकगतमहत्त्वस्य कारणं तदा त्र्यणुकादीनष्ठा संख्यैव तत्कार्यमहत्त्वे हेतुरस्तु इत्याशंक्य तत्र महत्त्वादिसम्भवादनियम इत्याह त्र्यणुकादिभिरिति ।

( २ ) सूत्रमुदाहृत्य व्याचष्टे यथेति ।

( ३ ) यथाश्रुतसूत्रे परिमण्डलादपि महदारम्भो भाति स चायुक्त इति मत्वाह अनुक्तेति । अनुक्तमेव दर्शयति यथेति । यथाक्रमं सूत्रे ह्रस्वपरिमण्डलाभ्यां महद्दीर्घाणुवदिति सूचनाय वाशब्द इत्यर्थः ।

( ४ ) गुणिपरमिति । परिमाणवद्द्रव्याभ्यां द्रव्यान्तरारम्भ उच्यते न तु गुणारम्भ इत्यर्थः। एतेन सूत्रे परिमाणान्तरारम्भकत्वनिषेधान्न युक्तमिति प्रत्युक्तम् ।

( ५ ) ननु द्व्यणुकगताद्वित्वयो कथं चतुरणुकारम्भकत्वं संख्याया द्रव्यारम्भकत्वायोगादत आह संख्येयानामिति ।

कारणद्वारेणाक्रान्तत्वादिति । परिहरति—"मैवं मंस्था" इति । कारणगता गुणा न कार्ये समानजातीयं गुणान्तरमारभन्त इत्येतावतैवेष्टसिद्धौ न तद्धेत्वनुसरणे खेदनीयं मन इत्यर्थः । अपि च सत्परिमाणान्तरमाक्रामति नासत्, उत्पत्तेश्च प्राक् परिमाणान्तरमसदिति कथमाक्रामेत्, न च तत्कारणमाक्रामति । पारिमाण्डल्यस्यापि समानजातीयस्य कारणस्याक्रमणहेतोर्भावेन समानबलतयोभयकार्यानुत्पादप्रसङ्गादित्याशयवानाह—"न च परिमाणान्तराक्रान्तत्वमि"ति । न च परिमाणान्तरारम्भे व्यापृतता पारिमाण्डल्यादीनाम्, न च कारणबहुत्वादीनां सन्निधानमसन्निधानं च पारिमाण्डल्यस्येत्याह—न च परिमाणान्तरारम्भे" इति । व्यभिचारान्तरमाह—"संयोगाच्चे"ति (पृ० ५२० पं० ५)। शङ्कते—"द्रव्ये प्रकृत" इति । निराकरोति—"न दृष्टान्तेने"ति । न चास्माकमयमनियमो भवतामपीत्याह—"सूत्रकारोपी"ति । सूत्रं व्याचष्टे—'यथा प्रत्यक्षाप्रत्यक्षयोरि"ति । शेषमतिरोहितार्थम् ॥ ११ ॥

## उभयथापि न कर्मातस्तदभावः ॥ १२ ॥

(१)परमाणूनामाद्यस्य कर्मणः कारणाभ्युपगमेऽनभ्युपगमे वा न कर्मातस्तदभावः-तस्य द्व्यणुकादिक्रमेण सर्गस्याभावः । अथवा यदणुसमवाय्यदृष्टमथ वा क्षेत्रज्ञसमवायि, उभयथापि तस्याचेतनस्य चेतनानधिष्ठितस्याप्रवृत्तेः कर्माभावोऽतस्तदभावस्सर्गाभावः । (२)निमित्तकारणतामात्रेण त्वीश्वरस्याधिष्ठातृत्वमुपरिष्टा(३)न्निराकरिष्यते । अथ वा संयोगोत्पत्त्यर्थं विभागोत्पत्त्यर्थमुभयथापि न कर्मातः सर्गहेतोः संयोगस्याभावात् प्रलयहेतोर्विभागस्याभावात् तदभावः-तयोः सर्गप्रलययोरभाव इत्यर्थः । तदेतत्सूत्रं तात्पर्यतो व्याचष्टे—"इदानीं परमाणुकारणवादमि"ति (पृ० ५२१ पं० १०)। निराकार्यस्वरूपमुपपत्तिसहितमाह—"स च वाद" इति । "स्वानुगतैः"-(४)स्वसम्बद्धैः । सम्बन्धश्चाधार्याधारभूत इहप्रत्ययहेतुः समवायः । पञ्चमभूतस्यानवयवत्वात् "तानीमानि चत्वारि भूतानी-ति" । "तत्र—परमाणुकारणवादे, इदमभिधीयते" सूत्रम् । तत्र प्रथमां व्याख्यामाह—"कर्मवतामि"ति (पृ० ५२२ पं० १२)। अभिघातादीत्यादिग्रहणेन नोदनसंस्कार गुरुत्वद्रवत्वानि गृह्यन्ते । नोदन(५)संस्कारावभिघातेन समानयोगक्षेमौ गुरुत्वद्रवत्वे च परमाणुगते सदातने इति कर्मसातत्यप्रसङ्गः । द्वितीयं व्याख्यानमाशङ्का(६)पूर्वमाह—"अथा

---

(१) प्रधानं चेतनानधिष्ठितत्वान्न कारणं चेत्तर्ह्यणवस्तदधिष्ठिता हेतवो भविष्यन्तीति सुखबोधाय सूत्रं त्रेधादौ योजयति परमाणूनामिति ।

(२) ननु कर्मणश्चेतनानधिष्ठितत्वमेवासिद्धमीश्वराधिष्ठितत्वादत आह निमित्तेति ।

(३) पत्यु (ब्र० अ० २ पा० सू० ३७) रित्यत्र ।

(४) भाष्ये स्वानुगतैरिति न जातिरिव व्यक्तीनामनुगतत्वमुच्यते इत्याह स्वसम्बद्धैरिति । सम्बन्धोऽपि न संयोग इत्याह सम्बन्धश्चेति । इहेति । इहप्रत्ययकार्यगम्यः समवाय इत्यर्थः । अनेन समवाये प्रमाणं प्रदर्शितम् ।

(५) संस्कारो वेगादिः । अभिघातः क्रियाविशिष्टद्रव्यस्य द्रव्यान्तरेण संयोगविशेषः, यथोद्यमितनिपातितमुसलस्योलूखलेन, नोदनं तु संयुक्तस्य स एव संयोगः प्रयत्नविशेषापेक्षः यथा सन्नद्धकरशरसंयोग क्षेपानुकूलप्रयत्नापेक्षः, निमित्तापेक्षत्वेन समानयोगक्षेमौ नोदनसंस्काराबित्यर्थः ।

(६) दृष्टनिमित्ताभावेऽपि अदृष्टवदात्मसंयोगादणुषु कर्मेत्याशङ्कापूर्वकामित्यर्थः ।

**दृष्ट" धर्माधर्मौ, "आद्यस्य कर्मण"** इति ( पृ० ५२३ पं० २ )। **"आत्मनश्च"** (१)क्षेत्रज्ञस्य**"अनुत्पन्नचैतन्यस्ये"**ति। **"अदृष्टवता पुरुषेण"**ति। संयुक्तसमवायसंबन्ध इत्यर्थः। **"सम्बन्धस्य सातत्यादि"**ति। यद्यपि परमाणुक्षेत्रज्ञयोः संयोगः परमाणुकर्मजस्तथापि तत्प्रवाहस्य सातत्यमिति भावः। सर्वात्मना चेदुपचयाभाव, एकदेशेन हि संयोगे यावदणोरेकदेशौ निरन्तरौ ताभ्यामन्ये एकदेशाः संयोगेनाव्याप्ता इति प्रथिमोपपद्यते, सर्वात्मना तु नैरन्तर्ये परमाणावेकस्मिन्परमाण्वन्तराण्यपि संमान्तीति न प्रथिमा स्यादित्यर्थः। शङ्कते-(२)यद्यपि निष्प्रदेशाः परमाणवस्तथापि संयोगस्तयोरव्याप्यवृत्तिरेवंस्वभावत्वात्। कैषा वाचोयुक्तिर्निष्प्रदेशं संयोगो न व्याप्नोतीति ? (३)एषैव वाचोयुक्तिः यद्यथा प्रतीयते तत्तथाभ्युपेयत इति। तामिमां शङ्कां (४)सुद्धारामाह—**"परमाणूनां कल्पिता" इति**। नह्यस्ति सम्भवो निरवयव एकस्तदेव तेनैव संयुक्तश्चासंयुक्तश्चेति, भावाभावयोरेकस्मिन्नद्वये विरोधात्, अविरोधे वा न क्वचिदपि विरोधोऽवकाशमासादयेत्, प्रतीतिस्तु प्रदेशकल्पनयापि कल्प्यते, तदिदमुक्तं **'कल्पिताः प्रदेशा' इति**। तथा च सुद्धारेयमिति तामुद्धरति **'कल्पितानामवस्तुत्वादि'**ति ( पृ० ५२४ पं० १ )। तृतीयां व्याख्यामाह—**"यथा चादिसर्ग" इति**। नन्वभिघातनोदनादयः प्रलयारम्भसमये कस्माद्विभागारम्भककर्महेतवो न सम्भवन्त्यत आह—**"न हि तत्रापि किंचिन्नियत"मिति**। यद्यपि शरीरादिप्रलयारम्भेऽस्ति दुःखभोगस्तथाप्यसौ पृथिव्यादिप्रलये नास्तीत्यभिप्रेत्येदमुदितमिति मन्तव्यम्॥ १२॥

## सू० समवायाभ्युपगमाच्च साम्यादनवस्थितेः॥१३॥

व्याचष्टे **"समवायाभ्युपगमाच्चे"**ति। न तावत्स्वतन्त्रः समवायोऽत्यन्तं भिन्नः समवायिभ्यां समवायिनौ घटयितुमर्हत्यतिप्रसङ्गात्, तस्मादनेन समवायिसम्बन्धिना सता समवायिनौ घटनीयौ, तथा च समवायस्य सम्बन्धान्तरेण समवायिसम्बन्धेऽभ्युपगम्यमानेऽनवस्था, (५)अथासौ सम्बन्धिभ्यां सम्बन्धे न सम्बन्धान्तरमपेक्षते सम्बन्धिसम्बन्धन-

---

( १ ) तथापीश्वरस्य चैतन्यमस्तीत्याशंक्याह क्षेत्रज्ञस्येति।

( २ ) शङ्कत इत्यस्य परमाणूनां कल्पिता इति वक्ष्यमाणप्रतीकग्रहणेनानुषङ्ग। ननु परै कल्पिता प्रदेशा नेष्यन्ते किन्तु परमाणौ संयोगस्य वृत्त्यवृत्ती इत्याशङ्क्य वृत्त्यवृत्तिपक्षौ व्याघातान्निरस्तौ, तथापि गत्यभावाद्वैशेषिको यदि परमाणौ संयोगस्याव्याप्यवृत्त्यर्थं कल्पितं प्रदेशं मन्येत सोऽपि भाष्ये आशक्य निरस्यत इति वक्तुं वृत्त्यवृत्तिपक्ष तावदाह यद्यपीति।

( ३ ) तत्र व्याघातमाह सिद्धान्ती एषैवेति। घटादिषु संयोगस्य वृत्त्यवृत्ती दृश्येते यदि तत्राप्यवयवविभागेन तर्हि यावत्परमाणु तथात्वे परमाणोश्च निरंशत्वे संयोग एव न स्यादिति वृत्त्यवृत्ती एव तदव्याप्यवृत्तितेत्यर्थ।

( ४ ) सुपरिहारामापादयेत्यर्थः। शङ्कायाः सूद्धारत्वासिद्धये एव वृत्त्यवृत्तिपक्षं दूषयति न ह्यस्तीति।

( ५ ) समवायस्तन्तुपटाभ्यां सम्बद्धस्तन्नियामकत्वात्कारणवदित्यत्रासम्बन्धत्वमुपाधिमाशङ्कते अथासाविति। अनवस्थया पक्षे साध्याभावनिश्चयात्पक्षेतरस्याप्युपाधिता सम्बन्धिनोर्न घटयितुमर्हतीत्यर्थः। सम्बन्धीति। परस्परं स्वस्य च ताभ्यां सम्बन्धनमविशिष्टत्वादादानं परमार्थः स्वभावो यस्य स तथा तदभावादित्यर्थ।

परमार्थत्वात्, तथाहि नासौ भिन्नोऽपि सम्बन्धिनिरपेक्षो निरूप्यते, न च तस्मिन्सति सम्बन्धिनौ भवतस्तस्मात्स्वभावादेव समवायः समवायिनोर्न सम्बन्धान्तरेणेति नानवस्थेति चोदयति—"नन्विहप्रत्ययग्राह्य" इति (पृ० ५२५ पं० १)। परिहरति—(१) "नेत्युच्यते, संयोगोप्येव"मिति। तथाहि-संयोगोपि सम्बन्धिसम्बन्धनपरमार्थौ, न च तस्मिन्सति संयोगिनावसंयोगिनौ भवत इति तुल्यचर्चः। (२)यद्युच्येत गुणः संयोगो न च द्रव्यासमवेतो गुणो भवति, न चास्य समवाय विना समवेतत्वं, तस्मात्संयोगस्यास्ति समवाय इति शङ्कामपाकरोति "न च गुणत्वादि"ति। (३)यद्यसमवायेऽस्यागुणत्वं भवति कामं भवतु न नः काचित्क्षतिस्तदिदमुक्त "गुणपरिभाषायाश्चे"ति। परमार्थतस्तु द्रव्याश्रयीत्युक्तम्। तच्च विनापि समवायं स्वरूपतः संयोगस्योपपद्यते एव। न च कार्यत्वात्समवाय्यसमवायिकारणापेक्षितय संयोगसमवायीति युक्तम्, अजसंयोगस्यातथात्वप्रसङ्गात्। अपि च समवायस्यापि सम्बन्ध्यधीनसद्भावस्य सम्बन्धिनश्चैकस्य द्वयोर्वा विनाशित्वेन विनाशित्वात्कार्यत्वम्। नह्यस्ति सम्भवो गुणो वा गुणगुणिनौ वाऽवयवी वाऽवयवावयविनौ वा न स्तोऽप्यस्ति च तयोः सम्बन्ध इति। तस्मात्कार्यः समवायः। (४)तथा च यथैष निमित्तकारणमात्राधीनोत्पाद,एवं संयोगोऽपि। अथ समवायोऽपि समवाय्यसमवायिकारणे अपेक्षते तथापि सैवानवस्थेति। तस्मात्समवायवत्संयोगोऽपि न सम्बन्धान्तरमपेक्षते। (५)यद्युच्येत सम्बन्धिनावसौ घटयति नात्मानमपि सम्बन्धिभ्यां, तत्किमसावसम्बद्ध एव सम्बन्धिभ्यामेवं चेदत्यन्तभिन्नोऽसम्बद्धः कथं सम्बन्धिनौ सम्बन्धयेत्। सम्बन्धने वा हिमवद्विन्ध्यावपि सम्बन्धयेत्। तस्मात्संयोगः संयोगिनोः समवायेन सम्बद्ध इति वक्तव्यम्। तदेतत्समवायस्यापि समवायिसम्बन्धे समानमन्यत्राभिनिवेशात्तथा चानवस्थेति भावः॥ १३॥

## सू० नित्यमेव च भावात्॥ १४॥

प्रवृत्तेरप्रवृत्तेर्वेति शेषः। अतिरोहितार्थमस्य भाष्यम्॥ १४॥

## सू० रूपादिमत्त्वाच्च विपर्ययो दर्शनात्॥ १५॥

यत्किल भूतभौतिकानां (६)मूलकारणं तद्रूपादिमान्परमाणुर्नित्य इति भवद्भिरभ्युपेयते,

---

(१) संयोगस्यापि स्वरूपसम्बन्धोपपत्ते समवायो न स्यादित्याभिप्रायेण परिहरतीत्यर्थ। किमसम्बन्धत्वमुपाधि असमवायत्वं वा? नाद्य', संयेगे साध्याव्याप्तेरित्याह संयोगोपीति। समवायेन तुल्यन्यायत्वात्संयोगोप्यसम्बन्धः प्रसज्येत नचैव त्वयेष्यतेऽत. साध्याव्याप्तिरित्यर्थः।

(२) अगुणत्वे सत्यसम्बन्धत्व सम्बन्धापेक्षायामुपाधिस्तथाच न साध्याव्याप्तिरित्याशङ्कते यद्युच्येतेति।

(३) संयोगस्य गुणत्वमसिद्धमिति साध्याव्याप्तिस्तदवस्थैवेत्याह यद्यसमवाय इति। सम्बन्धान्तरसापेक्षेपि संयोगे नारूपगुणत्वे सत्यसम्बन्धत्वमस्मन्मते तस्यागुणत्वात्सम्बन्धत्वाचात साध्याव्याप्तिरित्यर्थः।

(४) समवायस्य कार्यत्वेऽपि समवायिकारणानपेक्षत्वेन समवायान्तरापेक्षा नास्तीति प्रभाकरमते प्रतिबन्द्या समवायान्तरापेक्षामुपपादयति तथाचेति।

(५) ननु संयोगस्यापि संयोगिभ्यामसम्बन्ध एवास्तु, तथा च कुतः प्रतिबन्दीति कश्चिदाशङ्कते यद्युच्येतेति। दूषयति तत्किमिति।

(६) अत्र परमाणुपक्षत्वे आश्रयासिद्धिर्वेदान्तिमतेऽनो मूलकारणमिति। तथाच मूलकारणमुभयपक्षसम्मतं पक्षस्तद्यदि रूपादिमत्तर्हि सावयवत्वायापाद्यमिति नाश्रयासिद्धिरित्यर्थः।

तस्य चेद्रूपादिमत्त्वमभ्युपेयते परमाणुष्वनित्यत्वविरुद्धे स्थौल्यानित्यत्वे प्रसज्येयातां, सोऽय प्रसङ्ग (१)एकधर्माभ्युपगमे धर्मान्तरस्य, नियता प्राप्तिर्हि प्रसङ्गलक्षणम्, तदनेन(२) प्रसङ्गे-न जगत्कारणप्रसिद्धये प्रवृत्तं साधनं(३) रूपादिमन्नित्यपरमाणुसिद्धेः प्रच्याव्य ब्रह्मगोचरतां नीयते । तदेतद्वैशेषिकाभ्युपगमोपन्यासपूर्वकमाह—"**सावयवानां द्रव्याणामि**"ति (पृ० ५२६ पं० ३)। (४) परमाणुनित्यत्वसाधनानि च तेषामुपन्यस्य दूषयति—"**यच्च नित्यत्वे कारणमि**"ति। "**सदि**"ति प्रागभावाद् व्यवच्छिनत्ति। "**अकारणव-दि**"ति घटादेः। "**यदपि द्वितीयमि**"ति। लब्धरूप हि क्वचित्किञ्चिदन्यत्र निषिध्यते, तेनानित्यमिति लौकिकेन निषेधेनान्यत्र नित्यत्वसद्भावः कल्पनीयस्ते चान्ये परमाणव इति। तन्न। आत्मन्यपि नित्यत्वोपपत्तेः, व्यपदेशस्य च प्रतीतिपूर्वकस्य तदभावे निर्मूलस्यापि दर्शनात्—यथे'ह वटे यक्ष' इति। "**यदपि नित्यत्वं तृतीयं कारणमविद्येति**" (पृ० ५२७ पं०५)। यदि सतां परमाणूनां परिदृश्यमानस्थूलकार्याणां प्रत्यक्षेण कारणाग्र-हणमविद्या तथा नित्यत्वमेवं सति द्व्यणुकस्यापि नित्यत्वम्। अथाद्रव्यत्वे सतीति विशेष्येत, तथासति न द्व्यणुके व्यभिचारः, तस्यानेकद्रव्यत्वेनाविद्यमानद्रव्यत्वानुपपत्तेः। तथाप्यकारण त्वमेव नित्यतानिमित्तमापद्येत यतोऽद्रव्यत्वमविद्यमानकारणभूतद्रव्यत्वमुच्यते तथा च पुनरुक्त मित्याह—"**तस्य चे**"ति। (५)अपि चाद्रव्यत्वे सति सत्त्वादित्यत एवेष्टार्थसिद्धेरविद्येति व्यर्थम्। अथाविद्यापदेन द्रव्यविनाशकारणद्वयाविद्यमानत्वमुच्यते, द्विविधो हि द्रव्यनाशहेतुरवयव-विनाशोऽवयवव्यतिषङ्गविनाशश्च, तदुभयं परमाणौ नास्ति तस्मान्नित्यः परमाणुः। न च सुखादिभिर्व्यभिचारः(६), तेषामद्रव्यत्वादित्याह—"**अथापी**"ति। निराकरोति—"**नाव श्यमि**"ति। यदि हि संयोगसचिवानि बहूनि द्रव्याणि द्रव्यान्तरमारभेरन्निति प्रक्रिया सिध्येत्, सिध्येद् द्रव्यद्वयमेव तद्विनाशकारणमिति, नत्वेतदस्ति, द्रव्यस्वरूपापरिज्ञानात्। न तावत् तन्त्वाधारस्तद्व्यतिरिक्तः पटो नामास्ति यः संयोगसचिवैस्तन्तुभिरारभ्येतेत्यु-क्तमधस्तात्(७) षट्पदार्थाश्च दूषयिष्यमे वक्ष्यति, किन्तु कारणमेव विशेषवदवस्थान्तरमा-पद्यमानं कार्यं, (८)तच्च सामान्यात्मकम्; तथा हि मृद्वा सुवर्णं वा सर्वेषु घटरुचकादिष्व-

---

(१) नन्वेवं रूपादिमत्त्वस्य ब्रह्मणि वेदान्तिभिरस्वीकारात्पक्षधर्मत्वासिद्धिः स्यादत आहैकेति। यदि पर्वतेऽनग्निमत्त्वमभ्युपगम्यते तर्ह्यधूमवत्त्वं स्यादित्यादावप्रमितस्यैवाभ्युपगममात्रेणापादकत्वदर्शनादिति भावः।

(२) ननु आरोपरूपेण तर्केण कथं पदार्थसिद्धिरत आहानेनेति।

(३) साधनमिति। विमतं सोपादानं भावकार्यत्वात्सम्मतवदिति सामान्यतः प्रवृत्तमनुमानमुक्ततर्को-पबृंहितं जगदुपादानं न स्पर्शवद् न चाणु नित्यत्वादत्यन्ताभाववदितितिरवाधसहकृतं नित्यव्यापकब्रह्मविषय क्रियत इ यर्थ।

(४) सत्यपि स्पर्शादिमत्त्वे मूलकारणस्य नित्यत्वमनुमानात्सिध्यतीत्यर्थात्सत्प्रतिपक्षतामाशङ्क्य दूषय-ति परमाणुनित्यत्वेति।

(५) कारणाभावादेव नित्यत्वसिद्धेः कारणाग्रहणोक्तिर्व्यर्थेत्यत आहापिचेति।

(६) परमाणुर्नित्यः अवयवविनाशावयवविभागरहितत्वादात्मवदित्यनुमाने नित्यसुखादौ हेतोः स-त्त्वेऽपि द्रव्यत्वे सतीति विशेषणदानान्न व्यभिचार इत्यर्थः।

(७) आरम्भणाधिकरणे (ब्र० अ० २ पा० १ सू० १४)।

(८) ननु विशेषावस्थापि संयोगपूर्वा स्यान्नेत्याह तच्चेति। एकं ह्यनुगतद्रव्य कारणभूतं सामान्यं न

नुगतं सामान्यमनुभूयते, न चैते घटरुचकादयो मृत्सुवर्णाभ्यां व्यतिरिच्यन्त इत्युक्तं, अग्रे च वक्ष्यामः । तस्मान्मृत्सुवर्णे एव तेनतेनाकारेण परिणममाने घट इति च रुचक इति च कपालशर्कराकणमिति च शकलकणिकाचूर्णमिति च व्याख्यायेते, (१)तत्र-तत्रोपादानयोर्मृत्सुवर्णयोः प्रत्यभिज्ञानात् , न तु घटादयो वा कपालादिषु कपालादयो वा घटादिषु च रुचकादयो वा शकलादिषु शकलादयो वा रुचकादिषु प्रत्यभिज्ञायन्ते यत्र कार्य-कारणभावो भवेत् । (२)न च विनश्यन्तमेव घटक्षण प्रतीत्य कपालक्षणोऽनुपादान एवो-त्पद्यते तत्किमुपादानप्रत्यभिज्ञानेनेति वक्तव्यम् , एतस्या अपि वैनाशिकप्रक्रियाया उपरिष्टाद् निराकरिष्यमाणत्वात् । तस्मादुपजनापायधर्माणो विशेषवस्थाः सामान्यस्योपादेयाः, सामा-न्यात्मा तूपादानम्, (३)एवं व्यवस्थिते यथा सुवर्णद्रव्यं काठिन्यावस्थामपहाय द्रवावस्थया परिणतं न च तत्रावयवविभागः सन्नपि द्रवत्वे कारणं परमाणूनां भवन्मते तदभावेन(४) द्रवत्वानुपपत्तेस्तस्माद्यथा परमाणुद्रव्यमग्निसंयोगात्काठिन्यमपहाय द्रवत्वेन परिणमते, (५)न च काठिन्यद्रवत्वे परमाणोरतिरिच्येते, एवं मृद्वा सुवर्णं वा सामान्यं पिण्डावस्थामपहाय कुलालहेमकारादिव्यापाराद् घटरुचकाद्यवस्थामापद्यते, न त्ववयविनाशात्तत्संयोगविनाशाद्वा विनष्टुमर्हन्ति घटरुचकादयः, न हि कपालादयोऽस्योपादानं तत्संयोगो वाऽसमवायिकार-णमपि तु सामान्यमुपादानं, तच्च नित्यं न च तत्संयोगसाचिवमेकत्वात् , संयोगस्य द्विष्ठ-त्वेनैकस्मिन्नभावात् । तस्मात्सामान्यस्य परमार्थसतोऽनिर्वाच्या विशेषावस्थास्तदधिष्ठाना भुजङ्गादय इव रज्ज्वाद्युपादाना उपजनापायधर्माण इति साम्प्रतम् । प्रकृतमुपसंहरति— "तस्मादि"ति ( पृ० ५२८ पं० ३ ) ॥ १५ ॥

## सू० उभयथा च दोषात् ॥ १६ ॥

(६)अनुभूयते हि पृथिवी गन्धरूपरसस्पर्शात्मिका स्थूला, आपो रसरूपस्पर्शात्मिकाः सूक्ष्माः, रूपस्पर्शात्मकं तेजः सूक्ष्मतरं, स्पर्शात्मको वायुः सूक्ष्मतमः । पुराणेऽपि स्मर्यते—

आकाशं शब्दमात्रं तु स्पर्शमात्रं समाविशत् ।
द्विगुणस्तु ततो वायुः शब्दस्पर्शात्मकोऽभवत् ॥

---

तस्य संयोग इत्यर्थः । कारणस्य सामान्यात्मकत्वमेवोपपादयति तथाहीति ।

( १ ) ननु व्यावृत्ता कपालशकलादय एव घटरुचकादीनारभ्यन्ते, किमनुगतद्रव्यकल्पनया इत्यत आह तत्र तत्रेति । उपादानव्यवस्थायाः तादात्म्यनिबंधनत्वात्तयोरनुवृत्तयोरेव महीहेम्नोर्घटरुचकादिष्वनुभूय ते न व्यावृत्तेष्विति सामान्यात्मकमेव द्रव्यमुपादानमन्यथा कुम्भकारस्याप्युपादानत्वापत्तिरिति भावः ।

( २ ) बौद्धमतमाशङ्क्य निराकरोति न चेति ।

( ३ ) 'तदा घृतकाठिन्यविलयनवदि'ति भाष्यं व्याचक्षाण आह एवमिति ।

( ४ ) नैयायिकमते परमाणोर्निरवयवत्वेनावयवविभागाद्यभावेन ।

( ५ ) न केवलं परमाणुदृष्टान्तेऽवयवविभागाद्यभाव उपजीव्य किन्तु कार्यकारणभेदाभावोऽपीत्याह नचेति ।

( ६ ) गुणानामन्यत्वाद्द्रव्यस्य निरवयवत्वाविघातात्परमाणुषु गुणोपचयापचयाभ्यामुपचितापचि-तावयवत्वप्रसञ्जनमयुक्तमित्याशङ्क्य, परमाणूनां गुणसमुदायत्वं वदन्तु कार्यस्य गुणसमुदायत्वं तद्वृद्धि-ह्रासाभ्यां च स्थौल्यसौक्ष्म्ये दर्शयति अनुभूयत इत्यादिना ।

रूपं तथैवाविशतः शब्दस्पर्शगुणावुभौ ।
त्रिगुणस्तु ततो वह्निः स शब्दस्पर्शवान् भवेत् ॥
शब्दः स्पर्शश्च रूपं च रसमात्रं समाविशत् ।
तस्माच्चतुर्गुणा आपो विज्ञेयास्तु रसात्मिकाः ॥
शब्दः स्पर्शश्च रूपं च रसश्चेद्गन्धमाविशत् ।
संहतान् गन्धमात्रेण तानाचष्टे महीमिमाम् ॥
तस्मात्पञ्चगुणा भूमिः स्थूला भूतेषु दृश्यते ।
शान्ता घोराश्च मूढाश्च विशेषास्तेन(१) ते स्मृताः ॥
परस्परानुप्रवेशाद्धारयन्ति परस्परम् ।

तेन गन्धादयः परस्परं संहन्यमानाः पृथिव्यादयस्तथा च यथायथा संहन्यमानानामुपचयस्तथातथा संहतस्य स्थौल्यं यथायथाऽपचयस्तथातथा सौक्ष्म्यतारतम्यम्, तदेवमनुभवागमाभ्यामवस्थितमर्थं वैशेषिकैरनिच्छद्भिरप्यशक्यापह्नवमाह—"गन्धे"ति । अस्तु तावच्छब्दो वैशेषिकैस्तस्य पृथिव्यादिगुणत्वेनानभ्युपगमादिति चत्वारि भूतानि चतुस्त्रिद्व्येकगुणान्युदाहृतवान् । अनुभवागमसिद्धमर्थमुक्त्वा विकल्प्य दूषयति—"तद्वत्" । स्थूलपृथिव्यादिवत् । "परमाणवोऽपी"ति । "उपचितगुणानां मूर्त्युपचयात्"उपचितसंहन्यमानानां, (२)संघातोपचयात्"अपरमाणुत्वप्रसङ्गः" स्थूलत्वादिति । (३)यस्तु ब्रूते न गन्धादिसंघातः परमाणुरपि तु गन्धाद्याश्रयो द्रव्यं, न च गन्धादीनां तदाश्रयकाणामुपचयेऽपि द्रव्यस्योपचयो भवितुमर्हत्यन्यत्वादिति तं प्रत्याह—"न चान्तरेणापि मूर्त्युपचयं" द्रव्यस्वरूपोपचयमित्यर्थः । कुतः?"कार्येषु भूतेषु गुणोपचये मूर्त्युपचयदर्शनात्" (४)न तावत्परमाणवो रूपतो गृह्यन्ते किन्तु कार्यद्वारा, कार्यं च न गन्धादिभ्यो भिन्नं यदा न तदाधारतया गृह्यतेऽपि तु तदात्मकतया तथा च तेषामुपचये तदुपचितं दृष्टमिति परमाणुभिरपि तत्कारणैरेवं भवितव्यं, तथा चाऽपरमाणुत्वं स्थूलत्वादित्यर्थः । द्वितीयं विकल्पं दूषयति—"अकल्प्यमाने तूपचितापचितगुणत्वे" इति । "अथ सर्वे चतुर्गुणा" इति ( पृ० ५२९ प० २ ) । यद्यप्यस्मिन्कल्पे सर्वेषां स्थौल्यप्रसङ्गस्तथाप्यतिस्फुटतयोपेक्ष्य दूषयति—"ततोऽप्स्वपी"ति । वायो रूपवत्त्वेन चाक्षुषत्वप्रसङ्ग इत्यपि द्रष्टव्यम् ॥ १६ ॥

---

( १ ) तेनेति । येन कारणेनामिलितास्तेन कारणेन स्थूला सन्तस्ते विशेषा व्यावृत्तव्यवहारवन्तस्तत्त्वैकत्वादिना शान्तघोरमूढरूपा परस्परं गन्धादीनामनुप्रवेशाद्द्रव्यसंज्ञां प्राप्य रसादयः पृथिवी भूत्वा गन्धं रूपादय आपो भूत्वा रसं स्पर्शादयस्तेजो भूत्वा रूपं शब्दस्पर्शसमुदायश्च वायुर्भूत्वा स्पर्शं धारयन्तीत्यर्थः ।

( २ ) उपचयमात्रेण न सङ्घातात्मकमूर्ताधिक्यमत सहन्यमानानामिति व्याख्या । सङ्घातेति मूर्तशब्दव्याख्यानम् ।

( ३ ) नैयायिकः, आगममनादृत्यैवं ब्रूते इत्यर्थः ।

( ४ ) ननु वैदान्तिभिः परमाणुषु गुणोपचयान्मूर्त्युपचयः साध्यते तत्र च कार्येषु तदुपचयान्मूर्त्युपचयप्रदर्शनं किमर्थं कृतम् ? न तावद्दृष्टान्तत्वेन प्रदर्शनं युक्तं साध्यसमत्वात्, नापि हेतुत्वेन व्यधिकरणत्वादिति नैयायिकाशङ्कायामाह न तावदिति ।

## सू० अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥

निगदव्याख्यातेन भाष्येण व्याख्यातम् । संप्रत्युत्सूत्रं भाष्यकृद्वैशेषिकतन्त्रं दूषयति—**"अपि च वैशेषिका"** इति । द्रव्याधीनत्वं द्रव्याधीननिरूपणत्वं,(१) न हि यथा गवाश्वमहिषमातङ्गाः परस्परानधीननिरूपणाः स्वतन्त्रा निरूप्यन्ते, वह्न्याद्यधीनोत्पत्तयो वा धूमादयो यथा वह्न्याद्यनधीननिरूपणाः स्वतन्त्रा निरूप्यन्ते, एवं गुणादयो द्रव्याद्यनधीननिरूपणाः, अपि तु यदायदा निरूप्यन्ते तदातदा तदाकारतयैव प्रथन्ते न तु प्रथायामेषामस्ति स्वातन्त्र्यम्, तस्मान्नातिरिच्यन्ते द्रव्यादपि तु द्रव्यमेव सामान्यरूपं तथातथा प्रथत इत्यर्थः(२) । द्रव्यकार्यत्वमात्रं गुणादीनां द्रव्याधीनत्वमिति मन्वानश्चोदयति—**"नन्वग्नेरन्यस्यापी"ति** (पृ० ५३० पं० ३) । परिहरति—**"भेदप्रतीतास्त्व"ति** । न तदधीनोत्पादतां तदधीनत्वमाचक्ष्महे किन्तु तदाकारतां तथा च न व्यभिचार इत्यर्थः । शङ्कते(३)—**"गुणानां द्रव्याधीनत्वं द्रव्यगुणयोरयुतसिद्धत्वादिति यदुच्येत"** । यत्र हि द्वावाकारिणौ विभिन्नाभ्यामाकाराभ्यामवगम्येते, तौ सम्बद्धावसम्बद्धौ वा वैयधिकरण्येन प्रतिभासेते यथेह कुण्डे दधि यथा वा गौरश्व इति न तथा गुणकर्मसामान्यविशेषसमवायास्तेषां द्रव्याकारतयाकारान्तरायोगेन द्रव्यादाकारिणोऽन्यत्वेनाकारितया व्यवस्थानाभावात् सेयमयुतसिद्धिस्तथा च सामानाधिकरण्येन प्रथेत्यर्थः । तामिमामयुतसिद्धिं विकल्प्य दूषयति—**"तत्पुनरयुतसिद्धत्व"मिति** । तत्रापृथग्देशत्वं तदभ्युपगमेन विरुध्यत इत्याह—**"अपृथग्देशत्वमि"ति** । (४)यदि तु संयोगिनोः कार्ययोः संबन्धिभ्यामन्यदेशत्वं युतसिद्धिस्ततोऽन्याऽयुतसिद्धिः, नित्ययोस्तु संयोगिनोर्द्वयोरन्यतरस्य वा पृथग्गतिमत्त्वं युतसिद्धिस्ततोऽन्याऽयुतसिद्धिस्तथा चाकाशपरमाण्वोः परमाण्वोश्च संयुक्तयोर्युतसिद्धिः सिद्धा भवति, गुणगुणिनोश्च शौक्ल्यपटयोरयुतसिद्धिः सिद्धा भवति, नहि तत्र शौक्ल्यपटाभ्यां संबन्धिभ्यामन्यदेशौ शौक्ल्यपटौ, सत्यपि पटस्य तदन्यतन्तुदेशत्वे शौक्ल्यस्य सम्बन्धिपटदेशत्वात् । तन्न । नित्ययोरात्माकाशयोरजसंयोगे उभयस्या अपि युतसिद्धेरभावात्, नहि तयोः पृथगाश्रयाश्रितत्वमनाश्रयत्वात्, नापि द्वयोरन्यतरस्य वा पृथग्गतिमत्त्वममूर्तत्वेनोभयोरपि निष्क्रियत्वात् । न चाजसंयोगो नास्ति, तस्यानुमानसिद्धत्वात् । तथाह्याकाशमात्मसंयोगि मूर्तद्रव्यसम्बन्धित्वात् घटादिवदित्यनुमानम् । (५)दूषण·

---

(१) ननु द्रव्योत्पाद्यत्वं केषाञ्चिद्गुणानां सामान्यादीनां च तदभावात् । द्रव्याधीनत्वमेवोपपादयति नहीति ।

(२) ननु पूर्वं वेदान्तिभिर्गुणसंघातत्वं द्रव्यस्योक्तमधुना कथं गुणादेर्द्रव्यमात्रत्वमुच्यत इति चेन्न । पूर्वं स्वमतेन तथोक्तमिदानीं वैशेषिकमतावलम्बनेन द्रव्यमतिरिक्तमभ्युपेत्य द्रव्यसामानाधिकरण्यप्रतीत्या गुणादेर्द्रव्यमात्रत्वमुच्यत इति न विरोधः ।

(३) शुक्लत्वं घटवृत्ति शौक्ल्यवृत्तित्वात्सत्त्ववदित्यनुमानमभिप्रेत्य तदनुकूलत्वेन सामानाधिकरण्यप्रतीतिर्वेदान्तिभिरुक्ता तस्या अन्यथासिद्धिं शङ्कते इत्यर्थः । भेदेपि सामानाधिकरण्यं सम्भवतीति शङ्कार्थः ।

(४) एकदेशत्वमपृथग्देशत्वं भाष्ये दूषितम्, स्वयन्तु प्रकारान्तरेणापृथग्देशत्वमाशङ्कते, तत्र तात्प्रतियोगिभूतं पृथग्देशत्वमाह नैयायिकमतेन यदि त्विति ।

(५) अभ्युपेत्यापि वर्णितामयुतसिद्धिं दोषान्तरमाह पृथगाश्रयाश्रयित्वमिति ।

आश्रयाश्रयित्वपृथग्गतिमत्त्वलक्षणयुतसिद्धेरन्या त्वयुतासिद्धिर्यद्यपि नाभ्युपेतविरोधमावहति, तथापि न सामानाधिकरण्यप्रथामुपपादयितुमर्हति । एवंलक्षणेऽपि हि समवाये गुणगुणिनो-रभ्युपगम्यमाने 'संबद्धे' इति प्रत्ययः स्यान्न तादात्म्यप्रत्ययः । अस्य चोपपादनाय सम-वाय आस्थीयते भवद्भिः । स चेदास्थितोऽपि न प्रत्ययमिममुपपादयेत् कृतं तत्कल्प-नया । (१)न च प्रत्यक्षः सामानाधिकरण्यप्रत्ययः समवायगोचरः, तद्विरुद्धार्थत्वात्, तद्गोचरत्वे हि पटे शुक्ल इत्येवमाकारः स्यान्न तु पटः शुक्ल इति । (२)न च शुक्लपदस्य गुणविशिष्टगुणिपरत्वादेवं प्रथेति साम्प्रतम् । नहि शब्दवृत्त्यनुसारि प्रत्यक्षम् । नह्य-ग्निर्माणवक इत्युपचरिताग्निभावो माणवकः प्रत्यक्षेण दहनात्मना प्रथते । न चायमभे-दविभ्रमः समवायनिबन्धनो भिन्नयोरपीति वाच्यम् । गुणादिसद्भावे तद्भेदे च प्रत्य-क्षानुभवादन्यस्य प्रमाणस्याभावात्तस्य च भ्रान्तत्वे सर्वाभावप्रसङ्गात् । तदाश्रयस्य तु भेद-साधनस्य तद्विरुद्धतयोत्थानासम्भवात् । तदिदमुक्तं **"तस्य तादात्म्येनैव प्रतीयमान-त्वादि"**ति ( पृ० ५३१ पं० २ ) अपि चायुतसिद्धशब्दोऽपृथगुत्पत्तौ मुख्यः, सा च भवन्मते न द्रव्यगुणयोरस्ति, द्रव्यस्य प्राक् सिद्धेर्गुणस्य च पश्चादुत्पत्तेस्तस्मा-न्मिथ्यावादोऽयमित्याह—**"युतसिद्ध्यो"**रिति । अथ भवतु कारणस्य युतसिद्धिः, कार्यस्य त्वयुतासिद्धिः कारणातिरेकेणाभावाद्, इत्याशङ्क्यान्यथा दूषयति **"एवम-पी"**ति । सम्बन्धिद्वयाधीनसद्भावो हि सम्बन्धो नासत्येकस्मिन्नपि सम्बन्धिनि भवितुमर्हति, न च समवायो नित्यः स्वतन्त्र इति चोक्तमधस्तात् । (३)न च कारणसमवायादनन्या का-र्यस्योत्पत्तिरिति शक्यं वक्तुम्, एवं हि सति समवायस्य नित्यत्वाभ्युपगमात्कारणवैयर्थ्यप्र-प्रसङ्गः । (४)उत्पत्तौ च समवायस्य सैव कार्यस्यास्तु किं समवायेन । सिद्धयोस्तु सम्बन्धे युतसिद्धिप्रसङ्गः । न चान्याऽयुतासिद्धिः सम्भवतीत्येतदुक्तम्, ततश्च यदुक्तं वैशेषिकै'र्युतसि-द्ध्यभावात्कार्यकारणयोः संयोगविभागौ न विद्येते' इतीदं दुरुक्तं स्यात्, युतसिद्ध्यभावस्यैवा-भावात् । एतेना'प्राप्तिसंयोगौ युतसिद्धि'रित्यपि लक्षणमनुपपन्नम् । मा भूदप्राप्तिः कार्यका-रणयोः प्राप्तिस्त्वनयोः संयोग एव कस्मान्न भवति, तत्रास्या असंयोगत्वायाऽन्या युतसिद्धिर्व-क्तव्या । तथा च सैवोच्यतां किमनया (५)परस्पराश्रयदोषग्रस्तया । न चान्या सम्भवती-

---

( १ ) ननु समवायो न तादात्म्यप्रत्ययोपपादकः किन्तु सामानाधिकरण्यप्रत्ययविषय एवेत्याशङ्काया-माह न चेति ।

( २ ) नचेति । शुक्लत्वमित्यादित्वतलादेर्निष्कृष्टगुणाभिधायकत्वेन शुक्लशब्दस्य द्रव्यनिलीनगुणवा-चित्वेन द्रव्ये लाक्षणिकत्वात्सामानाधिकरण्यमतः कथं द्रव्यगुणयोरभेदप्रतिभानमित्यभिप्रायः शङ्काया बोध्यः । नहीतीत्युत्तरार्थस्तु शाब्दो हि व्यवहारो लाक्षणिको न प्रत्यक्षप्रत्यय इति स्फुट एव ।

( ३ ) ननु सम्बन्धिन्यसति समवायो न भवतीति विप्रतिषिद्धमेतत्, उत्पत्तिर्हि समवायः, उत्पत्ति-श्च सत्येव कार्ये भवति अन्यथा तद्वैयर्थ्यादित आह न चेति ।

( ४ ) नित्यसमवायस्योत्पत्तित्वे कार्योत्पत्त्यर्थं कारणवैयर्थ्यं चेत्तर्ह्यनित्योऽस्तु, तत्राह उत्पत्तौ चेति । अथ समवायादन्या कार्यस्योत्पत्तिरुत्पन्नस्य च समवायस्तत्राह सिद्धयोस्त्विति ।

( ५ ) प्राप्तेः कार्यकारणसम्बन्धस्यासंयोगत्वसिद्धौ तद्व्यावृत्तिसमर्थसंयोगपदघटयुतसिद्धिलक्षणस्य सिद्धिस्तत्सिद्धौ च तल्लक्षितयुतसिद्धिराहित्येन कार्यकारणसम्बन्धस्यासंयोगत्वसिद्धिरिति परस्पराश्रयदो-षोऽत्र बोध्यः ।

स्युक्तम् । (१)यद्युच्येताप्राप्तिपूर्विका प्राप्तिरन्यतरकर्मजोभयकर्मजा वा संयोगोः, यथा स्थाणुश्येनयोर्मल्लयोर्वा, न च तन्तुपटयोः सम्बन्धस्तथा, उत्पन्नमात्रस्यैव पटस्य तन्तुसम्बन्धात्, तस्मात्समवाय एवायमित्यत आह--"यथा चोत्पन्नमात्रस्ये"ति । (२)संयोगजोऽपि हि संयोगो भवद्भिरभ्युपेयते न क्रियाज एवेत्यर्थः । न चाप्राप्तिपूर्विकैव प्राप्तिः संयोगः, आत्माकाशसंयोगे नित्ये तदभावात् । कार्यस्य चोत्पन्नमात्रस्यैकस्मिन् क्षणे कारणप्राप्तिविरहाच्चेति(३) । अपि च सम्बन्धिरूपातिरिक्ते सम्बन्धे सिद्धे तदवान्तरभेदाय लक्षणभेदोऽनुश्रीयेत स एव तु सम्बन्ध्यतिरिक्तोऽसिद्धः, उक्तं हि 'परस्तादतिरिक्तः सम्बन्धिभ्यां सम्बन्धोऽसम्बद्धो न सम्बन्धिनौ घटयितुमीष्टे, सम्बन्धिसम्बन्धे चानवस्थितिः, तस्मादुपलब्ध्यनुभवाभ्यां न कार्यस्य कारणादन्यत्वमपि तु कारणस्यैवायमनिर्वाच्यः परिणामभेद इति । तस्मात्कार्यस्य कारणादनतिरेकात्किं केन सम्बद्धम्, संयोगस्य च संयोगिभ्यामनतिरेकात् कस्तयोः संयोग इत्याह--"नापि संयोगस्ये"ति । विचारासहत्वेनानिर्वाच्यतामस्या(४) परिभावयन्नाशङ्कते--"सम्बन्धिशब्दप्रत्ययव्यतिरेकेणे"ति । निराकरोति--(५)"नैकत्वेऽपि स्वरूपबाह्यरूपापेक्षये"ति । तत्तदनिर्वचनीयानेकविशेषावस्थाभेदापेक्षयैकस्मिन्नपि नानाबुद्धिव्यपदेशोपपत्तिरिति । यथैको देवदत्तः स्वगतविशेषापेक्षया मनुष्यो ब्राह्मणोऽवदातः, स्वगतावस्थाभेदापेक्षया बालो युवा स्थविरः, स्वक्रियाभेदापेक्षया श्रोत्रियः, परापेक्षया तु पिता पुत्रः पौत्रो भ्राता जामातेति । निदर्शनान्तरमाह--"यथा चैकापि सती रेखे"ति ( पृ० ५३२ पं० २ )। दार्ष्टान्तिके योजयति--"तथा सम्बन्धिनो"रिति । अङ्गुल्योर्नैरन्तर्यं संयोगो, कुण्डबदरयोरौत्तराधर्यं संयोगः । कार्यकारणयोस्तु तादात्म्येऽप्यनिर्वाच्यस्य कार्यस्य भेदं विवक्षित्वा संबन्धिनोरित्युक्तम् । "नापि सम्बन्धिविषयत्वे सम्बन्धशब्दप्रत्ययो"रित्येतदप्यनिर्वाच्यभेदाभेप्रायम् । अपि चादृष्टवत्क्षेत्रज्ञसंयोगात्परमाणुमनसोश्चाद्यं कर्म भवद्भिरिष्यते । "अग्नेरूर्ध्वज्वलनं, वायोस्तिर्यक्पवनमणुमनसोश्चाद्यं कर्मेत्यदृष्टकारितानी"ति ( अ० ५ आ० सू० १३ ) वचनात् । न चाणुमनसोरात्मनाऽप्रदेशेन संयोगः सम्भवति, संभवे चाणुमनसोरात्मव्यापित्वात् प-

---

( १ ) अप्राप्तिपूर्विका प्राप्तिरन्यतरकर्मजोभयकर्मजा वा प्राप्तिरिति लक्षणत्रय संयोगस्य कार्यकारण सम्बन्धे न सम्भवतीति नान्योन्याश्रयो दोष इत्यभिप्रायक नैयायिकमतमाह यद्युच्येतेति ।

( २ ) तन्तुभ्य पटे उत्पन्ने तत्क्षण एव तन्त्वाकाशसंयोगजन्य पटाकाशसंयोग इष्यते नैयायिकैस्तच्च न कर्मजस्तत प्राक् पटसत्ताक्षणे पटे कर्माभावादतो यथोक्तलक्षणं तत्राव्यापक स्यादित्याशयेनाह संयोगजोऽपीति । तर्ह्यप्राप्तिपूर्विका प्राप्तिरित्येतावदेव लक्षणमस्तु तथाच नाव्याप्ति, नाप्यन्योन्याश्रयः संयोगपदानुपादानादिति तत्राह नचेति ।

( ३ ) अनेनोक्तलक्षणस्यातिव्याप्ति सूचिता–असति प्राप्तरि प्राप्त्यनुपपत्तेः कार्यसत्तोत्तरक्षणे प्राप्तिरिति क्षणमात्रमप्राप्ति सत्त्वात् ।

( ४ ) संयोगस्य । अत्र संयोग सम्बन्धिभिन्न तद्भिन्नलक्षणशब्दधीगम्यत्वाद्वस्त्वन्तरवदिति पूर्वपाक्षिमतेनानुमानप्रयोगो द्रष्टव्य ।

( ५ ) उक्तानुमानेन काल्पनिकभेदसाधने सिद्धसाधनम्, वस्तुभेदसाधने तु व्यभिचार इत्याशयेन समाधत्ते नैकत्वेऽपीति । स्वरूपेणैव मनुष्यादिशब्दमागेव पुत्राद्यपेक्षया पितेत्यादिविलक्षणशब्दधीगम्यो भवति न च भिद्यत इति व्यभिचार इति भाव ।

रसमहत्त्वेनानणुत्वप्रसङ्गात् । न च प्रदेशवृत्तिरनयोरात्मना संयोगोऽप्रदेशत्वादात्मनः, कल्पनायाश्च वस्तुतत्त्वव्यवस्थापनासहत्वादतिप्रसङ्गादित्याह—"**तथाऽण्वात्ममनसो**"-मिति । किंचान्यद् द्वाभ्यामणुभ्यां कारणाभ्यां सावयवस्य कार्यस्य द्व्यणुकस्याकाशेनेव संश्लेषानुपपत्तिः । संश्लेषः (१)सङ्ग्रहो यत एकसम्बन्ध्याकर्षे सम्बन्ध्यन्तराकर्षो भवति तस्यानुपपत्तिरिति । अत एव संयोगादन्यः कार्यकारणद्रव्ययोराश्रयाश्रितभावोऽन्यथा नोपपद्यत इत्यवश्यं कल्पनीयः समवाय इति चेत् । निराकरोति—"**न**" कुतः ? "**इतरेतराश्रयत्वात्**" (पृ० ५३३ पं० ५) । तद्विभजते—"**कार्यकारणयोर्हि**"ति । "**किंचान्यत् परमाणूना**"मिति । ये हि परिच्छिन्नास्ते सावयवाः, यथा घटादयः, तथा च परमाणवस्तस्मात्सावयवा अनित्याः स्युः, अपरिच्छिन्नत्वे चाकाशादिवत्परमाणुत्वव्याघातः । शङ्कते—"**यांस्त्व**मि"ति । निराकरोति—"**न स्थूले**"ति । किं सूक्ष्मत्वात्परमाणवो न विनश्यन्त्यथ निरवयवतया, तत्र पूर्वस्मिन् कल्पे इदमुक्तम्—"**वस्तुभूतापी**"ति भवन्मते, उत्तरं कल्पमाशङ्क्य निराकरोति—"**विनश्यन्तोऽप्यवयवविभागेने**"ति (पृ० ५३४ पं० २)। "**यथा हि घृतसुवर्णादीनामविभज्यमानावयवानामपी**"ति । यथा हि पिष्टपिण्डोऽविनश्यदवयवसंयोग एव प्रथते प्रथमानश्चावशफाकारतां नीयमानः पुरोडाशतामापद्यते, तत्र पिण्डो नश्यति पुरोडाशश्चोत्पद्यते, (२)न हि तत्र पिण्डावयवसंयोगा विनश्यन्ति, अपि तु संयुक्ता एव सन्तः परं प्रथनेन नुद्यमाना अधिकदेशव्यापका भवन्ति, एवमग्निसंयोगेन सुवर्णद्रव्यावयवाः संयुक्ता एव सन्तो द्रवीभावमापद्यन्ते, न तु मिथो विभज्यन्ते । तस्माद्यथावयवसंयोगविनाशावन्तरेणापि सुवर्णपिण्डो विनश्यति संयोगान्तरोत्पादमन्तरेण च सुवर्णे द्रव उपजायते, एवमन्तरेणाप्यवयवसंयोगविनाशं परमाणवो विनङ्क्ष्यन्त्यन्ये चोत्पत्स्यन्त इति सर्वमवदातम् ॥ १७ ॥

## सू० समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

(३)अवान्तरसङ्गतिमाह—"**वैशेषिकराद्धान्त**" इति (पृ० ५३५ पं० ५)। वैशेषिकाः खल्वर्धवैनाशिका(४)स्ते हि परमाण्वाकाशदिक्कालात्ममनसां च सामान्यविशेषसमवायानां च गुणानां च केषांचिन्नित्यत्वमभ्युपेत्य शेषाणां निरन्वयविनाशमुपयन्ति, तेन तेऽर्धवैनाशिकास्तेन तदुपन्यासो वैनाशिकत्वसाम्येन सर्ववैनाशिकान् स्मारयतीति तदनन्तरं वैनाशिकमतनिराकरणमिति । अर्धवैनाशिकानां स्थिरभाववादिनां समुदायारम्भ उपपद्येतापि

---

(१) ननु निरवयवसावयवयोः समवायसम्भवात्कथं संश्लेषानुपपत्तिरत आह सङ्ग्रह इति । एकाकर्षणे इतराकर्षणं हि सावयवानामङ्कुरतरुशाखादीनां दृश्यत इत्यर्थः ।

(२) नहीति । यथा संवेष्टनेन पिण्डीकृते पटे प्रसारणसमये तदवयवसंयोगा न नश्यन्ति किन्त्ववस्थितसंयोगानामेव तेषामधिकदेशव्याप्त्या पिण्डावस्था नश्यति तथा पिष्टस्यापीति ।

(३) वैशेषिकनिरासोत्तरं वैनाशिकनिरासे इत्यर्थः ।

(४) परिमाणभेदेन देहादेराशुतरविनाशादर्धवैनाशिका वैशेषिका इतीदमेव वक्ष्यति निरन्वयविनाशमित्यादिना । गुणानां केषाञ्चित्–परमाणुपरिमाणादीनाम् , अभेदे हि कार्यकारणयोः कार्यनाशेऽपि कारणरूपेण तिष्ठतीति न निरन्वयनाशः इति बोध्यम् ।

क्षणिकभाववादिनां त्वसौ दूरापेत इत्युपपादयिष्यामस्तेन नतरामित्युक्तम् । तदिदं दूषणाग वैनाशिकमतमुपन्यसितुं तत्प्रकारभेदानाह—"स च बहुप्रकार" इति । वादिवैचित्र्यात् खलु केचित्सर्वास्तित्वमेव राद्धान्तं प्रतिपद्यन्ते, केचिज्ज्ञानमात्रास्तित्वं, केचित्सर्वशून्यताम्, अथ तत्रभवतां (१)सर्वज्ञानां तत्त्वप्रतिपत्तिभेदो न सम्भवति तत्त्वस्यैकरूप्यादित्येतदपरितोषेणाह—"विनेयभेदाद्वा" । हीनमध्यमोत्कृष्टधियो हि शिष्या भवन्ति । तत्र ये हीनमतयस्ते सर्वास्तित्ववादेन तदाशयानुरोधात् शून्यतायामवतार्यन्ते । ये तु मध्यमास्ते ज्ञानमात्रास्तित्वेन शून्यतायामवतार्यन्ते । ये तु प्रकृष्टमतयस्तेभ्यः साक्षादेव शून्यतातत्त्वं प्रतिपाद्यते । यथोक्तं बोधिचित्तविवरणे(२)—

> (३)देशना लोकनाथानां सत्त्वाशयवशानुगाः ।
> भिद्यन्ते बहुधा लोक उपायैर्बहुभिः पुनः ॥
> गम्भीरोत्तानभेदेन क्वचिच्चोभयलक्षणा ।
> भिन्नापि देशनाऽभिन्ना शून्यताद्वयलक्षणा ॥ इति ।

यद्यपि वैभाषिकसौत्रान्तिकयोरवान्तरमतभेदो(४)ऽस्ति, तथापि सर्वास्तितायामस्ति सम्प्रतिपत्तिरित्येकीकृत्योपन्यासः, तथा च त्रित्व(५)मुपपन्नमिति । पृथिवी खरस्वभावा, आपः स्नेहस्वभावाः, अग्निरुष्णस्वभावः, वायुरीरणस्वभावः । ईरणं प्रेरणम् । भूतभौतिकानुक्त्वा चित्तचैत्तिकानाह—"तथारूपे"ति । रूप्यन्ते एभिरिति रूप्यन्त इति च व्युत्पत्त्या सविषयाणीन्द्रियाणि रूपस्कन्धः । यद्यपि रूप्यमाणाः पृथिव्यादयो बाह्यास्तथापि कायस्थत्वाद्वा(६)इन्द्रियसम्बन्धाद्वा भवन्त्याध्यात्मिकाः । विज्ञानस्कन्धोऽहमित्याकारो रूपादिविषय इन्द्रियादिजन्यो वा दण्डायमानः(७) । वेदनास्कन्धो—या प्रियाप्रियानुभयविषयस्पर्शे सुखदुःखतद्रहितविशेषावस्था चित्तस्य जायते स वेदनास्कन्धः । संज्ञास्कन्धः—सविकल्पप्रत्ययः संज्ञासंसर्गयोग्यप्रतिभासो यथा डित्थः कुण्डली गौरो ब्राह्मणो गच्छतीत्येवंजातीयकः । संस्कारस्कन्धो—रागादयः क्लेशा उपक्लेशाश्च मदमानादयो धर्माधर्मौ चेति । तदेतेषां समुदायः पञ्चस्कन्धी । "तस्मिन्नुभयहेतुकेऽपी"ति । बाह्ये पृथिव्याद्यणुहेतुके भूतभौतिकसमुदाये रूपविज्ञानादिस्कन्धहेतुके च समुदाये आध्यात्मिकेऽभिप्रेयमाणे तदप्राप्तिस्तस्य समुदायस्यायुक्तता । कुतः ? "समुदायिनामचेतनत्वात्" । चेतनो

---

(१) सौत्रान्तिकादीनाम्, विप्रतिपत्तिर्हि पुरुषापराधाद्भवति यथा स्थाणौ, वस्तुवशाद्वा यथा क्रियायामत्र तु न प्रथम इत्युक्तं सर्वज्ञानामिति । न द्वितीय इत्यभिहितं तत्त्वस्येति ।

(२) तदाख्ये बुद्धाभिप्रायविवरणग्रन्थे ।

(३) देशनेति । वृद्धानां प्राण्यभिप्रायवशानुसारिण आगमा· शून्यताप्रतिपत्त्युपाये क्षणिकसर्वास्तित्वादिभिर्लोके श्रोतृसमुदाये पुनर्बहुधा भिद्यन्ते । भेदमाह गम्भीरेति । अगाधतद्विपरीतस्थूलदृष्टियोग्यस्तत्त्वरूपेण क्वचित् ग्रन्थप्रदेशे उभयलक्षणा—ज्ञानमात्रास्तित्वबाह्यार्थास्तित्वलक्षणा तत्प्रतिपादिनी भिन्नापि देशना शून्यतैवाद्वयाऽनलक्षणाऽनत्तात्पर्यवत्यभिन्नेत्यर्थ ।

(४) प्रत्ययवैचित्र्यादर्थोऽनुमेय इति सौत्रान्तिकाः । प्रत्यक्ष इति वैभाषिका इति मतयोर्भेदो द्रष्टव्य ।

(५) सर्वास्तित्व–विज्ञानास्तित्व–सर्वशून्यत्ववादत्रित्वम् ।

(६) कायाकारेण संहतत्वात्संहननामिन्द्रियसम्बन्धित्वाद्वेत्यर्थ ।     (७) प्रवाहापन्न ।

हि कुलालादिः सर्वं मृद्दण्डाद्युपसंहृत्य समुदायात्मकं घटमारचयन् दृष्टः, नह्यसति मृद्दण्डादिव्यापारिणि विदुषि कुलाले स्वयमचेतना मृद्दण्डादयो व्यापृत्य जातु घटमारचयन्ति, न चासति कुविन्दे तन्तुवेमादयः पटं वयन्ते(१), तस्मात्कार्योत्पादस्तदनुगुणकारणसमवधानाधीनस्तदभावे न भवति, कार्योत्पादानुगुणं च कारणसमवधानं चेतनप्रेक्षाधीनमसत्यां चेतनप्रेक्षायां न भवितुमुत्सहत इति कार्योत्पत्तिश्चेतनप्रेक्षाधीनत्वव्याप्ता व्यापकविरुद्धोपलब्ध्या चेतनानधिष्ठितेभ्यः कारणेभ्यो व्यावर्तमाना चेतनाधिष्ठितत्व एवावतिष्ठत इति प्रतिबन्धसिद्धि (२)। यद्युच्येत—अद्धा चेतनाधीनैव कार्योत्पत्तिरस्ति तु चित्तं चेतनं तद्धीन्द्रियादिविषयस्पर्शे सत्यभिज्वलत् तत्कारणचक्रं यथायथा कार्याय पर्याप्तं तथातथा प्रकाशयदचेतनानि कारणान्यधिष्ठाय कार्यमभिनिर्वर्तयती-ति, तत्राह **चित्ताभिज्वलनस्य च समुदायसिद्ध्यधीनत्वात्** ( पृ० ५३६ पं० )। न खलु बाह्याभ्यन्तरसमुदायसिद्धिमन्तरेण चित्ताभिज्वलनं ततस्तु तामिच्छन् दुरुत्तरमितरेतराश्रयमाविशेदिति । न च प्राग्भवीया चित्ताभिदा मिरुत्तरसमुदायं घटयति, घटनसमये तस्याश्चिरातीतत्वेन(३) सामर्थ्यविरहात् । अस्मद्राद्धान्तवदन्यस्य चेतनस्य भोक्तुः प्रशासितुर्वा स्थिरस्य सङ्घातकर्तुरनभ्युपगमात् । कारणविन्यासभेदं हि विद्वान् कर्ता भवति । न चान्वयव्यतिरेकावन्तरेण तद्विन्यासभेदं वेदितुमर्हति । न च स क्षणिकोऽन्वयव्यतिरेककालानवस्थायी ज्ञातुमन्वयव्यतिरेकावुत्सहते, अत उक्तं **"स्थिरस्ये"ति** । यद्युच्येत—असमवहितान्येव कारणानि कार्यं करिष्यन्ति परस्परानपेक्षाणि, कृतमत्र समवधाययित्रा चेतनेनेत्यत आह—**"निरपेक्षप्रवृत्त्यभ्युपगमे च"ति** । यद्युच्येत अस्त्वालयविज्ञानमहङ्कारास्पदं पूर्वापरानुसन्धातृ तदेव कारणानां प्रतिसन्धातृ भविष्यतीति, तत्राह—**"आशयस्यापी"ति** । यत्खल्वेकं यदि स्थिरमास्थीयेत ततो नामान्तरेणात्मैव । अथ क्षणिकम्, तत उक्तदोषापत्तिः(४)। (५)न च तत्संतानस्तस्यान्यत्वे नामान्तरेणात्माऽभ्युपगतोऽनन्यत्वे च विज्ञानमेव तच्च क्षणिकमेवेत्युक्तदोषापत्तिः। (६)आशेरतेऽस्मिन् कर्मानुभववासना इत्याशय आलयविज्ञानं तस्य । अपि च प्रवृत्तिः समुदायिनां व्यापारो न च क्षणिकानां व्यापारो युज्यते, व्यापारो हि व्यापारवदाश्रयस्तत्कारणकश्च लोके प्रसिद्धस्तेन व्यापारवता व्यापारात्पूर्वं व्यापारसमये च भवितव्यम् , अन्यथा कारणत्वाश्रयत्वयोरयोगात् । (७)न च समसमययोरस्ति कार्यकारणभावो

---

( १ ) तन्तून् सन्तन्वन्ति ।

( २ ) व्याप्तिसिद्धि । अत्र य कार्योत्पाद स तदनुकूलकारणमेलनाधीन इति व्याप्तिः, या कार्योत्पत्ति सा चेतनाधिष्ठितकारणजन्या इति च व्याप्तिरेव च कार्योत्पत्ति स्वव्यापकचेतनाधिष्ठितत्वाविरुद्धाऽनधिष्ठितेभ्य पराभिमतकारणेभ्यो व्यावर्तमाना चेतनाधिष्ठितकारणवत्त्वे सिद्धान्त्यभिमतेऽवतिष्ठत इति यार कार्योत्पत्ति सा२ चेतनाधिष्ठितकारणेभ्य एव जायत इति व्याप्तिसिद्धिरित्यर्थः । प्रयोगश्च–विमत चेतनाधिष्ठितमचेतनत्वात्तन्त्वादिवदिति बोध्य । ( ३ ) स्थायिवासनाया बौद्धैरनङ्गीकारादित्यर्थ ।

( ४ ) पूर्वापरानुसन्धातृत्वाभावादिदोषानुपपत्तिरित्यर्थ ।

( ५ ) क्षणिकविज्ञानसन्तानरूप आत्मा न चेत्यर्थः ।

( ६ ) आशयस्येत्यस्य व्युत्पत्तिमाह आशेरत इति ।

( ७ ) अस्त्वेव व्यापारलक्षण प्रवृत्ते क्रियायात्मत आह न चेति ।

नापि भिन्नकालयोराधाराधेयभावः । तथा च क्षणिकत्वहानिरित्याह—"क्षणिकत्वाऽभ्युप- गमाच्चे"ति ॥ १८ ॥

## (सू०) इतरेतरप्रत्ययत्वादिति चेन्नोत्प- त्तिमात्रनिमित्तत्वात् ॥ १९ ॥

"यद्यपीति" (पृ० ५३७ पं० ४) अयमर्थः–संक्षेपतो हि। (१)प्रतीत्यसमुत्पाद- लक्षणमुक्तं बुद्धेन 'इदं प्रत्ययफल'मिति । (२)'उत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवैषा धर्माणां धर्मता' । 'धर्मस्थितिता धर्मनियामकता प्रतीत्यसमुत्पादानुलोमते'ति । अथ पुन- रयं प्रतीत्यसमुत्पादो द्वाभ्यां कारणाभ्यां भवति हेतूपनिबन्धतः प्रत्ययोपनिबन्धतश्च । स पुनर्द्विविधः–बाह्य आध्यात्मिकश्च । तत्र बाह्यस्य प्रतीत्य समुत्पादस्य हेतूपनिबन्धः । यदिदं बीजादङ्कुरोऽङ्कुरात्पत्रं पत्रात्काण्डं काण्डान्नालो नालाद्गर्भो गर्भाच्छूकः शूकात्पुष्पं पुष्पात्फलमि- ति । (३)असति बीजेऽङ्कुरो न भवति, यावदसति पुष्पे फलं न भवति । सति तु बीजेऽङ्कुरो भवति, यावत्पुष्पे सति फलमिति । (४)तत्र बीजस्य नैवं भवति ज्ञानमहमङ्कुरं निर्वर्तया- मीति । अङ्कुरस्यापि नैवं भवति ज्ञानमहं बीजेन निर्वर्तित इति । एवं यावत्पुष्पस्य नैवं भवति, अहं फलं निर्वर्तयामीति । एवं फलस्यापि नैवं भवत्यहं पुष्पेणाभिनिर्वर्तितमिति । तस्मादसत्यपि चैतन्ये बीजादीनामसत्यपि चान्यस्मिन्नधिष्ठातरि कार्यकारणभावनियमो दृश्यते । उक्तो हेतूपनिबन्धः । प्रत्ययोपनिबन्धः प्रतीत्यसमुत्पादस्योच्यते–प्रत्ययो हेतूनां सम- वायः । हेतुं हेतुं प्रत्ययन्ते हेत्वन्तराणीति, तेषामयमानानां(५) भावः प्रत्ययः समवाय इति यावत् । यथा षण्णां धातूनां समवायाद्बीजहेतुरङ्कुरो जायते, तत्र पृथिवीधातुर्बीजस्य सङ्ग्रह- कृत्यं करोति, यतोऽङ्कुरः कठिनो भवति, अब्धातुर्बीजं स्नेहयति, तेजोधातुर्बीजं परिपाचयति, वायुधातुर्बीजमभिनिर्हरति,यतोऽङ्कुरो बीजान्निर्गच्छति, आकाशधातुर्बीजस्यानावरणकृत्यं करो- ति, ऋतुरपि बीजस्यपरिणामं करोति, तदेतेषामविकलानां धातूनां समवाये बीजे रोहत्यङ्कुरो· जायते नान्यथा । तत्र पृथिवीधातोर्नैवं भवत्यहं बीजस्य सङ्ग्रहकृत्यं करोमीति, यावदृतोर्नैवं भवत्यहं बीजस्य परिणामं करोमीति, अङ्कुरस्यापि नैवं भवत्यहमेभिः प्रत्ययैर्निर्वर्तित इति ।

---

(१) प्रतीत्य कारण प्राप्य, समुत्पादः कार्योत्पादः. कारणात्कार्योत्पादस्तस्य लक्षणमुक्तं बुद्धेन, तत्सूत्र मुदाहरति इदमिति । इदं कार्यं प्रत्ययस्य कारणसमुदायमात्रस्य फलं न चेतनस्य कस्याचिदिति सूत्रार्थः ।

(२) हेतूपनिबन्धस्य सङ्ग्राहकं सूत्रमुदाहरति उत्पादाद्वेति । तथागतानां बुद्धानां मते धर्माणां कार्याणां कारणानां च या धर्मता कार्यकारणभावरूपा एषा उत्पादादनुत्पादाद्वा स्थिता, धत्ते इति धर्मं कारणम्, ध्रियत इति धर्मं कार्यम्, यस्मिन्सति यदुत्पद्यते असति च नोत्पद्यते तत्तस्य कारणं कार्यं च न चेतन. कश्चित्तिष्ठ्यर्थं कार्यस्यापेक्षणीय इत्यर्थः । कार्यता कारणता चाह सूत्रांशेन धर्मस्थितितेति । धर्माणामन्व- यव्यतिरेकावेव कार्यता कारणता न चेतनः कश्चिदुपलभ्यत इति भावः । उक्तं सूत्रद्वयं व्याचष्टे अथेति । एक- कारणनिबन्धनो नानाकारणनिबन्धनश्च कारणात्कार्योत्पाद इत्यर्थः ।

(३) हेतूपनिबन्धनस्योदाहरणे उत्पादादेति सूत्रं योजयति असतीत्यादिना ।

(४) तत्र चैतन्यं बीजादीनां किं वा तदतिरिक्तस्य कस्यचिद्भोक्तु शासितुर्वा ? नाद्य इत्याह तत्रेत्या दिना । न द्वितीय इत्याहासत्यपीति । अङ्कुरोत्पत्तौ चेतनव्यापारानुपलम्भादित्यर्थः ।

(५) अयमानानामिति । तथाच प्रत्ययोपनिबन्ध इत्यत्र प्रत्ययशब्दः इणो धातोर्भावार्थाच्प्रत्यया- न्तस्य रूपम्, एवं च समुदितत्ववाच्ययामित्यर्थः ।

तथाध्यात्मिकः प्रतीत्यसमुत्पादो द्वाभ्यां कारणाभ्यां भवति हेतूपनिबन्धतः प्रत्ययोपनिबन्धतश्च । तत्रास्य हेतूपनिबन्धो-(१)यदिदमविद्याप्रत्ययाः संस्कारा यावज्जातिप्रत्यय जरामरणादीति । अविद्या चेन्नाभविष्यन्नैवं संस्कारा अजनिष्यन्त । एवं यावज्जातिः, जातिश्चेन्नाभविष्यन्नैवं जरामरणादय उदपत्स्यन्त । तत्राविद्याया नैवं भवत्यहं संस्कारानभिनिर्वर्तयामीति । संस्काराणामपि नैवं भवति वयमविद्यया निर्वर्तिता इति । एवं यावज्जात्या अपि नैवं भवत्यहं जरामरणाद्यभिनिर्वर्तयामीति । जरामरणादीनामपि नैवं भवति वयं जात्यादिभिर्निर्वर्तिता इति । अथ च सत्स्वविद्यादिषु स्वयमचेतनेषु चेतनान्तरानधिष्ठितेष्वपि संस्कारादीनामुत्पत्तिः बीजादिष्विव सत्स्वचेतनेषु चेतनान्तरानधिष्ठितेष्वप्यङ्कुरादीनाम् । इदं प्रतीत्य प्राप्येदमुत्पद्यत इत्येतावन्मात्रस्य दृष्टत्वाच्चेतनाधिष्ठानस्यानुपलब्धेः सोयमाध्यात्मिकस्य प्रतीत्य समुत्पादस्य हेतूपनिबन्धः । अथ प्रत्ययोपनिबन्धः-पृथिव्यप्तेजोवाय्वाकाशविज्ञानधातूनां समवायाद्भवति कायः । तत्र कायस्य पृथिवी धातुः काठिन्यं निर्वर्तयति, अब्धातुः स्नेहयति कायम्, तेजोधातुः कायस्याशितपीते परिपाचयति, वायुधातुः कायस्य श्वासादि करोति, आकाशधातुः कायस्यान्तः सुषिरभावं करोति । (२)यत्तु नामरूपाङ्कुरमभिनिर्वर्तयति पञ्चविज्ञानकायसंयुक्तं सास्रवं च मनोविज्ञानं सोऽयमुच्यते विज्ञानधातुः । यदा ह्याध्यात्मिकाः पृथिव्यादिधातवो भवन्त्यविकलास्तदा सर्वेषां समवायाद्भवति कायस्योत्पत्तिः । तत्र पृथिव्यादिधातूनां नैवं भवति वयं कायस्य काठिन्यादि निर्वर्तयाम इति, कायस्यापि नैवं भवति ज्ञानमहमेभिः प्रत्ययैरभिनिर्वर्तित इति । अथ च पृथिव्यादिधातुभ्योऽचेतनेभ्यश्चेतनान्तरानधिष्ठितेभ्योऽङ्कुरस्येव कायस्योत्पत्तिः, सोऽयं प्रतीत्य समुत्पादो दृष्टत्वान्नान्यथयितव्यः । तत्रैतेष्वेव षट्सु धातुषु यैकसंज्ञा (३)पिण्डसंज्ञा नित्यसंज्ञा सुखसंज्ञा सत्त्वसंज्ञा पुद्गलसंज्ञा मनुष्यसंज्ञा मातृदुहितृसंज्ञा अहङ्कारममकारसंज्ञा, सेयमविद्या संसारानर्थसम्भारस्य मूलकारणं तस्यामविद्यायां सत्यां संस्कारा रागद्वेषमोहा विषयेषु प्रवर्तन्ते । वस्तुविषया विज्ञप्तिर्विज्ञानं (४)विज्ञानाच्चत्वारो रूपिण उपादानस्कन्धास्तन्नाम तान्युपादाय रूपमभिनिर्वर्तते । (५)तदै-

---

( १ ) आध्यात्मिकहेतूपनिबन्धस्योदाहरणमाह यदिदमिति । अविद्यारूपा प्रत्यया भ्रान्तय इत्यर्थः, तथा संस्काराश्च वक्ष्यमाणा यावज्जातिप्रत्ययं जातिरूपं कारणं यावच्च जरामरणादि तत्सर्वमाध्यात्मिकस्य प्रतीत्यसमुत्पादस्य हेतूपनिबन्धे उदाहरणमित्यर्थः ।

( २ ) विज्ञानधातुं व्याचष्टे यस्त्विति । नाम्ना देवदत्तादे शुक्लादिरूपस्य चाश्रय शरीरं नामरूपं, तस्य कललबुद्बुदादिकावान्तरनामरूपं सूक्ष्मावस्था स एवाङ्कुरस्त शब्दादिविषयपञ्चविज्ञानसंयुक्तं योऽभिनिर्वर्तयति, आस्रवत्यनुगच्छति कर्तारमित्यास्रव कर्म तत्सहितं समनन्तरप्रत्ययरूपं मनोविज्ञानं चाभिनिर्वर्तयति स विज्ञानधातुरालयविज्ञानमित्युच्यते इत्यर्थ ।

( ३ ) पिण्डेति । देहाकारपरिणतेषु धातुषु शिरःपाण्यादिमत्त्वेन पिण्डसंज्ञा अत एकसंज्ञा एकैकाभिसन्धातो नित्यसंज्ञा सत्त्वसंज्ञा प्राणिसंज्ञा वृद्धिह्रासंज्ञेत्यर्थ. ।

( ४ ) आलयत्वादिविशेषानपेक्षा सामान्यतो वस्तुविषया विज्ञप्तिर्विज्ञानमित्युक्त्वा नामरूपं व्याचष्टे विज्ञानाच्चेति । अभिनिर्वर्तत इति सम्बन्ध । पृथिव्यादयश्चत्वारो उपादानकारणस्कन्धा नामेत्युच्यते, तानि उपादाय कारणत्वेन विकृत्य रूपं सितादिरूपवच्छरीरमभिनिर्वर्तत इत्यर्थः ।

( ५ ) तदैकध्यं तदेकधेत्यर्थ, कार्यकारणे एकीकृत्यैक्यनिर्देश इति यावदेतेन नामरूपयोर्द्विशरीरकधर्मैकवचनमित्याशङ्का परास्ता ।

कथ्यमभिसंक्षिप्य नामरूपं निरुच्यते । (१) शरीरस्यैव कललबुद्बुदाद्यवस्था, नामरूपसंमिश्रितानीन्द्रियाणि षडायतनं, नामरूपेन्द्रियाणां त्रयाणां सन्निपातः स्पर्शः, स्पर्शाद्वेदना सुखादिका, वेदनायां सत्यां कर्तव्यमेतत्सुखं पुनर्मयेत्यध्यवसानं तृष्णा भवति । तत उपादानं वाक्कायचेष्टा भवति । ततो भवः, भवत्यस्माज्जन्मेति भवो धर्माधर्मौ । तद्धेतुकः स्कन्धप्रादुर्भावो जातिः जन्म । जन्महेतुका उत्तरे जरामरणादयः । जातानां स्कन्धानां परिपाको जरा । स्कन्धानां नाशो मरणम् । म्रियमाणस्य मूढस्य साभिषङ्गस्य पुत्रकलत्रादावन्तर्दाहः शोकः । तदुत्थं प्रलपनं 'हा मातः हा तात हा च मे पुत्रकलत्रादी'ति परिदेवना । पञ्चविज्ञानकायसंयुक्तमसाध्वनुभवनं दुःख, मानसं च दुःखं दौर्मनस्यम् । एवंजातीयकाश्चोपाया'स्त उपक्लेशा'(२)गृह्यन्ते । तेऽमी परस्परहेतुका जन्मादिहेतुका अविद्यादयोऽविद्यादिहेतुकाश्च जन्मादयो घटीयन्त्रवदनिशमावर्तमानाः सन्तीति तदेतैरविद्यादिभिराक्षिप्तः संघात इति । तदेतद्दूषयति—"तच्च कुतः ? उत्पत्तिमात्रनिमित्तत्त्वा"-दिति । ( पृ० ४३८ पं. १ ) अयमभिसन्धिः—यत्खलु हेतूपनिबद्धं कार्यं तदन्यानपेक्षं हेतुमात्राधीनोत्पादत्वादुपपद्यतां नाम, पञ्चस्कन्धसमुदायस्तु प्रत्ययोपनिबद्धो न हेतुमात्राधीनोत्पत्तिः, अपि तु नानाहेतुसमवधानजन्मा, न च चेतनमन्तरेणान्यः सन्निधापयिताऽस्ति कारणानामित्युक्तम् (३) । बीजादङ्कुरोत्पत्तेरपि प्रत्ययोपनिबद्धाया विवादाध्यासितत्वेन पक्षनिक्षिप्तत्वात् । पक्षेण च व्यभिचारोद्भावनायामतिप्रसङ्गेन सर्वानुमानोच्छेदप्रसङ्गात् । (४)स्यादेतत् , अनपेक्षा एवान्त्यक्षणप्राप्ताः क्षित्यादयोऽङ्कुरमारभन्ते, तेषां तूपसर्पणप्रत्ययवशात् परस्परसमवधानम् , न चैकस्मादेव कारणात्कार्यसिद्धेः किमन्यैः कारणैरिति वाच्यम् । कारणचक्रानन्तरं कार्योत्पादात् सिद्धमित्थेव नास्ति । न चैकोपि तत्कारणसमर्थ इत्यन्य उदासत इति युक्तम् । न हि ते प्रेक्षावन्तो येनैवमालोचयेयुरस्मासु समर्थ एकोऽपि कार्ये इति कृतं नः सान्निधिनेति । किन्तूपसर्पणप्रत्ययाधीनपरस्परसन्निधानोत्पादा नानुत्पत्तुं नाप्यसन्निधातुमशिते । तांश्च सर्वाननपेक्षान्प्रतीत्य कार्यमपि न नोत्पत्तुमर्हति । (५)न च स्वमहिम्ना सर्वे कार्यमुत्पादयन्तोऽपि नानाकार्याणामीशते, तत्रैव तेषां सामर्थ्यात् । न च कारणभेदात्कार्यभेदः

(१) जातेरग्रे वक्ष्यमाणत्वादत्र गर्भाभ्यन्तरदेहोक्तिरित्याह शरीरस्यैवेति । षडायतनान्याह नामरूपसंमिश्रितानीति । षड् पृथिव्यादिधातव आयतनानि यस्य कारणसमूहस्य तत्तथा ।

(२) उपक्लेशा इति । मदमानादयस्ते उपाया दुःखादीना ते च भाष्यगतैवञ्जातीयकशब्दनिर्देश्या इत्यर्थः ।

(३) एवं च हेतूपनिबन्धे चेतनानपेक्षत्वमस्माभिरङ्गीक्रियते न प्रत्ययोपनिबन्ध इति भाव । ननु मिलितेभ्य· पृथिवीधात्वादिभ्यश्चेतनान्तरेणैवाङ्कुरोत्पत्तिरुक्ता तद्वद्देहोत्पादोऽपि किं न स्यादत आह बीजादिति । तत्रापीश्वर संहन्तेत्यर्थ ।

(४) संहतानां हेतुत्वे संहन्त्रा भावितव्यमित्युक्तं वेदान्तिना तत्र संहन्तस्याप्रयोजकत्वम्, ततश्च न संहन्तुरनुमानमित्याशयेनाशङ्कते स्यादेतदिति । अङ्कुरोत्पत्तेराद्यक्षणो बीजादीनामन्त्यक्षणस्तं प्राप्ता एव कारण न पूर्वन्तथैव दर्शनादित्यर्थ· । प्रत्येकं कारणानां कार्योत्पादसामर्थ्ये किं सङ्घातेनेत्यत आह तेषामिति । अन्योन्यसमीपगमनकारणवशान्मिथः सन्निधानप्रयोजक जायत इत्यर्थ ।

(५) यदि प्रत्येकं हेतूनां कार्यजननसामर्थ्यं तदा प्रति कारणमेकैककार्योत्पादप्रसङ्ग इत्याशङ्क्याह न चेति । तत्रैव—एकस्मिन्नेवेत्यर्थ· । बीजेनाङ्कुरो जनयितव्य मृदादिभिरपि स एव, तत्र लाघवात्सर्वैरेक एव जन्यत इति भाव ।

सामग्र्या एकत्वात् तद्भेदस्य च कार्यनानात्वहेतुत्वात्तथा दर्शनात् । तत्र(१) । यचन्त्यक्षण-ग्रामा अनपेक्षाः स्वकार्योपजनने हन्तानेन क्रमेण ततः पूर्वे ततः पूर्वे सर्वे एवानपेक्षास्तत्त-त्स्वकार्योपजनन इति कुसूलस्थत्वाविशेषेऽपि येन बीजक्षणेन कुसूलस्थेन स्वकार्यक्षणपरम्पर-याङ्कुरोत्पत्तिरासर्थो बीजक्षणो जनयितव्यः सोऽनपेक्ष एव बीजक्षणः स्वकार्योपजनने, एवं सर्वे एव तदनन्तरानन्तरवर्तिनो बीजक्षणा अनपेक्षा इति कुसूलनिहितबीज एव स्यात् कृती कृषीवलः, कृतमस्य दुःखबहुलेन कृषिकर्मणा । (२)येन हि बीजक्षणेन स्वक्षणपरम्परया-ऽङ्कुरो जनयितव्यस्तस्यानपेक्षासौ क्षणपरम्परा कुसूल एवाङ्कुर करिष्यतीति । तस्मात्परस्परा-पेक्षा एवान्त्या वा मध्या वा पूर्वे वा क्षणाः कार्योपजनन इति वक्तव्यम्, यथाहुः—

न किंचिदेकमेकस्मात्सामग्र्याः सर्वसम्भवः । इति ।

तच्चेदं समवधानं कारणानां विन्यासभेदतत्प्रयोजनाभिज्ञप्रेक्षापूर्वकं दृष्टमिति नाचेतनाद्भ-वितुमर्हति । तदिदमुक्तम् "**भवेदुपपन्नः सङ्घातो यदि सङ्घातस्य किंचिन्नि-मित्तमवगम्यते**" इति । "**इतरेतरप्रत्ययत्वेपी**"ति । इतरेतरहेतुत्वेपीत्यर्थः । उ-क्तमभिसन्धिमविद्वान्(३) परिचोदयति "**नन्वविद्यादिभिरर्थादाक्षिप्यत**" इति । परिहरति—"**अत्रोच्यते, यदि तावदि**"ति । किमाक्षेप उत्पादनमाहो ज्ञापनम् । तत्र न तावत्कारणमन्यथानुपपद्यमानं कार्यमुत्पादयति, किन्तु स्वसामर्थ्येन(४), तस्माज्ज्ञा-पनं वक्तव्यम्, तथा च ज्ञापितस्यान्यदुत्पादकं वक्तव्यं, तच्च स्थिरपक्षेऽपि सत्यपि च भो-क्तरि अधिष्ठातारं चेतनमन्तरेण न सम्भवति, किमङ्ग पुनः क्षणिकेषु भावेषु । भोक्तुर्भोगे-नापि कदाचिदाक्षिप्येत संघातः, स तु भोक्तापि नास्तीति दूरोत्सारितत्वं दर्शयति—"**भो-क्तृरहितेष्वि**"ति । (५)अपि च बहवः उपकार्योपकारकभावेन स्थिताः कार्यं जनयन्ति, न च क्षणिकपक्ष उपकार्योपकारकभावोऽस्ति, (६)भावस्योपकारानास्पदत्वात् , क्षणस्याभे-द्यत्वादनुपकृतोपकृतत्वासम्भवात् , कालभेदेन वा तदुपपत्तौ क्षणिकत्वव्याघात।तदिदमाह— "**आश्रयाश्रयिशून्येषु चे**"ति । "**अथायमभिप्रायः**" इति । यदा हि प्रत्ययोप-निबन्धनः प्रतीत्यसमुत्पादो भवेत्तदा चेतनोऽधिष्ठाताऽपेक्षेतापि, न तु प्रत्ययोपनिबन्धनो-ऽपि तु हेतूपनिबन्धनः, तथा च कृतमधिष्ठात्रा, हेतुः स्वभावत एव कार्यसंघातं करिष्यति केवल इति भावः । (७)अस्तु तावद्यथा केवलाद्धेतोः कार्यं नोपजायत इति, अन्योन्याश्रयप्र-

---

(१) उक्तं सङ्घातप्रयोजकत्वं दूषयति तत्रेति ।

(२) नन्वनन्तरक्षणपरम्परा बहिरेव भवतु कुत कुसूल एवाङ्कुरसिद्धिस्तत्राह येनेति । अनपेक्षस्य देशभेदेऽप्यपेक्षाविरहसाम्यादित्यर्थ ।

(३) नासहतस्य सामग्रीत्वं सहन्ता च न तवेत्युक्तमभिसन्धिमजानन्नित्यर्थ ।

(४) सामर्थ्यं चाविद्यमानस्य नास्तीत्यर्थ ।

(५) न केवलं सङ्घातानुपपत्तिः किन्तु संहतानां य इतरेतरमुपकारः सोऽपि नेत्याह अपि चेति ।

(६) भावस्यान्यकृतोपकारस्य च किमेकक्षणवर्तित्वमुत जाते भावे उत्तरक्षणे उपकार ? नाद्य इत्याह भावस्येति । बौद्धमते क्षणस्याभेद्यत्वाद्वस्तुन उपकृतत्वानुपकृतत्वे न सम्भवतोऽतो भावस्योपकारानास्पदत्व-मित्यर्थः । द्वितीयं प्रत्याह कालभेदेन वेति । नोपकार्योपकारकभाव इत्यन्वय ।

(७) उक्तमाभिसंधिमविद्वानित्युक्तं विशदयति अस्तु तावदिति ।

प्रसङ्गोऽस्मिन्पक्ष इत्याशयवानाह "कथन्तमेवे"ति। सम्प्रति प्रत्ययोपनिबन्धनं प्रतीत्य-समुत्पादमास्थाय चोदयति "अथ मन्यसे सङ्घाता एवे"ति। अस्थिरा अपि हि भावाः सदा संहता एवोदयन्ते व्ययन्ते च, न पुनरितस्ततोऽवस्थिताः केनचित्पुञ्जीक्रियन्ते तथा च कृतमत्र संहन्त्रा चेतनेनेति भावः। "अनादा"विति परस्पराश्रयञ्चिवर्तयति। तदेतद्विकल्प्य दूषयति "तदापि सङ्घातादि"ति। (१)स खलु संघातसन्ततिवर्ती ध-र्माधर्मादिरूपः संस्कारसन्तानो यथायथं सुखदुःखे जनयन्नागन्तुकं कञ्चनानासाद्य स्वत एव जनयेद् आसाद्य वा? अनासाद्य जनने सदैव सुखदुःखे जनयेत्, समर्थस्यानपेक्षस्य क्षेपा-योगात्, आसाद्य जनने तदासादनकारणं प्रेक्षावानभ्युपेयः, तथा च न प्रत्ययोपनिबन्धनः प्रतीत्यसमुत्पादः, तस्मादनेनागन्तुकानपेक्षस्य संघातसन्तानस्यैव सदृशजनने विसदृशजनने वा स्वभाव आस्थेयः। तथा च भाष्योक्तं दूषणमिति। "अपि च यद्भोगार्थः सङ्घातः स्यादि"ति। (पृ० ५२९ पं० १)। (२)अप्राप्तभोगो हि भोगार्थी भोगमाप्तुकामस्त-त्साधने प्रवर्तते इति प्रत्यात्मसिद्धम्। सेयं प्रवृत्तिर्भोगादन्यस्मिन् स्थिरे भोक्तरि भोगतत्सा-धनसमयव्यापिनि कल्पते नास्थिरे न च भोगादनन्यस्मिन्। न हि भोगो भोगाय कल्पते नाप्यन्यो भोगायान्यस्य। एवं मोक्षेपि द्रष्टव्यम्। तत्र बुभुक्षुमुमुक्षु चेत् स्थिरावास्थीयेयातां न तदाऽभ्युपेतहानमस्थैर्ये वाऽप्रवृत्तिप्रसङ्ग इत्यर्थः। "न तु संघातः सिद्ध्येद् भोक्त्र-भावादि"ति। (३)भोक्त्रभावेन प्रवृत्त्यनुपपत्तेः कर्माभावः, ततः कर्माभावात् संघात-सिद्धिरित्यर्थः॥ १९॥

## सू० उत्तरोत्पादे च पूर्वनिरोधात्॥ २०॥

पूर्वसूत्रेण सङ्गतिमस्याह—"उक्तमेतादि"ति। हेतूपनिबन्धनं प्रतीत्यसमुत्पादम-भ्युपेत्य प्रत्ययोपनिबन्धनः प्रतीत्यसमुत्पादो दूषितः, सम्प्रति हेतूपनिबन्धनमपि तं दूषय-तीत्यर्थः। दूषणमाह—"इदमिदानीमि"ति। "निरुध्यमानस्ये"ति। (४)न ताव-द्वैशेषिकवन्निरोधकारणसांनिध्य निरुध्यमानता स्वीक्रियते वैनाशिकैरकारणं विनाशमभ्युप-गच्छद्भिः, तस्यानिष्टत्वात्, (५)तस्माद्विनाशग्रस्तत्वमचिरनिरुद्धत्वं निरुध्यमानत्वं वक्तव्यम्, निरुद्धत्वं च चिरनिरुद्धत्वं विवक्षितम्, तथा चोभयोरप्यभावग्रस्तत्वाद्धेतुत्वानुपपत्तिः। श-ङ्कते—"अथ भावभूत"इति। कारणस्य हि कार्योत्पादात्प्राक्कालसत्तार्थवती न कार्य-काला, तदा कार्यस्य सिद्धत्वेन तत्सिद्ध्यर्थायाः सत्ताया अनुपयोगादिति भावः। तदेतल्लोक-दृष्ट्या दूषयति—"भावभूतस्ये"ति। भूत्वा व्यापृत्य भावाः प्रायेण हि कार्यं कुर्वन्तो

---

(१) अदृष्टात्सङ्घातोत्पत्तिव्यवस्थासिद्धेर्भाष्योक्तदूषणानुपपत्तिमाशंक्याह स खल्विति।

(२) भोक्तुर्भोगादन्यत्वे हेतुमाह अप्राप्तभोगो हीति। भोक्तु स्थिरतायां हेतुर्भोगार्थ इति। अर्थि-दशायां भोगदशायां चानुवृत्तेः स्थैर्यमित्यर्थ। अस्यैव विवरण—भोगमाप्तुकाम इति।

(३) ननु सङ्घातासिद्धौ कर्मभावो वाच्यो न भोक्त्रभाव कर्तुर्हि हेतुता, तत्राह भोक्त्रभावेनेति।

(४) ननु निरुद्धस्याऽस्त्वभावग्रस्तता निरुध्यमानस्य कथमत आह न तावदिति। यथाऽऽरम्भकत-न्त्वादिसंयोगस्य विनाशक्षणे विद्यमानस्यैव पटादेर्विनश्यदवस्थत्वं वैशेषिकैरङ्गीकृतं न तथा वैनाशिकैरित्यर्थ।

(५) ननूभयोर्विनाशग्रस्तत्वे को भेदस्तत्राह तस्मादिति। यद्विनाशग्रस्तत्व तदाचिरनिरुद्धत्वरूपं सद्-निरुध्यमानत्व वक्तव्यं तदेव चिरनिरुद्धत्वरूप सद् विवक्षितमित्यर्थ।

एसामग्रा एकत्वात् तद्भेदस्य च कार्यनानात्वहेतुत्वात्तथा दर्शनात् । तत्र(१)। यद्यन्त्यक्षण-प्राप्ता अनपेक्षाः स्वकार्योपजनने हन्तानेन क्रमेण ततः पूर्वे ततः पूर्वे सर्वे एवानपेक्षास्तत्त-त्स्वकार्योपजनन इति कुसूलस्थत्वाविशेषेऽपि येन बीजक्षणेन कुसूलस्थेन स्वकार्यक्षणपरम्पर-याङ्कुरोत्पत्तिसमर्थो बीजक्षणो जनयितव्यः सोऽनपेक्ष एव बीजक्षणः स्वकार्योपजनने, एवं सर्वे एव तदनन्तरानन्तरवर्तिनो बीजक्षणा अनपेक्षा इति कुसूलनिहितबीज एव स्यात् कृती कृषीवल', कृतमस्य दुःखबहुलेन कृषिकर्मणा । (२)येन हि बीजक्षणेन स्वक्षणपरम्परया-ऽङ्कुरो जनयितव्यस्तस्यानपेक्षासौ क्षणपरम्परा कुसूल एवाङ्कुरं करिष्यतीति । तस्मात्परस्परा-पेक्षा एवान्त्या वा मध्या वा पूर्वे वा क्षणाः कार्योपजनन इति वक्तव्यम्, यथाहुः—

न किंचिदेकमेकस्मात्सामग्र्याः सर्वसम्भवः । इति ।

तच्चेदं समवधानं कारणानां विन्यासभेदतत्प्रयोजनाभिज्ञप्रेक्षापूर्वकं दृष्टमिति नाचेतनाद्भ-वितुमर्हति । तदिदमुक्तम् "**भवेदुपपन्नः सङ्घातो यदि सङ्घातस्य किंचिन्नि-मित्तमवगम्यते**" इति । "**इतरेतरप्रत्ययत्वेपी**"ति । इतरेतरहेतुत्वेपीत्यर्थः । उ-क्तमभिसन्धिमविद्वान्(३) परिचोदयति "**नन्वविद्यादिभिरर्थादाक्षिप्यत**" इति । परिहरति—"**अत्रोच्यते, यदि तावदि**"ति । किमाक्षेप उत्पादनमाहो ज्ञापनम् । तत्र न तावत्कारणमन्यथानुपपद्यमानं कार्यमुत्पादयति, किन्तु स्वसामर्थ्येन(४), तस्माज्ज्ञा-पनं वक्तव्यम्, तथा च ज्ञापितस्यान्यदुत्पादकं वक्तव्यं, तच्च स्थिरपक्षेऽपि सत्यपि च भो-क्तरि अधिष्ठातारं चेतनमन्तरेण न सम्भवति, किमङ्ग पुनः क्षणिकेषु भावेषु । भोक्तुर्भोगे-नापि कदाचिदाक्षिप्येत संघातः, स तु भोक्तापि नास्तीति दूरोत्सारितत्वं दर्शयति—"**भो-क्तृरहितेष्वि**"ति । (५)अपि च बहवः उपकार्योपकारकभावेन स्थिताः कार्यं जनयन्ति, न च क्षणिकपक्ष उपकार्योपकारकभावोऽस्ति, (६)भावस्योपकारानास्पदत्वात्, क्षणस्याभे-द्यत्वादनुपकृतोपकृतत्वासम्भवात्, कालभेदेन वा तदुपपत्तौ क्षणिकत्वव्याघातात्तदिदमाह—"**आश्रयाश्रयिशून्येषु चे**"ति । "**अथायमभिप्रायः**" इति । यदा हि प्रत्ययोप-निबन्धनः प्रतीत्यसमुत्पादो भवेत्तदा चेतनोऽधिष्ठाताऽपेक्षेतापि, न तु प्रत्ययोपनिबन्धनो-ऽपि तु हेतूपनिबन्धनः, तथा च कृतमधिष्ठात्रा, हेतुः स्वभावत एव कार्यसंघातं करिष्यति केवल इति भावः । (७)अस्तु तावद्यथा केवलाद्धेतोः कार्यं नोपजायत इति, अन्योन्याश्रयप्र-

---

(१) उक्तं सङ्घाताप्रयोजकत्वं दूषयति तत्रेति ।

(२) नन्वनन्तरक्षणपरम्परा बहिरेव भवतु कुत कुसूल एवाङ्कुरसिद्धिस्तत्राह येनेति । अनपेक्षस्य देशभेदेऽप्यपेक्षाविरहसाम्यादित्यर्थ ।

(३) नासहतस्य सामग्रीत्वं सहन्ता च न तवेत्युक्तमभिसन्धिमजानन्नित्यर्थः ।

(४) सामर्थ्यं चाविद्यमानस्य नास्तीत्यर्थ ।

(५) न केवलं सङ्घातानुपपत्ति किन्तु सहतानां य इतरेतरमुपकारः सोऽपि नेत्याह अपि चेति ।

(६) भावस्यान्यकृतोपकारस्य च किमेकक्षणवर्तित्वमुत जाते भावे उत्तरक्षणे उपकार ? नाद्य इत्याह भावस्येति । बौद्धमते क्षणस्याभेद्यत्वाद्वस्तुन उपकृतत्वानुपकृतत्वे न सम्भवतोऽतो भावस्योपकारानास्पदत्व-मित्यर्थः । द्वितीयं प्रत्याह कालभेदेन वेति । नोपकार्योपकारकभाव इत्यन्वयः ।

(७) उक्तमभिसन्धिमविद्वानित्युक्तं विशदयति अस्तु तावदिति ।

प्रसङ्गोऽस्मिन्पक्ष इत्याशयवानाह "कथन्तमेवे"ति । सम्प्रति प्रत्ययोपनिबन्धनं प्रतीत्य-समुत्पादमास्थाय चोदयति "अथ मन्यसे सङ्घाता एवे"ति । अस्थिरा अपि हि भावाः सदा संहता एवोदयन्ते व्ययन्ते च, न पुनरितस्ततोऽवस्थिताः केनचित्पुञ्जीक्रियन्ते तथा च कृतमत्र संहन्त्रा चेतनेनेति भावः । "अनादा"विति परस्पराश्रयं निवर्तयति । तदेतद्विकल्प्य दूषयति "तदापि सङ्घातादि"ति । (१)स खलु संघातसन्ततिवर्ती ध-र्माधर्माद्वयः संस्कारसन्तानो यथायथं सुखदुःखे जनयन्नागन्तुकं कञ्चनानासाद्य स्वत एव जनयेद् आसाद्य वा ? अनासाद्य जनने सदैव सुखदुःखे जनयेत् , समर्थस्यानपेक्षस्य क्षेपा-योगात् , आसाद्य जनने तदासादनकारणं प्रेक्षावानभ्युपेयः, तथा च न प्रत्ययोपनिबन्धनः प्रतीत्यसमुत्पादः, तस्मादनेनागन्तुकानपेक्षस्य संघातसन्तानस्यैव सदृशजनने विसदृशजनने वा स्वभाव आस्थेयः । तथा च भाष्योक्तं दूषणमिति । "अपि च यद्भोगार्थः सङ्घातः स्यादि"ति । ( पृ० ५३९ पं० १ ) । (२)अप्राप्तभोगो हि भोगार्थी भोगमाप्तुकामस्त-त्साधने प्रवर्तते इति प्रत्यात्मसिद्धम् । सेयं प्रवृत्तिर्भोगादन्यस्मिन् स्थिरे भोक्तरि भोगतत्सा-धनसमयव्यापिनि कल्पते नास्थिरे न च भोगादनन्यस्मिन् । न हि भोगो भोगाय कल्पते नाप्यन्यो भोगायान्यस्य । एवं मोक्षेपि द्रष्टव्यम् । तत्र बुभुक्षुमुमुक्षु चेत् स्थिरावास्थीयेयातां न तदाऽभ्युपेतहानमस्थैर्ये वाऽप्रवृत्तिप्रसङ्ग इत्यर्थः । "न तु संघातः सिद्ध्येद् भोक्त्र-भावादि"ति । (३)भोक्त्रभावेन प्रवृत्त्यनुपपत्तेः कर्माभावः, ततः कर्माभावात् संघात-सिद्धिरित्यर्थ ॥ १९ ॥

## सू० उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥

पूर्वसूत्रेण सङ्गतिमस्याह—"उक्तमेतदि"ति । हेतूपनिबन्धनं प्रतीत्यसमुत्पादम-भ्युपेत्य प्रत्ययोपनिबन्धनः प्रतीत्यसमुत्पादो दूषितः, सम्प्रति हेतूपनिबन्धनमपि तं दूषय-तीत्यर्थः । दूषणमाह—"इदमिदानीमि"ति । "निरुध्यमानस्ये"ति । (४)न ताव-द्वैशेषिकवन्निरोधकारणसंनिध्य निरुध्यमानता स्वीक्रियते वैनाशिकैरकारणं विनाशमभ्युप-गच्छद्भिः, तस्यानिष्टत्वात्, (५)तस्माद्विनाशग्रस्तत्वमचिरनिरुद्धत्वं निरुध्यमानत्वं वक्तव्यम्, निरुद्धत्वं च चिरनिरुद्धत्वं विवक्षितम्, तथा चोभयोरप्यभावग्रस्तत्वाद्धेतुत्वानुपपत्तिः । श-ङ्कते—"अथ भावभूत"इति । कारणस्य हि कार्योत्पादात्प्राक्कालसत्तार्थवती न कार्य-काला, तदा कार्यस्य सिद्धत्वेन तत्सिद्ध्यर्थायाः सत्ताया अनुपयोगादिति भावः । तदेतल्लोक-दृष्ट्या दूषयति—"भावभूतस्ये"ति । भूत्वा व्यापृत्य भावाः प्रायेण हि कार्यं कुर्वन्तो

---

( १ ) अदृष्टात्सङ्घातोत्पत्तिव्यवस्थासिद्धेर्भाष्योक्तदूषणानुपपत्तिमाशंक्याह स खल्विति ।

( २ ) भोक्तुर्भोगादन्यत्वे हेतुमाह अप्राप्तभोगो हीति । भोक्तु स्थिरतायां हेतुर्भोगार्थ इति । अर्थि-दशायां भोगदशायां चानुवृत्तेः स्थैर्यमित्यर्थ । अस्यैव विवरण—भोगमाप्तुकाम इति ।

( ३ ) ननु सङ्घातासिद्धौ कर्मभावो वाच्यो न भोक्त्रभाव कर्तुर्हि हेतुता, तत्राह भोक्त्रभावेनेति ।

( ४ ) ननु निरुद्धस्यास्त्वभावग्रस्तता निरुध्यमानस्य कथमत आह न तावदिति । यथाऽऽरम्भकत-न्त्वादिसंयोगस्य विनाशक्षणे विद्यमानस्यैव पटादेर्विनश्यदवस्थत्वं वैशेषिकैरङ्गीकृतं न तथा वैनाशिकैरित्यर्थ ।

( ५ ) ननूभयोर्विनाशग्रस्तत्वे को भेदस्तत्राह तस्मादिति । यद्विनाशग्रस्तत्वं तदाचिरनिरुद्धत्वरूपं सद् निरुध्यमानत्वं वक्तव्यं तदेव चिरनिरुद्धत्वरूपं सद् विवक्षितमित्यर्थ ।

लोके दृश्यन्ते, तथा च स्थिरत्वम्, इतरथा तु लोकविरोध इति। पुनः शङ्कते—"अथ स्याद् एषे"ति। यथाहुः–'(१)भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते' इति। भवत्वेवं व्यापारवत्ता तथापि क्षणिकस्य न कारणत्वमित्याह—"तथापि नैवोपपद्यते" (पृ० ५४० पं० १) क्षणिकस्य कारणभावः। मृत्सुवर्णकारणा हि घटादयश्च रुचकादयश्च मृत्सुवर्णात्मानोऽनुभूयन्ते। यदि च न कार्यसमये कारणं सत्कथं तेषां तदात्मनानुभवः। न च कारणसादृश्यं कार्यस्य न तु तादात्म्यमिति वाच्यम्। असति कस्यचिद्रूपस्यानुगमे सादृश्यस्याप्यनुपपत्तेः, अनुगमे वा तदेव कारणं, तथा च तस्य कार्यतादात्म्यमिति सिद्धमक्षणिकत्वमित्यर्थः। (२)सर्वथा वैलक्षण्ये तु हेतुफलभावस्तन्तुघटादावपि प्राप्त इत्यतिप्रसङ्ग इत्याह—"विनैव वे"ति। (३)न च तद्भावभावो नियामकस्तस्यैकस्मिन् क्षणेऽशक्यग्रहत्वात् (४)सामान्यस्य चाकारणत्वात्, कारणत्वे वा क्षणिकत्वहानिरस्मत्पक्षपातप्रसङ्गाच्चेति भावः। अपि चोत्पादनिरोधयोर्विकल्पत्रयेऽपि वस्तुनः शाश्वतत्वप्रसङ्ग इत्याह—"अपि चोत्पादनिरोधौ नामे"ति। पर्यायत्वापादनेऽपि नित्यत्वापादनं मन्तव्यम्। वस्तूत्पादनिरोधाभ्यामसंसृष्टमिति वस्तुनः शाश्वतत्वप्रसङ्गः। संसर्गेऽप्यसता संसर्गानुपपत्तेः सत्त्वाभ्युपगमे शाश्वतत्वमित्यपि द्रष्टव्यम्। शेषं निगदव्याख्यातम् ॥ २० ॥

## सू० असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥

(५)नीलाभासस्य हि चित्तस्य नीलादालम्बनप्रत्यया[१]न्नीलाकारता, समनन्तरप्रत्ययात्[२]पूर्वविज्ञानाद् बोधरूपता चक्षुषोऽधिपतिप्रत्यया[३]द्रूपग्रहणप्रतिनियमः, आलोकात्सहकारिप्रत्यया[४]द्धेतोः स्पष्टार्थता। (६)एवं सुखादीनामपि चैत्तानां चित्ताभिन्नहेतुजानां चत्वार्येतान्येव कारणानि। सेयं प्रतिज्ञा चतुर्विधान् हेतून् प्रतीत्य चित्तचैत्ता उत्पद्यन्त इत्यभावकारणत्व उपरुध्येत—"अथोत्तरक्षणोत्पत्तिं यावदवतिष्ठत" इति। (७)उत्पत्तिरुत्पद्यमानाद्भावादभिन्ना, तथा च क्षणिकत्वहानिरिति प्रतिज्ञाहानिः ॥ २१ ॥

---

(१) या भूतिरुत्पत्तिर्येषां पदार्थानां सैव क्रिया कारकमिति चोच्यत इत्यर्थः।

(२) ननु सादृश्यसिद्धौ तद्बलादनुगतरूपसिद्धिस्तदेव नास्ति असत्यपि सादृश्ये तद्भ्रमादत आह-सर्वथेति।

(३) ननु वैसादृश्येपि तन्तुभावे पटभावादुपादानोपादेयभाव इत्याशङ्क्याह नचेति। एकस्मिन्वस्तुक्षणे तद्भावभावस्याशक्यग्रहत्वाद्रासभादावपि प्रसङ्गादित्यर्थः।

(४) यदि च जात्युपाधौ कारणत्वं तर्हि जातिरेव कारणम् व्यक्तयस्तदवस्था स्युर्नान्याः अव्यक्तकारणत्वस्यान्यत्रायोगादिदं च वैनाशिकैर्नेष्टव्यमित्याह सामान्यस्य चेति।

(५) प्रतिज्ञोपरोधं व्याख्यातुं चतुर्विधां भाष्योक्तां बौद्धीयां नित्यादिप्रतिज्ञां दर्शयति नीलाभासस्येति। अयं भावः–विषयकारणसहकारिसंस्काराश्चतुर्विधा हेतवस्तान्प्रतीत्य प्राप्य चित्तं रूपादिविज्ञानं चैत्ताश्चित्तात्मकाः सुखादयश्च जायन्ते, यथा नीलविज्ञानस्य नीलं वस्तु आलम्बनप्रत्ययो विषयः, चक्षुः कारणमधिपतिप्रत्ययः, सहकारिप्रत्यय आलोकः, समनन्तरपूर्वप्रत्ययः संस्कार इति भेदः इति।

(६) एवं चित्तानां ज्ञानानां चतुर्भ्य उत्पत्तिमुक्त्वा चैत्तानामपि दर्शयति एवमिति।

(७) ननूत्तरक्षणोत्पत्तिकाले पूर्वक्षणस्थितावपि न स्थायित्वं सिध्यति एकक्षणेऽप्युभयसम्भवादुत्तरक्षणस्तु द्वितीयक्षणे भवतीत्याशङ्क्याहोत्पत्तिरिति। भूतितत्कर्त्रोरभेदोपगमादुत्तरभावजननहेतुत्वस्य भूतेरभिन्ने तथा च पूर्वक्षणस्योत्तरक्षणे यावदवस्थितौ स्थायित्वमित्यर्थः।

सू० प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥२२॥

(१)भावप्रतीपा सख्या बुद्धिः प्रतिसंख्या, तया निरोधः प्रतिसख्यानिरोधः। सन्तमिमम सन्तं करोमीत्येवमाकारता च बुद्धेर्भावप्रतीपत्वम्। (२)एतेनाप्रतिसंख्यानिरोधोऽपि व्याख्यातः सन्तानगोचरो वा निरोधः, सन्तानिक्षणगोचरो वा ? न तावत्संतानस्य निरोधः सम्भवति। हेतुफलभावेन हि व्यवस्थिताः संतानिन एवोदयव्ययधर्माणः सन्तानः। तत्र योऽन्त्यावन्त्यः सन्तानी यन्निरोधात् सन्तानोच्छेदेन भवितव्यम् स किं फलं किञ्चिदारभते न वा ? आरभते चेत्, नान्त्यः, तथा च न सन्तानोच्छेदः। अनारम्भे तु भवेदन्त्यः सः, किन्तु स्यादसन् अर्थक्रियाकारितायाः सत्तालक्षणस्य विरहात्। तदसत्त्वे तज्जनकमप्यसत् जनकत्वेनासदित्यनेन क्रमेणासन्तः सर्व एव सन्तानिन इति तत्संतानो नितरामसन्निति कस्य प्रतिसंख्यया निरोधः। (३)न च समानानां सन्तानिनां हेतुफलभावः सन्तानस्तस्य विसभागोत्पादो निरोधः, विसभागोत्पादक एव च क्षणः सन्तानस्यान्त्यः। (४)तथासति रूपविज्ञानप्रवाहे रसादिविज्ञानोत्पत्तौ सन्तानोच्छेदप्रसङ्गः। कथंचित्सारूप्ये वा विसभागेप्यन्ततः सत्तया तदस्तीति न सन्तानोच्छेदः। तदनेनाभिसन्धिनाह—"**सर्वेष्वपि सन्तानेषु सन्तानिनामविच्छिन्नेन हेतुफलभावेन सन्तानविच्छेदस्यासम्भवा- दि**"ति ( पृ० ५४१ पं० १४ )। नापि भावगोचरौ सम्भवतः प्रतिसंख्याप्रतिसंख्यानिरोधौ। अत्र तावदुत्पन्नमात्रापवृक्तस्य भावस्य न प्रतिसंख्यानिरोधः सम्भवति तस्य पुरुषप्रयत्नापेक्षाभावादित्यस्त्येव दूषणं तथापि दोषान्तरमुभयस्मिन्नपि निरोधे ब्रूते-"**नहि भावानाम्**"मिति ( पृ० ५४२ पं० १ )। यतो निरन्वयो विनाशो न संभवत्यतो निरुपाख्योऽपि न सम्भवति, तेनैवान्वयिना रूपेण भावस्य नष्टस्याप्युपाख्येयत्वात्। निरन्वयविनाशाभावे हेतुमाह—"**सर्वास्वप्यवस्थास्वि**"ति। (५)यद्यदन्वयिरूपं तत्तत्परमार्थसद्भावः, अवस्थास्तु विशेषाख्या उपजनापायधर्माणस्तासां सर्वासामनिर्वचनीयतया स्वतो न परमार्थसत्त्वमन्वय्येव तु रूपं तासां तत्त्वं तस्य च सर्वत्र प्रत्यभिज्ञायमानत्वान्न विनाश इत्यवस्थावतोऽविनाशान्नावस्थानां निरन्वयो विनाश इति, तासां तत्त्वस्यान्वयिनः सर्वत्राविच्छेदात्।

---

( १ ) प्रतिसंख्येति सूत्रे प्रतिशब्दः प्रातिकूल्यार्थः, सख्याशब्दश्च बुद्धिवचन इत्याशयेनाह भावेति। प्रतीपा—विरोधिनी।

( २ ) एतेनेति। तद्विपरीतोऽबुद्धिपूर्वकनिरोधोऽप्रतिसंख्यानिरोध इत्यर्थः।

( ३ ) नन्वन्त्यसन्तानिनो न फलानारम्भकत्वं यतोऽसत्त्वापत्तिः, न च फलारम्भे सन्तानानुच्छेदः, न हि हेतुफलभावमात्रं सन्तानः, किन्तु सजातीयानां हेतुफलभावस्तत्र विशुद्धविजातीयक्षणोत्पत्तावपि सजातीयहेतुफलभावरूपसन्तानो निवर्तत इत्याशङ्क्याह नचेति।

( ४ ) हेतुमाह तथासतीति। सादृश्यं हि सन्तानिनां तुल्यजातीयविषयत्वेन, विषयाणां च तुल्यजातीयत्वे किमपरजात्या उत परजात्या ? नाद्यः, चैत्तसन्तानेऽनुवर्तमाने एव रूपज्ञानसन्तानविरमे रसज्ञानोदये सन्तानोच्छेदप्रसङ्गादित्युक्त्वा द्वितीयं दूषयति कथञ्चिदिति। सत्तया जात्या तत्सारूप्यमस्तीति सोपप्लवसन्तानोपरमे सति सति विशुद्धसन्तानोदयेऽपि न सन्तानोच्छेदः स्यादित्यर्थः।

( ५ ) ननु यस्य घटादेर्विनाशः स नान्वयी यस्य तु सामान्यस्यान्वयस्तन्न नश्यति तत्कथं सान्वयत्वं नाशस्येत्यत आह यद्यदिति।

त्यादेतद् , मृत्पिण्डस्थूलस्थूलकपालादिषु सर्वत्र मृत्तत्त्वप्रत्यभिज्ञानाद्भवत्वेवम् , तप्तोपलतलपतितनष्टस्य तूदबिन्दोः किमस्ति रूपमन्वयि प्रत्यभिज्ञायमानं येनास्य न निरन्वयो नाशः स्यादित्यत आह—"अल्पष्टप्रत्यभिज्ञानास्ववपी"ति अत्रापि तत्तोयं तेजसा मार्तण्डमण्डलमम्बुदत्वाय नीयत इत्यनुमेयं मृदादीनामन्वयिनामविच्छेददर्शनात् (१)शक्यं त्वत्र वक्तुम्—

उदबिन्दौ च सिन्धौ च तोयभावो न भिद्यते ।
विनष्टेऽपि ततो बिन्दावस्ति तस्यान्वयोऽम्बुधौ ॥

तस्मान्न कश्चिदपि निरन्वयो नाश इति सिद्धम् ॥ २२ ॥

## सू० उभयथा च दोषात् ॥ २३ ॥

परिष्कारः—सामग्री सम्यग्ज्ञानस्य यमनियमादिः, श्रवणमननादिश्च । **मार्गः**—क्षणिकनैरात्म्यादिभावनाः(२) । अतिरोहितमन्यत् ॥ २३ ॥

## सू० आकाशे चाविशेषात् ॥ २४ ॥

एतद्व्याचष्टे "यच्च तेषामि"ति । वेदप्रामाण्ये विप्रतिपन्नानपि प्रति शब्दगुणानुमेयत्वमाकाशस्य वक्तव्यम् । (३)तथाहि जातिमत्त्वेन सामान्यविशेषसमवायेभ्यो विभक्तस्य शब्दस्यास्पर्शत्वे सति बाह्येकेन्द्रियग्राह्यत्वेन गन्धादिवद्गुणत्वमनुमितम् । न चायमात्मगुणो बाह्येन्द्रियगोचरत्वात् । अत एव न मनोगुणः, तद्गुणानामप्रत्यक्षत्वात् । न पृथिव्यादिगुणः, तद्गुणगन्धादिसाहचर्यानुपलब्धेः । तस्माद्गुणो भूत्वा गन्धादिवदसाधारणेन्द्रियग्राह्यो यद्द्रव्यमनुमापयति तदाकाशं पञ्चमं भूतमस्त्विति । "अपि चावरणाभावमाकाशमिच्छत" इति ( पृ० ५४३ प० ३ ) । निषेध्यानिषेधाधिकरणनिरूपणाधीननिरूपणो निषेधो नासत्यधिकरणानिरूपणे शक्यो निरूपयितुम् । तच्चावरणाभावाधिकरणमाकाशं वस्त्विति । अतिरोहितार्थमन्यत ॥ २४ ॥

## सू० अनुस्मृतेश्च ॥ २५ ॥

विभजते "अपि च वैनाशिकः सर्वस्य वस्तुन" इति । यस्तु सत्य(४)प्येतस्मिन्नुपलब्धृस्मर्त्रोरन्यत्वेऽपि समानायां संततौ कार्यकारणभावात् स्मृतिरुपपत्स्यत इति

---

( १ ) तप्तशिलातलपतितस्योदबिन्दोर्दृश्यमानान्वयिरूपाभावं स्वीकृत्यानुमानादन्वयं प्रदर्श्य इदानीं प्रत्यक्षतोऽनुवृत्तिमाह शक्यं त्विति । उदेति । उदबिन्दावुपलतलपतिते सिन्धौ समुद्रे च तोयभावस्तोयत्वसामान्यं न भिद्यते, तस्मादुदबिन्दौ विनष्टेऽपि च तस्य बिन्दोः सामान्यरूपेणाम्बुधावस्त्यन्वय इति श्लोकार्थः ।

( २ ) मोक्षप्राप्तिकारणत्वाद्भावनाया मार्गत्वमित्यर्थः ।

( ३ ) परिशेषतः शब्दस्याकाशाश्रयत्वं साधयन्नाह तथाहीति । तस्य हि न तावद्द्रव्यादिभ्योऽन्यत्र प्रसक्तिरिति प्रदर्शयितुं सामान्यादित्रयेऽनन्तर्भावमाह जातिमत्त्वेनेति । गुणत्वेन तस्याकाशाश्रयत्वसिद्धये द्रव्यकर्मणोरनन्तर्भावमाहास्पर्शेति । अत्र शब्दो गुणः जातिमत्त्वे सति बाह्यैकेन्द्रियग्राह्यत्वाद्गन्धवदित्यनुमानप्रयोगो बोध्यः ।

( ४ ) अनुस्मरणे । अन्यत्वेऽपीत्यस्य उपपत्स्यत इत्यत्रान्वयः । तन्मते च क्रियातिरिक्तकर्त्रभावादुपलब्धिस्मृती एवोपलब्धृस्मर्तारौ तयोर्भेदेऽप्येकसन्ततिगतत्वेन कार्यकारणभावात्साक्षिवत्त्व इति बोध्यम् ।

मन्यमानो न परितुष्यति तं प्रति प्रत्यभिज्ञासमाज्ञातप्रत्यक्षाविरोधमाह—"अपि च दर्श० नस्मरणयोः कर्तरी"ति ( पृ० ५४४ पं० १ )। ततोऽहमद्राक्षीदिति प्रतीयाद्, अहं स्मराम्यन्यस्त्वद्राक्षीदित्यर्थः। प्रत्यभिज्ञाप्रत्यक्षविरोधप्रपञ्चस्त्वुत्तरः—"आ जन्मन" "आ चोच्छ्वासादुच्छ्वासाद्" आचरणादित्यर्थः। न च सादृश्यनिबन्धनं प्रत्यभिज्ञानं, पूर्वाप॰ रक्षणदर्शिन एकस्याभावे तदनुपपत्तेः। शङ्कते—"तेनेदं सदृशमि"ति। अयमर्थो— विकल्पप्रत्ययोऽयम्। विकल्पश्च स्वाकारं बाह्यतयाऽध्यवस्यति, (१)न तु तत्त्वतः पूर्वापरौ क्षणौ तयोः सादृश्यं वा गृह्णाति, तत्कथमेकस्यानेकदर्शिनः स्थिरस्य प्रसङ्ग इति, निराक रोति—"न तेनेदमि"ति ( पृ० ५४५ पं० २ ) "भिन्नपदार्थोपादानादि"ति। नानापदार्थसम्भिन्नवाक्यार्थावभासस्तावदयं विकल्पः प्रथते, तत्रैते नानापदार्था न प्रथन्त इति ब्रुवाणः (२)स्वसंवेदनं बाधेत। न चैकस्य ज्ञानस्य नानाकारत्वं सम्भवति, एकत्वविरो॰ धात्। न च तावन्त्येव ज्ञानानीति युक्तम्, तथासति प्रत्याकारं ज्ञानानां समाप्तेस्तेषां च परस्परवार्ताज्ञानाभावाद् नानेत्येव न स्यात्। तस्मात्पूर्वापरक्षणतत्सादृश्यगोचरत्वं ज्ञानस्य वक्तव्यम्, न चैतत्पूर्वापरक्षणावस्थायिनमेकं ज्ञातारं विनेति क्षणभङ्गभङ्गप्रसङ्गः। यद्युच्येत— अस्त्येतस्मिन् विकल्पे तेनेदं सदृशमिति पदद्वयप्रयोगो न त्विह तत्तेदन्तास्पदौ पदार्थौ, तयोश्च सादृश्यमिति विवक्षितम्, अपि त्वेवमाकारता ज्ञानस्य कल्पितेति,(३) तत्राह— "यदा हि लोकप्रसिद्धः पदार्थ" इति। (४)एकाधिकरणविप्रतिषिद्धधर्मद्वयाभ्युप॰ गमो विवादः। तत्रैकः स्वपक्षं साधयत्यन्यश्च तत्साधनं दूषयति। न चैतत्सर्वमसति विक॰ ल्पानां बाह्यालम्बनत्वेऽसति च लोकप्रसिद्धपदार्थकत्वे भवितुमर्हति। (५)ज्ञानाकारत्वे हि विकल्पप्रतिभासिनां नित्यत्वानित्यत्वादीनामेकार्थविषयत्वाभावाज्ज्ञानानां च धर्मिणां भेदाद् विरोधः। नह्यात्मनित्यत्वं तु ह्यनित्यत्वं च ब्रुवाणौ विप्रतिपद्येते। (६)न चालौकिकार्थेना॰ नित्यशब्देनात्मनि विभुत्वं विवक्षित्वाऽनित्यशब्दं प्रयुञ्जानो लौकिकार्थं नित्यशब्दमात्मनि प्रयुञ्जानेन विप्रतिपद्यते। तस्मादनेन स्वपक्षं प्रतितिष्ठापयिषता परपक्षसाधनं च निराचिकी॰

---

( १ ) पूर्वोत्तरक्षणद्वयग्रहणाभावे तेनेदमित्याकारकप्रत्ययोदयायोगात् 'तेनेदम्' ( ५४५ पं० १ ) इति भाष्यस्थशङ्कानुपपत्तिमाशङ्क्याह न तु तत्त्वत इति।

( २ ) अत्र किन्तावत्क्षणभङ्गवादिना तेनेदं सदृशमिति प्रत्यये तत्तेदन्तावच्छिन्नार्थयोः तयोः सादृश्यं च भानमङ्गीक्रियते न वा? भानपक्षे किन्ते ज्ञानस्याकारा उत तस्माद्भिन्नानि। आद्ये तज्ज्ञानमेकमनेकं वा नाद्य॰ इत्याह स्वसंवेदनमिति। ज्ञानाकारत्वपक्षे एकस्य नानात्वं व्याहतमित्याह न चैकस्येति। ज्ञानभेदं निराचष्टे न च तावन्तीति।

( ३ ) अयमत्र बौद्धाक्षेपाशय—वेदान्त्युक्तः प्रतीतिविरोधो न स्यादतो नास्मिन्मतेऽर्थस्य ज्ञानावभासापलाप, किन्तु प्रतीतावारोपितो बाह्योऽर्थो नास्ति, न च प्रतीतिमात्रोऽतो न ज्ञानस्यैकस्य नानार्थाकारत्वप्रयुक्तव्याघातः, न वा बाह्यार्थाभ्युपगमप्रसङ्ग इति।

( ४ ) भाष्ये परपक्षाक्षेपानुपपत्तिरुक्ता तां विशदयन् समाधत्ते एकाधिकरणेति। इदं नित्यमिदमनित्यमिति भिन्नयोर्ज्ञानयोराकारौ, तथाच धर्मिभेदेन व्यवस्थापनाद्विवादो न स्यादित्यर्थः।

( ५ ) असति बाह्यालंबनत्व इत्येतद्विवृणोति ज्ञानाकारत्वे हीति। विषयत्वाभावात्—आश्रितत्वाभावात्।

( ६ ) असति च लोकप्रसिद्धपदार्थत्वे इत्येतद्विशदयति न चेति।

ध्येता विकल्पानां लोकसिद्धपदार्थकता बाह्यालम्बनता च वक्तव्या । (१)यद्युच्येत—'द्विविधो हि विकल्पानां विषयो ग्राह्यश्चाध्यवसेयश्च । तत्र स्वाकारो ग्राह्योऽध्यवसेयस्तु बाह्यः, तथा च पक्षप्रतिपक्षपरिग्रहलक्षणा विप्रतिपत्तिः प्रसिद्धपदार्थकत्वं चोपपद्यत इत्याह—"एवमेवैषोऽर्थः" इति । निश्चितं यत्तदेव वक्तव्यं ततोऽन्यदुच्यमानं बहुप्रलापित्वमात्मनः केवलं प्रख्यापयेत् । (२)अयमभिसन्धिः—केयमध्यवसेयता बाह्यस्य ? यदि ग्राह्यता न द्वैविध्यम् । अथान्या सोच्यताम् । ननूक्ता तैरेव स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवृत्तिरिति । अथ विकल्पाकारस्य कोऽयमध्यवसायः, (३)किं करणमाहो योजनमुतारोप इति । न तावत्करणं नह्यन्यदन्यत् कर्तुं शक्यम् । नहि जातु सहस्रमपि शिल्पिनो घटं पटयितुमीशते । न चान्तरं बाह्येन योजयितुम् । अपि च तथा सति युक्त इति प्रत्ययः स्यात्, न चास्ति । आरोपोऽपि किं गृह्यमाणे बाह्ये उतागृह्यमाणे । यदि गृह्यमाणे तदा किं विकल्पेनाहो तत्समयजेनाविकल्पकेन । (४)न तावद्विकल्पोऽभिलापसंसर्गयोग्यगोचरोऽशक्याभिलापसमयं स्वलक्षणं देशकालाननुगतं गोचरयितुमर्हति । यथाहुः—

> अशक्यसमयो ह्यात्मा सुखादीनामनन्यभाक् ।
> तेषामतः स्वसंवित्तिर्नाभिजल्पानुषङ्गिणी(५) ॥ इति ।

(६)न च तत्समयभाविना निर्विकल्पकेन गृह्यमाणे बाह्ये विकल्पेनागृहीते तत्र विकल्पः स्वाकारमारोपयितुमर्हति । नहि रजतज्ञानाप्रतिभासिनि पुरोवर्तिनि वस्तुनि रजतज्ञानेन शक्यं रजतमारोपयितुम् । अगृह्यमाणे तु बाह्ये स्वाकार इत्येव स्यान्न बाह्य इति, तथा च नारोपणम् । (७)अपि चायं विकल्पः स्वसंवेदनं सन्तं विकल्पं किं वस्तुसन्तं स्वाकारं गृहीत्वा

---

(१) एवन्तावत्तत्तेदंतास्पदादिरर्थो ज्ञानस्यान्तर आकार इत्यभिप्रायेण विज्ञानवादिमतं बाह्यार्थवादूषणमध्येऽपि प्रसङ्गादाशंक्य प्रतिक्षिप्तमधुना बाह्यार्थोऽस्ति, स च क्षणिक एव निर्विकल्पके चकास्ति सविकल्पकप्रत्ययास्तु विकल्पास्तत्रतत्सादृश्याद्याकारेण निर्भासन्तेऽतो विप्रतिपत्त्यादिव्यवहारसिद्धिरिति बाह्यार्थवादमाश्रित्यैव शङ्कते यद्युच्येतेति । अध्यवसेय—स्वाकारस्य निर्विकल्पस्यावसायादधि उपरि अवसेयः बाह्यः, अनेन 'स्वग्राहकस्य ज्ञानस्य स्वयं तावद्ग्राह्यं कथमस्य बाह्याकारविषयतेति' प्रत्युक्तम् ।

(२) कथन्तर्हि बाह्यार्थस्यानिश्चितत्वापादनं भाष्ये तस्योक्तरीत्या निश्चितत्वादत आशयमभिसंधिंदिति ।

(३) किमिति । आन्तरस्यानभिधेयस्य ज्ञानाकारस्य तद्विपरीतबाह्याकाररूपेणाध्यवसायो नाम किं तद्रूपेण निष्पादनमुत तेन सम्बन्धेन किंवा तेनाकारेणारोपणमिति विकल्पार्थो बोध्यः ।

(४) सविकल्पकेन बाह्यग्रहणपक्षे तावत्किमभिमत बाह्यं यत्रारोप—स्वलक्षणं ( विशेष. ) सामान्यमिति विकल्प्य नाद्य इत्याह न तावदिति । अभिलापसंसर्गयोग्यजातिविशिष्टवस्तुगोचरो विकल्पः, अभिलापस्य च शब्दस्य सामान्येनैव सह संगतिग्रहो युक्त न स्वलक्षणेन देशकालाननुगततयाऽनन्यानुगम सङ्केतग्रहासम्भवात् अत शब्दोल्लिखितसविकल्पकप्रत्ययस्य न स्वलक्षणविषयत्वमित्यर्थ ।

(५) सुखादिक्षणिकभावानामात्मा स्वरूपमन्याननुगतत्वादशक्यसंकेतमतस्तेषामसाधारणाकारवित्त्या संवित्तिरभिजल्पयोग्या न भवति किन्तु निर्विकल्पकैवेति पद्यार्थो द्रष्टव्य ।

(६) द्वितीयं निषेधति नचेति । विकल्पेनागृहीते बाह्ये विकल्पसमसमयेन निर्विकल्पकेन गृहीते विकल्पसमसमयेन निर्विकल्पकेन गृहीते विकल्प स्वाकारमारोपयितुं नार्हतीत्यर्थ ।

(७) एवं तावदधिष्ठानप्रतिभासासम्भवाद्बाह्ये ज्ञानस्वरूपस्यारोपो निषिद्धः अधुनाऽऽरोप्यास्फुरणायो-

पश्चाद्बाह्यमारोपयत्यथ यदा स्वाकारं गृह्णाति तदैवारोपयति, न तावत् क्षणिकतया क्रमविरहिणो ज्ञानस्य क्रमवर्तिनी ग्रहणारोपणे कल्पेते । तस्माद्यदैव स्वाकारमनर्थं गृह्णाति तदैवार्थमारोपयतीति वक्तव्यम् ।

न चेतद्युज्यते, (१)स्वाकारो हि स्वसंवेदनप्रत्यक्षतयाऽतिविशदो बाह्यं चारोप्यमाणमविशदं सत्ततोऽन्यदेव स्यान्न तु स्वाकारः समारोपितः । (२)न च भेदाग्रहमात्रेण समारोपाभिधानम् । वैशद्याविशदरूपतया भेदग्रहस्योक्तत्वात् । अपि चागृह्यमाणे चेद्बाह्येऽबाह्यात् स्वलक्षणाद्भेदाग्रहेण तदभिमुखी प्रवृत्तिः, हन्त तर्हि त्रैलोक्यत एवानेन न भेदो गृहीत इति यत्र क्वचन प्रवर्तेताविशेषात् । (३)एतेन ज्ञानाकारस्यैवालीकस्यापि बाह्यत्वसमारोपः प्रत्युक्तः । तस्मात्सूष्ठूक्तं 'ततोऽन्यदुच्यमानं बहुप्रलापित्वमात्मनः ख्यापयेदि'ति । अपि च सादृश्यनिबन्धनः संव्यवहारस्तेनेदं सदृशमित्येवमाकारबुद्धिनिबन्धनो भवेन्न तु तदेवेदमित्याकारबुद्धिनिबन्धन इत्याह—"न चायं सादृश्यात्संव्यवहार इति" ( पृ० ५४६ प० १ ) । ननु ज्वालादिषु सादृश्यादसत्यामपि सादृश्यबुद्धौ तद्भावावगमनिबन्धनः संव्यवहारो दृश्यते यथा तथेहापि भविष्यतीति पूर्वापरितोषेणाह—"भवेदपि कदाचिद्बाह्यवस्तुनी"ति । तथाहि विविधजनसङ्कीर्णगोपुरेण पुरं निविशमानं नरान्तरेभ्य आत्मनिर्धारणायासाधारणं चिन्हं विदधतमुपहसन्ति पाशुपतं पृथग्जना इति ॥ २५ ॥

## सू० नासतोऽदृष्टत्वात् ॥ २६ ॥

"इतश्चानुपपन्नो वैनाशिकसमय" इति । (४)अस्थिरात्कार्योत्पत्तिमिच्छन्तो वैनाशिका अर्थादभावादेव भावोत्पत्तिमाहुः । (५)उक्तमेतदधस्तात् निरपेक्षात्कार्योत्पत्तौ पुरुषकर्मवैयर्थ्यम्, सापेक्षतायां च क्षणस्याभेद्यत्वेनोपकृतत्वानुपकृतत्वानुपपत्तेरनुपकारिणि चोपेक्षाभावादक्षणिकत्वप्रसङ्गः । (६)सापेक्षत्वानपेक्षत्वयोश्चान्यतरनिषेधस्यान्यतरविधानना-

---

गाद्य नारोप इत्याहापि चेति । स्वसंवेदनं सन्तं विकल्पं यदा बाह्यं बाह्यत्वेनारोपयति तदा किं वस्तुसन्तं स्वाकारं गृहीत्वा पश्चादारोपयतीति योजना ।

( १ ) युगपत्स्वाकारस्य ग्रहणं बाह्यत्वेन चारोपणमिति पक्षे किं स्वीकारबाह्ययोरैक्यस्फुरणमारोप उताख्यातिमत इव विवेकाग्रहमात्रन्तत्र नाद्य इत्याह स्वाकारो हीति । स्वप्रकाशत्वपरप्रकाशत्वाभ्यां भेदावभासान्नैक्यस्फुरणसम्भव इत्यर्थः ।

( २ ) द्वितीये किं बाह्ये गृह्यमाणे विवेकाग्रहो मिथ्याव्यवहारजनकः अगृह्यमाणे वा ? नाद्य इत्याह न चेति । न द्वितीय इत्याहापि चेति ।

( ३ ) परमार्थज्ञानाकारस्य बाह्यवस्त्वात्मना समारोपं प्रतिक्षिप्य वासनाप्रापितस्य कल्पितज्ञानाकारस्य बाह्ये समारोपं निरस्यति एतेनेति ।

( ४ ) ननु बौद्धैरभावस्यार्थक्रियाकारित्वानभ्युपगमात्कथमभावाद्भावोत्पत्तिस्तत्सिद्धान्तत्वेनानूद्य निरस्यते इत्याशङ्क्याह अस्थिरादिति ।

( ५ ) उक्तमिति । 'इतरेतरप्रत्ययत्वात्' ( अ० २ पा० २ सू० १९ ) इत्यस्य सूत्रस्य व्याख्याने यदन्त्यक्षणभाजा अनपेक्षा' इत्यादिनोक्तं निरपेक्षस्य क्षणिकस्य कारणत्वनिरसनम्, सापेक्षस्यापि तस्य 'न क्षणिकपक्षे उपकार्योपकारकभावो स्ती'त्यादिनोक्तन्तदेवानुवदति निरपेक्षादित्यादिना ।

( ६ ) ननु यदि क्षणिकेनोपकृतस्य सम्भवति अनुपकृतस्य च न सापेक्षत्व,निरपेक्षस्य च कारणत्वमतिप्रसक्तन्तर्हि क्षणिको न सापेक्षो नापि निरपेक्ष किन्तु प्रकारान्तरयोगात्मेत्याशङ्क्याह सापेक्षत्वेति ।

न्तरीयकत्वेन प्रकारान्तराभावान्नास्थिराद्भावाद्भावोत्पत्तिरिति क्षणिकपक्षेऽर्थादभावाद्भावो- त्पत्तिरिति परिशिष्यत इत्यर्थः । न केवलमर्थादापद्यते दर्शयन्ति च **"नानुपमृद्य प्रादु- र्भावा"** दिति । एतद्विभजते—**"विनष्टाद्धि किले"**ति । किलकारोऽनिच्छायाम्, कूट- स्थाच्चेत्कारणात् कार्यमुत्पद्येतापि सर्वं सर्वत उत्पद्येत । (१)अयमभिसन्धिः—कूटस्थो हि कार्यजननस्वभावो वा स्यादतत्स्वभावो वा ? स चेत्कार्यजननस्वभावस्ततो यावदनेन कार्यं कर्तव्य तावत्सहसैव कुर्यात्, समर्थस्य क्षेपायोगात्, अतत्स्वभावत्वे तु न कदाचिदपि कुर्यात् । यच्चुच्येत—'समर्थोऽपि क्रमवत्सहकारिसाचिव्यः क्रमेण कार्याणि करोती'ति । तदयुक्तम्, विकल्पासहत्वात्—किमस्य सहकारिणः कश्चिदुपकारमादधति न वा ? अनाधानेऽनुपकारितया सहकारिणो नापेक्ष्येरन्, आधानेऽपि भिन्नमभिन्नं वोपकारमादध्युः । अभेदे तदेवाभिहितमिति कौटस्थ्यं व्याहन्येत । भेदे तूपकारस्य तस्मिन्सति कार्यस्य भावादसति चाभावात्सत्यपि कूटस्थे कार्यानुत्पादादन्वयव्यतिरेकाभ्यामुपकार एव कार्यकारी न भाव इति नार्थक्रियाकारी भावः । तदुक्तम्—

वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम् ।
(२)चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्फलः ॥ इति ।

तथा चाकिञ्चित्करादपि चेत्कूटस्थात्कार्यं जायेत सर्वं सर्वस्माज्जायेतेति सूक्तम् । उपसंहरति **"तस्मादभावग्रस्तेभ्य"** इति । **"तत्रेदमुच्यते नासतोऽदृष्टत्वा-** **दि"**ति । नाभावात्कार्योत्पत्तिः, कस्मात् ? **अदृष्टत्वात्** । नहि शशविषाणादङ्कुरादीनां कार्याणामुत्पत्तिर्दृश्यते । यदि स्वभावाद्भावोत्पत्तिः स्यात्ततोऽभावत्वाविशेषात् शशविषाणा- दिभ्योऽप्यङ्कुरोत्पत्तिः, नह्यभावो विशिष्यते, विशेषणयोगे वा सोऽपि भावः स्यान्न निरुपाख्य इत्यर्थः । विशेषणयोगमभावस्याभ्युपेत्याह—**"नाप्यभावः कस्यचिदुत्पत्तिहेतुरि"-** ति । ( पृ० ५४७ पं० ८ ) । अपि च यद्येनानन्वितं न तत्तस्य विकारो, यथा घटशरा- वोदञ्चनादयो हेम्नानन्विता न हेमविकारा, अनन्विताश्चैते विकारा अभावेन, तस्मान्नाभा- वविकारा, भावविकारास्तु ते, भावस्य तेनान्वितत्वादित्याह—**अभावाच्च भावोत्प- त्ताव**"ति। अभावकारणवादिनो वचनमनुभाष्य दूषयति—**"यत्तूक्तमि"**ति । स्थिरोऽपि भाव. क्रमवत्सहकारिसमवधानात् क्रमेण कार्याणि करोति, न चानुपकारकाः सहकारिणः, स चास्य सहकारिभिराधीयमान उपकारो न भिन्नो नाप्यभिन्नः किन्त्वानिर्वाच्य एवानिर्वा- च्याच्च कार्यमप्यनिर्वाच्यमेव जायते । (३)न चैतावता स्थिरस्याकारणत्वं तदुपादानत्वात्का-

( १ ) कूटस्थस्यापि नियतशक्तिकत्वात् 'सर्वं सर्वत उत्पद्यते' इति भाष्यासङ्गत्या सर्वत सर्वावस्था- पाद्यन्तसर्वोत्पत्तिरिति कार्ययौगपद्यापत्त्यभिप्रायेण भाष्यं सङ्गमयन्नाहायमिति । अन्यकृतोपकारस्य भावा- दभेदे सत्युपकारशब्देन भावरूपमेवाभिहितं स्यात् तस्य चान्यकृतत्वे कौटस्थ्यव्याघात इत्यर्थः ।

( २ ) चर्मोपमश्चेत्—स्थिरः कारणत्वाभिमतः पदार्थ उपकाराश्रयश्चेदित्यर्थः । उपकारादभेदे भावस्य स भावोऽनित्यः भेदे स उपकारोऽनित्यः, स एव च कारणं न भाव इति भाव । उपकारानाश्रयत्वे दूषणम् असत्फल इति ।

( ३ ) यदुक्तं बौद्धेन—अन्वयव्यतिरेकाभ्यामुपकार एव कार्यकारी न भाव इति, तत्राह न चैताव- तेति । परमार्थाश्रितत्वात्कार्यकल्पनाया भाव उपादानं तद्धर्मस्त्वनिर्वाच्य उपकारः कार्योपयोगीत्यर्थः ।

-र्थस्य रज्ज्वादानत्वमिव भुजङ्गस्येत्युक्तम् । तथा च श्रुतिः 'मृत्तिकेत्येव सत्य'मिति । (१)अपि च येऽपि सर्वतो विलक्षणानि स्वलक्षणानि वस्तुसन्त्यास्थिषत, तेषामपि किमिति बीजजातीयेभ्योऽङ्कुरजातीयान्येव जायन्ते कार्याणि, न तु क्रमेलकजातीयानि, नहि बीजाद्बीजान्तरस्य वा क्रमेलकस्य वाऽत्यन्तवैलक्षण्ये कश्चिद्विशेषः । न च बीजाङ्कुरत्वे सामान्ये परमार्थसती(२) येनैतयोर्भाविकः कार्यकारणभावो भवेत् । तस्मात्काल्पनिकादेव स्वलक्षणोपादानाद्बीजजातीयात्तथाविधस्यैवाङ्कुरजातीयस्योत्पत्तिनियम आस्थेयः, अन्यथा कार्यहेतुकानुमानोच्छेदप्रसङ्गः । दिङ्मात्रमत्र सूचितं प्रपञ्चस्तु ब्रह्मतत्त्वसमीक्षान्यायकणिकयोः कृत इति नेह प्रतन्यते विस्तरभयात् ॥ २६ ॥

## उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥

भाष्यमस्य सुगमम् ॥ २७ ॥

## नाभाव उपलब्धेः ॥ २८ ॥

पूर्वाधिकरणसङ्गति(३)माह—"एवमि"ति ( पृ० ५४८ पं० १८ ) । बाह्यार्थवादिभ्यो विज्ञानमात्रवादिनां सुगताभिप्रेततया विशेषमाह—"केषाञ्चित्किले"ति ( पृ० ५४९ पं० १) । (४)अथ प्रमाता प्रमाणं प्रमेयं प्रमितिरिति हि चतसृषु विधासु तत्त्वपरिसमाप्तिरासामन्यतमाभावेऽपि तत्त्वस्याव्यवस्थानात् । तस्मादनेन विज्ञानस्कन्धमात्रं तत्त्वं व्यवस्थापयता चतस्रो विधा एषितव्यास्तथा च न विज्ञानस्कन्धमात्रं तत्त्वम्, नह्यस्ति सम्भवो विज्ञानमात्रं चतस्रो विधाश्चेत्यत आह—"तस्मिंश्च विज्ञानवादे बुद्ध्यारूढेन रूपेणे"ति । यद्यप्यनुभवाद्नान्योऽनुभाव्योऽनुभवितानुभवनं, तथापि बुद्ध्यारूढेन बुद्धिपरिकल्पितेनान्तस्य एवैष प्रमाणप्रमेयफलव्यवहारः प्रमातृव्यवहारश्चेत्यपि द्रष्टव्यं न पारमार्थिक इत्यर्थः । (५)एवं च न सिद्धसाधनम् । नहि ब्रह्मवादिनो नीलाद्याकारां वित्तिमभ्युपगच्छन्ति, किं त्वनिर्वचनीयं नीलादीति । (६)तथाहि—स्वरूपं विज्ञानस्यासत्याकारयुक्तं प्रमेयम्, प्रमेयप्रकाशनं प्रमाणफलं, तत्प्रकाशनशक्तिः प्रमाणम् । बाह्यवादिनोरपि वैभाषिकसौत्रान्तिकयोः (७)काल्पनिक

---

(१) बौद्धं प्रति प्रतिबन्दीमाहापि चेति ।

(२) बौद्धमते वस्तुभूतसामान्यस्यापोहभिन्नस्यासत्त्वादित्यर्थः ।

(३) रूपादिरहितब्रह्मजगदुपादानत्ववादिसमन्वयस्य विज्ञानं नीलाद्याकारमित्यनुमानविरोधाविरोधसन्देहे पूर्वोक्तसमुदायाप्राप्त्यादिदूषणान्युपजीव्य बाह्यार्थापलापाक्षेपहेतुमल्लक्षणां सङ्गतिमित्यर्थः ।

(४) व्याघातेन विज्ञानमात्रवादिनो बौद्धस्य पूर्वपक्षानुत्थानमाशङ्कते अथेति । वस्तुव्यवस्थायै प्रमाणाद्यभ्युपगम्य तन्निषेधो व्याघात इत्यर्थः ।

(५) ननु नीलाद्याकारं विज्ञानमित्यनुमाने वेदान्तिमतेन सिद्धसाधनम्, ब्रह्मणो विज्ञानात्मकस्य नीलाद्यात्मकत्वादन्यथाऽद्वैतासिद्धेरत आह एवं चेति । बौद्धा हि वित्तेर्विज्ञानस्यान्तरं नीलादिरूपं वदन्ति न वयमित्यर्थः ।

(६) बुद्धौ परिकल्पितं ज्ञेयादिविभागमुपपादयति तथाहीति । अत्राकारस्यासत्यत्वं बाह्यरूपेणासत्येनान्तररूपेण सत्येनाकारेण युक्तत्वमित्यर्थः ।

(७) काल्पनिक एवेति । वास्तविकश्चेदुपलभ्येतातोऽनुपलब्ध्या मिथ्याप्रमाणफलविभाग काल्पनिक एव बाह्यार्थवादिमतेपीति भावः ।

एव प्रमाणफलव्यवहारो ऽभिमत इत्याह—"सत्यपि च ह्यर्थे" इति । (१)भिन्नाधिकरणत्वे हि प्रमाणफलयोस्तद्भावो न स्यात्, नहि खदिरगोचरे परशौ पलाशे द्वैधीभावो भवति, तस्मादनयोरैकाधिकरण्यं वक्तव्यम् । (२)कथं च तद्भवति ? यदि ज्ञानस्थे एव प्रमाणफले भवतः । (३)न च ज्ञानं स्वलक्षणसनंगमशाभ्यां वस्तुसद्भ्यां युज्यते, तदेव ज्ञानमज्ञानव्यावृत्तिकल्पितज्ञानत्वांशं फलम् । अशक्तिव्यावृत्तिपरिकल्पितात्मानात्मप्रकाशनशक्त्यंशं प्रमाणम् । प्रमेयं त्वस्य बाह्यमेव । (४)एवं सौत्रान्तिकसमयेऽपि । ज्ञानस्यार्थसारूप्यमनीलाकारव्यावृत्त्या कल्पितनीलाकारत्वं प्रमाणं व्यवस्थापनहेतुत्वात् । अज्ञानव्यावृत्तिकल्पितं च ज्ञानत्वं फलं व्यवस्थाप्यत्वात् । तथा चाहुः—'नहि वित्तिसत्तैव तद्वेदना युक्ता, तस्याः सर्वत्राविशेषात् । तां तु सारूप्यमाविशत् सरूपयत्तद् घटयेत्' इति । प्रश्नपूर्वकं बाह्यार्थाभाव उपपत्तीराह—"कथं पुनरवगम्यत" इति । स हि विज्ञानालम्बनत्वाभिमतो बाह्योऽर्थः परमाणुस्तावन्न संभवति । एकस्थूलनीलाभासं हि ज्ञानं न परमसूक्ष्मपरमाण्वाभासम् । न चान्याभासमन्यगोचरं भवितुमर्हति(५), अतिप्रसङ्गेन सर्वगोचरतया सर्वसर्वज्ञत्वप्रसङ्गात् । न च प्रतिभासधर्मः स्थौल्यमिति युक्तम्, विकल्पासहत्वात्—किमयं प्रतिभासस्य ज्ञानस्य धर्मः, उत प्रतिभासनकालेऽर्थस्य धर्मः । यदि पूर्वः कल्पोऽद्धा, तथा सति हि (६)स्वांशालम्बनमेव विज्ञानमभ्युपेतं भवति । एवं च कः प्रतिकूलं भवति अनुकूलमाचरति । द्वितीय इति चेत् । तथा हि रूपपरमाणव एव निरन्तरमुत्पन्ना एकविज्ञानोपारोहिणः स्थौल्यं, न चात्र कस्यचिद्भ्रान्तता । नहि न ते रूपपरमाणवो न च न निरन्तरमुत्पन्ना न चैकविज्ञानानुपारोहिणः । तेन मा भून्नीलत्वादिवत्परमाणुधर्मः प्रत्येकं परमाणुष्वभावात् । प्रतिभासदशापन्नानां तु तेषां भविष्यति बहुत्वादिवत्सांवृतं (७) स्थौल्यम् । यथाहुः—

---

(१) वैभाषिकमते प्रमाणफलविभागस्य कल्पितत्वमुपपादयति भिन्नाधिकरणत्वे हीति । तद्भाव—करणफलभावः । करणफलभावे समानाधिकरणयोरेवेत्यत्र दृष्टान्तमाह नहीति ।

(२) कथमिति । ज्ञानस्थत्वाभावे कथमैकाधिकरण्यं भवतीत्यर्थः ।

(३) नचेति । न तावत्कुण्डे बदरवज्ज्ञाने प्रमाणफलयोरवस्थानसम्भवः ज्ञानस्यासंयोगित्वात्, तादात्म्येन तु स्यात्, न च वस्तुतो भिन्नानामेकस्यैक्योपपत्तिरिति कल्पितः प्रमाणफलभेद इति भावः ।

(४) बाह्यार्थं प्रत्यक्षं वदतां वैभाषिकाणां मते प्रमाणफलविभागस्य कल्पितत्वं प्रदर्श्य ज्ञानगताकारवैचित्र्येणानुमेयं बाह्यार्थं स्वीकुर्वतां सौत्रान्तिकानां मतेन तमतिदिशति एवमिति । ज्ञानगतं बाह्यनीलसारूप्यं भासमानमनीलाकारापोहरूपेण कल्पितं तच्च बाह्यार्थव्यवस्थापकम् प्रतिबिम्बमिव बिम्बस्यातः प्रमाणम् । ज्ञानान्यव्यावृत्तिरूपेण कल्पितं ज्ञानत्वं सामान्यं फलम्, तद्धि सारूप्यबलान्नीलज्ञानत्वेन व्यवस्थाप्यते । अस्मिन्मतेऽपि प्रमेयं परमार्थभिन्नमित्यर्थः । सारूप्यस्य ज्ञानविषयव्यवस्थापकत्वे सौत्रान्तिकवचनमाह तथा चेति । तां—वित्तिम् । किं घटयेदत आह सरूपयन्तीति । तद्बाह्यं वस्तु सरूपयत् स्वरूपेण सरूपां वित्तिं कुर्वत् घटयेत् वित्त्या सह विषयभावेन योजयेदित्यर्थः ।

(५) अनेन बाह्यार्थस्य परमाणुगोचरप्रतीतिविशेषकृतत्वं निरस्तम्, न परमसूक्ष्मपरमाण्वाभासमित्यनेन च परमाणुप्रत्यक्षं निराकृतम् । अतिप्रसङ्गेनेति । भासमानादन्यगोचरत्वमतिप्रसङ्गः ।

(६) स्वाकारालम्बनम् ।

(७) प्रातिभासिकम् ।

(१) ग्रहेऽनेकस्य चैकेन किंचिद्रूपं हि गृह्यते ।
सांवृतं प्रतिभासस्थं तदेकात्मन्यसम्भवात् ॥
न च तद्दर्शनं भ्रान्तं नानावस्तुग्रहाद्यतः ।
सांवृतं ग्रहणं नान्यत्र च वस्तुग्रहो भ्रमः ॥ इति ।

(२)तन्न । नैरन्तर्यावभासस्य भ्रान्तत्वात् । गन्धरसस्पर्शपरमाण्वन्तरिता हि ते रूपपरमाणवो न निरन्तराः । तस्मादारात् सान्तरेषु वृक्षेष्वेकघनवनप्रत्ययवदेष स्थूलप्रत्ययः परमाणुषु सान्तरेषु भ्रान्त एवेति पश्यामः । (३)तस्मात्कल्पनापोढत्वेऽपि भ्रान्तत्वाद्घटादिप्रत्ययस्य पीतशङ्खादिज्ञानवन्न प्रत्यक्षता परमाणुगोचरत्वाभ्युपगमे । तदिदमुक्तं—"न तावत्परमाणवः स्तम्भादिप्रत्ययपरिच्छेद्या भवितुमर्हन्ति, नापि तत्समूहास्तम्भाद्यो" ऽवयविनः । तेषामभेदे परमाणुभ्यः परमाणव एव, तत्र चोक्तं दूषणम्(४), भेदे तु गवाश्वस्येवात्यन्तवैलक्षण्यमिति न तादात्म्यम्, समवायश्च निराकृत इति । एवं भेदाभेदविकल्पेन जातिगुणकर्मादीनपि प्रत्याचक्षीत. तस्माद्यद्यत्प्रतिभासते तस्य सर्वस्य विचारासहत्वाद् अप्रतिभासमानसद्भावे च प्रमाणाभावान्न बाह्यालम्बनाः प्रत्यया इति । अपि च (५)न तावद्विज्ञानमिन्द्रियवद्विलीनमर्थं प्रत्यक्षयितुमर्हति । न हि यथेन्द्रियमर्थविषयं ज्ञानं जनयत्येवं विज्ञानमपरं विज्ञानं जनयितुमर्हति, तत्रापि समानत्वादनुयोगस्यानवस्थाप्रसङ्गात् । न चार्थाधारं प्राकट्यलक्षणं फलमाधातुमुत्सहते, अतीतानागतेषु तदसम्भवात् । नह्यस्ति सम्भवो ऽप्रत्युत्पन्नो धर्मी धर्मश्चास्य प्रत्युत्पन्न इति । तस्माज्ज्ञानस्वरूपप्रत्यक्षतैवार्थप्रत्यक्षताऽभ्युपेया । (६)तच्चानाकारं सद् आजानतो भेदाभावात् कथमर्थभेदं व्यवस्थापयेदिति तद्भेदव्यवस्थापनायाकारभेदोऽस्यैषितव्यः । (७)तदुक्तं 'न हि वित्तिसत्तैव तद्वेदना युक्ता, तस्याः

---

(१) ग्रहे इति । अनेकस्य परमाणोरेकेन ज्ञानेन ग्रहणे किञ्चित्स्थूलं रूपं गृह्यते तत्सांवृतम्, यत एकपरमाणुस्वरूपं स्थौल्यं गृह्यते चेत्स्वाभाविकं भवेन्न त्वेकत्र स्थौल्यं सम्भवत्यतो न स्वाभाविकमतोऽन्योपाधिकं प्रतिभासस्थं तदित्यर्थः । एकपरमाण्वात्मनि औपाधिकविषयत्वे स्थूलबुद्धेर्भ्रान्तित्वमाशङ्क्य द्वितीयश्लोकेन परिहरति नचेति । तस्य स्थूलस्य दर्शनं न च भ्रान्तम् यतो नानापरमाणूनां ग्रहणात्सांवृतस्य स्थूलस्य ग्रहणमन्यत्र भवति । य एव भिन्नधीगृहीतास्त एव निरन्तराः परमाणव एकधिया गृह्यमाणाः स्थूलमिति निर्भासन्ते ते च वस्त्वेव वस्तुग्रहश्च न भ्रम इत्यर्थः ।

(२) एवं बाह्यार्थवादिसमर्थितं स्थूलनीलावभासस्य सालम्बनत्वं विज्ञानवादी दूषयति तन्नेति ।

(३) ननु स्थूलप्रत्ययस्य भ्रान्तित्वं न युक्तम् स्वलक्षणविषयत्वेन निर्विकल्पकत्वात्, सविकल्पकं ह्यवस्तुभूतसामान्यविषयत्वाद्भ्रान्तमित्याशङ्क्याह तस्मादिति । कल्पना—अभिलापः, तदपोढ—तद्रहितम् ।

(४) परमाण्ववभासज्ञानानुपपत्तिरूपमित्यर्थः ।

(५) भाष्यकारेण ज्ञाने भासमानस्तम्भाद्याकारवैचित्र्यान्यथानुपपत्त्या स्तम्भादेर्ज्ञानाकारत्वमयुक्तमुक्तम्, भिन्नस्यैवार्थस्य ज्ञानेन प्रकाशनसम्भवादित्याशङ्क्य भेदाभ्युपगमेऽर्थस्यापरोक्षता न स्यादित्याह न तावदित्यादिना ।

(६) ननु मा भूज्ज्ञानमर्थविषयज्ञानान्तरस्य जनकम्, मा च विषयप्राकट्यमनेनाजनि, तथापि स्वभावसम्बन्धादर्थविषयव्यवहारं जनयेदित्याशंक्याह तच्चेति । ज्ञानमात्राकारस्य सर्वज्ञेयसाधारण्यान्नीलाकारवज्ज्ञानं नीलव्यवहारहेतुरित्यर्थः ।

(७) सौत्रान्तिकस्याप्येतत्सम्मतामाह वदन् विज्ञानवादी तदुक्तिमाह तदुक्तमिति ।

सर्वत्राविशेषात् तां तु सारूप्यमाविशत् सरूपयत्तद् घटयेदिति। एकश्चायमाकारो ऽनुभूयते स चेद्विज्ञानस्य नार्थसद्भावे किंचन प्रमाणमस्तीत्याह—"**अपि चानुभवमात्रेण साधारणात्मनो ज्ञानस्ये**"ति। "**अपि च सहोपलम्भनियमादि**"ति ( पृ० ५५० पं० २ )। (१)यद्येन सह नियतसहोपलम्भनं तत्ततो न भिद्यते, यथैकस्माच्चन्द्रमसो द्वितीयश्चन्द्रमाः। नियतसहोपलम्भश्चार्थो ज्ञानेनेति व्यापकविरुद्धोपलब्धिः(२)। निषेध्यो हि भेदः सहोपलम्भानियमेन व्याप्तो यथा भिन्नावश्विनौ नावश्यं सहोपलभ्येते, कदाचिदभ्रापिधानेऽन्यतरस्यैकस्योपलब्धेः। सोऽयमिह भेदव्यापकानियमविरुद्धो नियम उपलभ्यमानस्तद्व्याप्यं भेदं निवर्तयतीति। तदुक्तम्—

सहोपलम्भनियमादभेदो नीलतद्धियोः।
भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये॥ इति।

"**स्वप्नादिवच्चेदं द्रष्टव्यम्**" ( पृ० ५५० पं० ४ )। यो यः प्रत्ययः स सर्वो बाह्यानालम्बनो यथा स्वप्नमायादिप्रत्ययस्तथा चैष विवादाध्यासितः प्रत्यय इति स्वभावहेतुः। (३)बाह्यानालम्बनता हि प्रत्ययत्वमात्रानुबन्धिनी वृक्षतेव शिंशपात्वमात्रानुबन्धिनीति तन्मात्रानुबन्धिनि निरालम्बनत्वे साध्ये भवति प्रत्ययत्वं स्वभावहेतुः। अत्रान्तरे सौत्रान्तिकश्चोदयति—"**कथं पुनरसति बाह्येऽर्थे नीलमिदं पीतमिदमित्यादि प्रत्ययवैचित्र्यमुपपद्येत**" स हि मेने (४)ये यस्मिन्सत्यपि कादाचित्कास्ते सर्वे तदतिरिक्तहेतुसापेक्षाः, यथाऽविवक्षत्यजिगमिषति मयि वचनगमनप्रतिभासाः प्रत्ययाश्चेतनसन्तानान्तरसापेक्षास्तथा च विवादाध्यासिताः सत्यप्यालयविज्ञानसन्ताने षडपि प्रवृत्तिप्रत्यया इति स्वभावहेतुः। यश्चासावालयविज्ञानसन्तानातिरिक्तः कादाचित्कप्रवृत्तिविज्ञानभेदहेतुः स बाह्योऽर्थ इति। (५)वासनापरिपाकप्रत्ययकादाचित्कत्वात् कदाचिदुत्पाद इति चेत्। नन्वेकसन्ततिपतितानामालयविज्ञानानां तत्प्रवृत्तिविज्ञानजननशक्तिर्वासना, तस्याश्च स्वकार्योपजननं प्रत्याभिमुख्यं परिपाकस्तस्य च प्रत्ययः स्वसन्तानवर्ती पूर्वक्षणः सन्तानान्तरापेक्षानभ्युपगमात्, (६)तथा च सर्वेप्यालयसन्तानपतिताः परिपाकहेतवो भवेयुः। न वा कश्चिदपि, आलयसन्तानपातित्वाविशे-

---

( १ ) एवं प्रत्यक्षेणार्थस्य ज्ञानाभेदमुपपाद्यानुमानेन तमुपपादयति यद्येनेति।

( २ ) अयं भावः—विज्ञानवादिना ज्ञानार्थयोर्भेदो निषिध्यते तद्व्यापकस्य सहोपलम्भनियमाभावस्य विरुद्धो य सहोपलम्भनियमस्तदुपलब्धिस्ततश्च व्यापकाभावे व्याप्यभेदाभाव इति। व्यापकविरुद्धोपलब्धिमेवाह निषेध्यो हीत्यादिना। अश्विनी—नक्षत्रविशेषे।

( ३ ) यो यन्मात्रानुबन्धी यदात्मा च स तत्र स्वभावहेतुर्वृक्षतेव शिंशपामात्रानुबन्धिनी, अत एवोक्तं तद्भावमात्रान्वयिनि स्वभावो हेतुरात्मनीति, तत्र तद्भावं दर्शयन्नाह बाह्येति। स्वप्नप्रत्ययादिषु बाह्यानालम्बनत्वदर्शनात्प्रत्ययत्वमात्रप्रयुक्तं निरालम्बनत्वं तस्य चाभावस्य प्रत्ययरूपभावात्मकत्वात्तदात्मेत्यपि अत्र द्रष्टव्यम्। अतएवोक्तं न ह्यन्यासंसर्गिणो भावादन्योऽभाव इति।

( ४ ) सौत्रान्तिकमतेन बाह्यार्थसद्भावेऽनुमानमाह ये यस्मिन्निति।

( ५ ) उक्तानुमाने अर्थान्तरमाशङ्कते विज्ञानवादी वासनेति।

( ६ ) विज्ञानवाद्यभिप्रायमुक्त्वा दूषयन्नाह बाह्यार्थवादी तथा चेति। प्रवृत्तिविज्ञानजनकालयविज्ञानवर्तिवासनापरिपाकं प्रति सर्वेप्यालयविज्ञानसन्तानवर्तिनः क्षणा हेतव इति वक्तव्यम्, न चेदेकोऽपि हेतुर्न स्यादिति बाधकमाह नवा कश्चिदिति। सर्वेषां हेतुत्वे दूषणमनुपदमेवाभिधास्यते इति भावः।

स्यात् । (१)क्षणभेदाच्छक्तिभेदस्तस्य च कादाचित्कत्वात् कार्यकादाचित्कत्वमिति चेत् । (२)नन्वेवमेकस्यैव नीलज्ञानोपजननसामर्थ्यं तत्प्रबोधसामर्थ्यं चेति क्षणान्तरस्यैतन्न स्यात्, सत्त्वे वा कथं क्षणभेदात् सामर्थ्यभेद इत्यालयसन्तानवर्तिनः सर्वे समर्था इति समर्थहेतुसद्भावे कार्यक्षेपानुपपत्तेः, स्वसन्तानमात्राधीनत्वे निषेध्यस्य कदाचित्कत्वस्य विरुद्ध सदातनत्वं तस्योपलब्ध्या कादाचित्कत्वं निवर्तमानं हेत्वन्तरापेक्षत्वे व्यवतिष्ठत इति प्रतिबन्धसिद्धिः । (३)न च ज्ञानसन्तानान्तरनिबन्धनत्वं सर्वेषामिष्यते प्रवृत्तिविज्ञानानां विज्ञानवादिभिरपि तु कस्यचिदेव विच्छिन्नगमनवचनप्रतिभासस्य प्रवृत्तिविज्ञानस्य, अपि च सत्त्वान्तरसन्ताननिमित्तत्वे तस्यापि सदा सन्निधानान्न कादाचित्कत्व स्यात् , न हि सत्त्वान्तरसन्तानस्य देशतः कालतो वा विप्रकर्षसम्भवः । विज्ञानवादे विज्ञानातिरिक्तदेशानभ्युपगमादमूर्तत्वाच्च विज्ञानानामदेशात्मकत्वात्, संसारस्यादिमत्त्वप्रसङ्गेनापूर्वसत्त्वप्रादुर्भावानभ्युपगमाच्च न कालतोऽपि विप्रकर्षसम्भवः । (४)तस्मादसति बाह्येऽर्थे प्रत्ययवैचित्र्यानुपपत्तेरस्त्यानुमानिको बाह्योऽर्थ इति सौत्रान्तिकाः प्रतिपेदिरे, तान्निराकरोति—"**वासनावैचित्र्यादित्याह**" विज्ञानवादी । इदमत्राकूतम्—स्वसन्तानमात्रप्रभवत्वेऽपि प्रत्ययकादाचित्कत्वोपपत्तौ सन्दिग्धविपक्षव्यावृत्तिकत्वेन (५)हेतुरनैकान्तिकः । तथा हि—बाह्यनिमित्तकत्वेऽपि कथं कदाचिन्नीलसंवेदनं कदाचित्पीतसंवेदनम् ? बाह्यनीलपीतसन्निधानाभ्यामिति चेत् । अथ पीतसन्निधानेऽपि किमिति नीलज्ञानं न भवति पीतज्ञानं भवति ? तत्र तस्य सामर्थ्यादसामर्थ्याच्चेतरास्मिन्निति चेत् । कुतः पुनरयं सामर्थ्यासामर्थ्यभेदः ? हेतुभेदादिति चेत् । एवं तर्हि क्षणानामपि स्वकारणभेदनिबन्धनः शक्तिभेदो भविष्यति । सन्तानिनो हि क्षणाः कार्यभेदहेतवस्ते च प्रतिकार्यं भिद्यन्ते च । न च सन्तानो नाम कश्चिदेक उत्पादकः क्षणानां, यदभेदात् क्षणा(६) न भिद्येरन् । (७)ननूक्तं न क्षणभेदाभेदाभ्यां शक्तिभेदाभेदौ भिन्नानामपि क्षणानामेकसामर्थ्योपलब्धेः,

---

(१) एकस्यैव क्षणस्य हेतुत्व स्यादित्यभिप्रायेणाशङ्कते विज्ञानवादी क्षणभेदादिति । कार्यकादाचित्कत्वं-आलयविज्ञानक्षणवर्तिवासनापरिपाकतज्जन्यप्रवृत्तिविज्ञानयोः कादाचित्कत्वम् ।

(२) सौत्रान्तिको दूषयन्नाह नन्विति । एव च सर्वेषां हेतुत्वे नीलज्ञानं सदा स्यान्नतु कदाचिदिति सर्वानुभवसिद्धं नीलादिज्ञानस्य कादाचित्कत्वं व्याहन्येतेति बाह्यार्थसद्भाव आवश्यक इति भाव ।

(३) हेत्वन्तरापेक्षत्वेपि नीलादिज्ञानस्यालयविज्ञानसन्तानान्तरमेव हेतुरस्तु कुतो बाह्यार्थसिद्धिरित्यर्थान्तरत्वमनुमानस्याशङ्कते न चेति । चैत्रसन्ताने विच्छिन्नो गमनवचनप्रतिभासो यस्य तत्काले उदयतो मैत्रसन्तानस्थगमनवचनविषयविज्ञानस्य तत्तथोक्तम्, तस्यैव विज्ञानवादिभिः सन्तानान्तरनिमित्तत्वमिष्यते, न तु विवक्षति जिगमिषति वा च चैत्रे यद्गमनवचनप्रतिभान तस्यापि, तस्य तु चैत्रसन्तान, मात्रहेतुकत्व तच्च निरस्तमिति बाह्यार्थापेक्षा वाच्येत्यर्थ । तस्यापि प्रवृत्तिविज्ञानस्यालयविज्ञानसन्तानान्तरहेतुत्वे बाधमाहापि चेति ।

(४) सन्तानान्तरनिमित्तत्वेपि तस्य सदा सन्निधानात्प्रवृत्तिविज्ञानस्य कादाचित्कत्वमनुपपन्नं यस्मात्तस्मादित्युपसंहरन्नाह तस्मादिति ।

(५) प्रवृत्तिप्रत्यय आलयविज्ञानातिरिक्तहेतुक इति पक्षस्य स्वसन्तानमात्रनिमित्तकत्वं विपक्षस्तस्यास्सन्दिग्धा व्यावृत्तिर्यस्य स हेतुरनैकान्तिक इति भाव ।

(६) नन्वालयविज्ञानक्षणानां सम्बन्धिस्वस्वकारणवैचित्र्यात्सामर्थ्यभेदेप्येकसन्ततिपतितत्वाविशेषादेकविधं सामर्थ्यं स्यादित्याशंक्याह नचेति । (७) बाह्यार्थवादी शङ्कते नन्विति ।

अन्यथैक एव क्षणो नीलज्ञानजननसमर्थ इति न भूयो नीलज्ञानानि जायेरन्, तत्समर्थस्या तीतत्वात् क्षणान्तराणां चासामर्थ्यात्, तस्मात् क्षणभेदेऽपि न सामर्थ्यभेदः, (१)सन्तान-भेदे तु सामर्थ्यं भिद्यत इति। (२)तन्न। यदि भिन्नानां सन्तानानां नैकं सामर्थ्यं, हन्त तर्हि नीलसन्तानानामपि मिथो भिन्नानां नैकमस्ति नीलाकाराधानसामर्थ्यमिति सन्निधानेऽपि नील-सन्तानान्तरस्य न नीलज्ञानमुपजायेत। (३)तस्मात्सन्तानान्तराणामिव क्षणान्तराणामपि स्व-कारणभेदाधीनोपजनानां केषांचिदेव सामर्थ्यभेदः केषांचिन्नेति वक्तव्यम्। तथा चैकाल-यज्ञानसन्तानपतितेषु कस्यचिदेव ज्ञानक्षणस्य स तादृशः सामर्थ्यातिशयो वासनापरनामा (४)स्वप्रत्ययासादितो यतो नीलाकारं प्रवृत्तिविज्ञानं जायते न पीताकारम्, कस्यचित्तु स तादृशो यतः पीताकारं ज्ञानं न नीलाकारमिति वासनावैचित्र्यादेव स्वप्रत्ययासादिताज्ज्ञानवै-चित्र्यसिद्धेर्न तदतिरिक्तार्थसद्भावे किंचनास्ति प्रमाणमिति पश्यामः। (५)आलयविज्ञानस-न्तानपतितमेवासंविदितं ज्ञानं वासना तद्वैचित्र्यान्नीलाद्यनुभववैचित्र्यम्, (६)पूर्वनीलाद्यनुभ-ववैचित्र्याच्च वासनावैचित्र्यमित्यनादिताऽनयोर्विज्ञानवासनयोस्तस्मान्न परस्पराश्रयदोषसम्भ-वो बीजाङ्कुरसन्तानवदिति। अन्वयव्यतिरेकाभ्यामपि वासनावैचित्र्यस्यैव ज्ञानवैचित्र्यहेतुता नार्थवैचित्र्यस्येत्याह—**"अपि चान्वयव्यतिरेकाभ्या"**मिति। **"एवं प्राप्ते, ब्रूमः। नाभाव उपलब्धे"**रिति। न खल्वभावो बाह्यस्यार्थस्याध्यवसातुं शक्यते, सद्युपलम्भा-भावाद्वाध्यवसीयेत सत्यप्युपलम्भे तस्य बाह्याविषयत्वाद्वा सत्यपि बाह्यविषयत्वे बाह्यार्थबाधक-प्रमाणसद्भावाद्वा? न तावत्सर्वथोपलम्भाभाव इति प्रश्नपूर्वकमाह **"कस्मादुपलब्धे"**रिति। नहि स्फुटतरे सर्वजनीन उपलम्भे सति तदभावः शक्यो वक्तुमित्यर्थः। द्वितीयं पक्षमवलम्बते— **"ननु नाहमेवं ब्रवीमी"**ति। निराकरोति **"बाढमेवं ब्रवीषि"**। उपलब्धिग्रा-हिणा हि साक्षिणोपलब्धिर्गृह्यमाणा बाह्यविषयत्वेनैव गृह्यते नोपलब्धिमात्रमित्यर्थः। **"अ-तश्चे"**ति वक्ष्यमाणोपपत्तिपरामर्शः। तृतीयं पक्षमालम्बते—**"ननु बाह्यस्यार्थस्यास-म्भवा"**दिति। निराकरोति—**"नायं साधुरध्यवसाय"** इति। (७)इदमत्राकूतम्—

(१) एवमालयविज्ञानसन्तानैक्ये क्षणभेदेऽपि न सामर्थ्यभेद इत्युपपाद्य तद्व्यतिरिक्तबाह्यार्थसन्तानभेदे शक्तिभेदः स्यादित्याह सन्तानभेदे त्विति।

(२) उक्ताशङ्कां दूषयन्नाह विज्ञानवादी तन्नेति। बाह्यार्थवादे हि क्षणिकत्वान्नीलार्थानां प्रतिनीलार्थं भिन्नाः सन्ति नीलसन्तानास्तत्र च सन्तानभेदाच्छक्तिभेदोपगमे नीलसन्तानानामप्येकविधा शक्तिर्न स्यात्, तथा चैकमेव नीलं नीलाकारज्ञानं जनयेत् न सन्तानान्तरवर्तीत्यर्थः।

(३) चोद्यसाम्यं प्रदर्श्य परिहारसाम्यमाह तस्मादिति।

(४) स्वप्रत्यय—पूर्वोत्पन्ननीलादिप्रत्ययः।

(५) वासनावैचित्र्यादिति भाष्यस्थवासनाशब्दार्थमाहालयेति। असंविदितमित्यनेन वासनायाः क्षणि-कत्वं सूचितम्।

(६) ननु पूर्वज्ञानात्मकवासनावैचित्र्यादुत्तरज्ञानानां वैचित्र्यं तर्हि पूर्वज्ञानवैचित्र्यमेव कुतस्तत्राह पूर्व-नीलादीति।

(७) तत्र भगवान्भाष्यकारः प्रमाणप्रवृत्त्यप्रवृत्तिपूर्वकौ सम्भवासम्भवाविति यदाह सूचयामास—यथा किल ज्ञानाद्भेदेन स्थूलस्यार्थस्यासम्भवः परेण भाष्यते एवमभेदेनापि तथा च सुवचः [illegible] प्रमाणन्तु द्वाभ्यामप्यादरणीयम्, तथाऽसम्भवं परमते दर्शयन्नाह इदमत्रेत्यादिना। [illegible]

घटपटादयो हि स्थूला भासन्ते न तु परमसूक्ष्मास्तत्रेद नानादिग्देशव्यापित्वलक्षणं स्थौल्यं यद्यपि ज्ञानाकारत्वेनावरणानावरणलक्षणेन विरुद्धधर्मसंसर्गेण युज्यते ज्ञानोपाधेरनावृतत्वादेव, (१)तथापि तद्देशत्वातद्देशत्वकम्पाकम्पत्वरक्तारक्तत्वलक्षणैर्विरुद्धधर्मसंसर्गैरस्य नानात्वं प्रस॰ज्यमानं ज्ञानाकारत्वेऽपि न शक्यं शक्रेणापि वारयितुम् । (२)व्यतिरेकाव्यतिरेकवृत्तिविकल्पौ च परमाणोरंशवत्त्वं चोपपादितानि वैशेषिकपरीक्षायाम् । तस्माद्बाह्यार्थवत्र ज्ञानेऽपि स्थौ॰ल्यसम्भवः । (३)न च तावत्परमाण्वाभासमेकज्ञानमेकस्य नानात्मत्वानुपपत्तेः, आकाराणां वा ज्ञानतादात्म्यादेकत्वप्रसङ्गात् । (४)न च यावन्त आकारास्तावन्त्येव ज्ञानानि, तावतां ज्ञानानां मिथो वार्तानभिज्ञतया स्थूलानुभवाभावप्रसङ्गात् । (५)न च तत्पृष्ठभावी समस्तज्ञानाकारसङ्क॰लनात्मक एकः स्थूलविकल्पो विजृम्भते इति साम्प्रतम् । तस्यापि साकारतया स्थौल्यायो॰गात् । यथाह धर्मकीर्तिः—

(६)तस्मान्नार्थे न च ज्ञाने स्थूलाभासस्तदात्मनः ।
एकत्र प्रतिषिद्धत्वाद्बहुष्वपि न सम्भवः ॥ इति ।

तस्माद्भवतापि ज्ञानाकारं स्थौल्यं समर्थयमानेन प्रमाणप्रवृत्त्यप्रवृत्तिपूर्वकौ सम्भवासम्भवावास्थेयौ । तथा चेदन्तास्पदमशक्यं ज्ञानाद्भिन्नं बाह्यमपह्नोतुमिति । यच्च ज्ञानस्य प्रत्यर्थं व्यवस्थायै विषयसारूप्यमास्थितं नैतेन विषयोऽपह्नोतुं शक्यः, असत्यर्थे तत्सारूप्यस्य तद्व्य॰वस्थायामनुपपत्तेरित्याह—"**न च ज्ञानस्य विषयसारूप्या**"दिति । यश्च सहोपल॰म्भनियम उक्तः सोऽपि विकल्प न सहते-यदि ज्ञानार्थयोः साहित्येनोपलम्भस्ततो विरुद्धो हेतुर्नाभेदं साधयितुमर्हति, साहित्यस्य तद्विरुद्धभेदव्याप्तत्वात्, अभेदे तदनुपपत्तेः । अथैको॰पलम्भनियमः । न, एकत्वस्यावाचकः सहशब्दः । (७)अपि च किमेकत्वेनोपलम्भ आहो एक उपलम्भो ज्ञानार्थयोः ?न तावदेकत्वेनोपलम्भ इत्याह "**बहिरुपलब्धेश्च विषय॰स्य**" । अथैकोपलम्भनियमस्तत्राह—"**अत एव सहोपलम्भनियमोऽपि प्रत्ययवि॰**

---

स्थूलस्यासम्भवमनुवदति तत्रेदमिति । ज्ञानभेदपक्षे विरुद्धधर्माध्यासाद्भेदः स्थूलस्य स्यान्न तु ज्ञानाभेदपक्षे ज्ञानावच्छेदकार्थस्य ज्ञायमानस्य तदाभिन्नस्यानावृतत्वादावृतस्य च तदात्मत्वाभावेन विरोधाप्रसङ्गादित्यर्थः ।

(१) इदानीमेतमसम्भवमनुमत्य बौद्धमतेऽप्यसम्भवमाह तथापीति । यद्यपि ज्ञानाभेदपक्षेऽवभासानवभासलक्षणविरुद्धधर्मसंसर्गो न प्रसज्यते तथाप्येकज्ञानप्रकाशिते पटे तद्देशत्वातद्देशत्वयोर्दर्शनाद्देशभेदेन च कम्पाकम्पयोरपि सम्भवाज्ज्ञानाकारत्वेऽप्यर्थस्य वर्णितविरुद्धधर्मवत्त्वाद्भेदप्रसङ्गस्तुल्य इत्यर्थः ।

(२) अर्थस्य ज्ञानाभेदेऽवयव्यवयवे चोक्तदोषान्तरमपि ज्ञाने दुर्निवारमित्याह व्यतिरेकेति ।

(३) नन्वाभिन्नदेशवतां परमाणूनामेव ज्ञानावलम्ब्यत्वाज्ज्ञानाभेदपक्षे कथं विरुद्धधर्माध्यासप्रसङ्गोऽत आह न च तावदिति ।

(४) प्रतिपरमाणुज्ञानभेदाङ्गीकारेऽपि दोषमाह न चेति ।

(५) ननु एकैकज्ञानगृहीतनानापरमाणुपरामर्शात्मकः प्रत्ययः स्थूलालम्बनः स्यात् इत्यत्राह न च तत्पृष्ठेति ।

(६) तस्मादिति । तस्मात्—वृत्तिविकल्पादितर्कात्, अर्थे-परमाणुसमूहात्मकेऽर्थे, न स्थूलाभासः, न च ज्ञानात्मके विषये, एकत्र ज्ञाने वर्णितेन मार्गेण, तदात्मनो—नानाकारात्मकत्वस्य निषिद्धत्वात्, बहुष्वपि विज्ञानेषु परमाणुगोचरेषु स्थूलाभासस्य न सम्भवः तेषां मिथो वार्तानभिज्ञत्वादित्यक्षरार्थः ।

(७) तथा चावाचकशब्दप्रयोगान्निग्रहस्थानत्वमित्यर्थः । अथैकोपलम्भनियमादित्येव हेतुस्तत्राहापि चेति ।

**षययोरुपायोपेयभावहेतुको नाभेदहेतुक इत्यवगन्तव्यम्"** । यथा हि सर्वं चाक्षुषं प्रभारूपानुविद्धं(१) बुद्धिबोध्यं नियमेन मनुजैरुपलभ्यते न चैतावता घटादिरूपं प्रभात्मकं भवति, किन्तु प्रभोपायत्वान्नियम एवमिहाप्यात्मसाक्षिकानुभवोपायत्वादर्थस्यैकोपलम्भनियम इति । अपि च यत्रैकविज्ञानगोचरौ घटपटौ तत्रार्थभेदं विज्ञानभेदं चाध्यवस्यन्ति प्रतिपत्तारो न चैतदैकात्म्येऽवकल्प्यत इत्याह—**"अपि च घटज्ञानं पटज्ञान"मिति**। तथार्थाभेदेऽपि विज्ञानभेददर्शनान्न विज्ञानात्मकत्वमर्थस्येत्याह—**"तथा घटदर्शनं घटस्मरण"मिति** । अपि च स्वरूपमात्रपर्यवसितं ज्ञानं ज्ञानान्तरवार्तानभिज्ञमिति ययोर्भेदस्ते द्वे न गृहीते इति भेदोऽपि तद्गतो न गृहीत इति । एवं क्षणिकशून्यानात्मत्वादयोऽप्यनेकप्रतिज्ञाहेतुदृष्टान्तज्ञानभेदसाध्याः । एवं स्वमसाधारणमन्यतो व्यावृत्तं लक्षणं यस्य तदपि यद्व्यावर्तते यतश्च व्यावर्तते तदनेकज्ञानसाध्यमेवं सामान्यलक्षणमपि विधिरूपमन्यापोहरूपं वाऽनेकज्ञानगम्यम् । (२)एवं वास्यवासकभावोऽनेकज्ञानसाध्यः । एवमविद्योपप्लववशेन यत् सदसद्धर्मत्वं यथा नीलमिति सद्धर्मो, नरविषाणमशिवर इत्यसद्धर्मः, अमूर्तमिति सदसद्धर्मः । शक्यं हि शशविषाणममूर्तं वक्तुम्, शक्यं च विज्ञानममूर्तं वक्तुम् । यथोक्तम्—

(३)अनादिवासनोद्भूतविकल्पपरिनिष्ठितः ।
शब्दार्थस्त्रिविधो धर्मो भावाभावोभयाश्रयः ॥ इति ।

एवं मोक्षप्रतिज्ञा च यो मुच्यते यतश्च मुच्यते येन मुच्यते तदनेकज्ञानसाध्या । (४)एवं विप्रतिपन्नं प्रतिपादयितुं प्रतिज्ञेति यत्प्रतिपादयति येन प्रतिपादयति यश्च पुरुषः प्रतिपाद्यते यश्च प्रतिपादयति तदनेकज्ञानसाध्यमित्यस्यैकस्मिन्ननेकार्थज्ञानप्रतिसन्धातरि नोपपद्यते। तत्सर्वं विज्ञानस्य स्वांशालम्बनेऽनुपपन्नमित्याह—**"अपि च द्वयोर्ज्ञानयोः पूर्वोत्तरकालयोरि"ति** । अपि च भेदाश्रयः कर्मफलभावो नाभिन्ने ज्ञाने भवितुमर्हति, नो खलु छिदा छिद्यते किन्तु दारु, नापि पाकः पच्यतेऽपि तु तण्डुलाः । तदिहापि न ज्ञानं स्वांशेन ज्ञेयमात्मनि वृत्तिविरोधादपि तु तदतिरिक्तोऽर्थः, पाच्या इव तण्डुलाः पाकातिरिक्ता इति । भूमिरचनापूर्वकमाह—**"किं चान्यद्, विज्ञानं विज्ञानमित्यप्यभ्युपगच्छतीति"** । (५)चोदयति—**"ननु विज्ञानस्य स्वरूपातिरिक्तग्राह्यत्वे" इति** । अयमर्थः—स्वरूपादतिरिक्तमर्थं चेद्विज्ञानं गृह्णाति ततस्तदप्रत्यक्षं सन्नार्थं प्रत्यक्षयितुमर्हति, नहि चक्षुरिव तन्निलीनमर्थे कंचनातिशयमाधत्ते येनार्थमप्रत्यक्षं सत्प्रत्यक्षयेदपि तु तत्प्रत्य-

---

(१) विषयत्वेन सम्बद्धम् । चाक्षुषपदार्थस्यालोकसाक्षात्कारव्यतिरेकेणानुपलब्धावपि तदैक्यादर्शनाद्धेतुरनैकान्तिक इति भावः ।

(२) वास्यवासकत्वमविद्योपप्लवे, स च सदसद्धर्मेषु हेतुरिति भाष्यं व्याचक्षाणे आह एवमिति ।

(३) अनादिवासनाजन्यसविकल्पकप्रत्ययात्मकाविकल्पपरिनिष्ठितो विषयीकृतो यः शब्दार्थः स भावभूतनीलाद्याश्रयो नीलत्वादिरभावभूतनरविषाणाद्याश्रयो नरविषाणत्वादिरुभयभूतविज्ञाननरविषाणाद्याश्रयोऽमूर्तत्वादिश्चेति त्रिविध इत्यर्थः ।

(४) बन्धमोक्षादिप्रतिज्ञेतिभाष्यस्थादिपदार्थमाह एवमिति ।

(५) विज्ञानस्य स्वरूपातिरिक्तार्थविषयत्वे कुतस्तस्यान्येन ग्राह्यत्वापत्तिः ? चक्षुर्वदप्रकाशमानस्याप्यर्थबोधकत्वसम्भवादतस्तद्बोधानुपपत्तिमाशङ्क्याह चोदयतीति ।

क्षतैवार्थप्रत्यक्षता । यथाहुः—(१)'अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यती'ति । (२)तच्चेद् ज्ञानान्तरेण प्रतीयेत तदप्रतीतं नार्थविषयं ज्ञानमपरोक्षयितुमर्हति, एवं तत्तादित्यनवस्था, तस्मादनवस्थाया बिभ्यता वरं स्वात्मनि वृत्तिरास्थिता । अपि च यथा प्रदीपो न दीपान्तरमपेक्षते, एवं ज्ञानमपि न ज्ञानान्तरमपेक्षितुमर्हति समत्वादिति । तदेतत्प॰ रिहरति—"**तदुभयमप्यसद्विज्ञानग्रहणमात्र एव विज्ञानसाक्षिग्रहणाकाङ्क्षा-नुत्पादादनवस्थाशङ्कानुपपत्तेः**" । अयमर्थः—सत्यमप्रत्यक्षस्योपलम्भस्य नार्थद॰ ष्टिः प्रसिध्यति न तूपलब्धारं प्रति तत्प्रत्यक्षत्वायो(३)पलम्भान्तरं प्रार्थनीयम् , अपि तु तस्मिन्निन्द्रियार्थसन्निकर्षादन्तःकरणविकारभेद उत्पन्नमात्र एव प्रमातुरर्थश्चोपलम्भश्च प्रत्यक्षौ भवतः, अर्थो हि निलीनस्वभावः प्रमातारं प्रति स्वप्रत्यक्षत्वायान्तःकरणविकारभेद॰ मनुभवमपेक्षते, अनुभवस्तु जडोऽपि स्वच्छतया चैतन्यबिम्बोद्ग्रहणाय नानुभवान्तरमपेक्षते येनानवस्था भवेत् , (४)नह्यस्ति सम्भवोऽनुभव उत्पन्नश्च न च प्रमातुः प्रत्यक्षो भवति यथा नीलादिः । तस्माद्यथा छेत्ता छिदया छेद्यं वृक्षादि व्याप्नोति, न तु छिदा छिदान्तरेण, नापि छिदैव छेत्री किन्तु स्वत एव देवदत्तादिः । यथा वा पक्ता पाक्यं पाकेन व्याप्नोति न तु पाकं पाकान्तरेण, नापि पाक एव पक्ता किं तु स्वत एव देवदत्तादिः । एवं प्रमाता प्रमेयं नीलादि प्रमया व्याप्नोति न तु प्रमां प्रमान्तरेण, नापि प्रमैव प्रमात्री, किन्तु स्वत एव प्र मायाः प्रमाता व्यापकः । (५)न च प्रमातरि कूटस्थनित्यचैतन्ये प्रमापेक्षासम्भवो यतः प्रमातुः प्रमायाः प्रमात्रन्तरापेक्षायामनवस्था भवेत् । तस्मात्सुष्ठूक्तं 'विज्ञानग्रहणमात्र एव विज्ञानसाक्षिणः प्रमातुः कूटस्थनित्यचैतन्यस्य ग्रहणाकाङ्क्षानुत्पादादि'ति । यदुक्तं 'समत्वा-दवभास्यावभासकभावानुपपत्तेरि'ति । तत्राह—"**साक्षिप्रत्यययोश्च स्वभाववैषम्या-दुपलब्धृपलभ्यभावोपपत्तेः**" । मा भूज्ज्ञानयोः साम्येन ग्राह्यग्राहकभावो ज्ञातृज्ञान-योस्तु वैषम्यादुपपद्यत एव । (६)ग्राह्यत्वं च ज्ञानस्य न ग्राहकक्रियाजनितफलशालितया यथा बाह्यार्थस्य, फले फलान्तरानुपपत्तेः, यथाहुः—'न संविदर्यते फलत्वादि'ति(७) , अपि

---

(१) अप्रत्यक्षेति । यद्यप्रत्यक्ष उपलम्भ स्यात्तर्हि चक्षुष इव तस्यार्थदृष्टिरजन्या स्यात्; सा च न सिध्यति, तस्या अप्यन्यदृष्ट्यपेक्षत्वेनानवस्थानादित्यर्थः ।

(२) नन्वेवं चेत्तर्हि ज्ञानं ज्ञानान्तरप्रत्यक्षं सदर्थप्रकाशो भवतु, तत्राह तच्चेदिति ।

(३) उपलम्भप्रत्यक्षत्वाय । स्वप्रकाशसाक्षिणि अन्तःकरणप्रतिबिम्बिते सत्यन्तःकरणपरिणामस्य भास्वरस्य स्वत एव साक्षिप्रतिबिम्बाधारतया सिद्धिसम्भवान्न परिणामान्तरादपरोक्षतेति ग्रन्थार्थः ।

(४) यदि परिणामान्तरादनुभवापारोक्ष्यं तर्ह्यनुभव उदितोपि कदाचिन्न प्रकाशेत, नचैवमतो नित्यसा-क्ष्यनुभवसिद्ध इत्याह न ह्यस्तीति ।

(५) ननु माभूज्ज्ञानविषयज्ञानपरिणामान्तरापेक्षयाऽनवस्था, साक्षिणस्तु साक्ष्यन्तराश्रितप्रमापेक्षया-ऽनवस्था स्यादित्याशङ्क्य स्वप्रकाशत्वान्नैवमित्याह न चेति ।

(६) ननु साक्षिणं प्रति प्रत्ययस्योपलभ्यत्वे तद्विषय उपलम्भोऽन्यो वाच्यस्तस्य च प्राङ्निरासात्पूर्वा परविरोध इति भ्रममपनयन्नाह ग्राह्यत्वं चेति । फलेऽन्तःकरणगतज्ञानपरिणामे स्वाभाविकाकाशकल्पसा-क्षिचैतन्यव्यतिरेकेण परिणामान्तरापेक्षफलान्तरानुपपत्तेरित्यर्थः ।

(७) परिणामज्ञानेन सविन्न ज्ञायते फलत्वादित्यर्थः ।

तु प्रमातारं प्रति स्वतःसिद्धप्रकटतया (१)माह्योऽप्यर्थः प्रमातारं प्रति सत्यां संविदि प्रकटः संविदपि प्रकटा(२)। यथाहुरन्ये 'नास्याः कर्मभावो(३) विद्यत इति। (४)स्यादेतत् यत्प्रकाशते तदन्येन प्रकाश्यते यथा ज्ञानार्थौ तथा च साक्षीति नास्ति प्रत्यक्षसाक्षिणोर्वैषम्यमित्यत आह—"**स्वयंसिद्धस्य च साक्षिणोऽप्रत्याख्येयत्वात्**"। तथाहि—अस्य साक्षिणः सदाऽसन्दिग्धाविपरीतस्य नित्यसाक्षात्कारताऽनागन्तुकप्रकाशत्वे घटते। तथाहि—(५) प्रमाता सन्दिहानोऽप्यसन्दिग्धो विपर्यस्यन्नप्यविपरीतः परोक्षमर्थमुत्प्रेक्षमाणोऽप्यपरोक्षः स्मरन्नप्यानुभविकः प्राणभृन्मात्रस्य, न चैतदन्याधीनसम्वेदनत्वे घटते। अनवस्थाप्रसङ्गश्चोक्तः। तस्मात्स्वयंसिद्धतास्यानिच्छताप्यप्रत्याख्येया प्रमाणमार्गायत्तत्वादिति। किं चोक्तेन क्रमेण(६) ज्ञानस्य स्वयमवगन्तृत्वाभावात् प्रमातुरनभ्युपगमे च **प्रदीपवद्विज्ञानमवभासकान्तरनिरपेक्षं स्वयमेव प्रथत इति ब्रुवताऽप्रमाणगम्यं विज्ञानमनवगन्तृकमित्युक्तं स्यात् शिलाघनमध्यस्थप्रदीपसहस्रप्रथनवत्**। अवगन्तुश्चेत्कस्यचिदपि न प्रकाशते कृतमवगमेन स्वयंप्रकाशेनेति। विज्ञानमेवावगन्त्रिति मन्वानः शङ्कते—"**बाढमेवमनुभवरूपत्वा**"दिति। न फलस्य कर्तृत्वं कर्मत्वं वास्तीति प्रदीपवत् कर्त्रन्तरमेषितव्यम्, तथा च न सिद्धसाधनमिति। परिहरति—"**नान्यस्यावगन्तुरिति**"। ननु साक्षिस्थानेऽस्त्वस्मदभिमतमेव विज्ञानं तथा च नाम्न्येव विप्रतिपत्तिर्नार्थ(७) इति शङ्कते—"**साक्षिणोऽवगन्तुः स्वयंसिद्धतामुपक्षिपताऽभिप्रेयता स्वयं प्रथते विज्ञानमित्येष एवे**"ति। निराकरोति—"**ने**"ति। भवति हि विज्ञानस्योत्पादादयो धर्मा अभ्युपतास्तथा चास्य फलतया नावगन्तृत्वम्, कर्तृफलभावस्यैकत्र विरोधात्, किन्तु प्रदीपादितुल्यतेत्यर्थः ॥२८॥

## सू० वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥

बाधाबाधौ वैधर्म्यं, स्वप्नप्रत्ययो बाधितो जाग्रत्प्रत्ययश्चाबाधितः। स्वयापि चावश्यं जाग्रत्प्रत्ययस्याबाधितत्वमास्थेयं तेन हि स्वप्रत्ययो बाधितो मिथ्येत्यवगम्यते। जाग्रत्प्रत्य-

(१) ननु यदि परिणामव्याप्तिव्यतिरेकेण भवेत् साक्षिणं मत्यपरोक्षा तर्ह्यर्थोऽपि स्याज्ज्ञापकसाक्षिसम्बन्धस्य संविदर्थयोरविशेषादित्याशंक्याह ग्राह्योपीति।

(२) अयं भावः—स्वरूपानुभव सर्वव्याप्यप्यविद्यावृतत्वान्न भासते किन्तु निर्मले इव मुकुरतले मुखं भास्वरस्वभावविशेषवदन्तःकरणे व्यज्यत इति तद्वृत्तिरपि भासुरा सन्निहिता चेति भवति स्वभावप्रकटा, अर्थस्त्वन्तःकरणं प्रति व्यवहितो न च स्वभावत एव चैतन्याभिव्यक्तिक्षमः, सम्बन्धाविशेषेऽपि स्वभावविशेषाद्व्यंजकाव्यञ्जकत्वं दृष्टम्, यथा चाक्षुषी प्रभा सम्बन्धाविशेषेऽपि रूपादेव व्यञ्जयति न वाय्वादिकम्, तस्मात्परिणामाभिव्यक्तानुभवादर्थसिद्धिरिति।

(३) परिणामक्रियाजन्यफलभागिता।

(४) आत्मन स्वप्रकाशत्वबलादिदं सर्वं सिध्येत, तदेवासिद्धमित्यभिप्रायेणाशङ्कते स्यादेतदिति।

(५) असन्दिग्धाविपर्यस्तत्वमुदाहरति तथाहि प्रमातेत्यादिना। अत्र चात्मा स्वयंप्रकाश शश्वदपरोक्षत्वात्, यन्नैव तन्नैवं यथा घट इति प्रयोगो द्रष्टव्य। शश्वदसन्दिग्धत्वाच्छश्वदपरोक्षत्वमात्मनि द्रष्टव्यम्। आत्मविषयसंविदङ्गीकारे दोषमाहानवस्थेति।

(६) न क्रिया तया व्याप्यते किन्तु कर्त्रेत्यनेनेत्यर्थ। अनेन विज्ञानं व्यतिरिक्तमाह्यमित्यनुमानस्य विपक्षे बाध प्रदर्शित।

(७) नार्थे इति। नार्थेऽपि विप्रतिपत्तिः, तस्य त्वन्मतेऽपि मिथ्यात्वादित्यर्थ।

यस्य तु बाध्यत्वे स्वप्नप्रत्ययस्यासौ न बाधको भवेत्, नहि बाध्यमेव बाधकं भवितुमर्हति । तथा च स्वप्नप्रत्ययो मिथ्येति साध्यविकलो दृष्टान्तः स्यात्स्वप्नवदिति(१) । तस्माद्बाधाबाधाभ्यां वैधर्म्यान्न स्वप्नप्रत्ययदृष्टान्तेन जाग्रत्प्रत्ययस्य शक्यं निरालम्बनत्वमध्यवसातुम् । "निद्राग्लान"मिति करणदोषाभिधानम् । मिथ्यात्वाय वैधर्म्यान्तरमाह—"अपि च स्मृतिरेवे"ति (२)संस्कारमात्रजं हि विज्ञानं स्मृतिः । (३)प्रत्युत्पन्नेन्द्रियसम्प्रयोगलिङ्गशब्दसारूप्यान्यथानुपपद्यमानयोग्यदर्शनानुत्पत्तिलक्षणसामग्रीप्रभवं तु ज्ञानमुपलब्धिः, तदिह निद्राणस्य सामग्र्यन्तरविरहात्संस्कारः परिशिष्यते, तेन संस्कारजत्वात्स्मृतिः, सापि च निद्रादोषाद्विपरीताऽवर्तमानमपि पित्रादि वर्तमानतया भासयति, तेन स्मृतेरेव तावदुपलब्धेर्विशेषस्तस्याश्च स्मृतेर्वैपरीत्यमिति, अतो महदन्तरमित्यर्थः । (४)अपि च स्वतःप्रामाण्ये सिद्धे जाग्रत्प्रत्ययानां यथार्थत्वमनुभवसिद्धं नानुमानेनान्यथयितुं शक्य(५)मनुभवविरोधेन तदनुत्पादादबाधितविषयताप्यनुमानोत्पादसामग्री, न च कारणाभावे कार्यमुत्पत्तुमर्हतीत्याशयवानाह "अपि चानुभवविरोधप्रसङ्गादि"ति ॥ २९ ॥

सू० न भावोऽनुपलब्धेः ॥ ३० ॥

(६)यथा लोकदर्शनं चान्वयव्यतिरेकावनुश्रियमाणावर्थ एवोपलब्धेर्भवतो नार्थानपेक्षायां वासनायां वासनाया अप्यर्थोपलब्ध्यधीनत्वदर्शनादित्यर्थः । अपि चाश्रयाभावादपि न लौकिकी वासनोपपद्यते । न च क्षणिकमालयविज्ञानं वासनाधारो भवितुमर्हति, द्वयोर्युगपदुत्पद्यमानयोः सव्यदक्षिणशृङ्गवदाधाराधेयभावाभावात् । प्रागुत्पन्नस्य चाधेयोत्पादसमये सतः क्षणिकत्वव्याघात इत्याशयवानाह—"अपि च वासना नामे"ति । शेषमतिरोहितार्थम् ॥ ३० ॥

सू० क्षणिकत्वाच्च ॥ ३० ॥

स्यादेतद् यदि साकारं विज्ञानं न सम्भवति बाह्यश्चार्थः स्थूलसूक्ष्मविकल्पेनासम्भवी ।

---

(१) बाह्यार्थोपलब्धिनिके जाग्रत्प्रत्यया निरालम्बनाः प्रत्ययत्वात्स्वप्नप्रत्ययवदित्यनुमाने इत्यर्थः ।

(२) एवमनुमानस्य बाध्यत्वेन सोपाधिकत्वं प्रदर्श्य प्रमाणाजन्यत्वेन तदाह संस्कारेति ।

(३) उपलब्धिस्त्विति भाष्यगतमुपलब्धिपदं व्याचष्टे प्रत्युत्पन्नेति । वर्तमानवस्त्विन्द्रियसंयोगादिप्रमाणषट्कजन्यं ज्ञानमुपलब्धिरित्यर्थः ।

(४) उक्तानुमानीयप्रत्ययत्वहेतोर्बाधितत्वमप्याहापिचेति ।

(५) ननु सामान्यतः प्राप्तमपि प्रामाण्यमनुमानेनापोद्यतामत आहानुभवेति । अबाधितविषयत्वेन ज्ञातस्यानुमानस्य प्रमाणत्वात्सति प्रत्यक्षबाधे न प्रमाजनकत्वमतो बाधकानुदयान्न प्रत्यक्षस्य प्रामाण्यापवाद इत्यर्थः ।

(६) ननु पूर्वपक्षिमतेऽर्थाभावाद्वासनानामर्थोपलब्धिभिः सह व्याप्तेरसम्भवादर्थोपलब्ध्यभावान्न वासनानाभाव इति कथं सङ्गच्छत इत्याशंक्याह यथेति । पूर्वपक्षिणापि ह्यर्थोपलब्धेः स्वप्ने वासनाजन्यत्वं लोकसिद्धान्वयव्यतिरेकाभ्यामवगन्तव्यम्, तद्दृष्टान्तेन च जाग्रत्यनुमेयं तथाच यौ लौकिकान्वयव्यतिरेकौ तावर्थोपलब्धेः कार्यस्यार्थ एव कारणे सति भवतः नार्थानपेक्षवासनारूपकारणे, स्वप्नप्रत्ययहेतुवासनाया अपि जाग्रदर्थोपलब्ध्यधीनत्वदर्शनात्कारणकारणत्वेन तत्राप्यर्थोपलब्धेः स्थितत्वादतो वासनानामर्थोपलब्धिभिर्व्याप्तिसिद्धिरिति हृदयम् ।

इन्तैवमर्थज्ञाने सत्त्वेन तावद्विचारं न सहेते । नाप्यसत्त्वेन, असतो भासनायोगात् । नोभयत्वेन, विरोधात् सदसतोरेकत्वानुपपत्तेः । नाप्यनुभयत्वेन, एकनिषेधस्येतरविधाननान्तरीयकत्वात् । तस्माद्विचारासहत्वमेवास्तु तत्त्वं वस्तूनाम् । यथाहुः—

इदं वस्तु बलायातं यद्वदन्ति विपश्चितः ।
यथायथार्थाश्चिन्त्यन्ते विविच्यन्ते तथातथा ॥ इति ।

न क्वचिदपि पक्षे व्यवतिष्ठन्त इत्यर्थः । तदेतन्निराचिकीर्षुराह—**"शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय नादरः क्रियते"**(१) । लौकिकानि हि प्रमाणानि सदसत्त्वगोचराणि तैः खलु सत्सदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं व्यवस्थाप्यते । असच्चासदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं व्यवस्थाप्यते । सदसतोश्च विचारासहत्वं व्यवस्थापयता सर्वप्रमाणविप्रतिषिद्धं व्यवस्थापित भवति । तथा च सर्वप्रमाणविप्रतिषेधान्नेयं व्यवस्थोपपद्यते । (२) यद्युच्येत—तात्त्विकं प्रामाण्यं प्रमाणानामनेन विचारेण व्युदस्यते न सांव्यवहारिकम् , तथा च भिन्नविषयत्वान्न सर्वप्रमाणविप्रतिषेध इत्यत आह—**"नह्ययं सर्वप्रमाणप्रसिद्धो लोकस्य व्यवहारोऽन्यत्तत्त्वमधिगम्य शक्यतेऽपह्नोतुम्"** । प्रमाणानि हि स्वगोचरे प्रवर्तमानानि तत्त्वमिदमित्येव प्रवर्तन्ते । अतात्त्विकत्वं तु तद्गोचरस्यान्यतो बाधकादवगन्तव्यं न पुनः सांव्यवहारिकं नः प्रामाण्यं न तु तात्त्विकमित्येव प्रवर्तन्ते । बाधकं चातात्त्विकत्वमेषां तद्गोचरविपरीततत्त्वोपदर्शनेन दर्शयेत् , यथा शुक्तिकेयं न रजतं मरीचयो न तोयमेकश्चन्द्रो न चन्द्रद्वयमित्यादि, तद्वदिहापि समस्तप्रमाणगोचरविपरीततत्त्वान्तरव्यवस्थापनेनातात्त्विकत्वमेषां प्रमाणानां बाधकेन दर्शनीयं न त्वव्यवस्थापिततत्त्वान्तरेण प्रमाणानि शक्यानि बाधितुम् । (३) विचारासहत्वं वस्तूनां तत्त्वं व्यवस्थापयद्बाधकमतात्त्विकत्वं प्रमाणानां दर्शयतीति चेत् , (४)किं पुनरिदं विचारासहत्वं वस्तु यत्तत्त्वमभिमतं किं तद्वस्तु परमार्थतः सदादीनामन्यतमत्केवलं विचारं न सहते, अथ विचारासहत्वेन निस्तत्त्वमेव । (५) तत्र परमार्थतः सदादीनामन्यतमद्विचारं न सहत इति विप्रतिषिद्धम् । न सहते चेन्न सदादीनामन्यतमदन्यतमच्चेत्कथं न विचारं सहते, अथ निस्तत्त्वं चेत्कथमन्यतमत्तत्त्वमव्यवस्थाप्य शक्यमेवं वक्तुम् । (६)न च निस्तत्त्वतैव तत्त्वं भावानां, तथा सति हि तत्त्वा·

( १ ) सूत्रान्तराणि शून्यवादपक्षखण्डनाय न विरच्यन्त इत्यर्थः । नाभावो ज्ञानार्थयोः प्रमाणैरुपलब्धेरिति सूत्रं योजयन्सिद्धान्त्याह लौकिकानि इति ।

( २ ) प्रपञ्चस्यावास्तविकत्व व्यवस्थापयितुमधिष्ठानवस्त्ववश्यमङ्गीकार्यं पूर्वपक्षिमते च तस्याभावप्रमाणतस्तत्त्वानुपलब्धेरिति प्रतिपादयन्न भावोऽनुपलब्धेरिति सूत्रं योजयन्नाह यद्युच्येतेति ।

( ३ ) ननु किमधिष्ठानतत्त्वबोधनेन, प्रत्यक्षादिप्रमितवस्तुगत विचारासहत्वमेव बाधकप्रमाणं गमयत्वित्यभिप्रायेणाशङ्कते विचारेति । ( ४ ) विकल्पद्वारा समाधत्ते किं पुनरिति ।

( ५ ) नाद्य इत्याह तत्रेति । द्वितीयेऽपि निस्तत्त्वं सदादिप्रकारनिविष्टं न वा ? नाद्यः, सदादिप्रकारतत्त्वव्यवस्थायाः पूर्वपक्ष्यनिष्टत्वादित्याह कथमन्यतमदिति ।

( ६ ) न द्वितीय इत्याह न चेति । तत्त्वरूपत्वाभावो हि निस्तत्त्वम्, स भावानामित्यत्र भावानव्यवस्थापितं स्यात्तथाचासत्त्वाव्यवस्थाप्रतिज्ञाविरोध इत्यर्थः ।

भावः स्यात् , सोऽपि च विचारं न सहत इत्युक्तं भवद्भिः । (१) अपि चारोपितं निषेधनीयम् , आरोपश्च सत्त्वाधिष्ठानो दृष्टो यथा शुक्तिकादिषु रजतादेः, न चेत् किंचिदस्ति तत्त्वं कस्य कस्मिन्नारोपः । तस्मान्निष्प्रपञ्चं परमार्थसद्ब्रह्मानिर्वाच्यप्रपञ्चात्मनारोप्यते, तच्च तत्त्वं व्यवस्थाप्यातात्त्विकत्वेन सांव्यवहारिकत्वं प्रमाणानां बाधकेनोपपद्यत इति युक्तमुत्पश्यामः॥ ३१

## सू० सर्वथाऽनुपपत्तेश्च ॥ ३२ ॥

विभजते—"किं बहुना उक्तेन, यथायथा ग्रन्थतोऽर्थतश्चायं वैनाशिकसमय" इति । (२)ग्रन्थतस्तावत्पश्यनीतिष्ठनामिढ्मोषधायसाधुपदप्रयोगः । अर्थतश्च नैरात्म्यमभ्युपेत्यालयविज्ञानं समस्तवासनाधारमभ्युपगच्छन्नक्षरमात्मानमभ्युपैति । एवं क्षणिकत्वमभ्युपेत्यो"त्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवैषा धर्माणां धर्मता धर्मस्थितिरि"ति नित्यतामुपैतीत्यादिबहूह्नेतव्यमिति ॥ ३२ ॥

## सू० नैकस्मिन्नसम्भवात् ॥ ३३ ॥

निरस्तो मुक्तकच्छानां सुगतानां समयो, विवसनानां(३) समय इदानीं निरस्यते । तत्समयमाह संक्षेपविस्तराभ्याम्—"सप्त चैषां पदार्थाः सम्मता" इति । तत्र संक्षेपमाह—"संक्षेपतस्तु द्वावेव पदार्थावि"ति । बोधात्मको जीवो जडवर्गस्त्वजीव इति यथायोगं तयोर्जीवाजीवयोरिममपरं प्रपञ्चमाचक्षते । तमाह—"पञ्चास्तिकाया नामे"ति । "सर्वेषामप्येषामवान्तरप्रभेदानि"ति । जीवास्तिकायस्त्रिधा(४)—बद्धो मुक्तो नित्यसिद्धश्चेति । पुद्गलास्तिकायः षोढा-पृथिव्यादीनि चत्वारि भूतानि स्थावरं जंगमं चेति । धर्मास्तिकायः (५)प्रवृत्त्यनुमेयोऽधर्मास्तिकायः स्थित्यनुमेयः । आकाशास्तिकायो द्वेधा—लोकाकाशोऽलोकाकाशश्च । तत्रोपर्युपरि स्थितानां लोकानामन्तवर्ती लोकाकाशस्तेषामुपरि मोक्षस्थानमलोकाकाशः । तत्र हि न लोकाः सन्ति । तदेवं जीवाजीवपदार्थौ पञ्चधा प्रपञ्चितौ । (६)आस्रवसंवरनिर्जराख्यः पदार्थाः प्रवृत्तिलक्षणाः प्रपञ्च्यन्ते । द्विधा प्रवृत्तिः—सम्यङ्मिथ्या च । तत्र मिथ्याप्रवृत्तिरास्रवः । सम्यक्प्रवृत्ती तु संवरनिर्जरे । (७)आस्रावयति

---

(१) अधिष्ठानतत्त्वज्ञानाभावाद्बाधासम्भव प्रदर्श्याधिष्ठानाभावादारोपासम्भवं दर्शयन्नाहापिचेति ।

(२) यथायथेति भाव्यस्यवीप्सां व्याचष्टे ग्रन्थत इति । दर्शन स्थानमिति वक्तव्ये पश्यनातिष्ठनेतिबौद्धानामपशब्दप्रयोग, शितिप्रत्यये तिष्ठपश्यावादेशौ युच्प्रत्यये तु नाशित्वादेवं मिह सेचन इत्यस्य निष्ठान्तस्य मीढमितिरूप भवति मिढ्मिति त्वपशब्दस्तथा पोषधशब्दोपि उपवासे बौद्धैः प्रयुक्तोपि लोकाप्रयुक्तत्वादपशब्दो बोद्धव्य ।

(३) जैनानाम् । एकरूपब्रह्मवादविरोध्यनेकान्तवादभङ्गस्य बुद्धिस्थत्वात्सङ्गतिर्बोध्या ।

(४) अस्तीति कायन्ते शब्द्यन्ते इत्यास्तिकाया, कैगे शब्दे इत्यस्माद्धातोर्निष्पन्न कायशब्दोत्र द्रष्टव्य। केचित् बद्धा केचित्साधनैर्मुक्ताः, नित्यसिद्धश्च जैनमतेऽर्हनशब्दवाच्य ।

(५) प्रवृत्त्यनुमेय इति । प्रवृत्तिर्द्विधा सम्यङ्मिथ्या च, तत्र धर्मास्तिकाय सम्यक्प्रवृत्त्यनुमेय , शास्त्रीयवाह्यप्रवृत्त्या ह्यान्तरोऽपूर्वाख्यो धर्मो ऽनुमीयत इत्यर्थ । अधर्मेति । ऊर्ध्वगमनशीलो हि जीवस्तस्य देहेऽवस्थित्याऽधर्मोऽनुमीयत इत्यर्थः ।

(६) बन्धमोक्षसाधनभूते समीच्यसमीच्यौ प्रवृत्ती दर्शयन्नाहास्रवेति ।

(७) आस्रवाख्यमिथ्याप्रवृत्तिस्वरूप व्याचष्टे आस्रावयतीति । गमयतीत्यर्थः ।

पुरुषं विषयेष्वितीन्द्रियप्रवृत्तिरास्रवः । इन्द्रियद्वारा हि पौरुषं ज्योतिर्विषयान् स्पृशद्रूपादिज्ञानरूपेण परिणमत इति । अन्ये तु कर्माण्यास्रवमाहुः, तानि हि कर्तारमभिव्याप्य स्रवन्ति कर्तारमनुगच्छन्तीत्यास्रवः । सेयं मिथ्याप्रवृत्तिरनर्थहेतुत्वात् । संवरनिर्जरौ च सम्यक् प्रवृत्ती । तत्र शमदमादिरूपा प्रवृत्तिः संवरः । सा ह्यास्रवस्रोतसो द्वारं संवृणोतीति संवर उच्यते । निर्जरस्त्वनादिकालप्रवृत्तिकषायकलुषपुण्यापुण्यप्रहाणहेतुस्तप्तशिलारोहणादिः । स हि निःशेषं पुण्यापुण्यं सुखदुःखोपभोगेन जरयतीति निर्जरः । (१)बन्धोऽष्टविधं कर्म । तत्र घातिकर्म चतुर्विधम् , तद्यथा—ज्ञानावरणीयं दर्शनावरणीयं मोहनीयमन्तरायमिति । तथा चत्वार्यघातिकर्माणि, तद्यथा—वेदनीयं नामिकं गोत्रिकमायुष्कं चेति । (२)तत्र सम्यग् ज्ञानं न मोक्षसाधनम् , नहि ज्ञानाद्वस्तुसिद्धिरतिप्रसङ्गादिति विपर्ययो ज्ञानावरणीयं कर्मोच्यते । आर्हतदर्शनाभ्यासान्न मोक्ष इति ज्ञानं दर्शनावरणीयं कर्म । बहुषु विप्रतिषिद्धेषु तीर्थकरैरुपदर्शितेषु मोक्षमार्गेषु विशेषानवधारणं मोहनीयं कर्म । मोक्षमार्गप्रवृत्तानां तद्विघ्नकरं विज्ञानमन्तरायं कर्म । तानीमानि श्रेयोहन्तृत्वाद् घातिकर्माण्युच्यन्ते । अघातीनि कर्माणि तद्यथा—वेदनीयं कर्म (३)शुक्लपुद्गलविपाकहेतुः, तद्धि बन्धोऽपि न निःश्रेयसपरिपन्थि तत्त्वज्ञानाविघातकत्वात् । शुक्लपुद्गलारम्भकवेदनीयकर्मानुगुणं नामिकं कर्म, तद्धि शुक्लपुद्गलस्याद्यावस्थां कललबुद्बुदादिमारभते । गोत्रिकमव्याकृतम् ततोऽप्याद्यं शक्तिरूपेणावस्थितम्(४) । आयुष्कं त्वायुः कायति कथयत्युत्पादनद्वारेत्यायुष्कम्(५) । तान्येतानि शुक्लपुद्गलाश्रयत्वादघातीनि कर्माणि । तदेतत्कर्माष्टकं पुरुषं बध्नातीति बन्धः । विगलितसमस्तक्लेशतद्वासनस्यानावरणज्ञानस्य सुखैकतानस्यात्मन उपरि देशावस्थानं मोक्ष इत्येके । अन्ये तूर्ध्वगमनशीलो हि जीवो धर्माधर्मास्तिकायेन बद्धस्तद्विमोक्षाद्यदूर्ध्वं गच्छत्येव स मोक्ष इति । त एते सप्त पदार्था जीवादयः सहावान्तरप्रभेदैरुपन्यस्ताः । तत्र सर्वत्र चेमं सप्तभङ्गिनयन्नाम न्यायमवतारयन्ति(६)—"स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यः,

---

(१) बन्धाख्यफलमाह बन्ध इति । यद्यपि पूर्वोक्त आस्रवोपि बन्धस्तथापि तद्धेतुत्वादयमपि बन्ध इति द्रष्टव्यम् ।

(२) ज्ञानावरणीयं कर्माख्यातुं भूमिकामाह तत्रेति । अतिप्रसङ्गात्—आशामोदकज्ञानादिभ्योऽपि मोदकादिसिद्धिप्रसङ्गात् ।

(३) शरीराकारेण परिणामहेतुः । शरीरद्वारा तत्त्ववेदनहेतुत्वाच्च तस्य वेदनीयत्वम् ।

(४) वक्ष्यमाणायुष्ककर्मणो देहाकारपरिणामशक्तिर्गोत्रिकं कर्मेत्यर्थः ।

(५) शुक्रशोणितव्यतिरेकजाते मिलितन्तदुभयरूपमायुष्कं कर्मेत्यर्थः ।

(६) सप्तभङ्गीन्यायप्रकारश्चैव प्रदर्शितोऽनन्तवीर्येण—

तद्विधानविवक्षायां स्यादस्तीति गतिर्भवेत् ।
स्यान्नास्तीतिप्रयोगः स्यात्तन्निषेधे विवक्षिते ॥
क्रमेणोभयवाञ्छायां प्रयोगस्समुदायभृत् ।
युगपत्तद्विवक्षायां स्यादवाच्यमशक्तितः ॥
आद्यावाच्यविवक्षायां पञ्चमो भङ्ग इष्यते ।
अन्त्यावाच्यविवक्षायां षष्ठभङ्गसमुद्भवः ।
समुच्चयेन युक्तश्च सप्तमो भङ्ग उच्यते ॥ इति ।

स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति नास्ति चावक्तव्यश्चे"ति । (१)स्याच्छब्दः खल्वयं निपातस्तिङन्तप्रतिरूपकोऽनेकान्तद्योती, यथाहुः—

(२)वाक्येष्वनेकान्तद्योती गम्यं प्रति विशेषणम् ।
स्यान्निपातोऽर्थयोगित्वात्तिङन्तप्रतिरूपकः ॥ इति ।

यदि पुनरयमनेकान्तद्योतकः स्याच्छब्दो न भवेत् स्यादस्तीतिवाक्ये स्यात्पदमनर्थकं स्यात्, तदिदमुक्तमर्थयोगित्वादिति । अनेकान्तद्योतकत्वे तु स्यादस्ति कथं चिदस्तीति स्यात्पदात्कथंचिदर्थोऽस्तीत्यनेनानुक्तः प्रतीयत इति नानर्थक्यम् । (३)तथा च—

स्याद्वादः सर्वथैकान्तत्यागात् किंवृत्तचिद्विधेः ।
सप्तभङ्गनयापेक्षो हेयादेयविशेषकृत् ॥

किंवृत्ते प्रत्यये खल्वयं चिन्निपातविधिना सर्वथैकान्तत्यागात् सप्तस्वेकान्तेषु(४) यो भङ्गस्तत्र यो नयस्तदपेक्षः सन् हेयोपादेयभेदाय स्याद्वादः कल्पते । (५)तथाहि—यदि वस्त्वस्त्येवेत्येवैकान्ततस्तत् सर्वथा सर्वदा सर्वत्र सर्वात्मनाऽस्त्येवेति न तदीप्साजिहासाभ्यां क्वचित्कदाचित्कथंचित्कश्चित् प्रवर्तेत निवर्तेत वा, (६)प्राप्ताप्रापणीयत्वात्, हेयहानानुपपत्तेश्च, अनेकान्तपक्षे तु क्वचित्कदाचित्कस्यचित्कथंचित् सत्त्वे हानोपादाने प्रेक्षावतां कल्पेते इति । तमेनं सप्तभङ्गीनयं दूषयति **"नैकस्मिन्नसम्भवात्"** । विभजते—**"नह्येकस्मिन् धर्मिणि"** परमार्थसति परमार्थसतो **"युगपत्सदसत्त्वादीनां धर्माणां"** परस्परपरिहारस्वरूपाणां समावेशः सम्भवति । (७)एतदुक्तं भवति—सत्यं यदस्ति वस्तु तत्तत्सर्वथा सर्वदा सर्वत्र सर्वात्मना निर्वचनीयेन रूपेणास्त्येव न नास्ति, यथा प्रत्यगात्मा । यत्तु क्वचित्कथंचित्कदाचित्केनचिदात्मनाऽस्तीत्युच्यते यथा प्रपञ्चस्तद्व्यवहारतो न तु परमार्थतस्तस्य विचारासहत्वात्(८) । न च प्रत्ययमात्रं वास्तवत्वं व्यवस्थापयति, शुक्तिमरुमरीचिकादिषु रजततोयादेरपि वास्तवत्वप्रसङ्गात् । लौकिकानामबाधेन तु तद्व्यवस्थायां

(१) नन्वस्ति स्यादिति वर्तमानत्वाविधिवाचिनोः कथमेकार्थपर्यवसानमत, आह स्याच्छब्द इति । तिङन्ततुल्योऽतो न विध्यर्थतेत्यर्थः ।

(२) वाक्येष्विति । स्यादस्तीत्यादिवाक्येषु स्यादित्ययं शब्द अस्तित्वादिगम्यं प्रति विशेषणीभूतोऽनेकान्तप्रकाशकोऽर्थसम्बन्धित्वात्तिङन्तसदृशो निपात इत्यर्थः । अर्थयोगित्वमेवोपपादयन्नाह यदीति ।

(३) स्यात्पदेनानेकान्ताभिधाने प्रयोजनमाह तथाचेति । किंशब्दोपरि थमुप्रत्यये तदुपरि च चिन्निपातेन कथंचिदस्ति कथंचिन्नास्तीतिरूपात्सर्वथैकान्तपक्षत्यागाज्जायमानः सप्तभङ्ग्यपेक्षः स्याद्वादो हेयोपादेयबुद्धिविशेषकृद् भवतीति कारिकार्थः । इममेवार्थं स्फुटीकुर्वन्नाह किंवृत्त इति ।

(४) अस्त्यादिनियमेषु ।

(५) सप्तानामेवान्तानां भङ्गे हेतुं न्यायमाह तथाहीति ।

(६) प्रवृत्त्यभावे निवृत्त्यभावे च पर्यायेण हेतुद्वयमाह प्राप्तेति । प्राप्तस्य सद्वस्तुनोऽप्रापणीयत्वात्, असत्त्वे चैकान्ते हेयमेव त्यक्तमेवाहितं सदा स्यात्तस्य च साध्यं हानमनुपपन्नमित्यर्थः ।

(७) स्याद्वादस्य हेयादिसिद्धिहेतुत्वं खण्डयन्नाहैतदुक्तमिति । यदस्ति तदस्त्येवेति नियमोऽस्माभिरपि स्वीक्रियते, यत्तु कथंचिदस्ति प्रपञ्चः स विकल्पितस्तत्र च हेयादिविभागसिद्धिरित्यर्थः ।

(८) आरम्भणाधिकरणे ( अ. २ पा. सू. १४ ) विचारासहत्वं ब्रदसत्त्वे वस्तुनो न धर्मौ असत्त्वदशायामपि वस्त्वनुवृत्त्यापातात् . न च स्वरूपं सर्वदाऽद्वयप्रसङ्गादित्यादिना प्रदर्शितम् ।

देहात्माभिमानस्याप्यबाधेन तात्त्विकत्वे सति लोकायतमतापातेन नास्तिकत्वप्रसङ्गात् । (१)पण्डितरूपाणां तु देहात्माभिमानस्य विचारतो बाधनं प्रपञ्चस्याप्यनैकान्तस्य तुल्यमिति । अपि च सदसत्त्वयोः परस्परविरुद्धत्वेन समुच्चयाभावे विकल्पः । न च वस्तुनि विकल्पः सम्भवति । तस्मात्स्थाणुर्वा पुरुषो वेति ज्ञानवत् सप्तत्वपञ्चत्वनिर्धारणस्य फलस्य निर्धारयितुश्च प्रमातुस्तत्करणस्य प्रमाणस्य च तत्प्रमेयस्य च सप्तत्वपञ्चत्वस्य सदसत्त्वसंशये साधु समर्थितं तीर्थंकरणत्वमृषभेणात्मनः । निर्धारणस्य चैकान्तसत्त्वे सर्वत्र नानेकान्तवाद इत्याह "य एते सप्त पदार्था" इति । शेषमतिरोहितार्थम् ॥ ३३ ॥

## एवं चात्माऽकार्त्स्न्यम् ॥ ३४ ॥

"एवं चे"ति चेन समुच्चयं द्योतयति । शरीरपरिमाणत्वं ह्यात्मनोऽकृत्स्नत्वं परिच्छिन्नत्वम् , तथा चानित्यत्वं, ये हि परिच्छिन्नास्ते सर्वेऽनित्या यथा घटादयस्तथा चात्मेति । तदेतदाह—"**यथैकस्मिन् धर्मिणी**"ति । इदं चापरमकृत्स्नत्वेन सूत्रितमित्याह—"**शरीरिणां चानवस्थितपरिमाणत्वादि**"ति । मनुष्यकायपरिमाणो हि जीवो न हस्तिकायं कृत्स्नं व्याप्तुमर्हत्यल्पत्वादित्यात्मनः कृत्स्नशरीराव्याप्तिवादकार्त्स्न्यम् , तथा च न शरीरपरिमाणत्वमिति । तथा हस्तिशरीरं परित्यज्य यदा पुत्तिकाशरीरो भवति तदा न तत्र कृत्स्नः पुत्तिकाशरीरे संमीयेतेत्यकार्त्स्न्यमात्मनः । सुगममन्यत् । चोदयति—"**स्यादेतत्**" "**अनन्तावयव**"इति । यथा हि प्रदीपो घटमहाहर्म्योदरवर्ती संकोचविकाशवानेवं जीवोऽपि पुत्तिकाहस्तिदेहयोरित्यर्थः । तदेतद्विकल्प्य दूषयति—"**तेषां पुनरनन्ताना**मि"ति । न तावत्प्रदीपोऽत्र निदर्शनं भवितुमर्हति, अनित्यत्वप्रसङ्गात् । विशरारवो(२) हि प्रदीपावयवाः प्रदीपश्चावयवी प्रतिक्षणमुत्पत्तिनिरोधधर्मा, तस्मादनित्यत्वात्तस्य (३) नास्थिरो जीवस्तदवयवाश्चाभ्युपेतव्याः तथा च विकल्पद्वयोक्तं दूषणमिति । यच्च जीवावयवानामानन्त्यमुदितं तदनुपपन्नतरमित्याह—"**अपि च शरीरमात्रे**"ति ॥३४॥

शङ्कापूर्वं सूत्रान्तरमवतारयति—"**अथ पर्यायेणे**"ति । तत्राप्युच्यते—

## न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥

कर्माष्टकमुक्तं ज्ञानावरणीयादि । (४)किं चात्मनोऽनित्यत्वाभ्युपगमे आगच्छतामपगच्छतां चावयवानामियत्ताऽनिरूपणेन चात्मज्ञानाभावान्नापवर्ग इति भावः । "**अत एवमा**दिदोषप्रसङ्गादि"ति । आदिग्रहणसूचितं दोषं ब्रूमः । किं चैते जीवावयवाः प्रत्येकं वा चेतयेरन् समूहो वा, तेषां प्रत्येकं चैतन्ये बहूनां चेतनानामेकाभिप्रायत्वनियमाभावात् कदाचिद्विरुद्धदिक्क्रियत्वेन शरीरमुन्मथ्येत, समूहचैतन्ये तु हस्तिशरीरस्य पुत्तिकाशरीरत्वे द्वि·

(१) प्रशस्तपण्डितानाम् , प्रशंसायां रूपप्प्रत्ययः ।

(२) विनश्वरा. ।

(३) प्रदीपदृष्टान्तस्य । एवं च दृष्टान्तेऽनित्यत्वं न च दार्ष्टान्तिके इति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमित्यर्थः ।

(४) आगमापायिन्यवयवानामनात्मत्वं भाष्योक्तं तदा सङ्गच्छेत यदि आत्मा नित्य इति पराभ्युपगमः स्यादितरथेष्टप्रसङ्गादागमापायिनामनात्मत्वेनावयवानामनात्मत्वादित्यभिप्रायेणाह किं चेति ।

ऽवयवशेषो जीवो न चेतयेत्, विगलितबहुसमूहितया समूहस्याभावात्। "पुत्तिकाश-रीर" इति। "अथवे"ति। पूर्वसूत्रप्रसञ्जितायां जीवानित्यतायां बौद्धवत्सन्तानानित्यता-माशङ्क्येदं सूत्रम्। 'न च पर्यायादप्यविरोधो विकारादिभ्यः'। न च पर्यायात् परिमाणा-नवस्थानेऽपि संतानाभ्युपगमेनात्मनो नित्यत्वादिविरोधो बन्धमोक्षयोः। कुतः? परिणामादि-भ्यो दोषेभ्यः। सन्तानस्य वस्तुत्वे परिणामस्ततश्चर्मवदनित्यत्वादिदोषप्रसङ्गः। अवस्तुत्वे चा-दिग्रहणसूचितो नैरात्म्यापत्तिदोषप्रसङ्ग इति। (१) विसिचो-विवसनाः ॥ ३५ ॥

## सू० अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥३६॥

(२) एवं हि मोक्षावस्थाभावि जीवपरिमाणं नित्यं भवेत् यद्यभूत्वा न भवेदभूत्वा भाविनामनित्यत्वाद्घटादीनाम्। कथं चाभूत्वा न भवेद्यदि प्रागप्यासीत्। (३) न च परिमा-णान्तरावरोधेऽपूर्वं भवितुमर्हति। तस्मादन्त्यमेव परिमाणं पूर्वमप्यासीदित्यभेदः। तथा चैकशरीरपरिमाणतैव स्यान्नोपचितापचितशरीरप्राप्तिः, शरीरपरिमाणत्वाभ्युपगमव्याघाता-दिति। अत्र (४) चोभयोः परिमाणयोर्नित्यत्वप्रसङ्गादिति योजना। (५) एकशरीरपरिमा-णतैवेति च दीप्यम्। (६) द्वितीये तु व्याख्याने उभयोरवस्थयोरिति योजना। एकशरीरप-रिमाणता न दीप्या, किं त्वेकपरिमाणतामात्रमणुर्महान्वेति विवेकः ॥३६॥

## सू० पत्युरसामञ्जस्यात् ॥ ३७ ॥

अविशेषेणेश्वरकारणवादोऽनेन निषिध्यत इति भ्रमनिवृत्त्यर्थमाह "केवले"ति। सांख्ययोगव्यपाश्रया हिरण्यगर्भपतञ्जलिप्रभृतयः। प्रधानमुक्तं, दृक्शक्तिः पुरुषः प्रत्ययानु-पश्यः। (७) स च नानाक्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः प्रधानपुरुषाभ्या-मन्यः। माहेश्वराश्चत्वारः—शैवाः, पाशुपताः, कारुणिकसिद्धान्तिनः, कापालिकाश्चेति। च त्वारोऽप्यमी महेश्वरप्रणीतसिद्धान्तानुयायितया माहेश्वराः। कारणमीश्वरः। कार्यं प्राधानिकं

---

(१) सिग् वस्त्र विगत येभ्यस्ते।

(२) ननु देहान्तराप्रवेशान्मुक्त्यवस्थं परिणाममन्त्यन्तस्य नित्यत्वेनाद्यमध्यमयोर्नित्यत्वानुमाने परि-णामत्रयापत्त्या कथमविशेषापादनमित्याशंक्याह एवमिति।

(३) नन्वेवमन्त्यपरिमाणस्य कालत्रयेऽनुवृत्तावपि देहभेदप्राप्तिकालेष्वात्मनः परिमाणान्तराणि किं न भवेयुरत आह न चेति। परिमाणभेदे द्रव्यभेदप्रसङ्गादित्यर्थः।

(४) सूत्रे।

(५) नन्वादिमध्यान्तिमपरिमाणानां नित्यत्वे आपतिते परिणामत्रयवत्त्वमात्मनः स्यात् कुत एकपरि-णामताऽऽपाद्यते अत आहैकशरीरेति। त्रयाणां परिणामानां सर्वशरीरेषु समत्वात्सर्वशरीरेष्वेकरूपपरिणा-मताऽऽत्मनः स्यादिति दीप्यं व्याख्येयमित्यर्थः।

(६) सर्वदा परिणामैक्यस्यैवापाद्यत्वात्सूत्रगतोभयशब्देन न परिणामद्वयमभिधीयते किं त्वाद्यमध्यकालौ सतश्चाद्यमध्यकालयोरुभयोः परिणामनित्यत्वादित्येवं रूपं हेतुं योजयति भाष्यकार इत्याह द्वितीये त्विति। अस्यां व्याख्यायामविशेषशब्देन न परिणामत्रयस्य सर्वशरीरेषु तुल्यत्वमापाद्यते किन्तु यदेकशरीरे परिणाम-तामात्रं सर्वशरीरेष्वापाद्यते तदाऽणुर्वा महान्वाऽऽत्मा सर्वदेहेषु स्यादित्येव रूपमित्याहैकशरीरेति।

(७) भाष्ये प्रधानपुरुषयोरधिष्ठातेति द्विवचनप्रयोगादेको जीव इति भ्रमः स्यात्तं व्युदस्यन्नाह स चेति। समासान्तर्गतैकवचनं जात्यभिप्रायकमित्यर्थः।

महदादि। योगोऽप्योङ्कारादिध्यानधारणादिः। विधिस्त्रिषवणस्नानादिर्गूढचर्यावसानो (१)दुःखान्तो मोक्षः। पशव आत्मानस्तेषां पाशो बन्धनं तद्विमोक्षो दुःखान्तः। एष तेषामभिसन्धिः— चेतनस्य खल्वधिष्ठातुः कुम्भकारादेः कुम्भादिकार्ये निमित्तकारणत्वमात्रं न तूपादानत्वमपि (२)। तस्मादिहापीश्वरोऽधिष्ठाता जगत्कारणानां निमित्तमेव, न तूपादानमप्येकस्याधिष्ठातृत्वाधिष्ठेयत्वविरोधादिति प्राप्तम्।

एवं प्राप्ते ऽभिधीयते—'पत्युरसामञ्जस्यादि'ति। इदमत्राकूतम्—ईश्वरस्य निमित्तकारणत्वमात्रमागमाद्वोच्येत प्रमाणान्तराद्वा? प्रमाणान्तरमप्यनुमानमर्थापत्तिर्वा? न तावदागमात्, तस्य निमित्तोपादानकारणत्वप्रतिपादनपरत्वादित्यसकृदावेदितम्। तस्मादनेनास्मिन्नर्थे प्रमाणान्तरमास्थेयम्। तत्रानुमानं तावन्न सम्भवति(३)। (४)तद्धि दृष्टानुसारेण प्रवर्तते तदनुसारेण चासामञ्जस्यम्। तदाह—"हीनमध्यमे"ति। एतदुक्तं भवति—आगमादीश्वरसिद्धौ न दृष्टमनुसर्तव्यं, नहि स्वर्गापूर्वदेवतादिष्वागमादवगम्यमानेषु किञ्चिदस्ति दृष्टम्, नह्यागमो दृष्टसाधर्म्यात्प्रवर्तते, तेन श्रुतसिद्ध्यर्थमदृष्टानि दृष्टविपरीतस्वभावानि सुबहून्यपि कल्प्यमानानि न(५) लोहगन्धितामावहन्ति प्रमाणवत्त्वात्। यस्तु तत्र कथञ्चिद् दृष्टानुसारः क्रियते स सुहृद्भावमात्रेणागमानपेक्षितमनुमानं तु दृष्टसाधर्म्येण प्रवर्तमानं दृष्टविपर्यये तूपादपि बिभेतितरामिति। प्राणिकर्मापेक्षत्वाददोष इति चेत्। न। कुतः? कर्मेश्वरयोर्मिथः प्रवर्त्यप्रवर्तयितृत्वे इतरेतराश्रयत्वदोषप्रसङ्गात्। अयमर्थः—यदीश्वरः करुणापराधीनो वीतरागस्ततः प्राणिनः कपूये कर्मणि न प्रवर्तयेत्तच्चोत्पन्नमपि नाधितिष्ठेद् तावन्मात्रेण प्राणिनां दुःखानुत्पादात्, नहीश्वराधीना जनाः स्वातन्त्र्येण कपूयं कर्म कर्तुमर्हन्ति, तदनधिष्ठितं वा कपूयं (६)कर्म फलं प्रसोतुमुत्सहते। तस्मात्स्वतन्त्रोऽपीश्वरः कर्मभिः प्रवर्त्यत इति दृष्टविपरीतं कल्पनीयम्। तथा चायमपरो गण्डस्योपरि स्फोट इतरेतराश्रयः प्रसज्येत, कर्मणेश्वरः प्रवर्तनीय ईश्वरेण च कर्मेति। शङ्कते—"अनादित्वादिति चेत्" पूर्वकर्मणेश्वरः सम्प्रतितने कर्मणि प्रवर्त्यते तेनेश्वरेण सम्प्रतितनं कर्म स्वकार्ये प्रवर्त्यत इति। निराकरोति। "न, वर्तमानकालवदि"ति। अथ पूर्वं कर्म कथमीश्वराप्रवर्तितमीश्वरप्रवर्तनलक्षणं कार्यं करोति, (७)तत्रापि प्रवर्तितमीश्वरेण पूर्वतनकर्मप्रवर्तितेनेत्येवमन्धपरम्परा·

---

(१) गूढचर्या—स्वगुणाप्रख्यापनेन देशेषु वासः।

(२) अनेन ईश्वरो न द्रव्योपादानं चेतनत्वात्कुलालवदित्युमानं सूचितम्।

(३) तदात्मानं स्वयमकुरुतेत्यादिश्रुत्या बाधादित्यर्थः। नन्वाद्यं कार्यं सकर्तृकं कार्यत्वात्कुम्भवदित्यनुमानमेवेश्वरस्यानुपादानत्वे मानं स्यादिति चेन्न। जीवादृष्टजन्यत्वेन सिद्धसाधनात्। अव्यवहितमानकालवर्तिप्रयत्नजन्यत्वसाधने चाद्यकार्यव्यवहितप्रयत्नजन्यत्वस्य कुम्भेऽभावेन साध्यवैकल्यात्। एवं द्व्यणुकं द्व्यणुकोपादानसाक्षात्कारवज्जन्यं कार्यत्वादित्याद्यनुमानमपि अप्रसिद्धविशेषणाविशेष्यत्वाभ्यां द्व्यणुकस्य तदुपादानसाक्षात्कारस्य चासिध्या दृष्टान्ते सन्दिग्धसाध्यत्वेन चाभासमित्यवधेयम्।

(४) यथा चेतनस्य निमित्तत्वमात्रमनुमीयते तथा रागादिकमप्यनुमेयं व्याप्तेरविशेषात्तथा च वाद्यभिमतनिरवद्यत्वविशेषणविरुद्धोऽयं हेतुरित्याह तद्धीति।

(५) कलङ्कगन्धिनाम्। (६) कुत्सितम्।

(७) नन्वीश्वरेण पूर्वं कर्म तावत्प्रवर्तयितुं न शक्यते कुत्सितफलानुदयप्रसङ्गात्, एवं पूर्वकर्मेश्वराभ·

दोषः, चक्षुष्मता ह्यन्धो नीयते नान्धान्तरेण, तथेहापि द्वावपि (१)प्रवर्त्याविति कः कं प्रवर्तयेदित्यर्थः। अपि च नैयायिकानामीश्वरस्य निर्दोषत्वं स्वसमयविरुद्धमित्याह—"अपि चे"ति। (२)अस्माकं तु नायं समय इति भावः। ननु कारुण्यादपि प्रवर्तमानो जनो दृश्यते न च कारुण्यं दोष इत्यत आह—"**स्वार्थप्रयुक्त एव चे**"ति। कारुण्ये हि सत्यस्य दुःखं भवति तेन तत्प्रहाणाय प्रवर्तत इति कारुणिका अपि स्वार्थप्रयुक्ता एव प्रवर्तन्त इति। ननु स्वार्थप्रयुक्त एव प्रवर्ततामेवमपि को दोष इत्यत आह "**स्वार्थवत्त्वादीश्वरस्ये**"ति। अर्थित्वादित्यर्थः। पुरुषस्य चौदासीन्याभ्युपगमान्न वास्तवी प्रवृत्तिरिति ॥३७॥

अपरमपि दृष्टानुसारेण दूषणमाह—

## संबन्धानुपपत्तेश्च ॥ ३८ ॥

दृष्टो हि सावयवानामसर्वगतानां च संयोगः। अप्राप्तिपूर्विका हि प्राप्तिः संयोगो, न सर्वगतानां सम्भवत्यप्राप्तेरभावान्निरवयवत्वाच्च। अव्याप्यवृत्तिता हि संयोगस्य स्वभावो, न च निरवयवेष्वव्याप्यवृत्तिता संयोगस्य सम्भवतीत्युक्तम्। तस्मादव्याप्यवृत्तितायाः संयोगस्य व्यापिकाया निवृत्तेस्तद्व्याप्यस्य संयोगस्य विनिवृत्तिरिति भावः। नापि समवायलक्षणः स ह्ययुतसिद्धानामाधाराधेयभूतानामिह प्रत्ययहेतुः संबन्ध इत्यभ्युपेयते, न च प्रधानपुरुषेश्वराणां मिथोऽस्त्याधाराधेयभाव इत्यर्थः। नापि योग्यतालक्षणः कार्यगम्यसम्बन्ध इत्याह "**नान्यस्य**" **इति**। नहि प्रधानस्य महदहंकारादिकारणत्वमद्यापि सिद्धमिति शङ्कते—"**ब्रह्मवादिन**" **इति**। निराकरोति। "**न**" कुतस्तस्य मतेऽनिर्वचनीयतादात्म्यलक्षणसंबन्धोपपत्तेः। "**अपिचे**"ति। आगमो हि प्रवृत्तिं प्रति न दृष्टान्तमपेक्षत इत्यदृष्टपूर्वे तद्विरुद्धे च प्रवर्तितुं समर्थः, अनुमानं तु दृष्टानुसारि नैवंविधे प्रवर्तितुमर्हतीति शङ्कते-(३) "**परस्यापी**"ति। परिहरति-"**ने**"ति। (४) अस्माकं त्वीश्वरागमयोरनादित्वादीश्वरयोनित्वेऽप्यागमस्य न विरोध इति भावः ॥ ३८ ॥

## अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

(५)यथादर्शनमनुमानं प्रवर्तते नालौकिकार्थविषयमितीहापि न प्रस्मर्तव्यम्। सुगममन्यत् ॥ ३९ ॥

---

वर्तितं कथमीश्वरप्रवर्तनलक्षणकार्यं करोति? एवं सति प्रवर्तकत्वोपपाद्यमनुक्त्वा केवलं ततः पूर्वकर्मैवालम्ब्यते तत्राह तत्रापीति। तत्रापीश्वरप्रवर्तने स्वकार्ये पूर्वं कर्म तत पूर्वभाविकर्मप्रवर्तितेनेश्वरेण प्रवर्तितमिति वक्तव्यं तथा च सर्वत्रानुपपत्तिसाम्यादन्धपरम्परेत्यर्थ ।

(१) कर्मेश्वरौ ।

(२) अस्माकन्त्विति। मायामय्यां प्रवृत्तौ सर्वसम्भवान्नाक्षेप उचित इति भाव ।

(३) एव श्रुतेरनुमानाच्चेश्वरासिद्धि निरस्य पौरुषेयागमात्तत्सिद्धिर्निरस्यत इत्याह परस्यापीति ।

(४) अस्माकन्त्विति। शास्त्रयोनित्वेपीश्वरस्यानादिसिद्धनियतक्रमापेक्षणान्नेश्वराधीनं वेदस्य प्रामाण्यं किन्तु स्वतः, यथा देवदत्तकृतत्वेपि दीपस्य प्रकाशनशक्तिमत एव कृतत्वान्न देवदत्तापेक्षं तस्य प्रकाशकत्व तद्वदिति भाव ।

(५) ननु नीरूपस्याधिष्ठेयत्वानुपपत्तिर्मायायामपि समानेत्यत आह यथादर्शनमिति ।

## करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

"रूपादिहीनमि"ति। अनुद्भूतरूपमित्यर्थः। रूपादिहीनकरणाधिष्ठानं हि पुरुषस्य स्वभोगादावेव दृष्टं नान्यत्र, नहि बाह्यं कुठाराद्यपरिदृष्टं व्यापारयन् कश्चिदुपलभ्यते, तस्मा- द्रूपादिहीनं करणं व्यापारयत ईश्वरस्य भोगादिप्रसक्तिस्तथा चानीश्वरत्वमिति भावः। कल्पान्तरमाह—"अन्यथे"ति। पूर्वमधिष्ठितिरधिष्ठानमिदानीं तु अधिष्ठानं भोगायतनं शरीरमुक्तम्। तथा भोगादिप्रसङ्गेनानीश्वरत्वं पूर्वमापादितम्. संप्रति तु शरीरित्वेन भोगा दिप्रसङ्गादनीश्वरत्वमुक्तमिति विशेषः॥ ४०॥

## अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥

अपि च सर्वज्ञानुमानं प्रमाणयतः (१)प्रधानपुरुषेश्वराणामपि संख्याभेदवत्त्वमन्तवत्त्वं च द्रव्यत्वात्। (२)संख्यान्यत्वे सति प्रमेयत्वाद्वानुमातव्यं ततश्चान्तवत्त्वमसर्वज्ञता वा। (३)अ- स्माकं त्वागमगम्येऽर्थे तद्बाधितविषयतया नानुमानं प्रभवतीति भावः। स्वरूपपरिमाणमपि यस्य यादृशमणुमहत्परममहद्दीर्घं ह्रस्वं चेति। 'अथ मा भूदेष दोष' इत्युत्तरो विकल्पो यस्यान्तो- ऽस्ति तस्यान्तवत्त्वाग्रहणमसर्वज्ञतामापादयेत्। यस्य त्वन्त एव नास्ति तस्य तदग्रहणं नासर्व- ज्ञतामावहति नहि शशविषाणाद्यज्ञानादज्ञो भवतीति भावः। परिहरति—"तत" इति। (४)आगमानपेक्षस्यानुमानमेषामन्तवत्त्वमवगमयतीत्युक्तम् ॥ ४१ ॥

## उत्पत्त्यसंभवात् ॥ ४२ ॥

अन्यत्र(५) वेदाविसंवादायत्रांशे(६) विसंवादः स निरस्यते, तमंशमाह "यत्पुनरि- दमुच्यते"। "वासुदेवात्संकर्षणो जीव" इति जीवस्य कारणवत्त्वे सत्यनित्यत्व- मनित्यत्वे परलोकिनो ऽभावात्परलोकाभावः, ततश्च स्वर्गनरकापवर्गाभावापत्तेर्नास्तिक्यमित्य र्थः। अनुपपन्ना च जीवस्योत्पत्तिरित्याह "प्रतिषेधिष्यते चे"ति ॥ ४२ ॥

## न च कर्तुः करणम् ॥ ४३ ॥

यद्यप्यनेकशिल्पपर्यवदातः परशुं कृत्वा तेन पलाशं छिनत्ति, यद्यपि च (७)प्रयत्नेनेन्द्रि- यार्थात्ममनःसंनिकर्षलक्षणं ज्ञानकरणमुत्पाद्यात्मार्थं विजानाति, तथापि संकर्षणो ऽकरणः कथं

(१) प्रधानेति। अत्र पुरुषत्वजात्यभिप्रायेण पुरुषाणामैक्याश्रित्वं द्रष्टव्यम्, संख्याविशेषवत्त्व द्रव्य- त्वमन्तवत्त्वे च संख्याविशेषवत्त्व हेतुर्द्रष्टव्य।

(२) एवं द्रव्याश्रितैव संख्येति मतेन संख्याविशेषवत्त्वे द्रव्यत्वं हेतूकृत्वा संख्या विहाय सर्वत्र संख्या- ङ्गीकारपक्षेऽनुमानप्रकारमाह संख्यान्यत्वे सतीति।

(३) ननु अस्माप्यन्तवदेकत्वादेकघटवदित्यनुमानं कुतो न स्यादत आह अस्माकं त्विति।

(४) वादिन इति शेष।

(५) नारायण एव परः सर्वात्माऽनेकधा व्यूह्यावस्थित इत्यंशे।

(६) वासुदेवात्संकर्षण उत्पद्यते इत्यंशे।

(७) भवतु क्रियाकरणमुत्पाद्य ज्ञानकरण तु नैवं स्यादत आह प्रयत्नेनेति। विवक्षातश्च प्रयत्न- दीनां करणत्वं बोध्यम्।

प्रद्युम्नाख्यं मनःकरणं कुर्यात् । अकरणस्य वा करणनिर्माणसामर्थ्ये कृतं करणनिर्माणेनाकरणादेव निखिलकार्यसिद्धिरिति भावः ॥ ४३ ॥

## विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

वासुदेवा एवैते संकर्षणादयो **"निर्दोषा"** अविद्यादिदोषरहिताः । **"निरधिष्ठानाः"** निरुपादाना अत एव **"निरवद्या"** अनित्यत्वादिदोषरहिताः तस्मादुत्पत्त्यसंभवोनुगुणत्वान्न दोष इत्यर्थः। अत्रोच्यते **"एवमपी"**ति । मा भूदभ्युपगमे न दोषः, प्रकारान्तरेण त्वयमेव दोषः । प्रश्नपूर्वं प्रकारान्तरमाह **"कथं यदि तावदि"**ति । न तावदेते परस्परं भिन्ना ईश्वराः परस्परव्याहतेच्छा भवितुमर्हन्ति व्याहतकामत्वे च कार्यानुत्पादात् (१) अव्याहतकामत्वे वा प्रत्येकमीश्वरत्वे एकेनैवेशनायाः कृतत्वादानर्थक्यमितरेषाम् । सम्भूय चेशनायां परिशुद्धो(२) न कश्चिदीश्वरः स्यात्, सिद्धान्तहानिश्च, (३)भगवानेवैको वासुदेवः परमार्थतत्त्वमित्यभ्युपगमात् । तस्मात्कल्पान्तरमास्थेयम् । तत्र चोत्पत्त्यसम्भवो दोष इत्याशयवान् कल्पान्तरमुपन्यस्योत्पत्त्यसंभवेनापाकरोति **"अथायमभिप्राय"** इति । सुगममन्यत् ॥४४

## विप्रतिषेधाच्च ॥ ४५ ॥

गुणिभ्यः खल्वात्मभ्यो ज्ञानादीन् गुणान् भेदेनोक्त्वा पुनरभेदं ब्रूते **"आत्मान एवैते भगवन्तो वासुदेवा"** इति । आदिग्रहणेन प्रद्युम्नानिरुद्धयोर्मनोहंकारलक्षणतयात्मनो भेदमभिधायात्मान एवैत इति तद्विरुद्धाभेदाभिधानमपरं संगृहीतम् । वेदविप्रतिषेधो व्याख्यातः ॥ ४५ ॥

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकभगवत्पादभाष्यविभागे भामत्यां
द्वितीयाध्यायस्य द्वितीयः पादः ॥



(१) तथाचेश्वरत्वव्याघात इति भावः।

(२) निश्चितः।

(३) अनेकेश्वरत्वेऽपसिद्धान्तमाह भगवानिति ।

